THE

# KÂSHÎ-SANSKRIT-SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

## NO. 106.

( Nyâya Section, No. 15. )

95



॥ श्रीः ॥

# न्यायमञ्जरी ।

## गौतमसूत्रतात्पर्यविवृतिः ।

पदवाक्यप्रमाणपारावारपारीण-
श्रीजयन्तभट्टकृता ।



14

( Part II )

PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

1934.

THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

( Nyāya Section No. 15 )

NO. 106.



THE

# NYĀYAMAÑJARĪ

of

## JAYANTA BHAṬṬA

*Edited with notes etc., by* No. 14

PANDIT S'RI SŪRYA NÂRÂYANA S'UKLA

*Nyāya Vyākaranāchārya*

Professor, Govt. Sanskrit College, Benares.




PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office.*

Benares City

1936

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः
१०६
न्यायविभागे (१५) पञ्चदशं पुष्पम्।



* श्रीः *

# न्यायमञ्जरी।

## गौतमसूत्रतात्पर्यविवृतिः।

पदवाक्यप्रमाणपारावारपारीण श्रीजयन्तभट्टकृता।

वाराणसेयराजकीयसंस्कृतपाठशालानव्यप्राच्यन्यायशास्त्राध्यापकेन
न्यायव्याकरणाचार्यसूर्यनारायणशर्मशुक्लेन
विषमस्थल विवरणपूर्वकं सम्पादिता।



प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी।

सं० १९९२ वै.

श्रीविश्वेश्वरः शरणम् ।

# न्यायमञ्जरीभूमिका ।

अथेदानीं संस्कृतवाणीप्रणयिनां तत्र भवतां करकमलयोरुपायनीकर्तुं मुद्रयित्वा प्रकाश्य न्यायसूत्रतात्पर्यविवृतिं **न्यायमञ्जरी**नामानं महानिबन्धं महतीं प्रमोदपरम्परां वहेयद्यपि अस्मिन्महानिबन्धे सर्वाणि गोतमसूत्राणि नामग्राहं न व्याख्यातानि तथापि तात्पर्यतोऽशेषविशेषवक्तव्यपुरस्सरं व्याख्यातान्येव न केवलं व्याख्यातान्येव किन्तु वादिनां विप्रतिपतिव्रातनिरासोऽपि तथा कृतो यथाद्ययावन्नैकत्र क्वापि निबन्धे दृष्टचरः ।

अस्याः किल रचयिता पदवाक्यप्रमाणपारावारपारीणः श्रीचन्द्रपण्डितस्य तनूजन्मा **श्रीजयन्तभट्टो** नाम—

वादेष्वाप्तजयो **जयन्त** इति यो विख्यातकीर्तिः क्षिता-
वन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः ।
सूनुर्व्याप्तदिगन्तरस्य यशसा **चन्द्रस्य** चन्द्रत्विषा
चक्रे चन्द्रकलावचूलचरणध्यायी स धन्यां कृतिम् ॥

इति एतद्ग्रन्थस्योपान्तिमपद्यादवगम्यते ।

अस्य पुत्रेणा**भिनन्द**पण्डितेन स्वनिर्मित**कादम्बरीकथासारो**पक्रमे—

**शक्ति**र्नामाऽभवद्गौडो भारद्वाजकुले द्विजः ।
दीर्घाभिसारमासाद्य कृतदारपरिग्रहः ॥ ५ ॥
तस्य **मित्रा**भिधानोऽभूदात्मजस्तेजसां निधिः ।
जनेन दोषोपरमप्रबुद्धेनार्चितोदयः ॥ ६ ॥
स **शक्तिस्वामिनं** पुत्रमवाप श्रुतिशालिनम् ।
राज्ञः कर्कोटवंशस्य मुक्तापीडस्य मन्त्रिणम् ॥ ७ ॥
**कल्याणस्वामि**नामास्य याज्ञवल्क्य इवाभवत् ।
तनयः शुद्धयोगर्द्धिनिर्धूतभवकल्मषः ॥ ८ ॥
अगाधहृदयात्तस्मात्परमेश्वरमण्डनम् ।
अजायत सुतः **कान्तश्चन्द्रो** दुग्धोदधेरिव ॥ ९ ॥
पुत्रं कृतजनानन्दं स **जयन्त**मजीजनत् ।
व्यक्ता कवित्ववक्तृत्वफला यस्य सरस्वती ॥ १० ॥

वृत्तिकार इति व्यक्तं द्वितीयं नाम बिभ्रतः।
वेदवेदाङ्गविदुषः सर्वशास्त्रार्थवादिनः॥ ११॥
जयन्तनाम्नः सुधियः साधुसाहित्यतत्त्ववित्।
सूनुः समभवत्तस्मादभिनन्द इति श्रुतः॥ १२॥
काव्यविस्तरसंधानखेदालसधियं प्रति।
तेन कादम्बरीसिन्धोः कथामात्रं समुद्धृतम्॥ १३॥

एवमुपाश्लोकि। तेन राजतरङ्गिण्याश्चतुर्थतरङ्गे—

तारापीडोऽपि तनयः क्रमात्तस्यामजायत।
अविमुक्तापीडनामा मुक्तापीडोऽपि भूपतेः॥

इति द्विचत्वारिंशत्तमे श्लोके निर्दिष्टनाम्नो मुक्तापीडनाम्नः काश्मीरनरपतेरमात्यस्य शक्तिस्वामिनः प्रपौत्रोयं जयन्तभट्टो मुक्तापीडकालादनन्तर शतवर्षान्यूनकालवर्तीति समयनिर्णयः प्रामाणिकः।

## जयन्तभट्टसमयानिर्णयोपक्रमः—

अभिधर्मकोशप्रणेता वसुबन्धुः ३२०–३३० ई० ब्देषु भुवं शासतोऽयोध्याधीश्वरस्य प्रथमस्य गुप्तसम्राजश्चन्द्रगुप्तस्य तनूजन्मनश्चन्द्रप्रकाशस्य सचिव आसीदिति काव्यालङ्कारसूत्रे—

'सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा।
जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः॥

आश्रयः कृतधियामित्यस्य वसुबन्धुसाचिव्याक्षेपपरत्वात्' इति वामनस्योद्धरणात्प्रतीयते इति वसुबन्धोः समयः २९० ई० वर्षादारभ्य ३६० ई० वर्षपर्यन्तं निश्चीयते। अस्मिन्नेव समये सङ्घभद्राख्यो बौद्धः वसुराताख्यो महावैयाकरणश्च एतद्विरोधिनौ बभूवतुः। वसुरातश्च—

न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम्।
प्रणीतो गुरुणास्माकमयमागमसंग्रहः॥

इति वाक्यपदीयद्वितीयकाण्डस्थ ४९० श्लोकपुण्यराजोये भर्तृहरिगुरुत्वेन वर्णितः। एवं च यदि वसुबन्धोश्चरमे वयसि वसुरातस्य स्थितिस्तदा ३३० ई० वर्षादारभ्य ४०० ई० वर्षपर्यन्तं वसुरातस्य सत्ताकाल इति तदीयशिष्य-

स्य भर्तृहरेः ३७० ई० वर्षादारभ्य ४४० ई० वर्षपर्यन्तं सत्ता सम्भाव्यते । युक्तं चैतत् यत इचिङ्गाख्यश्चीनयात्री स्वकीयभारतभ्रमणपुस्तके स्वागमनसमयात् पञ्चाशद्वर्षेभ्यः पूर्वमेव भर्तृहरेर्निर्वाणं लिखति तदीयागमनसमयश्च सुप्रसिद्ध एवाङ्लभाषाविदाम् ।

वसुबन्धुप्रणीतस्य अभिधर्मकोशस्य व्याख्या दिङ्नागेन कृतेति ततो न्यूनान्न्यूनः शतवर्षादन्यूनः समयोऽपेक्ष्यत इति ४६० ई० वर्षासन्नः समयो दिङ्नागस्य भवितुमर्हति ।

धर्मकीर्तिसमयात्प्राक् दिङ्नागसमयादनन्तरं न्यायवार्तिककर्तुरुद्योतकराचार्यस्य स्थितिः सम्भाव्यते यतः प्रत्यक्षलक्षणप्रस्तावे वसुबन्धोर्दिङ्नागस्य च लक्षणे दूषयन्नुद्योतकराचार्यो धर्मकीर्तिलक्षणं न स्पृशतीति ४९० ई० वर्षादारभ्य ५६० ई० वर्षपर्यन्तमुद्योतकराचार्यस्य स्थितिः सम्भाव्यते । कल्पनापोढत्वं प्रत्यक्षलक्षणं दिङ्नागेनाङ्गीकृतम् तस्मिँश्चोद्योतकरेण दूषिते अभ्रान्तत्वघटितं प्रत्यक्षलक्षणं धर्मकीर्तिना स्वीकृतम् । अत्र मानं तु 'दिङ्नागस्यैव कल्पनापोढमात्रं लक्षणमपि तु तदेवाभ्रान्तत्वसहितं प्रत्यक्षलक्षणं मन्यते स्म कीर्तिः प्रत्यक्षं कल्पनापोढमभ्रान्तमिति' । इति न्यायकणिका ( लाजरसमुद्रित १९२ पृ. )

इति सुनिपुणबुद्धिर्लक्षणं वक्तुकामः
पदयुगलमपीदं निर्ममे नानवद्यम् ।
भवतु मतिमहिम्नश्चेष्टितं दृष्टमेतत्-
ज्जगदभिभवधीरं धीमतो धर्मकीर्तेः ॥

इति प्रत्यक्षलक्षणस्था न्यायमञ्जरी ( पृ. ९३ ) च ।

वासदत्तायां 'न्यायस्थितिमिवोद्योतकरस्वरूपाम्' इति दर्शनात् इतः १२०० वर्षेभ्यः पूर्वं वासवदत्ताकर्तुः स्थित्या तत्पूर्वभाविनः उद्योतकरस्य पूर्वोक्तः समयः सुदृढ एव ।

उद्योतकराचार्यात् परम् ५९० ई० वर्षादारभ्य ६५० ई० वर्षपर्यन्तं धमकीर्तेः स्थितिः सम्भाव्यते धर्मकीर्तेरन्तिमे वयसि कुमारिलभट्टपादा अभूवन् इतिजनश्रुतिः ततश्च ६२५ ई० वर्षादारभ्य ६९० ई० वषपर्यन्तमेषां स्थितिसमयः । अयमेव च वाणभट्टस्यापि समयः । यद्यप्यनेन

धर्मकीर्तेर्नाम लक्षणं वा न स्वकीये ग्रन्थे धृतम् तथापि श्लोकवार्तिके प्रत्यक्षसूत्रे 'लक्षणं यच्च यैरुक्तम्' इति न्यायरत्नाकरस्य सुचरितमिश्रव्याख्यायाश्च दर्शनेन अत्र यैरित्यनेन धर्मकीर्तिरेवाभिमत इत्यवगम्यते । कुमारिलभट्टपादाः वाक्यपदीयकारमतं स्फुटं निराकुर्वन्तस्ततोर्वाचीनाः ७०५ ई० वर्षादारभ्य ७५० ई० वर्षपर्यन्तं स्थितवतो बौद्धाचार्यशान्तरक्षितात् पूर्वभाविनो यतस्तेन स्वकीये तत्त्वसंग्रहे कुमारिलमतं निराकृतम् ।

कुमारिलभट्टपादानां च त्रयः शिष्याः प्रभाकरमण्डनभट्टोम्बेकाख्या आसन् इति प्रसिद्धिः 'ननु स्मरणानुभवयोर्विवेकमप्रतिपद्यमानः प्रवर्तत इत्युक्तं श्रुतमिदं यदत्र भवद्भिः धर्मकीर्तिगृहादाहृतं दृश्यविकल्पार्थावेकीकृत्य प्रवर्तते इति किंच चौर्यमपीदं न कथंचन स्वार्थं पुष्णाति' इति ग्रन्थेन प्रभाकरमुपहसन्तो न्यायमञ्जरीकाराः धर्मकीर्तेः परवर्ती प्रभाकर इत्यभिप्रयन्ति। तत्र लोकइत्यादि भाष्यं यत्नगौरवं प्रसज्येतेत्यन्तमथशब्ददूषणार्थानौचित्यानुभाषणपरमिति वार्तिककारेण व्याख्यातं तत्तु मन्दप्रयोजनमिति मत्वा टीकाकारः प्रयोजनं दर्शयति लोक इत्यादि भाष्यस्येत्यादिना' इति ऋजुविमलादर्शनात् तत्त्वसंग्रहकर्त्रा कुमारिलमतं खण्डयतापि प्रभाकरमतमखण्डयता तट्टीकाकृता शान्तरक्षितशिष्येण कालशीलेन ७२५-७८६ ई० वर्षेषु स्थितिमता प्रभाकरमतमपि खण्डयता कुमारिलभट्टपादाननन्तरं प्रभाकरमिश्राणां स्थितिरिति ६७०-७३० पर्यन्तमवस्थानसमयः । बृहत्यां प्रभाकरमिश्रैः 'अविवेकः परमापदां पदमि'ति भारविपद्यम 'ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्' इति वाक्यपदीयं चोद्धृतम ।

भट्टोम्बेकश्च श्लोकवार्तिकस्य व्याख्याता "उक्तं च भट्टोम्बेकेन-'ग्रन्थारम्भेऽभिमतदेवतानमस्कारं करोति वार्तिककार' इति सिद्धान्तचन्द्रिकादर्शनादवगम्यते। भावनाविवेकस्यापि अयं व्याख्याता । अमुमेव भवभूतिपदेन व्यपदिशन्ति अतएव मालतीमाधवस्य प्रत्यङ्कं भट्टकुमारिलशिष्यभवभूतिकृते इति भण्डारकररोपलब्धपुस्तकेऽस्तीति केचित् । तन्न चोदक्षमं यतो भवभूतिः स्वग्रन्थे ज्ञाननिधिं स्वगुरुत्वेन स्तौति न कुमारिलम् । किंच स्वकीयपाण्डित्यपरिचायके-'यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च'इति मा. १ अं. ६ श्लोके स्वस्य मीमांसकत्वं न ख्यापयति अतो न भवभूतिरेव भट्टोम्बेकः किन्त्वन्य एव ।

मण्डनमिश्राश्च विधिविवेके 'अभिधां भावनामाहुरन्यामेव लिङादय' इति

तन्त्रवार्तिकम् 'उक्तं च कर्तव्यताविषयो नियोगः कर्तव्यतामाह' इति बृहतीं १०९ पृ. उद्धरन्तः प्रभाकरादप्यर्वाचीना इति प्रतीयते अस्मिन्नेव प्रतीके 'जरत्प्राभाकरैरन्नीतार्थं गुरोर्वचः संगच्छत इत्याह' इति न्यायकणिकादर्शनात् मण्डनमिश्राः कञ्चन बृहतीटीकाकर्तारं स्मरन्ति इत्यवगम्यते एवं च प्रभाकरभट्टोम्बेकमण्डनमिश्राणामेकगुरुकत्वमत्यन्तमसम्भवि एकगुरुकाणां परस्परं स्पर्धाया एव दर्शनेन टीकाकर्तृत्वासम्प्रतिपत्ते इदं तु अवश्यं सिध्यति यत् कुमारिलभट्टादनन्तरं मण्डनमिश्रस्तदनन्तरं च भट्टोम्बेक इति मण्डनमिश्रस्य ७५० ई० वर्षादारभ्य ८३० वर्षपर्यन्तं स्थितिसमयः शङ्कराचार्याणां च ७८८ ई० वर्षः जन्मसमयः ततः परं द्वात्रिंशद्वर्षाणि च स्थितिः। मण्डनमिश्र एव सुरेश्वराचार्य इति तु संदिग्धम् यतः नैष्कर्म्यसिद्ध्यादौ सुरेश्वराचार्यो मण्डनमतं खण्डयति इति केचित्। सम्भवति तु तदिति तु वयम् यथा वाचस्पतिमिश्रा एव तत्तच्छास्त्रेषु स्वपरिगृहीतमतस्यापि खण्डनं कुर्वन्ति तद्वत्।

वाचस्पतिमिश्राणां च समयः 'श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे। न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे' इति पद्यात् ८४१ ई० वर्षः निश्चितः। तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः। वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् इति पद्यात्—उदयनाचार्याश्च ९८४ ई० वर्षे आसन्निति।

न्यायमञ्जरीकारो वाचस्पतिमिश्रादनन्तरकालभावी यतः ६२ पृष्ठे न्यायमञ्जर्यां आचार्यास्तु इत्यनेन वाचस्पतिमिश्रमतमनुवदति एवं च ८४० ई० वर्षादारभ्य ९०० वर्षपर्यन्तोऽस्य समय इति स्थितम। मुक्तापीडस्य समयः ७१० ई० वर्षदारभ्य ७६० तस्य च मन्त्री शक्तिस्वामी तस्य समयः ७२५–७८० ई० पर्यन्तः तस्य सूनुः कल्याणस्वामी ७५०–८२० पर्यन्तं तस्य सूनुः कान्तः ८१०–८७० वर्षपर्यन्तमिति ८५० ई० ९१० वर्षपर्यन्तो जयन्तभट्टस्य स्थितिसमयो निश्चीयते।

अयं च कर्ममीमांसानिष्णातानां कुलेऽभूदिति एतद्ग्रन्थात् 'तथाह्यस्मत्पितामह एव ग्रामकामः साग्रहणीं कृतवान् स एव समाप्त्यनन्तरमेव गौरमूलकं ग्राममवाप' इति लेखादवगम्यते।

## जयन्तभट्टवंशपरिचयः—

जयन्तभट्टस्य तनूजन्मापि प्रख्यातपाण्डित्य आसीद्यतः क्षेमेन्द्रेण सुवृत्त-

तिलके प्रशंसितो ध्वन्यालोकलोचने चोपश्लोकितः ।

अयं च काव्यप्रकाशव्याख्याकर्तुर्भारद्वाजपुत्राज्जयन्तात् वामनाचार्यकृतटीकानिर्दिष्टनाम्नो भिन्नः यतस्तत्कृतकाव्यप्रकाशटीकायामन्ते १३५० संवत्सरे इति कालो गुर्जरराजामात्यत्वं च लिखितमिति । संस्कारकौस्तुभोल्लिखितजयन्तस्वामिनोऽयं भिन्नो न वेति तु सन्दिग्धम् ।

अत्रैव प्रमाणप्रकरणे २१७ पृष्ठे "प्रकटरसानुगुणविकटाक्षररचनाचमत्कारितसकलकविकुला बाणस्य वाच" इति लेखाद् बाणभट्टादनन्तरकालिकोऽयमित्यवगम्यते । बाणभट्टश्च हर्षदेवसमय आसीदिति तत्कृतहर्षचरिते स्पष्टम् । राजतरङ्गिणीपर्यालोचनया मुक्तापीडहर्षदेवयोः स्थितिकालस्य भूयान्विप्रकर्षः प्रतीयते स च राजभेदात्समाधेयः ।

तत्त्वचिन्तामणेरुपमानखण्डे (सोसाइटीकलकत्तामुद्रितपुस्तकस्य ६१ पृष्ठे) "तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानप्रमाणमिति जरन्नैयायिका जयन्तप्रभृतयः" इति ग्रन्थेन श्रीगङ्गेशोपाध्यायैरयं जरन्नैयायिकपदेन व्यपदिष्टः ।

अस्मिन्ग्रन्थे २८५ पृष्ठे 'परिहृतमाचार्यैः जातं च संबद्धं चेत्येकः काल इति वदद्भिः' इति लेखस्य न्यायवार्तिकतात्पर्यटीकायां नचैकदेशोपलब्धिरवयविसद्भावादिति सूत्रे दर्शनात् आचार्यवाचस्पतिमिश्रादयं परकालवर्तीति प्रतीयते ।

श्रीजयन्तभट्टेन न्यायकलिका नामा संक्षेपेण न्यायपदार्थनिरूपणपर एकोऽप्यपरो ग्रन्थः प्रणीतः स च काशीसरस्वतीभवनान्मुद्रितः सांप्रतमुपलभ्यते ।

'अयं च गौडब्राह्मणः' इति पूर्वोक्तकादम्बरीसारपद्यादवगम्यते ॥

## न्यायमञ्जरीप्रतिपाद्या विषयाः—

न्यायमञ्जर्यां प्रमाण–प्रमेय–संशय–प्रयोजन–दृष्टान्त–सिद्धान्ता–वयव–तर्क–निर्णय–वाद–जल्प–वितण्डा–हेत्वाभास–च्छल–जाति–निग्रहस्थानाख्यानि षोडशप्रकरणानि सन्ति तेषां विषयाश्च तत्तन्नाम्नैव व्याख्याताः ।

एवमत्र द्वादशाह्निकानि सन्ति—तत्र

१ प्रथमाह्निके शास्त्रारम्भं समर्थ्य पदार्थानुद्दिश्य पराभिहितप्रमाणलक्षणानि निरस्य स्वयं प्रमाणलक्षणमभिधाय प्रमाणान्तरनिराकरणपुरस्सरं

प्रमाणचतुष्ट्वं व्यवस्थापितम् ।

२ द्वितीयाह्निके—गौतमोक्तानि प्रत्यक्षानुमानोपमानलक्षणसूत्राणि व्याख्याय तत्प्रसङ्गेनापतितानि बौद्धादिमतानि दूषितानि ।

३ तृतीयाह्निके—शब्दप्रमाणलक्षणं तस्यानुमानान्तर्भावाक्षेपरिहारौ शब्दप्रमाण्यसमर्थनं प्रामाण्यस्य परतस्त्वमुपपाद्य प्रामाण्यनिश्चायकप्रसङ्गेनाख्यात्यात्मख्यातिवादौ निराकृत्य विपरीतख्यातिसमर्थनं शब्दे परतः प्रामाण्यसमर्थनेनेश्वरसमर्थनं तदीयज्ञानादेर्नित्यत्वसाधनं शब्दनित्यत्वनिराकरणं प्रामाण्यस्य गुणजन्यत्वव्यवस्थापनं च कृतम् ।

४ चतुर्थाह्निके—वेदानां पौरुषेयत्वं प्रसाध्य अपौरुषेयत्वस्य निराकरणं तेषामीश्वरकर्तृकत्वं शब्दार्थसंबन्धनिरूपणं वेदप्रामाण्यनिरूपणम् अथर्ववेदस्य प्रामाण्यं वेदेषु प्राथम्यं च निरूप्य स्मृतिप्रामाण्यसाधनमागमादिप्रामाण्यव्यवस्था अकार्येऽपि पदानां संगतिग्रहसमर्थनं च कृतम् ।

५ पञ्चमाह्निके—पदार्थनिरूपणप्रसङ्गेन जातिनिरूपणप्रसङ्गेनापोहवादनिराकरणं जात्याश्रयनिरूपणं भावनास्वरूपनिरूपणं च कृतम् ।

६ षष्ठाह्निके—पदस्वरूपनिरूपणप्रसङ्गेन स्फोटवादनिराकरणं पदार्थानां वाक्यार्थधीहेतुत्वनिराकरणं पदानामेव तत्त्वव्यवस्थापनमभिहितान्वयवादान्विताभिधानवादस्वरूपोपपत्तितत्प्रतिक्षेपौ वेदार्थावगमोपायाक्षेपप्रसङ्गेन साध्वसाधुशब्दावगमोपायकरणतया व्याकरणेऽनुपपत्तिपरिहारौ च कृतौ । एवं षड्भिराह्निकैः प्रमाणप्रकरणं समापितम् ।

७ सप्तमाह्निके—प्रमेयपदार्थनिरूपणप्रसङ्गेन आत्मनास्तित्वनिरासेन तस्य देहातिरिक्तत्वसमर्थनं क्षणिकविज्ञानवादिनां सांख्यानां क्षणभङ्गवादिनां च निराकरणेन आत्मतत्वप्रतिपादनं कृतम् ।

८ अष्टमाह्निके—शरीरे-न्द्रिया-र्थ-बुद्धि-प्रवृत्तिदोष-प्रेत्यभाव-फल-दुःखरूपाणां दशानां प्रमेयाणां निरूपणम् इन्द्रियाणां प्राप्यकारित्वं बुद्धेरात्मगुणत्वम् , ज्ञानायौगपद्यं च निरूपितम् ।

९ नवमाह्निके—अपवर्गस्वरूपनिरूपणम् , तत्प्रसङ्गेनाद्वैतमतखण्डनम् , पराभिमतमोक्षस्वरूपनिराकरणं तस्य दुःखाभावताव्यवस्थापनम् । इत्येवमाह्निकत्रयेण प्रमेयप्रकरणं समापितम् ।

१० दशमाह्निके—संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-वयवप्रकरणानि समापितानि।

११ एकादशाह्निके—तर्क-निर्णय वाद-जल्प-वितण्डा-हेत्वाभासच्छल-प्रकरणानि समापितानि।

१२ द्वादशाह्निके—जातिनिग्रहस्थानप्रकरणे समापिते।

## न्यायमञ्जरीस्वरूपरिचयः—

इत्येवं साकल्येन गौतमशास्त्रसिद्धान्तप्रतिपादकोऽयं प्रबन्धः नृत्यत्पदाभिः सूक्तिभिर्भरितोऽसकृत्सहृदयानां चेतोऽमन्दानन्दसंदोहे निमज्जयत्येव। प्राधान्येन बौद्धादिमतखण्डनाय प्रवृत्तोऽपि कुमारिलभट्टवाक्यपदीयकारादिभिः प्रतिपादितेऽपि नैयायिकसिद्धान्तविरुद्धे विषये मौनं नाश्रयति। विरोधिमतखण्डनप्रसङ्गेन दुर्वचोभिः परं संबोधयन्नपि स्वसिद्धान्तानुरागं प्रथयन्नातीव सहृदयान् दुनोतीत्यपि नाविदितमेतद्ग्रन्थप्रणयिनां सन्त्येवंविधाः श्रीशङ्कराचार्यप्रभृतीनां निबन्धेष्वपि दुरुक्तयः। परन्तु न तादुरुक्तय इतिव्यपदिश्यन्ते। ग्रन्थकर्तुर्निरर्गलपाण्डित्यवशादस्मिन्ग्रन्थे कथञ्चित्सम्बद्धोऽप्रकृतोऽपि विषयोऽभिहितः। लेखोऽस्य सरलः सरसश्चेति पण्डिता एव प्रमाणम्।

## प्रकाशनप्रयोजनम्—

भूतपूर्ववाराणसेयराजकीयमहाविद्यालयप्रधानाध्यापकमहामहोपाध्यायमानवल्ल्युपाख्य गङ्गाधरशास्त्रिभिः वाराणसेयराजकीयसरस्वतीभवनस्थितस्य १७९४ वर्षलिखितस्य पुस्तकस्याधारेण संशोध्य विजयनगरसंस्कृतसिरीजनामकग्रन्थमालायां प्रकाशितः सांप्रतमनुपलभ्यमानः संस्कृतप्रणयिनां तदनुपलम्भप्रयुक्तखेदमपाकारिष्णुना चौखम्बासंस्कृतपुस्तकालयाध्यक्षेण बाबू श्री जयकृष्णदासश्रेष्ठिमहाभागेन प्रार्थितोऽहं विषमस्थलटिप्पणीं तत्तत्स्थले स्थूलाक्षरैर्विषयनिर्देशं च विधाय संपादितवानस्मीति सम्भावये यदनेन संस्करणेन स्याच्चेत कश्चिद्विदुषामुपकारस्तदात्मानं कृतकृत्यं मन्ये इति शम्।

१९९३ वै० वैशाख शु० १ प्रतिपदि, काशी। } **सूर्यनारायणशर्मशुक्लः।**

# न्यायमञ्जर्याः सूचीपत्रम् ।

## प्रमाणप्रकरणे—



इति प्रथमाह्निकम् ।

इति द्वितीयाह्निकम् ।

**इति तृतीयाह्निकम् ।**

---



**इति चतुर्थाह्निकम् ।**

---

**इति षष्ठाह्निकम् ।**

श्रीगणेशाय नमः ।

# न्यायमञ्जरी ।

## जयन्तभट्टकृता गौतमसूत्रवृत्तिः ।



नमः शाश्वतिकानन्दज्ञानैश्वर्यमयात्मने ।
सङ्कल्पसफलब्रह्मस्तम्भारम्भाय शम्भवे ॥ १ ॥
नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ २ ॥
सुरासुरशिरोरत्नमरीचिखचिताङ्घ्रये ।
विघ्नान्धकारसूर्याय गणाधिपतये नमः ॥ ३ ॥
जयन्ति पुरजिद्दत्तसाधुवादपवित्रिताः ।
निदानं न्यायरत्नानामक्षपादमुनेर्गिरः ॥ ४ ॥
अक्षपादमताम्भोधिपरिमर्षरसोत्सुकाम् ।
विगाहन्तामिमां सन्तः प्रसरन्तीं सरस्वतीम् ॥ ५ ॥
नानागुणरसास्वादखिन्नाऽपि विदुषां मतिः ।
आलोकमात्रकेणेममनुगृह्णातु नः श्रमम् ॥ ६ ॥
न्यायौषधिवनेभ्योऽयमाहृतः परमो रसः ।
इदमान्वीक्षिकीक्षीरान्नवनीतमिवोद्धृतम् ॥ ७ ॥
कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः ।
वचोविन्यासवैचित्र्यमात्रमत्र विचार्यताम् ॥ ८ ॥
तैरैव कुसुमैः पूर्वमसकृत्कृतशेखराः ।
अपूर्वरचने दाम्नि दधत्येव कुतूहलम् ॥ ९ ॥
यद्वा निर्गुणमप्यर्थमभिनन्दन्ति साधवः ।
प्रणयिप्रार्थनाभङ्गसंविधानामशिक्षिताः ॥ १० ॥
तदियं वाङ्मयोद्यानलीलाविहरणोद्यतैः ।
विदग्धैः क्रियतां कर्णे चिराय न्यायमञ्जरी ॥ ११ ॥
अक्षपादप्रणीतो हि विततो न्यायपादपः ।
सान्द्रामृतरसस्यन्दफलसन्दर्भनिर्भरः ॥ १२ ॥
वयं मृदुपरिस्पन्दास्तदारोहणपङ्गवः ।
न तद्विभूतिप्राग्भारमालोकयितुमप्यलम् ॥ १३ ॥

तदेकदेशलेशे तु कृतोऽयं विवृतिश्रमः ।
तमेव चानुगृह्णन्तु सन्तः प्रणयवत्सलाः ॥ १४ ॥
असङ्ख्यैरपि नात्मीयैरल्पैरपि परस्थितैः ।
गुणैः सन्तः प्रहृष्यन्ति चित्रमेषां विचेष्टितम् ॥ १५ ॥
परमार्थ(१)भावनाक्रमसमुन्मिषत्पुलकलाञ्छितकपोलम् ।
स्वकृतीः प्रकाशयन्तः पश्यन्ति सतां मुखं धन्याः ॥ १६ ॥

## अदृष्टस्य स्वर्गादेः शास्त्रैकगम्यत्वम्—

इह प्रेक्षापूर्वकारिणः पुरुषार्थसम्पदमभिवाञ्छन्तः तत्साधनाधिगमोपायमन्तरेण तदवाप्तिममन्यमानास्तदुपायावगतनिमित्तमेव प्रथममन्वेषन्ते, दृष्टादृष्टभेदेन च तद्द्विविधः पुरुषार्थस्य पन्थाः, तस्य दृष्टे विषये रुचिः प्ररूढवृद्धव्यवहारसिद्धान्वयव्यतिरेकाधिगतसाधनभावे भोजनादावनपेक्षितशास्त्रस्यैव भवति प्रवृत्तिः, न हि मलिनः स्नायात् बुभुक्षितो वाऽश्नीयादिति शास्त्रमुपयुज्यते, अदृष्टे तु स्वर्गापवर्गमात्रे नैसर्गिकमोहान्धतमसविलुप्तालोकस्य लोकस्य शास्त्रमेव प्रकाशः, तदेव सकलसदुपायदर्शने दिव्यं चक्षुरस्मदादेर्न योगिनामिव योगसमाधिजज्ञानाद्युपायान्तरमपीति तस्मादस्मदादेः शास्त्रमेवाधिगन्तव्यम् ।

## चतुर्दश विद्यास्थानानि—

तच्च चतुर्दशविधं यानि विद्वांसश्चतुर्दश विद्यास्थानान्याचक्षते, तत्र वेदाश्चत्वारः प्रथमोऽथर्ववेदः(२) द्वितीय ऋग्वेदः तृतीयो यजुर्वेदः चतुर्थः सामवेदः, एते चत्वारो वेदाः साक्षादेव पुरुषार्थसाधनोपदेशस्वभावाः अग्निहोत्रं

---

(१) पुस्तकद्वये ऽपि परमार्थदावनेति पुलकांछितेति च दृश्यते । परमार्थभावनेति पुलकलाञ्छितेति तु युक्तमिति तथैव निवेशितम् ( म० म० श्रीगङ्गाधरशास्त्री, )

(२) प्रथमोऽथर्ववेद इति । ननु 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्' इति छान्दोग्योपनिषदि ( ७।१।२ ) 'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' इति मुण्डकोपनिषदि ( १।१।५ ) 'ऋग्यजुः सामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति' इति नृसिंहपूर्वतापन्यां च ऋग्वेदस्यैव प्राथम्यदर्शनादाथर्वणवेदस्य प्राथम्याभिधानं केनाभिप्रायेणेति चेदुच्यते ऋग्वेदादिसाध्यकर्मणामाधानसाध्याग्निसाध्यत्वादाधानस्य चार्थवणिककर्मसाध्यत्वादुपजीव्यत्वादाथर्वणवेदस्य श्रौतं क्रममुल्लङ्घ्यापि सर्वप्रथमं निर्देशः इति । नन्वस्त्वेवं तथापि ऋग्वेदानन्तरं सामवेद एव निर्देष्टव्यः 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि यज्ञिरे तस्माद्यजुस्तस्मादजायत' इति श्रुतौ ऋग्वेदोत्पत्त्यनन्तरं सामवेदोत्पत्तिकीर्तनादिति चेदुच्यते 'मन्त्रा मननात् छन्दांसि छादनाद्यजुर्यजतेः' इति निरुक्ताद्यजुर्वेदस्य यज्ञनि-

जुहुयात्स्वर्गकामः आत्मा ज्ञातव्य इत्यादिश्रुतेः, स्मृतिशास्त्रमपि मन्वाद्युपनिबद्धमष्टकाशिखाकर्मप्रपाप्रवर्तनादिपुरुषार्थसाधनोपदेश्येव दृश्यते, अश्रूयमाणफलानामपि कर्मणां फलवत्ता विधिवृत्तपरीक्षायां वक्ष्यते, सर्वो हि शास्त्रार्थः पुरुषार्थपर्यवसायी न स्वरूपनिष्ठ इति, इतिहासपुराणाभ्यामपि उपाख्यानादिवर्णनेन वैदिक एवार्थः प्रायेण प्रतन्यते, यथोक्तम्—

इतिहासपुराणाभ्यां(१) वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यतीति(२) ॥

तदेवं वेदपुराणधर्मशास्त्राणां स्वत एव पुरुषार्थसाधनोपदेशस्वभावत्वाद्विद्यास्थानत्वम्, अङ्गानि व्याकरणज्योतिःशिक्षाछन्दोनिरुक्तानि वेदार्थोपयोगिपदादिव्युत्पादनद्वारेण विद्यास्थानत्वं प्रतिपद्यन्ते, तेषामङ्गसमाख्यैव तदनुगामितां प्रकटयति, विचारमन्तरेणाव्यवस्थितवेदवाक्यार्थानवधारणान्मीमांसा वेदवाक्यार्थविचारात्मिका वेदाकरस्येतिकर्त्तव्यतारूपमनुबिभ्रतीति विद्यास्थानतां प्रतिपद्यते, तथा च भट्टः—

धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥

अत एव सप्तममङ्गमिति न गण्यते मीमांसा प्रत्यासन्नत्वेन वेदैकदेशभूतत्वात्, विचारसहायो हि शब्दः स्वार्थं निरकाङ्क्षं प्रबोधयितुं क्षमः, न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वात्, वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलितास्थाः कथमिव बहुवित्तव्ययायासादिसाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः, किं वा तदानीं स्वामिनि परिम्लाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यमिति, तस्मादशेषदुष्टतार्किकोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायिन्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परं विद्यास्थानम्, विद्यास्था-

---

त्पादकत्वलाभाद्यज्ञशरीरमुपजीव्यतदपेक्षितयोः स्तोत्रशास्त्ररूपावयवयोरितरेण वेदद्वयेन-पूरणात् सामवेदापेक्षया यजुष एव प्राथम्यम् इति । व्याकरणमहाभाष्यकृतस्तु अथर्वयजुर्ऋक्सामवेदा इति वेदानां क्रममातिष्ठन्ते तत्रबीजं तु महाभाष्यटिप्पणे बालशास्त्रिचरणैर्निरूपितमिति तत एवावगन्तव्यम् । न्यायमञ्जरीकारा अपि चतुर्थाह्निके क्रमनिर्देशबीजं वक्ष्यन्ति इति तत एव द्रष्टव्यम् ।

(१) इतिहासपुराणाभ्यामित्यत्राल्पाच्तरत्वात्पुराणशब्दस्य पूर्वनिपाते प्राप्ते इतिहासशब्दस्य पूर्वनिपातकरणं पुराणापेक्षयेतिहासस्याभ्यर्हितत्वसूचकं तेन यत्र धर्मनिर्णये इतिहासपुराणयोर्विरोधस्तत्रेतिहासस्यैव प्राबल्यमित्यस्मद्गुरुचरणाः ।

(२) म. भा. आ. प. अ. १ श्लो. २६९ ।

नत्वं नाम चतुर्दशानां शास्त्राणां पुरुषार्थसाधनज्ञानोपायत्वमेवोच्यते, वेदनं विद्या तच्च न घटादिवेदनमपि तु पुरुषार्थसाधनवेदनं विद्यायाः स्थानमाश्रय उपाय इत्यर्थः, तच्च पुरुषार्थसाधनपरिज्ञानोपायत्वं कस्य चित्साक्षात्कारेण कस्य चिदुपायद्वारेणेति तानीमानि चतुर्दश विद्यास्थानानीत्याचक्षते, यथोक्तम्--

पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति(१) ॥

अन्यत्राप्युक्तम्—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशेति ॥

## चतुर्दशविद्यासु गौतमप्रणीतन्यायस्यैव परिगणनम्—

पूर्वत्र तर्कशब्देनोपात्तमुत्तरत्र च न्यायविस्तरशब्देनैतदेव शास्त्रमुच्यते, न्यायस्तर्कोऽनुमानं सो ऽस्मिन्नेव व्युत्पाद्यते, यतः सांख्यार्हतानां तावत्क्षपणकानां कीदृशमनुमानोपदेशकौशलं कियदेव तत्तर्केण वेदप्रामाण्यं रक्ष्यते इति नासाविह गणनार्हः, बौद्धास्तु यद्यपि अनुमानमार्गावगाहननैपुण्याभिमानोद्धुरां कन्धरामुद्वहन्ति तथा ऽपि वेदविरुद्धत्वात्तत्तर्कस्य कथं वेदादिविद्यास्थानस्य मध्ये पाठः, अनुमानकौशलमपि कीदृशं शाक्यानामिति पदे पदे दर्शयिष्यामः, चार्वाकास्तु वराकाः प्रतिक्षेप्तव्या एवेति कः क्षुद्रतर्कस्य तदीयस्येह गणनावसरः,

वैशेषिकाः पुनरस्मदनुयायिन एवेत्येवमस्यां जनतासु प्रसिद्धायामपि षट्तर्क्यामिदमेव तर्कन्यायविस्तरशब्दाभ्यां शास्त्रमुक्तम् ,

इयमेवान्वीक्षिकी चतसृणां विद्यानां मध्ये न्यायविद्या गण्यते आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वतीति, प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा अनुमानमित्यर्थः, तद्व्युत्पादकं शास्त्रमान्वीक्षिकम् ।

ननु चतस्रश्चेद् विद्याः कथं चतुदर्श दर्शिताः, नैष विरोधः, वार्त्तादण्डनीत्योर्दृष्टैकप्रयोजनत्वेन सर्वपुरुषार्थोपदेशविद्यावर्गे गणनानर्हत्वात्त्रय्यान्वीक्षिक्योश्च तत्र निर्देशाच्चतुर्दशैव विद्याः ।

## न्यायशास्त्रारम्भसमर्थनम्—

ननु वेदप्रामाण्यनिर्णयप्रयोजनश्चेन्न्यायविस्तरः कृतमनेन मीमांसात एव तत्सिद्धेः, तत्र ह्यर्थविचारवत्प्रामाण्यविचारो ऽपि कृत एव, सत्यम् , स त्वानुषङ्गिकः तत्र मुख्यस्त्वर्थविचार एव, पृथक्प्रस्थाना हीमा विद्याः सा च वाक्यार्थविद्या

(१) या. स्मृ. अ. १ श्लो. ३ ।

न प्रमाणविद्येति, न च मीमांसकाः सम्यग् वेदप्रामाण्यरक्षणक्षमां सरणिमवलोकयितुं कुशलाः, कुतर्ककण्टकनिकरनिरुद्धसञ्चरमार्गाभासपरिभ्रान्ताः खलु ते इति वक्ष्यामः, न हि प्रामाण्यान्तरसम्वाददार्ढ्यमन्तरेण प्रत्यक्षादीन्यपि प्रमाणभावं भजन्ते किमुत तदधीनवृत्तिरेष शब्दः, शब्दस्य हि समयोपकृतस्य बोधकत्वमात्रं स्वाधीनमर्थतथात्वेतरत्वपरिनिश्चये तु पुरुषमुखप्रेक्षित्वमस्यापरिहार्यम्, तस्मादाप्तोक्तत्वादेव शब्दः प्रमाणीभवति नान्यथेत्येतच्चास्मिन्नेव शास्त्रे व्युत्पादयिष्यते ।

नन्वक्षपादात्पूर्वं कुतो वेदप्रामाण्यनिश्चय आसीत्, (१)अत्यल्पमिदमुच्यते, जैमिनेः पूर्वं केन वेदार्थो व्याख्यातः पाणिनेः पूर्वं केन पदानि व्युत्पादितानि पिङ्गलात्पूर्वं केनच्छन्दांसि रचितानि, आदिसर्गात्प्रभृति वेदवदिमा विद्याः प्रवृत्ताः, संक्षेपविस्तरविवक्षया तु तांस्तांस्तत्र कर्तृनाचक्षते ।

ननु वेदप्रामाण्यं निर्विचारसिद्धमेव साधवो मन्यन्ते इति किमत्र विचारयत्नेन, न संशयविपर्यासनिरासार्थत्वात्, यस्य हि वेदप्रामाण्ये संशयाना विपर्यस्ता वा मतिस्तं प्रति शास्त्रारम्भः, न हि विदितवेदार्थं प्रति मीमांसा प्रस्तूयते, तदुक्तम्--नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते इति(२) ।

भवति च चतुष्प्रकारः पुरुषः अज्ञः सन्दिग्धो विपर्यस्तो निश्चितमतिश्चेति, तत्र निश्चितमतिरेष मुनिरमुना शास्त्रेणाज्ञस्य ज्ञानमुपजनयति संशयानस्य संशयमुपहन्ति विपर्यस्यतो विपर्यासं व्युदस्यतीति तान्प्रति युक्तः शास्त्रारम्भः ।

कुतः पुनरस्यर्षेरपि निश्चितमतित्वं जातम्, उच्यते, भवति तावदेष निश्चितमतिः, स तु तपः प्रभावाद्वा देवताराधनाद्वा शास्त्रान्तराभ्यासाद्वाभवतु किमनेन तत्रैतत् स्यात्तत एव शास्त्रान्तरादस्मदादेरपि तत्त्वाधिगमो भविष्यति इति किमक्षपादप्रणीतेन शास्त्रेण, परिहृतमेतत् संक्षेपविस्तरविवक्षया शास्त्रप्रणयनस्य (३)साफल्यात्, विचित्रचेतसश्च भवन्ति पुरुषा इत्युक्तम्, येषामित एवाज्ञानसंशयविपर्यया विनिवर्त्तन्ते तान्प्रत्येतत्प्रणयनं सफलमितीदं प्रणीतवानाचार्यः ।

तत्रेदमादिसूत्रम्--

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवाद-

---

(१) अत्यल्पमिदमुच्यत इति मूले ।

(२) श्लो. वा. श्लो. ४३ ।

(३) शास्त्रप्रणयनं यस्य साफल्यादिति मूले पाठः ।

जल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निः श्रेयसाधिगमः ॥ १ ॥

आदिवाक्यारम्भाक्षेपसमाधाने—

ननु किमर्थोऽयमादिवाक्यारम्भः, को ऽयं प्रश्नः, शास्त्रं चेदारम्भणीयं क्रमवृत्तित्वाद्वाचः प्रथममवश्यं किमपि वाक्यं प्रयोक्तव्यं न ह्यादिवाक्यमकृत्वा द्वितीयादिवाक्यप्रणयनमुपपद्यते इति ग्रन्थकरणमेवाघटमानं स्यात्, आह— न खल्वेवं न जाने किं तु यदेव शास्त्रे व्युत्पाद्यत्वेन स्थितं तदेव व्युत्पाद्यतां किमादौ तदभिधेयप्रयोजनकीर्तनेन, उच्यते--

आदिवाक्यं प्रयोक्तव्यमभिधेयप्रयोजने ।
प्रतिपादयितुं श्रोतृप्रवाहोत्साहसिद्धये ॥
अभिधेयफलज्ञानविरहास्तमितोद्यमाः ।
श्रोतुमल्पमपि ग्रन्थमाद्रियन्ते न सूरयः ॥

को हि नाम विद्वानविदितविषये निष्प्रयोजने च कर्मणि प्रवर्त्तते, आह च भट्टः—

सर्वस्यैव हि शास्त्रस्य कर्मणो वा ऽपि कस्य चित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यत इति(१) ॥

ननु प्रयोजनपरिज्ञानमादौ श्रोतॄणां कुतस्त्यमिति चिन्त्यताम्, किमस्मादेव वाक्यादुत युक्तितः वाक्यं तावदनिश्चितप्रामाण्यं कथं प्रयोजननिश्चयाय प्रभवति संशयाद्वा प्रवृत्तौ वेदार्थे ऽपि तथैव स्यादिति शास्त्रमनारब्धव्यं स्यात्, युक्तितः प्रयोजनावगमः शास्त्रे सर्वस्मिन्नधीते सति सम्भवति नेतरथेति तदवगमपूर्विकायां प्रवृत्तावितरेतराश्रयः शास्त्राधिगमनात् प्रयोजनपरिज्ञानं प्रयोजनपरिज्ञानाच्च शास्त्रश्रवणे प्रवृत्तिः, उच्यते आदिवाक्यादेव श्रोतुः शास्त्रप्रयोजनपरिज्ञानमर्थसंशयाच्च श्रवणे प्रवृत्तिः ।

वेदे ह्यसिद्धप्रामाण्ये महाक्लेशेषु कर्मसु ।
नानर्थशङ्कया युक्तमनुष्ठानप्रवर्त्तनम् ॥
बहुवित्तव्ययायासवियोगसुगमे ऽध्वनि ।
प्रवृत्तिरुचितोदारफले लघुपरिश्रमे ॥
शृण्वन्त एव जानन्ति सन्तः कतिपयैर्दिनैः ।
किमेतत्सफलं शास्त्रमुत मन्दप्रयोजनम् ॥
सूक्ष्मेक्षिका तु यद्यत्र क्रियते प्रथमोद्यमे ।
असौ सकलकर्त्तव्यविप्रलोपाय कल्पते ॥

---

(१) श्लो॰ वा॰ श्लो॰ १२ ।

आर्त्तो हि भिषजं पृष्ट्वा तदुक्तमनुतिष्ठति ।
तस्मिन्त्सविचिकित्सस्तु व्याधेराधिक्यमाप्नुयात् ॥
तेनादिवाक्याद्विज्ञाय साभिधेयं प्रयोजनम् ।
तत्सम्भावनया कार्यस्तच्छास्त्रश्रवणादरः ॥

यैरप्यादिवाक्यमित्थं व्याख्यायते किलानन्वितपदार्थकं वाक्यमनुपादेयं दशदाडिमादिवाक्यवत् , अन्वितपदार्थकमपि निष्प्रयोजनमनुपादेयमेव सदसद्वायसदशनविमर्शवाक्यमिव, तदिहोपादेयताव्यापकप्रयोजनाद्यनुपलम्भादनादरणीयत्वमिति व्यापकानुपलब्ध्या प्रत्यवतिष्ठमानः प्रयोजनाद्यभिधायिनाऽऽदिवाक्येन निवृत्ताशङ्कः क्रियते इति तैरपि प्रयोजनप्रतिपादनमेवादिवाक्यस्यार्थ इत्युक्तं भवति, तत्प्रतिपादनेनैव व्यापकानुपलब्धिपरिहारादाशङ्का निवारिता भवति इति,

यदपि प्रवृत्तिहेतोरर्थसंशयस्य तर्कापरनाम्न औचित्यस्य वा समुत्पादनमादिवाक्येन क्रियते इति केचिदाचक्षते तदपि प्रयोजनाभिधानद्वारकमेव, प्रयोजनविषयो हि संशयो वा सम्भावनाप्रत्ययो वा प्रवृत्त्यङ्गभूतस्तेनोत्पादनीय इति तदुत्पत्तौ प्रयोजनाभिधानमेवादिवाक्यस्य व्यापारः संशयस्तु वस्तुवृत्तोपनत एव पुरुषवचसां द्वैविध्यदर्शनात् , शौचसमाचारसाधुतादिना तु तस्मिन् सम्भावनाप्रत्ययो ऽपि लोकस्य भवतीति, तस्मात्प्रयोजनप्रतिपादनार्थमेवादिवाक्यमिति सूक्तम् ।

यच्च श्रोतृप्रवृत्त्यङ्गं तद्वक्तुं युक्तमादितः ।
न च प्रयोजनज्ञानादन्यदस्ति प्रवर्त्तकम् ॥

अभिधेयकथनमपि तत्साध्यप्रयोजनोपपादनाय श्रोतृबुद्धिसमाधानाय च कर्त्तव्यमेव ।

अर्थाक्षिप्तस्तु सम्बन्धः फलशास्त्राभिधेयगः ।
तन्निर्देशेन सिद्धत्वान्न स्वकण्ठेन कथ्यते ॥

अभिधेयस्य शास्त्रस्य वाच्यवाचकभावलक्षणः सम्बन्धः शास्त्रार्थस्य निःश्रेयसस्य च साध्यसाधनभावः सम्बन्धः तदाश्रयनिर्देशादेव सिद्धः,

## पदार्थोद्देशः—

अभिधेयास्तु प्रमाणादयो निग्रहस्थानपर्यन्ताः षोडश पदार्थाः प्रथमसूत्रे निर्दिष्टास्तेषां स्वरूपमुपरिष्टाद्वक्ष्यते, अर्थपरिच्छित्तिसाधनानि प्रत्यक्षादीनि प्रमाणानि, तत्परिच्छेद्यमात्मादि, नानार्थावमर्शः संशयः, हिताहितप्राप्तिपरिहारौ तत्साधनं च प्रयोजनम् , हेतोः प्रतिबन्धावधारणं दृष्टान्तः, प्रमाणतो ऽभ्युपगम्यमानः सामान्यविशेषवानर्थः सिद्धान्तः, परार्थानुमानवाक्यैकदेशभूताः प्रतिज्ञादयो ऽवयवाः, सन्दिग्धेर्थे ऽन्यतरपक्षानुकूलकारणदर्शनात्तस्मिन्सम्भावनाप्रत्ययस्तर्कः,

साधनोपलम्भजन्मा तत्त्वावबोधो निर्णयः, वीतरागवस्तुनिर्णयफलो वादः, विजिगीषुकथा पुरुषशक्तिपरीक्षणफला जल्पः, तद्विशेषो वितण्डा, अहेतवो हेतुवदवभासमाना हेत्वाभासाः, अर्थविकल्पैः वचनविघातश्छलम् , हेतुप्रतिबिम्बनप्रायं प्रत्यवस्थानं जातिः, सत्यवस्त्वप्रतिभासः विपरीतप्रतिभासश्च निग्रहस्थानम् , तत्र वक्ष्यमाणलक्षणसूत्रनिर्देशानुसारेण कानि चिदेकवचनान्तानि पदानि विग्रहे ग्रहीतव्यानि प्रमाणावयवहेत्वाभासानां बहुवचनेन विग्रहो दर्शयितव्यः शेषाणामेकवचनेन लक्षणसूत्रेषु तथा निर्देशात् , एवं चोद्देशलक्षणयोरेकविषयता नितरां दर्शिता भवति, इतरेतरयोगे द्वन्द्वः समासः ।

तत्त्वज्ञानपदे समासविचारः—

प्रमाणादीनां तत्त्वमिति सम्बन्धमात्रे षष्ठी, तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति कर्मणि षष्ठ्यौ, तत्त्वस्य ज्ञायमानत्वेन निःश्रेयसस्य चाधिगम्यमानत्वेन कर्मत्वात् ,

नन्वेवं व्याख्यायमाने तत्त्वप्रमाणादिपदसापेक्षत्वेनासमर्थत्वादसमासः प्राप्नोति सापेक्षमसमर्थं भवतीत्याहुः, न चेदं प्रधानं सापेक्षं येन भवति वै प्रधानस्य सापेक्षस्यापि समास इति राजपुरुषः शोभन इति वत्समस्येत उत्तरपदार्थप्रधानत्वात् षष्ठीतत्पुरुषस्य ज्ञानमेवात्र प्रधानं तत्त्वमुपसर्जनम् , अतश्च ऋद्धस्य राज्ञः पुरुष इतिवदसमास एव युक्तः ।

ननु ज्ञानमपि प्रमाणादिसापेक्षं भवत्येव तद्विषयं हि तदिति, न तत्त्वपदेनास्य निराकाङ्क्षीकृतत्वात् , तत्त्वस्य ज्ञानमिति तदिदानीं तत्त्वमेव सापेक्षं वर्त्तते कस्य तत्त्वमिति तस्मात्तत्त्वस्योपसर्जनस्य सतः सापेक्षत्वादसमास एवेत्येवमभिशङ्कमानाः के चन तत्त्वं च तज्ज्ञानं चेति कर्मधारयं व्याचचक्षिरे तत्पुनरयुक्तम् , ज्ञानस्य स्वतस्तत्त्वातत्त्वविभागाभावात् , विषयकृतो हि ज्ञानानां तथाभावो ऽतथाभावो वा तदेतत्त्वविषयज्ञानं भवति न स्वतस्तत्त्वस्वभावम् , किं पुनरिदं तत्त्वं नाम सतो ऽसतो वा वस्तुनः प्रमाणपरिनिश्चितस्वरूपं शब्दप्रवृत्तिनिमित्तं तदित्युच्यते, तस्य भावस्तत्त्वमिति तच्च ज्ञानेन निश्चीयते, तत्परिच्छिन्दज्ज्ञानं तत्त्वज्ञानमित्युच्यते, ज्ञानस्यापि तद्रूपं ज्ञानान्तरपरिच्छेद्यमेव भवति, निर्णीयतत्त्वाच्च प्रमाणादय इति व्यतिरेकनिर्देश एव युक्तः, न चासमासप्रसङ्गमात्रादन्यथा वर्णनमुचितम् , ईदृशानां समासानां सामर्थ्यानपायेन बहुशो दृष्टत्वाद् देवदत्तस्य गुरुकुलमिति, उपसर्जनं नोपसर्जनमिति न कारणमेतत्समासे विग्रहवाक्यसमानार्थतया समासो भवति सा चेह विद्यते एव, वैयाकरणा अपि ईदृंशि पदानि समस्यन्त्येव, अथ शब्दानुशासनं केषां शब्दानां लौकिकानां वैदिकानां चेति, तस्माद्यथाभाष्यमेव षष्ठीत्रयव्याख्यानमनवद्यम् ।

## तत्त्वज्ञानस्य निःश्रेयसाधिगमहेतुत्वपरीक्षा—

ननु षोडशपदार्थतत्त्वज्ञानस्य कथं निःश्रेयसाधिगमहेतुत्वमिति वक्तव्यम् , वेदप्रामाण्यसिद्ध्यर्थं चेदं शास्त्रमिति तावन्मात्रमेव व्युत्पाद्यतां किं षोडशपदार्थकन्थाग्रन्थनेन, उच्यते आत्मापवर्गपर्यन्तद्वादशविधप्रमेयज्ञानं तावदन्यज्ञानानौपयिकमेव साक्षादपवर्गसाधनमिति वक्ष्यामः, तत्त्वज्ञानान्मिथ्याज्ञाननिरासे सति तन्मूलः संसारो निवर्त्तते इति प्रमेयं तावदवश्योपदेश्यम् , तस्य तु प्रमेयस्यात्मादेरपवर्गसाधनत्वाधिगम आगमैकनिबन्धनः ।

तस्य प्रामाण्यनिर्णीतिरनुमाननिबन्धना ।
आप्तोक्तत्वं च तल्लिङ्गमविनाभावि वक्ष्यते ॥
प्रतिबन्धग्रहे तस्य प्रत्यक्षमुपयुज्यते ।
को ऽन्यस्सन्तरणे हेतुरनवस्थामहोदधेः ॥
आयुर्वेदादिवाक्येषु दृष्ट्वा प्रत्यक्षतः फलम् ।
वचः प्रामाणमाप्तोक्तमिति निर्णीयतां यतः ॥

उपमानं तु क्वचित्कर्मणि सोपयोगमित्येवं चतुष्प्रकारमपि प्रमाणं प्रमेयवदुपदेष्टव्यम् , संशयादयस्तु पदार्था यथासम्भवं प्रमाणेषु प्रमेये चान्तर्भवन्तो ऽपि न्यायप्रवृत्तिहेतुत्वात्पृथगुपदिश्यन्ते, न्यायश्च वेदप्रामाण्यप्रतिष्ठापनपूर्वकत्वेन पुरुषार्थोपयोगित्वमुपयातीति दर्शितम् ।

तत्र नानुपलब्धे ऽर्थे न निर्णीते प्रवर्त्तते ।
किं तु संशयिते न्यायस्तदङ्गं तेन संशयः ॥
प्रयोजनमनुद्दिश्य न च न्यायं प्रयुञ्जते ।
दृष्टान्तः पुनरेतस्य सम्बन्धग्रहणास्पदम् ॥

सिद्धान्तो ऽपि धर्मप्रापणेनाश्रयासिद्धतामपोद्धरन्न्यायं प्रवर्त्तयति ।

ननु संशयपदेन न्यायविषयं सन्दिग्धं धर्मिणमभिदधता ऽऽश्रयासिद्धिरपोद्धृतैव, सत्यम् , क्वचितु विषये संशयमन्तरेणापि न्यायप्रवृत्तिर्दर्शयिष्यते इति संशयितैकविषयन्यायनियमाभावात्सिद्धान्तो ऽपि वक्तव्यः ।

न्यायाभिधाने ऽवयवाः परंप्रत्युपयोगिनः ।
परार्थमनुमानं च तदाहुर्न्यायवादिनः ॥

ननु प्रतिज्ञोदाहरणाभ्यां तदभिधेयौ सिद्धान्तदृष्टान्तौ गम्येते एव किं पृथगुपादानेन, यद्येवं हेत्वाख्येनावयवेन तदभिधेयसिद्धेरनुमानमपि पृथग् न वक्तव्यं स्यात् एवं भवतु किंनश्छिन्नम् मैवम् अभिधेये न्याये निरूपणीये तदभिधायिनामवयवानामवसर इति तदर्थः प्रथमं व्युत्पादनार्हो भवतीतरथा ऽवयवमात्रोपदेश एव शास्त्रं समाप्येत ।

तर्कः संशयविज्ञानविषयीकृततुल्यकल्पपक्षद्वयान्यतरपक्षशैथिल्यसमुत्पादनेन तदितरपक्षविषयं प्रमाणमक्लेशसम्पद्यमानप्रतिपक्षव्युदासमनुगृह्णाति मार्गशुद्धिमादधान इति पृथगुपदिश्यते, स चाशयशुद्धिमुपदर्शयितुं वादे प्रयोक्ष्यते इति अन्यतराधिकरणनिर्णयमन्तरेण न पर्यवस्यति न्यायोपरमकारणत्वेन तस्य प्रवर्त्तको निर्णय इतरथा निरवसानमनासादितफलं को नाम न्यायमारभेत ।

ननु तत्त्वज्ञानपदेन गतार्थत्वान्न पृथग्वक्तव्यो निर्णयः निर्णयो हि तत्त्वज्ञानमेव, अस्त्येतत् , किं तु षोडशपदार्थतत्त्वज्ञानं प्रमाणान्तरकरणकमपि भवति न तस्य न्यायोपरमहेतुत्वमेष तु साधनदूषणसरणिक्षोदजन्मा निर्णयस्तदुपरमहेतुः पृथगुपादानमन्तरेण न लभ्यते ।

नन्वनुमानपदादेव तर्हि यथाभिलषितो लप्स्यते निर्णयः, तदयुक्तम्—अनुमानफलं निर्णयो नानुमानम् , करणस्य प्रमाणत्वान्निर्णयोपादानमन्तरेण तदनुमानमफलमपर्यवसितं स्यात् , उभाभ्यां तर्हि तत्त्वज्ञानानुमानपदाभ्यामयमाक्षेप्स्यते निर्णयः, अनुमानस्य तत्त्वज्ञानन्तत्वात् , न- निर्णयोपादानाद्विना तदन्तत्वासिद्धेः लिङ्गाभाससमुत्थतत्त्वज्ञानाभाससम्भवात् ।

ननु संशयपूर्वकत्वादनुमानस्य सामर्थ्यान्निर्णयान्ततैव भविष्यति इति संशयानुमानतत्त्वज्ञानपदैर्गतार्थो निर्णयः, मैवम्—संशयपूर्वकत्वे ऽप्यनुमानस्य तदाभासोपजनितनिर्णयाभाससम्भवात् , न चैष नियमः संशयपूर्वकमनुमानमिति, तस्मादनुमानस्य विशिष्टनिर्णयावसानत्वलाभाय निर्णयपदमुपादेयमित्यलं प्रसङ्गेन ।

वादे तु विचार्यमाणे न्यायः संशयच्छेदनेनाध्यवसितावबोधमध्यवसिताभ्यनुज्ञातं च विदधत्तत्त्वपरिशुद्धिमादधातीति वीतरागैः शिष्यसब्रह्मचारिभिः सह वादः प्रयोक्तव्यः ।

जल्पवितण्डे तु दुष्टतार्किकोपरचितकपटदूषणाडम्बरसन्त्रास्यमानसरलमतिसमाश्वासनेन तद्धृदयस्थतत्त्वज्ञानसंरक्षणाय क्व चिदवसरे वीतरागस्याप्युपयुज्येते इति वक्ष्यामः,

हेत्वाभासाः सम्यग्न्यायप्रविवेकोपकारद्वारेण तदुपयोगिनो हेत्वाभासस्वरूपावधारणे हि सति तद्विलक्षणतया हेतवस्सुखमवगम्यन्ते ।

नन्वत्र विपर्ययो दृश्यते हेत्ववगमे सति तदितरहेत्वाभासव्यवस्थापनात् , सत्यमेवम्--तथा ऽपि प्रयोक्तुं च द्वयमपि ज्ञेयं हेतवः प्रयुज्यन्ते हेत्वाभासाश्च परिह्रियन्ते इति, यच्च निग्रहस्थानपरिगणिता अपि हेत्वाभासाः पुनरुपदिश्यन्ते तद्वादे चोदनीया भविष्यन्तीत्याशयेन ।

छलजातिनिग्रहस्थानानि जल्पवितण्डोपकरणानि तेषामवधृतस्वरूपाणां स्ववाक्ये परिवर्जनं क्व चिदवसरे प्रयोगः परप्रयुक्तानां च प्रतिसमाधानमित्यादि

शक्यक्रियम्, अतस्तान्यपि जल्पवितण्डाङ्गत्वाज् ज्ञातव्यानीति पृथगुपदिश्यन्ते।

दुःशिक्षितकुतर्कांशलेशवाचालिताननाः।
शक्याः किमन्यथा जेतुं वितण्डाटोपपण्डिताः॥
गतानुगतिको लोकः कुमार्गं तत्प्रतारितः।
मा गादिति च्छलादीनि प्राह कारुणिको मुनिः॥
तदेवमुपदेष्टव्याः पदार्थाः संशयादयः।
तन्मूलन्यायनिर्णयवेदप्रामाण्यसंविदे॥
तेनागमप्रामाण्यत्वद्वाराऽऽखिलफलप्रदा।
इयमान्वीक्षिकी विद्या विद्यास्थानेषु गण्यते॥

आह च भाष्यकारः-

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षितेति॥

इत्येष षोडशपदार्थनिबन्धनेन निःश्रेयसस्य मुनिना निरदेशि पन्थाः। अन्यस्तु सन्नपि पदार्थगणोऽपवर्गमार्गोपयोगविरहादिह नोपदिष्टः॥

## शास्त्रप्रवृत्तित्रैविध्यम्।

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षेति, नामधेयेन पदार्थाभिधानमुद्देशः, उद्दिष्टस्य तत्त्वव्यवस्थापको धर्मो लक्षणम्, लक्षितस्य तल्लक्षणमुपपद्यते न वेति विचारः परीक्षा।

ननु च विभागलक्षणा चतुर्थ्यपि प्रवृत्तिरस्त्येव भेदवत्सु प्रमाणसिद्धान्तच्छलादिषु तथा व्यवहारात्, सत्यम्-प्रथमसूत्रोपदिष्टे भेदवति पदार्थे भवत्येव विभागः उद्देशरूपानपायात्तु उद्देश एवासौ, सामान्यसञ्ज्ञया कीर्तनमुद्देशः प्रकारभेदसञ्ज्ञया कीर्तनं विभाग इति, तथा चोद्देशतयैव तत्र तत्र भाष्यकारो व्यवहरति अयथार्थः प्रमाणोद्देश इत्याक्षेपे तस्माद्यथार्थ एव प्रमाणोद्देश इति च समाधानमभिदधानः, तस्मात्त्रिविधैव प्रवृत्तिः, तत्रोद्देशः प्रथममवश्यं कर्त्तव्यः अनुद्दिष्टस्य लक्षणपरीक्षानुपपत्तेः, सामान्यविशेषलक्षणयोरपि पौर्वापर्यनियमोऽस्त्येव, अलक्षिते सामान्ये विशेषलक्षणावसराभावात्, परीक्षा तु लक्षणोत्तरकालभाविनीति तत्स्वरूपनिरूपणादेव गम्यते विभागसामान्यलक्षणयोस्तु नास्ति पौर्वापर्यनियमः, पूर्वं वा सामान्यलक्षणं ततो विभागः पूर्वं वा विभागः ततः सामान्यलक्षणमुच्यते इति, तदिहोद्देशस्तावद्व्याख्यातः, अस्माभिस्तु लक्षणसूत्राण्येव व्याख्यास्यन्ते, परीक्षासूत्रसूचितं तु वस्तु सोपयोगलक्षणवर्णनावसरे एव यथाबुद्धि दर्शयिष्यते, न पृथक्परीक्षासूत्रविवरणश्रमः करिष्यते, प्रथमसूत्रानन्तरं दुःखजन्मेत्यादि द्वितीयं सूत्रं लक्षणानौपयिकत्वान्नेह विवृतम्,

अपवर्गपरीक्षाशेषभूतत्वात्तु तदवसरे एव निर्णयिष्यते(१)।

## प्रमाणलक्षणम्।

प्रमाणसामान्यलक्षणं विभागसूत्रे त्ववसरप्राप्तत्वादिदानीमेव विव्रियते—

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि(२) ॥ इति

अत्रेदं तावद्विचार्यते, किं प्रमाणं नाम किमस्य स्वरूपं किं वा लक्षणमिति, ततः तत्र सूत्रं योजयिष्यते, तदुच्यते, अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धिं विदधती बोधाबोधस्वभावा सामग्री प्रमाणम्, बोधाबोधस्वभावा हि तस्य स्वरूपम्, अव्यभिचारादिविशेषणार्थोपलब्धिसाधनत्वं लक्षणम्।

ननु च प्रमीयते येन तत्प्रमाणमिति करणसाधनो ऽयं प्रमाणशब्दः, करणं च साधकतमं तमबर्थश्चातिशयः, स चापेक्षिकः साधकान्तरसम्भवे हि तदपेक्षयातिशययोगात्किं चित्साधकतममुच्यते, सामग्र्याश्चैकत्वात्तदतिरिक्तसाधकान्तरानुपलम्भात्किमपेक्षमस्या अतिशयं ब्रूमः, अपि च कस्मिन्विषये सामग्र्याः प्रमाणत्वम्, प्रमीयमाणो हि कर्मभूतो विषयः सामग्र्यन्तरीभूतत्वात्सामग्र्येवेति करणतामेव यायात्, निरालम्बनाश्चेदानीं सर्वप्रमितयो भवेयुरालम्बनकारकस्य चक्षुरादिवत्प्रमाणान्तःपातित्वात्, कश्च सामग्र्या प्रमेयं प्रमिमीते, प्रमातापि तस्यामेव लीनः, एवं च यदुच्यते प्रमाता प्रमाणं प्रमेयं प्रमितिरिति चतसृषु विधासु तत्त्वं परिसमाप्यते इति तद्व्याहन्यते, न च लोको ऽपि सामग्र्याः करणभावमनुमन्यते तस्यां करणविभक्तिमप्रयुञ्जानः, न ह्येवं वक्तारो भवन्ति लौकिकाः सामग्र्या पश्याम इति किं तु दीपेन पश्यामः चक्षुषा निरीक्षामहे इत्याचक्षते, तस्मान्न सामग्री करणमकरणत्वाच्च न प्रमाणमिति नेदं साधु प्रमाणस्वरूपम्—

अत्रोच्यते—यत एव साधकतमं करणं करणसाधनश्च प्रमाणशब्दः तत एव सामग्र्याः प्रमाणत्वं युक्तम्, तद्व्यतिरेकेण कारकान्तरे क्व चिदपि तमबर्थसंस्पर्शानुपपत्तेः, अनेककारकसन्निधाने कार्यं घटमानमन्यतरव्यपगमे च विघटमानं कस्मै अतिशयं प्रयच्छेत्, न चातिशयः कार्यजन्मनि कस्य चिदवधार्यते सर्वेषां तत्र व्याप्रियमाणत्वात्, सन्निपत्य जनकत्वमतिशय इति चेन्न—आरादुपकारकाणामपि कारकत्वानपायात्, ज्ञाने च जन्ये किमसन्निपत्य जनकं सर्वेषामिन्द्रियमनोऽर्थादीनामितरेतरसंसर्गे सति ज्ञाननिष्पत्तेः, अथ सहसैव कार्यजननमतिशयः, सो ऽपि कस्यां चिदवस्थायां करणस्येव कर्मणोपि शक्यते वक्तुम्, अविरलजलधरधाराप्रबन्धबद्धान्धकारनिवहे

(१) निर्णेष्यते इति युक्तः पाठः।

(२) गो० सू० अ० १ आ० १ स० ॥

बहुलनिशीथे सहसैव स्फुरता विद्युल्लतालोकेन कामिनीज्ञानमादधानेन तज्जन्मनि सातिशयत्वमवाप्यते, एवमितरकारककदम्बसन्निधाने सत्यपि सीमन्तिनीमन्तरेण तद्दर्शनं न सम्पद्यते, आगतमात्रायामेव तस्यां भवतीति तदपि कर्म कारकमतिशययोगित्वात्करणं स्यात्तस्मात्फलोत्पादाविनाभाविस्वभावत्वमवश्यतया कार्यजनकत्वमतिशयः, स च सामग्र्यन्तर्गतस्य न कस्य चिदेकस्य कारकस्य कथयितुं पार्यते, सामग्र्यास्तु सो ऽतिशयः सुवचः सन्निहिता चेत्सामग्री सम्पन्नमेव फलमिति सैवातिशयवती ।

ननु मुख्ययोः प्रमातृप्रमेययोरपि तदविनाभावित्वमतिशयोऽस्त्येव प्रमितिसम्बन्धमन्तरेण तयोस्तथात्वाभावात्, प्रमिणोतीति प्रमाता भवति प्रमीयते इति च प्रमेयम् , सत्यमेतत्-किं तु साकल्यप्रसादलब्धप्रमितिसंबन्धनिबन्धनः प्रमातृप्रमेययोर्मुख्यस्वरूपलाभः साकल्यापचये प्रमित्यभावाद्गौणे प्रमातृप्रमेये सम्पद्येते, एवं च साकल्यमन्तरेण प्रमितितमबर्थयोगात्तदेव करणम् ।

यत्तु किमपेक्षं सामग्र्याः करणत्वमिति तदन्तर्गतकारकापेक्षमिति ब्रूमः, कारकाणां धर्मः सामग्री न स्वरूपहानाय तेषां कल्पते साकल्यदशायामपि तत्स्वरूपप्रत्यभिज्ञानात् ।

ननु समग्रेभ्यः सामग्री भिन्ना चेत्कथं पृथङ् नोपलभ्यते, अभेदे तु सर्वकारकाणि करणीभूतान्येवेति कर्तृकर्मव्यवहारोच्छेदप्रसङ्गः, मैवम्—समग्रसन्निधानाख्यधर्मस्य प्रत्यक्षमुपलम्भात्, पृथगवस्थितेषु हि स्थालीजलज्वलनतण्डुलादिषु न समग्रताप्रत्ययः समुदितेषु तु भवतीत्यतस्तन्तुपटलपरिघटितघटाद्यवयविवत्कारककलापनिष्पाद्यद्रव्यान्तराभावे ऽपि समुदायात्मिका सामग्री विद्यते एवेति समुदाय्यपेक्षया करणतां प्रतिपद्यते तस्मान्न परिचोदनीयमिदं कस्मिन्कर्मणि सामग्री करणमिति, समुदायिनां सामग्र्यवस्थायामपि स्वरूपानपायात् समुदायिविशेषे कर्मणि सामग्री करणम्, अत एव न प्रमितेर्निरालम्बनत्वम् , एतेन प्रमाता पृथगुपदर्शित इति विधाचतुष्टयमपि समाहितम् ।

यत्त्वभ्यधायि सामग्र्याः करणविभक्तिनिर्देशो न दृश्यते इति तत्रोच्यते- सामग्री हि संहतिः सा हि संहन्यमानव्यतिरेकेण न व्यवहारपदवीमवतरति तेन सामग्रीं पश्यामीति न व्यपदेशः, यस्तु दीपेन्द्रियाणां तृतीयानिर्देशः स फलोपजननाविभाविस्वभावत्वाख्यसामग्रीसरूपसमारोपणनिबन्धनः, अन्यत्रापि च तद्रूपसमारोपेण स्थाल्या पचतीति व्यपदेशा दृश्यते एव, तस्मादन्तर्गतकारकापेक्षया लब्धकरणभावा सामग्री प्रमाणम् ।

अपरे पुनराचक्षते, सामग्री नाम समुदितानि कारकाणि तेषां द्वैरूप्य महृदयङ्गमम्, अथ च तानि पृथगवस्थितानि कर्मादिभावं भजन्ते, अथ च तान्येव समुदितानि करणीभवन्तीति कोऽयं नयः, तस्मात्कर्तृकर्मव्यतिरिक्त-

मव्यभिचारादिविशेषणकार्थप्रमाजनकं कारकं करणमुच्यते, तदेव च तृतीयया व्यपदिशन्ति, दीपेन पश्यामि चक्षुषा निरीक्षे लिङ्गेन बुध्ये शब्देन जानामि मनसा निश्चिनोमीति ।

ननु त्रीण्येव कारकाण्यस्मिन् पक्षे भवेयुः ज्ञानक्रियायां तावदेवमेवैत-द्यथा भवानाह, पाकादिक्रियासु क्रियाश्रयसाधारणाद्व्युपकारभेदपर्यालोचनया-भवत्वधिकरणादिकारकान्तरव्यवहारः प्रमितौ तु मनोदीपचक्षुरादेर्न लक्ष्यते विशेष इति तत्सर्वं कारणत्वेन सम्मतम्, कस्तेषु तमबर्थ इति चेत्, अस्ति कश्चिद् यदयं लोकोऽहं मया जानामि घटेन घटं जानामि इति न कर्तृकर्मणी विस्मृत्यापि करणत्वेन व्यपदिशति, नयनमनोदीपशब्दलिङ्गादीनि तु तथा व्यपदिशति सोऽयमेषां पश्यति कर्तृकर्मवैलक्षण्यं चक्षुरादीनाम्, तद्वैलक्षण्यमेव च तेषामतिशय इति तदयमिह प्रमाणं प्रमाता प्रमेयं प्रमितिरिति चतुर्वर्गेणैव व्यवहारः परिसमाप्यते, तस्मात्कर्तृकर्मविलक्षणा संशयविपर्ययरहितार्थबोध-विधायिनी बोधाबोधस्वभावा सामग्री प्रमाणमिति युक्तम् ।

## बौद्धाभिमतप्रमाणपरीक्षणम्—

ये तु बोधस्यैव प्रमाणत्वमाचक्षते न सूक्ष्मदर्शनास्ते बोधः खलु प्रमा-णस्य फलं न साक्षात्प्रमाणम्, करणार्थाभिधानो हि प्रमाणशब्दः प्रमीयतेऽ-ऽनेनेति प्रमाणम्, प्रमीयते इति कोऽर्थः प्रमा जन्यते इति, प्रमाणादवगच्छाम इति च वदन्तो लौकिकाः करणस्यैव प्रामाण्यमनुमन्यन्ते, यस्तु प्रमा प्रमाण-मिति प्रमाणशब्दः स प्रमाणफले द्रष्टव्यः, तथा च संशयविपर्ययात्मकं प्रमाण-फलमिति ज्ञानमात्ममनोऽनुमाने तद्विशेषणार्थपरिच्छेदे वा विशिष्टप्रमाणज-ननात्प्रमाणतां प्रतिपद्यते, अव्यभिचारादिविशेषणोपपन्नमपि ज्ञानमफलजन-कमप्रमाणमेव प्रमाणमुच्यते—

तदयुक्तम्—सकलजगद्विदितबोधेतरस्वभावशब्दलिङ्गदीपेन्द्रियादिपरिहारप्र-सङ्गात्, तस्मात्सामग्र्यनुप्रविष्टबोधो विशेषणज्ञानमिव क्वचित्प्रत्यक्षे लिङ्ग-ज्ञानमिव लिङ्गिप्रमितौ सारूप्यदर्शनमिवोपमाने शब्दश्रवणमिव तदर्थज्ञाने प्रमाणतां प्रतिपद्यते, अत एव बोधाबोधस्वभावा सामग्री प्रमाणमित्युक्तम् ।

अन्ये तुल्यसामग्र्यधीनयोर्ज्ञानार्थयोर्ग्राह्यग्राहकभाव वदन्तो बोधं प्रमाण-मभ्युपागमन्, क्षणभङ्गिषु पदार्थेषु सहकार्युपादानकारणापेक्षक्षणान्तरसन्ततिज-ननेन च लोकयात्रामुद्वहत्सु ज्ञानजन्मनि ज्ञानमुपादानकारणम् अर्थः सहकारि-कारणम् अर्थजन्मनि चार्थ उपादानकारणं ज्ञानं सहकारि कारणमिति, ज्ञानं च ज्ञानार्थजन्यमर्थश्चार्थज्ञानजन्यो भवतीत्येवमेकसामग्र्यधीनतया तमर्थम-व्यभिचरतो ज्ञानस्य तत्र प्रामाण्यमिति,

तदिदमनुपपन्नम्, अफलजनकस्य प्रमाणत्वापत्तेरित्युक्तत्वात्, अपि च कर्मणि ज्ञानं प्रमाणमिष्यते, यथोक्तं सव्यापारमिवाभाति व्यापारेण स्वकर्मणेति, स चायमर्थक्षणो ज्ञानसमकालस्ततः पूर्वाभ्यां ज्ञानार्थक्षणाभ्यामुपजनित इति तत्कर्मतां प्रतिपद्यतां न पुनःस्वसमानकालप्रसूतज्ञानक्षणकर्मतामिति।

ननु च तुल्यसामग्र्यधीनतया समानकालतया च तदव्यभिचारसिद्धौ क कर्मत्वमुपयुज्यते, हन्त तर्हि सहोत्पन्नयोः समानसामग्रीकयोर्ग्राह्यग्राहकनियमः किंकृत इति कर्त्तव्यं ज्ञानं प्रकाशस्वभावमिति ग्राहकम्, अर्थो जडात्मेति ग्राह्यमिति चेदयमपि विशेषस्तुल्यकारणयोः कुतस्त्यः, उपादानसहकारिकारणभेदादिति चेन्न, तस्य क्षणभङ्गभङ्गे निराकारयिष्यमाणत्वात्,

ये हि निराकारस्य बोधरूपस्य नीलपीताद्यनेकविषयसाधारणत्वाज् जनकत्वस्य च चक्षुरादावपि भावेनातिप्रसङ्गात्तदाकारकृतमेव ज्ञानकर्मनियममवगच्छन्तः सकारविज्ञानं प्रमाणमिति प्रतिपेदिरे तेऽपि विज्ञानाद्वैतसिषाधयिषयैवमभिदधानास्तन्निरासप्रसङ्ग एव निरसिष्यन्ते, न ह्येकमेव साकारं ज्ञानं ग्राह्यं ग्राहकं च भवितुमर्हतीति वक्ष्यते, अर्थस्तु साकारज्ञानवादिनो न समस्त्येव, स ह्यनुमेयो वा स्यात्प्रत्यक्षो वा, नानुमेयः सम्बन्धग्रहणाभावात्।

अर्थे हि सति साकारं निराकारं तदत्ययये।
नित्यानुमेयबाह्यार्थवादी ज्ञानं क दृष्टवान्॥

नापि प्रत्यक्षोऽर्थः, आकारद्वयप्रतीत्यभावात्, अभ्युपगमे चानवस्थाप्रसङ्गात्, अर्थाकारो हि निराकारज्ञानगम्यो न भवतीति ज्ञानेनाकारवत्ता गृह्यते, सोऽयमिदानीं ज्ञानाकारोऽपि ग्राह्यत्वादन्येनाकारवता गृह्यते सोऽप्यन्येनेति, अथ वा अर्थो निरकारज्ञानग्राह्यतां नोपयातीति स्वग्राहके ज्ञानात्मनि समर्पितात्मा भवतीति साकारं ज्ञानमेवेदं सम्पन्नमिति पुरर्थोऽन्यः कल्पनीयः सोऽपि ग्राह्यत्वात्स्वग्राहकस्य साकारत्वसिद्ध्ये तत्रैव लीयते इति साकारं ज्ञानमेवावशिष्यते इति पुनरर्थोऽन्य इतीत्थमनवस्था, प्रतिकर्मव्यवस्था(१) तु जनकत्वनिबन्धना भविष्यति वस्तुस्वभावस्यापर्यनुयोज्यत्वात्, साकारपक्षेऽपि पर्यनुयोगसाम्यमित्यादि सर्वमुपरिष्टात् सविस्तरमभिधास्यते, साकारपक्षेऽपि च न प्रमाणाद्व्यतिरिक्तं फलमुपदर्शितमित्यसत्पक्ष एवायम्।

## मीमांसकमतम्।

शाबरास्तु ब्रुवते य एते बोधप्रामाण्यवादिनो विज्ञानादभिन्नमेव फल-

---

(१) कस्यचित्पुंसः कदाचिदेव कश्चिदेव विषयो ज्ञानकर्म न सर्वस्य सर्वदा सर्व इति व्यवस्था प्रतिकर्मव्यवस्थापदेनोच्यते।

मभिदधति ते बाढं निरसनीया भवन्त्येव वयं तु विज्ञानाद्भिन्नमेव फल-मर्थदृष्टताख्यमभ्युपगमच्छाम:(१), तेनैव तदनुमीयते ज्ञानं हि नाम क्रियात्मकं क्रिया च फलानुमेया ज्ञातृव्यापारमन्तरेण फलानिष्पत्तेः संसर्गोऽपि कारकाणां क्रियागर्भ एव भवति तदनभ्युपगमे किमधिकृत्य कारकाणि संसृज्येरन्, न चासंसृष्टानि तानि फलवन्ति, क्रियावेशवशाच्च कारकं कारकं भवति, अपरथा हि तद्वस्तुस्वरूपमात्रमेव स्याद् न कारकम्, ततश्च न फलार्थिभिरुपा-दीयेतेति व्यवहारविप्लोपः, तस्माद्यथा हि कारकाणि तण्डुलसलिलानलस्था-ल्यादीनि सिद्धस्वभावानि साध्यं धात्वर्थमेकं पाकलक्षणमुररीकृत्य संसृज्यन्ते, संसृष्टानि च क्रियामुत्पादयन्ति तथाऽऽत्मेन्द्रियमनोऽर्थसन्निकर्षे सति ज्ञानाख्यो व्यापार उपजायते स च न प्रत्यक्षः अर्थस्यैव बहिर्देशसम्बद्धस्य ग्रहणादाकार-द्वयप्रतिभासाभावादगृहीतस्यापि तस्य चक्षुरादिवदुपायत्वात्परोक्षोऽपि चासौ विषयप्रकाशतालक्षणेन फलेन कल्प्यते तदाह भाष्यकारः 'न ह्यज्ञा(२)तेऽर्थे कश्चिद्बुद्धिमुपलभते ज्ञाते त्वनुमानादवगच्छती'ति, वार्त्तिककृताऽप्युक्तम्—

नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञानं चेन्नेत्यतः पश्चात्प्रमाणमुपकल्प्यते ॥ इति(३) ।

तदेष फलानुमेयो ज्ञानव्यापारो ज्ञानादिशब्दवाच्यः प्रमाणम्, इन्द्रियादी-नां तदुत्पादकतया ज्ञानमुपचरति न साक्षादिति ।

## मीमांसकमतनिराकरणम्—

अत्र प्रतिविधीयते—अहो बत इमे केभ्यो बिभ्यतः श्रोत्रियाः परं किमपि वैक्लव्यमुपागताः- न खल्वनित्यं परोक्षं ज्ञानं भवितुमर्हति, ज्ञातोऽर्थ इति क्वचित्तद्विशिष्टार्थप्रत्यवमर्शदर्शनाद् विशेषणाग्रहणे शुक्लः पट इतिवद्विशिष्टप्रतीते-रनुत्पादात्, कश्चायमियान्सन्त्रासः विषयग्रहणकाले विज्ञानाग्रहणमात्रकेण बाह्यार्थनिह्नववादिनः शाक्याः शक्याः शमयितुम्, यत्तु क्रियास्वभावत्वात्तस्य परोक्षत्वं तदयुक्तम्, न हि क्रियास्वभावं ज्ञानमपि तु फलस्वभावमेव, अपि च क्रियाऽपि प्रत्यक्षद्रव्यवर्त्तिनी प्रत्यक्षैव भट्टानां प्रत्यक्षश्चात्मा तत्किमनेनाप-राद्धं यदेतदीयक्रियाया अप्रत्यक्षत्वमुच्यते, न चोत्क्षेपणादिभेदभिन्नपरिस्पन्दा-

---

(१) अभ्युपगच्छाम इति । तदुक्तं शास्त्रदीपिकायाम् ज्ञानक्रिया हि सकर्मिका कर्मभूतेऽर्थे फलं जनयति तच्च फलमैन्द्रियकमिन्द्रियज्ञानजन्यमापरोक्ष्यम् लिङ्गादि-ज्ञानजन्यं तु पारोक्ष्यमित्युच्यते तदेव च फलं कार्यभूतं कारणभूतं विज्ञानमुपकल्प-यति' इति ।

(२) शबर० अ० १ पा० १ सू० ॥

(३) श्लोकवार्तिके शून्यवादे श्लो० १७८ ॥

त्मकव्यापारव्यतिरेकेण बाह्यकारकेष्वपि सूक्ष्मा नाम का चिदस्ति क्रिया, सा हि यदि नित्या जातिवद्, अथानित्या रूपवद्वस्तुधर्म इष्येत, तत्र यदि नित्या तर्हि सर्वदा वस्तुनः क्रियायोगात्सर्वदा फलनिष्पत्तिप्रसङ्गः, अथ कारकनिर्वर्त्या क्रिया सापीदानीं कार्यत्वात् सव्यापारकारककार्या भवेदित्यनवस्था, निष्क्रियकारककार्यत्वे तु क्रियामिव फलमपि निष्क्रियाण्येव कारकाणि कुर्युरिति किं क्रियया।

ननु करोतीति कारकं क्रियावेशमन्तरेण कारकत्वानुपपत्तेः, सत्यं--करोतीति कारकं तत्तु फलमेव करोति न क्रियाम्।

ननु करोतीति यद् ब्रूषे सेयमुक्तैव क्रिया भवति चैत्रः कटं करोतीति चैत्रस्येव कटस्येव करोत्यर्थस्याप्रत्याख्येयत्वात् तत्कृतमेव चैत्रादीनां कारकत्वम्, उच्यते—नातीन्द्रियक्रियायोगनिबन्धनः कारकभावः क्रियाया अतीन्द्रियत्वेन तद्योगकृतकारकत्वानधिगमे व्यवहारविप्रलोपप्रसङ्गात्, क्रियावेशकृतं हि तत्कारकत्वमनवगच्छन्तः कथं फलार्थिनस्तदुपाददीरन्।

मत्पक्षे कारकत्वं हि नास्ति किं चिदतीन्द्रियम्।
कारकत्वस्वरूपस्य सहकार्यादिसन्निधिः॥
तावदेव विनिश्चित्य तदुपादीयते ऽर्थिभिः।
तदेवोपाददानैश्च फलमप्यधिगम्यते॥
निर्व्यापारस्य सत्त्वस्य को गुणः सहकारिभिः।
सव्यापारस्य सत्त्वस्य को गुणः सहकारिभिः॥
अथ व्यापार एवैष सर्वैः सम्भूय साध्यते।
किं फलेनापराद्धं वस्तद्धि सम्भूय साध्यताम्॥

यत्तु करोत्यर्थस्याप्रत्याख्येयत्वादित्युक्तं तत्रोच्यते—परिस्पन्द एव भौतिको व्यापारः करोत्यर्थः, न हि वयं परिस्पन्दात्मकं परिदृश्यमानं व्यापारमपन्हुमहे प्रतिकारकं विचित्रस्य ज्वलनादेर्व्यापारस्य प्रत्यक्षमुपलम्भात्, अतीन्द्रियस्तु व्यापारो नास्तीति ब्रूमहे,

ननु पाको नाम धात्वर्थः परिदृश्यमानज्वलनादिव्यापारव्यतिरिक्त एषितव्य एव तमन्तरेण फलनिष्पत्तेरभावात्, असति च तस्मिन्किमधिकृत्य कारकाणि संसृज्येरन्नित्युक्तं तदयुक्तम्, यं तमेकं धात्वर्थं साध्यं बुध्यसे स किं

---

यदि स्वकाले (ज्ञानं) नावगतं कथं तर्हि पश्चादवगम्यतेऽत आह—नान्यथेति अस्ति हि खलु पश्चाद् ज्ञानावधारणे प्रमाणमर्थापत्तिः ज्ञातार्थान्यथानुपपत्तिप्रभवा सा प्रागज्ञातेऽर्थे न जायते पश्चादुपजायत इति युक्तमेव प्रमाणसद्भावादुत्तरकालमेव ग्रहणम् इति श्लोकवार्तिकव्याख्या काशिका।

समुदितसकलकारकसम्पाद्य एकैककारकनिर्वर्त्यो वा।

तत्राद्यपक्ष एकैकं भवेत्कारकमक्रियम् ।
एकैकनिष्क्रियत्वे च साकल्ये ऽपि कुतः क्रिया ।।

उत्तरस्मिन्पक्षे प्रत्येकमपि पाकक्रियायोगात्कारकान्तरनिरपेक्षादेकस्मात्कारकात्फलनिष्पत्तिप्रसङ्गः, न च तथाविधधात्वर्थपुरः सरः कारकाणां संसर्गः ।

क्रियानिमित्तसंसर्गवादिनो हि द्वयी गतिः ।
सत्यां क्रियायां सम्बन्धः सम्बन्धे सति वा क्रिया ।।
मीलनात्(१)पूर्वसिद्धायां क्रियायां मीलनेन किम् ।
तथा च जन्येत फलं विभक्तैरपि कारकैः ।।
मालनात्तु क्रियासिद्धौ पुनरेकैकमक्रियम् ।
तथा सति न काष्ठानि ज्वलेयुः पिठराद्विना ।।

काष्ठानि ज्वलन्ति न तु पचन्ति, मैवम् , सत्यपि पिठरे ज्वलन्त्येव काष्ठानि नान्यत्कुर्वन्ति दृश्यन्ते तस्मात्क्रियान्तराभावात्फलमेवोररीकृत्य कारकाणि संसृज्यन्ते।

ननु फलमपि सिद्धं चेत्कः सर्वेषा सिद्धस्वभावानां सम्बन्धः फलं सिद्धं कारकाणि च सिद्धानीति सम्बन्धाभावः साध्यं चेत्फलं सैव क्रिया परिस्पन्दव्यतिरिक्तेति, मैवं-वोचः फलस्य क्रियात्वानुपपत्तेः, ओदनं हि फलं न क्रिया क्रियानाम्नि तु क्रियमाणे न विवदामहे ।

ननु पाक इदानीं कः न च पचेर्वाच्यशून्यतैव युक्ता, उच्यते—समुदितदेवदत्तादिसकलकारकनिकरपरिस्पन्द एव विशिष्टफलावच्छिन्नः पाक इत्युच्यते, स एव हि पचेरर्थः ता एव काष्ठपिठरादिक्रिया ज्वलनभरणादिस्वभावाः पृथक्तया व्यवस्थिताः तथात्वेनैवावभासन्ते समुदितास्तु सत्यः फलान्तरावच्छेदाद्रूपान्तरेण पाकादिना परिस्फुरन्ति व्यपदिश्यन्ते च, तथा च देवदत्तः पचतीतिवत्काष्ठानि पचन्ति स्थाली पचतीति व्यपदेशो दृश्यते, देवदत्तस्यापि दर्वीविघट्टनादिरेव परिदृश्यमानस्तत्र व्यापारः आत्मव्यापारपूर्वको भवितुमर्हति, नैतदेवं न ह्यात्मनो व्यापारः कश्चिदस्ति इच्छाद्वेषपूर्वकप्रयत्नवशादेव स भौतिकव्यापारकरणतां प्रतिपद्यते ।

तस्मात्कारकचक्रेण चलता जन्यते फलम् ।
न पुनश्चलनादन्यो व्यापार उपलभ्यते ।।
चलन्तो देवदत्ताद्यास्तदनन्तरमोदनः ।
एतावद्दृश्यते त्वत्र न त्वन्या का चन क्रिया ।।

---

( १ ) मिलनादिति युक्तः पाठः, एवमग्रेऽपि ।

एतेन भावनाख्यः करोत्यर्थः पुरुषव्यापारो वाक्यार्थ इति यो ऽभ्युपगतः सो ऽपि प्रत्युक्तो वेदितव्यः, न हि पुरुषव्यापारः कश्चिदुपलभ्यते विशिष्टगुणसमवाय एवास्य कर्तृत्वं न च ज्ञानादयो गुणा एव व्यापारसंज्ञावाच्याः सिद्धस्वभावत्वात् ।

ननु क्रियावचनो धातुरिति जानातेरपि क्रियैव वाच्या स्यात्सा च क्रिया ज्ञानात्मा पुरुषव्यापारः, नायं नियमः क्रियावचनो धातुरिति 'गडि वदनैकदेशे'- इत्यपि दर्शनात् , अपि च घटमहं जानामीत्यत्र भवतः किं प्रत्यवभासते घटमिति तावद्विषयः अहमित्यात्मा जानामीति तु चिन्त्यं किमत्र प्रकाशत इति, न व्यापारः परोक्षत्वात् , फलं तु यद्यत्र प्रकाशते तदेव तर्हि धातुवाच्यमभ्युपगतं भवति तस्मान्न क्रियात्मकं ज्ञानम् , यदि च क्रियात्मकं ज्ञानमभविष्यन्न भाष्यकारः क्रियातः पृथगेनं निरदेक्ष्यत, निर्दिशति च बुद्धिकर्मणी अपि हि प्रत्यभिज्ञायेते ते अपि नित्ये प्राप्नुत इति, तस्मादन्यज् ज्ञानमन्या च क्रियेति न क्रियास्वभावत्वान्नित्यपरोक्षं ज्ञानम् , यदि च नित्यपरोक्षो ज्ञानव्यापारः स तर्हि प्रतिबन्धाग्रहणादनुमातुमपि न शक्यः क्रियाविशिष्टबाह्यकारकदृष्टान्तस्य निरस्तत्वात् , आत्माद्यनुमाने का वार्त्तेति चेन्न, तत्र सामान्यतो व्याप्तिग्रहणस्य सम्भवादिति वक्ष्यामः, इह तु बाह्यकारकेष्वपि न तत्पूर्वकं फलं दृष्टमित्युक्तम् , न चार्थापत्तिरपि ज्ञातृव्यापारकल्पनायैव प्रभवति इन्द्रियार्थसन्निकर्षवशादेवार्थदृष्टताया घटमानत्वात् , का चेयमर्थदृष्टता नाम किं दर्शनकर्मता किं वा प्रकाशस्वभावतेति, तत्र दर्शनस्य परोक्षत्वात्कथं तत्कर्मता ऽर्थस्य दृष्टत्वाद् गृह्येत, विशेषणाग्रहणे विशिष्टप्रतीतेरनुत्पादात् , अर्थप्रकाशतायास्तु सर्वान्प्रत्यविशेषात्सर्वे सर्वज्ञाः स्युः, न स्युः सम्बन्धितयोत्पादादिति चेत् , अकारणमेतत् , अर्थस्यैव हि प्रकाशत्वमतिशयो दीपादेरिव न पुरुषनियमेन व्यवतिष्ठते ।

न च द्वित्वादिना साम्यं तद्दिमन्नियमदर्शनात् ।
प्रकाशे तु न दीपादौ सम्बन्धनियमः क चित् ॥
यदपेक्षाधियो जातं द्वित्वमस्यैव तद्ग्रहः ।
संवेदनमपि प्राज्ञैः कस्यातिशय उच्यते ॥
ज्ञातुश्चेदन्तरान्येन व्यापारेणास्य को गुणः ।
ननु नैव क्रियाशून्यं कारकं फलसिद्धये ॥
उक्तमत्र क्रिया ह्येषा यथादर्शनमिष्यताम् ।
ज्ञानं संवेदनं वेति विद्मः पर्यायशब्दताम् ॥
संवेदनं तु ज्ञानस्य फलत्वेन न मन्महे ।
अर्थातिशयपक्षे तु सर्वसर्वज्ञता पुनः ॥

भट्टपक्षाद्विशेषश्च न कश्चित्कथितो भवेत् ।
नोभयातिशयो ऽप्येष दोषद्वितयसम्भवात् ॥
संवेदनं च तत्केन ग्राह्यं ज्ञानानुमापकम् ।
अनवस्था भवेदस्य ज्ञाने संवेदनान्तरात् ॥
स्वसंवेद्या च संवित्तिरुपरिष्टान्निषेत्स्यते ।
स्मृतिप्रमोषवादे च रजतस्मरणात्मिका ॥
कथं ते फलसंवित्तिः स्वप्रकाशा भविष्यति ।
नाभाति स्मृतिरूपेण न चाप्यनुभवात्मना ॥
न तृतीयः प्रकारो ऽस्ति तत्कथं सा प्रकाशताम् ।
न च क चिदनाकारा संवित्तिरनुभूयते ॥
इयं संविदयं चार्थ इति नास्ति ह्यभेदधीः ।
अर्थाकारानुरक्ता तु यदि संवित्प्रकाशते ॥
बाह्यार्थनिह्नवस्तर्हि त्वया सौगतवत्कृतः ।
स्वप्रकाशमते युक्तं न फलं संविदात्मकम् ॥
तस्मात्फलानुमेयस्य न व्यापारस्य मानता ।

यदपि प्रमाणविशेषणमनधिगतार्थग्राहित्वमभिधीयते परैस्तदपि न साम्प्रतम्, प्रमाणस्य गृहीततदितरविषयप्रवृत्तस्य प्रामाण्ये विशेषाभावात् ।

ननु गृहीतविषये प्रवृत्तं प्रमाणं किं कुर्यात्, प्रमामिति चेद्गृहीतापि तामेव विधातुम्, कृतायाः करणायोगदिति चेन्न प्रमान्तरकरणात्, प्रमान्तरकरणे किं फलमिति चेत्प्रमान्तरकरणमेव फलम् न च फलस्य फलं मृग्यम्, न च प्रयोजनानुवर्ति प्रमाणं भवति, कस्य चैष पर्यनुयोगः, न प्रमाणस्याचेतनत्वात्, पुंसस्तु सन्निहिते विषये करणे च सम्भवन्ति ज्ञानानीति सो ऽपि किमनुयोज्यताम्, किमक्षिणी निमील्य नास्से कस्माद् दृष्टं विषयं पश्यसीति, प्रमाणस्य तु न किं चित् बाध्यं पश्यामो येन तदप्रमाणमिति व्यवस्थापयामः न च सर्वात्मनः वैफल्यम् हेये हि कण्टकवृकमकरविषधरादौ विषये पुनः पुनरुपलभ्यमाने मनः सन्तापात्सत्वरं तदपहानाय प्रवृत्तिः, उपादेये ऽपि चन्दनघनसारहारमहिलादौ परिदृश्यमाने प्रीत्यतिशयः स्वसंवेद्य एव भवति । यच्चेदमुच्यते—

यत्रापि स्यात्परिच्छेदः प्रमाणैरुत्तरैः पुनः ।
नूनं तत्रापि पूर्वेण सोर्थो नावधृतस्तथा ॥ इति ।

तदपि न हृदयंगमम्, यतः—

नैवाधिकपरिच्छेदः प्रमाणैरुत्तरैर्ध्रुवम् ।
धारावाहिषु बोधेषु कोऽधिको ऽर्थः प्रकाशते ॥

न हि स्वहस्ते शतकृत्वो ऽपि दृश्यमाने के चन विशेषाः परिस्फुरन्ति ।

ननु गृहीते ऽपि विषये प्रवर्त्तमानं प्रमाणं कदा विरमेत्र तस्य विरतौ कं चिदवधिमवगच्छामः प्रमोत्पादस्त्ववधिरनेन लङ्घित एव, उच्यते—विषयान्तरसम्पर्काद्वा प्रमादाद्वा उपायसंक्षयाद्वा विरामो भविष्यति, अनवस्था ऽपि चेयं न मूलविघातिनी न ह्युत्तरोत्तरविज्ञानोपजननं विना प्रथमज्ञानोत्पादो विहन्यते ।

मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् ।
मूलसिद्धौ त्वरुच्या ऽपि नानवस्था निवार्यते ।
यदि चानुपलब्धार्थग्राहि मानमुपेयते ॥
तदयं प्रत्यभिज्ञायाः स्पष्ट एव जलाञ्जलिः ।
यश्चेदानींतनास्तित्वप्रमेयाधिक्यलिप्सया ।
तस्याः प्रमाणतामाह सो ऽपि वञ्चयतीव नः ॥
आविनाशकसद्भावादस्तित्वं पूर्वया धिया ।
स्पष्टमेव तथा चाह चिरस्थायीति गृह्यते ॥
तस्मादनुपलब्धार्थग्राहित्वे त्यज्यतां ग्रहः ।
नन्वेतस्मिन्परित्यक्ते प्रामाण्यं स्यात्स्मृतेरपि ॥
न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम् ।
अपि त्वनर्थजन्यत्वं तदप्रामाण्यकारणम् ॥

ननु कथमनर्थजा स्मृतिः तदारूढस्य वस्तुनः तदानीमसत्त्वात् ,कथं तर्हि भूतवृष्ट्यनुमानं नानर्थजं तत्र धर्मिणो ऽनुमेयत्त्वात्तस्य च ज्ञानजनकस्य तत्र भावात्, नद्याख्य एव धर्मी वृष्टिमदुपरितनदेशसंसर्गलक्षणेन धर्मेण तद्वाननुमीयते विशिष्टसलिलपूरयोगित्वात्, स चानुमानग्राह्यो धर्मी विद्यते एवेति नानर्थजमनुमानम्, कथं तर्हि प्रातिभमनागतार्थग्राहि श्वो मे भ्राताऽऽगन्तेति प्रत्यक्षमर्थजमिष्यते भवद्भिः, तत्र देशान्तरे विद्यमानस्य भ्रातुः श्वो भाव्यागमनविशेषः तस्यैव तथैव ग्रहणम्, तेन च रूपेण गृह्यमाणस्य सतस्तस्य ज्ञानजनकत्वमित्यर्थजमेव प्रातिभम्, स्मरणं तु निर्दग्धपित्रादिविषयमनपेक्षितार्थमेव जायमानं दृष्टमित्यन्यत्र देशान्तरस्थितार्थस्मरणे तदर्थसत्त्वमकारणमेव ।

तस्मादनर्थजत्वेन स्मृतिप्रामाण्यवारणात् ।
अगृहीतार्थगन्तृत्वं न प्रमाणविशेषणम् ॥
शब्दस्यानुपलब्धे ऽर्थे प्रामाण्यं चाह जैमिनिः ।
सर्वप्रमाणविषयं भवद्भिर्वर्ण्यते कथम् ॥

## प्रमाणलक्षणान्तरपरीक्षणम् —

अपरे पुनरविसम्वादकत्वं प्रमाणसामान्यलक्षणमाचक्षते, तदुक्तम्—प्रमाणमविसम्वादकत्वं च प्रापकत्वमुच्यते ज्ञानस्य च प्रापकत्वं सुखदुःखसाध-

नसमर्थपदार्थप्राप्तिपरिहारभूतायाः प्रवृत्तेर्निमित्तं प्रदर्शकत्वमेव ज्ञानप्रदर्शिते हि विषये प्रवृत्तौ सत्यां प्राप्तिर्भवतीति प्राप्तिं प्रति प्रमाणस्य प्रदर्शकत्वमेव व्यापारः, प्रदर्शयता हि तेन सो ऽर्थः प्रापितो भवति यथा हर्तव्यं प्रति राज्ञामाज्ञादानमेव हर्तृत्वम् , तदुक्तम्—प्रापणशक्तिः प्रामाण्यमिति, लोके ऽपि च प्रदर्शितं वस्तु प्रापयतः प्रमाणत्वव्यवहारः, तच्च प्रापकत्वं प्रत्यक्षानुमानयोरुभयोरप्यस्तीति प्रमाणसामान्यलक्षणम् , तत्र प्रत्यक्षस्य वस्तुस्वलक्षणविषयत्वात्तस्य च क्षणिकत्वेन प्राप्त्यसम्भवे ऽपि तत्सन्तानप्राप्तेस्सन्तानाध्यवसायजननमेव प्रापकत्वम् , अनुमानस्य त्वारोपितार्थविषयत्वे ऽपि मूलभूतवस्तुक्षणपारम्पर्यप्रभवत्वान्मणिप्रभामणिबुद्धिवत्तत्प्राप्त्या प्रापकत्वम् , तदिदमध्यवसितप्रापकत्वं प्रामाण्यम् अध्यवसितस्याऽवस्तुत्वेपि तन्मूलवस्तुप्राप्त्या निर्वहति यथाऽध्यवसितप्रापकं च प्रमाणमिति मतम् , अतश्च पीतशङ्खादिग्राहिणां शङ्खादिमात्रप्राप्तौ सत्यामपि न प्रामाण्यम् , यथा ऽवगतस्याप्राप्तेरवगतो हि पीतः शङ्खः प्राप्यते च श्वेत इति तस्माद्यथाऽवगतार्थप्रापकत्वमविसंवादकत्वं प्रामाण्यमिति ।

तदेतदनुपपन्नम्—इदमेव तावद्भवान् व्याचष्टां किं प्रदर्शितप्रापकं प्रमाणमुताध्यवसितप्रापकमिति, तत्रानुमाने तावत्प्रदर्शनमेव नास्ति का कथा तत्प्रापणस्य, प्रत्यक्षे तु बाढं प्रदर्शनमस्ति न तु प्रदर्शितं प्राप्यते क्षणिकत्वेनातिकान्तत्वात् , अध्यवसितप्रापणमपि दुर्घटम् , अध्यवसायस्य भवन्मते वस्तुविषयत्वाभावादवस्तुनश्च प्राप्तुमशक्यत्वात्तदुक्तं भवद्भिः यथाध्यवसायमतत्त्वाद्यथातत्त्वं चानध्यवसायादिति, मूलभूतवस्तुप्राप्तिस्तु काकतालीयं न तु तदन्यतरेणापि प्रमाणेन स्पृष्टं यद्गत्वा प्राप्यते, सन्तानप्राप्त्या तत्प्राप्तिरित्यपि न युक्तम् , सन्तानस्य भेदाभेदविकल्पाभ्यामनुपपद्यमानत्वात् , एतच्च सविस्तरं क्षणभङ्गभङ्गे निरूपयिष्यते ।

ननु काल्पनिके ऽपि सन्ताने सति संवृत्या प्रमाणलक्षणमिदं निर्वहयति यथोक्तं सांव्यवहारिकस्यैतत्प्रमाणस्य लक्षणं वस्तुतस्त्वनाद्यविद्यावासनारोपितग्राह्यग्राहकादिभेदप्रपञ्चं ज्ञानमात्रमेवेदमिति किं प्राप्यते को वा प्रापयतीति सो ऽयं पलायनप्रकार इव प्रस्तूयते, केयं सम्वृत्तिर्नाम सा ऽपि सत्यसती वा इति विकल्प्यमाना नैव व्यवहारहेतुर्भवति, अविद्यावासनाकृतश्च न भेदव्यवहारः, किं तु पारमार्थिक एवेति साधयिष्यते, सांवृत्तसन्तानकल्पनायां वा जात्यवयविप्रभृतयो ऽपि सांवृत्ताः किमिति नेष्यन्ते, वृत्तिविकल्पादिबाधकोपहतत्वादिति चेत् सन्ताने ऽपि समानः पन्था इति कदाशालम्बनमेतत् , तस्मादसंभवि दर्शित प्रापकत्वमित्यलक्षणमेतत् अव्यापकं चेदं लक्षणम् , उपेक्षणीयविषयबोधस्याव्यभिचारादिविशेषणयोगेन लब्धप्रमाणभावस्याप्यनेनासंग्रहात् ।

ननु को ऽयमुपेक्षणीयो नाम विषयः स ह्युपेक्षणीयत्वादेव नोपादीयते

चेत्स तर्हि हेय एवानुपादेयत्वादिति नैतद्युक्तम्, उपेक्षणीयविषयस्य स्वसंवेद्य-त्वेनाप्रत्याख्येयत्वात्।

हेयोपादेययोरस्ति दुःखप्रीतिनिमित्तता।
यत्नेन हानोपादाने भवतस्तत्र देहिनाम्॥
यत्नसाध्यद्वयाभावादुभयस्यापि साधनात्।
ताभ्यां विसदृशं वस्तु स्वसंविदितमस्ति नः॥
उपादेये च विषये दृष्टे रागः प्रवर्त्तते।
इतरत्र तु विद्वेषस्तत्रोभावपि दुर्लभौ॥

यत्तु अनुपादेयत्वाद्धेय एवेति तदप्रयोजकम्, न ह्येवं भवति यदेतन्नपुंसकं स पुमान् अस्त्रीत्वात् स्त्री वा नपुंसकमपुंस्त्वादिति स्त्रीपुंसाभ्यामन्यदेव नपुंसकं तथोपलभ्यमानत्वात्, एवमुपेक्षणीयो ऽपि विषयो हेयोपादेयाभ्यामर्थान्तरं तथोपलम्भादिति।

यदेतत्तृणपर्णादि चकास्ति पथि गच्छतः।
न धीश्छत्रादिवत्तत्र न च काकोदरादि(१)वत्॥

तस्मादुपेक्षणीयज्ञानस्य तमप्रापयतो ऽपि प्रामाण्यदर्शनान्न प्रापकत्वं तल्लक्षणम्।

ननु यावान्प्रामाण्यस्य व्यापारः प्रापणं प्रति तावानुपेक्षणीयज्ञानस्य तमप्रापयतो ऽपि प्रामाण्यविषये तेन साधितः, उक्तं हि राज्ञामादेष्टृत्वमेव हन्तृत्वं प्रदर्शकत्वमेव ज्ञानस्य प्रापकत्वमिति, मैवम्—

एवं प्रदर्शकत्वं स्यात्केवलं तस्य लक्षणम्।
तच्च प्रचलदर्कांशुजलज्ञाने ऽपि दृश्यते॥

ननु तत्र विपरीताध्यवसायजननादप्रमाण्यं दर्शनं हि मरीचिस्वलक्षणविषयमेव सलिलावसायं तु जनयदप्रमाणीभवति तथा ह्येकमेव दर्शनमनुकूलेतरविकल्पोपजननतदनुत्पादभेदात् त्रिधा कथ्यते प्रमाणम्, अप्रामाण्यं प्रमाणं च न भवतीति, नीलज्ञानं हि नीलं प्रति प्रमाणं नीलमिदमित्यनुकूलविकल्पोपजननात्, नीलाव्यतिरेकि क्षणिकत्वमपि तेन गृहीतमेव, तत्र तु प्रमाणं न भवत्यनुकूलविकल्पानुत्पादात्, स्थैर्ये तु तदप्रमाणं विपरीतावसायकलुषितत्वादिति, यद्येवमस्मिन्प्रक्रमे सुतरामिदं प्रमाणलक्षणं दुःस्थम्, सन्तानाध्यवसायः प्रापणं प्रति प्रमाणस्य व्यापार इति च वर्णितवानसि, अतश्च यथा मरीचिस्वलक्षणदर्शनमुदकाध्यवसायजननादप्रमाणमेवं स्वलक्षणदर्शनमपि तद्विपरीतसन्तानाध्यवसायजननादप्रमाणीभवेदिति, सन्ताने च काल्पनिके व्यवसिते दृश्याभिमुखः किमिति प्रवर्त्तते दृश्यविकल्प्यावर्थावेकीकृत्य प्रवर्त्तते यदि वा अविवेकात्प्रा-

(१) काकोदरः फणी।

प्तिः स्यात्प्रमाणमपि दूरतस्तस्याः, तस्मान्न प्रापकं प्रमाणम्,

अपि च प्राप्त्यप्राप्ती पुरुषेच्छामात्रहेतुके भवतः अर्थप्रतीतिरेव प्रमाणकार्याऽवधार्यते मानस्य लक्षणमतः कथयद्भिस्तद्विशेषणं वाच्यं न पुनः प्रापणशक्तिः प्रामाण्यं कथयितुं युक्तम्।

## सांख्याभिमतप्रमाणलक्षणपरीक्षा—

सांख्यस्तु बुद्धिवृत्तिः प्रमाणमिति(१) प्रतिपन्नः विषयाकारपरिणतेन्द्रियादिवृत्त्यनुपातिना बुद्धिवृत्तिरेव पुरुषमुपरञ्जयन्ती प्रमाणम्, तदुपरक्तो हि पुरुषः प्रतिनियतविषयद्रष्टा सम्पद्यते।

तदेतदहृदयङ्गमम्, यो हि जानाति बुद्ध्यते ऽध्यवस्यति न तस्य तत्फलमर्थदर्शनमचेतनत्वान्महतः, यस्य चार्थदर्शनं न स जानाति न बुद्ध्यते नाध्यवस्यतीति भिन्नाधिकरणत्वं प्रमाणफलयोः, ज्ञानादिधर्मयोगः प्रमाणं पुंसि न विद्यते तत्फलमर्थदर्शनं बुद्धौ नास्तीति।

अथ स्वच्छतया पुंसो बुद्धिवृत्त्यनुपातिनः।
बुद्धेर्वा चेतनाकारसंस्पर्श इव लक्ष्यते॥
एवं सति स्ववाचैव मिथ्यात्वं कथितं भवेत्।
चिद्धर्मो हि मृषा बुद्धौ बुद्धिधर्मश्चितौ मृषा॥
साकारज्ञानवादांश्च नातीवैष विशिष्यते।
त्वत्पक्ष इत्यतोऽमुष्य तन्निषेधान्निषेधनम्॥
निरसिष्यते च सकलः कपिलमुनिप्रक्रियाप्रपञ्चोऽयम्।
तस्मान्न तन्मतेऽपि प्रमाणमवकल्पते किञ्चित्॥

तीर्थान्तराभिहितरूपमतः प्रमाणं नैवापवादरहितं प्रतिकर्कयामः।
तेनामलप्रमितिसाधनमिन्द्रियादिसाकल्यमेव निरवद्यमुशन्ति मानम्॥

## प्रमाणलक्षणतद्विभागौ—

तच्चतुर्विधं प्रमाणं तदाह सूत्रकारः, प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि।

इह हि भेदवतः प्रथमं सूत्रोद्दिष्टस्य त्रयं वक्तव्यं सामान्यलक्षणं विभागो विशेषलक्षणं च, तत्र विशेषलक्षणप्रतिपादकानि चत्वारि सूत्राणि भविष्यन्ती-

(१) सांख्यस्त्विति। यदाहुर्वाचस्पतिमिश्रपादाः 'उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते तदिदं प्रमाणम्'इति। एतदुक्तं भवति इन्द्रियसंनिकर्षद्वारा यस्तमोऽभिभवसमसमयसत्त्वसमुद्रेकप्रयुक्तो बुद्धेर्विषयाकारपरिणामः स प्रत्यक्षप्रमाणम्, व्याप्तिज्ञानजन्यश्च तथाविधः परिणामोनुमानप्रमाणं, वाक्यजन्यश्च तथाविधः परिणामः आगमप्रमाणमिति।

न्द्रियार्थसन्निकर्षोत्पन्नम् इत्यादीनि, इह तु विभागसामान्यलक्षणे प्रतिपाद्येते ।

एकेनानेन सूत्रेण द्वयं चाह महामुनिः ।
प्रमाणेषु चतुःसङ्ख्यं तथा सामान्यलक्षणम् ॥

प्रत्यक्षानुमानोपमानशब्दसन्निधाने प्रमाणश्रुतिरुच्चरन्ती चत्वार्येव प्रमाणानीति दर्शयति ।

ननु न 'चत्वारि प्रमाणानि' इति संख्यावचनः शब्दः श्रूयते नापि प्रत्यक्षादीन्येवेत्यवधारणश्रुतिरस्ति तत्कुतः, इयत्तानियमावगमः, शब्दशक्तिस्वभावादिति ब्रूमः, गर्गांस्त्रीन् भोजय यज्ञदत्तदेवदत्तावानयेति विना संख्याशब्दमेवकारं च भवत्येव ( त्रित्व ) द्वित्वनियमावगमः, एवमिहापि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्युक्ते सामर्थ्यान्न्यूनाधिकसंख्याव्यवच्छेदो ऽवधार्यते इत्येवं तावद्विभागावगमः ।

सामान्यलक्षणं तु प्रमाणपदादेव समाख्यानिर्वचनसामर्थ्यसहितादवगम्यते, प्रमीयते येन तत्प्रमाणमिति करणार्थाभिधायिनः प्रमाणशब्दात्प्रमाकरणं प्रमाणमत्रगम्यते , तच्च प्रागेव दर्शितम् , प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति च मध्ये साध्यसाधनग्रहणमुपाददानः सूत्रकारः सर्वप्रमाणसाधारणं रूपमिदं परिभाषते, यत्साध्यसाधनस्य प्रमाकरणस्य प्रमाणत्वमिति, अशुद्धप्रमितिविधायिनस्तु प्रामाण्यं प्रसज्यते इति स्मृतिसंशयविपर्ययजनकव्यवच्छेदाय प्रत्यक्षसूत्रादर्थोत्पन्नमित्यव्यभिचारीति व्यवसायात्मकमिति च पदत्रयमाकृष्यते तद्धि प्रमाणचतुष्टयसाधारणम् , अर्थोत्पन्नपदेन फलविशेषणेन स्मृतिजनकम् अव्यभिचारिपदेन विपर्ययाधायि व्यवसायात्मकपदेन संशयजनकं प्रमाणं व्युदस्यते, अतश्चैवमुक्तं भवति अर्थविषयमसन्दिग्धमव्यभिचारि च ज्ञानं येन जन्यते तत्प्रमाणमित्येवमेकस्मादेव सूत्रात्सामान्यलक्षणं विभागश्चावगम्यते ।

नन्वेकस्य सूत्रस्य विभागसामान्यलक्षणपरत्वेन वाक्यभेदः, अर्थैकत्वाच्चैकं वाक्यं युक्तम् , उच्यते--

श्रुत्यर्थद्वारकानेकवस्तुसूचनशालिषु ।
सूत्रेष्वनेकार्थविधेर्वाक्यभेदो न दूषणम् ॥
प्रमाणान्तरसंस्पर्शशून्ये शब्दैकगोचरे ।
प्रमेये वाक्यभेदादि दूषणं किल दूषणम् ॥
अर्थद्वयविधानं हि तत्रैकस्य न युज्यते ।

राजा स्वाराज्यकामो वाजपेयेन यजेतेति गुणविधिपक्षे स्वाराज्यं प्रति यागो विधातव्यो यागं च प्रति वाजपेयगुणो विधातव्य इत्येकस्य वाक्यस्य परस्प-

रविरुद्धविध्यनुवादादिरूपापत्तेरर्थद्वयविधानमतिदुर्घटम्(१) , इह पुनः प्रमाणान्तरपरिनिश्चितार्थसूचनचातुर्यमहार्घेषु सूत्रेषु नानार्थविधानं भूषणं भवति न दूषणम् , अनेकार्थसूचनादेव सूत्रमुच्यते, एतदेव सूत्रकाराणां परं कौशलं यदेकेनैव वाक्येन स्वल्पैरेवाक्षरैरनेकवस्तुसमर्पणम् , अध्याहारेण वा तन्त्रेण वाऽऽवृत्त्या वा तमर्थं प्रत्याययिष्यति सूत्रमिदमिति न दोषः, विभागसामान्यलक्षणयोर्विधाने पौर्वापर्यनियमो विशेषणलक्षवन्नास्तीति तन्त्रेण युगपदुभयाभिधानमपि न विरुध्यते विशेषलक्षणमनुक्तं(२) सामान्यलक्षणविभागयोस्तु यथारुचि प्रतिपादनमादौ विभागः ततः सामान्यलक्षणम्, आदौ वा सामान्यलक्षणं ततो विभागः, सिद्धान्तच्छलवदुभयं वा युगपदेव प्रतिपाद्यते इति तन्त्रेणावृत्त्या वा तदुपपादने न कश्चिद्दोष इति ।

## प्रमाणविभागाक्षेपः—

आस्तां तावदिदं सूत्रे तन्त्रावृत्त्यादिचिन्तनम् ।
चतुःसङ्ख्या प्रमाणेषु ननु न क्षम्यते परैः ॥

न्यूनाधिकसङ्ख्याप्रतिषेधेन हि चत्वारि प्रमाणानि प्रतिष्ठाप्येरन् , स च दुरुपपादः, तथाहि प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकाः, प्रत्यक्षानुमाने द्वे एवेति बौद्धाः, प्रत्यक्षमनुमानमाप्तवचनं चेति त्रीणि प्रमाणानीति साङ्ख्याः, आधिक्यमपि प्रमाणानां मीमांसकप्रभृतयः प्रतिपन्नवन्तः, तत्कथं चत्वार्येव प्रमाणानीति विभागनियमः—

उच्यते, अनुमानप्रामाण्यं वर्णयन्तो बार्हस्पत्यं तावदुपरिष्टात्प्रतिक्षेप्स्यामः, शब्दस्य चानुमानवैलक्षण्यं तल्लक्षणावसरे एव वक्ष्यते इति शाक्यपथोऽपि न युक्तः ।

---

(१) 'वाजपेयेन स्वाराज्यकामो यजेत' इति वाजपेयशब्दः गुणविधिरुतकर्मनामधेयम् इति सन्देहे यजेतेत्याख्यातस्य गुणफलाभ्यां तन्त्रेण संबन्धे स्वाराज्योद्देश्येन यागो यागोद्देश्येन च वाजपेयगुणो विधातुं शक्य इति गुणविधिरयमिति पूर्वपक्षे तन्त्रेणोभयविधौ विरुद्धत्रिकद्वयापत्तिरतः आवृत्त्योभयविधौ च वाक्यभेद इति कर्मनामधेयमिति सिद्धान्तः विरुद्धत्रिकद्वयं च—

उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः ।
उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ॥

इति न्यायमालायां निरूपितम् ।

(२) अत्र सामान्यलक्षणे न संभवतीति पूरणीयम् (श्रीम०म०गङ्गाधरशास्त्री) ।

बौद्धाभिमतप्रमाणद्वैविध्यनिरूपणम्—

नन्वेतद्भिक्षवो न क्षमन्ते–

ते हि प्रमेयद्वैविध्यात्प्रमाणं द्विविधं जगुः ।
नान्यः प्रमाणभेदस्य हेतुर्विषयभेदतः ॥

विषयश्च प्रत्यक्षपरोक्षभेदेन स्वलक्षणसामान्ये भेदे वा द्विविध एव, परस्परपरिहारव्यवस्थितात्मसु पदार्थेषु तृतीयराश्यनुप्रवेशाभावात्, तृतीयविषयासत्त्वपरिच्छेद एव कुतस्त्य इति चेत् प्रत्यक्षमहिम्न एवेति ब्रूमः, नीले प्रवर्त्तमानं प्रत्यक्षं नीलं नीलतया परिच्छिनत्तीति तावदविवाद एव, तदेव च प्रत्यक्षमनीलमपि व्यवच्छिनत्ति नीलसंविदि तस्याप्रतिभासात्, नीलज्ञानप्रतिभास्यं हि नीलमिति तदितरदनीलमिव भवति, तृतीयमपि राशिमद एव तदपाकरोति, सोऽपि हि राशिः नीलसंविदि भाति वा न वा ।

भाति चेन्नीलमेव स्यान्न प्रकारान्तरं तु तत् ।
नो चेत्तथाऽप्यनीलं स्यान्नप्रकारान्तरं हि तत् ॥

इदमेव हि नीलानीलयोर्लक्षणं यन्नीलज्ञानावभास्यत्वानवभास्यते नाम, एवं च प्रत्यक्षं स्वविषये प्रवृत्तं तं प्रत्यक्षतया व्यवस्थापयति तत्राप्रतिभासमानं परोक्षतया तृतीयमपि प्रकारं पूर्ववदेव प्रतिक्षिपतीत्येवं स्वलक्षणसामान्यव्यतिरिक्तविषयानिषेधेऽप्येष एव मार्गोऽनुगन्तव्यः, एवं हि प्रत्यक्षेण स्वविषयः परिनिश्चितो भवति, तदुक्तम्, तत्परिच्छिनत्ति अन्यद्व्यवच्छिनति तृतीयप्रकाराभावं च सूचयतीत्येकप्रमाणव्यापारः ।

अन्यथा विषयस्यैव स्वरूपापरिनिश्चियात् ।
क्वोपादानपरित्यागौ कुर्युरर्थक्रियार्थिनः ॥

तदुक्तम्–अनलार्थ्यनलं पश्यन्नपि न तिष्ठेन्न प्रतिष्ठेतेति, यद्यपि निर्विकल्पकं प्रत्यक्षं पुरोऽवस्थितवस्तुस्वलक्षणं प्रदर्शनमात्रनिष्ठितव्यापारमविचारकमेव तथाऽपि तत्पृष्ठभाविनां विकल्पानामेव च दर्शनविषये कृतपरिच्छेदतदितरविषयव्यवच्छेदतृतीयप्रकाराभावव्यवस्थापनपर्यन्तव्यापारपाटवमवगन्तव्यमितरथा व्यवहाराभावात्, एवं च परस्परं परिहारव्यवस्थितस्वरूपपदार्थव्यवच्छेदिप्रत्यक्षप्रभावावगतविरोधात्प्रत्यक्षेतरविषययोस्तृतीयविषयासत्त्वपरिनिश्चयेऽनुमानमपि प्रवर्त्तितुमुत्सहते विरुद्धयोरेकतरपरिच्छेदसमये द्वितीयनिरसनमवश्यं भाति विरुद्धत्वादेव शीतोष्णवत्, तृतीयविषयोऽपि तद्विरुद्ध एव तद्बुद्धावप्रतिभासमानत्वात् ।

ननु न त्वं द्वितीयमिव तृतीयं कदा चिदपि विषयमग्रहीः ग्रहणे हि विषयद्वयवत्तस्यापि सत्त्वं स्यात्, अगृहीतस्य च विरोधमविरोधं वा कथं निश्चेतुमर्ह-

सीति, भोः साधो नात्र पृथग्ग्रहणमुपयुज्यते तद्बुद्धयनवभासमात्रेणैव तद्विरोधसिद्धेः, विरुद्धं हि तदुच्यते यत्तस्मिन् गृह्यमाणे न गृह्यते तदिदमग्रहणमेव विरोधावहमिति न पृथग्ग्रहणमन्वेषणीयम्, एवमितरेतरपरिहारव्यवस्थितानामर्थानां न तृतीयो राशिरस्तीति सर्वथा सिद्धं विषयद्वैविध्यम्, एवमेव सदसन्नित्यानित्यक्रमयौगपद्यादिषु प्रकारान्तरपराकरणमवगन्तव्यम्, तत्र प्रत्यक्षे स्वलक्षणात्मनि विषये प्रत्यक्षं प्रवर्त्तते, परोक्षे तु सामान्याकारे ऽनुमानमिति।

प्रमाणद्वयसिद्धे च विषयद्वयवेदने।
वद कस्यानुरोधेन तृतीयं मानमिष्यताम् ॥

न चास्मिन्नेव परोक्षे सामान्यात्मनि विषये ऽनुमानमिव शब्दाद्यपि प्रमाणान्तरं प्रवर्त्तते इति वक्तुं युक्तम्, एकत्र विषये विरोधविफलत्वाभ्यामनेकप्रमाणप्रवृत्त्यनुपपत्तेः, पूर्वप्रमाणावगतरूपयोगितया तस्मिन्वस्तुनि पुनः परिच्छिद्यमाने प्रमाणमुत्तरमफलम्, एवं ह्याहुः 'अधिगतमर्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यादिति अन्यरूपतया तु तद्ग्रहणमुत्तरप्रमाणेन दुःशक्यम् आदिप्रमाणविरुद्धत्वात्' इति, अत एव न संप्लवमभ्युपगच्छन्ति नीतिविदः, एकस्मिन्विषये ऽनेकप्रमाणप्रवृत्तिः संप्लवः स च तथाविधविषयनिरासादेव निरस्तः, न च प्रत्यक्षानुमाने अपि परस्परं संप्लवेते स्वलक्षणे ऽनुमानस्य सामान्ये च प्रत्यक्षस्य प्रवृत्त्यभावात्।

संबन्धग्रहणापेक्षमनुमानं स्वलक्षणे।
सजातीयविजातीयव्यावृत्ते वर्ततां कथम् ॥
प्रत्यक्षमपि सद्वस्तुसंस्पर्शनियतव्रतम्।
विकल्पारोपिताकारसामान्यग्राहकं कथम् ॥
यच्च शब्दोपमानादि प्रमाणान्तरमिष्यते।
तदेवं सति कुत्रांशे प्रतिष्ठामधिगच्छतु ॥
वस्तु स्वलक्षणं तावत्प्रत्यक्षेणैव मुद्रितम्।
ततो ऽन्यदनुमानेन संबन्धापेक्षवृत्तिना ॥
नानाप्रमाणगम्यश्च विषयो नास्ति वास्तवः।
तद्वानवयवी जातिरिति वार्तैकभद्रिका ॥

यदि च प्रत्यक्षविषये शब्दानुमानयोरपि वृत्तिरिष्यते तर्हि प्रत्यक्षसम्वित्सदृशीमेव ते अपि बुद्धिं विदध्यातां न चैवमस्ति, तदाहुः—

समानविषयत्वे च जायते सदृशी मतिः।
न चाध्यक्षधिया साम्यमेति शब्दानुमानधीः ॥
तेजो ऽन्यदेव नक्षत्रशशाङ्कशकलादिषु।
उद्घाटितजगत्कोशमन्यदेव रवेर्महः ॥

अपि च--

अन्यदेवेन्द्रियग्राह्यमन्यः शब्दस्य गोचरः ।
शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥

आह च—

अन्यथैवाग्निसम्बन्धाद्दाहं दग्धोऽभिमन्यते ।
अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते ॥

तस्मादुक्तेन वर्त्मना विषयद्वैविध्यनिश्चयान्न तृतीयं प्रमाणमस्ति, न च संप्लव इति,

## बौद्धाभिमतप्रमाणद्वैविध्यनिराकरणम् ।

अत्राभिधीयते—

यत्तावदिदमाख्यायि राश्यन्तरनिराकृतौ ।
प्रत्यक्षस्यैव सामर्थ्यमित्येतन्नोपपद्यते ॥
पूर्वापरानुसन्धानसामर्थ्यरहितात्मना ।
भारः कथमयं वोढुमविकल्पेन पार्यते ॥
विकल्पाः पुनरुत्प्रेक्षामात्रनिष्ठितशक्तयः ।
तेभ्यो वस्तुव्यवस्थायाः का कथा भवतां मते ॥

अथ वा भवतु नाम नीलादावुक्तेन प्रकारेण राश्यन्तरनिराकरणं प्रत्यक्षपरोक्षनिर्णये तु नैष प्रकारो योजयितुं शक्यते, विषये हि प्रवृत्तं प्रत्यक्षं विषयस्वरूपमेव परिच्छिनत्ति न पुनस्तस्य प्रत्यक्षतामपि, नीलमिदमिति हि सम्वेद्यते न पुनः प्रत्यक्षमिदमिति, तथा हि–किमिदं विषयस्य प्रत्यक्षत्वं नाम किमक्षविषयत्वम् उताक्षजज्ञानविषयत्वमिति, तत्राक्षविषयत्वं तावदन्वयव्यतिरेकसमधिगम्यमेव न प्रत्यक्षगम्यम्, तथाऽऽह भट्टः—

न हि श्रावणता नाम प्रत्यक्षेणावगम्यते ।
नान्वयव्यतिरेकाभ्यां ज्ञायते बधिरादिषु ॥ (१)इति ।

अक्षजज्ञानकर्मत्वमपि प्रत्यक्षत्वं तदानीं परिच्छेत्तुमशक्यमेव विषयप्रतिभासकाले तत्प्रतिभासस्याप्रतिभासात्, तद्ग्रहणमन्तरेण च तत्कर्मताग्रहणासम्भवात्, कथं पुनर्विषयग्रहणकाले तज्ज्ञानस्यानवभासः, नैव युगपदाकारद्वितयं प्रतिभासते, इदं ज्ञानमयं चार्थ इति भेदानुपग्रहात्, एकश्चायमाकारः प्रतिभासमानो ग्राह्यस्यैव भवितुमर्हति न ग्राहकस्येति वक्ष्यते ।

ननु च नागृहीतं ज्ञानमर्थप्रकाशनकुशलं भवतीत्याहुरप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति, प्रत्यक्षोपलम्भस्य नार्थदृष्टिरुपलम्भ एव प्रत्यक्ष इति

(१) श्लोकवार्तिके अनुमानपरिच्छेदे ६० ।

द्वितीयाकारानवभासात्कुतो ऽर्थदृष्टिः, यदि च गृहीतं ज्ञानमर्थं प्रकाशयेन्न द्वयीं गतिमतिवर्त्तेत तद्धि ज्ञानं ज्ञानान्तरग्राह्यं वा भवेत्स्वप्रकाशं वा, ज्ञानान्तरग्राह्यत्वे त्वनवस्था मूलक्षतिकरी चेयमित्यन्धमूकं जगत्स्यादुपलम्भप्रत्यक्षतापूर्वकार्थप्रत्यक्षवादिनः, नापि स्वप्रकाशं ज्ञानं ज्ञेयत्वान्नीलपीतादिवत्, विस्तरतस्तु स्वप्रकाशं विज्ञानं विज्ञानवादिनिराकरणे निराकरिष्यामः,

न च ज्ञानस्याप्रत्यक्षतायां तदुत्पादानुत्पादयोरविशेषादज्ञत्वं सर्वज्ञत्वं वा परिशङ्कनीयम्, विज्ञानोत्पादमात्रेण ज्ञातुर्ज्ञातृत्वसिद्धेः, विषयप्रकाशस्वभावमेव ज्ञानमुत्पद्यते इति कथमुत्पन्नमनुत्पन्नान्न विशिष्यते, यथा च नीलादिविषयज्ञानोत्पत्त्या ऽस्य ज्ञातृत्वं तथा सुखादिविषयज्ञानोत्पत्त्या भोक्तृत्वमिति तत्रापि नातिप्रसङ्गः, तस्माद्विषयविज्ञानकाले तद्विज्ञानग्रहणान्न तत्कर्मत्वकृतं विषयप्रत्यक्षत्वमवभासते तदप्रतिभासे च न परोक्षव्यवच्छेदो न च तृतीयप्रकारासत्त्वसूचनमिति कथं प्रत्यक्षं विषयद्वित्वसिद्धौ प्रमाणम्—

यच्चानुमानमप्युक्तं विषयद्वयसिद्धये ।
तत्प्रत्यक्षपरिच्छिन्नतद्विरोधनिबन्धनम् ॥
विरोधबोधसामर्थ्यं प्रत्यक्षस्य च दूषितम् ।
तदग्रहे च तन्मूलमनुमानं न सिध्यति ॥
एवं च विषयद्वित्वसाधनानुपपत्तितः ।
तत्कृतस्त्यज्यतामेष प्रमाणद्वित्वदोहदः ॥

अथ वा सत्यपि विषयद्वैविध्ये सामग्रीभेदात्फलभेदाच्च प्रमाणभेदो भवन्कथमपाक्रियते—

अन्ये एव हि सामग्रीफले प्रत्यक्षलिङ्गयोः ।
अन्ये एव च सामग्रीफले शब्दोपमानयोः ॥

इति वक्ष्यामः ।

तेन तद्भेदादपि प्रमाणभेदसिद्धेर्न द्वे एव प्रमाणे, एतेन त्रीणि प्रमाणानीति सांख्यव्याख्याता ऽपि तत्संख्या प्रत्याख्याता, सामग्रीफलभेदेनोपमानस्य चतुर्थप्रमाणस्य प्रतिपादयिष्यमाणत्वादिति ।

## बौद्धनिराकृतप्रमाणसंप्लवसमर्थनम्—

यत्पुनरेकस्मिन्विषये ऽनेकप्रमाणप्रसरः निरस्यता सौगतेन संप्लवपराकरणमकारि तदपि मतिमोहविलसितम्, असति संप्लवे ऽनुमानप्रामाण्यप्रतिष्ठापनानुपपत्तेः,

न ह्यविज्ञातसम्बन्धं लिङ्गं गमकमिष्यते ।
सम्बन्धधीश्च सम्बन्धिद्वयावगतिपूर्विका ॥

सामान्यात्मकसम्बन्धिग्रहणं चानुमानतः ।
तस्मादेव यदीष्येत व्यक्तमन्योन्यसंश्रयम् ॥
अनुमानान्तराधीना सम्बन्धिग्रहपूर्विका ।
सम्बन्धाधिगतिर्न स्यान्मन्वन्तरशतैरपि ॥
तेन दूरे ऽपि सम्बन्धग्राहकं लिङ्गलिङ्गिनोः ।
प्रत्यक्षमुपगन्तव्यं तथा सति च संप्लवः ॥

तत्रैतत्स्यादविदितसौगतकृतान्तानामेतच्चोद्यम्, ते हि—

विकल्पविषये वृत्तिमाहुः शब्दानुमानयोः ।
तेभ्यः सम्बन्धसिद्धौ च नानवस्था न संप्लवः ॥

तथा हि-दर्शनसमनन्तरोत्पत्त्यवाप्तदर्शनच्छायाऽनुरज्यमानवपुषो विकल्पाः प्रत्यक्षायन्ते तदुल्लिखितकाल्पनिकतदितरपरावृत्तिस्वभावसामान्याकारप्रविष्टो ऽयमनुमानव्यवहारः, पारम्पर्येण मणिप्रभामणिबुद्धिवत् तन्मूल इति तत्प्राप्तये ऽवकल्पते न पुनः प्रत्यक्षैकसमधिगम्यं वस्तु स्पृशति इति कुतः संप्लवः कुता वा ऽनवस्था ।

तदेतद्वञ्चनामात्रम्—यो हि(१) तादात्म्यतदुत्पत्तिस्वभावः प्रतिबन्ध इष्यते स किं वस्तुधर्मो विकल्पारोपिताकारधर्म्मो वा तत्र नायमारोपितधर्मो भवितुमर्हति, वस्तु वस्तुना जन्यते वस्तु च वस्तुस्वभावं भवेत्, तस्माद्वस्तुधर्मः प्रतिबन्धः, विकल्पैश्च वस्तु न स्पृश्यते तत्प्रतिबन्धश्च निश्चीयते इति चित्रम्, इदं च स्वभाषितं वस्तुनोः प्रतिबन्धस्तादात्म्यादि गम्यगमकत्वं च विकल्पारोपितयोरपोहयोस्तदेवमन्यत्र प्रतिबन्धो ऽन्यत्र तद्ग्रहणोपायो ऽन्यत्र प्रतीतिर-

---

(१) यो हीति । बौद्धा हि तादात्म्यतदुत्पत्तिभ्यामेव व्याप्तिरिति मन्यन्ते तदुक्तं वाचस्पतिमिश्रपादैस्तात्पर्यटीकायाम् 'केचिदविनाभावं तादात्म्यतदुत्पत्तिनिबन्धनमनुमानाङ्गमाहुः द्विविधो ह्यर्थः प्रत्यक्षश्च परोक्षश्च तत्र यो बुद्धौ साक्षादात्मीयं रूपं निवेशयति स प्रत्यक्षः स हि स्वविषयाया बुद्धेर्जनकः इति तमन्तरेण बुद्धिरात्मानमनासादयन्ती तस्य सत्तां निश्चाययतीति युक्तम् परोक्षस्तु बुद्धौ साक्षात्स्वरूपोपधानरहितोऽयुक्तप्रतिपत्तिरेव न चान्यदर्शनेऽन्यकल्पना युक्ता अतिप्रसङ्गात् नान्तरीयकतया तु अन्योऽन्यं गमयेत् स हि प्रतिबद्धस्वभावो यथाविधः सिद्धस्तथाविधसन्निधानं सूचयति स च प्रतिबन्धो न दर्शनमात्रावसेयस्तथासति स श्यामो मैत्रतनयत्वात परिदृश्यमानमैत्रतनयस्तोमवदित्यनुमानं स्यात इहापि स्तो दर्शनादर्शने तस्मात्तादात्म्यतदुत्पत्तिनिबन्धन एव प्रतिबन्धः (व्याप्तिः) यदाह—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न न दर्शनात्' ॥ इति ।

न्यत्र प्रवृत्तिप्राप्ती इति सर्वं कैतवम् , न च दृश्यसंस्पर्शशून्यात्मनां विकल्पानां दर्शनच्छाया का चन सम्भवतीदन्ताग्राहित्वस्पष्टत्वाद्यपि वस्तुस्पर्शरहितमकिञ्चित्करमप्रमाणत्वानपायात् ।

अप्रमाणपरिच्छिन्नः प्रतिबन्धश्च तत्त्वतः ।
न परिच्छिन्न एवेति ततो मिथ्या ऽनुमेयधीः ॥
अथाभिमतमेवेदं बुद्ध्यारूढत्ववर्णनात् ।
हन्त तात्त्विकसंबन्धसाधनव्यसनेन किम् ॥

यथा च सामान्यविषये प्रत्यक्षाभ्युपगममन्तरेण संबन्धग्रहणमघटमानमिति विसंष्ठुलमनुमानम् , एवमवगतसंबन्धस्य द्वितीयलिङ्गदर्शनमपि दुरुपपादमिति ततो ऽपि संप्लवापलापिनामनुमानमुत्सीदेत् ।

न ह्यसाधारणांशस्य लिङ्गत्वमुपपद्यते ।
विना न चानुमानेन सामान्यमवगम्यते ॥
सैवानवस्था तत्रापि तदेवान्योन्यसंश्रयम् ।
स एव च विकल्पानां सामर्थ्यशमनक्रमः ॥
अतः संबन्धविज्ञानलिङ्गग्रहणपूर्वकम् ।
अनुमानमनिन्हुत्य कथं संप्लवनिह्नवः ॥

अपि च विषयद्वैविध्यसिद्धावपि प्रत्यक्षानुमाने एव परस्परमपि संप्लवेयाताम् । यतः—

प्रत्यक्षत्वं परोक्षो ऽपि प्रत्यक्षो ऽपि परोक्षताम् ।
देशकालादिभेदेन विषयः प्रतिपद्यते ॥
क्षणभङ्गं निषेत्स्यामः सन्तानो यश्च कल्पितः ।
दर्शितप्राप्तिसिद्ध्यादौ संप्लवे ऽपि स तादृशः ॥

यदपि जात्यादिविषयनिषेधनमनोरथैः संप्लवपराकरणमध्यवसितं तत्र जात्यादिसमर्थनमेवोत्तरीकरिष्यते ।

तावकैर्दूषणगणैः कालुष्यमपनीयते ।
तद्वानवयवी जातिरिति वार्त्तकभद्रिका ॥

यदपि विरोधवैफल्याभ्यां न संप्लव इत्युक्तं तत्र वैफल्यमनधिगतार्थगन्तृत्वविशेषणादिवारणेनैव प्रतिसमाहितम्, विरोधोऽपि नास्ति पूर्वज्ञानोपमर्दन नेदं रजतमितिवदुत्तरविज्ञानानुत्पादात्, अनेकधर्मविसरविशेषितवपुषि धर्मिणि कदा चित्केन चित्कश्चिन्निश्चीयते धर्मविशेष इति को विरोधार्थः ।

यदपि प्रत्यक्षस्य शब्दलिङ्गयोश्च समानविषयत्वे सति सदृशप्रतीतिजनकत्वमाशङ्कितं तत्र के चिदाचक्षते विषयसाम्ये ऽप्युपायभेदात्प्रतीतिभेदो भवत्येव दूराविदूरदेशव्यवस्थितपदार्थप्रतीतिवत् ।

अन्ये तु मन्यन्ते नोपायभेदात् प्रतीतिभेदो भवत्यपि तु विषयभेदादेव सन्निकृष्टविप्रकृष्टग्रहणे ऽपि विषयौ भिद्येते दूरात्सामान्यधर्ममात्रविशिष्टस्य धर्मिणो ग्रहणमदूरात्तु सकलविशेषसाक्षात्करणम् , यदिमाः प्रत्यक्षानुमानशब्दप्रमितयः प्रमेयभेदाद्भिद्यन्ते ।

विशेषधर्मसंबद्धं वस्तु स्पृशति नेत्रधीः ।
व्याप्तिबोधानुसारेण तद्धर्म्मात्रं तु लैङ्गिकी ॥
शब्दात्त्वतदवच्छिन्ना वाच्ये सञ्जायते मतिः ।
शब्दानुवेधशून्या हि न शब्दार्थे मतिर्भवेत् ॥

कथं तर्हि तेषां संप्लवः सर्वत्र विषयभेदस्य दर्शितत्वात् सत्यम्—धर्म्यभिप्रायेण संप्लवः कथ्यते, इमौ तु पक्षौ विचारयिष्येते, सर्वथा तावदस्ति प्रमाणानां संप्लव इति सिद्धम् ।

तदुदाहरणं तु भाष्यकारः प्रदर्शितवान् , अग्निराप्तोपदेशात्प्रतीयतेऽमुत्रेति प्रत्यासीदता धूमदर्शनेनानुमीयते प्रत्यासन्नतरेण उपलभ्यते इत्यादि, क चित्तु व्यवस्था दृश्यते यथा अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यस्मदादेरागमादेव ज्ञानं न प्रत्यक्षानुमानाभ्याम् , स्तनयित्नुशब्दश्रवणात्तद्धेतुपरिज्ञानमनुमानादेव न प्रत्यक्षागमाभ्याम् , स्वहस्तौ द्वौ इति तु प्रत्यक्षादेव प्रतीतिर्न शब्दानुमानाभ्यामिति, तस्मात्स्थितमेतत् प्रायेण प्रमाणानि प्रमेयमभिसंप्लवन्ते क चित्त प्रमेये व्यवतिष्ठन्तेऽपीति ।

इत्युद्धृताखिलपरोदितदोषजात-
सम्पातभीतिरिह संप्लव एष सिद्धः ।
सर्वाश्च सौगतमनःसु चिरप्ररूढा
भग्नाः प्रमाणविषयद्वयसिद्धिवाञ्छाः ॥

एवं तावन्न्यूनत्वं सङ्ख्यायाः परीक्षितम् ।

## मतान्तरेण चतुर्विधप्रमाणातिरिक्तप्रमाणपरिगणनम्—

आधिक्यमिदानीं परीक्ष्यते—तत्रार्थापत्त्या सह प्रत्यक्षादीनि पञ्च प्रमाणानीति प्रभाकरः, अभावेन सह षडिति भाट्टः, सम्भवैतिह्याभ्यामष्टाविति के चित्, अशक्य एव प्रमाणसङ्ख्यानियम इति सुशिक्षितचार्वाकाः,

## भाट्टमतेनार्थापत्तिनिरूपणम्—

तत्र भाट्टास्तावदित्थमर्थापत्तिमाचक्षते दृष्टः श्रुतो वार्थो ऽन्यथा नोपपद्यते इत्यर्थान्तरकल्पना ऽर्थापत्तिः, दृष्ट इति प्रत्यक्षादिभिः पञ्चभिः प्रमाणैरुपलब्धः श्रुत इति कुतश्चन लौकिकाद्वैदिकाद्वा शब्दादवगतो ऽर्थस्ततो ऽन्यथा ऽनुपपद्यमानादर्थान्तरकल्पना ऽर्थापत्तिरित्येवं षट्प्रमाणप्रभवत्वेन षड्विधा ऽसौ

भवतीति, दृष्टवचनेनोपलब्धिवाचिना गतार्थत्वे ऽपि श्रुतार्थापत्तेः पृथगभिधानं प्रमाणैकदेशविषयत्वेन प्रमेयविषयार्थापत्तिपञ्चकविलक्षणत्वात् ।

तत्र प्रत्यक्षपूर्विका तावदर्थापत्तिः प्रत्यक्षावगतदहनसंसर्गोद्गतदाहाख्यकार्योऽन्यथाऽनुपपत्त्या वह्नेर्दाहशक्तिकल्पना, अनुमानपूर्विका देशान्तरप्राप्तिलिङ्गानुमितमरीचिमालिगत्यन्यथाऽनुपपत्त्या तस्य गमनशक्तिकल्पना, उपमानपूर्विका उपमानज्ञानावगतगवयसारूप्यविशिष्टगोपिण्डादिप्रमेयाऽन्यथाऽनुपपत्त्या तस्य तज्ज्ञानग्राह्यत्वशक्तिकल्पना इति, तदिमास्तावदतीन्द्रियशक्तिविषयत्वादर्थापत्तयः प्रमाणान्तरम् , शक्तेः प्रत्यक्षपरिच्छेद्यत्वानुपपत्तेः तदधीनप्रतिबन्धाधिगमवैधुर्येणानुमानविषयत्वायोगात् ।

अन्वयव्यतिरेकौ हि द्रव्यरूपानुवर्तिनौ ।
शक्तिस्तु तद्गता सूक्ष्मा न ताभ्यामवगम्यते ॥

शब्दोपमानयोस्त्वत्र सम्भावनैव नास्तीत्यर्थापत्तेरेवैष विषयः, अर्थापत्तिपूर्विका यथा शब्दकरणिकाऽर्थप्रतीत्यन्यथाऽनुपपत्त्या शब्दस्य वाचकशक्तिमवगत्य तदन्यथाऽनुपपत्त्या तस्य नित्यत्वकल्पना सा चेयं शब्दपरीक्षायां वक्ष्यते, अभावपूर्विका तु भाष्यकारेणोदाहृता जीवतश्चैत्रस्य गृहाभावमवसाय तदन्यथाऽनुपपत्त्या बहिर्भावकल्पनेति(१) ।

ननु दृष्टेन सिद्धसिद्धेरनुमानमेवेदं स्यात् , नानुमानं सामग्र्यभावात् , पक्षधर्मतादिसामग्र्या यज्ज्ञानमुपजन्यते तदनुमानमिति तार्किकस्थितिः, सा चेह नास्ति बहिर्भावविशिष्टे चैत्रे चैत्राभावविशिष्टे बहिर्भावे ऽनुमेये कस्य लिङ्गत्वमिति चिन्त्यम्(२), गृहाभावविशिष्टस्य वा चैत्रस्य चैत्राभावविशिष्टस्य वा गृहस्य गृहचैत्राभावस्य वा चैत्रादर्शनस्य वा, न चैषामन्यतमस्यापि पक्षधर्मत्वमस्ति, न हि गृहं वा चैत्रो वा तदभावो वा तददर्शनं वा चैत्रस्य धर्मः तद्बहिर्भावस्य वेत्यपक्षधर्मत्वादन्यतमस्यापि न लिङ्गत्वम् ,

अपि च प्रमेयानुप्रवेशप्रसङ्गादपि नेदमनुमानम् , तथा ह्यागमावगतजीवनस्य गृहाभावेन चैत्रस्य बहिर्भावः परिकल्प्यते इतरथा मृतेनानैकान्तिको हेतुः स्यात् , अभावश्च गृहीतः सन् बहिर्भावमवगमयति नागृहीतो धूमवत् , अभावग्रहणं च सकलसदुपलम्भकप्रमाणप्रत्यस्तमयपूर्वकमिह तु सदुपलम्भकमस्त्येव जीवनग्राहि प्रमाणम् , जीवनं हि क्वचिदस्तित्वमुच्यते, अप्रत्यस्तमिते तु सदुपलम्भके प्रमाणे कथमभावः प्रवर्त्तते इति प्रवर्तमान एवासौ सदुपलम्भकं प्रमाणं पृथग्विषयमुपस्थापयति बहिरस्य भावो गृहे त्वभाव इति, तेन जीवतो बहिर्भावव्यवस्थापनपूर्वकगृहाभावग्रहणापपत्तेः प्रमेयानुप्रवेशः, अनुमाने तु

(१) शाबरभाष्ये अ० १ पा० १ सू० ५ अर्थानुवादोऽयम् ।
(२) लिङ्गत्वमित्यचिन्त्यमिति आदर्शपुस्तकस्थः पाठोऽसंगतः ।

धूमादिलिङ्गग्रहणसमये न मनागपि तल्लिङ्गतदनुमेयदहनलिङ्ग्यनुप्रवेशस्पर्शो विद्यते इति ।

नन्वर्थापत्तावपि किं प्रमेयानुप्रवेशो न दोषः न दोष इति ब्रूमः(१), प्रमाणद्वयसमर्पितैकवस्तुविषयाभावभावसमर्थनार्थमर्थापत्तिः प्रवर्त्तमाना प्रमेयद्वयं परामृषत्येव अन्यथा तत्संघटनायोगात्, अतश्च येयमागमादनियतदेशतया क्व चिदस्तीति संवृत्तिरभूत्सैवेयं गृहाभावे गृहीते बहिरस्तीति संविदधुना सम्वृत्ता तदतो वैलक्षण्यान्नानुमानमर्थापत्तिः, अतश्चैवं सम्बन्धग्रहणाभावात् ।

भावाभावौ हि नैकेन युगपद्वह्निधूमवत् ।
प्रतिबन्धतया रोद्धुं शक्यौ गृहबहिःस्थितौ ॥
अन्यथाऽनुपपत्त्या च प्रथमं प्रतिबन्धधीः ।
पश्चाद्यद्यनुमानत्वमुच्यते काममुच्यताम् ॥
नन्वस्त्येव गृहद्वारे वर्त्तिनः सङ्गतिग्रहः ॥
भावेन भावसिद्धौ तु कथमेष भविष्यति ॥

यत्र गृहे चैत्रस्य भावमवगम्य तदन्यथाऽनुपपत्त्या तदन्यदेशेषु नास्तित्वमवगम्यते तत्र देशानामानन्त्याद् दुरधिगमः प्रतिबन्धः, अनग्निव्यतिरेकनिश्चये धूमस्य का वार्तेति चेदुच्यते–तत्र धूमज्वलनयोरन्वयग्रहणसम्भवान्न व्यतिरेकग्रहणमाद्रियेरन् भूयोदर्शनसुलभनियमज्ञानसम्पाद्यमानसाध्याधिगमननिर्वृतमनसां किमनग्निव्यतिरेकनिश्चयेन, इह पुनरन्वयावसायसमये एव गम्यधर्मस्य दुरवगमत्वमुक्तमनन्तदेशवृत्तित्वात्, अनुपलब्ध्या तन्निश्चय इति चेद् न, मन्दिरव्यतिरिक्तसकलभुवनतलगततदभावनिश्चयस्य नियतदेशाया ऽनुपलब्ध्या कर्त्तुमशक्यत्वात्, तेषु तेषु देशान्तरेषु परिभ्रन्ननुपलब्ध्या तदभावं निश्चेष्यामीति चेद्, मैवम्—

गत्वा गत्वा ऽपि तान्देशान्नास्य जानामि नास्तिताम् ।
कौशाम्ब्यास्त्वयि निष्क्रान्ते तत्प्रवेशादिशङ्कया ॥

तस्मादभूमिरियमसर्वज्ञानामित्यर्थापत्त्यैव तन्निश्चयः ।

नन्वित्थममुमर्थमनुमानान्निश्चेष्यामः, देशान्तराणि चैत्रशून्यानि चैत्राधिष्ठितव्यतिरिक्तत्वात् तत्समीपदेशवदिति, न प्रत्यनुमानोहतत्वात्, देशान्तराणि चैत्राव्यतिरिक्तानि तत्समीपदेशव्यतिरिक्तत्वाच्चैत्राधिष्ठितदेशवदिति, तस्मान्नियतदेशोपलभ्यमानपरिमितपरिमाणपुरुषशरीराऽन्यथानुपपत्त्यैव तदितरसकलदेशनास्तित्वावधारणं तस्येति सिद्धम् ।

पीनो दिवा च नात्तीति साकाङ्क्षवचनश्रुतेः ।
तदेकदेशविज्ञानं श्रुतार्थापत्तिरुच्यते ॥

---

(१) किं प्रमेयानुप्रवेशो न दोष इति ब्रूम इत्यनन्वित आदर्शपुस्तकस्थः पाठः ।

इहैवंविधसाकाङ्क्षवचनश्रवणे सति समुपजायमानं रजनीभोजनविज्ञानं प्रमाणान्तरकरणकं भवितुमर्हति प्रत्यक्षादेरसन्निधानात्, न प्रत्यक्षं क्षपाभक्षणप्रतीतिक्षमं परोक्षत्वात्, नानुमानमनवगतसम्बन्धस्यापि तत्प्रतीतेः, उपमानादेस्तु शङ्कैव नास्ति, तस्माच्छाब्द एव रात्रिभोजनप्रत्ययः शब्दश्च न श्रूयमाण इममर्थमभिवदितुमलमेकस्य वाक्यस्य विधिनिषेधरूपार्थद्वयसमर्थनशून्यत्वात्, अत्र च रात्र्यादिपदानामश्रवणादपदार्थस्य च वाक्यार्थत्वानुपपत्तेः, न च विभावरीभोजनलक्षणो ऽर्थः दिवावाक्यपदार्थानां भेदः संसर्गो वा येनायमपदार्थो ऽपि प्रतीयते।

तस्मात्कल्प्याऽगमकृतं नक्तमत्तीति वेदनम्।
तद्वाक्यकल्पनायां तु प्रमाणं परिचिन्त्यताम्॥
नाध्यक्षमनभिव्यक्तशब्दग्रहणशक्तिमत्।
न लिङ्गमगृहीत्वा ऽपि व्याप्तिं तदवधारणात्॥
क्व चिन्नित्यपरोक्षत्वाद्व्याप्तिबोधो ऽपि दुर्घटः।
विनियोक्त्री श्रुतिर्यत्र कल्प्या प्रकरणादिभिः॥

विनियोक्त्री हि श्रुतिः सर्वत्र प्रकरणादौ वाक्यविद्भिरभ्युपगम्यते, यथोक्तं(१) विनियोक्त्री श्रुतिस्तावत्सर्वेष्वेतेषु सम्मतेति, तस्याश्च नित्यपरोक्षत्वाद् दुरधिगमस्तत्र लिङ्गस्य प्रतिबन्धः, न च निशापदवचनस्य सत्ता ऽनुमातुमपि शक्या तस्यां साध्यायां भावाभावोभयधर्मकस्य हेतोरसिद्धविरुद्धानैकान्तिकत्वेनाहेतुत्वात्, न चात्र धर्मः कश्चिदुपलभ्यते, यस्तेन तद्वान्पर्वत इवाग्निमाननुमीयते, न च दिवावाक्यं तदर्थो ऽपि निशावचनानुमाने लिङ्गतां प्रतिपत्तुमर्हति।

अश्रुते हि निशावाक्ये कथं तद्धर्मताग्रहः।
श्रुते तस्मिंस्तु तद्धर्मग्रहणे किं प्रयोजनम्॥

दिवा वाक्यपदार्थानां तिष्ठतु लिङ्गत्वमनुपपद्यमानतया ऽपि न निशावाक्यप्रत्यायकत्वमवकल्पते, पदार्थानां हि सामान्यात्मकत्वाद्विशेषमन्तरेणानुपपत्तिः स्याद् न वाक्यान्तरमन्तरेण, तस्माच्छ्रूयमाणं वाक्यमेव तदेकदेशमन्तरेण निराकाङ्क्षप्रत्ययोत्पादकस्वव्यापारनिर्वहणं (२) सन्धिमनधिगच्छत्तदेकदेश-

(१) यथोक्तमिति तन्त्रवार्तिके (अ. ३ पा. ३ सू. १४) इति शेषः।
(२) निर्वहणसंधिस्तु साहित्यदर्पणे—[परि० ६ श्लो० ८०]

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्॥

अन्यत्रापि—

मुखसंध्यादयो यत्र विकीर्णा बीजसंयुताः।
महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते॥

माक्षिपतीति सेयं प्रमाणैकदेशविषया श्रुतार्थापत्तिः।

नन्वर्थादेव कथमर्थान्तरं न कल्प्यते पीवरत्वं हि नाम भोजनकार्यमुपलभ्यमानं स्वकारणं भोजनमनलमिव धूमः समुपस्थापयतु तच्च वचसा कालविशेषे निषिद्धं तदितरकालविशेषविषयं भविष्यतीति किं वचनानुमानेन, वचनमपि नादृष्टार्थमपि तु अर्थगत्यर्थमेव तदस्य साक्षादर्थस्यैव कल्प्यमानस्य को दोषो यद्व्यवधानमाश्रीयते, उच्यते—

शब्दप्रमाणमार्गेऽस्मिन्ननभिज्ञोऽसि बालक।
प्रमाणतैव न ह्यस्य साकङ्क्षज्ञानकारिणः॥
पुरोवस्थितवस्त्वंशदर्शनप्राप्तिनिर्वृत्ति।
प्रत्यक्षादि यथा मानं न तथा शाब्दमिष्यते॥
वाक्यार्थे हि समग्राङ्गपरिपूरणसुस्थिते।
अभिधाय धियं नास्य व्यापारः पर्यवस्यति॥
तावन्तं बोधमाधाय प्रामाण्यं लभते वचः।
तदर्थवाचकत्वाच्च तद्वाक्यं वाक्यमिष्यते॥
शब्दैकदेशश्रुत्याऽतस्तदंशपरिपूरणम्।
कल्प्यं प्रथममर्थस्य कुतस्तेन विना गतिः॥
प्रायः श्रुतार्थापत्त्या च वेदः कार्येषु पूर्यते।
तत्रार्थः कल्प्यमानस्तु न भवेदेव वैदिकः॥
यो मन्त्रैरष्टकालिङ्गैस्तद्विधः परिकल्प्यते।
श्रुतिलिङ्गादिभिर्या च कल्प्यते विनियोजिका॥
विश्वजित्यधिकारश्च यागकर्त्तव्यताश्रुतेः।
उत्पत्तिवाक्यं सौर्यादावधिकारविधिश्रुतेः॥
ऐन्द्राग्न्यादिविकारेषु कार्यमात्रोपदेशतः।
यश्च प्रकृतिवद्भावो विध्यन्त उपपाद्यते॥
तदेवमादौ सम्बन्धग्रहणानुपपत्तितः।
श्रुतार्थापत्तिरेवैषा निस्सपत्नं विजम्भते॥
तया श्रुत्यैकदेशश्च सर्वत्र परिकल्प्यते।
अर्थकल्पनपक्षे तु न स्याद्वेदैकगम्यता॥
इत्यर्थापत्तिरुक्तैषा षट्प्रमाणसमुद्भवा।

## अर्थापत्तेरनुमानान्तर्भावनिरूपणम्।

एषा विचार्यमाणा तु भिद्यते नानुमानतः॥
प्रतिबन्धाद्विना वस्तु न वस्त्वन्तरबोधकम्।

यत्किञ्चिदर्थमालोक्य(च्य) न च कश्चित्प्रतीयते ॥
प्रतिबन्धो ऽपि नाज्ञातः प्रयाति मतिहेतुताम् ।
न सद्योजातबालादेरुद्भवन्ति तथा धियः ॥
न विशेषात्मना यत्र सम्बन्धज्ञानसम्भवः ।
तत्राप्यस्त्येव सामान्यरूपेण तदुपग्रहः ॥

अपि च तेन विना नोपपद्यते इति च व्यतिरेकभणितिरियं व्यतिरेकश्च प्रतीतः तस्मिन्सत्युपपद्यते इत्यन्वयमाक्षिपति, अन्वयव्यतिरेकौ च गमकस्य लिङ्गस्य धर्म इति कथमर्थापत्तिर्नानुमानम् , केवलव्यतिरेकी हेतुरन्वयमूल एव गमक इति वक्ष्यामः ।

## शक्तिनिराकरणम् ।

याश्च प्रत्यक्षादिपूर्विकाः शक्तिकल्पनायामर्थापत्तय उदाहृताः ताश्च शक्तेरतीन्द्रियाया अभावाद् निर्विषया एव ।

स्वरूपादुद्भवत्कार्यं सहकार्युपबृंहितात् ।
न हि कल्पयितुं शक्तं शक्तिमन्यामतीन्द्रियाम् ॥

ननु शक्तिमन्तरेण कारकमेव न भवेत् , यथा पादपं छेत्तुमनसा परशुरुद्यम्यते तथा पादुकाद्यप्युद्यम्येत शक्तेरनभ्युपगमे हि द्रव्यस्वरूपाविशेषात्सर्वस्मात्सर्वदा कार्योदयप्रसङ्गः, तथा हि विषदहनयोर्मारणे दाहे च शक्तावनिष्यमाणायां मन्त्रप्रतिबद्धायां स्वरूपप्रत्यभिज्ञायां सत्यामपि कार्योदासीन्यं यद् दृश्यते तत्र का युक्तिः, न हि मन्त्रेण स्वरूपसहकारिसन्निध्यं प्रतिबध्यते, तस्य प्रत्यभिज्ञायमानत्वात् , शक्तिस्तु प्रतिबध्यते इति सत्यपि स्वरूपे सत्स्वपि सहकारिषु कार्यानुत्पादो युक्तः, किञ्च सेवाद्यर्जनादिसाम्येपि फलवैचित्र्यदर्शनादतीन्द्रियं किमपि कारणं कल्पितमेव धर्मादि भवद्भिरतः शक्तिरतीन्द्रिया तथा ऽभ्युपगम्यतामिति—

तदेतदनुपपन्नम् , यत्तावदुपादाननियमादित्युक्तम्-तत्रोच्यते-न हि वयमद्य किञ्चिदभिनवं भावानां कार्यकारणभावमुत्थापयितुं शक्नुमः, किं तु यथा प्रवृत्तमनुसरन्तो व्यवहरामः, न ह्यस्मदिच्छया ऽऽपः शीतं शमयन्ति कृशानुर्वा पिपासाम् , तत्र च्छेदनादावन्वयव्यतिरेकाभ्यां वृद्धव्यवहाराद्वा परश्वधादेरेव कारणत्वमध्यवगच्छाम इति तदेव तदर्थिन उपादद्महे न पादुकादीति, न च परश्वधादेस्स्वरूपसन्निधाने सत्यपि सर्वदा कार्योदयः स्वरूपवत्सहकारिणामप्यपेक्षणीयत्वात्सहकार्यादिसन्निधानस्य सर्वदा ऽनुपपत्तेः, सहकारिवर्गे च धर्मादिकमपि निपतति तदपेक्षे च कार्योत्पादे कथं सर्वदा तत्सम्भवः, धर्माधर्मयोश्च

वैचित्र्यकार्यबलेन कल्पनमपरिहार्यम्, तयोश्च न शक्तित्वादतीन्द्रियत्वम्, अपि तु स्वरूपमहिम्नैव मनःपरमाणवादिवत्।

यदपि विषदहनसन्निधाने सत्यपि मन्त्रप्रयोगात्तत्कार्यादर्शनं तदपि न शक्तिप्रतिबन्धननिबन्धनमपि तु सामग्र्यन्तरानुप्रवेशहेतुकम्।

ननु मन्त्रिणा प्रविशता तत्र किं कृतं न किं चित्कृतम्, सामग्र्यन्तरं तु सम्पादितं का चिद्धि सामग्री कस्य चित्कार्यस्य हेतुः, स्वरूपं तदवस्थमेवेति चेद्, यद्येवमभक्षितमपि विषं कथं न हन्यात्, तत्रास्य संयोगाद्यपेक्षणीयमस्तीति चेन्मन्त्राभावो ऽप्यपेक्ष्यताम्, दिव्यकरणकाले धर्म इव मन्त्रो ऽप्यनुप्रविष्टः कार्यं प्रतिहन्ति, शक्तिपक्षे ऽपि वा मन्त्रस्य को व्यापारः मन्त्रेण हि शक्तेर्नाशो वा क्रियते प्रतिबन्धो वा न तावन्नाशः, मन्त्रापगमे पुनस्तत्कार्यदर्शनात्, प्रतिबन्धस्तु स्वरूपस्यैव शक्तेरिवास्तु स्वरूपस्य किं जातं कार्यौदासीन्यमिति चेत्तदितरतोपि समानम्, स्वरूपमस्त्येव दृश्यमानत्वादिति चेच्छक्तिरप्यस्ति पुनः कार्यदर्शनेनानुमीयमानत्वादिति,

किं च शक्तिरभ्युपगम्यमाना पदार्थस्वरूपवन्नित्या ऽभ्युपगम्येत कार्या वा नित्यत्वे सर्वदा कार्योदयप्रसङ्गः, सहकार्यपेक्षायां तु स्वरूपस्यैव तदपेक्षा ऽस्तु किं शक्त्या, कार्यत्वे तु शक्तेः पदार्थस्वरूपमात्रकार्यत्वं वा स्यात्सहकार्यादिसामग्रीकार्यत्वं वा स्वरूपमात्रकार्यत्वे पुनरपि सर्वदा कार्योत्पादप्रसङ्गः सर्वदा शक्तेरुत्पादात् सामग्रीकार्यत्वेतु कार्यमस्तु किमन्तरालवर्तिन्या शक्त्या, अशक्तात्कारकात्कार्यं न निष्पद्यते इति चेच्छक्तिरपि कार्यं तदुत्पत्तावप्येवं शक्त्यन्तरकल्पनादनवस्था, आह–दृष्टसिद्धये ह्यदृष्टं कल्प्यते न तु दृष्टविघाताय शक्त्यन्तरकल्पनायां शक्तिश्रेणीनिर्माणे एव क्षीणत्वात्कारकाणां कार्यविघातः स्यादित्येकैव शक्तिः कल्प्यते तत्कुतो ऽनवस्था।

अत्रोच्यते—यद्यदृष्टमन्तरेण दृष्टं न सिद्ध्यति काममदृष्टं कल्प्यताम्, अन्यथा ऽपि तु तदुपपत्तौ किं तदुपकल्पनेन, दर्शिता चान्यथाप्युपपत्तिः कल्प्यमानमपि चादृष्टं तत्कल्प्यतां यदनवस्थां नावहेत धर्मादिवत्, अपि च व्यापारो ऽप्यतीन्द्रियः शक्तिवदिष्यते भवद्भिरन्यतरकल्पनयैव कार्योपपत्तेः किमुभयकल्पनागौरवेण, शक्तमव्याप्रियमाणं न कारकं कारकमिति चेतच्छक्तमिति, तथा कथं जानामि, कार्यदर्शनाज्ज्ञास्यामीति चेद्व्यापारादेव कार्यं सेत्स्यति, पादुकादेर्व्याप्रियमाणादपि न पादच्छेदो दृश्यते—इति चेत् प्रत्यक्षस्तर्हि व्यापारो नातीन्द्रियो यतः कार्यदर्शनात्पूर्वमपि व्याप्रियमाणत्वं ज्ञातमायुष्मता, कार्यानुमेयो हि व्यापारः कार्यं विना न ज्ञायेतैव, कार्यं त्वन्यतरस्मादपि घटमानं नोभयं कल्पयितुं प्रभवतीत्यलं प्रसङ्गेन प्रकृतमनुसरामः।

तस्मादतीन्द्रियायाः शक्तेरभावान्निर्विषया यथोदाहृतास्ता अर्थापत्तयः।

भवन्त्यपि वा शक्तिरतीन्द्रिया ऽनुमानस्यैव विषयः कार्यकारणपूर्वकत्वेन व्याप्तिग्रहणात्स्वरूपमात्रस्य च कारणत्वानिर्वहणादधिकं किमप्यनुमास्यते सा शक्तिरिति ।

शब्दनित्यत्वसिद्धौ तु या ऽर्थापत्तिरुदाहृता ।
तस्याः शब्दपरीक्षायां समाधिरभिधास्यते ॥

## अभावपूर्वकार्थापत्तेरनुमानान्तर्भावः—

अभावपूर्विका ऽप्यर्थापत्तिरनुमानमेव जीवतो गृहाभावेन लिङ्गभूतेन बहिर्भावावगमात् चैत्रस्य गृहाभावो धर्मी बहिर्भावेन तद्वानिति साध्यो धर्मः जीवन्मनुष्यागृहभावत्वात्पूर्वोपलब्धैवंविधगृहाभाववत् , यथा धर्मी वह्निमानिति साध्यो ऽर्थः धूमत्वात् पूर्वोपलब्धधूमवदिति, अतश्च गृहादीनां लिङ्गत्वाशङ्कनमपाकरणं चाडम्बरमात्रम् ।

यत्पुनः प्रमेयानुप्रवेशदूषणमभ्यधायि तदपि न साम्प्रतम्—किं प्रमेयमभिमतमत्र भवतां कि सत्तामात्रम् उत बहिर्देशविशेषितं सत्त्वम् , सत्तामात्रं तावदागमादेवावगतमिति न प्रमाणान्तरप्रमेयतामवलम्बते, बहिर्देशविशेषितं तु सत्त्वं भवति प्रमेयं तस्य तु तदानीमनुप्रवेशः कुतस्त्यः, गृहाभावग्राहकं हि प्रमाणं गृहे एव सदुलम्भकप्रमाणावकाशमपाकरोति बहिः न सदसत्त्वचिन्तां प्रस्तौति ।

वृत्तस्य जीवतो दूरे तिष्ठतः प्राङ्गणे ऽपि वा ।
गृहाभावपरिच्छेदे न विशेषो ऽस्ति कश्चन ॥

जीवनविशिष्टस्त्वसौ गृह्यमाणो लिङ्गतामश्नुते व्यभिचारनिरासात् , न च विशेषणग्रहणमेव प्रमेयग्रहणम् , जीवनमन्यदन्यच्च बहिर्भावाख्यं प्रमेयम् ।

ननु जीवनविशिष्टगृहाभावप्रतीतिरेव बहिर्भावप्रतीतिः, नैतदेवम्—जीवनविशिष्टगृहाभावप्रतीतेः बहिर्भावः प्रतीतः न तत्प्रतीतिरेव बहिर्भावप्रतीतिः, न हि दहनाधिकरणधूमप्रतीतिरेव दहनप्रतीतिः किं तु धूमादन्य एव दहन इहापि गृहाभावजीवनाभ्यामन्य एव बहिर्भावः, पर्वतहुतवहयोस्सिद्धत्वान्मत्वर्थमात्रं तत्रापूर्वमनुमेयम् , एवमिहापि बहिर्देशयोगमात्रमपूर्वमनुमेयम् , यदि तु तदधिकं प्रमेयमिह नेष्यते तदा गृहाभावजीवनयोः स्वप्रमाणाभ्यामवधारणादानर्थक्यमर्थापत्तेः, तस्मात्प्रमेयान्तरसद्भावात्तस्य च तदानीमननुप्रवेशान्न प्रमेयानुप्रवेशो दोषः, अर्थापत्तावपि च तुल्य एवायं दोषः, तत्राप्यर्थादर्थान्तरकल्पनाभ्युपगमात् , दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पनेत्येव ग्रन्थोपनिबन्धात् , तस्य तस्मात्प्रतीतिरिति तत्र व्यवहारस्तत्रावाच्यतत्प्रतीतौ तदनुप्रवेशो दोष एव, स्वभावहेताविव तद्बुद्धिसिद्ध्या तत्सिद्धेः प्रमाणान्तरवैफल्यादिति ।

### प्राभाकरमतेनार्थापत्तेरनुमानवैलक्षण्यनिरूपणम्—

प्राभाकरास्तु प्रकारान्तरेणानुमानाद्भेदमत्राचक्षते अनुमाने गमकविशेषणमन्यथानुपपन्नत्वमनलं विना धूमो हि नोपपद्यते, इह तु विपर्ययः गम्यो गमकेन विना नोपपद्यते गम्यो बहिर्भावः स जीवतो गृहाभावं विना नोपपद्यते गृहान्निर्गतो जीवन् बहिर्भवतीति,भाष्यमप्येवं योजयन्ति, दृष्टः श्रुतो वार्थो ऽर्थकल्पना अर्थान्तरं(१) कल्पयतीत्यर्थः, यतः सा कल्पना प्रमेयद्वारिका ऽन्यथा नोपपद्यते कल्पमानो ऽर्थो ऽन्यथा नोपपद्यते स च गम्य इति,

### प्राभाकरमतार्थापत्तेरनुमानवैलक्षण्यनिराकरणम्—

एतदपि ग्रन्थवैषम्योपपादनमात्रं न तु नूतनविशेषोत्प्रेक्षणम्, गम्ये तावदगृहीते सति तद्गतमनुपपद्यमानत्वं कथमवधार्येत गृहीते तु गम्ये किं तद्गतानुपपद्यमानत्वग्रहणेन साध्यस्य सिद्धत्वात्, पुरा तद्गतमन्यथाऽनुपपद्यमानत्वं गृहीतमासीदिति चेद्, अहो महाननुमानाद्विशेषः इदं हि पूर्वं प्रतिबन्धग्रहणमुक्तं स्यात्,

अपि च बहिर्भावस्य गृहाभावं विनाऽनुपपत्तिरिति उक्ते तस्मिन्सति तस्योपपत्तिर्वक्तव्य सा च का किमुत्पत्तिर्ज्ञप्तिर्वा, यदि ज्ञप्तिः सा चानुमाने ऽपि, गम्यं गमकं विना नास्ति तस्मिन्सत्यस्तीति समानः पन्थाः ।

उत्पत्तिस्तु गृहाभावाद् बहिर्भावस्य दुर्भणा ।
प्राक् सिद्धे हि गृहाभावे तदुत्पादः क्षणान्तरे ॥
कारणं पूर्वसिद्धं हि कार्योत्पादाय कल्पते ।
तेनैकत्र क्षणे जीवन्न गृहे न बहिर्भवेत् ॥

तस्माद्यत्किंचिदेतत् ।

एवं च यदेके ज्ञप्त्युत्पत्तिकृतमिह वैलक्षण्यमुत्प्रेक्षितवन्तो धूमेनाग्निर्गम्यते एव गृहाभावेन बहिर्भावो जन्यते ऽपीति तदपि प्रत्युक्तं भवति ।

यत्तु संबन्धग्रहणाभावादित्युक्तं तदपि न सुन्दरम्, मन्दिराशुद्धम्(२) द्वारावर्त्तिनस्तदुत्पत्तेः ।

एतच्च स्वयमाशङ्क्य न तैः प्रतिसमाहितम् ।
उदाहरणमन्यत्तु व्यत्ययेन प्रदर्शितम् ॥

गृहभावेन बहिरभावकल्पनमिति तत्रैव तदेव तदेव वक्तव्यम्, इयमभावपूर्विका न भवत्येवार्थापत्तिः, षडर्थापत्तीः प्रतिज्ञायेमामभावपूर्विकामर्थापत्तिमु-

(१) 'अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना' इति शाबरभाष्यम् ।

(२) मन्दिराशुद्धमित्यधिकं प्रतिभाति ।

त्कोपनैयायिककटाक्षपातभीतामिह गहने हरिणीमिव यदुपेक्ष्य गम्यते तदत्यन्तमत्रभवतामनार्यजनोचितं चेष्टितम् ।

त्वदेकशरणां बालामिमामुत्सृज्य गच्छतः ।
कथं ते तर्कयिष्यन्ति मुखमन्या अपि स्त्रियः ॥

भावेनाभावकल्पना तु प्रत्यक्षपूर्विकैवार्थापत्तिः, तस्या अपि च न दुरवगमः संबन्धः, असर्वगतस्य द्रव्यस्य नियतदेशवृत्तेरक्लेशेन तदितरदेशनास्तित्वावधारणात्, अनग्निव्यतिरेकनिश्चये च धूमस्य भवतां का गतिः, या तत्र वार्त्ता सैवेहापि नो भविष्यति, न च भूयोदर्शनावगम्यमानान्वयमात्रैकशरणतया—

यस्य यस्त्वन्तराभावो गम्यस्तस्यैव दुष्यति ।
मम त्वदृष्टिमात्रेण गमकाः सहचारिणः ॥

इति कथयितुमुचितम्, अनिश्चितव्यतिरेकस्य साध्यनिश्चयाभावादिति दर्शयिष्यामः, पक्षधर्मोन्वयव्यतिरेको ऽपि नागृहीतो ऽनुमानाङ्गम्, बहिरभावसिद्धौ चानुमानप्रयोगः स एव यस्त्वया दर्शितः, प्रतिपक्षप्रयोगः प्रत्यक्षादिविरुद्धत्वाद्धेत्वाभास एवेत्यलं प्रसङ्गेन ।

### श्रुतार्थापत्तेरनुमानानतिरिक्तत्वनिरूपणम् ।

श्रुतार्थापत्तिरपि वराकी नानुमानाद्भिद्यते, वचनैकदेशकल्पनाया अनुपपन्नत्वादर्थस्य च कार्यलिङ्गस्य सत्त्वात्, यथा क्षितिधरकन्दराधिकरणं धूममवलोक्य तत्कारणमनलमनुमिनोति भवान् एवमागमात्पीनत्वाख्यं कार्यमवधार्य तत्कारणमपि भोजनमनुमिनोतु को ऽत्र विशेषः, तत्कार्यतया भूयोदर्शनतः प्रतिपन्नत्वात्, लिङ्गस्य तु क्वचित्प्रत्यक्षेण ग्रहणं क्वचिद्वचनतः प्रतिपत्तिरिति नैष महान्भेदः, ।

ननु वचनमपरिपूर्णमिति प्रतीतिमेव यथोचितां जनयितुमसमर्थम्, किं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यतो न भवति तत्पीनताप्रतीतिः, न न भवति साकाङ्क्षा तु भवति, न च साकाङ्क्षप्रतीतिकारिणस्तस्य प्रामाण्यमिति तदेव तावत्पूरयितुं युक्तम्, तदसत्—कस्यात्र साकाङ्क्षत्वं किं शब्दस्य किं वा तदर्थस्य उत स्वित्तदवगमस्येति. शब्दस्य तावदर्थनिरपेक्षस्य न काचिदाकाङ्क्षा ऽनभिव्यक्तशब्दवत्, अर्थस्तु साकाङ्क्षः सन्नर्थान्तरमुपकल्पयतु को ऽवसरो वचनकल्पनायाः, अवगम्यो ऽप्यर्थविषय एव साकाङ्क्षो भवति न शब्दविषयः श्रोत्रकरणकः, तस्मादवगमनैराकाङ्क्ष्यसिद्धये तदर्थकल्पनमेव युक्तम्, वचनैकदेशकल्पनमप्यर्थावगतिसिद्ध्यर्थमेवेति तत्कल्पनमेवास्तु किं सोपानान्तरेण ।

यत्तु कल्प्यमानस्यावैदिकत्वमर्थस्य प्राप्नोतीति, तत्र वचनकल्पनापक्षे सुत-

शमवैदिकः सोऽर्थः स्यात्, कल्प्यमानस्य वचनस्य वेदादन्यत्वात्, श्रुतोऽनुमितश्च द्विविधः स वेद एवेति चेच् श्रौतार्थः श्रौतार्थानुमितो द्विविधः स वेदार्थ एव भविष्यतीति किं वचनसोपानान्तरकल्पनया, तेन श्रूयमाणवेदवचनप्रतिपाद्यार्थसामर्थ्यलभ्यत्वादेव तस्य वेदार्थता भविष्यति, सर्वथा न वचनैकदेशविषया श्रुतार्थापत्तिः श्रेयसी श्रुत्येकदेशकल्पनापक्षप्रतिक्षेपाच्च तदतीन्द्रियतया संबन्धग्रहणमघटमानमिति यदुक्तं तदपि प्रत्युक्तम्, अर्थे तु सामान्येन संबन्धग्रहणमपि सूपपादम्, तत्र तत्र यज्यादेरर्थस्याधिकाराद्यर्थान्तरासंबद्धस्य दृष्टत्वादिति।

## प्राभाकरमतेन श्रुतार्थापत्तिनिराकरणम्।

प्राभाकरास्तु दृष्टः श्रुतो वेति भाष्यं लौकिकमभिधानान्तरमेवेदमुपलब्धिवचनमिति वर्णयन्तः श्रुतार्थापत्तिं प्रत्याचक्षते, श्रूयमाणस्यैव शब्दस्य तावत्यर्थे सामर्थ्यमुपगच्छन्तः तमर्थं शाब्दमेव प्रतिजानते वाक्यस्य दूराविदूरव्यवस्थितगुणागुणक्रियाद्यनेककारककलापोपरक्तकार्यात्मकवाक्यार्थप्रतीताविषोरिव दीर्घदीर्घो व्यापारः अविरतव्यापारे च शब्दे सा प्रतीतिरुदेति तद्व्यापारविरतौ नोदेति तदुत्पादककारकाभावात्, वृद्धव्यवहारतश्च शब्देषु व्युत्पाद्यमानो लोकस्तथाभूतवाक्यव्यवहारिणो वृद्धान् पश्यन्वाक्यस्य च तादृशवाक्यार्थे सामर्थ्यमवधारयति, तदनुवर्त्तीनि तु पदानि तस्मिन्नैमित्तिके निमित्तानि भवन्ति, नैमित्तिकानुकूल्यपर्यालोचनया क्वचिदश्रूयमाणान्यपि तानि निमित्ततां भजन्ते विश्वजिदादौ(१) स्वर्गकामादिपदवत्, क्वचिच्छ्रूयमाणान्यपि तदननुकूलत्वात्परित्यज्यन्ते यथाभयं हविरार्त्तिमार्च्छेदितिवत्,(२) क्वचिदन्यथा स्थितानि तदनुरोधादन्यथैव स्थाप्यन्ते प्रयाजशेषेण हवींष्यभिघारयतीतिवत्(३), तस्मात्प्रथमावग-

(१) विश्वजिता यजेत इत्यत्र अश्रूयमाणोऽपि स्वर्गः निमित्ततां भजते इति 'स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात्' इति सूत्रेण मीमांसायां सिद्धान्तितम्।

(२) मी० ६ अ० ४ पादे ६ अधिकरणे 'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र उभयार्तौ पञ्चशराव उतान्यतरार्तावपीतिसंशये इह नार्तिमात्रं न वा हविर्मात्रं निमित्तं किन्तु उभयशब्दाम्नानात्त्रितयं मिलितमिति उभयार्तावेव पञ्चशराव इति पूर्वपक्षे यदि यस्य हविरार्तं यस्योभयमार्तमिति द्वयं निमित्तीकृत्य पञ्चशरावो विधीयेत तदा वाक्यभेदः स्यात् हविरार्तिश्चान्यतरार्तावविशिष्टेति तथापि नैमित्तिकं स्यादिति सिद्धं नः समीहितम् अतो नोभयं निमित्तसन्निपाति किन्तु हविरार्तिमात्रं निमित्तमिति सिद्धान्तः उभयपदं स्वेर्णं योजनीयम् न सायं दोहार्तिरेव निमित्तं न प्रातर्दोहार्तिरेव किन्तूभयमपि परस्परानपेक्षं निमित्तम् इति।

(३) प्रयाजशेषेण हवींष्यभिघारयतीति प्रकृतौ श्रुतम् तद्विकृतावतिदिष्टम्। विकृतयश्च वाजपेयागताः पशवः ते च द्विविधाः क्रतुपशव प्राजापत्यपशवश्च एते उभयविधा अपि पशवः प्रातः सहैवोपक्रम्यन्ते ततः सर्वेषामर्थं सकृदेव प्रयाजा अनुष्ठीयन्ते

तैकघनाकार (१)वाक्यार्थानुसारेण सतामसतां वा पदानां निमित्तभावव्यवस्थापनादश्रूयमाणतथाविधैकदेशादपि वाक्यात्तदर्थावगतिसम्भवात्किं श्रुतार्थापत्त्या, अत एव न सोपानव्यवहितं तस्यार्थस्य शाब्दत्वं साक्षादेव तत्सिद्धेः, न च श्रूयमाणेषु निमित्तेषु कुतस्तदर्थमवगच्छामः अनवगच्छन्तश्च कीदृशं नैमित्तिकमवकल्पयामः—

उच्यते—श्रुतेष्वपि पदेषु तेषां निमित्तभावो न स्वमहिम्ना ऽवकल्पते किं तु नैमित्तिकानुसारद्वारक इत्युक्तम्, एवमश्रुतेष्वपि भविष्यति, न यजौ करणविभक्तिं शृणुमो न स्वर्गे कर्मविभक्तिं नाग्निचिद्वादिषु क्विप्प्रत्ययं नाधुनादिषु प्रकृतिं न समासतद्धितेषु यथोचितां विभक्तिमपि च प्रतीम एव तदर्थम्, एवं विश्वजिदादावपि यजेतेति नैमित्तिकबलादेव स्वर्गकामादिपदार्थं प्रत्येष्यामः, नियोगगर्भत्वाच्च विनियोगस्य लिङ्गादीनि श्रुतिकल्पनामन्तरेणापि नियोगव्यापारं परिगृह्य तेन वस्तुनि विनियोजकतां प्रतिपत्स्यन्ते।

नन्वेवं सति सर्वत्र शब्दव्यापारसम्भवात्।
मुख्यस्यापि भवेत्साम्यं गौणलाक्षणिकादिभिः॥
श्रुतिलिङ्गादिमानानां विरोधो यश्च वर्ण्यते।
पूर्वपूर्वबलीयस्त्वं तत्कथं वा भविष्यति॥

उच्यते—सत्यपि सर्वत्र शब्दव्यापारे तत्प्रकारभेदोपपत्तेरेष न दोषः, न हि पदानां सर्वात्मना निमित्तभावमपहायैव नैमित्तिकप्रतीतिरुपप्लवते, तदपरित्यागाच्च तत्स्वरूपवैचित्र्यमनुवर्तत एव।

अन्यथा सिंहशब्देन मतिः केसरिणीक्षुते।
अन्यथा देवदत्तादौ प्रतीतिरुपजन्यते॥
गङ्गायां मज्जतीत्यत्र गङ्गाशब्दो निमित्तताम्।
उपयाति यथा नैवं घोषादिवसतौ तथा॥

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामप्यर्थसन्निकर्षावप्रकर्षकृतो ऽस्त्येव विशेष इति तत्रापि न विनियोगसाम्यम्।

श्रुतिलिङ्गादिभिर्यो ऽपि कल्पयेद्विनियोजिकाम्।
तस्यापि तस्यास्तुल्यत्वाद्बाध्यबाधकता कथम्॥

---

तत्र क्रतुपशूनां प्रातः सवने आलम्भात् तदीयहविषां प्रयाजशेषेणाभिधारणं निर्विघ्नं सिद्ध्यति प्राजापत्यपशूनां तु माध्यन्दिने सवने आलम्भात् तदीयहविषामभिधारणार्थं प्रातः कालीनः प्रयाजशेषो धारयितव्य इति पूर्वपक्षे अभिधारणस्य शेषप्रतिपत्तिरूपतया हविः संस्कारकत्वाभावात् प्रजापत्यवपाभिधारणाय प्रयाजशेषो न धारयितव्य इति सिद्धान्तः।

(१) प्रथमावगतैकघनाकारेति आदर्शस्थः पाठोऽसङ्गतः।

अथ तत्कल्पने तेषां विदूरान्तिकवृत्तिता ।
स एवार्थगतो न्याय इति तत्कल्पनेन किम् ॥

ऐन्द्राग्नादिषु वैकृतेषु कर्मसु न प्राकृतविध्यन्तवचनानुमानमपि तु चोदकव्यापारेण तस्यैव प्राप्तिः वैकृतस्य विधेः कदा चिदाकाङ्क्षा चोदक इत्युच्यते,

नन्वेवमुभयत्र तदवगमाविशेषादुपदेशातिदेशयोः को विशेषः, न नियोगावगमे कश्चिद्विशेषः, किं तूपदेशे यथोपदेशं कार्यमतिदेशे तु यथाकार्यमुपदेश इत्येव तयोर्विशेषः ।

ननु यथाकार्यमुपदेशे ऽनुपयुज्यमानकृष्णलचर्ववघातादेः प्राप्तिरेव न भवेदिति को बाधार्थः, न अखण्डमण्डलविध्यन्तकाण्डप्राप्तेः, न ह्यांशांशिकया चोदकः प्रवर्त्तते इत्यलमनया प्रसक्तानुप्रसक्त्यागतशास्त्रान्तरगर्भकथाविस्तरप्रस्तावनया ।

इति प्रसङ्गाद् व्याख्यातं लेशतो वाक्यविन्मतम् ।
एतस्य युक्तायुक्तत्वपरिच्छेदे तु केवलम् ॥
श्रुतार्थापत्तिरस्माकं दूषणीयतया स्थिता ।
तद्दूषणं च पूर्वोक्तवीथ्या ऽनेन पथा ऽस्तु वा ॥

## ध्वनिनिराकरणम्—

एतेन शब्दसामर्थ्यमहिम्ना सो ऽपि वारितः ।
यमन्यः पण्डितंमन्यः प्रपेदे कं चन ध्वनिम् ॥
विधेर्निषेधावगतिर्विधिबुद्धिर्निषेधतः ।

यथा—

भम धम्मिअ वीसत्थो(१) मा स्म पान्थ गृहं विश ॥
मानान्तरपरिच्छेद्यवस्तुरूपोपदेशिनाम् ।
शब्दानामेव सामर्थ्यं तत्र तत्र तथा तथा ॥
अथ वा नेदृशी चर्चा कविभिः सह शोभते ।
विद्वांसो ऽपि विमुह्यन्ति वाक्यार्थगहने ऽध्वनि ॥
तदलमनया गोष्ठ्या विद्वज्जनोचितया चिरं
परमगहनस्तर्कज्ञानामभूमिरयं नयः ।
प्रकृतमधुना तस्माद् ब्रूमो न भात्यनुमानत—
स्तनुरपि सतामर्थापत्तेर्विशेष इति स्थितम् ॥

---

(१) भ्रमधार्मिक इत्यत्र भ्रमणविधिना निषेधस्य मास्म पान्थेत्यत्रनिषेधेन विधेर्व्यञ्जनेत्यर्थः ।

## अभावस्य प्रमाणान्तरत्वनिरूपणम् —

आह अभावस्तर्हि प्रमाणान्तरमस्तु ।

सत्परिच्छेदकं यत्र न प्रमाणं प्रवर्त्तते ।
तदभावमितौ मानं प्रमाणाभाव उच्यते ॥

इह घटो नास्तीति घटं प्रति सदुपलम्भकप्रमाणप्रवृत्तिर्नास्तीति असौ प्रमाणाभावो घटाभावं परिच्छिनत्ति, तत्र च घटविषयज्ञातृव्यापारानुत्पाद एव दृश्यादर्शनवाच्यः प्रमाणं, नास्तीति बुद्धिः फलम् ।

अथ वा घटाभावग्राही ग्रहीतृव्यापारः सदुपलम्भकप्रमाणाभावजनितो नास्तीति प्रत्ययस्वभावः प्रमाणं, फलं तु हानादिज्ञानं भविष्यति, तदुक्तम्—

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
सात्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि ॥ (१)इति ।

अन्यवस्तुशब्देन घटाभाव उक्तः, तत्र तावदिदं नास्तीति ज्ञानं न प्रत्यक्षजनितमिन्द्रियार्थसन्निकर्षाभावात् , सन्निकर्षो हि संयोगसमवायस्वभावः तत्प्रभावभेदो वा संयुक्तसमवायादिरिह नास्त्येव संयुक्तविशेषणभावो ऽपि न सम्भवति कुम्भाभावस्य भूप्रदेशविशेषणत्वाभावात् , न ह्यसंयुक्तमसमवेतं वा किंचिद्विशेषणं भवति संयुक्तस्य दण्डादेः समवेतस्य शुक्लगुणादेस्तथाभावदर्शनाद्, अभावश्च न केनचित्संयुज्यते अद्रव्यभावात् , न क्वचित्स समवैति गुणादिवैलक्षण्यादिति, यदि च संयुक्तविशेषणभावसन्निकर्षोपकृतं चक्षुरभावं गृह्णाति तर्हि तदविशेषात्संयुक्तद्रव्यवर्तीन् रसादीनपि गृह्णीयात् तदभावमपि मा ग्रहीदयोग्यत्वाविशेषात् , योग्यायोग्यत्वकृतग्रहणाग्रहणनियमवादे वा योग्यतैव सन्निकर्षो भवति किं षट्कघोषणेन, तस्मान्न घटाभावज्ञानं चाक्षुषम् ।

ननु भूप्रदेशं च घटाभावं च विस्फारिते चक्षुषि निरीक्षामहे निमीलिते तु

---

(१) श्लो॰ अभावग्रन्थे १० श्लो॰ । अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्य' इति भाष्यम् । तत्र 'प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते । वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता' इत्यनेन प्रमाणपदं प्रत्यक्षादिप्रमाणपञ्चकपरमिति व्याख्याय अभावशब्दं व्याचष्टे—प्रत्याक्षादेरिति । तां (प्रत्यक्षाद्यनुत्पत्तिं) द्विधा विभजते सेति । सोऽयमात्मनो घटादिविषयः प्रत्यक्षादिज्ञानस्वरूपः परिणामः तदभावमात्रमेवानुत्पत्तिरभाव इति बोध्यते तच्च घटाद्यभावविषयं नास्ति बुद्धिजनकतया इन्द्रियादिवत्प्रमाणम् नास्तीतिबुद्धिश्च फलम् सैव या बुद्धिर्घटाद्यभावरूपे वस्तुनि जायमाना लक्षणयानुत्पत्त्यभावशब्दाभ्यामुच्यते तत्प्रमाणे च हानादिधीः फलम् , तदेवं भाष्यार्थः प्रत्यक्षाद्यभावो यो नास्तीत्यर्थस्य बोधकः सोऽभावो नाम प्रमाणम् इति न्यायरत्नाकरः ।

तस्मिंस्तयोरन्यतरमपि न पश्यामः, तत्र समाने च तद्भावभावित्वे भूप्रदेशज्ञानं चाक्षुषमभावज्ञानं तु न चाक्षुषमिति कुतो विशेषमवगच्छामः, बाढमवगच्छामः, सन्निकर्षाभावादेव न ह्यसन्निकृष्टं चक्षुरवगतिजन्मने प्रभवति तद्भावभावित्वमन्यथासिद्धम्, विदूरदेशे व्यवस्थितस्थूलज्वालावलीजटिलज्वलनगतभास्वररूपोपलम्भानुवर्त्तितद्गतोष्णस्पर्शज्ञानवत्, तत्र यथा रूपानुमीयमानस्पर्शवेदने नयनान्वयव्यतिरेकान्वयविधानमन्यथासिद्धम् एवमिहापि भूप्रदेशोपलम्भाविनाभाविनि कुम्भाभावग्रहणे तत्कृतमिन्द्रियान्वयव्यतिरेकान्वयविधानमिति न चाक्षुषो घटाभावप्रतिभासः, तदुक्तम्—

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायते ऽक्षानपेक्षया ॥ (१) इति ।

अतश्चैवमसन्निहितस्यापि क चिद्ग्रहणदर्शनात्, स्वरूपमात्रकेण गौरमूलकमुपलब्धवतः ततो देशान्तरं गतस्य तत्र केन चिद् गर्गो ऽस्ति वा नास्ति वेति पृष्टस्य सतः स्वरूपमात्रं गृहीतं गौरमूलकमनुस्मरतः तदानीमसन्निकृष्टे ऽपि गर्गस्याभावे तदैव तस्य ज्ञानमुदेति तत्रेन्द्रियकथा ऽपि नास्ति इति न तस्य प्रत्यक्षत्वम्, चानुमानगम्यो ऽयमभावः भूप्रदेशस्य तद्गतघटादर्शनस्य वा लिङ्गत्वानुपपत्तेः, न भूप्रदेशो लिङ्गम् अगृहीतसम्बन्धस्यापि तत्प्रतीतेः अनैकान्तिकत्वाद् अपक्षधर्मत्वात्, तदधिकरणभावानन्त्येन सम्बन्धग्रहणासम्भवाच्च, नापि घटादर्शनं लिङ्गम्, अपक्षधर्मत्वाद्घटादर्शनं घटस्य धर्मो न तदभावस्य, घटभावप्रतीतिं प्रति व्याप्रियमाणत्वात्तद्धर्मत्वमस्येतिचेन्न इतरेतराश्रयप्रसङ्गात्, तद्धर्मत्वे सति लिङ्गप्रतीतिजनकत्वं प्रतीतिजन्मनि सति तद्धर्मताज्ञानमदर्शनस्य दुर्घटमेव, सिद्धायां तु किं पक्षधर्मताज्ञानेन साध्यप्रतीतेः सिद्धत्वात्,

अपि चेदमदर्शनाख्यं लिङ्गमविदितव्याप्ति कथमभावस्यानुमापकं भवेत्, व्याप्तिग्रहणं च धूमाग्निवदुभयधर्मिग्रहणपूर्वकम्, तत्र व्याप्तिग्रहणवेलायामेव तावत् कुतस्त्यमभावाख्यधर्मिग्रहणमिति चिन्त्यम्, तत एवानुमानादिति यद्युच्यते तदितरेतराश्रयम्, अनुमानान्तरनिबन्धने तु तद्ग्रहणे ऽनवस्था, अदर्शनाख्यलिङ्गमपि दर्शनाभावस्वभावमिति तत्स्वरूपपरिच्छेदचिन्तायामपि अयमेव पन्थाः, अतो दूरमपि गत्वा तदवगमसिद्धये प्रमाणान्तरमभावपरिच्छेदनिपुणमवगन्तव्यमिति तत एव तदवगमसिद्धेर्न तस्यानुमेयत्वम्, न चेदमिह

---

(१) श्लोकवा० अभावग्रन्थे श्लोक २७। दृश्यादर्शनमभावे प्रमाणं नादर्शनमात्रं येन चाश्रयभूतं भूतलादिकं वस्तु गृहीतं तस्यैव घटो दृश्यो भवति नान्यस्य उन्मीलिताक्षस्यैव च तद्ग्रहणमिति दृश्यादर्शनसिद्धयेऽक्षापेक्षा नाभावग्रहणाय आश्रये गृहीते प्रतियोगिनि च स्मृतेऽक्षस्थानीयेन दृश्यादर्शनसहायेन मनसैवाभावज्ञानमिति नेन्द्रियस्याभावग्रहणे शक्तिः कल्पनीयेत्यर्थः ।

घटो नास्तीति ज्ञानं शब्दोपमानार्थापत्त्यन्यतमनिमित्तमाशङ्कितुमपि युक्तमिति, सदुपलम्भकप्रमाणातीतत्वादभावस्यैव भूमिरभाव इति युक्तम्,

अपि च प्रमेयमनुरूपेण प्रमाणेन प्रमातुमुचितम्—

भावात्मके प्रमेये हि नाभावस्य प्रमाणता ।
अभावे ऽपि प्रमेये स्यान्न भावस्य प्रमाणता ॥
स प्रमेयमभावाख्यं निह्नुतं बोधयत्त्वया ।
प्रमाणमपि तेनेदमभावात्मकमिष्यताम् ॥

## अभावस्य प्रमाणान्तरत्वनिराकरणम्—

अत्राभिधीयते, सत्यमभावः प्रमेयमभ्युपगम्यते प्रत्यक्षाद्यवसीयमानस्वरूपत्वान्न प्रमाणान्तरमात्मपरिच्छित्तये मृगयते ।

अदूरमेदिनीदेशवर्त्तिनस्तस्य चक्षुषः ।
परिच्छेदः परोक्षस्य क चिन्मानान्तरैरपि ॥

तथा चेह घटो नास्तीति ज्ञानमेकमेवेदम् इह कुण्डे दधीति ज्ञानवद् उभयालम्भनमनुपरतनयनव्यापारस्य भवति तत्र भूप्रदेशमात्रे एव नयनजं ज्ञानमितरत्र प्रमाणान्तरजनितमिति कुतस्त्यो ऽयं विभागः, अत्राग्निरिति युक्तो ऽयमनक्षजः प्रतिभासः धूमग्रहणानन्तरमविनाभावस्मरणादिबुद्ध्यन्तरव्यवधानसम्भवात्, इह तु तथा नास्त्येव, अव्यवहितैव हि भूप्रदेशवद् घटनास्तितावगतिरविच्छेदेनानुभूयते, न च क्षितिधराधिकरणपरोक्षाशुशुक्षणिवदनीक्षणविषयता भवति भावस्य तद्व्यापारान्वयव्यतिरेकानुविधानात्तत्प्रतीतेः, तत्र हि व्यापृताक्षो ऽपि न पर्वतवर्त्तिनमनलमवलोकयितुमुत्सहते, इह तु घटाभावमपरिम्लाननयनव्यापार एव पश्यतीति चाक्षुषमभावज्ञानं तद्भावभावित्वविधानात् न च दूरव्यवस्थितहुतवहरूपदर्शनपूर्वकस्पर्शानुमानवदिदमन्यथासिद्धं तद्भावभावित्वम्, तत्र हि बहुशः स्पर्शदर्शनकौशलशून्यत्वमवधारितं चक्षुषः स्पर्शपरिच्छेदि च कारणान्तरं त्वगिन्द्रियमवगतम्, अविनाभाविता च पुरा तथाविधयो रूपस्पर्शयोरुपलब्धेत्यनुमेय एवासौ स्पर्श इति युक्तं तत्रान्यथासिद्धत्वं चक्षुर्व्यापारस्य, प्रकृते तु नेदृशः प्रकारः समस्ति, न चैकत्र तद्भावभावित्वमन्यथासिद्धमिति सर्वत्र तथा कल्प्यते, एवं हि रूपमपि चाक्षुषतामवजह्यात्,

ननु नीरूपस्यासम्बद्धस्य च चाक्षुषत्वमभावस्य कथमभिधीयते, चक्षुर्जनितज्ञानविषयत्वाच्चाक्षुषत्वं न रूपवत्त्वेन, रूपवतामपि परमाणूनामचक्षुषत्वात्, सम्बद्धमपि न सर्वं चाक्षुषमाकाशस्य तथात्वे ऽपि तदभावात्,

नन्वसम्बद्धस्य चक्षुषा ग्रहणे दूरव्यवहितस्य विभीषणादेरपि चाक्षुषत्वप्रसङ्गः, उच्यते—भावे खल्वयं नियमः, यदसम्बद्धस्य चक्षुषा ऽग्रहणम् अ-

भावस्त्वसम्बद्धो ऽपि चक्षुषा ग्रहीष्यते, षट्प्रकारसन्निकर्षवर्णनमपि भावाभिप्रायमेव, सम्बद्धं हि यद् गृह्यते तत् षण्णां सन्निकर्षाणामन्यतमेन सन्निकर्षेणेति, प्राप्यकारित्वमपि इन्द्रियाणां वस्त्वभिप्रायमेवोच्यते, तस्मादवस्तुत्वादभावस्य तेन सन्निकर्षमलभमानमपि नयनमुपजनयति तद्विषयमवगममिति न दोषः, न चासंबद्धत्वाविशेषाद् देशान्तरादिषु सर्वाभावग्रहणमाशङ्कनीयम्, आश्रयग्रहणसापेक्षत्वादभावप्रतीतेः आश्रयस्य च सन्निहितस्यैव प्रत्यक्षत्वात्, अथवा संयुक्तविशेषणभावाख्यसन्निकर्षोपकृतं चक्षुरभावं ग्रहीष्यति, यथा समवायप्रत्यक्षत्ववादिनां पक्षे समवायमिति ।

ननु तर्हीदमसिद्धम् असिद्धस्य दृष्टान्तीक्रियते, मैवम्—भवता ऽपि द्रव्यगुणयोर्वृत्तेरपरिहार्यत्वात्, भेदबुद्ध्या सिद्धभेदयोरसंबद्धयोश्च द्रव्यगुणयोरदर्शनादवश्यं काचिद्वृत्तिरेषितव्येत्यलमर्थान्तरचिन्तनेन ।

यत्तूक्तं संयोगसमवाययोरभावादभावो न भूप्रदेशस्य विशेषणमिति तदप्यसाधु–संयोगसमवायाभ्यामन्यस्यैव विशेषणविशेष्यभावनाम्नः संबन्धस्यादूरे एव प्रतीतिबलेन दर्शयिष्यमाणत्वात् ।

यस्तु संयुक्तविशेषणभावे सन्निकर्षे रसादिभिरतिप्रसङ्ग उद्भावितः सो ऽयं संयुक्तसमवायाख्ये चक्षूरूपसन्निकर्षे ऽपि समानो दोषः, संयुक्तसमवायो ऽपि तर्हि मा भूत् सन्निकर्षः किं नश्छिन्नम्, तत्किमसंबद्धमेव रूपं गृह्णातु चक्षुः न हि संयुक्तसमवायादन्यश्चक्षूरूपयोः सम्बन्धः ।

नन्वर्थग्रहणात्मको व्यापार एव चक्षुषः सन्निकर्षो, योग्यता वा तद्वशादेव रूपस्य तद्ग्राहकत्वमुपेयते न संयुक्तसमवायादिनेति स तर्हि व्यापारः सा वा योग्यता कथमभावमपि प्रति तस्य न स्यात्, प्राप्यकारीणि चेन्द्रियाणि कारकत्वादिष्यन्ते सन्निकर्षश्च निह्नूयते इति विप्रतिषिद्धम्, तस्मात् षट्प्रकारा सन्निकर्षानुगामिनी योग्यता वक्तव्या, न योग्यतामात्रे एव विश्रम्य स्थातव्यम्, यत्र योग्यता तत्र सन्निकर्षोऽप्यस्ति न तु यत्र सन्निकर्षस्तत्रावश्यं योग्यतेत्येवमभ्युपगच्छतां न रसाद्यतिप्रसङ्गचोदना धुनोति, मनोरसादेः सत्यपि सन्निकर्षे योग्यत्वाभावादग्रहणम् ।

योग्यतामात्रवादेपि नाभावस्यास्त्ययोग्यता ।
भवद्भिर्वस्तुधर्मो ऽस्य को वा नाभ्युपगम्यते ॥

सर्वोपाख्यावियुक्तत्वान्नास्त्येवेत्येष वोच्यताम् ।
अभावश्चाक्षुषज्ञानविषयो वा ऽभ्युपेयताम् ॥

यदपि--स्वरूपमात्रं दृष्टं च पश्चात्किं चित्स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते(१) ॥

इत्युक्तं तदपि न युक्तम्, वस्त्वन्तरविविक्तगौरमूलकस्वरूपग्रहणसमये एव तत्रासन्निहितसकलपदार्थाभावग्रहणस्य मेचकबुद्ध्या सिद्धत्वाद् इदानीं तद्गतगर्गाभावास्मरणं न तस्य परोक्षस्यानुभवः, तथा हि तदानीं गर्गस्तत्र नासीदित्येवमसौ स्मृत्वा सत्यवादी स्मरति इदानीं त्वस्तित्वनास्तित्वे प्रति संशेते एवासौ गर्गस्य कुतश्चिदागतस्येदानीं तत्रास्तित्वसम्भवात् ।

ननु न पूर्वं सर्वाभावग्रहणमनुभूतवानसौ गौरमूलके अननुभूयमानमपि तदस्य बलात्कल्प्यते ऽभ्यस्तविषये ऽविनाभावस्मरणवत्, तथा हि तेन तेनानुयुक्तः तस्य तस्याभावं स्मृत्वोत्तरमसौ सर्वेभ्य आचष्टे ।

ननु मेचकबुद्ध्या सकलाभावग्रहणे सहसैव सकलाभावस्मृतिरुपजायेत, मैवम्—यत्रैव प्रश्नादिस्मरणकारणमस्य भवति तदेव स्मरति न सर्वमविद्यमानस्मरणनिमित्तम्, अन्यत्र तु युगपदुपलब्धेष्वपि वर्णेषु युगपदन्त्यवर्णानुभवसमनन्तरं स्मरणम्, अन्यत्र तु युगपदुपलब्धेष्वपि ऽपि क्रमेण स्मरणं भविष्यतीति न मेचकबुद्धावयं दोषः, किं च स्वरूपमात्रं दृष्टमिति वदता भवता ऽपि मेचकज्ञानमभ्युपगतमेव मात्रग्रहणेन तदन्याभावग्रहणसिद्धेः, एवं हि भवानेवाभ्यधात् ।

अयमेवेति यो ह्येष भावे भवति निर्णयः ।
नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते(२) ॥

इति, तस्माद् गौरमूलकावेशसमये एव तत्रासन्निहितस्य गर्गादेरभावग्रहणान्नेदानीं परोक्षाभावग्रहणमभावकारणमभ्युपगन्तव्यमिति प्रत्यक्षगम्य एवायमभावः ।

यत्पुनरननुमेयत्वम् इह घटो नास्तीति प्रकृताभावविषयमभ्यधायि तदस्माकमभिमतम्, कश्चित्पुनरसन्निकृष्टदेशवृत्तिरनुमेयो ऽपि भवत्यभावो यथा

(१) श्लोक० अभावग्रन्थे २८ स्वरूपमात्रमिति । अयमर्थः यदा हि कश्चित्प्रातः काले कञ्चिद् देशमध्यासीनस्तत्र व्याघ्रादिकमदृष्ट्वा तदस्मरणाच्च तदभावमप्यगृहीत्वा देशमात्रं दृष्ट्वा देशान्तरगतो मध्यन्दिने पृच्छ्यते कश्चित्तस्मिन्देशे प्रातः काले व्याघ्रो गजः सिंहः पार्थिवो वा समागतः इति स तदा तं देशमवगतत्वात्स्मरन्नपि तत्र देशेऽन्येषां व्याघ्रादीनामभावं प्रागगृहीतं तदैव गृह्णाति न च मध्यन्दिने समये प्रातः कालिकस्याभावस्यानिन्द्रियसन्निकृष्टस्य सम्भवति प्रत्यक्षेण ग्रहणं तस्येन्द्रियसन्निकृष्टवर्तमानविषयत्वादिति न्यायरत्नाकरः ।

(२) श्लोकवार्तिकेऽभावग्रन्थे श्लो० १९ । योऽयं देवदत्त एवात्र गृहे नान्यः स्थाणुरेवायं न पुरुष इति सावधारणो निर्णयः स वस्त्वन्तराभावानुविद्ध इत्यर्थः ।

सन्तमसे सलिलधाराविसरसिक्तसस्यमूलमभिवर्षति देवे घनपवनसंयोगाभावो ऽनुमीयते यथा वार्थापत्तावुदाहृतं गृहभावेन चैत्रस्य बहिरभावकल्पनमिति ।

आगमादप्यभावस्य क चिद्भवति निश्चयः ।
चौरादिनास्तिताज्ञानमध्वगानामिवाप्ततः ॥

यत्पुनरुक्तम् अनुरूपेण प्रमाणेन प्रमेयं प्रमीयते प्रमेयत्वाद्भावात्मकप्रमेयवदिति, एतदप्यप्रयोजकं साधनम्—

अभावः पटलादीनां प्रत्यक्षं प्रतिपद्यते ।
विपक्षे वृत्त्यभावश्च लिङ्गस्य सहकारिताम् ॥
पुरुषोक्तिषु दोषाणामभावश्चोपयुज्यते ।
सामग्र्यन्तर्गतात्तस्मादभावादपि भावधीः ॥
अभावश्च क्व चिल्लिङ्गमिष्यते भावसंविदः ।
वृष्ट्यभावो ऽपि वाय्वभ्रसंयोगस्यानुमापकः ॥
तस्माद्युक्तमभावस्य नाभावेनैव वेदनम् ।
न नाम यादृशो यक्षो बलिरप्यस्य तादृशः ॥

## बौद्धमतेनाभाववस्तुत्वनिराकारणम्—

अत्र रक्तपटाः (१)प्राहुः प्रमेये सति चिन्तनम् ।
युक्तं नाम प्रमाणस्य तदेव त्वतिदुर्लभम् ॥

अभावो नाम प्रतीयमानो न स्वतन्त्रतया घटाऽभावस्वरूपवदनुभूयते ऽपि तु देशकालप्रतियोगिविशिष्टत्वेन, तथा ह्येवं प्रतीतिरिदमिदानीमिह नास्तीति स चेत्थमवगम्यमानोऽपि यदि तैः संबद्ध एव भवेदभावः क एनं द्विष्यात्, न त्वसौ तत्संबद्धः न हि देशेन कालेन प्रतियोगिना सहाऽस्य कश्चित्संबन्धः संयोगसमवायादेरनुपपत्तेः, न च संबन्धरहितमेव विशेषणं भवति ।

ननु विशेषणविशेष्यभाव एव संबन्धः किं संबन्धान्तरापेक्षया, नैवम्—संबन्धान्तरमूलत्वेन तदवगमात्, संयुक्तं समवेतं वा विशेषणं भवति दण्डी देवदत्तो नीलमुत्पलमिति, अतश्च न वास्तवः स्वतन्त्र एव विशेषणविशेष्यभावः संबन्धः पुरुषेच्छया विपर्यस्यन्तमप्येनं पश्यामः, विशेषणमपि विशेष्यीभवति विशेष्यमपि विशेषणीभवतीति काल्पनिक एवायं संबन्धः न वस्तुधर्मः, प्रतियोगिना सह नतरामभावस्य संबन्धो ऽसमानकालत्वात्, यदा हि घटो न तदा तदभावः यदा वा तदभावो न तदा घट इति, विरोधाख्यसंबन्धो भविष्यतीति चेत्को विरोधार्थः, यदि हि प्राक्सिद्धो घटाभाव आगत्य घटं विरुन्ध्याद्भवेदपि तद्विरोधी घटमुद्गरयोरिव न त्वेवमस्ति तयोरसमानकालत्वात्, अ-

(१) रक्तपटाः—बौद्धाः ।

भ्युपगमे वा घटतदभावयोरिव वध्यघातकयोः साहचर्यमनुभूयेते, घटाभावः किं कुर्वन् घटं विरुन्ध्याद् अकिञ्चित्करस्य विरोधित्वेऽतिप्रसक्तिः अभावान्तरकरणत्वेऽनवस्था, मुद्गरादयो घटस्य नाभावहेतवो भवितुमर्हन्ति भावस्य स्वत एव भङ्गुरत्वेन विनाशहेत्वनपेक्षत्वात् ।

भावो विनश्वरात्मा चेत्कृतं प्रलयहेतुभिः ।
अथाप्यनश्वरात्मा चेत्कृतं प्रलयहेतुभिः ॥

तस्माद्विजातीयकपालादिसन्ततिजननएव मुद्गरादिकारकव्यापारः सामग्र्यन्तरानुप्रवेशे सति सन्तत्यन्तरोत्पादो न पुनरभावस्य ततो निष्पत्तिः, स हि घटाद्वस्त्वन्तरं चेत्किमायातं यदसौ न पूर्ववदुपलभ्यते, तद्विरोधित्वादिति चेत्प्रत्युक्तमेतत्, अनर्थान्तरत्वे तु घटस्यैव मुद्गरकार्यत्वं स्यात् ।

ननु यानि मुद्गरेण कपालानि जन्यन्ते स एव घटाभावः, हन्त तर्हि कपालस्फोटने सति घटाभावस्य विनष्टत्वाद् घटस्योन्मज्जनं प्राप्नोति किं चाकिञ्चित्कराणि कपालानि घटस्याऽभाव इति यद्युच्यते पटस्यापि तथोच्येरन्, किञ्च कारकत्वं तेषां पूर्ववत् प्रतिक्षेप्तव्यम्, अपि चायमभावो भवनधर्मा वा स्यादभवनधर्मा वा भवनधर्मत्वे भावोऽसौ भवेद् घटादिवत्, अभवनधर्मा तु यद्यभावोऽस्ति स नित्य एवासौ तर्हि भवेत्, स चायमेकपदार्थसम्बन्धी वा स्यात्सर्वपदार्थसम्बन्धी वा तत्रैकभावसम्बन्धित्वे न तस्य नियमकारणमुत्पश्यामः, सर्वभावसम्बन्धित्वे तु सर्वपदार्थप्रतिकूलस्याभावस्य नित्यत्वान्नित्यः सन्नित्यो वा कश्चिदभावो नामास्ति ।

नन्वभावानभ्युपगमे भावानामितरेतरसङ्करादखिलव्यवहारविप्लवः प्राप्नोति, यदाह—

क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्त्तिरात्मनि ॥ इति(१) ।

अभावाभ्युपगमे तु भावानामितरेतराभावादसङ्कीर्णस्वभावत्वाद् अभावकारणकसङ्करपरिहारकथने तु सुतरां विप्लवः ।

भावो भावादिवान्यस्मादभावांशादपि ध्रुवम् ।
असङ्कीर्णोऽभ्युपेतव्यः स कथं वा भविष्यति ॥
अन्योन्यमपि भावानां यद्यसङ्कीर्णता स्वतः ।
भावैः किमपराद्धं वा परतश्चेत्कुतो नु सा ॥
भावेभ्यो यद्युपेयेत भवेदन्योन्यसंश्रयम् ।
अभावान्तरजन्या चेदनवस्था दुरुत्तरा ॥

---

(१) श्लोकवार्त्तिकेऽभावग्रन्थे श्लो० ४ ।

अभावस्वभावतायाश्च सर्वान् प्रत्यविशेषात्प्रतिषेध्यनिबन्धन एव तद्भेदः प्रतिषेध्याश्च भावाः परस्परेण भिद्यमानास्तं भिन्दन्तीति प्रत्युत भावाधीनमभावानामसाङ्कर्यं वक्तुमुचितं नतु विपर्ययो युक्तः, तदखिलपदार्थव्यवस्थाविसंष्ठुलीभावभयादपि नाभावाभ्युगमो युक्तः।

नन्वभावप्रतिक्षेपे नञः किं वाच्यमुच्यताम्।
नैव शब्दानुसारेण वाच्यस्थितिरुपेयते ॥
बौद्धाः खलु वयं लोके सर्वत्र ख्यातकीर्त्तयः।
विकल्पमात्रशब्दार्थपरिकल्पनपण्डिताः ॥
क चिन्नामपदप्राप्तवृत्तिना जन्यते नञा।
निषेधपर्युदस्तात्मविषयोल्लेखिनी मतिः ॥
क चित्त्वाख्यातसम्बन्धमुपेत्य विदधात्यसौ।
तदुपात्तक्रियारम्भनिवृत्त्युल्लेखमात्रकम्।
ननु चानेन मार्गेण यदि भावो निरस्यते।
एकादशप्रकारैषा ऽनुपलब्धिः क गच्छतु ॥

## एकादशविधानुपलब्धिनिरूपणम्—

स्वभावानुपलब्धिः यथा नेह घटो ऽनुपलब्धेरिति, कारणानुपलब्धिर्यथा नात्र धूमो दहनानुपलब्धेरिति, व्यापकानुपलब्धिर्यथा नात्र शीतस्पर्शः पावकोपलब्धेरिति, कार्यानुपलब्धिर्यथा नात्र निरपवादा धूमहेतवः सन्ति धूमानुपलब्धेरिति, स्वभावविरुद्धोपलब्धिर्यथा नात्र शीतस्पर्शः पावकोपलब्धेरिति, स्वभावविरुद्धकार्योपलब्धिर्यथा नात्र शीतस्पर्शो धूमोपलब्धेरिति, विरुद्धव्याप्तोपलब्धिर्यथा नाध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणादिति, कार्यविरुद्धोपलब्धिर्यथा नात्र शीतकारणमप्रतिबद्धसामर्थ्यमस्ति ज्वलनोपलब्धेरिति, व्यापकविरुद्धोपलब्धिर्यथा नात्र तुहिनस्पर्शः कृशानुदर्शनादिति, कारणविरुद्धोपलब्धिर्यथा नैतस्य रोमहर्षदन्तवीणादिविशेषाः सन्ति सन्निहितहुतवहाधिष्ठितविशेषादिति, कारणविरुद्धकार्योपलब्धिर्यथा प्रवृत्तदन्तवीणादिविशेषपुरुषाधिष्ठित एष देशो न भवति धूमवत्त्वादिति।

सत्यमेकादशविधाऽनुपलब्धिरिहेष्यते।
सा त्वसद्व्यवहारस्य हेतुर्नाभावसंविदः ॥

नन्वनुपलब्धेः स्वभावहेतावन्तर्भाव उक्तः स्वभावहेतौ च साध्यसाधनयोरव्यतिरेक इष्यते, असद्व्यवहारश्च ज्ञानाभिधानात्मकत्वात्तत एव पृथगिति कथं तद्विषयतां यायात्, सत्यमेवम्—किन्तु नासद्व्यवहारस्तया साध्यतेऽपि तु तद्योग्यता योग्यता च न ततोऽर्थान्तरमिति न स्वभावहेतुत्वहानिः।

ननु योग्यता भावात्मिकाऽनुपलब्धिस्त्वभावस्वभावेति कथमनर्थान्तरत्वम् नैतदेवम् नह्युपलब्धिप्रतिषेधात्मिकामभावस्वभावामनुपलब्धिमनुपलब्धिविदो वदन्ति किं तु प्रतिषेधपर्युदस्तवस्त्वन्तरोपलब्धिमेवार्थाभावस्वभावामिति, अत एवेदमपि न चाद्यम् अनुपलब्धेरभावात्मकत्वादनुपलब्ध्यन्तरपरिच्छेद्यत्वादनवस्थेति, यस्माद्वस्त्वन्तरोपलम्भात्मिकाऽनुपलब्धिः स्वसंवेद्यैवेति ।

नन्वनुपलब्धेरसद्व्यवहारसिद्धावदृष्टस्यापि तथात्वं सिध्येद् न, दृश्यत्वविशेषणोपादानादुपलब्धिलक्षणप्राप्तस्यानुपलब्धेरसद्व्यवहारो न–यस्य कस्यचिदिति, तत्र–

घटादेः पूर्वदृष्टस्य दृश्यत्वपरिनिश्चयात् ।
असत्त्वव्यवहारो हि सिध्यत्यनुपलब्धितः ॥
एकान्तानुपलब्धेषु(१) विहायःकुसुमादिषु ।
(असत्त्वाधीन) दृश्यत्वयोग्यताऽनवधारणात्॥
न शक्यो ऽनुपलम्भेन कर्तुं नास्तित्वनिश्चयः ।
तत्रापि त्वपिशाचो ऽयं चैत्र इत्येवमादिषु ॥
तादात्म्यप्रतिषेधे च दृश्यत्वं नोपयुज्यते ।
पिशाचेतररूपो हि चैत्रः प्रत्यक्षगोचरः ॥
ताद्रूप्यनिश्चये तस्य किं फलं तद्विशेषणम् ।
इत्यसद्व्यवहारस्य सिद्धेरनुपलब्धितः ॥
न भाववदभावाख्यं प्रमेयमवकल्पते ।

## स्वमतेनाभावस्तुत्वस्थापनम् —

अत्राभिधीयते, इदं तावत्सकलप्राणिसाक्षिकं संवेदनद्वयमुपजायमानं दृष्टम् इह घटो ऽस्ति इह नास्तीति तत्र विकल्पमात्रसंवेदनमनालम्बनमात्मांशावलम्बनं वेत्यादि यदभिलप्यते तन्नास्तिताज्ञान इवास्तित्वज्ञाने ऽपि समानमतो द्वयोरपि प्रामाण्यं भवतु द्वयोरपि वा मा भूत्, यत्त्वस्तीति ज्ञानं प्रमाणमितरदप्रमाणमिति कथ्यते तदिच्छामात्रम्, अस्तीति ज्ञानसमानयोगक्षेमत्वे च नास्तीति ज्ञानस्य विषयश्चिन्तनीयः ।

ननु घटविविक्तभूतलोपलम्भभावे घटानुपलम्भ इत्युक्तं तदयुक्तम्, केयं घटविविक्तता सा भूप्रदेशादभिन्ना भिन्ना वा, अभेदे भूप्रदेशाविशेषाद् घटसन्निधाने ऽपि घटो नास्तीति प्रतिपत्तिजायेत भेदे तु नाम्नि विवादः स्यात् ।

भेदाभेदे न चिन्त्या च घटादपि विविक्तता ।
अभेदे घट एव स्याद्भेदे चाभाव एव सा ॥

---

(१) विहायः कुसुमम्—खपुष्पम् ।

तदिह घटो नास्तीति घटविविक्तभूतलालम्बनतायामस्याः स्वसंविदः इहेति तावदस्मिन्संविदंशे देश आलम्बनमित्यविवाद एव, इह घटो ऽस्तीति भावप्रतीति समये ऽपि तत्र तदवभासाभ्युपगमात्, घटो नास्तीत्यत्र तु यदवभासते तत्र भूतलमात्रमेव भावप्रतीतिसमयं तदतिरिक्तप्रतिभासस्यावश्यम्भावित्वात्, तदतिरिक्तं तु प्रतिभासमानं घटविविक्ततेति वा कथ्यतां घटाभाव इति वा नात्र वस्तुनि विशेषः,

ननु घटो नास्तीति विकल्पमात्रमेतत, न दर्शनानन्तरप्रवृत्तत्वेन विधिविकल्पतुल्यत्वात्।

यथानुभवमुत्पत्तुमर्हन्ति किल कल्पनाः।
प्रतिषेधविकल्पस्तु न विध्यनुभवोचितः॥
ननु नैव विकल्पानां वयं प्रामाण्यवादिनः।
कामं विधिविकल्पानामपि मा भूत्प्रमाणता॥
प्रामाण्यं दर्शनानां चेत्त्वविकल्पानुसारतः।
इहापि तेषामेवास्ति तद्विकल्पानुसारतः॥

वस्तुप्राप्त्या विधिविकल्पानां प्रामाण्यव्यवहार इति चेद् इहापि तत्प्राप्त्यैव निषेधविकल्पानामस्तु प्रामाण्यव्यवहारः, किमत्र वस्तु प्राप्यते इति चेत्तत्रापि किं प्राप्यते, नीलमिति चेत् सेयमभावस्यापि प्राप्तिर्भवत्येव नीलं हि प्राप्यमाणं तदभावाविनाभूतपीतादिव्यवच्छिन्नरूपं प्राप्यते सा चेयं तथाभूतनीलप्राप्तिर्भवन्तीतराभावप्राप्तिरपि भवत्यन्यथा हि नीलप्राप्तिरेव न स्यादिति, एतच्च लाक्षणिकं विरोधमाचक्षाणैर्भवद्भिरेवोपगतम्।

सुखदुःखसमुत्पत्तिरभावे शत्रुमित्रयोः।
कण्टकाभावमालक्ष्य पदं पथि निधीयते॥
प्रागुत्पत्तेर्घटाभावं बुद्ध्वा तत्कारणादरः।
व्याध्यभावपरिच्छेदाद्भैषज्यविनिवर्त्तनम्॥
इहाभावप्रतिष्ठानव्यवहारपरम्पराम्।
पश्यन्नभावं को नाम निन्हुवीत सचेतनः॥

ननु नाजनकमालम्बनं भवति ज्ञानस्याभावस्तु सकलोपाख्याविनिर्मुक्तस्वरूप इति न ज्ञानजननपटुः अतः कथं तदालम्बनम्, उच्यते, सौगतानां तावन्न किं चिज्जनकं वस्तु प्रतिभासते द्वित्रिक्षणावस्थितिप्रसङ्गेन क्षणभङ्गव्रतविलोपप्रसङ्गात्, उत्पद्यते चार्थज्ञानं च जनयति जातेन तेन गृह्यते चेत्यासां क्रियाणामेककालत्वाभावात, तस्मादकारक एव भावः प्रतिभासते आकारार्पणपक्षं च प्रतिक्षेप्स्यामः, एवं भाववदभावो ऽप्यजनकः प्रतिभासताम्, अस्माभिस्तु भाववदभावो ऽपि ज्ञानजननसमर्थ इष्यते न हि निःशेषसामर्थ्यरहितत्वमभावलक्ष-

णम्, अपितु नास्तीति ज्ञानगम्यत्वं सत्प्रत्ययगम्यो हि भाव इष्यते असत्प्रत्ययगम्यस्त्वभाव इति, तदिदमुक्तं 'सदसती तत्त्वम्' इति(१)।

ननु भाववदेष ज्ञानजनकः सन्नभावो न भावाद्विशिष्यते अहो निपुणदर्शी देवानाम्प्रियः प्रतीतिभेदश्चास्ति तत्र प्रतीयमानौ भावाभावौ न भिद्येते इति कथमेवं भवेद्, अपि रे मूढ ज्ञानजनकत्वाविशेषे ऽपि रूपरसौ कथं भिद्येते प्रतीतिभेदादिति चेद् भावाभावावपि जनकत्वधर्मसामान्ये ऽपि प्रतीतिभेदादेव भिद्येयाताम्, न हि प्रतिभास्यभेदमन्तरेण प्रतिभासभेदो भवतीति भवता ऽप्यभ्युपगतम्।

प्रामाण्यं वस्तुविषयं द्वयोरर्थभिदां जगौ।
प्रतिभासस्य चित्रत्वादेकस्मिंस्तदयोगत इति॥

तस्मादस्तीति प्रतीतेरेव भावः नास्तीति प्रतीतेरभावो भूमिरित्यभ्युपगम्यताम्, अथ वा विज्ञानवाद एव सुस्पष्टमास्थीयतामन्तरावस्थानं तु न साम्प्रतम्, अर्थक्रियासामर्थ्यमपि तस्य दर्शितमेव।

स्वज्ञानाख्यक्रियाशक्तिरमुष्य दुरपह्नवा।
अर्थक्रिया ऽन्यजन्या तु न भावेनापि जन्यते॥
एवं च सति यः पूर्वं शक्तिवादो ऽत्र वर्णितः।
स प्रत्यक्षविरुद्धत्वात्कण्ठशोषाय केवलम्॥

तथा सम्बन्धाभावादिति यदुक्तं तत्र देशेन सह तावदभावस्य विशेषणविशेष्यभावः सम्बन्धः स तु सम्बन्धान्तरमूल इति भावे ऽयं नियमो नाभावे, न च भावे ऽप्येष नियमो न ह्येवं भवति यत्सम्बद्धं तद्विशेषणमेव पादपीडिते शिरसि वा धार्यमाणे दण्डे दण्डीति प्रत्ययानुत्पादात्, नाप्येवं यद्विशेषणं तत्सम्बद्धमेवेति समवायस्य सत्यपि विशेषणत्वे सम्बन्धान्तराभावात्, तस्मात्सम्बन्धान्तररहितोऽपि प्रतिबन्ध इव वाच्यवाचकभाव इव विशेषणविशेष्यभावः स्वतन्त्र एव सम्बन्धस्तथाप्रतीतेरवधार्यते, उभयोरुभयात्मकत्वात्कदाचित्कस्यचित्तथा प्रतिभासात्पुरुषेच्छानुवर्त्तनेन व्यत्ययप्रत्ययत्वेऽपि न दोषः, तस्माद्विशेषणविशेष्यभाव एव सम्बन्धो देशे भूतलादिना सहाभावस्य सम्बन्धः, एवं कालेनापि सह स एव वेदितव्यः, क्रियया कर्तृस्थया वा गमनादिकया कर्मस्थया वा भेदनादिकया सह संयोगाद्यभावे ऽपि विशेषणविशेष्यभाव एव सम्बन्धः तद्वदभावस्यापि भविष्यतीति, प्रतियोगिना तु सह विरोधो ऽस्य सम्बन्धः अयमेव च विरोधार्थः यदेकत्रोभयोरसमावेशः, अतश्चैकविनाशे न सर्वविनाशो घटाभावस्य घटैकप्रतियोगित्वात्।

(१) न्यायभाष्ये अ० १ आ० १ सू० १।

यत्तु भवनधर्मो अभवनधर्मो वेति विकल्पितं तत्राभवनधर्मैवाभावो ऽभ्यु-पगम्यते भवनधर्मत्वे ऽपि चाभावो न भावान्न भिद्यते प्रतिभासभेदस्य रूपरसा-दिषूपदर्शितत्वात्, भवनधर्मत्वं चास्य हेत्वन्वयव्यतिरेकित्वाद्भवति घटो हि मृत्पिण्डदण्डादीनिव जन्मनि विनाशे ऽपि मुद्गरादीननुवर्त्तते हेतून्, विजातीय-सन्ततिजननपक्षे ऽपि सदृशसन्तानजनिकायाः शक्तेरभावः क्रियते एवान्यथा मुद्गराद्युपनिपाते ऽपि विजातीयेव सजातीयसन्ततिरभिजायेत, सजातीयवि-जातीयोभयसन्ततिजननशक्तियुक्तो घट इति चेद् मुद्गरादियोगात्पूर्वमपि कपा-लसन्ततिजननं तद्योगे ऽपि वा सति घटसन्ततिजननमनियमेन दृश्येतेति, विजा तीयक्षणोत्पादनस्वभावे च घटे मुद्गरादेवैयर्थ्यमेव स्यात् ।

तदुत्पादस्वभावे हि न किञ्चिन्मुद्गरादिना ।
अतदुत्पादकत्वे ऽपि न किञ्चिन्मुद्गरादिना ॥
मुद्गरोपनिपाताच्च यद्युत्पन्नं क्षणान्तरम् ।
घटक्षणस्य कं वृत्तं येन नाभाति पूर्ववत् ॥
नन्वस्याभवनं वृत्तं स एवार्थो ऽयमुच्यते ।
घञा किमपराद्धं वा किं वाप्युपकृतं ल्युटा ॥

ननूक्तं न तस्य किं चिद्भवति न भवत्येव केवलमिति तदयुक्तम् यदसौ न भवति स एवास्याभावः ।

ननु स न न तु तस्याभावः, मैवम्–स नेतिशब्दयोर्ज्ञानयोश्च विषयभेदात्, स इति ज्ञानस्य स्मर्यमाणो घटादिर्विषयः नेति तु ज्ञानस्याभावो भूमिरित्यलम-लीकविदग्धविरचितविफलवक्रवचनविमर्दनं ।

तस्मादित्थमभावस्य प्रमेयत्वोपपादनात् ।
न ह्यसद्व्यवहाराय कल्पन्ते ऽनुपलब्धयः ॥
न स्वभावानुमाने च तदन्तर्भावसम्भवः ।
मेयं पृथगभावाख्यममूषामुपपादितम् ॥
कारणानुपलब्ध्यादेर्बाढमस्त्वनुमानता ।
स्वभावानुपलब्धिस्तु प्रत्यक्षमिति साधितम् ॥

या चेयमेकादशानुपलब्धिवधूशुद्धान्तमध्ये विरुद्धव्याप्तोपलब्धिरुदाऽहृता नाध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरानपेक्षणादिति, सेयमिदानी मेव साध्वी दूषिता विस्तरतस्तु क्षणभङ्गभङ्गे दूषयिष्यते ।

### अभावानभ्युपगन्तृप्राभाकरमतनिराकरणम्—

यैस्तु मीमांसकैस्सद्भिरभावो नाभ्युपेयते ।
प्रमादेनामुना तेषां वयमप्यद्य लज्जिताः ॥

घटो हि न प्रतीयते न तु तदभावः प्रतीयते इत्येवं वदद्भिरेभिर्दर्शनादर्शने एव पदार्थानां सदसत्त्वे इति कथितं स्यात्, एतच्चायुक्तम्, दर्शनादर्शनाभ्यां हि सदसत्त्वे निश्चीयेते न तु दर्शनादर्शने एवसदसत्त्वे—

न चाप्रतीतिमात्रेण तदभावनिबन्धनाः ।
व्यवहाराः प्रकल्पन्ते मृदन्तरिततोयवत् ॥
खपुष्पस्य पिशाचस्य मृदन्तरितवारिणः
न खल्वनुपलभ्यत्वे विशेषः प्रतिभाति नः ॥
सर्वदा ऽनुपलम्भो हि कुर्वन्नास्तित्वनिश्चयम् ।
विशेष्यते मृदन्तःस्थसलिलानुपलब्धितः ॥
आगमाद्युक्तितश्चापि सत्त्वसम्भावनां गतः ।
सर्वदा ऽनुपलब्धो ऽपि न पिशाचः खपुष्पवत् ॥

अतश्च यदुच्यते अनुपलब्धेः पुनरनुपलब्धिरेवानुपलब्धिरिति तद्भणितिमात्रम्, खपुष्पादेस्तु सविशेषणया ऽनुपलब्ध्या ऽभाव एव निश्चीयते न तस्यानुपलब्धिमात्रम् ।

अनिष्यमाणे चाभावे भावानां प्रतियोगिनि ।
नित्यतैषां प्रसज्येत न ह्येते क्षणिकास्तव ॥
मुद्गरादेश्च किं कार्यं कपालपलपटलीति चेत् ।
घटस्तर्ह्यविनष्टत्वात्स्वकार्यं न करोति किम् ॥

अदर्शनादिति चेत्—

तदानीमेव दृष्टस्य स्थिरस्यामुष्य किं कृतम् ।
सर्वेन्द्रियादिसामग्रीसन्निधाने ऽप्यदर्शनम् ॥

तस्मात्तदभावकृतमेव तदानीं तस्यादर्शनम् ।

स्वप्रकाशा च नास्तीति संवित्तिर्भवतां मते ।
न निरालम्बना चेयमस्तीतिप्रतिपत्तिवत् ॥
विकल्पविषयाः शब्दा यथा शौद्धोदनेर्गृहे (१) ।
गीयन्ते भवता नैवमिति नव्वाच्यमुच्यताम् ॥
प्रसिद्धिश्च परित्यक्ता न चाभावः पराकृतः ।
उपेक्षितश्च भाष्यार्थ इत्यहो नयनैपुणम् ॥
अलं च बहुनोक्तेन विमर्दो ऽत्र न शोभते ।
महात्मनां प्रमादो ऽपि मर्षणीयो हि मादृशैः ॥

तस्मान्नास्तीति प्रत्ययगम्यो ऽभाव इति सिद्धम् ।

---

(१) शौद्धौदनेः—बौद्धस्य ।

## अभावभेदनिरूपणम् —

स च द्विविधः प्रागभावः प्रध्वंसाभावश्चेति, चतुर्विध इत्यन्ये इतरेतराभावः अत्यन्ताभावश्च तौ च द्वाविति, षट्प्रकार इत्यन्ये अपेक्षाभावः सामर्थ्याभावस्ते च चत्वार इति। तत्र च—

प्रागात्मलाभान्नास्तित्वं प्रागभावोऽभिधीयते।
उत्पन्नस्यात्महानं तु प्रध्वंस इति कथ्यते॥
न प्रागभावादन्ये तु भिद्यन्ते परमार्थतः।
स हि वस्त्वन्तरोपाधिरन्योन्याभाव उच्यते॥
स एवावधिशून्यत्वादत्यन्ताभावतां गतः।
अपेक्षाभावता तस्य देशोपाधिनिबन्धना॥
सामर्थ्यं पूर्वसिद्धं चेत्प्रध्वंसे तदभावधीः।
नो चेत्तर्हि विशेषोऽस्य दुर्लभः प्रागभावतः॥
उत्पन्नस्य विनाशो वा तदनुत्पाद एव वा।
अभावस्तत्त्वतोऽन्ये तु भेदास्त्वौपाधिका मताः॥
तस्मादभावाख्यमिदं प्रमेयं तस्येन्द्रियेण ग्रहणं च सिद्धम्।
अतः प्रमाणेषु जगाद युक्तं चतुष्टमेतन्मुनिरक्षपादः॥

## सम्भवैतिह्ययोर्मानान्तरत्वनिरासः—

ननु नाद्यापि चतुष्टमेवमवतिष्ठते सम्भवैतिह्ये इति द्वयोः प्रमाणान्तरभावात्, सम्भवो नाम समुदायेन समुदायिनोऽवगमः सम्भवति खार्यां द्रोणः सम्भवति सहस्रे शतमिति, अनिर्दिष्टप्रवक्तृकं प्रवादपरम्परा चैतिह्यम्, इह वटे यक्षः प्रतिवसतीति, न चायमागमः, आप्तस्योपदेष्टुरनिश्चयादिति तदनुपपन्नम्।

भिन्नः सम्भव एष न ह्यनुमितेराख्यायि खार्यामतो
द्रोणः सम्भवतीति सेयमविनाभावान्मतिर्लैङ्गिकी।
ऐतिह्यं तु न सत्यमत्र हि वटे यक्षोऽस्ति वा नेति वा
को जानाति कदा च केन कलितं यक्षस्य कीदृग्वपुः॥

सत्यमपि चागमात्पृथग्नैतिह्यमुपदेशरूपत्वात्, आप्तग्रहणं सूत्रे न लक्षणायेति वक्ष्यामः, चार्वाकधूर्तस्तु अथातस्तत्त्वं व्याख्यास्याम इति प्रतिज्ञाय प्रमाणप्रमेयसंख्यालक्षणनियमाशक्यकरणीयत्वमेव तत्त्वं व्याख्यातवान्, प्रमाणसंख्यानियमाशक्यकरणीयत्वसिद्धये च प्रमितिभेदान् प्रत्यक्षादिप्रमाणानुपजन्यानीदृशानुपादर्शयत्।

वक्राङ्गुलिः प्रविरलाङ्गुलिरेष पाणि-
रित्यस्ति धीस्तमसि मीलितचक्षुषो वा ।
नेयं त्वगिन्द्रियकृता न हि तत्करस्थं
तत्रैव हि प्रमितिमिन्द्रियमाधाति ॥
दूरात्करोति निशि दीपशिखा च दृष्टा
पर्यन्तदेशविसृतासु मतिं प्रभासु ।
धत्ते धियं पवनकम्पितपुण्डरीक-
षण्डोनुवातभुवि दूरगतेऽपि गन्धे ॥
स एवम्प्रायसंवित्तिसमुत्प्रेक्षणपण्डितः ।
रूपं तपस्वी जानाति न प्रत्यक्षानुमानयोः ॥
प्रत्यक्षाद्विरलकराङ्गुलिप्रतीति-
र्व्यापित्वादकुशलमिन्द्रियं न तस्याम् ।
आनाभेस्तुहिनजलं जनैः पिबद्भि-
स्तत्स्पर्शः शिशिरतरोऽनुभूयतेऽन्तः ॥
संयोगबुद्धिश्च यथा तदुत्था
तथैव तज्जा तदभावबुद्धिः ।
क्रियाविशेषग्रहणाच्च तस्मा-
दाकुञ्चितत्वावगमोऽङ्गुलीनाम् ॥
पद्मामोदविदूरदीपकविभाबुद्धिः पुनर्लैङ्गिकी
व्याप्तिज्ञानकृतेति का खलु मतिर्मानान्तरापेक्षिणी ।
संख्याया नियमः प्रमाणविषये नास्तीत्यतो नास्तिकै-
स्तत्सामर्थ्यविवेकशून्यमतिभिर्मिथ्यैव विस्फूर्जितम् ॥
इयत्त्वमविलक्षणं नियतमस्ति मानेषु नः
प्रमेयमपि लक्षणादिनियमान्वितं वक्ष्यते ।
अशक्यकरणीयतां कथयतां तु तत्त्वं सतां
समक्षममुनाऽऽत्मनो जडमतित्वमुक्तं भवेत् ॥

इति श्रीजयन्तभट्टकृतायां न्यायमञ्जर्यां प्रथममाह्निकम् ।

प्रत्यक्षलक्षणम्—

एवं प्रमाणानां सामान्यलक्षणे विभागे च निर्णीते सति अधुना विशेषलक्षणवर्णनावसर इति सकलप्रमाणमूलभूतत्वेन पूर्वपठितत्वेन च ज्येष्ठत्वात्प्रथमं प्रत्यक्षस्य लक्षणं प्रतिपादयितुमाह—

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥**

प्रत्यक्षमिति लक्ष्यनिर्देशः इतरल्लक्षणम् , समानासमानजातीयव्यवच्छेदो लक्षणार्थः, समानजातीयं प्रमाणतया अनुमानादि विजातीयं प्रमेयादि ततो व्यवच्छिन्नं प्रत्यक्षस्य लक्षणमनेन सूत्रेणोपपाद्यते ।

अत्र चोदयन्ति–इन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणैः स्वरूपं वा विशिष्यते सामग्री वा फलं वा, तत्र स्वरूपविशेषणपक्षे यदेवंस्वरूपं ज्ञानं तत्प्रत्यक्षमिति तत्स्वरूपस्य विशेषितत्वात्फलविशेषणानुपादानाच्च लक्षणमव्याप्त्यतिव्याप्तिभ्यामुपहतं स्यात् , अव्याप्तिस्तावद् अतथाविधस्वरूपस्य बोधस्येन्द्रियादेश्च निर्मलफलजनकतया लब्धप्रमाणभावस्यापि प्रामाण्यं नोक्तं भवेत् , अतिव्याप्तिश्च तथाविधस्वरूपस्यापि ज्ञानस्याकारकस्य वा संस्कारकारिणो वा स्मृतिं जनयतो वा संशयमादधानस्य वा विपर्ययमुत्पादयतो वा प्रमाणत्वं प्राप्नोति फलस्याविशेषितत्वात् , तद्विशेषणाभिधाने पुनरश्रुतसूत्रान्तराध्याहारप्रसक्तिः अव्याप्तिश्च तदवस्थेति न स्वरूपविशेषणपक्षः, नापि सामग्रीविशेषणपक्षः, तत्र हीन्द्रियार्थसन्निकर्षोत्पन्नमिति इन्द्रियार्थसन्निकर्षोपपन्नं सामग्र्यमिति व्याख्यातव्यम् , अव्यपदेश्यमव्यभिचारि व्यवसायात्मकं ज्ञानमिति च तज्जनकत्वादुपचारेण तथा साकल्यं वर्णनीयमिति क्लिष्टकल्पना, फलविशेषणपक्षो ऽपि न सङ्गच्छते, ज्ञानप्रत्यक्षयोः फलकरणवाचिनोः सामानाधिकरण्यप्रसङ्गात् , प्रमाणलक्षणप्रस्तावात्प्रत्यक्षं प्रमाणमुच्यते तच्च करणमिति वर्णितम् , ज्ञानं तु तदुपजनितं फलमिति कथमैकाधिकरण्यं तस्मात्पक्षत्रयस्याप्ययुक्तियुक्तत्वात्पक्षान्तरस्याप्यसम्भवादयुक्तं सूत्रमिति ।

अत्रोच्यते, स्वरूपसामग्रीविशेषणपक्षौ तावद्यथोक्तदोषोपहतत्वान्नाभ्युपगम्येते, फलविशेषणपक्षमेव संमन्यामहे, तत्र च यद्वैधिकरण्यं चोदितं तद्यतःशब्दाध्याहारेण परिहरिष्यामः, यत एवं यद्विशेषणविशिष्टं ज्ञानाख्यं फलं भवति तत्प्रत्यक्षमिति सूत्रार्थः, इत्थं च न कचिदव्याप्तिरतिव्याप्तिर्वा न काचित् क्लिष्टकल्पना यतःशब्दाध्याहारमात्रेण निरवद्यलक्षणोपवर्णनसमर्थसूत्रपदसङ्गतिसम्भवात् ।

ननु समानाधिकरणे एव ज्ञानप्रत्यक्षपदे कथं न व्याख्यायेते किं यतःशब्दाध्याहारेण, उक्तमत्र करणस्य प्रमाणत्वाज्ज्ञानस्य च तत्फलत्वात् फलकरणयोश्च स्वरूपभेदस्य सिद्धत्वात् , तदत्र–

प्रमाणतायां सामग्र्यास्तज्ज्ञानं फलमिष्यते ।
तस्य प्रमाणभावे तु फलहानादिबुद्धयः ॥

ननु स्मृत्याद्यनेकबुद्धिव्यवधानसम्भवात्कथमिन्द्रियार्थसन्निकर्षोत्पन्नमालोचनाज्ञानं हानादिफलं भवेत् , तथा हि कपित्थादिजातीयमर्थमिन्द्रियादिसन्निकर्षादिसामग्रीत उपलभ्य तद्गतं सुखसाधनत्वमनुस्मरति एवञ्जातीयकेन मम पूर्वं सुखमुपजनितमभूदिति, ततः स्मृत्यनन्तरं परामर्शज्ञानमस्योपजायते अयं च कपित्थजातीय इति, परामर्शानन्तरं सुखसाधनत्वनिश्चयो भवति तस्मादेष सुखसाधनमिति, तत उपादेयज्ञानमुत्पद्यते, यत एष सुखसाधनं कपित्थादिजातीयः पदार्थस्तस्मादुपादेय इति, अत्रान्तरे प्रथमस्येन्द्रियार्थसन्निकर्षजन्मनः कपित्थालोचनज्ञानस्य नामापि नावशिष्यते इति कथमस्य तत्फलत्वमिति ।

## तात्पर्यटीकाकर्तृमतनिरूपणम्—

अत्राचार्यास्तावदाचक्षते(१) साधु चोदितं सत्यमीदृश एवायं ज्ञानानां क्रमः, न वयं प्रथमालोचनज्ञानस्य उपादानादिषु प्रमाणतां ब्रूमः, तथा हि प्रथममिन्द्रियार्थसन्निकर्षोत्पन्नमालोचनज्ञानमिन्द्रियार्थसन्निकर्षादिसामग्रीस्वभावस्य प्रत्यक्षस्य प्रमाणस्य फलमेव न तु स्वयं प्रमाणतां प्रतिलभते स्मृतिजनकत्वात् , तदनन्तरं हि सुखसाधनत्वस्मृतिर्भवतीति सेयमनुस्मृतिरप्रमाणफलमपि सती प्रत्यक्षप्रमाणं सम्पद्यते, तथायं कपित्थादिजातीय इतीन्द्रियविशेषपरामर्शोत्पत्तौ इन्द्रियार्थसन्निकर्षेण सह व्याप्रियमाणत्वात् , स पुनः परामर्शप्रत्ययः प्रत्यक्षजनितो धूमज्ञानवदनुमानं प्रमाणमुच्यते, परोक्षस्याग्नेरिव सुखसाधने सामर्थ्य-

---

(१) अत्राचार्या इति । तथा च तात्पर्यटीका—यदा ज्ञानमालोचनं वा विकल्पो वा व्यापार इन्द्रियादीनां तदा हानोपादानोपेक्षाबुद्धयः फलम् तत्रोपादेयमिदं सलिलमितिबुद्धिरनागतोपादानविशिष्टम् सलिलमालम्बमाना साक्षात्कारवती सलिलमात्रसाक्षात्कारस्तु स्यात् न च तन्मात्रस्य फलमपि तूपादेयता सा च परोक्षा अनागतत्वात् तस्मादुपादीयतेऽनेनेत्युपादानम् उपादानम् चासौ बुद्धिश्चेत्युपादानबुद्धिः तत्र तोयालोचनमथतोयविकल्पोऽथ च तज्जातीये दृष्टचरपिपासोपशमनहेतुभावस्य स्मृतिबीजसंस्कारोद्बोधःअथ तस्य स्मरणम् अथ लिङ्गपरामर्शः तज्जातीयं चेदं तदिदं लिङ्गपरामर्शविज्ञानं साक्षात्कारवत् लिङ्गे विनश्यदवस्थव्याप्तिस्मरणसहकारि दृश्यमानस्य सलिलस्य पिपासोपशमहेतुतया अनुमानमुखेनोपादानबुद्धिरुच्यते इति ।

स्य ततः अवगतेः, यद्यपि न काचिदतीन्द्रियाशक्तिरस्मन्मते(१) विद्यते तथापि स्वरूपसहकार्यादिदृष्टादृष्टकारणसमूहसन्निधानस्वभावमपि सामर्थ्यमतीन्द्रियमेव, तस्मादेष कपित्थादिजातीयोऽर्थः सुखसाधनमिति वन्हिमत्पर्वतप्रतीतिवत्तज्जातीयलिङ्गकमानुमानिकमिदं ज्ञानं तदिदमनुमानफलमपि सुखसाधनत्वनिश्चयात्मकं ज्ञानमिन्द्रियविषये कपित्थादावुपादेयज्ञानमिन्द्रियार्थसन्निकर्षेण सह जनयत्प्रत्यक्षं प्रमाणं भवति, तदेव च हृदि व्यवस्थाप्य भाष्यकृद्(२)बभाषे, यदा ज्ञानं वृत्तिस्तदा हानोपादानोपेक्षाबुद्धयः प्रमितिरिति।

## प्रत्यक्षलक्षणे परामर्शानङ्गीकारपूर्वपक्षः—

व्याख्यातारस्तु ब्रुवते, नायमीदृशो ज्ञानानां क्रमः आद्यमालोचनाज्ञानं सुखसाधनत्वानुस्मृतिमुपजनयतीति सत्यम्, स्मृत्या च तस्य विनश्यत्ता विनश्यदवस्थं चेन्द्रियविषये कपित्थादौ सुखसाधनत्वनिश्चयमादधाति सुखसाधनत्वज्ञानमेव चोपादेयज्ञानमुच्यते नान्यत्, परामर्शस्तु न कश्चिदन्तराले इति किमसम्वेद्यमानज्ञानकन्थाकल्पनेनेति।

ननु परामर्शज्ञानमनुभूयते एव न तु कल्प्यते धूमज्ञानानन्तरमविनाभावं यत्र धूमस्तत्राग्निरित्यनुस्मृत्य परामृशति तथा चायं धूम इति, असति तु परामर्शे न लिङ्गज्ञानं लिङ्गिनि प्रमाणतां प्रतिपद्येत स्मरणजनकं हि तत्, न च स्मृतिजनकं प्रमाणमिष्यते, स्मरणान्तरं च लिङ्गप्रतीतिर्भवन्ती नोपलभ्यानुवादेन भवेदयमग्निमानिति, अपि च तथा च कृतकः शब्द इति यदुपनयवचनमवयवेषु पठ्यते तस्य किं वाच्यं भविष्यति परामर्शापलापवादिनाम्, स्वप्रतिपत्तिवच्च परप्रतिपत्तिरवयवैर्जन्यते इति वक्ष्यामः, तस्मादप्रत्याख्येयः परामर्श इति।

अत्र वदन्ति—

न तावदन्तरा कश्चित्परामर्शोऽनुभूयते।

---

(१) अस्मन्मत इति। न तावन्मीमांसकदिवदतीन्द्रिया शक्तिरस्माभिरभ्युपेयते किंतु कारणानां स्वरूपं वा सहकारिसाकल्यं वा तत्रस्वरूपं हेतूनां प्रत्यक्षमेव सहकारिणां साकल्यं कार्यसमुत्पादव्यञ्जनीयम् ननु तत्तोयरूपमात्रदर्शनाच्छक्यानुमानं तत्किमपरमवशिष्यते यदनुमानस्य गोचर इति अत्रोच्यते न वयमतीन्द्रियम् सामर्थ्यमातिष्ठामहे नापि सहकारिसाकल्यं किन्तु स्वरूपस्यकार्यसंबन्धिताम् नचेयं स्वरूपमेव इहस्थस्येव नारिकेलाद्वीपादागतस्यापि वह्निदर्शनमात्राद्दाहकत्वावगप्रसङ्गात् तस्मात्कार्योपहितं स्वरूपमनुमेयम् इति तात्पर्यटीका

(२) न्यायभाष्ये अ० १ आ० १सु०३ 'वृत्तिस्तु संनिकर्षः ज्ञानमेव वा यदा सन्निकर्षस्तदा ज्ञानं प्रमितिः यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम्' इति।

अनुमेयमितः पूर्वमूर्ध्वं च निगमे स्मृतेः ॥
अत एवार्थमालोक्य विनैव हि दवीयसा ।
विलम्बेन व्यवस्यन्ति ग्रहणादिषु लौकिकाः ॥

लिङ्गज्ञानं च विनश्यदवस्थमनुमेयप्रतीतौ व्याप्रियमाणं प्रमाणतां प्रतिपत्स्यते, तत्कृतैवोपलभ्यानुवादेन लिङ्गिबुद्धिर्भविष्यति, तस्मात्कपित्थादिपदार्थदर्शनस्य परामर्शसोपानमनारोहत एवोपादेयज्ञानफलता वक्तुं युक्तेति ।

अपि च–अनुमेयविषये वह्न्यादौ सुखसाधनत्वानुस्मृतिकृतमुपादेयताज्ञानं तव न समस्त्येव ततश्च तत्रापि तथा चायं ज्वलनजातीय इति परामर्शो भवता ऽभ्युपेय एव स च किंकरणक इति निरूपणीयम् , न तावदिन्द्रियद्वारकः पावकस्य परोक्षत्वात् , शब्दोपमाने त्वाशङ्कितुमपि तत्र न युक्ते, धूमाख्याल्लिङ्गादेव स उत्पद्यते इति चेन्न, लिङ्गस्य परामर्शाविषयीकृतस्यानुमेयमितिजननैपुणानभ्युपगमात् , धूमावमर्शस्य च तदानीमतिक्रान्तत्वात् ,तथा हि प्रथमं लिङ्गज्ञानं ततो व्याप्तिस्मरणं ततो धूमपरामर्शः ततो वह्निज्ञानं तेनधूमपरामर्शस्यविनश्यत्ता ततो ऽग्नौ सुखसाधनत्वानुस्मरणं तदा च धूमपरामर्शस्य विनाश एवेति तस्मिन्विनष्टे न केवलो धूमस्तदानीमनलपरामर्शं जनयितुमुत्सहते,

अग्नौ सुखसाधनत्वानुस्मरणानन्तरं पुनर्धूमज्ञानमिन्द्रियादुत्पद्यत इति चेन्नैवम्–अननुभवात्, भवतु वा धूमज्ञानं तथा ऽपि धूमज्ञानानन्तरं पुनर्व्याप्तिस्मृतिः पुनर्धूमपरामर्शश्चावश्यं भवेद् इत्यत्रान्तरे हुतभुजि सुखसाधनत्वानुस्मृतिरतिक्रान्तेति तत्सहायपरामर्शज्ञानजन्यसुखसाधनत्वनिश्चयोत्पादो न स्यात् , सुखसाधनत्वानुस्मरणेन हि विनश्यदवस्थेन जन्यमानः प्रत्यक्षविषये ऽसौ दृष्ट इति,

अथ मन्यसे न तदानीं पुनर्धूमज्ञानव्याप्तिस्मरणतत्परामर्शोत्पादादिज्ञानशृङ्खलाऽभ्युपेयते किं तु प्राक्तन एव धूमपरामर्शः कृशानौ सुखसाधनत्वानुस्मरणानन्तरं स्मरिष्यते तेन स्मृतिविषयवर्त्तिना सता तथा चायमग्निजातीय इति ज्वलनपरामर्शो जनयिष्यते इति एतदप्ययुक्तम् , अग्निज्ञानानन्तरं युगपत्स्मरणद्वयोदयप्रसङ्गात्तदैव सुखसाधनतानुस्मृतिः तदैव धूमपरामर्शस्मृतिरिति न हि क्रमोत्पादे किंचित्कारणमस्ति ज्ञानयौगपद्यं च शास्त्रे प्रतिषिद्धम् , भवतु वा क्रमोत्पादः तदापि स्मरणद्वयसमनन्तरमुपजायमानः पावकपरामर्शो नोपलभ्यानुवादेन जायते क्रमपक्षे ऽपि च वन्हिज्ञानानन्तरं तद्गतसुखसाधनत्वानुस्मरणमेव पूर्वं भवेत् ततो धूमपरामर्शस्मरणं तेन तस्य विनश्यत्ता ततो ऽग्नौ तज्जातीयत्वपरामर्शस्तेन सुखसाधनत्वस्मृतेर्विनाश एवेति पुनरपि सा विनष्टा सती सुखसाधनत्वानुस्मृते निश्चयजन्मनि न व्याप्रियेतेति, न च धूमलिङ्गानुमितवह्निज्ञानानन्तरं धूमस्मरणमुचितमनल-

मुपलभ्य हि तद्गतसुखसाधनत्वमनुस्मरति लोको न धूममिति ।

तेनानुमानविषये परामर्शो ऽतिदुर्घटः ।
प्रत्यक्षविषये ऽप्येवं किमनेन शिखण्डिना ॥

यत्पुनरुपनयवचनमभिधेयरहितमप्रयोज्यं प्रसज्यते इति परिचोदितं तदवयवप्रसङ्गएव निरूपयिष्यामः, तस्मादन्तरावर्त्तिनः परामर्शज्ञानस्याभावादाद्यमालोचनाज्ञानमेव हेयादिज्ञानफलं यथोक्तरीत्या भविष्यतीति ।

ननु च प्रत्यक्षफलमिह मीमांस्यं वर्त्तते स चायं सुखसाधनत्वनिश्चयः तज्जातीयत्वाल्लिङ्गादुद्गम्यमान आनुमानिक इति न प्रत्यक्षफलतामवलम्बते सत्यमेतत्–किं तु सम्बन्धग्रहणसमये सुखसाधनत्वनिश्चयः प्रत्यक्षजनितो ऽपि समस्ति यतो ऽनुमानं प्रवर्त्तते महानसादौ धूमाग्निदर्शनवत्, अतः सम्बन्धग्रहणकालभाविनं सुखसाधनत्वनिश्चयं चेतसि विधाय भाष्यकारस्तत्फलं प्रत्यक्षज्ञानस्य वर्णितवानिति ।

## शक्तेः प्रत्यक्षग्राह्यत्वनिरूपणम्—

ननु सम्बन्धग्रहणकालेऽपि सुखसाधनत्वशक्तेरतीन्द्रियत्वात्कथं प्रत्यक्षगम्यता, तज्जातीयत्वाल्लिङ्गादेव तदाऽपि तद्ग्रहणे इष्यमाणे ततः पुनः सम्बन्धग्रहणादनवस्था, सुखादेव कार्यात्तदा तदवगम इति चेत् तदा ऽपि नाज्ञातसम्बन्धमवगतिजननसमर्थमिति तत्सम्बन्धग्रहणवेलायामपि शक्तिग्रहणे प्रत्यक्षस्याक्षमत्वादनुमानान्तरापेक्षायामनवस्था तदवस्था, उच्यते—

न खल्वतीन्द्रिया शक्तिरस्माभिरुपगम्यते ।
यया सह न कार्यस्य सम्बन्धज्ञानसम्भवः ॥

स्वरूपसहकारिसन्निधानमेव शक्तिः सा च सुगमैव ।

ननु सहकारिणां मध्ये ऽदृष्टमप्यनुप्रविष्टं न च तत्प्रत्यक्षगम्यम् अतीन्द्रियत्वाद्धर्मस्येति सापि न सुगमा शक्तिः, नैतत्–न धर्मादिशक्तित्वादतीन्द्रियम् अपि तु तन्नैसर्गिकमेव जगद्वैचित्र्येण च तदनुमानं वक्ष्यामः तदेवं तदितरसहकारिस्वरूपसन्निधानात्मिकायाः शक्तेः प्रत्यक्षग्राह्यत्वसम्भवादुपपन्नं तज्जातीयत्वलिङ्गस्य सम्बन्धग्रहणम् ।

ननु कपित्थादिकार्यस्य सुखस्येदानीं न चक्षुर्ग्राह्यत्वमिति सम्बन्धिग्रहणाभावात्कथं चाक्षुषप्रत्ययगम्यः सम्बन्धः, न चाक्षुषप्रत्यक्षगम्यः सम्बन्धः किं तु मानसप्रत्यक्षगम्यः,

सुखादि मनसा बुद्ध्वा कपित्थादि च चक्षुषा ।
तस्य कारणता तत्र मनसैवावगम्यते ॥

ननु च मनसा कपित्थादेः सुखसाधनत्वग्रहणाभ्युपगमे बाह्यविषयप्रमितिषु

मन एव निरङ्कुशं करणमिदानीं संवृतामिति कृतं चक्षुरादिभिः, अतश्च न कश्चिदन्धो बधिरो वा स्यात् ,

नैष दोषः—प्रथमप्रवृत्तसमनस्कबाह्येन्द्रियजनितविज्ञानविषयीकृतवपुषा बाह्यस्य वस्तुनो मनोग्राह्यत्वाभ्युपगमात्तस्यैव नियामकत्वान्नाश्रृङ्खलमन्तः करणं बाह्यविषये प्रवर्त्तते ।

ननु च सम्बन्धग्रहणकाले यदि मानसेन प्रत्यक्षेण सुखसाधनत्वावधारणं तर्हि तत्काल इव व्यवहारकालेऽपि मानसप्रत्यक्ष एव सुखसाधनत्वनिश्चयो ऽस्तु किं तज्जातीयत्वलिङ्गापेक्षणेनेति नैवम्—शब्दलिङ्गेन्द्रियाद्युपरतौ केवलमन्तःकरणं करणं कल्प्यते परिदृश्यमानायाः प्रतीतेरपह्नोतुमशक्यत्वात , लिङ्गाद्युपायान्तरसम्भवे तु यदि मन एव केवलं कारणमुच्यते तन्मानसमेवैकं प्रमाणं स्यान्न चत्वारि प्रमाणानि भवेयुरित्यलं प्रसङ्गेन ।

तस्मात्सम्बन्धग्रहणकाले यत्तत्कपित्थादिविषयमक्षजं ज्ञानं तदुपादेयादिज्ञानफलमिति भाष्यकृतश्चेतसि स्थितम् । सुखसाधनत्वज्ञानमेवोपादेयादिज्ञानमित्युक्तम् ।

## ज्ञानस्य स्वस्मिन् करणत्वनिरासः—

आह—किमर्थमयमीदृशः क्लेश आश्रीयते प्रमाणादभिन्नमेव फलमस्तु तदेव चक्षुरादिजनितं कपित्थादिपदार्थदर्शनं विषयप्रकाशेन व्याप्रियमाणमिवाभातीति करणमुच्यताम् , तदेव विषयानुभवस्वभावत्वात्फलमिति कथ्यताम् । इत्थं च प्रमाणफले न भिन्नाधिकरणे भविष्यतः, अन्यत्र प्रमाणमन्यत्र फलमिति, तदुक्तम् 'सव्यापारप्रतीतित्वात्प्रमाणं फलमेव सत्' इति ।

तदिदमनुपपन्नम्—प्रमाणस्य स्वरूपहानिप्रसङ्गात् , करणं हि प्रमाणमुच्यते प्रमीयते चानेनेति, न च क्रियैव क चित्करणं भवति क्रियायां साध्यायां कारकं किमपि करणमुच्यते, तत्र यथा दात्रेण चैत्रः शालिस्तम्भं लुनातीति कर्तृकर्मकरणानि क्रियातो भिन्नान्युपलभ्यन्ते तथेहापि चक्षुषा घटं पश्यतीति दर्शनक्रियातः पृथग्भाव एव तेषां युक्तो न दर्शनं करणमेवेति, प्रमा प्रमाणमिति तु फले प्रमाणशब्दस्य साधुत्वाख्यानमात्रं कृतिः करणमितिवत् ।

यत्तु न भिन्नाधिकरणे प्रमाणफले इत्थं भविष्यत इति सेयमपूर्ववाचोयुक्तिः किमत्राधिकरणं विवक्षितं यदि तावद्विषयः तदस्त्येवैकविषयत्वम् , यद्विषयं हि दर्शनं स एव चक्षुरादेः करणस्य विषयः, आश्रयो ऽस्त्वधिकरणमिति बौद्धगृहे तावदवाचको ग्रन्थः, क्षणिकत्वेन सर्वकार्याणां निराधारत्वात् , अस्म

(१) एकात्माश्रयत्वमिति युक्तः पाठः ।

त्पत्तौ तु भिन्नाश्रययोरपि फलकरणभावः पाककाष्ठयोर्दृष्टः तथा चक्षुर्ज्ञानयोरपि भविष्यतीति, क चित्तु भिन्नयोरपि ज्ञानयोः फलकरणत्वेन स्थितयोर्लिङ्गलिङ्गिज्ञानयोरिव विशेषणविशेष्यज्ञानयोरिव चैकात्म्याश्रयत्वमस्ति(१), न त्वनेन समानाश्रयत्वेन प्रयोजनं चक्षुरादावनिर्वहणात्, अर्थैकफलनिष्पत्तौ व्यापारः समानाश्रयत्वमुच्यते तदपि भवतु कारकान्तराणां न तु फलस्वभावस्य ज्ञानस्य फलनिष्पत्तौ सव्यापारत्वमुपपद्यते अपि तु पृथग्भूतफलनिर्वृत्तावेवेति।

ननु वस्तुस्थित्या फलमेव ज्ञानमुच्यते न तु विषयानुभवः विषयानुभवे स व्यापारो भवति, अथ मनुषे—विषयाधिगमाभिमानस्तस्मिन्सति भवतीति, को ऽयमभिमानो नाम, विषयानुभवाद्भिन्नः अभिन्नो वा, अभेदे सति तस्मिन्सति भवतीत्यसङ्गता वाचायुक्तिः, भेदे त्वस्मन्मतानुप्रवेशः, अपि च ज्ञानं विषयाधिगमे व्यापृतमिति कृत्वा विषयाधिगमाभिमानमुपजनयत्युत विषयाधिगमस्वभावत्वादेवेति विचारे विषयाधिगमात्पृथग्भूतस्य तत्र व्याप्रियमाणस्यानुपलम्भाद्विषयाधिगमस्वभावमेव ज्ञानमवधार्यते तत्कृतश्चाभिमान इति फलमेव ज्ञानमवकल्पते न करणमिति, तथा च लोकः फलत्वमेव ज्ञानस्यानुमन्यते न करणत्वम्, तथा ह्येवं वदति चक्षुषा पश्यामि लिङ्गेन जानामीति न तु ज्ञानेन जानामीत्येवं व्यपदिशन्कश्चिद् दृश्यते,

ननु च सत्स्वपि चक्षुरादिषु विषयज्ञानमनुपजनयत्सु न करणतां व्यपदिशति लोको जनयत्सु च व्यपदिशतीति लोके करणोत्पादकत्वादेव तेषां करणत्वव्यपदेशो न साक्षात्करणत्वादिति।

तदयुक्तम्–चक्षुराद्येव करणं न तु तेनान्यत्करणमुपजन्यते किं हि तदन्यत्करणम्, ज्ञानमिति चेत् कस्यां क्रियायां तत्करणमिति परीक्ष्यतामेतत्, न ह्यात्मन्येव किं चित्करणं करणं भवतीति, यत् तु ज्ञानमजनयति चक्षुरादौ न करणतामाचष्टे लोकस्तद्युक्तमेव, न हि क्रियोत्पत्तावव्याप्रियमाणं करणं कारकं भवति तेन चक्षुरादेर्ज्ञानक्रियामुपजनयतः करणत्वं ज्ञानस्य फलत्वमेवेति युक्तस्तथा व्यपदेशः।

प्रमाणस्य प्रमाणत्वं तस्मादभ्युपगच्छताम्।
भिन्नं फलमुपेतव्यमेकत्वे तदसम्भवात्॥

यस्तु (२)मूढतरः प्रमाणप्रमेयफलव्यवहारमेकत्रैव ज्ञानात्मनि निर्वाहयितुमुद्यच्छति–

यदाभासं प्रमेयं तत्प्रमाणफलते पुनः।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक्कृतम्॥ इति।

---

(२) यः—बौद्धः विज्ञानवादीति यावत्।

तमपवर्गाह्निके ज्ञानाद्वैतदलनप्रसङ्गेन दुराचारं निर्भर्त्सयिष्यामह इत्यलं विस्तरेण।

तस्मात्सुष्ठूक्तं यदा ज्ञानं प्रमाणं तदा हानादिबुद्धयः फलमिति, तदेवं फलविशेषणपक्षे यतःशब्दाध्याहारेण वाचकं सूत्रं यत इन्द्रियार्थसन्निकर्षोत्पन्न-त्वादिविशेषणविशेषितं ज्ञानाख्यं फलं भवति तत्प्रत्यक्षमिति, तत्रेन्द्रियार्थसन्नि-कर्षोत्पन्नपदमर्थानपेक्षजन्मनः स्मृत्यादिज्ञानस्यार्थजनितस्यापि च परोक्षविषय-स्यानुमानादिज्ञानस्य व्यवच्छेदार्थम्, अतः तज्जनकस्य न प्रत्यक्षता प्रसज्यते।

## प्रत्यक्षलक्षणस्यानुमानातिव्याप्तिनिरासः—

नन्विन्द्रियार्थसन्निकर्षोत्पन्नमिन्द्रियगत्यनुमानमप्यस्ति तद्धीन्द्रियार्थसन्नि-कर्षेण लिङ्गभूतेन जन्यते देशान्तरप्राप्त्येव तपनगमनानुमानम् इति कथमनेन पदेनानुमानमपाक्रियते,

नैतदेवम्—इन्द्रियेण स्वविषयसन्निकृष्टेन सता तत्रैव यद्विज्ञानमुत्पद्यते त-दिन्द्रियार्थसन्निकर्षोत्पन्नमिह ब्रूमहे न चेदृशमिन्द्रियगत्यनुमानम्, कुतो विशेष-प्रतिलम्भ इति चेद् उत्पन्नग्रहणादिति ब्रूमः, उत्पन्नग्रहणेन हि सन्निकर्षस्य कार-कत्वं ख्याप्यते तच्चापीन्द्रियविषये ऽर्थे ज्ञानमुत्पादयतो निर्वहति इन्द्रियगत्यनु-माने तु न सन्निकर्षं कारकमाहुरपि तु ज्ञापकम्, अत एव स्वग्रहणसापेक्षः त-दनुमाने ऽसौ व्याप्रियते न रूपादिप्रमिताविवेतरनिरपेक्ष इति।

## प्रत्यक्षलक्षणघटकपदार्थनिर्वचनम्—

इन्द्रियाणि घ्राणरसननयनस्पर्शनश्रोत्राणि पृथिव्यादिभूतपञ्चकप्रकृतीनि वक्ष्यन्ते।

अर्थास्तु गन्धरूपरसस्पर्शशब्दगन्धत्वादिस्वजात्यवच्छिन्नास्तदधिकरणानि पृथिव्यप्तेजांसि द्रव्याणि तदधिष्ठानाः संख्यादयो गुणाः उत्क्षेपणादीनि कर्माणि तद्वृत्तीनि सामान्यानि येषां स्पर्शनेन चक्षुषा ग्रहणं कणव्रतमते निरूपितं ते ऽर्थाः, प्रागुक्तश्चाभावो ऽप्यर्थ एव विचार्य गम्यमानत्वात्।

## इन्द्रियार्थसंनिकर्षनिरूपणम्—

सन्निकर्षस्त्विन्द्रियाणामर्थैः सह षट्प्रकारः, तत्र द्रव्यं चक्षुषा त्वगिन्द्रियेण वा संयोगाद् गृह्यते, तद्गतो रूपादिर्गुणः संयुक्तसमवायात्, रूपत्वादिसामान्या-नि संयुक्तसमवेतसमवायाद् गृह्यन्ते, चक्षुषा संयुक्तं द्रव्यं तत्र समवेतं रूपं रूपे च समवेतं रूपत्वमिति, समवायाच्छब्दो गृह्यते, श्रोत्रमाकाशद्रव्यं तत्र समवेतः शब्दः, शब्दत्वं समवेतसमवायाद् गृह्यते श्रोत्राकाशसमवेते शब्दे तद्धि समवे-

तमिति, संयुक्तविशेषणभावादभावग्रहणं व्याख्यातम् इह घटो नास्तीति, चक्षुषा संयुक्तो भूप्रदेशस्तद्विशेषणीभूतश्चाभाव इति ।

## सन्निकर्षावश्यकत्वम्—

ननु सन्निकर्षावगमे किं प्रमाणम् , व्यवहितानुपलब्धिरिति ब्रूमः, यदि ह्यसन्निकृष्टमपि चक्षुरादीन्द्रियमर्थं गृह्णीयाद् व्यवहितो ऽपि ततो ऽर्थ उपलभ्येत न चोपलभ्यते तस्मादस्ति सन्निकर्षः,

नन्वव्यवधानमेवास्तु किं सन्निकर्षेण, नैवम्—इन्द्रियाणां कारकत्वेन प्राप्यकारित्वात् , संसृष्टं च कारकं फलाय कल्पते इति कल्पनीयः संसर्गः, एतच्चेन्द्रियपरीक्षाप्रसङ्गे निपुणं निर्णेष्यते इति नेह विविच्यते, रसनस्पर्शनयोश्च स्पष्टं प्राप्यकारित्वमुपलभ्यते इति तत्सामान्यादिन्द्रियान्तरेष्वपि कल्पनीयमिति ।

नन्वेवं सत्यर्थाक्षिप्तः कारकत्वादेव सन्निकर्ष इति स्वकण्ठेन कस्मादुच्यते, षड्विधत्वज्ञापनार्थमित्युक्तम् , उत्पन्नग्रहणेन इन्द्रियार्थयोर्ज्ञानजनकत्वम् अर्थस्तु कर्मत्वेन,

नन्वर्थस्य ज्ञानजनकत्वं कुतो ऽवगम्यते तद्विषयज्ञानोत्पादादेवमाकारस्य निराकृतत्वात्प्रकारान्तरेण प्रतिकर्मव्यवस्थाया असिद्धेः ।

ननु प्रयोजनमेतत् प्रमाणं पृष्टोऽसि तद् ब्रूहि उच्यते—एतदेव प्रमाणम् , अन्यस्यापि वीरणादेः कर्मकारकस्य कटादिकार्योत्पत्तौ प्रत्यक्षानुपलम्भप्रतिपन्नाभ्यामन्वयव्यतिरेकाभ्यां यथा कारणत्वमवधार्यते तथा ऽर्थस्यापि ज्ञानोत्पत्तौ, यथा हि देवदत्तार्थी कश्चित्तद्गृहं गतः तत्रासन्निहितं न पश्यति देवदत्तं क्षणान्तरे चैनमायातं पश्यति तत्रान्वयव्यतिरेकाभ्यां देवदत्तसदसत्त्वानुवर्त्तिनौ ज्ञानोत्पादानुत्पादाववधार्य मानसेन प्रत्यक्षेण चन्दनसुखवदस्य तत्कारणतां प्रतिपद्यते ।

ननु वीरणकटयोः पृथगुपलम्भाद्युक्त एष न्यायः अर्थो ज्ञानात्पृथङ् न कदा चिदुपलभ्यते इति दुर्गमौ तत्रान्वयव्यतिरेकौ, उच्यते—अयमेव पृथगुपलम्भो यदसन्निहिते ऽर्थे न तद्विषयमबाधितं ज्ञानमुत्पद्यते इति, तदलमस्मिन्नवसरे ज्ञानवादगर्भचोद्योद्भिबभावयिषया भविष्यत्येतदवसर इति, यथा चेन्द्रियाणां करणानामन्वयव्यतिरेकाभ्यां ज्ञानकारणत्वम् एवमर्थस्य करणे ऽपीत्युत्पन्नग्रहणेन दर्शितम् ।

## प्रत्यक्षलक्षणस्य-सुखादिप्रत्यक्षाव्याप्तिनिरासः—

नन्विन्द्रियार्थसन्निकर्षोत्पन्नपदेन सुखादिविषयं प्रत्यक्षं न संगृहीतं, ननु संगृहीतं मनस इन्द्रियत्वात् सुखादेरर्थस्य तद्ग्राह्यत्वात् , भौतिकघ्राणादीन्द्रियधर्मवैलक्षण्यात्तु मनसस्तद्वर्गे परिगणनं न कृतमिति ।

तच्चेदं प्रत्यक्षं चतुष्टयत्रयद्वयसन्निकर्षात्प्रवर्त्तते, तत्र बाह्ये रूपादौ विषये चतुष्टयसन्निकर्षात् ज्ञानमुत्पद्यते आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति, सुखादौ तु त्रयसन्निकर्षाज्ज्ञानमुत्पद्यते तत्र चक्षुरादिव्यापाराभावात्, आत्मनि तु योगिनो द्वयोरात्ममनसोरेव संयोगाज्ज्ञानमुपजायते तृतीयस्य ग्राह्यस्य ग्राहकस्य तत्राभावात्, तस्मात्सुखादिज्ञानसंग्रहादिन्द्रियार्थसन्निकर्षोत्पन्नमितियुक्तमुक्तम्, आत्ममनसोस्तु सदपि ज्ञानजनकत्वमिह न सूत्रितं सर्वप्रमाणसाधारणत्वादिति ।

## ज्ञानपदकृत्यम्--

ज्ञानग्रहणं विशेष्यनिर्देशार्थम्, तस्य हीन्द्रियार्थसन्निकर्षोत्पन्नत्वादीनि विशेषणानि तानि असति विशेष्ये कस्य विशेषणानि स्युरिति,

अथ वा सुखादिव्यावृत्त्यर्थं ज्ञानपदोपादनम् । इन्द्रियार्थसन्निकर्षोत्पन्नं हि सुखमपि भवतितत्र तज्जनकं कारकचक्रं प्रमाणं मा भूज्ज्ञानजनकमेव प्रमाणं यथा स्यादिति ज्ञानग्रहणम् ।

## बौद्धमतेन ज्ञानस्य सुखरूपत्वम्—

अत्र शाक्याश्चोदयन्ति–न ज्ञानपदेन सुखादिव्यवच्छेदः कर्त्तुं युक्तः शक्यो वा सुखादीनामपि ज्ञानस्वभावत्वात्, ज्ञानस्यैवामी भेदाः सुखं दुःखमिच्छा द्वेषः प्रयत्न इति, कारणाधीनो हि भावानां भेदो भवितुमर्हति समानकारणानामपि तु भेदे ऽभिधीयमाने न कारणकृतं पदार्थानां नियतं रूपमिति तदाऽऽकस्मिकत्वप्रसङ्गः, तदुक्तम्—

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।
तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम् ॥ इति ।

तस्माज् ज्ञानरूपाः सुखादयः तदभिन्नहेतुजत्वादिति ।

## स्वमतेन ज्ञानस्य सुखरूपताखण्डनम् ।

तदिदमनुपपन्नम्–प्रत्यक्षविरुद्धत्वाद्धेतोः, सुखादिसंवेद्यमानमानन्दादिरूपतया ऽनुभूयते ज्ञानं विषयानुभवस्वभावतयेति प्रत्यक्षसिद्धभेदत्वात्कथमभेदे अनुमानं क्रमते, अत एव इदमपि न वचनीयम्, एवमेवेदं संविद्रूपं हर्षविषादाद्यनेकाकारविवर्त्तं पश्यामः तत्र यथेष्टं सञ्ज्ञाः क्रियन्तामिति, संविदो विषयानुभवस्वभावतयैव प्रतिभासात् सुखादेश्च विषयानुभवस्वभावानुस्यूतस्याप्रतिभासात्, ज्ञानमेव विषयग्रहणरूपं प्रकाशते न सुखं दुःखं वा, यस्तु सुखज्ञानं दुःखज्ञानमिति प्रतिभासः स ज्ञानस्वभावभेदकृत एव संशयज्ञानं विपर्ययज्ञानमितिवत्, उक्तमत्र संशयविपर्ययादौ विषयानुभवस्वभावत्वमनुस्यूतमवभाति

संशयो हि विषयग्रहणात्मको ऽनुभूयते अनिश्चितं तु विषयं गृह्णाति विपर्ययो-ऽपि विषयग्रहणात्मक एव विपरीतमसन्तं वा विषयं गृह्णाति न तु विषयग्रहणस्वभावं सुखं दुःखं चानुभूयते, अन्य एवायं ग्राह्यैकस्वभाव आन्तरो धर्मः सुखदुःखादिरिति घटज्ञानवद्विषयतयैव ज्ञानं भिनत्ति न स्वभावभेदेन संशयवदिति, तत्रैतत्स्यात् स्वप्रकाशत्वात्सुखादेर्न ग्राह्यैकस्वभावत्वम्, अतश्च ग्राह्यग्रहणोभयस्वभावत्वाज् ज्ञानमेव तदिति, मैवं वोचः, प्रकाशत्वं ज्ञाने ऽपि प्रतिक्षिप्तं प्रतिक्षेप्स्यते तत्कुतः सुखादौ भविष्यति, न हि ग्रहणस्वभावं कश्चित्सुखमनुभवति ज्ञानवदिति ।

नन्वस्य प्रकाशत्वानभ्युपगमे सुखादेरुत्पादानुत्पादयोरविशेषात्सर्वदा सुखित्वं न कदा चिद्वा स्यादिति, नैतदेवम्–उत्पन्नमेव सपदि सुखं गृह्यते ज्ञानेनेति कथमनुत्पन्नान्न विशिष्यते, प्रत्युत स्वप्रकाशसुखवादिनामेष दोषः स्वप्रकाशस्य दीपादेः सर्वान्प्रत्यविशिष्टत्वात्, क चित्सन्ताने स्वप्रकाशसुखोत्पादात्तेनैव स्वप्रकाशेन सुखेनान्यो ऽपि सुखी स्याद्यस्यापि सुखं नोत्पन्नमिति, किं च किमेकमेव ज्ञानं सर्वसुखदुःखाद्यशेषाकारभूषितमिष्यते उत किं चित्सुखात्मकं किं चिद् दुःखात्मकं ज्ञानमिति, आद्ये पक्षे सर्वाकारखचितज्ञानोपजननादेकस्मिन्नेव क्षणे परस्परविरुद्धसुखदुःखादिधर्मप्रबन्धवेदनप्रसङ्गः, उत्तरस्मिंस्तु किञ्चित्सुखज्ञानं किंचिद्दुःखज्ञानमिति यत्किं चित्सुखदुःखचितं विषयानुभवस्वभावमपि ज्ञानमनुभूयमानमेषितव्यमेव, तच्च न स्वच्छम् अपि तु केन चिद् घटादिना विषयेणोपरक्तमन्वयव्यतिरेकाभ्यां च घटाद्युपजननापाये ऽपि बोधस्वभावमनुवर्त्तमानं प्रतीयते, तदिदानीं सुखज्ञानमप्यनुभूयमानं सुखेन विषयभावजुषा घटादिनेवोपरज्यते इति गम्यते न स्वरूपेणैव सुखात्मकं ततो भिन्नरूपस्य बोधमात्रस्वभावस्य ज्ञानस्यान्यदा दृष्टत्वादिति, तस्मान्न बोधरूपाः सुखादयः, अभिन्नहेतुजत्वादिति चायमसिद्धो हेतुः समवायिकारणस्यात्मनः असमवायिकारणस्यात्ममनः संयोगस्य अभेदे ऽपि निमित्तकारणस्य सुखत्वज्ञानत्वादेर्भिन्नत्वात् ।

ननु सुखोत्पादात्पूर्वमनाश्रयं सुखत्वसामान्यं कथं तत्र स्यात्, कश्चापि सुखहेतुभिः कारकैः संसर्गः असंसृष्टं च कथं कारकं स्यात्,

उच्यते–सर्वसर्वगतानि सामान्यानि साधयिष्यन्ते इति सन्ति तत्रापि सुखत्वादीनि योग्यतालक्षण एव चैषां सुखहेतुभिः कारकैः संसर्गः धर्माधर्मवत्, धर्माधर्मौ हि सर्वस्य प्राणिनां सुखदुःखहेतोः जायमानस्य शाल्यादेः कार्यस्य कारणं तयोश्च तत्कारणैः बीजक्षितिजलादिभिः सह योग्यतैव संसर्गः एवं सुखत्वादीनामपि स्यात्, तस्मान्निमित्तकारणभेदाद्भिन्नानि ज्ञानसुखादीनि कार्याणि ।

निमित्तकारणान्यत्वमपि कार्यस्य भेदकम् ।
विलक्षणा हि दृश्यन्ते घटादौ पाकजा गुणाः ॥
अपि च ज्ञानमिच्छन्ति न सर्वं ज्ञानपूर्वकम् ।
सुखदुःखादि सर्वं तु विषयज्ञानपूर्वकम् ॥
विषयानुभवात्पाद्या यत्रापि न सुखादयः ।
तत्रापि तेषामुत्पत्तौ कारणं विषयस्मृतिः ॥

क्वचित्तु सङ्कल्पो ऽपि सुखस्य कारणतां प्रतिपद्यते, तस्मात्सर्वं सुखादि ज्ञानपूर्वकमेव, ज्ञानमपि ज्ञानपूर्वकमेवेति चेद्, उपरिष्टान्निराकरिष्यमाणत्वात् न हि गर्भादौ मदमूर्छाद्यनन्तरं वा ज्ञानमुपजायमानं ज्ञानान्तरपूर्वकं भवतीति वक्ष्यामः, तेन सुखादीनां वैलक्षण्योपपादनात् सुखादिव्यवच्छेदस्य सिद्धत्वात्,

अव्यभिचारिपदाज्ज्ञानलाभशङ्कासमाधाने--

व्यभिचाराव्यभिचारौ हि ज्ञानस्य धर्मौ न सुखादेरतस्तदुपादानात्तद्धर्मयोगि ज्ञानं लभ्यते एव किं ज्ञानग्रहणेन, नैतदेवम्–सुखस्यापि सव्यभिचारस्य दृष्टत्वात्, किं पुनः सुखं व्यभिचारवद्दृष्टम्, यदेतत्परदाराभिमर्शादिनिषिद्धाचरणसम्भवं सुखं तद्व्यभिचारि,

ननु सुखस्य कीदृशो व्यभिचारः, ज्ञानस्यापि कीदृशो व्यभिचारः, अतस्मिंस्तथाभावः सुखस्यापि अतस्मिंस्तथाभाव एव, किं परपुरन्ध्रिपरिरम्भसम्भवं सुखं सुखं न भवति, किं शुक्तिकायां रजतज्ञानं ज्ञानं न भवति, ज्ञानं तद्भवति किं तु मिथ्या इदमपि सुखं भवति किं तु मिथ्या ।

ननु न सुखं मिथ्या तदपि ह्यानन्दस्वभावमेव, यद्येवं शुक्तिकायां रजतज्ञानमपि न मिथ्या तदपि हि विषयानुभवस्वभावमेव,

ननु विषयानुभवस्वभावमपि तज्ज्ञानं विषयं व्यभिचरति, सुखमपि तर्हि इदमानन्दस्वभावमपि विषयं व्यभिचरत्येव, किमसुखसाधनेन तज्जनितम्, ज्ञानमपि किमज्ञानसाधनेन जनितम्,

ननु ज्ञानं ज्ञानसाधनेन जनितम् असत्येन प्रत्यक्षबाधितेन रजतादिना, सुखमपि सुखसाधनेन जनितम् असत्येन तु शास्त्रबाधितेन परवनितादिना, किं परवनितादि न सत्यम्, तत्रापि ज्ञानजनकं सत्यम्, असत्यं प्रत्यक्षबाधितत्वात्, परवनिताद्यपि सुखसाधनमसत्यं शास्त्रबाधितत्वात् ।

ननु शास्त्रेण किमत्र बाध्यते, ज्ञाने ऽपि प्रत्यक्षेण किं बाध्यते, विषयो मिथ्येति ख्याप्यते, शास्त्रेणापि सुखस्य हेतुर्मिथ्येति ख्याप्यते, किं स विषयः सुखहेतुर्न भवति, यथा त्वेष विषयः कलुषस्य ज्ञानस्य हेतुस्तथा सो ऽपि कलुषस्य कटुविपाकस्य सुखस्य हेतुरिति तथाविधं सुखमपि व्यभिचारि भवत्येव-

त्यलमतिकेलिना, तस्मात्समानन्यायत्वात्सुखे व्यभिचारितास्तीत्यव्यभिचारिपदाज्ज्ञानं न लभ्यते ।

### व्यवसायपदाज्ज्ञानलाभसम्भवे विशेष्यनिर्देशार्थं ज्ञानपदम्--

अपर आह—किमनेन डिम्भकलहेन मा भूदव्यभिचारिपदाज्ज्ञानस्य लाभस्तथापि व्यवसायात्मकपदाल्लभ्यते एव ज्ञानं न हि सुखदुःखादयो व्यवसायात्मका भवन्ति किं तु ज्ञानमेव तथाविधमिति, संशयव्यवच्छेदार्थं च तत्पदमिति चेत् , सत्यम्—सुखादिव्यवच्छेदमपि कर्तुमलमेव भवति व्यवसायात्मकत्वस्य सुखादिष्वसम्भवादिति, तदेवं सिद्धे ऽपि सुखादिव्यवच्छेदे कर्त्तव्यमेव ज्ञानग्रहणं विशेष्यनिर्देशार्थत्वात् , तस्य हि सर्वाण्यमूनि विशेषणान्युपात्तानि तदनुपादाने निरालम्बनानि भवेयुः, श्रोतुश्च बुद्धिर्न समाधीयेतेति तेन बलाद्गम्यमानमेव कर्त्तव्यमेव ज्ञानग्रहणम् , अर्थाक्षिप्तस्यावचने प्रत्यक्षं प्रत्यक्षमित्येतावन्मात्रमभिधेयं स्यादन्यदर्थाल्लभ्यत एव, तस्माद्धर्मिनिर्देशार्थं युक्तं ज्ञानपदम् ।

### अव्यपदेशपदकृत्यम्-

शब्दानामर्थसंस्पर्शित्वं शाक्यमतनिरासेन साधयिष्यते इति शब्दानुप्रवेशवशेन व्यपदेश्यं नाम ज्ञानमुपपद्यते इति तद्व्यवच्छेदार्थमव्यपदेशपदम् ।

तत्र वृद्धनैयायिकास्तावदाचक्षते, व्यपदिश्यते इति व्यपदेश्यं शब्दकर्मतामापन्नं ज्ञानमुच्यते यदिन्द्रियार्थसन्निकर्षादुत्पन्नं सद्विषयनामधेयेन व्यपदिश्यते रूपज्ञानं रसज्ञानमिति तद्व्यपदेश्यं ज्ञानं प्रत्यक्षफलं मा भूदित्यव्यपदेशग्रहणम्।

### अव्यदेश्यपदस्य कृत्यान्तरम्-

तदिदमनुपपन्नम्—न हि नामधेयव्यपदेश्यत्वमप्रामाण्यकारणं भवति यदि हि तद्रूपज्ञानं रसज्ञानं च विषयाव्यभिचारि निःसंशयं च तत्कथमप्रमाणफलमुच्यते व्यभिचारादिदोषयोगे वा पदान्तरेण तत्प्रतिक्षेपात् किमव्यपदेश्यपदेन, प्रमाणफलं च तद्विज्ञानमिदानीं किं प्रमाणप्रभवं भवद् न प्रत्यक्षफलम् एतत्पदप्रक्षिप्तत्वात् , नानुमानादिजन्यं तद्वैलक्षण्यात् , नास्ति किं चित् पञ्चमं प्रमाणमसङ्ग्रहो ऽस्य लक्ष्यस्य लक्षणेनेति प्रज्ञाप्रमादः, तस्मादपव्याख्यानमेतदिति व्यवच्छेद्यान्तरमव्यपदेश्यपदस्य वर्णयां चक्रुराचार्याः-शब्दार्थेषु स्थविरव्यवहारतो व्युत्पद्यमानो जनः संशयावगमसमये संज्ञोपदेशकादयं पनस उच्यते इति वृद्धोदीरिताद्वाक्यात्पुरोऽवस्थितशाखादिमन्तमर्थं पनसशब्दवाच्यतया जानाति, तदस्य ज्ञानमिन्द्रियजमपि न केवलेन्द्रियकरणकं भवितुमुचितम् , असति संज्ञोपदेशिनि शब्दे तदनुत्पादात्तेन शब्देन्द्रियाभ्यां सम्भूय जनित-

त्वादुभयजमिदं ज्ञानं व्यपदेशाज्जातमिति व्यपदेश्यमुच्यते तदव्यपदेश्यपदेन व्युदस्यते, न चेदं पञ्चमं प्रमाणमवतरति किं तु शाब्दमिवैतदनुमन्यते लोकः, तथा च कथं पुनः जानीते भवान्पनसो ऽयमिति पृष्टः प्रतिवक्ति मम देवदत्तेनाख्यातं पनसो ऽयमिति, न पुनरेवं विस्मृत्यापि ब्रवीति चक्षुषा मया प्रतिपन्नं पनसो ऽयमुच्यते इति, तदिन्द्रियान्वयव्यतिरेकानुविधाने सत्यपि शब्द एवात्र करणम् , अत एव सूत्रकृता शब्दलक्षणं वर्णयता नेन्द्रियानुप्रवेशप्रतिषेधाय किमपि विशेषणमुपरचितम् , उपदेशः शब्द इत्येतावदेव लक्षणमभिहितम् , अतश्चेन्द्रियानुप्रवेशे ऽपि शाब्दतामस्य मन्यते सूत्रकारः, इह पुनरव्यपदेश्यविशेषणपदोपादानेन शब्दानुप्रवेशप्रतिषेधान्न प्रत्यक्षफलमेतज् ज्ञानं तस्मादेवं विधव्यपदेश्यविज्ञानव्यवच्छेदार्थमव्यपदेश्यपदमिति,

### अव्यपदेश्यपदस्य पूर्वोक्तप्रयोजनस्य निराकरणम्—

तदेतद्व्याख्यातारो नानुमन्यन्ते, यद्युभयजं ज्ञानमव्यपदेश्यपदेन व्युदस्यते तदपि नाप्रमाणम् अप्रमाणलक्षणातीतत्वादिति, प्रमाणं भवत्कस्मिन्ननुनिविशतामिति चिन्त्यम् ।

ननु शाब्दमिदं ज्ञानं तद्भावानुविधानतः ।
भवत्वक्षजमप्येतत्तद्भावानुविधानतः ॥
शाब्दं चोभयजं चेति विरुद्धमभिधीयते ।
प्रमाणान्तरमेव स्यादित्थं तदपि पूर्ववत् ॥

ननु लोकः शाब्दतामस्य व्यपदिशति देवदत्तेनाख्यातं पनसो ऽयमिति व्यवहारादित्युक्तम्, अहो लोकवत्सः श्रद्धानो महानुभावः, न खलु लोकस्य व्यपदेशैकशरणा वस्तुस्थितयो भवन्ति, लोको हि यथारुचि व्यपदिशति, नानामुनिजनसाधारणमपि तीर्थं नन्दिकुण्डमिति किं न श्रुतवान् भवान्, हन्त तर्हि सूत्रकाराशयमनुसरन्तः शाब्दमिदं ज्ञानं प्रतिपद्यामहे यदयं सूत्रकारः प्रत्यक्षे शब्दानुप्रवेशव्यवच्छेदाय विशेषणमिदमुपदिशति शब्दे तु नेन्द्रियव्युदासाय किं चिद्विशेषणमुपादत्ते स पश्यति करणान्तरानुप्रवेशे ऽपि शाब्दमेतज् ज्ञानमिति, उच्यते—

मनुवत्सूत्रकारो ऽपि न धर्मस्योपदेशकः ।
येनैतदनुरोधेन तस्य ब्रूयाम शाब्दताम् ॥

वस्तुस्थित्या तु निरूप्यमाणमिन्द्रियान्वयव्यतिरेकानुविधायित्वादिदं विज्ञानं न प्रत्यक्षफलतामतिवर्त्तते, ततश्च व्युदस्यमानं प्रमाणान्तरमेव स्पृशेत् ।

तस्मादुभयजज्ञानव्युदासानुपपत्तितः ।
व्याख्या भङ्ग्यन्तरेणास्य पदस्येयं विधीयते ॥

वाच्यार्थप्रत्यये वाचकशब्दस्य विषयतया प्रसक्ता-
संभवदोषवारणार्थमव्यपदेश्यपदम्—

असम्भवदोषव्यवच्छेदार्थमव्यपदेश्यपदोपदानम्, एवं हि परो मन्यते सति लक्ष्ये लक्षणवर्णनमुचितम् इह तु लक्ष्यमाणं प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं नाम न किं चिदस्ति, गौरित्यादिज्ञानानां शब्दावच्छिन्नवाच्यविषयत्वेन शाब्दत्वात्, इह हि विषयव्यतिरेकेण ज्ञानानामतिशयो दुरुपपादः बोधस्वभावस्य सर्वान्प्रत्यविशिष्टत्वात्, तत्र यथा दण्डीति शुक्ल इति वा प्रत्ययो विशेषणावच्छिन्नविशेष्यविषयतया सातिशयत्वमश्नुते तथा गौरित्यादिप्रत्ययो ऽपि वाचकावच्छिन्नवाच्यविषयत्वात्सातिशयत्वं भजते शब्दावच्छिन्नवाच्यविषयत्वाच्च शाब्द एष प्रत्ययः तद्व्यतिरिक्तकरणकार्यत्वानुपपत्तेः, न हीन्द्रियकरणमिदं ज्ञानं भवितुमर्हति चक्षुषो विशेषणाविषयत्वाद्विशेष्ये च श्रोत्रस्यासामर्थ्यात्, न च युगपदिन्द्रियद्वयद्वारकमेकमुत्पद्यमानं ज्ञानं क्व चिद्दृष्टम्, तत्रैतत्स्यात्, मानसमिदं ज्ञानं सुगन्धिबन्धूकबोधवद्भविष्यति, उक्तमत्र शब्दलिङ्गादिकरणान्तरव्यापारविरतौ कार्यमुपजायमानं केवलमनःकरणमिति कल्प्यते न तत्सम्भवे ऽपि, तथा हि सति मानसमेवैकं प्रमाणं स्यादिति, अस्ति चात्र शब्द एव करणम्, स हि सहस्रकिरणवदात्मानं च विषयं च प्रकाशते इति, तस्मादिन्द्रियविषये ऽपि गौरित्यादिज्ञानमुत्पद्यमानं शाब्दमेवेत्यवधार्यते।

ननु सङ्केतावगमसमये गौरित्यादिशब्दः श्रुत आसीत्स इदानीमतिक्रान्त इति कथं तत्कृत एष प्रत्ययः स्यात्, उच्यते तदानीमश्रूयमाणस्य शब्दस्य स्मृत्यारूढस्य तत्प्रत्ययहेतुत्वात्,

तच्छ्रुतावपि किं सर्वे वर्णाः प्रत्यक्षगोचराः।
विशेषः को ऽन्त्यवर्णेन गृहीतेन स्मृतेन वा॥

तदेवं स्मृतिविषयीकृतशब्दजनित एष प्रत्यय इत्यभ्युपेतव्यः, यथा परोक्षे ऽपि शब्द उच्चरित आत्मानं प्रकाशयत्यर्थं च तथा प्रत्यक्षे विषये स एव स्मर्यमाण आत्मानमर्थं च प्रकाशयतीति, वाचकावच्छिन्नवाच्यप्रतिभासश्चैवंविधासु बुद्धिषु नूनमेषितव्यः, यथा ऽऽह वृद्धः 'सञ्ज्ञित्वं केवलं परम्' इति, सञ्ज्ञित्वमिति मत्वर्थीयप्रत्ययान्तादुत्पन्नो भावप्रत्ययः संबन्धमाचष्टे सञ्ज्ञासञ्ज्ञिसंबन्धः सञ्ज्ञित्वमिति, कृत्तद्धितसमासेषु संबन्धाभिधानमित्यभियुक्तस्मरणात्, सञ्ज्ञा च शब्दः सो ऽयं शब्दविशिष्टार्थप्रतिभास उक्तो भवति, न च शब्दानुसन्धानरहितः कश्चित्प्रत्ययो दृश्यते, अनुल्लिखितशब्दकेष्वपि प्रत्ययेष्वन्ततः सामान्यशब्दसमुन्मेषसम्भवात् तदुल्लेखव्यतिरेकेण प्रकाशात्मिकायाः प्रतीतेरनुत्पादात्, तथा ऽऽह भर्तृहरिः—

न सो ऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥

तस्मात्प्रत्यक्षस्य लक्ष्यस्यासद्भावात्कस्येदं लक्षणमुपक्रान्तमिति असम्भवदोषमाशङ्क्याह सूत्रकारः अव्यपदेश्यमिति, यदिदमविदितपदपदार्थसंबन्धस्य ज्ञानमुत्पद्यते विदितसंबन्धस्यापि वा यत्प्रथमाक्षसन्निपातसमये एव ज्ञानमनुल्लिखितशब्दकं शब्दानुस्मरणे हेतुभूतमुपजायते तदशाब्दम् अशब्दावच्छिन्नविषयमव्यपदेश्यमिन्द्रियार्थसन्निकर्षैककरणमविकल्पं प्रत्यक्षम्, न च शब्दकृता बुद्धीनां प्रकाशस्वभावता, स्वत एव तासामेवंरूपत्वात्, न च निर्विकल्पकसमये यत्किं चिदिदमित्यादिसामान्यशब्दोल्लेखः को ऽपि कैश्चिदनुभूयते तस्माद् गौरित्यादिज्ञानानां शाब्दत्वे ऽपि तथाविधस्य ज्ञानस्य लक्ष्यस्य सद्भावान्न व्यर्थं लक्षणमित्येवमसम्भवदोषनिराकरणार्थमव्यपदेश्यपदमिति,

### वाच्यार्थप्रत्यये वाचकशब्दस्याविषयत्वेनासम्भवदोषानिरासः—

तदेतदाचार्या न क्षमन्ते न गौरित्यादिज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमपीदं शाब्दमिति वक्तुं युक्तम् न चात्र शब्दावच्छिन्नार्थः प्रकाशते तथाविधार्थग्रहणे करणाभावाद्, विशेषार्थप्रमितौ तावच्छब्दः करणम्, विशेषणभूतस्य तु शब्दस्य ग्रहणे किं करणमिति निरूप्यताम्, न श्रोत्रं विरम्य व्यापारासंवेदनात् संबन्धग्रहणादूर्ध्वं च स्मर्यमाणशब्दयोजनया जायमाने गौरित्यादिज्ञाने श्रोत्रं करणमाशङ्कितुमपि न युक्तम्, नापि मनो बाह्यकरणनिरपेक्षं बाह्ये विषये धियमाधातुमलम् अन्धाद्यभावप्रसङ्गात् ।

ननु शब्द एव करणमित्युक्तं तत्किमपरकरणाशङ्कनेन, मैवम्—एकस्य कारकस्यैकस्यामेव क्रियायां कर्मकरणभावानुपपत्तेः, सवितृप्रकाशवदिति चेद् न क्रियाभेदाद् यत्रासौ करणं न तत्र कर्म यत्र वा कर्म न तत्र करणमिति, घटादिविषयप्रमितिजन्मनि करणमेव तरणिप्रकाशो न कर्म तद्ग्रहणकाले तु कर्मैवासौ न करणम्, किं तर्हि तत्र करणमिति चेत् केवलमेव चक्षुरिति ब्रूमः आलोकग्रहणे चक्षुषः प्रकाशान्तरनिरपेक्षत्वात्, कथमेवमिति चेद् अपर्यनुयोज्या हि वस्तुशक्तिः घटादिग्रहणे चक्षुरुद्द्योतमपेक्षते नोद्द्योतग्रहणे इति कमनुयुञ्ज्महे, सो ऽयं सूर्यप्रकाशः प्रकाशान्तरनिरपेक्षचक्षुरिन्द्रियप्रथमगृहीतः चिरमवतिष्ठमानस्तदिन्द्रियग्राह्य एकविषये गृह्यमाणे करणतामुपयातीति युक्तम्, शब्दस्तु क्षणिकः श्रोत्रेन्द्रियग्राह्यस्तदितरपरिच्छेद्ये विषये तदवगमक्रियायां करणीभूय भूयस्तस्यामेव क्रियायां कथमिव कर्मभावमनुभवेत्, शब्दो हि धूमादिवदुपाय एव नोपेयः स उपायत्वात्प्रथमं गृह्यतां नाम न उपेयग्रहणकाले पुनर्ग्रहणमर्हति धूमवदेवेति, एवं स्मर्यमाणो ऽपि शब्दो यत्रार्थप्रतीतिकारणं

तत्रापि प्रथमं शब्दस्मरणं ततः शब्दार्थसम्प्रत्ययो भवति नतरां तत्रार्थप्रतीतिवेलायां शब्दग्रहणं सम्भाव्यते, तस्मान्नास्ति वाचकविशेषितवाच्यप्रतिभासः, अपि च गौरित्यादिज्ञानमिन्द्रियार्थसन्निकर्षान्वयव्यतिरेकानुविधायि प्रसभं तत्कथं शाब्दमित्युच्यते ।

शब्दस्मरणसापेक्षं यस्योत्पादकमिन्द्रियम् ।
तदेव यदि ते शाब्दमहो नैयायिको भवान् ॥

ननु शब्दावच्छिन्नमर्थं न चक्षुःश्रोत्रयोरन्यतरदपि करणं ग्रहीतुमलमित्युक्तम्, भोः साधो चक्षुरेवैनं ग्रहीष्यतीति कथं न ब्रूषे ।

ननु नाविषये युक्तमिन्द्रियस्य प्रवर्त्तनम् ।
तेन शब्दविशिष्टार्थज्ञानं नेन्द्रियजं ब्रुवे ॥
मरीचिषु जलज्ञानं कथमिन्द्रियजं तव ।
तत्रापि हि न तोयेन सन्निकर्षोऽस्ति चक्षुषः ॥
ननु च स्मृत्युपारूढमुदकं तत्र गृह्यते ।
इहापि स्मृत्युपारूढः शब्दः कस्मान्न गृह्यते ॥
ननु शब्दो न नेत्रस्य कदा चिदपि गोचरः ।
असंन्निहितमप्यम्बु किं वा भवति गोचरः ॥
नन्वेकेन्द्रियवादः स्याच्चक्षुषा शब्दवेदने ।
अत्रापि सर्वबोधः स्यादसन्निहितवेदने ॥

ननु च मरीचिजलज्ञानं भ्रान्तमिति कथमिह दृष्टान्तीक्रियते, कथमस्य भ्रान्तत्वं किमनिन्द्रियजत्वादुत व्यभिचारित्वात्, तत्रानिन्द्रियजत्वेनास्य भ्रान्ततायामिन्द्रियार्थसन्निकर्षोत्पन्नपदेनैव निरासादव्यभिचारिपदमनुपादेयमिति, तदुपादानात्तु व्यभिचारित्वेनास्य भ्रान्तत्वमिति नूनमिदमिन्द्रियजमसन्निहितसलिलज्ञानमभ्युपगन्तव्यम् ।

यथा चाविषये तस्मिन्नीरे नयनजा मतिः ।
तथा वाचकसंस्पृष्टे वाच्ये किमिति नेष्यते ॥
यथा च तव कालादि नीरूपमपि चाक्षुषम् ।
तथा शब्दानुरक्तोऽपि किमित्यर्थो न चाक्षुषः ॥

एवं हीन्द्रियव्यतिरेकानुविधानमत्र न बाधितं भविष्यति ।

ननु चाक्षुषतां शब्दे न जीवन्वक्तुमुत्सहे ।
त्यजैनं वाचकोपेतवाच्यावगमदुग्रहम् ॥
अपि चामुष्य शाब्दत्वे संबन्धग्रहणं कथम् ।
न चागृहीतसंबन्धः शब्दो भवति वाचकः ॥

निर्विकल्पकविज्ञानविषये न च तद्ग्रहः ।
शाब्दपक्षे तु निक्षिप्तं भवता सविकल्पकम् ॥
संबन्धः शक्यते बोद्धुं न च मानान्तराद्विना ।
शाब्दज्ञानेन तद्बोधे भवेदन्योन्यसंश्रयम् ॥
न च शब्दोपरक्ते ऽर्थे संबन्धं बुध्यते जनः ।
गो शब्दवाच्यो गोशब्द इति हि ग्रहणं भवेत् ॥

वाच्यस्य हि गवादेर्गोशब्दविशेषितस्य वाच्यत्वाद्वाच्यो ऽर्थ इव गोशब्दो ऽपि वाच्यतामवलम्बते ।

यदि च स्वानुरागेण वाचकाद्वाच्यवेदनम् ।
लिङ्गादपि भवेद् बुद्धिः स्वावच्छेदेन लिङ्गिनि ॥
अथ धूमान्वितत्वेन न वह्निरवगम्यते ।
इहापि शब्दयोगेन गवादिर्नैव गम्यते ॥
न चास्ति वस्तुनो धर्मो वाच्यता नाम कश्चन ।
यदि स्यान्निर्विकल्पे ऽपि प्रतिभासेत रूपवत् ॥
अर्थासंस्पर्शिनः शब्दान्कथयन् दुष्टसौगतः ।
प्रत्यक्षास्त्रेण भेत्तव्यः स कथं हन्यते त्वया ॥
प्रत्यक्षविषये वृत्तिः शब्दानां भवतः कुतः ।
तेषां यद्विषये वृत्तिस्तद्धि शाब्दीकृतं त्वया ॥

अपि च विषयभेदेन प्रतिभासभेदो भवतीति दुराशया शब्दविशिष्टमर्थं निर्विकल्पात् सविकल्पस्य विषयमधिकं पश्यति भवाननेनैव च वर्त्मना ऽवतरन्परं शब्दाध्यासं न पश्यतीति को ऽयं व्यामोहः, स त्वं वचनीयो ऽसि संवृत्तः 'मधु पश्यसि दुर्बुद्धे प्रपातं नैव पश्यसि' इति ।

तस्माद्गौरिति विज्ञानं प्रत्यक्षमवधार्यताम् ।
शब्दस्मरणसापेक्षचक्षुरिन्द्रियनिर्मितम् ॥
मानसत्वं तु यत्तस्य नेष्यते युक्तमेव तत् ।
तद्भावानुविधायित्वाद् बाह्येन्द्रियजमेव तत् ॥

**शब्दस्य विशेषणतया प्रत्यक्षविषयत्वेन प्रसक्तासम्भवदोषवारणार्थमव्यपदेश्यपदम्——**

अत्र पुनः प्रवराः प्राहुः, नन्वेवं गौरित्यादिबोधेषु वाचकावच्छिन्नवाच्यप्रतिभासे सर्वप्रकारमपाक्रियमाणे प्रथमाक्षसंनिपातसमयमासादितसद्भावनिर्विकल्पकवेदनवैलक्षण्यं कथमेषां भवेत्, न हि विषयातिशयमन्तरेण प्रतिभासाति-

शयो भवितुमर्हति, दण्डीति दण्डविशिष्टः पुरुषः प्रतिभासते इतरथा न केवल-पुरुषप्रतीतेरेषा प्रतीतिर्विशिष्यते उभयप्रतिभासे ऽपि न दण्डपुरुषाविति प्रतीतेः विशेषणविशेष्यभावस्य नियामकत्वात् ।

पूर्वापरचिरक्षिप्रक्रमाद्यवगमेष्वपि ।
दिक्कालादिविशिष्टो ऽर्थः स्फुरत्यतिशयग्रहात् ॥
प्रत्यक्षः किं स कालादिः प्रतीतिं पृच्छ किं मया ।
गृह्यते तद्विशिष्टो ऽर्थः स च नेत्येतदद्भुतम् ॥
एतेन समवाये ऽपि प्रत्यक्षत्वं प्रकाशितम् ।
इहेति तन्तुसंबद्धपटप्रत्ययदर्शनात् ॥

अयं पट इति प्रत्ययादिह तन्तुषु पट इति विलक्षण एष प्रत्ययः तन्तुपट-संबन्धस्य विशेषणस्याप्रत्यक्षतायां न केवलपटप्रत्ययाद्विशिष्येतेति, अथ मतम् उपायभेदात्प्रतीतिभेदो भवति दूराविदूरदेशव्यवस्थितस्थाणवादिपदार्थप्रतीतिवत् संस्कृतासंस्कृताक्षकरणविषयबोधवद्वेति, तदसांप्रतम्, उपायभेदे ऽपि तद्भेदासिद्धेः, उपायो बुद्धावतिशयमादधाति न विषये विषयावगतिसमये च न बुद्धिरव-भातीति नैयायिकाः, तदयमतिशयो यदधिकरणस्सा न प्रतिभासते बुद्धिः यश्च तदानीमवभासते विषयः तत्रातिशयो नास्ति दृश्यते चातिशयसंवेदनमिति सङ्कटः पन्थाः, न च दूराविदूरदेशवर्त्तिनि पदार्थे प्रतीतिरुपायभेदाद्भिद्यते, सापि हि विषयभेदादेव भिद्यते ।

दूराद्धि वस्तुसामान्यं धर्ममात्रोपलक्षितम् ।
अदूरतस्तु विस्पष्टविशेषमवसीयते ॥

यथा माघेन वर्णितम्—

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥
क्रियान्तराणां वैचित्र्ये यद्वा तद्वा ऽस्तु कारणम् ।
भेदो ज्ञानक्रियायास्तु कर्मभेदनिबन्धनः ॥

## शब्दस्य विशेषणतया प्रत्यक्षाविषयत्वेनासम्भवदोषानिरासः—

तदेतदाचार्याः प्रतिसमादधते—न विषयभेदादेव प्रतिभासभेदः किं तूपाय-भेदाद्भवत्येव, यच्च चोदितं विषयप्रतिभासकाले तत्प्रतिभासाप्रतिभासादतिशयव-चने सङ्कटः पन्था इति तदविदितनैयायिकदर्शनस्यैव चोद्यम्, ज्ञानोत्पाद एव विषयस्य प्रत्यक्षतेति ना दर्शनं न ज्ञानग्रहणमिति, तत्र यथा पुरुष इति निरति-शयज्ञानमात्रोत्पादे तावन्मात्रविषयप्रत्यक्षता भवति न तत्र ज्ञानं प्रकाशते अगृ-ह्यमाणे ऽपि ज्ञाने विषय एव प्रतिभासते एवं दण्डीति शुक्लवासा इति विशेष-

णज्ञानाभ्युपायातिशयवशात् सातिशयप्रत्ययजनने तद्ग्रहणे स एव विषयो ऽवभासते इति कियानेष सङ्कटः पन्थाः, तथा च दण्डीति पुरुषप्रवणैव मतिः को दण्डी पुरुषः कः पुरुषो दण्डीति सामानाधिकरण्येन निः सन्धिबन्धस्य पुंस एव प्रतिभासात्, एवं दण्डिनं भोजय दण्डिने देहीति भोजनादिकार्ययोगित्वं न दण्डे दृश्यते ऽपि तु पुंस्येव,

ननु दण्डी पर्वतमारोहतीति दण्डे ऽपि कार्यान्वयो दृश्यते लोके वेदे ऽपि दण्डी मैत्रावरुणः प्रैषानन्वाहेति प्रैषानुवचनस्य वचनान्तरतः प्राप्तेर्दण्डविधानार्थमेतद्वाक्यं भवति यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीति श्येनादौ ऋत्विजां प्रकृतिवद्भावेन प्राप्तानां लोहितोष्णीषविधानमात्रमेतद्भवति, उच्यते—भवत्वेवं किं तु दण्डमवष्टभ्य पुरुषः पर्वतमारोहति न दण्डो निश्चेतनः वेदे ऽपि दण्डपाणिः पुरुषः प्रैषाननुभाषते न दण्डः न लोहिता उष्णीषाः प्रचरन्ति किं तु अन्यपदार्थीभूता ऋत्विज एवेति सर्वत्र विशेष्यप्रवणैव मतिः उभयप्रतिभाने तु दण्डपुरुषाविति स्यान्न दण्डीति, विशेषणविशेष्यभावस्य नियामकत्वादिति चेत् सेयं विशेष्यप्रवणा मतिरुक्तैव भवति, विशेषणस्य विशेषणत्वेनैवोपसर्जनत्वाद्दण्डो ऽस्यास्तीति पुरुष एवोच्यते न दण्डपुरुषौ, एवं पूर्वापरादिप्रत्ययाश्चिरक्षिप्रादिप्रत्यया इह तन्तुषु पट इत्यादिप्रत्ययाश्च दिक्कालसमवायग्राहिणः, त इमे दिक्कालसमवायाः सामग्र्यन्तर्गताः सन्तः प्रत्ययातिशयमादधति न तद्विषये भवन्ति पटादिद्रव्यवत्, एवं पतनाद्यनुमेयगुरुत्वादिकारणभेदजनिता गुरुः पाषाण इत्यादिप्रत्ययाः परोक्षविशेषणं विशेष्यमवलम्बन्ते इत्यलं विस्तरेण ।

तस्माद्गौरित्यादिज्ञानं न वाचकावच्छिन्नवाच्यविषयम् अतश्च न शाब्दं तत्, अपि तु सुस्पष्टं प्रत्यक्षमेव, तस्मिंश्च लक्षिते सति लक्षणवैयर्थ्यशङ्काकरणाभावान्नासम्भवदोषनिराकारणार्थमव्यपदेश्यपदम् ।

## अव्यपदेश्यपदस्याचार्यमतेन प्रयोजनप्रदर्शनम्—

किमर्थं तर्हीदमस्तु, उक्तमाचार्यैः उभयजज्ञानव्यवच्छेदार्थमिति, ननु तदपि प्रत्यक्षमेवेति, अनपोह्यमुक्तम्, पुरोऽवस्थितगवादिपदार्थस्वरूपमात्रग्रहणनिष्ठितसामर्थ्यमत्र प्रत्यक्षम्, गोशब्दवाच्यतायां तु संज्ञाकर्मोपदेशी शब्द एव प्रमाणम्, यद्यपि शब्दार्थसम्बन्धपरिच्छेदे गत्यन्तरमपि सम्भवति तथा ऽपि यत्र तावत् संज्ञिनं निर्दिश्य सञ्ज्ञा वृद्धैरुपदिश्यते गोशब्दवाच्यो ऽयं पन सशब्दवाच्योऽयमिति तत्र तद्वाच्यतापरिच्छेदे स एव कारणम् ।

अत एव च लोको ऽपि शाब्दत्वमभिमन्यते ।
शब्दोपरचितापूर्वज्ञानातिशयतोषितः ॥

तच्छब्दवाच्यताज्ञप्तिर्विना संज्ञोपदेशिनः ।
शब्दान्नेति स एवात्र सत्यप्यक्षे प्रकर्षभाक् ॥
अतः सूत्रकृता ऽप्यत्र शब्दातिशयदर्शनाद् ।
व्यधायि तद्व्यवच्छेदो न तु धर्मोपदेशिना ॥

तस्मादुभयजज्ञानव्यवच्छेदार्थमेवेदं पदमिति ।

### अव्यपदेश्यपदस्य मतान्तरेण प्रयोजनप्रदर्शनम्—

अन्ये मन्यन्ते यदि संकेतग्रहणकाले भाविनः संज्ञोपदेशकवचनजनितस्योभयजज्ञानस्य व्यवच्छेदकमिदं वर्ण्यते पदं तदा तद्व्यवहारकाले ऽपि यदयं गौरिति संकेतग्रहणकालानुभूतदेवदत्ताद्युदीरितसंज्ञोपदेशकवचनस्मरणपूर्वकं विज्ञानमुत्पद्यते तदप्युभयजमेवेति कथमनेन न व्युदस्यते ।

ननु तत्र शब्दस्मरणं कारणं न शब्दः संकेतकाले ऽपि शब्दस्मरणमेव कारणं न हि क्रमभाविनो वर्णा युगपदनुभवितुं पार्यन्ते अन्त्यवर्णे तु गृह्यमाणे स्मर्यमाणे वा किं शब्दव्यापारो विशिष्यते ।

ननु व्यवहारकाले गवादिनामधेयपदमात्रमेव स्मर्यमाणमिन्द्रियेण सह सविकल्पप्रत्ययोदये व्याप्रियते संकेतकाले तु संज्ञोपदेशि बृद्धवाक्यमिति चेन्मैवम्, व्यवहारकाले ऽपि संज्ञोपदेशकं वृद्धवाक्यमेव स्मर्यते तदस्मरणे तच्छब्दवाच्यताऽनवगमात्, अस्य गौरिति नाम देवदत्तेनोपदिष्टमासीदित्येवमनुस्मृत्य गोशब्दवाच्यतयैवं व्यवहरतीति वाक्यस्मरणजमेवेदं ज्ञानम् ।

तस्मादस्यापि तद्वाक्यं संज्ञाकर्मोपदेशकम् ।
हेतुतामुपयातीति शाब्दमेतदपीष्यताम् ॥
एवमस्त्विति चेच्छान्तमेवं सति तपस्विनाम् ।
नैयायिकानामुत्पन्नं प्रत्यक्षं सविकल्पकम् ॥
यत्र मार्गान्तरेणापि संकेतज्ञानसम्भवः ।
तत्राप्यनेन न्यायेन शाब्दता न निवर्तते ॥

नैयायिकानां च सविकल्पप्रत्यक्षमयाः प्राणाः तस्मान्नोभयजस्य शाब्दत्वं ज्ञानस्य वक्तव्यम्, संबन्धाधिगमस्तु नानाप्रमाणकः, तत्र स्वे स्वे विषये तत्तत्प्रमाणं प्रवर्तते, यथाह भट्टः संबन्धस्त्रिप्रमाणक इति, तस्मान्नैकस्य शब्दस्य भार आरोपणीयः, प्रत्यक्षं तु संकेतग्रहणकाले ऽपि स्वविषयग्राहकम् इदानीमपि व्यवहारकाले ऽपि तत्स्वविषयग्राहकमिति नोभयजज्ञानव्यवच्छेदपक्षो निरवद्यः, तस्माद्वरं जरन्नैयायिककथितशब्दकर्मतापन्नज्ञानव्यवच्छेद एवाश्रीयताम्, तत्र तावत्कर्मणि कृत्ये कृते व्यपदेश्यशब्दो यथार्थतरो भवति ।

ननु तत्र चोदितं न तादृशं ज्ञानमप्रमाणं न पञ्चमं प्रमाणमिति, सत्यम्,

अयं तु तेषामाशयः, रूपादिविषयग्रहणाभिमुखं हि तदक्षजं ज्ञानं प्रमाणं वा फलं वोच्यते यदा तु तदेव शब्देनोच्यते रूपज्ञानं रसज्ञानमिति तदा रूपादिज्ञानविषयग्रहणव्यापारलभ्यां प्रमाणतामपहाय शब्दकर्मताऽऽपत्तिकृतां प्रमेयतामेवावलम्बतइति न तस्यां दशायां तत्प्रमाणमिति कुतः पञ्चमप्रमाणप्रसङ्ग इति,

अपर आह, सविकल्पकस्य शब्दसंकल्पकस्य शब्दसंसर्गसापेक्षजन्मनः प्रत्यक्षज्ञानस्य शाब्दतां पूर्ववदाशङ्क्य तस्यैवाशाब्दतां दर्शयत्यव्यपदेश्यपदेन सूत्रकारः, प्रत्यक्षमेव तज्ज्ञानमिन्द्रियान्वयव्यतिरेकानुविधायित्वादव्यपदेश्यमशाब्दमित्यर्थः।

स्पष्टत्वाद् वाचकाभावादिन्द्रियानुविधानतः।
लोकस्य संमतत्वाच्च प्रत्यक्षमिदमिष्यते॥
शब्दानुस्मृतिजत्वे ऽपि न शाब्दं ज्ञानमीदृशम्।
शब्दस्मृतिः सहायः स्यादिन्द्रियस्य प्रदीपवत्॥
नन्वेवं सविकल्पस्य प्रत्यक्षत्वे प्रसाधिते।
नेदानीं संगृहीतं स्यात्प्रत्यक्षं निर्विकल्पकम्॥
यत्तु शब्दानुवेधेन शाब्दत्वं सविकल्पके।
कश्चिदाशङ्कते तस्य प्रतिशब्दो ऽयमुच्यते॥
यत्र शब्दानुवेधे ऽपि प्रत्यक्षं ज्ञानमिष्यते।
तत्र तत्स्पर्शशून्यस्य तथात्वे का विचारणा॥
निर्विकल्पकवत्तस्मात्प्रत्यक्षं सविकल्पकम्।
समग्रहीच्च तदिदं पदेनानेन सूत्रकृत्॥
इत्थाचार्यमतानीह दर्शितानि यथाऽऽगमम्।
यदेभ्यः सत्यमाभाति सभ्यास्तदवलम्ब्यताम्॥

## अव्यभिचारिपदकृत्यप्रदर्शनम्—

अव्यभिचारिग्रहणं व्यभिचारिज्ञानव्यवच्छेदार्थम्, यथा ग्रीष्मे तपति ललाटन्तपे तपने तन्मरीचिषु चतुरमूषरभुवमभिहत्य समुत्फलितेषु तरङ्गाकारधारिषु यद् वारिधिज्ञानं तदतस्मिँस्तदिति ग्रहणाद् व्यभिचारि भवति तदनेन पदेन व्यवच्छिद्यते न तत्प्रत्यक्षमिति, तत्र च निर्विकल्पकमपि प्रथमनयनसन्निपातजज्ञानमुदकसविकल्पकज्ञानजनकमुदकग्राह्येव न यथा तथा तथागताः कथयन्ति मरीचिविषयमविकल्पकं ज्ञानमुदकसविकल्पकजननादप्रमाणमिति निर्विकल्पावस्थायामविचारयत एव प्रथमोन्मीलतचक्षुषो झगिति सलिलप्रतिभासात् अथ वा वाचकोल्लेखपूर्विका अपि संविदः नैवेन्द्रियार्थजन्यत्वं जहतीत्युपपादितम्, तस्मात्सविकल्पकमविकल्पकं वा यदतस्मिंस्तदिति ज्ञानमुत्पद्यते तद्व्यभिचारि तदेह व्यावर्त्यमिति।

ननु मरीचिषु जलज्ञानमविद्यमानसलिलावभासित्वादनिन्द्रियार्थसन्निकर्षजमतश्चेन्द्रियार्थसन्निर्षोत्पन्नपदेन तद्व्युदाससिद्धेः किमव्यभिचारिपदेन नैतदेवम्—

तस्येन्द्रियार्थजन्यत्वं सिद्धं तद्भावभावतः ।
न ह्यनुन्मीलिताक्षस्य मरौ सलिलवेदनम् ॥
अर्थोऽपि जनकस्तस्य विद्यते नासतः प्रथा ।
तदालम्बनचिन्तां तु त्रिधाऽऽचार्याः प्रचक्रिरे ॥
केश्चिदालम्बनं तस्मिन्नुक्तं सूर्यमरीचयः ।
निगूहितनिजाकाराः सलिलाकारधारिणः ॥

तत्र तरङ्गादिसामान्यधर्मग्रहणे सति न स्थाणुपुरुषवदुभयविशेषा न च सन्निहितमरीचिविशेषाः स्मरणपथमवतरन्ति किं तु पूर्वोपलब्धविरुद्धसलिलवर्तिनो विशेषास्तत्स्मरणाच्च स्थगितेषु स्वविशेषेषु मरीचयः स्वरूपमुपदर्शयितुमशक्नुवन्तः तोयरूपेणावभासन्ते ।

अन्ये त्वालम्बनं प्राहुः पुरोवस्थितधर्मिणः ।
सादृश्यदर्शनोद्भूतस्मृत्युपस्थापितं पयः ॥

यत्र किल ज्ञाने यद्रूपमुपप्लवते तत्तस्यालम्बनमुच्यते न सन्निहितम्, न चैकान्तासतः खपुष्पादेः ख्यातिरवकल्पते इति देशान्तरादौ विद्यमानमेव सलिलं सदृशदर्शनप्रबुद्धसंस्कारोपजनितस्मरणोपारूढमिहावलम्बनीभवति ।

अन्यदालम्बनं चान्यत्प्रतिभातीति के चन ।
आलम्बनं दीधितयस्तोयं च प्रतिभासते ॥

कर्तृकरणव्यतिरिक्तं ज्ञानजनकमालम्बनमुच्यते इति न परमाणवादौ प्रसक्तिरिति, तदिदं पक्षत्रयमप्युपरिष्टान्निपुणतरं निरूपयिष्यते, तदेवं बाह्येन्द्रियार्थान्वयव्यतिरेकाऽनुविधायिनां विभ्रमाणामिन्द्रियार्थसन्निकर्षोत्पन्नपदेन निरसितुमशक्यत्वाद् युक्तमव्यभिचारिपदोपादानम् ।

यत्तु मानसा विभ्रमा बाह्येन्द्रियानपेक्षजन्मानः तेषां सत्यमिष्यते एवेन्द्रियार्थसन्निकर्षपदेन पर्युदसनमिति न तदर्थमव्यभिचारिपदोपादानम्, तद्यथा—

विरहोद्दीपितोद्दामकामाकुलितदृष्टयः ।
दूरस्थामपि पश्यन्ति कान्तामन्तिकवर्त्तिनीम् ॥

नन्वेवम्प्रायेषु निरालम्बनेषु विभ्रमेषु कुतस्त्य आकारः प्रतिभाति, उच्यते—

आकारः स्मृत्युपारूढः प्रायेण स्फुरति भ्रमे ।
स्मृतेस्तु कारणं किं चित्कदा चिद्भवति क चित् ॥
क चित्सदृशविज्ञानं कामशोकादयः क चित् ।
क चित्स्वदर्शनाभ्यासः तिमिरं चक्षुषः क चित् ॥

क चिन्निद्रा क चिच्चिन्ता धातूनां विकृतिः क चित् ।
अलक्ष्यमाणे तद्धेतावदृष्टं स्मृतिकारणम् ॥
बालस्येन्दुद्वयज्ञानमस्ति नास्तीति वेत्ति कः ।
अस्तित्वे ऽपि स्मृतौ हेतुमदृष्टं तस्य मन्वते ।
नूनं नियमसिद्ध्यर्थं जनकस्यावभासनम् ।
न चैकान्तासतो दृष्टा ज्ञानोत्पादनयोग्यता ।
न च सन्निहितं वस्तु तत्रास्ति वनितादिकम् ।
तेनेदं स्मृत्युपारूढमवभातीति मन्वते ॥
तत्राद्येन पदेनैताः स्वान्तःकरणसम्भवाः ।
निरस्ता भ्रान्तयो ऽक्षादिसंसर्गरहितोदयाः ॥
याः पुनः पीतशङ्खादिमरुनीरादिबुद्धयः ।
अक्षजास्तद्व्युदासाय सूत्रे पदमिदं कृतम् ॥

## व्यवसायपदकृत्यप्रदर्शनम्—

दूरात् स्थाणुपुरुषसाधारणं धर्ममारोहपरिणाहरूपमुपलभमानस्य तयोरन्यतरत्र वर्त्तमानान्वक्रकोटरादीन्करचरणान्वा विशेषानपश्यतः समानधर्मप्रवुद्धसंस्कारतया चोभयवर्तिनोऽपि विशेषाननुस्मरतः पुरोऽवस्थितार्थविषयं स्थाणुर्वा पुरुषो वेति संशयज्ञानमुपजायते तदिन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणयुक्तमपि न प्रत्यक्षफलम् अतस्तद्व्यवच्छेदाय व्यवसायात्मकग्रहणम्,

ननु मानसत्वात्संशयज्ञानस्येन्द्रियार्थसन्निकर्षोत्पन्नग्रहणेन निरासः सिद्धस्यैवेति किं पदान्तरेण, तथा च भाष्यकारः स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहसुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानीति वक्ष्यति ।

नैवम्—स्थाण्वादिसंशयस्य बाह्येन्द्रियान्वयतिरेकानुविधायित्वात्, कश्चिद्धि मानसः संशयः समस्त्येव यथा दैशिकस्य ज्योतिर्गणकादेरेकदा ऽन्यदा चासम्यगादिश्य तृतीये पदे पुनरादिशतः संशयो भवति किमयमस्मदादेशः संवदेदुत विसंवदेदिति स भाष्यकृतश्चेतसि केवलमनःकरण इति स्थितिः, यस्तु विस्फारिताक्षस्य स्थाणुर्वा पुरुषो वेत्यादिः संपद्यते संशयस्तमनिन्द्रियार्थसन्निकर्षजं को नामाचक्षीत ।

नन्वतस्मिंस्तदिति ज्ञानं व्यभिचारि व्याख्यातम् एकरूपं च पुरोऽवस्थितमर्थमनेकरूपतया स्पृशति संशयः स्थाणुर्वा पुरुषो वेति सोयमतस्मिंस्तथाभावाद्विपर्यय एवेति पूर्वपदव्युदस्तत्वान्न पदान्तरव्यवच्छेद्यतामर्हतीति, नैतदेवम्, स्वरूपभेदात्कारणभेदाच्च, एवमेव विरुद्धमाकारमुल्लिखन्विपर्ययो जायते स्थाणौ पुरुष इति पुंसि वा स्थाणुरिति, अनियताकारद्वयोल्लेखी तु संशयो

भवति स्थाणुर्वा स्यात्पुरुषो वेति, सो ऽयं स्वरूपभेदः प्रत्यात्मसंवेद्यः, कारणभेदस्तु विरुद्धविशेषः स्मरणप्रभवो विपर्ययः, शुक्तिकायां सन्निहितायां रजतविशेषान्मरीचिषु सलिलगतविशेषाननुस्मरतो विपर्ययो भवति उभयविशेष स्मरणजन्मा तु संशय इति पदान्तरनिरसनीय एवायम्।

ननु संशयविपर्यययोरपि निर्विकल्पयोरसम्भवादव्यपदेश्यपदेनैव प्रवरपक्षे(१) प्रतिक्षेपः सिद्ध्येत्, पुरोऽवस्थितस्थाणवादिधर्मिदर्शनमात्रमेव निर्विकल्पकमिन्द्रियव्यापारजम्, अनन्तरं तूभयान्यतरविशेषणस्मरणजन्मनोरुल्लिखितशब्दयोरेव संशयविपर्यययोरुत्पादः तत्र विशेषस्मृत्यैव शब्दानुवेधस्याक्षेपात्, अतः पदद्वयमपि तद्व्युदासाय न कर्त्तव्यम्, अत्र तदेव तावद्वक्तव्यम्, प्रवरपक्षः प्रतिक्षिप्त एव यतः शब्दानुवेधजातमस्ति प्रत्यक्षमुपपादितम्।

ननु भवतु प्रवरपक्षः प्रतिक्षिप्तः सदृशदर्शननिष्ठिते तु नयनव्यापारे विशेषस्मृतेरूर्ध्वमुपजायमानौ संशयविपर्ययौ नेन्द्रियजाविति प्रथमपदेनैव निरस्तौ भवतः तदसत्—स्मृतेरूर्द्ध्वमपीन्द्रियव्यापारानुवृत्तेरित्युक्तत्वात्, एतच्चान्वयव्यतिरेकाभ्यामवगम्यते निमीलितचक्षुषस्तदनुत्पादात्, न च तदानीमन्तः संकल्परूपेणापि शब्दोल्लेखः उत्पन्ने तु संशये विपर्यये च वाचकस्मरणं भविष्यतीति सम्यग्ज्ञानवत्संशयविपर्ययावपि शब्दोल्लेखशून्यौ संवेद्येते, विशेषस्मृतिस्तु विशेषविषयत्वात्तानेवाक्षिपतु शब्दस्य किं वर्त्तते वाचकशब्दस्मृतिस्तु शब्दमुपस्थापयति, सा च न तावदुपपन्नेति।

सम्यक्प्रत्ययवत्तस्माद्वाचकोल्लेखवर्जितौ।
अक्षव्यापारजन्मानौ स्तः संशयविपर्ययौ॥

ईदृशयोः कथमनयोराद्यपदव्युदसनीयता, तस्मात् तदपाकृतये युक्तं पदद्वयस्याप्युपादानम्, एवं लक्षणपदानि व्याख्यातानि।

लक्ष्यपदं तु प्रत्यक्षमिति ज्ञानविशेषे रूढ्यैव प्रवर्त्तते, योगस्य व्यभिचारात् प्रतिगतमक्षं प्रत्यक्षमित्यक्षरार्थः स चायं सुखादावपि सम्भवतीति रूढिरेव साधीयसी, अथ वा ज्ञानपदस्य सूत्रे निर्देशाद्योगपक्षो ऽप्यस्तु न चासौ दृश्यमानो निह्नोतुं युक्तः, योगरूढिस्तु नाम न सम्मतैव विदुषाम्, यत्रापि हि द्वयं दृश्यते तत्रापि शब्दप्रवृत्तौ प्रयोजकमेव भवति, कथं पुनरक्षं प्रतिगतं ज्ञानमिष्यते न संयोगित्वेन अञ्जनादेः प्रत्यक्षप्रसङ्गात्, न समवायित्वेन अक्षवर्तिनां रूपादीनां तथात्वप्रसङ्गात्, न जनकत्वेन अक्षारम्भकाणां परमाणूनामपि तथाभावप्रसक्तेः, तस्माज्जन्यत्वेनैव ज्ञानमक्षं प्रतिगतमिति व्याख्येयम्,

---

(१) प्रवरपक्षे–पूर्वोक्ते 'प्रवरास्त्वाहुः' इत्युक्तपक्षे इत्यर्थः।

अव्ययीभावव्याख्यानं तु न युक्तं प्रत्यक्षः पुरुषः प्रत्यक्षा स्त्रीत्यादिव्यवहारदर्शनादित्यलं प्रसङ्गेन ।

तेनेन्द्रियार्थजत्वादिविशेषणगणान्वितम् ।
यतो भवति विज्ञानं तत्प्रत्यक्षमिति स्थितम् ॥
इति विगतकलङ्कमस्य धीमानकुरुत लक्षणमेतदक्षपादः ।
न तु पररचितानि लक्षणानि क्षणमपि सूक्ष्मदृशां विशन्ति चेतः ॥

## बौद्धाभिमतप्रत्यक्षलक्षणम्–

यत्तावत्कल्पनाऽऽपोढमभ्रान्तमिति लक्षणम् ।
प्रत्यक्षस्य जगौ भिक्षुस्तदत्यन्तमसाम्प्रतम्(१) ॥
शब्दसंसर्गयोग्यार्थप्रतीतिः किल कल्पना ।
अस्याश्च केन दोषेण प्रामाण्यं न विषह्यते ॥

नन्वभिलापसंसर्गयोग्यप्रतिभासत्वादपि हि कमन्यं दोषं मृगयते भवान् असदर्थविषयत्यागे तत्त्वमुक्तं भवति शब्दार्थस्य वास्तवस्याभावात्, स्वलक्षणस्य सजातीयेतरव्यावृत्तात्मनः संम्बन्धाधिगमसव्यपेक्षप्रवृत्तिना शब्देन विषयीकर्तुमशक्यत्वात्, तद्व्यतिरिक्तस्य वस्तुनो ऽनुपलम्भात्, न चेन्द्रियार्थसन्निकर्षान्वयव्यतिरेकानुविधायिनी कल्पनाबुद्धिः तमन्तरेणापि भावात्, तस्मिन्सत्यपि च पूर्वानुभूतवाचकशब्दयोजनं विना ऽनुत्पादात्, यदि चेन्द्रियार्थसन्निकर्षस्तज्जनको भवेत् प्रथममेव तथाविधां धियं जनयेन्न च जनयति, तदयं शब्दस्मृतेरूर्ध्वमपि न जनक इति मन्यामहे । तदुक्तम्––

यः प्रागजनको बुद्धेरुपयोगाविशेषतः ।
स पश्चादपि तेन स्यादर्थापाये ऽपि नेत्रधीः ॥ इति ।

अपि च सत्यपीन्द्रियार्थसंसर्गे स्मृत्यपेक्षया सो ऽर्थस्तयैव व्यवहितः स्यात्, आह च—

अर्थोपयोगे ऽपि पुनः स्मार्त्त शब्दानुयोजनम् ।
अक्षधीर्यद्यपेक्षेत सो ऽर्थो व्यवहितो भवेत् ॥ इति ।

सङ्केतस्मरणसहकारिसव्यपेक्षमक्षमीदृशीं बुद्धिमुपजनयतीति चेद् न व्यक्तिरिक्ताव्यतिरिक्तापकारादिविकल्पैः सहकारिणो निरस्तत्वात्, किं च दण्डीत्यादिविकल्पविज्ञानं नेन्द्रियापातवेलायामेव जायते किं तु बहुप्रक्रियापेक्षम्, यदाह–

विशेषणं विशेष्यं च संबन्धं लौकिकीं स्थितिम् ।
गृहीत्वा सकलं चैतत्तथा प्रत्येति नान्यथेति ॥

---

(१) तदुक्तं न्यायबिन्दोः प्रथमपरिच्छेदे धर्मकीर्तिना 'तत्र कल्पनापोढमभ्रान्तं प्रत्यक्षम्' इति ।

न चेयतीं प्रक्रियां प्रथमनयनोपनिपातजातमविकल्पकं ज्ञानमुद्वोढुं क्षम-मित्याह ।

सङ्केतस्मरणोपायं दृष्टसङ्कल्पनात्मकम् ।
पूर्वापरपरामर्शशून्यन्तच्चाक्षुषं कथम् ॥ इति ।

तत्रैतत्स्यात्, द्विविधा विकल्पाः छात्रमनोरथविरचिताः इदन्ताग्राहिणश्च नीलमित्यादयः तत्र पूर्वे मा भूवन्प्रमाणं कस्तेष्वर्थनिरपेक्षजन्मसु प्रामाण्ये ऽभिनिवेशः, इदन्ताग्राहिणां त्वर्थाविनाभूतत्वात्कथं न प्रामाण्यमिति, उच्यते-सर्वएवामी विकल्पाः परमार्थतो ऽर्थं न स्पृशन्त्येव स हि निर्विकल्पकेनैवासर्वात्मना परिच्छिन्नः तदुक्तम्-

एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।
को ऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥ इति ।

यत्तु केषां चिद्विकल्पानामिदन्ताग्राहित्वस्पष्टत्वादि रूपं तदर्थाविनाभावि-निर्विकल्पकदर्शनपृष्ठभावित्वावाप्तच्छायासंसर्गजनितं न तु तेषामर्थस्पर्शः कश्चिदस्ति अर्थात्मनो निर्विकल्पेनैव मुद्रितत्वात् ।

तस्मादतात्त्विकाकारसमुल्लेखपुरस्सराः ।
न यथावस्तु जायन्ते कदा चिदपि कल्पनाः ॥

पञ्च चैताः कल्पना भवन्ति जातिकल्पना गुणकल्पना क्रियाकल्पना नाम-कल्पना द्रव्यकल्पना चेति, ताश्च क चिदभेदे ऽपि भेदकल्पनात् क चिच्च भेदे ऽप्यभेदकल्पनात्कल्पना उच्यन्ते ।

जातिजातिमतोर्भेदो न कश्चित्परमार्थतः ।
भेदारोपणरूपा च जायते जातिकल्पना ॥

इदमस्य गोर्गोत्वमिति न हि कश्चिद्भेदं पश्यति तेनाभेदे भेदकल्पनैव ।

एतया सदृशन्यायान्मन्तव्या गुणकल्पना ।
तत्राप्यभिन्नयोर्भेदः कल्प्यते गुणतद्वतोः ॥

तथा चाहुः-एष गुणी रूपादिभ्यो ऽर्थान्तरत्वेन नात्मानं दर्शयति तेभ्यश्च व्यतिरेकं वाञ्छसीति चित्रम् ।

भेदारोपणरूपैव गुणवत्कर्मकल्पना ।
तत्स्वरूपातिरिक्ता हि न क्रिया नाम का चन ॥

गच्छति देवदत्त इति देवदत्तस्यैवान्यूनानतिरिक्तस्य प्रतिभासात् ।

विभिन्नयोस्त्वभेदेन प्रवृत्ता नामकल्पना ।
चैत्रो ऽयमित्यभेदेन निश्चयो नामनामिनोः ॥

चैत्र इत्ययं शब्दः अयमित्यर्थः कीदृशमनयोः सामानाधिकरण्यम् ।

एवं दण्डूचयमित्यादिर्मन्तव्या द्रव्यकल्पना ।
सामानाधिकरण्येन भेदिनोर्ग्रहणात्तयोः ॥

ननु यद्यभेदे भेदं भेदं चाभेदमारोपयन्त्यः कल्पनाः प्रवर्त्तन्ते तत्कथमासु बाधकः प्रत्ययो न जायते शुक्तिकारजतबुद्धिवद्, उच्यते, यत्र वस्तु वस्त्वन्तरात्मना ऽवभासते तत्र बाधको भवति मरीचिष्विव जलबुद्धौ इह तु न जात्यादि वस्त्वन्तरमस्ति यतो वस्त्वन्तरात्मना ऽस्य ग्रहो भवेत्, व्यक्तिविषया एवैते सामानाधिकरण्यवैयधिकरण्यविकल्पाः तस्माद्वस्त्वन्तरानवभासिष्वेषु न बाधकः प्रत्ययो जायते, तस्मान्न विपर्ययात्मानो विकल्पाः, न चैते प्रमाणम्, एतदुल्लिख्यमानस्य जात्यादेरपारमार्थिकत्वात् अत एव प्रमाणविपर्ययाभ्यामयमन्य एव विकल्प इत्याचक्षते इत्यलं विस्तरेण ।

एवमेताः प्रवर्त्तन्ते वासनामात्रनिर्मिताः ।
कल्पितालीकभेदादिप्रपञ्चाः पञ्च कल्पनाः ॥
एवं च पश्यता तासां प्रामाण्यामोदमन्दताम् ।
भिक्षुणा लक्षणग्रन्थे तदपोढपदं कृतम् ॥

## बौद्धाभिमतस्य प्रत्यक्षलक्षणस्य खण्डनम्

अत्र प्रतिविधीयते, तदिदं संकीर्णप्रायमतिबहु विलपता भवता न नियतं किमपि विकल्पनानामप्रामाण्यकरणमिति स्पष्टमावेदितं तदुच्यताम्, किं शब्दार्थावभासित्वगर्भीकृतमसदर्थवाचित्वं तदप्रामाण्यकारणमभिमतमुत संकेतस्मृत्यपेक्षोपनतमनिन्द्रियार्थसन्निकर्षजत्वमुत विशेषणग्रहणाद्यपेक्षावाप्तं बहुप्रयाससाध्यत्वमुत पूर्वापरपरामर्शशून्यचाक्षुषवैलक्षण्यवाचोयुक्तिसमर्पितं विचारकत्वम् उत निर्विकल्पकपरिच्छिन्नवस्तुग्राहितानिबन्धनमधिगताधिगन्तृत्वम् उत भेदाभेदसमारोपभणितमतस्मिंस्तदिति ग्राहित्वम् उत वृत्तिविकल्पादिबाधितसामान्यग्रहणसूचितं बाध्यत्वमेवेति, तत्र तावन्न शब्दसंसर्गयोग्यार्थग्रहणद्वारकमसदर्थग्राहित्वमेषामप्रामाण्यकारणमभिधातुं युक्तम्, शब्दार्थस्य वास्तवस्य समर्थयिष्यमाणत्वात् कः पुनरसाविति चेद्य एव निर्विकल्पके प्रतिभासते किं निर्विकल्पके सामान्यादिकमवभासते बाढमभासते इति वक्ष्यामः, अत एव बाध्यत्वमपि न प्रामाण्यापहारकारणमेषां वक्तव्यम्, वृत्तिविकल्पादेर्बाधस्य परिहरिष्यमाणत्वात्, बाधकान्तरस्य च नेदमिति प्रत्ययस्य शुक्तिकारजतज्ञानादिवद्भवतैवानभ्युपगमात्, नाऽप्यनिन्द्रियार्थसन्निकर्षजन्यत्वं संकेतग्रहणकालानुभूतशब्दस्मरणापेक्षणादस्य वक्तव्यम्, सहकार्यपेक्षायामपि तद्व्यापारविरतेः ।

यः प्रागजनको बुद्धेः स लब्ध्वा सहकारिणम् ।
कालान्तरेण तां बुद्धिं विदधत्केन वार्यते ॥

व्यतिरिक्ताव्यतिरिक्तोपकारकरणादिविकल्पास्तु क्षणभङ्गभङ्गे निराकरिष्यन्ते, रूपग्रहणे च चक्षुषः प्रदीपादेरपेक्षायां दुष्परिहारास्ते विकल्पाः, न वै किं चिदेकं जनकमिति भवन्तो ऽपि पठन्ति, भवत्पक्षे ऽपि तुल्यास्ते यदुभयादोषो न तेनैकश्चोद्यो भवति, तस्मादुपयोगाविशेषादिन्द्रियालोकमनस्कारविषयवद्वाचकस्मरणमपि सामग्र्यन्तर्गतमेतत्प्रत्ययजन्मनि व्याप्रियते इति न वाचकस्मरणजनितत्वेन स्मार्त्तत्वादप्रमाणं विकल्पो रूपस्मृत्याख्यसमनन्तरप्रत्ययनिर्मितस्य निर्विकल्पस्य रसज्ञानस्यापि तथात्वप्रसङ्गात् ।

यच्चेदमुच्यते सो ऽर्थो व्यवहितो भवेदिति तत्र विद्मः कीदृशं व्यवधानमर्थस्येति, न हि दीपेन वा मनसा वा विज्ञानहेतुना कदा चिदर्थो व्यवधीयते, मनोवच्च वाचकस्मृतिरप्यसामग्र्यन्तर्गता सती तत्प्रतीतौ व्याप्रियते इति कथमर्थं व्यवदधीत, स्मृतिविषयीकृतः शब्दस्तमर्थं व्यवधत्ते इति चेन्न–शब्दस्य तत्प्रकाशकत्वेन ज्ञानवद् दीपवद्वा व्यवधायकत्वाभावात्, न चेन्द्रियव्यापारतिरोधानं व्यवधानं तस्याधुना ऽप्यनुवर्त्तमानत्वात् ।

यथा तद्भावभावित्वादाद्यविज्ञानमक्षजम् ।
तथा तद्भावभावित्वादुत्तरं ज्ञानमक्षजम् ॥

न हि वाचकस्मरणानन्तरमक्षिणी निमील्य विकल्पयति पटो ऽयमिति ।

अथ यावद्वाचकविज्ञानं हृदयपथमवतरति तावत्सो ऽर्थः क्षणिकत्वादतिक्रान्त इति व्यवहित उच्यते तदपि दुराशामात्रम्, क्षणभङ्गस्योपरिष्टान्निराकरिष्यमाणत्वात् ।

अपि च प्रदर्शितप्राप्त्यादिव्यवहारवत्सन्तानद्वारकमिहापि तद्ग्रहणं भविष्यतीति सर्वथा न व्यवधानम्, तदेवं समयस्मरणसापेक्षत्वेपि नेन्द्रियार्थसन्निकर्षोत्पन्नतामतिवर्त्तते सविकल्पकं विज्ञानमिति कथमप्रत्यक्षम्, यत्पुनर्विशेषणविशेष्यग्रहणादिसामग्र्यपेक्षत्वेन बहुप्रयाससाध्यत्वमप्रामाण्यकरणमभिधीयते तदतीव सुभाषितम्, न हि बहुक्लेशसाध्यत्वं नाम प्रामाण्यमुपहन्ति, उक्तं च न हि गिरिशृङ्गमारुह्य यद्गृह्यते तदप्रत्यक्षमिति,रसादिज्ञानापेक्षया च रूपज्ञानस्य दीपाद्यालोकाहरणप्रयाससाध्यत्वादप्रामाण्यं स्यात् ।

यदपि पूर्वापरपरामर्शरहितचाक्षुषविज्ञानवैपरीत्येन विकल्पज्ञानानां विचारकत्वादप्रामाण्यमुच्यते तदपि न सम्यक्, सर्वत्र ज्ञानस्य विचारकत्वानुपपत्तेः, विचारको हि माता स हि पश्यति स्मरत्यनुसन्धत्ते विचारयतीच्छति द्वेष्टि यतते गृह्णाति जहाति सुखमनुभवतीति वक्ष्यामः, अर्थं च स्पृशतो विज्ञानस्य विचारयतो ऽपि कथमप्रामाण्यं स्यात् ।

अथास्य निर्विकल्पकेनैव सर्वात्मना स्पृष्टत्वात्पिष्टपेषणमयुक्तम् इति सविकल्पमपि अधिगतार्थग्राहित्वादप्रमाणमिति मन्यसे तदपि न साधु पूर्वमेव परिहृतत्वात्, न ह्यनधिगताधिगन्तृत्वं प्रामाण्यमित्युक्तम्, गृहीतग्रहणे ऽपि प्रमाणस्य प्रमाणत्वानतिवृत्तेः।

यत्त्वभ्यधायि भिन्नेष्वभेदमभिन्नेषु च भेदं कल्पयन्त्यः कल्पना अतस्मिंस्तद्ग्रहे प्रामाण्यमवजहतीति तद्युक्तं अतस्मिंस्तद्ग्रहो भवत्यप्रमाणत्वकारणं तत्त्विह नास्ति तस्य हि बाधकप्रत्ययोपसन्निपातान्निश्चयः, न च भवदुपवर्णितासु पञ्चस्वपि जात्यादिकल्पनासु बाधकं किं चिदस्तीति नातस्मिंस्तद्ग्राहिण्यः कल्पना भवन्ति।

जातिर्जातिमतो भिन्ना गुणी गुणगणात्पृथक्।
तथैव तत्प्रतीतेश्च कल्पनोक्तिरबाधिका॥

एतच्चोपरिष्टान्निर्णेष्यते, द्रव्यनाम्नोस्तु भिन्नयोर्भेदेनैव प्रतीतिर्नाभेदकल्पना, न हि देवदत्तशब्दो ऽयमित्येवं तद्वाच्यावगतिरेषा न शब्दो ऽस्यामर्थारूढो ऽवभासते न शब्दविवर्त्तरूपेणार्थः परिस्फुरति किं तर्हि—

शब्दस्मृत्याख्यसामग्र्यसामार्थ्यातिशयाद्भवः।
प्रत्ययातिशयः सो ऽयमित्येवं प्राक् प्रसाधितम्॥

दण्ड्यमिति द्रव्याभेदकल्पना तु मन्दमतिभिरेवोदाहृता न हि दण्डो ऽयमिति देवदत्ते प्रतीतिः अपि तु दण्डीति, तत्र च प्रकृतिप्रत्ययौ पृथगेवोपलभ्येते दण्डो ऽस्यास्तीति दण्डी तदिह यथैव वस्तु तथैव तदवसाय इति नाभेदारोपः, कर्मणि तद् द्वयमपि नास्ति नाभिन्ने भेदकल्पनम्, न च भिन्ने ऽप्यभेदकल्पना।

क्रियाहि तत्त्वतो भिन्ना भेदेनैव च गृह्यते।
चलतीत्यादिबोधेषु तत्स्वरूपावभासनात्॥
तेन क्रियागुणद्रव्यनामजात्युपरञ्जितम्।
विषयं दर्शयन्नेति विकल्पो नाप्रमाणताम्॥
विपर्ययात्समुत्तीर्ण इति साधु सहामहे।
प्रमाणात्तु बहिर्भूतं विकल्पं न क्षमामहे॥
क्व चिद्बाधकयोगेन यदि तस्याप्रमाणता।
निर्विकल्पे ऽपि तुल्या ऽसौ द्विचन्द्राद्यवभासिनि॥
मनोराज्यविकल्पानां काममस्त्वप्रमाणता।
यथावस्तु प्रवृत्तानां न त्वसावक्षजन्मनाम्॥

न च निर्विकल्पकपृष्ठभावित्वकृतमेषामेतद्रूपम्, विषयसंस्पर्शमन्तरेण स्वतः स्वच्छरूपाणां ज्ञानानामेवमाकारत्वानुपपत्तेः, किं निर्विकल्पकपृष्ठभाविता क-

रिष्यति तदनन्तरभाविना हि स्मृतिरपि क चिद् दृश्यते एव, न च सा तच्छायावतीति दुराशामात्रमेतत् ।

ननु निर्विकल्पकेनैव वस्तुसर्वस्वं गृहीतम्, एकस्यार्थस्वभावस्येति वर्णितम्, प्रतिविहितमेतद् गृहीतग्रहणे ऽपि प्रामाण्यानपायात्, किं च किं निर्विकल्पकेन गृह्यते इत्येतदेव न जानीमः ।

भवन्तो निर्विकल्पस्य विषयं सम्प्रचक्षते ।
सजातीयविजातीयपरावृत्तं स्वलक्षणम् ॥
महासामान्यमन्ये तु सत्तां तद्विषयं विदुः ।
वाग्रूपमपरे तत्त्वं प्रमेयं तस्य मन्वते ॥
के चिद् गुणक्रियाद्रव्यजातिभेदादिरूषितम् ।
शबलं वस्तु मन्यन्ते निर्विकल्पकगोचरम् ॥
प्रत्यक्षविषये ऽप्येताश्चित्रं विप्रतिपत्तयः ।
परोक्षार्थे हि विमतिः प्रत्यक्षेणोपशाम्यति ॥
प्रत्यक्षे हि समुत्पन्ना विमतिः केन शाम्यति ।
इदं भाति न भातीति संविद्विप्रतिपत्तिषु ॥
परप्रत्यायने पुंसां शरणं शपथोक्तयः ।

न तु शपथशरणा एव निरुद्यममास्महे मार्गान्तरेणापि तत्प्रमेयं निश्चिनुमः ।

निर्विकल्पानुसारेण सविकल्पकसम्भवात् ।
ग्राह्यं तदानुगुण्येन निर्विकल्पस्य मन्महे ॥

तत्र न तावत्सकलसजातीयव्यावृत्तं स्वलक्षणं प्रत्यक्षस्य विषयः ।

गृहीते निर्विकल्पेन व्यावृत्ते हि स्वलक्षणे ।
अकस्मादेव सामान्यविकल्पोल्लसनं कथम् ॥

निर्विकल्पानुसारेण हि विकल्पाः प्रादुर्भवितुमर्हन्ति, अपि च—

विजातीयपरावृत्तिविषया यदि कल्पना ।
व्यावृत्तिरूपं सामान्यं गृहीतं हन्त दर्शनैः ॥
व्यावृत्तान्ननु नैवान्या व्यावृत्तिः परमार्थतः ।
व्यावृत्तग्रहणेनैवं सुतरां तद्ग्रहो भवेत् ॥
सामान्यग्रहणे ऽप्येवं तद्व्यापारविकल्पनात् ।
स्वलक्षणपरिच्छेदनिष्ठं तन्नावतिष्ठते ॥

नापि सत्ताद्वैतवादिसम्मतसत्ताख्यो निर्विकल्पस्य विषयो युक्तः ।

सत्ताग्रहणपक्षे ऽपि विशेषावगतिः कुतः ।
सा भाति भेदस्पृष्टा चेत्सिद्धमद्वैतदर्शनम् ॥

न च भेदं विना सत्ता ग्रहीतुमपि शक्यते ।
नाविद्यामात्रमेवेदमिति च स्थापयिष्यते ॥
वाक्तत्त्वप्रतिभासो ऽपि प्रतिक्षिप्तो ऽनया दिशा ।
कथं च चाक्षुषे ज्ञाने वाक्तत्त्वमवभासते ॥
अगृहीते तु संबन्धे गृहीते वापि विस्मृते ।
अप्रबुद्धे ऽपि संस्कारे वाचकावगतिः कुतः ॥
चित्रतापि पृथग्भूतैर्धर्मैस्तत्समवायिभिः ।
जात्यादिभिर्यदीष्येत धर्मिणः काममस्तु सा ॥
तदात्मता तु नैकस्य नित्यं तत्त्वानुपग्रहात् ।
अंशनिष्कर्षपक्षे तु धर्मभेदो बलाद्भवेत् ॥
यस्य यत्र यदोद्भूतिर्जिघृक्षा चेति कथ्यते ।
तदात्मकत्वं धर्माणामुच्यते चेत्यसंगतम् ॥
देशभेदस्तु धर्माणामस्माभिरपि नेष्यते ।
धर्मी हि तेषामाधारो न पुनः स तदात्मकः ॥
तस्माद्य एव वस्त्वात्मा सविकल्पस्य गोचरः ।
स एव निर्विकल्पस्य शब्दोल्लेखविवर्जितः ॥
किमात्मको ऽसाविति चेद्यद्यदा प्रतिभासते ।
वस्तुप्रमितयश्चैव प्रष्टव्या न तु वादिनः ॥
क चिज्जातिः क्वचिद्द्रव्यं क्वचित्कर्म क्वचिद्गुणः ।
यदेव सविकल्पेन तदेवानेन गृह्यते ॥
इद शब्दानुसन्धानमात्रमभ्यधिकं परम् ।
विषये न तु भेदो ऽस्ति सविकल्पाविकल्पयोः ॥
अतः शब्दानुसन्धानबन्ध्यं तदनुबन्धि वा ।
जात्यादिविषयग्राहि सर्वं प्रत्यक्षमिष्यते ॥
तस्माद्यत्कल्पनापोढपदं प्रत्यक्षलक्षणे ।
भिक्षुणा पठितं तस्य व्यवच्छेद्यं न विद्यते ॥

अभ्रान्तपदस्यापि व्यावर्त्यं न किं चन तन्मतेन पश्यामः ।

ननु तिमिराशुभ्रमणनौयानसंक्षोभाद्याहितविभ्रमं द्विचन्द्रालातचक्रचलत्पादपादिदर्शनमपोह्यमस्य परैरुक्तम्, सत्यमुक्तम् अयुक्तं तु कल्पनापोढपदेनैव तद्व्युदाससिद्धेः तत्रापि निर्विकल्पकं ज्ञानमेकं चन्द्रादिविषयमेव विकल्पास्तु विपरीताकारग्राहिणो भवन्ति यथा मरीचिग्राहिणि निर्विकल्पके सलिलावसायी विकल्प इति,

ननु तिमिरेण द्विधाकृतं चक्षुरेकतया न शक्नोति शशिनं ग्रहीतुमि·

ति निर्विकल्पकमपि द्विचन्द्रज्ञानम् , यद्येवं तरङ्गादिसादृश्यरूषितमूषरे मरीचिचक्रं चक्षुषा परिच्छेत्तुमशक्यमिति तत्रापि निर्विकल्पकमुदकग्राहि विज्ञानं किमिति नेष्यते, अभ्युपगमे वा सदसत्कल्पनोत्पातादिकृतः प्रमाणेतरव्यवहारो न स्यात्, अपि च न बाधकोपनिपातमन्तरेण भ्रान्तता ऽवकल्पते ज्ञानानां न च क्षणिकवादिमते बाध्यबाधकभावो बुद्धीनामुपपद्यते इत्यलं विमर्देन ।

इति सुनिपुणबुद्धिर्लक्षणं वक्तुकामः
पदयुगलमपीदं निर्ममे नानवद्यम् ।
भवतु मतिमहिम्नश्चेष्टितं दृष्टमेत-
ज्जगदभिभवधीरं धीमतो धर्मकीर्त्तेः ॥
श्रोत्रादिवृत्तिरपरैरविकल्पिकेति
प्रत्यक्षलक्षणमवर्णि तदप्यपास्तम् ।
साम्यान्न यस्य न च सिद्ध्यति बुद्धिवृत्त्या
दृष्टत्वमात्मन इति प्रतिपादितं प्राक् ॥

## मीमांसकाभिमतस्य प्रत्यक्षलक्षणस्य खण्डनम्-

सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादित्येतत्सूत्रं जैमिनीयैः साक्षात्प्रत्यक्षलक्षणपरत्वेन न व्याख्यातम्, चोदनालक्षणो ऽर्थो धर्म इति प्रकृतप्रतिज्ञासङ्गत्यभावादपि तु धर्मं प्रति प्रत्यक्षमनिमित्तमेवंलक्षणकत्वादित्यनुवादत्वं लक्षणस्यापि सम्भवेदिति तदेतल्लक्षणवर्णने सूत्रयोजनमसमीचीनम् , अतिव्याप्तिदोषानतिवृत्तेः, तथा हीन्द्रियाणां सत्सम्प्रयोगे सति पुरुषस्य जायमाना बुद्धिः प्रत्यक्षमितिसूत्रार्थः, तथा चातिव्याप्तिः संशयविपर्ययबुद्ध्योरपि इन्द्रियसंप्रयोगजत्वेन प्रत्यक्षत्वप्रसङ्गात् ,

अथ सत्सम्प्रयाग इति सतां सम्प्रयोग इति व्याख्यायते तथा ऽपि निरालम्बनविभ्रमा एवार्थनिरपेक्षजन्मानो निरस्ता भवेयुर्न सालम्बनौ संशयविपर्ययौ ।

अथ सति सम्प्रयोगे इति सत्सप्तमीपक्ष एव न त्यज्यते संशयविपर्यच्छेदी च सम्प्रयोग इत्युपसर्गो वर्ण्यते यथोक्तम्—

सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
दुष्टत्वाच्छुक्तिकायोगो वार्यतामक्षजेक्षणात् ॥ इति ॥

तथापि प्रयोगसम्यक्त्वस्यातीन्द्रियत्वेन प्रत्यक्षानवगम्यत्वात्कार्यतो ऽवगतिर्वक्तव्या, कार्यं च ज्ञानं न च तदविशेषितमेव प्रयोगस्य सम्यक्तामवगमयति, न च तद्विशेषणपरमिह पदमप्यक्षरमपि मात्रामात्रमपि वा सूत्रे पश्यामः, सतां प्रयोग इति च परं निरालम्बनविज्ञाननिवृत्तये वर्णितम् , सतीति तु सप्तम्यैव गतार्थत्वादनर्थम् , लोकत एव कार्यविशेषावगमात्प्रयोगसम्यक्त्वमवगमिष्याम

इति चेल्लोकत एव प्रत्यक्षस्य सिद्धत्वात् किं तल्लक्षणे सूत्रसामर्थ्ययोजनाक्लेशेन,

यदप्यत्रभवान्वृत्तिकारः प्राह—यद्व्यभिचारि न तत्प्रत्यक्षम् यत्प्रत्यक्षं यद्विषयं ज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षमित्येवं तत्सतोऽर्थत्ययेन लक्षणमनपवादमवकल्पते इति तदपि वृथाटाट्यामात्रम् , संशयज्ञानेन व्यभिचारानतिवृत्तेः, तत्र हि यद्विषयं ज्ञानं तेन सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षं तदन्यविषयं ज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षमस्त्येव ।

ननूभयविषयं ज्ञानं न चोभाभ्यां सम्प्रयुक्तमिन्द्रियम् , मैवम्—न हि, धवखदिरवत् द्वावपि संशयसंविदि प्रतिभासेते किं तु स्थाणुर्वा पुरुषो वेत्यनिर्धारितैकतरपदार्थतत्त्वावमर्शी संशयो जायते, नूनं च तयोरन्यतरेणेन्द्रियं सम्प्रयुक्तमेवेति उभयावमर्शित्वाच्च संशयस्य येन सम्प्रयुक्तं चक्षुस्तद्विषयमपि तज्ज्ञानं भवत्येवेति नातिव्याप्तिः परिहृता भवति ।

अथ ब्रूयुः किमनेन परिक्लेशेन न लक्षणवर्णनमस्माकमभिमतम् अनुवादपक्षनिक्षिप्तत्वात् , अपि तु लोकप्रसिद्धप्रत्यक्षानुवादेन धर्मं प्रति अनिमित्तत्वमेव विधीयते न धर्मं प्रति प्रमाणं प्रत्यक्षं विद्यमानोपलम्भनत्वाद्विद्यमानार्थग्राहित्वादित्यर्थः धर्मश्च न वर्त्तमानस्त्रिकालानवच्छिन्नस्य तस्य यजेत दद्याज्जुहुयाद् इत्यादिशब्देभ्यः प्रतीतेः, तर्हि सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति किमर्थो ग्रन्थ इति चेन्न, विद्यमानोपलम्भनत्वमसिद्धमिति परो ब्रूयात्स वक्तव्यः विद्यमानोपलम्भनं प्रत्यक्षं सत्सम्प्रयोगजत्वादिति, प्रत्यक्षग्रहणमपि हेतुनिर्देशार्थमेव, सत्सम्प्रयोगस्यासिद्धतां ब्रुवन्ननेन प्रत्याख्यायते, सत्सम्प्रयोगजं प्रत्यक्षं प्रत्यक्षत्वादिति, तदुक्तम् , प्रत्यक्षत्वमतो हेतुः शेषहेतुप्रसिद्धये इति, स्वातन्त्र्येणापि प्रत्यक्षत्वं धर्मग्राहकत्वनिषेधाय वक्तव्यम् , न धर्मग्राहि प्रत्यक्षं प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदित्येवमन्यत्रैव सूत्रतात्पर्यान्नातिव्याप्त्यादिदोषावसर इहेति, तदेतदपि न प्रामाणिकमनोनुकूलम् , कतरस्य प्रत्यक्षस्य धर्मं प्रत्यनिमित्तत्त्वं प्रतिपाद्यते किमस्मदादिप्रत्यक्षस्य योगिप्रत्यक्षस्य वा, तत्रास्मदादिप्रत्यक्षस्य तथात्वे सर्वेषामविवाद एवेति किं तत्रेयता श्रमेण, योगिप्रत्यक्षस्य तु भवतामसिद्धत्वात्कस्य धर्मं प्रत्यनिमित्तत्वप्रतिपादनम् ।

एवं च धर्मिणोऽभावादाश्रयासिद्धतां स्पृशेत् ।
विद्यमानोपलम्भत्वप्रत्यक्षत्वादिसाधनम् ॥

परप्रसिद्ध्या तत्सिद्धिरिति चेत्केयं प्रसिद्धिर्नाम, प्रमाणमूला तद्विपरीता वा, आद्ये पक्षे प्रमाणस्यापक्षपातित्वात्परस्येव तवापि तत्सिद्धिर्भवतु, अप्रमाणमूलत्वे तु न कस्य चिदप्यसौ प्रसिद्धिः ।

योगिज्ञानं परेषां यत्सिद्धं तदनुभाषणे ।
प्रतिज्ञापदयोरेव व्याघातस्ते प्रसज्यते ॥

परैर्हि धर्मग्राहि योगिज्ञानमभ्युपगतम् अतस्तदनुभाषणे धर्मग्राहकं न धर्मग्राहकमिति उक्तं स्यात् ।

परसंसिद्धमूलं च नानुमानं प्रकल्पते ।
उक्तं भवद्भिरेवेदं निरालम्बनदूषणम् ॥
साध्यसिद्धिर्यथा नास्ति परसिद्धेन हेतुना ।
तथैव धर्मिसिद्धत्वं परसिद्ध्या न युज्यते ॥

तत्रैतत्स्यात् प्रसङ्गसाधनमिदं प्रसङ्गश्च नाम परप्रसिद्धेन परस्यानिष्टापादनमुच्यते, परस्य च विद्यमानोपलम्भनं सत्सम्प्रयोगजन्यं च प्रत्यक्षं प्रसिद्धम्, अतस्तेनैव धर्मेण हेतुना धर्मानिमित्तत्त्वं तस्योपपद्यते इति को दोषः नैतदेवम्—

प्रसङ्गसाधनं नाम नास्त्येव परमार्थतः ।
तद्धि कुड्यं विना तत्र चित्रकर्मेव लक्ष्यते ॥

न हि नभःकुसुमस्य सौरभासौरभविचारो युक्तः, अथापि किं न एतेन भवत्विदं प्रसङ्गसाधनम् ।

तदत्रापि न तु व्याप्तिप्रतीतिरिह मादृशाम् ।
न धर्मग्राहि सर्वेषां प्रत्यक्षमिति वेत्ति कः ॥

मत्प्रत्यक्षमक्षमं धर्मग्रहणे इति भवान्न जानीते त्वत्प्रत्यक्षमपि न धर्मग्राहीति नाहं जाने अन्यस्य प्रत्यक्षमीदृशमेवेत्युभावप्यावां न जानीवहे ।

त्वया तु यदि सर्वेषां प्रत्यक्षं ज्ञातमीदृशम् ।
तर्हि त्वमेव योगीति योगिनो द्वेक्षि किं वृथा ॥
प्रामाणिकस्थितिं तस्मादित्थं श्रोत्रिय बुध्यसे ।
परोक्षे ऽतीन्द्रिये ह्यर्थे मा वादीर्दूषणं पुनः ॥
प्रमाणसिद्धे हतशक्तिदूषणं प्रमाणशून्ये ऽपि वृथा तदुक्तयः ।
निरस्य चोद्यव्यसनं तु मृग्यतामतीन्द्रिये वस्तुनि साधनं पुनः ॥
स चेत्पर्यनुयुक्तः सन्वक्तुं शक्नोति साधनम् ।
ओमिति प्रतिपत्तव्यं नो चेन्नास्त्येव तस्य तत् ॥

## योगजप्रत्यक्षसाधनम्—

आह शिक्षिताः स्मः प्रामाणिकवृत्तं न दूषणं ब्रूमो भवन्तमेवाऽनुयुञ्ज्महे तदेतर्हि कथ्यतां धर्माधिगमनिपुणयोगिप्रत्यक्षसिद्धौ किं प्रमाणमिति, इदमुच्यते दर्शनातिशय एव प्रमाणम्, तथा ह्यस्मदादिरपेक्षितालोको ऽवलोकयति निकटस्थितमर्थवृन्दम्, उन्दुरुवैरिणस्तु (१)सान्द्रतमतमःपङ्कपटलविलिप्तदेशपतितमपि संपश्यन्ति, संपातिनामा च गृध्रराजो योजनशतव्यवहितामपि

(१) उन्दुरुर्मूषकस्तद्वैरी बिडालः ।

दशरथनन्दनसुन्दरीं ददर्शेति श्रूयते रामायणे, सा ऽयं दर्शनातिशयः शुक्लादिगुणातिशय इव तारतम्यसमन्वित इति गमयति परमपि निरतिशयमतिशयम् अतश्च यत्रास्य परः प्रकर्षः ते योगिनो गीयन्ते, दर्शनस्य च परो ऽतिशयः सूक्ष्मव्यवहितविप्रकृष्टभूतभविष्यदादिविषयत्वम्,

ननु स्वविषयानतिक्रमेण भवतु तदतिशयकल्पना धर्मस्तु चक्षुषो न विषय एव, यदुक्तम्—

यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मदिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता(१)॥

अपि च—

ये ऽपि चातिशया दृष्टाः प्रज्ञामेधाबलैर्नृणाम्।
स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनादिति॥

एतदयुक्तम्, यतो यद्यपि नास्मदादिनयनविषयो धर्मः तथापि योगीन्द्रियगम्यो भविष्यति, तथाहि योजनशतव्यवहितमन्धकारान्तरितं वा नास्मदादिलोचनगोचरतामुपयाति सम्पातिवृषदंश(२)दृशोस्तु विषयो भवत्येव,

नन्वेवमविषये प्रवृत्तं योगिनां चक्षुर्गन्धरसादीनपि गृह्णीयात, यथोक्तम्—

एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते।
नूनं स चक्षुषा सर्वान् रसादीन्प्रतिपद्यते(३)॥ इति।

नैतदेवम्, रसादिग्राहीण्यपि योगिनामिन्द्रियाणि चक्षुर्वदतिशयवन्त्येवेति न रसादिषु चक्षुर्व्यापारः परिकल्प्यते, धर्मे ऽपि न तर्हि कल्पनीय इति चेद् न तस्य रसादिवत्तदविषयता शब्दस्याभावात्

अपि च योगीन्द्रियाविषयत्वं धर्मस्य कथमवगतवान्भवान्, अविषयत्वं तद्भावे ऽपि तदनवगमादवगम्यते यथा नयनसद्भावे ऽपि शब्दाश्रवणात्तदविषयता शब्दस्यावसीयते, न चैवं योगिचक्षुषि सत्यपि धर्मस्याग्रहणमवगन्तुं शक्नोति भवानुभयस्यापि भवतः परोक्षत्वादिति विषयस्स तस्य नेति नैव वक्तुं युक्तमिति।

ननु कर्त्तव्यतारूपः त्रिकालस्पर्शवर्जितः।
चक्षुर्विषयतामेति धर्म इत्यतिसाहसम्॥
सत्यं साहसमेतत्ते मम वा चर्मचक्षुषः।
न त्वेष दुर्गमः पन्था योगिनां सर्वदर्शिनाम्॥

(१) श्लोकवार्तिके सू० २ श्लोक ११३।
(२) श्लोकवार्तिके सू० २ श्लोक १११।
(३) वृषदंशो विडालः।

यच्च त्रिकालानवच्छिन्नो यजेतेत्यादिलिङादियुक्तशब्दैकशरणावगमो धर्मः कथं ततो ऽन्येन प्रमाणेन परिच्छिद्यतामित्युच्यते तदपि प्रक्रियामात्रम्, किमिव हि त्रिकालस्पर्शास्पर्शाभ्यां कृत्यम्, यथा वयं गमनादिक्रियाणां देशान्तरप्राप्त्यादिप्रयोजनतां जानीमस्तथा ऽग्निहोत्रादिक्रियाणां स्वर्गादिफलतां ज्ञास्यन्ति योगिन इति किमत्र साहसम्, यदि हि बाह्येन्द्रियेष्वसर्षो न तेष्वतिशयो विषह्यते तदलमनुबन्धेन ।

मनःकरणकं ज्ञानं भावनाभ्याससम्भवम् ।
भवति ध्यायतां धर्मे कान्तादाविव कामिनाम् ॥

मनो हि सर्वविषयं न तस्याविषयः कश्चिदस्ति, अभ्यासवशाच्चातीन्द्रियेष्वप्यर्थेषु परिस्फुटाः प्रतिभासाः प्रादुर्भवन्तो दृश्यन्ते, यथा ऽऽहुः—

कामशोकाभयोन्मादचौरस्वप्नाद्युपद्रुताः ।
अभूतानपि पश्यन्ति पुरतो ऽवस्थितानिव ॥ इति ।

नन्वेतेषां मिथ्याज्ञानत्वान्न योगिविज्ञाने दृष्टान्तत्वं युक्तम्, न स्फुटाभासमात्रतया दृष्टान्तत्वोपपत्तेः, न हि शब्दघटयोरपि सर्वात्मना तुल्यत्वम्, तत्र कामशोकादिभावनाभ्यासभुवां प्रतिभासानां बाधकवैधुर्यादप्रामाण्यं भविष्यति नेतरेषां तदभावात्, स्फुटाभासत्वं तूभयत्रापि तुल्यम् ।

नन्वभ्यासो ऽपि क्रियमाणो नात्यन्तमपूर्वमतिशयमावहति लङ्घनाभ्यासवत्, योऽपि हि प्रतिदिनमनन्यकर्मा लङ्घनमभ्यस्यति सो ऽपि कतिपयपदपरिमितमवनितलमभिलङ्घयति न तु पर्वतमम्बुधिं वेति,

## प्रातिभज्ञाननिरूपणम्—

उच्यते—

लङ्घनं देहधर्मत्वात्कफजाड्यादिसम्भवात् ।
मा गात्प्रकर्षं ज्ञाने तु तस्य कः प्रतिबन्धकः ॥
लङ्घनादौ तु पूर्वेद्युः प्रयत्नसमुपार्जितः ।
न देहे ऽतिशयः कश्चिदन्येद्युरवतिष्ठते ॥
तत्र केवलमभ्यासात्प्रक्षये कफमेदसोः ।
शरीरलाघवं लब्ध्वा लङ्घयन्ति यथोचितम् ॥
इह विज्ञानजन्यस्तु संस्कारो व्यवतिष्ठते ।
क्रमोपचीयमानो ऽसौ परातिशयकारणम् ॥
यथानुवाकग्रहणे संस्थाऽभ्यसनकल्पितः ।
स्थिरः करोति संस्कारः पाठस्मृत्यादिपाटवम् ॥
यथा वा पुटपाकेन शोध्यमानं शनैः शनैः ।
हेमनिष्प्रतिकाशं तद्याति कल्याणतां पराम् ॥

तथैव भावनाभ्यासाद् योगिनामपि मानसम् ।
ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत् ॥
अस्मदादेश्च रागादिमलावरणधूसरम् ।
मनो न लभते ज्ञानप्रकर्षपदवीं पराम् ॥
प्रत्यूहभावनाऽभ्यासक्षपिताशेषकल्मषम् ।
योगिनां तु मनः शुद्धं कमिवार्थं न पश्यति ॥
यथा च तेषां रागादि प्रमाणमवकल्पते ।
तथा ऽपवर्गचिन्तायां विस्तरेणाभिधास्यते ॥
तदेवं क्षीणदोषाणां ध्यानावहितचेतसाम् ।
निर्मलं सर्वविषयं ज्ञानं भवति योगिनाम् ॥
अपि चानागतं ज्ञानमस्मदादेरपि क्वचित् ।
प्रमाणं प्रातिभं श्वो मे भ्राता ऽऽगन्तेति दृश्यते ॥
नानर्थजं न संदिग्धं न बाधविधुरीकृतम् ।
न दुष्टकारणं चेति प्रमाणमिदमिष्यताम् ॥
क्वचिद्बाधकयोगश्चेदस्तु तस्याप्रमाणता
यत्रापरेद्युरभ्येति भ्राता तत्र किमुच्यताम् ॥
काकतालीयमिति चेन्न प्रमाणप्रदर्शितम् ।
वस्तु तत् काकतालीयमिति भवितुमर्हति ॥

नन्वनर्थजमिदं ज्ञानं भ्रातुस्तज्जनकस्य तदानीमसत्त्वात्, स्यादेतदेवम्—यदि तदा ऽस्तित्वेन भ्रातरं गृह्णीयात्, किं तु भाविनमेनं गृह्णाति भावित्वं च तदस्यास्त्येवेति कथमनर्थजं तज्ज्ञानम् ।

ननु भावितया ग्रहणमघटमानं भावित्वं हि नाम सावधिः प्रागभावः अभावस्य च भावेन भ्रात्रा सह कः सम्बन्धः, वस्त्ववस्तुनोर्विरोधात्, तदेतदसम्यक्, तद्देशसंबन्धस्य तत्र प्रागभावो न तु धर्मिणः, स हि विद्यते एव प्रागभावतः, स च कुतश्चिद्भोजनोत्कण्ठादेः कारणात् स्मरणपदवीमुपारूढः श्वस्तनागमनविशिष्टत्वेन प्रतिभातीति प्रातिभस्य स एव जनक इति, तस्मादनर्थजत्वाभावात्प्रमाणं प्रातिभम्, प्रमाणं च सत्प्रत्यक्षमेव न प्रमाणान्तरम्, शब्दलिङ्गसारूप्यनिमित्तानपेक्षत्वात् ।

ननु प्रत्यक्षमपि मा भूदिन्द्रियानपेक्षत्वात्, मैवम् मनस एव तत्रेन्द्रियत्वात्, पूर्वोत्पन्नचाक्षुषविज्ञानविशेषणस्य बाह्यस्य वस्तुनो मनो ग्राहकमिति नान्धाद्यभाव इत्युक्तम्, शब्दाद्युपायान्तरविरतौ च जायमानमनवद्यं ज्ञानं मानसं प्रत्यक्षं भवति सुरभि केतककुसुमं मधुरा शर्करेति ज्ञानवदित्यप्युक्तम्, अत एव नानियतनिमित्तकं ज्ञानं प्रत्यक्षातिरिक्तस्यार्षनाम्नः प्रत्ययस्याभावात्,

'ऋषीणामपि यज् ज्ञानं तदप्यागमपूर्वकम्' इति हि वदन्ति, आगमग्रहणं च निदर्शनार्थम्, अनुपायस्य ज्ञानस्य तेषामसत्त्वात्, न च सिद्धदर्शनं प्रतिभाऽस्मदादेरपि भावात्, तस्मान्न प्रमाणान्तरं प्रातिभम् अपि तु प्रत्यक्षमेव।

ननु प्रत्यक्षमपि नेदं भवति तद्धि वर्त्तमानैकविषयम्, यथोक्तम् संबद्धं वर्त्तमानं च गृह्यते चक्षुरादिनेति, तथा एष प्रत्यक्षधर्मश्च वर्तमानार्थतयैवेति, मैवम्, अनागतग्राहिणः प्रत्यक्षस्य प्रदेशान्तरे स्वयमेवोक्तत्वात्, 'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते' इति भवानेवावोचत्, तस्मात्प्रत्यक्षमनागतग्राहि श्वो मे भ्राता ऽऽगन्तेति सिद्धम्, एवं चास्मदादीनामिवानागते भ्रातरि योगिनां भविष्यति धर्मे प्रत्यक्षं प्रवर्त्स्यतीति, तस्माद्यत्सर्वज्ञनिषेधाय कथ्यते—

यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम्।
भवेदिदानीं लोकस्य तथा कालान्तरे ऽप्यभूदिति ॥

तदपास्तं भवति, तत्रैतत्स्यात्, सर्वज्ञता योगिनां किमेकेन ज्ञानेन बहुभिर्वा, न तावदेकेन न ह्येकस्मिन्ज्ञाने परस्परविरोधिनो ऽर्थाः शीतोष्णवदवभासते, नापि बहुभिः तानि हि क्रमेण वा भवेयुर्युगपद्वा न युगपज्ज्ञानानि सम्भवन्ति सूक्ष्मान्तःकरणसापेक्षत्वात्, क्रमभाविभिस्तु, ज्ञानैरशेषत्रिभुवनकुहरनिहितनिखिलपदार्थसार्थसाक्षात्करणमेषां मन्वन्तरकोटिभिरपि दुर्घटमिति कथं सर्वज्ञा योगिनः, उच्यते, युगपदेकयैव बुद्ध्या सर्वत्र सर्वानर्थान् द्रक्ष्यन्ति योगिनः,

यत्तु विरुद्धत्वादिति तदप्रयोजकम्, विरुद्धानामपि नीलपीतादीनामेकत्र चित्रप्रत्यये भासनात्, एकत्र च मेचकप्रत्यये सन्निहितपदार्थव्यतिरिक्तसकलवस्तवभावग्रहणं पूर्वस्य (१)दर्शितत्वात्, शीतोष्णयोरपि क चिदवसरे भवति युगपदुपलम्भस्तद्यथा प्रतपति हुतवहविस्फुलिङ्गनिकरानुकारिकिरणे तरुणोष्मणि ग्रीष्मे हिमशकलशिशिरपयसि सरसि निमग्ननाभिदघ्नदेहस्य पुंसो युगपदेव सरः सलिलसूर्यातपवर्तिनौ शीतोष्णस्पर्शावनुभवपथमवतरतः,

नन्वेकेन ज्ञानेन सर्वानर्थान् भूतभाविनः परोक्षानपि पश्यन्तो योगिनः कथमखिलत्रैलोक्यवृत्तान्तदर्शिनः सकलजगद्गुरोरीश्वराद्विशिष्येरन्, अस्ति विशेष ईश्वरस्य तथाविधं नित्यमेव ज्ञानं योगिनां तु योगभावनाभ्यासप्रभवमिति।

ननु नादृष्टपूर्वे ऽर्थे क चिद्भवति भावना।
आगमात्तु परिच्छिन्ने धर्मे भावनया ऽपि किम् ॥

चोदनैव धर्मे प्रमाणमिति सावधारणप्रतिज्ञार्थः प्रथममागमादवगतधर्मस्वरूपेषु सत्स्वपि योगिषु न विप्लवत एवेति, उच्यते योगिष्वस्त्येवायं प्रकारः, पश्चादपि प्रवर्त्तमाने धर्मग्राहिणि प्रत्यक्षे चोदनैवेत्यवधारणं शिथिलीभवत्येव।

---

(१) ग्रहणस्य पूर्वमिति युक्तः पाठः।

अपि चेश्वरज्ञानं सांसिद्धिकमेव धर्मविषयं वेदस्य कारणभूतं वक्ष्यामः, तस्मिन्नपि सति न चोदनैवेत्यवधारणार्थसिद्धिः, तस्मान्न धर्मग्राहकं योगिप्रत्यक्षं विद्यमानोपलम्भनत्वात्सत्सम्प्रयोगजत्वादित्यादिसाधनमप्रयोजकम् ।

प्रमाणान्तरविज्ञातप्रमेयप्रतिपादकः ।
धर्मोपदेशकः शब्दः शब्दत्वाद् घटशब्दवत् ॥
प्रत्यक्षः कस्य चिद्धर्मः प्रमेयत्वाद् घटादिवत् ।
इत्यादयश्च सुलभाः सन्त्येव प्रतिहेतवः ॥
तेन निष्प्रतिभयुक्तिसाधितां योगबुद्धिमखिलार्थदर्शिनीम् ।
किं विडम्बयितुमुच्यते मुधा दुष्टहेतुनिकुरुम्बशम्बरम् ॥

तदित्थमपि जैमिनीयं सूत्रमसङ्गतार्थम्, लक्षणपरत्वं त्वस्य निरस्तमेव ।

यदपि कैश्चित्प्रत्यक्षलक्षणमुक्तम्, आत्मेन्द्रियमनोऽर्थसन्निकर्षाद्यदुत्पद्यते ज्ञानं तदन्यदनुमानादिभ्यः प्रत्यक्षमिति, तदपि त्रयद्वयसन्निकर्षजन्मनां सुखात्मादिज्ञानानामव्यापकमतिव्यापकं च व्यभिचार्यादिबोधानामित्युपेक्षणीयम् ।

## सांख्याभिमतप्रत्यक्षलक्षणखण्डनम्—

ईश्वरकृष्णस्तु प्रतिविषयाध्यवसायो दृष्टमिति प्रत्यक्षलक्षणमवोचत्, तदपि न मनोज्ञम्, अनुमानादिज्ञानानामपि विषयाध्यवसायस्वभावत्वेनातिव्याप्तेः, यत्तु राजा व्याख्यातवान् प्रतिराभिमुख्ये वर्त्तते तेनाभिमुख्येन विषयाध्यवसायः प्रत्यक्षमिति तदप्यनुमानादावस्त्येव, घटो ऽयमितिवदग्निमान् पर्वत इत्याभिमुख्येनैव प्रतीतेः, स्पष्टता तु सर्वसंविदां स्वविषये विद्यते एव, अथ मन्यसे सामान्यविहितस्य विशेषेण बाधादनुमानादिव्यावृत्तिः सेत्स्यति सामान्येनाध्यवसाय उत्सृष्टः स लिङ्गशब्दाभ्यां विशेषित इति तदितरो ऽध्यवसायः प्रत्यक्षमिति स्थास्यति, यद्येवं प्रत्यक्षलक्षणमिदानीमव्याकरणीयमेव, शब्दलिङ्गग्रहणे वर्णिते सति तद्वैलक्षण्यादेव प्रत्यक्षं ज्ञास्यते इति, तस्मादिन्द्रियार्थसन्निकर्षोत्पन्नपदोपादानमन्तरेण नानुमानादिव्यवच्छेद उपपद्यते इति इदमपि न प्रत्यक्षलक्षणमनवद्यम् ।

अलमतिविस्तरेण परदर्शनगीतमतो
विगतकलङ्कमस्ति न हि लक्षणमक्षधियः ।
तदमलमक्षपादमुनिनैव निबद्धमिदं
हरति मनांसि लक्षणमुदारधियाम् ॥

## अथानुमानलक्षणम्—

एवं प्रमाणज्येष्ठे ऽस्मिन् प्रत्यक्षे लक्षिते सति ।
कथ्यते ऽवसरप्राप्तमनुमानस्य लक्षणम् ॥

तत्पूर्वकं च त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च ॥ ५ ॥

तत्रानुमानस्वरूपं ब्रूमहे ततस्तत्र सूत्रं योजयिष्यामः ।

पञ्चलक्षणकाल्लिङ्गाद्गृहीतान्नियमे स्मृतेः ।
परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते ॥

अत्रापि लिङ्गविषयं ज्ञानं ज्ञानविषयीकृतं वा लिङ्गं प्रतिबन्धस्मरणसहितं प्रमाणम्, लिङ्गज्ञानं फलम्, लिङ्गिज्ञानस्य वा प्रमाणतायां पूर्ववदुपादानादिज्ञानं फलमुपवर्णनीयं करणस्य हि प्रमाणत्वमिति स्थितमेवैतत्, तत्र परोक्षो ऽर्थो लिङ्गयते गम्यते ऽनेनेति लिङ्गम्, तच्च पञ्चलक्षणम्, कानि पुनः पञ्च लक्षणानि, पक्षधर्मत्वं सपक्षधर्मत्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति, सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः तद्धर्मत्वं तदाश्रितत्वमित्यर्थः, साध्यधर्मयोगेन निर्ज्ञातं धर्म्यन्तरं सपक्षः तत्रास्तित्वम्, साध्यधर्मसंस्पर्शशून्यो धर्मी विपक्षः ततो व्यावृत्तिः, अनुमेयस्यार्थस्य प्रत्यक्षेणागमेन वा ऽनपहरणमबाधितविषयत्वम्, संशयबीजभूतेनार्थेन प्रत्यनुमानतया प्रयुज्यमानेनानुपहतत्वमसत्प्रतिपक्षत्वम्, एतैः पञ्चभिर्लक्षणैरुपपन्नं लिङ्गमनुमापकं भवति, एतेषामेव लक्षणानामेकैकापायात्पञ्च हेत्वाभासा वक्ष्यन्ते, यस्य पक्षधर्मता नास्त्यसावसिद्धो हेत्वाभासः, यथा नित्यः शब्दः चाक्षुषत्वात्, साध्यविपर्ययव्याप्तस्तु विरुद्धः स यथा नित्यः शब्दः कृतकत्वाद् आकाशवत्, सपक्षे सत्त्वं यस्य नास्ति सो ऽनैकान्तिकः यथा नित्यः शब्दः प्रमेयत्वादिति, यस्याबाधितविषयत्वं नास्ति स कालात्ययापदिष्टः यथा ऽनुष्णस्तेजोऽवयवी कृतकत्वाद् घटवदिति, यस्य निष्प्रतिपक्षता नास्ति स प्रकरणसमः यथा अनित्यः शब्दो नित्यधर्मानुपलब्धेर्घटवत् नित्यः शब्दो ऽनित्यधर्मानुपलब्धेराकाशवदिति, सो ऽयमेतेषु पञ्चसु लक्षणेष्वविनाभावो लिङ्गस्य परिसमाप्यते,

ननु च त्रिलक्षणके हेतावविनाभावः परिसमाप्यते न च तथाविधे बाधा सम्भवति बाधाविनाभावयोर्विरोधात्, यच्चेदमग्न्यनुष्णत्वसाधने कृतकत्वं त्रिलक्षणमपि बाधकविधुरितविषयमित्युदाहृतं तदसमीक्षिताभिधानम्, अत्र त्रैलक्षण्यानुपपत्तेः, पक्षधर्म एव तावदयं न भवति प्रत्यक्षाद्यनिराकृतो हि पक्ष उच्यते, न चायमीदृश इत्यपक्ष एव, तद्धर्मो हेतुः कथं पक्षधर्मः स्यात्, नाप्ययमन्वयी हेतुरन्वयग्रहणसमये एव तद्विप्लवावधारणात्, अन्वयो हि गृह्यमाणः सर्वाक्षेपेण यद्यत्कृतकं तत्तदनुष्णमित्येवं गृह्यते ततश्च तद्ग्रहणसमये एवायमुष्णो ऽपि कृतक इति हृदयपथमवतरति तनूनपादिति कथमन्वयग्रहणम् ।

यदि त्वनलमुत्सृज्य घटादावन्वयग्रहः ।
नान्तर्व्याप्तिर्गृहीता स्यात्साध्यसाधनधर्मयोः ॥

ततश्चैवंविधाद्धेतोः स्वसाध्यनियमोज्झितात् ।
साध्याभिलाष इत्येवं षण्ढानुनयदोहदः ॥

अन्वयपूर्वकत्वाच्च व्यतिरेकग्रहणस्य तन्निराकरणे तदपाकरणमवगन्तव्यम्, अपि च सिषाधयिषितधर्मवैपरीत्येन वह्नेः प्रत्यक्षतो निश्चयाद् वस्तुवृत्तेन स एव विपक्ष इति न ततो व्यतिरेकः कृतकत्वस्येति, तस्मात्त्रैलक्षण्यापायादेव हेत्वाभासो ऽयमिति न रूपान्तरमबाधितविषयत्वमपेक्षते कथं चेदमबाधितत्वं निश्चीयते ।

न ह्यदर्शनमात्रेण बाधाविरहनिश्चयः ।
सर्वात्मना हि नास्तित्वं विद्युः कथमयोगिनः ॥
अनिश्चिते तदङ्गे च न हेतोर्हेतुता भवेत् ।
यथैव पक्षधर्मादिरूपाणामनुपग्रहे ॥

तस्मादबाधितत्वं रूपान्तरमवचनीयमिति,

अत्राभिधीयते, यदुक्तम् अन्वयग्रहणं सर्वाक्षेपेणेति तद्ग्रहणवेलायामेव-सिषाधयिषितधर्मविपर्ययाध्यासितहुतवहस्वरूपपरिस्फुरणादन्वयशून्यो ऽयं हेतुरिति तदहृदयंगमम्, अन्वयः सत्यं सर्वाक्षेपेण गृह्यते न पुनरेकैकधर्मिसमुल्लेखेन, एवं हि तदानन्त्यादन्वयो ग्रहीतुमेव न शक्यते, अनुमानस्य च वैफल्यमित्थं भवेदग्निमतां धूमवतां सर्वधर्मिणामन्वयावगमकाले एव गृहीतत्वात् ।

धूमो हि यत्र यत्रेति सामान्येनैव गृह्यते ।
न पुनः पर्वते ऽरण्ये गृहे वेत्येवमिष्यते ॥

एवं च सत्याक्षेपवाचोयुक्तिरुपपन्ना भविष्यति ।

न चैवं सति वक्तव्यं षण्ढानुनयमार्गणम् ।
न हि तद्वर्जमित्येवं व्याप्तिग्रहणमिष्यते ॥

सामान्येन च व्याप्तिर्गृहीता सती सिषाधयिषितधर्म्यपेक्षायां सैवान्तर्व्याप्तिरुच्यते, यैव च नगलग्नाग्न्यनुमानसमये तद्व्यतिरिक्तकान्तारादिप्रदेशवर्त्तिनी बहिर्व्याप्तिरभूत्सैव कालान्तरे कान्तारवर्त्तिनि वह्नावनुमीयमाने ऽन्तर्व्याप्तिरवतिष्ठते, तदिहापि यत्कृतकं तदनुष्णमिति सामान्यतः परिच्छेदान्न तदानीमनलोन्मेष इति सिद्धो ऽन्वयः, व्यतिरेको ऽपि कार्ये तेजोऽवयविनि पक्षीकृते कृतकत्वस्य तेजःपरमाणुभ्यो विधुतारकपरमाण्वनभ्युपगमे तु विपक्ष एव नास्तीति तदभावात्सुतरां तत्रावृत्तिर्भवतीति, न हि सपक्षे इव विपक्षे वृत्तिरिष्यते येन यत्नतः तत्सिद्धये यतेत, अग्निरेव विपक्ष इति चेन्मैवम्, न हि पक्ष एव विपक्षो भवितुमर्हति,

ननु वस्तूनामद्विरूपत्वात्पक्षो नाम परमार्थतो नास्त्येव, साध्यधर्माऽधिकरणभूतश्चेदसो ऽर्थस्तत्सपक्ष एव विपर्यये तु न विपक्षतामतिवर्त्तते, न च क्र-

मद्वययोगित्वं रूपद्वयरहितत्वं वा वस्तुनः समस्तीति, तदयुक्तम् अनुमानोच्छेदप्रसङ्गात्, अद्विरूपत्वे ऽपि वस्तूनां निसर्गविषयीकृतो ऽर्थः कश्चित्पक्ष एषितव्यः, तदभावे तदपेक्षस्वरूपयोः सपक्षविपक्षयोरप्यभावः स्यात् तदस्य पक्षस्य सतोऽपि सपक्षत्वमारोप्य यत्तेन व्यभिचारचोदनं तेनाग्न्यनुमानमपि विप्लवेत,

ननु पर्वतादिर्धर्मी न ज्वलनाख्यसाध्यधर्मशून्यतया तत्र निश्चितः तेजोऽवयवी त्वनुष्णत्ववैपरीत्येन प्रत्यक्षतो निश्चित इति तत्किमिदानीं पर्वतादिरग्निमत्तया निश्चितः तथाभ्युपगमे वा किमनुमानेन ।

ननु न पर्वतोऽग्निमत्तया निश्चितो नापि तद्वैपरीत्येन किं तु संदिग्ध एवास्ते, यद्येवं संदिग्धे ऽपि विपक्षे वर्त्तमानो धूमादिरहेतुरेव स्यान्निश्चितविपक्षवृत्तिवत्संदिग्धविपक्षावृत्तेरप्यहेतुत्वात्सर्वमनुमानमुत्सीदेत्, तस्मात्पक्षेण व्यभिचारचोदनमनुचितमिति व्यतिरेकवानेवायं हेतुः, यत्पुनरभिहितम्, अनिराकृतपक्षावृत्तित्वमस्य नास्तीति तत्सत्यम्, वयमप्यमुं पक्षमध्यक्षाबाधितमिच्छाम एव, यत्तु न पक्षमात्रपर्यवसितो बाधः किं तु हेतुमपि स्पृशति ।

न हेतुनिरपेक्षात्मा पक्षो नामास्ति कश्चन ।
प्रसाधयितुमिष्टो हि हेतुना पक्ष उच्यते ॥
स न साधयितुं शक्यः प्रत्यक्षे प्रतियोगिनि ।
साध्यापहारद्वारेण हेतुर्भवति बाधितः ॥
अबाधितानुमेयत्वमत एवास्य लक्षणम् ।
ननु हेतुरसिद्धो ऽयं ज्वलने वृत्तिसंभवात् ॥
यत्तु बाधितता ज्ञातुं शक्या नेति विकल्पितम् ।
पक्षस्यापि महाभाग कथं तां प्रतिपत्स्यसे ॥
प्रयत्ने क्रियमाणे ऽपि यदि बाधा न दृश्यते ।
नास्त्येवेत्यवगन्तव्यं व्यवहारो हि नान्यथा ॥

अतस्त्रिलक्षणे ऽपि हेतौ बाधसम्भवादबाधितत्वं रूपान्तरं वक्तव्यम्, एवं च यदुच्यते बाधाविनाभावयोर्विरोधादिति तत्कथं चिद्युक्तं कथं चिदयुक्तम्, पञ्चलक्षणके लिङ्गे यः परिसमाप्तो ऽविनाभावः तत्र नास्त्येव बाध इत्येवं युक्तमेतत् त्रिलक्षणकलिङ्गाविनाभावाभिप्रायेण त्वयुक्तमेतदित्यलं प्रसङ्गेन ।

नियमस्मृतेरिति विव्रियतां को ऽयं नियमो नाम, व्याप्तिरविनाभावो नित्यसाहचर्यमित्यर्थः,

## तादात्म्यतदुत्पत्त्योर्बौद्धाभिमतव्याप्तिग्रहोपायत्वकथनम्—

आह नैतावत्यैव विरन्तुमुचितं तस्य तदविनाभावित्वमित्यत्र हि निमित्तमन्वेषणीयं तार्किकैः, तच्च तादात्म्यतदुत्पत्तिरूपमीक्षितवन्तो भिक्षवः, यो हि यदात्मा भावः स कथं तमुत्सृजति वृक्षात्मिकैव हि शिंशपा

तेन वृक्षत्वमनुमापयति, सो ऽयं स्वभावहेतुरुच्यते वृक्षो ऽयं शिंशपात्वादिति तत्र तादात्म्यं प्रतिबन्धः, कार्यं च नाम कारणाधीनात्मलाभमेव भवति न कारणानपेक्षमिति तदुपलभ्यमानं तदनुमापयत्यग्निरत्र धूमादिति कार्यहेतौ तदुत्पत्तिप्रतिबन्धः, एवं हि द्विविधं प्रतिबन्धमनुमेयाव्यभिचारनिबन्धनमनुक्त्वा केवलसाहचर्यनियममात्रवर्णनं यत् प्रसारिका सैवेति,

## बौद्धमतखण्डनम् —

उच्यते पादप्रसारिकैव साधीयसी स्थूलदृष्टिभिरवलम्बिता वरं न सूक्ष्मदृष्टिभिरुत्प्रेक्षिताः तादात्म्यादिप्रतिबन्धाः, तदात्म्ये तावद्गमकाङ्गे हेतुसाध्ययोरव्यतिरेके गम्यगमकभाव एव दुरुपपपादः, न खल्वगृहीतं लिङ्गं लिङ्गिप्रतीतिमाधातुमर्हति, तत्र लिङ्गबुद्धौ लिङ्गं प्रतिभासते न वा, अप्रतिभासे तद्बुद्ध्या तदग्रहणात्कथं तस्य तदात्मकत्वम् , प्रतिभासे तु लिङ्गवत्प्रत्यक्ष एव सोऽर्थ इति किमनुमानेन, विपरीतसमारोपव्यवच्छेदार्थमनुमानमिति चेद् न, तत्स्वरूपग्रहणे विपरीतारोपणावसराभावात् , न हि शिरःपाण्यादिविशेषदर्शने सति स्थाणुसमारोपः प्रवर्त्तते तत्र तद्भेदादुपपद्येतापि न हि शिरःपाण्यादय एव पुरुष इति तद्ग्रहणे ऽप्यपुरुषारोपः कामं भवेत्, इह वृक्षत्वशिंशपात्वयोरभेदाच्छिंशपात्वग्रहणे सति का कथा वृक्षेतरसमारोपस्य, अपि च वृक्षत्वग्रहणे सति सामान्यधर्मग्रहणाद्विशेषानध्यवसायात्कदा चिदशिंशपारोपः स्याद् न तु शिंशपात्वग्रहणे सति अवृक्षत्वसमारोपो युक्तः ।

प्रमातुः शिंशपात्वं हि यस्य प्रत्यक्षगोचरः ।
परोक्षं तस्य वृक्षत्वमिति नातीव लौकिकम् ॥

किं च साध्यसाधनयोरव्यतिरेकाद् यथा शिंशपात्वेन वृक्षत्वमनुमीयते तथा वृक्षत्वेनापि शिंशपात्वमनुमीयेत तादात्म्याविशेषात् , तथा च प्रयत्ननान्तरीयकत्वेनानित्यत्वं साध्यते तद्वदनित्यत्वेनापि तत्साध्येत, ततश्च सपक्षव्याप्त्यव्याप्तिभ्यां कृतकत्वप्रयत्ननान्तरीयकत्वयोर्यो भेद उक्तः स हीयेत ।

ननु चान्यः सम्बन्धः अन्यश्च प्रतिबन्धः द्विष्ठः सम्बन्धः प्रतिबन्धस्तु परायत्तत्वलक्षणः, तत्र शिंशपात्वं वृक्षत्वे प्रतिबद्धं न वृक्षत्वं शिंशपात्वे प्रयत्ननान्तरीयकत्वमप्यनित्यत्वे नियतं न त्वनित्यत्वं तत्रेति तथा धूमस्याग्नौ प्रतिबन्धो न त्वग्नेर्धूमे, सत्यमेवं किं त्वेवमुच्यमाने नियम एवाङ्गीकृतो भवेद् न तादात्म्यम् , तादात्म्ये हि यथा शिंशपा शिंशपां विना न दृश्यते तथा वृक्षत्वमपि शिंशपारहितं न दृश्यते, दृश्यते च खदिरादौ शिंशपारहितं वृक्षत्वं विद्युदादौ च प्रयत्ननान्तरीयकत्वरहितमनित्यत्वमुपलभ्यते इति कथमभेदः ।

विना साधनधर्मेण साध्यधर्मो ऽयमस्ति हि ।

दृष्टस्तद्व्यतिरेकेण तदात्मा चेति कैतवम् ॥

अथ विद्युदाद्यनित्यत्वादन्यदेव घटाद्यनित्यत्वं यत्प्रयत्नानन्तरीयकत्वाभिन्नमुच्यते तर्हि धर्मिभेदेन धर्माणां भेदे ऽन्वयग्रहणानुपपत्तेः सर्वमनुमानमुत्सीदेद्, धूमाग्न्योस्तु कार्यकारणयोर्भेदाद्युक्तं वक्तुं धूमस्याग्नौ प्रतिबन्धो न त्वग्नेर्धूमे, इह तु साध्यसाधनयोरव्यतिरेकान्न तथा शक्यते वक्तुं तथा ऽभिधाने वा नाव्यतिरेकः, सर्वथा तदात्म्यं वा त्यज्यतां वृक्षत्वानित्यत्वाभ्यां शिंशपात्वप्रयत्नानन्तरीयकत्वे अनुमीयेताम् नान्तरावस्थातुं लभ्यते, यश्चायमनित्यः शब्दः कृतकत्वादिति स्वभावहेतुरुदाहृतः स कथं स्वभावहेतुः, इदं हि चिन्त्यताम् अनित्यत्वं नाम किमुच्यते किं च कृतकत्वमिति, तत्रानित्यत्वं विनाशयोगः उत्पत्तियोगश्च कृतकत्वम्, उत्पन्नस्य च भावस्य विनाशो न तूत्पाद एव विनाश इति कथं साध्यसाधनयोरव्यतिरेकः, अत्र चोदयन्ति, विनाशयोगे ह्यनित्यत्वे विनाशी शब्द इति बुद्धिः स्यान्नानित्य इति, एष्या च मिथ्याबुद्धिः शिखरिण एव कृशानुविशेषितस्य विनाशवतः शब्दस्य ग्रहीतुमशक्यत्वात् ।

अभावेन हि धर्मेण तद्वत्ता धर्मिणः कथम् ।
अभावग्रहवेलायां धर्मिणो ऽनुपलम्भनात् ॥

अनित्यत्वमिति च भावप्रत्ययः कथमभावे भवेद्विरुद्धत्वात्, तस्मादुभयान्तपरिच्छिन्ना वस्तुसत्ता ऽनित्यत्वमुच्यताम्, कृतकत्वमपि सत्तैव कारणोत्पादिताधारा सती कथ्यते इति, एवं च सत्तैव साध्यं साधनं चेति सिद्धं स्वभावहेतुत्वम्, तदिदमनुपपन्नम्, साध्यसाधनयोस्तथात्वेनानवभासनात्, एवं ह्युच्यमाने शब्दः सत्तावान्सत्तावत्त्वादिति प्रतीतिः स्यात्, न चैवं दृश्यते अपि तु अनित्यः शब्दः कृतकत्वादिति, अथोभयान्तपरिच्छिन्ना सत्ता साध्या कारणनिर्वर्त्या ऽऽश्रयसमवायिनी च साधनमित्युच्यते तदेतदघटमानम्, विनाशरूपस्यान्तस्य तदानीमविद्यमानत्वेन सत्तापरिच्छेदकत्वाभावात् ।

बुद्धिस्थेनाथ तेनास्याः परिच्छेदो ऽभ्युपेयते ।
शब्दस्यैव परिच्छेदो विनाशेनास्तु तादृशा ॥
धर्मः समानकालो ऽपि बुद्ध्यैव विषयीकृतः ।
तद्विशेषणतां याति तथा भाव्यपि यास्यति ॥

तदेवं विनाशी शब्द इति विशेषणविशेष्यभावसिद्धेः किं सत्तासाध्यकल्पनया, यत्पुनरभिहितम् अभावे भावप्रत्ययस्त्वतादिर्न स्यादिति तदत्यन्तानभिज्ञस्य चोद्यम्, शब्दप्रवृत्तिनिमित्तस्य तत्र भावप्रत्ययेनाभिधानात्, यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इति अभावे ऽपि अभावत्वमिति दर्शनात्, तस्माद्बुद्धिस्थविनाशयोग एवानित्यत्वम्, कृतकत्वमप्युत्पत्तियोग एव न सत्ता, कारणोत्पादिताश्रयावच्छेदे तु तस्या इष्यमाणे धर्मिण एव तदवच्छेदो भव-

त्विति किं सोपानान्तरेण ।

ननूत्पादविनाशाख्यं न धर्मद्वयमन्वयि ।
यद् घटे नास्ति तच्छब्दे यच्च शब्दे न तद् घटे ॥

अथैक एव धर्मः सर्वभावसम्बन्धी इष्येत तर्हि ।

एकभावसमुत्पादे सर्वोत्पादः प्रसज्यते ।
एकप्रलयकाले च सकलप्रलयो भवेत् ॥

तस्मात्सत्तापक्ष एव वरम्, नैतदेवम्, धर्मिभेदे ऽपि धर्माणां तुल्यरूपाणामवभासात् ।

न घटादिस्वरूपं हि नाश इत्यवकल्पते ।
येनानन्वयदोषः स्यात् तद्भेदोपनिबन्धनः ॥
एकत्वमपि धर्मस्य नास्ति सर्वेषु धर्मिषु ।
येनैकध्वंससमये सकलध्वंससङ्करः ॥

भिन्नत्वे ऽपि च धर्माणां समानरूपत्वेनावभासमानत्वादन्वयग्रहणादिकार्यविरोधः, अत एव समान्यमन्तरेणापि समानधर्ममूलान्वयादिव्यवहारोपपत्तेस्तत्र न सूत्रकारेण सामान्यग्रहणं कृतम् अपि तु साधर्म्यग्रहणमुपात्तम्, उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणमिति तेन विनाशोत्पादधर्मयोः साध्यसाधनभावात् तयोश्च भेदाद् अनित्यः शब्दः कृतकत्वादिति न स्वभावहेतुरिति सिद्धम्, कार्यहेतुरपि न सम्भवति भवतां हि पक्षे क्षणयोर्वा कार्यकारणभावो भवेत्सन्तानयोर्वा ।

क्षणयोर्नेति वक्ष्यामः क्षणभङ्गनिराकृतौ ।
सम्भवन्नपि दुर्लक्ष्यः सूक्ष्मत्वाच्च तयारसौ ॥

धूमाग्निसन्तानयोस्तु अवास्तवत्वादेव नास्ति कार्यकारणभावः अर्थक्रियाकारित्वमेव वस्तुत्वम्, यदि धूमः कार्यत्वादनलमनुमापयेत् कटुमलिनगगनगामित्वादिधमरपि तस्य गमको भवेत्, न च कथं चित्तत्कार्यत्वं कथं चिदतत्कार्यत्वं च धमस्योपपन्नम्, सर्वात्मकस्य तदन्वयव्यतिरेकानुविधायिप्रभवत्वाद् अथ सर्वात्मना ऽपि तत्कार्यत्वे ।

धूमत्वमात्रमेवाग्निसहचारीति मन्यसे ।
सहचारित्वमेवास्तु तदुत्पत्तिकथा वृथा ॥

## साहचर्यस्यानुमितिहेतुत्वम्—

ननु भवद्भिरपि कार्यानुमानमङ्गीकृतमेव यथा शेषवदिति व्याख्यास्यते, यथाऽह कणव्रतः कार्यं करणसंयोगि समवायि विरोधि चेति लैङ्गिकमिति, न साहचर्योपलक्षणार्थत्वात्, धूमाग्न्योर्नदीपूरयोर्वा न कार्यकारणभावाद्गमकत्वं

यथोक्तेन न्यायेन अपि तु नित्यसाहचर्यान्नियमादेवेति, विरोधिनाः कथं साहचर्यमिति चेत् सदसतोर्गम्यगमकभावाद्विरोधिनोरेकतरदर्शनादन्यतरस्याभावोऽनुमीयते भावाभावयोश्च साहचर्यं तयोरस्त्येव, कणादसूत्रे कार्यादिग्रहणं चोपलक्षणम् ।

अन्येषामपि हेतूनां भूम्नां जगति दर्शनात् ।
सूर्यास्तमयमालोक्य कल्प्यते तारकोदयः ॥
पूर्णचन्द्रोदयाद्वृद्धिरम्बुधेरवगम्यते ।
उदितेनानुमीयन्ते सरितः कुम्भयोनिनः ।
शुष्यत्पुलिनपर्यन्तविश्रान्तखगपङ्क्तयः ॥
पिपीलिकाण्डसञ्चारचेष्टानुमितवृष्टयः ।
भवन्ति पथिकाः पर्णकुटीरकरणोद्यताः ॥
अन्ये ऽपि सौगतोद्गीतप्रतिबन्धद्वयोज्झिताः ।
कियन्तो बत गण्यन्ते हेतवः साध्यबोधकाः ॥
लोकप्रसिद्धतादात्म्यतदुत्पत्त्यवधीरणात् ।
डिम्भहेवाकसदृशं स्वमत्या तत्समर्थनम् ॥

अतश्च तत्स्वभावस्तत्कार्यमित्यादि व्यसनमात्रम्, अपि च—

व्यावृत्त्योर्लिङ्गलिङ्गित्वं प्रतिबन्धश्च वस्तुनोः ।
विकल्पैर्ग्रहणं तस्य कथं सङ्गच्छतामिदम् ॥

उक्तं चैतत्प्रथमे एवाह्निके इत्यलं प्रसङ्गेन ।

तस्मादनुमितिहेतुः संबन्धः साहचर्यमिति सिद्धम्, न तु शौद्धोदनिशिष्यपरिकल्पितमुभयमप्येतत् ।

यत्त्वभ्यधीयत परैः किमधीनमस्य
तत्साहचर्यमिति तत्र विधिः प्रमाणम् ।
तादात्म्यतज्जननयोरपि चैष तेषां
तुल्यो ऽनुयोग इति किं विफलैः प्रलापैः ॥

नियमो व्याख्यातः स्मृतेरिति को ऽर्थः, उच्यते—

नियमो हि गृहीतो ऽङ्गमनुमेयप्रमां प्रति ।
न नारिकेलद्वीपस्थो धूमादग्निं प्रपद्यते ॥
साध्यानुमितिवेलायां न चास्ति नियमग्रहः ।
नियमग्रहकाले च न साध्यमनुमीयते ॥
तेन पूर्वगृहीतः सन्निदानीं स्मृतिगोचरः ॥
नियमः प्रतिपत्त्यङ्गं तथा ऽवगतिदर्शनात् ।

द्वितीयलिङ्गदर्शने सत्यपि नियमस्मरणमन्तरेण साध्यप्रमितेरनुत्पादात् ।

यत्रापि विषये ऽभ्यस्ते नैव सञ्चरयते स्मृतिः ।
तत्राप्यनेन न्यायेन बलात्सा परिकल्प्यते ॥

अत एव केचन प्रत्युत्पन्नकारणजन्यां स्मृतिमेवानुमानमुक्तवन्तः प्रत्युत्पन्नं च कारणं कुत्र चिद्भिर्मिपरोक्षस्यापि चेश्वरादृष्टेन्द्रियादेरनुमेयतां वक्ष्यामः ।

तस्माद्यथोचितालिङ्गाद्यथोक्तनियमस्मृतेः ।
यथोक्तलिङ्गिविज्ञानमनुमानमिति स्थितम् ॥

## अनुमानप्रामाण्याक्षेपः—

ननु सत्यनुमानस्य प्रामाण्ये लक्षणाश्रयः ।
कार्यो विचारो न पुनः प्रामाण्यं तस्य युज्यते ॥

तथा चाहुः प्रमाणस्यागौणत्वादनुमानार्थनिश्चयो दुर्लभः पक्षधर्मादिरूपं हि लिङ्गस्य बलाद् गौण्या वृत्त्या दर्शयितव्यम्, धर्मे हि साध्ये न हेतोःपक्षधर्मत्वम् अग्निधर्मत्वाद् धूमस्य धर्मिणि साध्ये हेतोरनन्वयित्वम्, न हि यत्र धूमस्तत्र पर्वत इत्यन्वयः द्वये तु साध्ये द्वयमपि नास्ति, न हि दहनमहीध्रयोः धर्मो धूमः नाप्येवमन्वयः यत्र धूमस्तत्र पर्वताग्नी इति, धर्मविशिष्टे धर्मिणि साध्ये तदुभयमघटमानमेव, नाग्निविशिष्टधराधरधर्मतया धूमः प्रथमं उपलब्धुं शक्यते न चाप्येवमन्वयः यत्र धूमस्तत्राग्निमान् पर्वत इति तस्मादवश्यं पक्षधर्मत्वान्वयव्यवहारसिद्धये धर्मविशिष्टे धर्मिणि रूढः पक्षशब्दः तदेकदेशे धर्मिणि गौण्या वृत्त्या वर्णनीयः, अन्वयप्रदर्शनसमये च तदेकदेशे तथैव योजने ऽतिगौणलक्षणत्वादिन्द्रियार्थसन्निकर्षजत्वादिवद्गौणलक्षणत्वाभावादनुमानमप्रमाणम् ।

अपि च—

विशेषे ऽनुगमाभावात्सामान्ये सिद्धसाधनात् ।
तद्वतो ऽनुपपन्नत्वादनुमानकथा कुतः ॥
साहचर्ये च सम्बन्धे विस्रम्भ इति मुग्धता ।
शतकृत्वो ऽपि तद्दृष्टौ व्यभिचारस्य सम्भवात् ॥
देशकालदशाभेदविचित्रात्मसु वस्तुषु ।
अविनाभावनियमो न शक्या वस्तुमाह च ॥
अवस्थादेशकालादिभेदाद्भिन्नासु शक्तिषु ।
भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥
भवन्नप्यविनाभावः परिच्छेत्तुं न शक्यते ।
जगत्त्रयगताशेषपदार्थालोचनाद्विना ॥
न प्रत्यक्षीकृता यावद्धूमाग्निव्यक्तयो ऽखिलाः ।
तावत्स्यादपि धूमो ऽसौ यो ऽनग्नेरिति शङ्क्यते ॥

ये तु प्रत्यक्षतो विश्वं पश्यन्ति हि भवादृशः ।
किं दिव्यचक्षुषामेषामनुमानप्रयोजनम् ॥
सामान्यद्वारको प्यस्ति नाविनाभावनिश्चयः ।
वास्तवं हि न सामान्यं नाम किं चन विद्यते ॥
भूयोदर्शनगम्या ऽपि न व्याप्तिरवकल्पते ।
सहस्रशो ऽपि तद्दृष्टे व्यभिचारावधारणात् ।
बहुकृत्वो ऽपि वस्त्वात्मा तथेति परिनिश्चितः ।
देशकालादिभेदेन दृश्यते पुनरन्यथा ॥
भूयो दृष्ट्वा च धूमो ऽग्निसहचारीति गम्यताम् ।
अनग्नौ तु स नास्तीति न भूयोदर्शनाद्गतिः ॥
न चापि दृष्टिमात्रेण गमकाः सहचारिणः ।
तत्रैव नियतत्वं हि तदन्याभावपूर्वकम् ॥
नियमश्चानुमानाङ्गं गृहीतः प्रतिपद्यते ।
ग्रहणं चास्य नान्यत्र नास्तितानिश्चयं विना ॥
दर्शनादर्शनाभ्यां हि नियमग्रहणं यदि ।
तदप्यसदनग्नौ हि धूमस्येष्टमदर्शनम् ॥
अनग्निश्च कियान्सर्वं जगज्ज्वलनवर्जितम् ।
तत्र धूमस्य नास्तित्वं नैव पश्यन्त्ययोगिनः ॥
तदेवं नियमाभावात्सति वा ज्ञप्त्यसम्भवात् ।
अनुमानप्रमाणत्वदुराशा परिमुच्यताम् ॥
अनुमानविरोधो ऽपि यदि चेष्टविघातकृत् ।
विरुद्धाव्यभिचारो वा सर्वत्र सुलभोदयः ॥
अत एवानुमानानामपश्यन्तः प्रमाणताम् ।
तद्विस्रम्भनिषेधार्थमिदमाहुर्मनीषिणः ॥
हस्तस्पर्शादिना ऽन्धेन विषमे पथि धावता ।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥

अपि च—

यत्नेनानुमितो ऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥

## अनुमानप्रामाण्यसमर्थनम्—

अत्राभिधीयते, किमयमनुमानस्वरूपाक्षेप एव क्रियते उत तत्तत्तार्किकोपलक्षिततल्लक्षणाक्षेप इति तत्रानुमानस्वरूपं चाशक्यनिह्नवमेव सर्वलोकप्रसिद्धत्वात् ।

अबलाबालगोपालहालिकप्रमुखा अपि ।
बुध्यन्ते नियतादर्थादर्थान्तरमसंशयम् ॥
अनुमानापलापे तु प्रत्यक्षादपि दुर्लभा ।
लोकयात्रेति लोकाः स्युर्लिखिता इव निश्चलाः ॥

प्रत्यक्षदृष्टमपि पदार्थजातं तज्जातीयत्वलिङ्गव्यापारेण सुखसाधनम् इतरकारणमिति वा निश्चित्य तदुपाददते जहति वा लौकिकाः, अथाविचारितरमणीयतैव तत्त्वं न तु लक्षणनियमः शक्यक्रियस्तस्येति लक्षणाक्षेपो ऽयमुच्यते सो ऽप्ययुक्तः यतः,

यं कं चिदर्थमालोक्य यः कश्चिन्नावगम्यते ।
कं चिदेवाक्षिपत्यर्थमर्थः कश्चिदिति स्थितिः ॥
तत्र वस्तुस्वभावो ऽयमिति पादप्रसारिका ।
दृश्यते ह्यविनाभूतादर्थादर्थान्तरे मतिः ॥
अतो यद्दर्शनाद्यत्र प्रतीतिरुपजायते ।
तयोरस्त्यर्थयोः कश्चित्संबन्ध इति मन्महे ॥
तदात्मतातदुत्पत्ती न श्रद्दधति तद्विदः ।
साहचर्यं तु सम्बन्ध इति नो हृदयङ्गमम् ।
तस्मिन्सत्येव भवने न विना भवनं ततः ।
अयमेवाविनाभावो नियमः सहचारिता ॥
किंकृतो नियमो ऽस्यास्मिन्निति चेदेवमुत्तरम् ।
तदात्मतादिपक्षे ऽपि नैष प्रश्नो निवर्त्तते ॥
ज्वलनाज्जायते धूमो न जलादिति का गतिः ।
एवमेवैतदिति चेत्साहचर्ये ऽपि तत्समम् ॥
तर्कस्य यावान्विषयः स तावति निरूप्यते ।
वस्तुस्वभावभेदे तु न तस्य प्रभविष्णुता ॥
अयं च विषमो युक्तेर्यदुक्तं नियमाद्विना ।
नार्थादर्थान्तरे ज्ञानमतस्तस्य प्रकल्पनम् ॥

ततः परं तु नियमो ऽप्येष किंकृत इति न युक्तिः प्रभवति तादात्म्यतदुत्पत्त्योरनुपपन्नत्वादतो नियम एव विरच्यते, न च प्रतिभामात्रमानुमानिकी प्रमितिरिति वक्तुं युक्तम्, नियतात्कुतश्चिदेव वस्तुनि प्रतीतिदर्शनादित्युक्तत्वात्, नियमश्च यद्यगृहीत एव प्रतीत्यङ्गं भवेन्नारिकेलद्वीपनिवासिभिरपि धूमदर्शनात्कृशानुरनुमीयेत नचैवमस्तीति नियमग्रहणमपीक्षणीयम्, यच्च विकल्पितम् अशक्यं तद्ग्रहणमिति, तत्र के चिदाचक्षते मानसं प्रत्यक्षं प्रतिबन्धग्राहीति, प्रत्यक्षानुपलम्भाभ्यामनलसहचरितमनग्नेश्च व्यावर्त्तमानं धूममुपलभ्य विभाव-

सौ नियतो धूम इति मनसा प्रतिपद्यते ।

मनश्च सर्वविषयं केन वा नाभ्युपेयते ।
असन्निहितमप्यर्थमवधारयितुं क्षमम् ॥

न च सकलत्रिभुवनविवरनिरुद्धधूमाग्निव्यक्तिसार्थसाक्षात्करणमुपयुज्यते ज्वलनत्वादिसामान्यपुरःसरतया व्याप्तिग्रहणात् , यत्तूक्तं सामान्यं वास्तवं नास्तीति तच्छब्दार्थचिन्ताप्रसङ्गे प्रतिसमाधास्यते ।

अपरे पुनः योगिप्रत्यक्षकल्पं यौक्तिकं सम्बन्धग्राहि प्रत्यक्षं प्रतिपेदिरे किल धूमत्वाग्नित्वसामान्यपुरस्कारेण व्याप्यव्यापकयोरन्वयो नाम गृह्यताम्, व्यतिरेकस्त्वनग्निभ्यो धूमस्य ग्रहीतव्यः, अनग्नयश्चातिविततः न च तेष्वनग्नित्वं नाम सामान्यमस्ति, तेन समस्तत्रैलोक्यान्तर्गताग्न्यनग्निगतान्वयव्यतिरेकग्राहिप्रत्यक्षव्यतिरेकेण न प्रतिबन्धोऽवधृतो भवेत् अनवधृतश्च न प्रमाङ्गमस्ति च प्रमेति युक्तं बलात्प्रतिबन्धग्राहकमेकस्मिन् क्षणे प्रत्यक्षमिदमशेषव्यक्तिविषयमसंवेद्यमानमपि कल्पितमिति यौक्तिकमुच्यते ।

अन्ये पुनः अत एव तत्कल्पनाभयाद्भूयोदर्शनपरिच्छिन्नसामान्यपुरःसरान्वयमनपेक्षितव्यतिरेकनिश्चयमेव लिङ्गं गमकमभ्युपागमन् , यथोक्तम् , मम त्वदृष्टिमात्रेण गमकाः सहचारिण इति, अयमाशयः—

भूयोदर्शनतस्तावदुदेति मतिरीदृशी ।
नियतो ऽयमनेनेति सकलप्राणिसाक्षिका ॥

तावता च गमकत्वमौत्सर्गिकं सिध्यति मीमांसकानां तु विपक्षे दर्शनं बाधकः प्रत्ययः न च सोऽस्ति नाद्य यावदनग्नौ धूमो दृष्टः, अनुत्पन्ने ऽपि बाधके तदाशङ्कनमयुक्तमित्युक्तं तैः, दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणिकेति, एतत्तु न चारु, व्यतिरेकनिश्चयमन्तरेण प्रतिबन्धग्रहणानुपपत्तेरित्युक्तत्वात्, ज्ञापकत्वाद्धि नियमः स्वग्रहणमपेक्षते, नियमश्चायमुच्यते यत्तस्मिन्सति भवनं ततो विना न भवनमिति भूयोदर्शनं तच्च तस्मिन्सति भवनमित्यन्वयमात्रपरिच्छेदादर्धगृहीतो नियमः स्यात् ततो विना न भवनमित्यस्यार्थस्यापरिच्छेदादिति,

अपरे पुनः अनग्नित्वसामान्यमन्तरेणापि योगिप्रत्यक्षकल्पनामकुर्वन्त एव मानसप्रत्यक्षगम्यमन्वयव्यतिरेकमाहुः, धूमाग्निसामान्ये तावत्सहचरिते उपलब्धे तद्वत्तदभावावपि सहचरितावुपलभ्येते एव, धूमत्वसामान्यस्यानग्नौ जलादावदर्शनात् , सर्वगतत्वे ऽपि सामान्यानां वृत्तिभेदो नियामक इति वक्ष्यते यद्यपि चानग्नित्वाद्यभावसामान्यं नास्ति तथा ऽपि प्रतिषेध्याग्नित्वसामान्यानुगमसिद्धैव तदभावानुगमग्रहणं सिध्यति सकलव्यक्तिज्ञानमनङ्गं व्याप्तिनिश्चये ।

भावसामान्ययोर्यद्वत्तथैव तदभावयोः ।

भावयोः साहचर्यं यदन्वयं तत्प्रचक्षते ॥
व्यतिरेकं तु मन्यन्ते साहित्यं तदभावयोः ।
साध्यसाधनभावस्तु भवेद्यत्राप्यभावयोः ॥
तयोरेवान्वयस्तत्र व्यतिरेकस्तु भावयोः ।

तदेवमभावान्वयवद्भावव्यतिरेको ऽपि प्रत्यक्षगम्यो भवत्येव ।

इयानेव विशेषस्तु भावयोर्यादृशी ययोः ।
व्याप्यव्यापकता सैव व्यत्यस्ता तदभावयोः ॥

अभावयोस्तु गम्यगमकभावे भावयोर्व्याप्तिव्यत्ययो द्रष्टव्यः, एवं च प्रतिषेध्यानुगमपूर्वकसामान्यभावद्वयानुगमप्रत्ययोपपत्तेरन्वयतद्व्यतिरेकनिश्चये ऽपि न योगिप्रत्यक्षमुपयुज्यते भावाभावसाहचर्यमवधार्य मनसा नियमज्ञानसिद्धेरित्यलं निर्बन्धेन, तस्मान्नियमवत्तद्ग्रहणोपायो ऽप्यस्तीति सिद्धम्।

गृहीते नियमे यावत्पुनः क चिद्धर्मिणि धूमादेर्लिङ्गस्य ग्रहणं न वृत्तं तावन्न भवति लिङ्गिनो ऽवगतिरिति सम्बन्धग्रहणकालापेक्षया द्वितीयं तल्लिङ्गदर्शनमपेक्षितव्यम्, सैवेयं पक्षधर्मतोच्यते, पक्षधर्मान्वयव्यतिरेकनिश्चये सत्यपि प्रत्यक्षागमविरोधेन प्रतिपक्षोपनिपातेन वा न गमकत्वमिति तदपरं लक्षणद्वयमुपदिष्टम्, अबाधितविषयत्वम् असत्प्रतिपक्षत्वं चेति, तदेवमनुभवसिद्धत्वादनुमानस्वरूपमिव तस्य लक्षणमपि तान्त्रिकविरचितमवाचकं लक्षणं तत्स्वयमनवद्यमावेद्यताम्, न तु तद्द्वेषेण लक्ष्यमप्यनुमानं निन्होतुं युक्तम्,

यत्पुनरभाणि प्रमाणस्य गौणत्वादनुमानादर्थनिश्चयो दुर्लभ इति तन्न बुद्ध्यामहे, न हि प्रमाणस्य किं चिद्गौणत्वमिह पश्यामः, पक्षधर्मादिपदानि यदि नाम व्याख्यातृभिर्गौणानि प्रयुक्तानि किमेतावता प्रमाणं गौणीभवेत्, शब्दान्तरेण हि तल्लक्षणाभिधाने न कश्चिद्गौणतादिप्रमादः ।

यदप्यवादि विशेषे ऽनुगमाभावात्सामान्ये सिद्धसाधनादिति तदप्यसाधु, साध्यस्य मत्वर्थस्य दर्शितत्वात्,

यदपि अवस्थादेशकालादिभेदादित्यभ्यधायि तदपि न भयावहम्, सम्यगवधृतायां व्याप्तौ विप्लवाभावात्, प्रमातुरेव तत्र तत्रापराधो नानुमानस्येति,

यदपि व्याहारि विरुद्धानुमानविरोधयोः सर्वत्र सम्भवात्कुत्र चिच्च विरुद्धाव्यभिचारिण इष्टविघातकृतश्च सुलभत्वादिति, तदप्यालजालम्, प्रयोजकहेतौ प्रयुक्ते सत्येवम्प्रायाणामनवकाशत्वात् ।

सद्वितीयप्रयोगास्तु न भवन्ति प्रयोजकाः ।
उत्प्रेक्षामात्रमूलत्वाद्धेत्वाभासा भवन्ति ते ॥

इति वक्ष्यामः ।

न विशेषविरुद्धश्च न चास्तीष्टविघातकृत् ।

हेतौ सुप्रतिबद्धे हि नैताः सन्ति विडम्बनाः ॥
तादृशा चानुमानेन पुंसो ऽर्थमधिगच्छतः ।
नान्धेन तुल्यता हस्तस्पर्शानुमितवर्त्मना ॥
यत्नेनानुमितो यो ऽर्थः कुशलैरनुमातृभिः ।
अभियोगशतेनापि सो ऽन्यथा नोपपाद्यते ॥

सुशिक्षिततराः प्राहुः द्विविधमनुमानम्, किं चिदुत्पन्नप्रतीति किं चिदुत्पाद्यप्रतीति ईश्वराद्यनुमानं तु उत्पाद्यप्रतीति ।

तत्र धूमानुमानादेः प्रामाण्यं केन नेष्यते ।
अतो हि साध्यं बुध्यन्ते तार्किकैरक्षता अपि ॥
यत्त्वात्मेश्वरसर्वज्ञपरलोकादिगोचरम् ।
अनुमानं न तस्येष्टं प्रामाण्यं तत्त्वदर्शिभिः ॥
ऋजूनां जायते तस्मान्न तावदनुमेयधीः ।
यावत्कुटिलितं चेतो न तेषां विटतार्किकैः ॥
एवं तु कथयद्भिस्तैः परं नास्तिक्यमात्मनः ।
ख्याप्यते स्म जडत्वं वा नानुमानाप्रमाणता ॥

न हि सम्बन्धग्रहणोपायवैचित्र्यादप्रमाणता भवितुमर्हति ।

आगमेनानुमानेन तर्कव्युत्पादनेन वा ।
प्रत्यक्षेण गृहीतो वा सम्बन्धो न विशिष्यते ॥
ईश्वराद्यनुमानानां तत्प्रसङ्गे सविस्तरम् ।
द्रढिमानं च वक्ष्याम इत्यलं बहुभाषितैः ॥
प्रमाणमुपगम्यतां तदनुमानमेवंविधै-
रविप्लुतपराक्रमं भवदुदीरितैर्दूषणैः ।
अनभ्युपगमे पुनर्विगतचेष्टिताः प्राणिनो
भवेयुरुपलोपमा इति हि पूर्वमावेदितम् ॥

## अनुमानलक्षणसूत्रार्थः—

अथेदानीं सूत्रमनुसरामः, तत्पूर्वकमित्यादि, अनुमानमिति लक्ष्यनिर्देशः, तत्पूर्वकमिति लक्षणम्, तदिति सर्वनाम्ना प्रक्रान्तं प्रत्यक्षमवमृश्यते तत् पूर्वं कारणं यस्य तत्तत्पूर्वकम्, एतावत्युच्यमाने निर्णयोपमानादौ तत्पूर्वके प्रसङ्गो न व्यावर्त्तते इति तद्व्यावृत्तये द्विवचनान्तेन विग्रहः प्रदर्शयितव्यः, ते द्वे प्रत्यक्षे पूर्वं यस्येति यदेकमविनाभावग्राहि प्रत्यक्षं व्याख्यातं यच्च द्वितीयं लिङ्गदर्शनं ते द्वे प्रत्यक्षे अनुमानस्यैव कारणं नोपमनादेः, तत्र प्रतिबन्धग्राहि प्रत्यक्षं स्मरणद्वारेण तत्कारणं लिङ्गदर्शनं तु स्वत एव ।

ननु प्रत्यक्षमात्रस्य प्रकृतत्वात्प्रकृतावमर्शित्वाच्च सर्वनाम्नः कुतो ऽयं विशेषप्रतिलाभः, उच्यते–उदाहरणसाधर्म्यात्साध्यसाधनं हेतुरिति वक्ष्यते, हेतुरेव चानुमानं यदिह लक्ष्यं निर्दिष्टम्, न चागृहीतमुदाहरणसाधर्म्यं तद्वैधर्म्यं वा साध्यसाधनं भवतीति तद्ग्रहणोपायो ऽपेक्षितव्यः, प्रत्यक्षव्यतिरिक्ततदवगमोपायपरिकल्पने चानवस्थादूषणमसकृदभिहितमिति प्रत्यक्षस्यैव तदुपायत्वमतः अनुमानकारणभूतप्रत्यक्षापेक्षया प्रत्यक्षमात्रप्रक्रमे ऽपि सर्वनाम्ना तद्विशेष आक्षिप्यते यत्प्रतिबन्धग्राहि प्रत्यक्षं यच्च द्वितीयं लिङ्गदर्शनमिति,

ननु प्रत्यक्षविशेषद्वयपूर्वकत्वमनुमानाभासेष्वपि सव्यभिचारविरुद्धादिषु सम्भवतीत्यतिव्याप्तिः मैवम्—हेतुलक्षणेन साध्यसाधनग्रहणेन तत्प्रतिक्षेपात् प्रतिबन्धस्वरूपं हि तत्रैव निपुणमभिधास्यते इह तु तद्ग्रहणोपायमात्रमुच्यते सम्यक् प्रवृत्ते च प्रतिबन्धग्राहिणि प्रत्यक्षे व्याप्तिविप्लवाभावान्नानुमानाभासप्रसङ्गः, सामान्यलक्षणानुवादेन च विशेषलक्षणे वर्ण्यमाने तत एव प्रमाणाभासव्युदाससिद्धेः केवलमिदानीं समानजातीयोपमानादिव्यवच्छेदो वचनीय इति स एव तत्पूर्वकपदेनोपात्तः अर्थोत्पन्नमव्यभिचारि व्यवसायात्मकमिति फलविशेषणानां सर्वप्रमाणेष्वनुवृत्तेः।

युगपच्च क चिन्नास्ति व्यापारः शब्दलिङ्गयोः।
अतो नाव्यपदेशत्वविशेषणमिहार्थवत् ॥

द्वयोरपि च शब्दलिङ्गयोः ज्ञापकत्वेन स्वरूपग्रहणापेक्षत्वात् ज्ञानायौगपद्येन च युगपद्ग्रहणासम्भवात्।

नन्वेवं निरस्यतामतिव्याप्तिः अव्याप्तिस्तु कथं निरसिष्यते आगमादिपूर्वकाणामनुमानानामसंग्रहात्, तेष्वपि मूलभूतं प्रत्यक्षमेव कारणमिति केचिदाहुः। यथोक्तम्—

यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहणं भवेत्।
तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेव गम्यते ॥ (१) इति,

यद्वा प्राधान्याभिप्रायेण प्रत्यक्षपूर्वकत्वमुच्यते न नियमार्थमिति नाव्याप्तिः, तानीति वा पुनस्तावदवबोधाय विग्रहः कर्तव्यः तानि प्रत्यक्षादीनि पूर्वं यस्येति, यद्यपि प्रत्यक्षमेव लक्ष्यत्वेन प्रस्तुतं तथा ऽपि व्यवच्छेद्यतयाऽनुमानादीनामपि प्रकृतत्वं न वार्यते।

अत्र चोदयन्ति—तदिति करणावमर्शो वा स्यात् फलावमर्शो वा, करणावमर्शे इन्द्रियादिकरणपूर्वकं ज्ञानं तत्फलं तत्पूर्वकं चानुमानमिति पूर्वशब्दस्य द्विः पाठः स्यात्, स चाश्रुत्वा कल्पनीयः फलावमर्शे तु प्रत्यक्ष-

(१) श्लोकवार्तिकेऽनुमानग्रन्थे श्लोकः १७१।

फलपूर्वकमनुमानमिति तत्पूर्वकशब्दस्य फलवचनस्यानुमानशब्देन करण-वाचिना सह सामानाधिकरण्यं न स्यात्तत्पूर्वकमनुमानमिति प्रत्यक्षफलेन हि लिङ्गदर्शनेन परोक्षार्थप्रतिपत्तिरुपजन्यते सा चानुमानफलं नानुमानमि-ति, उच्यते—उभयथा ऽपि न दोषः, कारणावमर्शे तावदिन्द्रियादिकरणपूर्वकं तत्फलं लिङ्गदर्शनं यत् तदेव परोक्षार्थप्रतिपत्तौ करणमनुमानमिति न द्विः पूर्व-कशब्दस्य पाठ उपयुज्यते, फले ऽप्यवमृश्यमाने प्रत्यक्षफललिङ्गदर्शनपूर्वकं य-दविनाभावस्मरणं तदनुमानं करणमेव ततः परोक्षार्थप्रतिपत्तेः, यदुक्तं प्रत्युत्प-न्नकारणजन्या स्मृतिरनुमानमिति स्पष्टमेव सामानाधिकरण्यम्, फले वा अनु-मानशब्दं वर्णयिष्यामः अनुमितिरनुमानमिति, यतःशब्दं वा अध्याहरिष्यामः प्रत्यक्षफलपूर्वकं परोक्षार्थप्रतिपत्तिरूपं फलं यतो भवति तदनुमानमिति, अत्र हि प्रथमं लिङ्गदर्शनं ततः प्रतिबन्धस्मरणं ततः केषांचिन्मते परामर्शज्ञानं ततः साध्यार्थप्रतीतिस्ततःप्रत्यक्षलक्षणावसरवर्णितेन क्रमेण हेयादिज्ञानमितीयति प्र-तीतिकलापे यथोपपत्ति कार्यकारणभावो वक्तव्य इत्येवं तत्पूर्वकपदमेव केवल-मनुमानलक्षणक्षममिति गुरवो वर्णयां चक्रुः ।

## सूत्रस्थस्य त्रिविधपदस्य कृत्यम्—

अन्ये पुनः उपमानाद्यतिव्याप्तिव्युदासाय त्रिविधग्रहणं व्याख्यातवन्तः, तत्पूर्वकमनुमानमित्युच्यमाने सति उपमानादौ प्रसङ्ग इति त्रिविधग्रहणम्, लिङ्गं वक्ष्यमाणकार्यादिभेदाद्वा त्रिविधं पक्षधर्मादिरूपत्रययोगाद्वा त्रिरूपं त्रिविधमुच्यते, लिङ्गे च त्रिविधे सति तदालम्बनज्ञानमुपचारात्त्रिविधमभिधी-यते, तेन प्रत्यक्षपूर्वकं त्रिविधलिङ्गालम्बनज्ञानमनुमानमित्युक्ते सति नातिव्याप्तिः।

ननु पूर्ववदादिभिः शब्दैः कार्यादिभेदवर्णनं ज्ञास्यामः पक्षधर्मादिरूपत्रयं तु कथमेभिः शब्दैः प्रतिपाद्यते इति,

अत्राहुः वादादिकथात्रयेऽपि पूर्वमुपादीयमानत्वात्पक्षः पूर्वशब्देनोच्यते सो ऽस्यास्त्याश्रयत्वेनेति पूर्ववल्लिङ्गमित्येवमनेन पदेन पक्षधर्मत्वमुक्तं भवति, पक्षे उपयुक्ते सति शेषः सपक्षो भवति सो ऽस्यास्त्याश्रयत्वेनेति शेषवत्, एव-मनेन सपक्षे वृत्तिरुक्ता भवति, सामान्यतोदृष्टमित्यनेन विपक्षाद्व्यावृत्तं लिङ्गमु-च्यते, कथम्, अकारप्रश्लेषात् सामान्यतो ऽदृष्टमिति तिष्ठतु तावद्विशेषः सा-मान्यतो ऽपि न दृष्टम्, क्वेति पक्षसपक्षयोर्वृत्तेरुक्तत्वात्परिशेषाद्विपक्षे सामा-न्यतो ऽपि न दृष्टमित्यवतिष्ठते इत्थं त्रिरूपं लिङ्गमेभिः शब्दैरुक्तं भवति, त-दालम्बनं ज्ञानमनुमानम् ।

तदेवं लक्षणे कश्चित्सर्वं सूत्रमयोजयत् ।
एवं तु ख्यापितं न स्यात्सूत्रकारस्य कौशलम् ॥

किं च पञ्चलक्षणमिह शास्त्रे अभ्युपगम्यते इति त्रिरूपे तस्मिन्वर्ण्यमाने कालात्ययापदिष्टप्रकरणसमयोः प्रसङ्गो न व्यावर्त्तते इति, तस्मात्तत्पूर्वकपदमेव लक्षणप्रतिपादनार्थमनवद्यम् ।

त्रिविधग्रहणं तस्य विभागप्रतिपादकम् ।
भेदाः पूर्ववदित्यादिग्रन्थेन कथितास्त्रयः ॥
तत्पूर्वकपदोद्गीतनिर्मलन्यायलक्षणाः ।
परिम्लानादरो ऽन्यत्र सूत्रकृद्वाक्यलाघवे ॥
विभागवचनात्सिद्धं त्रैविध्यं स्वगिरा भवेत् ।
तथा च सिद्धशब्दान्तच्छलेष्वेवमदीदृशत् ॥

## पूर्ववत्पदस्य अर्थः—

पूर्ववदिति यत्र कारणेन कार्यमनुमीयते यथा जलधरोन्नत्या भविष्यति वृष्टिरिति ।

अत्र चोदयन्ति, पूर्वं हि कारणमुच्यते, पूर्वमस्यास्तीति पूर्ववत्कार्यं वक्तुं तेन कार्यात्कारणानुमानमिहोदाहर्त्तव्यं न कारणात्कार्यानुमानम् , न च कारणेन कार्यमनुमातुमपि पार्यते कार्यस्य तावत्पक्षत्वमयुक्तम् , सिद्धचसिद्धिविकल्पानुवृत्तेः, सिद्धे हि कार्ये किमन्यदनुमेयम् असिद्धे खपुष्पवन्न पक्षत्वम् , अपि चास्ति कार्यं कारणस्यास्तित्वादिति व्यधिकरणो हेतुः अनित्यः शब्दः काकस्य कार्ष्ण्यादितिवत्, सत्तायां च साध्यायां भावधर्मस्य हेतोरसिद्धत्वम् अभावधर्मस्य विरुद्धत्वम् , उभयधर्मस्यानैकान्तिकत्वमिति कथं साधयितुं शक्यते तदुक्तम्,

नासिद्धे भावधर्मो ऽस्ति व्यभिचार्युभयाश्रयः ।
धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम् ॥ इति ।

न च कारणमात्रस्य हेतुत्वं युक्तं विना च प्रतिबन्धादिना व्यभिचारसम्भवात् , कारणविशेषश्च न कश्चिद्विपश्चिता ऽपि निश्चेतुं शक्यः चलदचलविपुलवपुषामुत्पलदलमलीमसत्विषामपि पयोमुचाममुक्तपयसामुपरमदर्शनात् ।

यदि त्वन्त्यदशावर्ति कारणं लिङ्गमिष्यते ।
व्याप्तिस्मरणवेलायां कार्यप्रत्यक्षता भवेत् ॥

ननु सौगतैरपि कारणात्कार्यानुमानमङ्गीकृतमेव—

हेतुना यः समग्रेण कार्योत्पादो ऽनुमीयते ।
अर्थान्तरानपेक्षित्वात्स स्वभावो ऽनुवर्णितः ॥

इति, ग्रन्थज्ञो देवानांप्रियः, उत्पाद्यते ऽस्मादित्युत्पादो योग्यता कथ्यते सा

चात्रानुमेया, अत एव तस्य वस्तुनो ऽनन्यत्वात्स्वभावानुमानमिदमिष्यते स स्वभावो ऽनुवर्णित इति,

अत्राहुः सर्वमिदमविदितानुमानप्रयोगक्रमस्य दुर्मतेश्चोद्यम्, न कार्यमत्र पक्षीक्रियते न सत्ता साध्यते न व्यधिकरणो हेतुः प्रयुज्यते अपि तु पयोधरा एव धर्मिणः अदूरकालभाविन्या वृष्ट्या तद्वन्तः साध्यन्ते विशिष्टोन्नतिरूपधर्मादियोगेनेति न पूर्वकथितदोषावसरः, यथा अग्निमानयं धूमः बहुलपाण्डुतादिधर्मयोगित्वान्महानसावधृतधूमवदिति, धूम एवाग्निमत्तया ऽनुमीयते एवं समनन्तरोत्पादितवृष्टयो ऽमी जीमूताः सातिशयोन्नत्यादिधर्मयोगित्वात्पूर्वोपलब्धपर्जन्यवद् इति जलधरा एव भविष्यद्वृष्टिमत्तया ऽनुमीयन्ते यथाह भट्टः—

तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात्प्रमेयता ।
सा देशस्याग्नियुक्तस्य धूमस्यान्यैश्च कल्पिता इति(१) ॥

यत्तु पूर्वं कारणमुच्यते इति तत्सत्यम्, पूर्वमस्यास्तीति पूर्ववत्कारणगतमुन्नतत्वादिधर्मजातमुच्यते तदेव लिङ्गमिति ग्रन्थदोषो ऽपि न कश्चित्, न च कारणमात्रस्य हेतुत्वं ब्रूमो येनास्य विधुरप्रत्ययोपनिपातादिकृतो व्यभिचारः स्यात्, अपि च विशिष्टमेव कारणं हेतुः न च कारणविशेषो दुरवगमः ।

गम्भीरगर्जितारम्भनिर्भिन्नगिरिगह्वराः ।
रोलम्बगवलव्यालतमालमलिनत्विषः ॥
त्वङ्गत्तटिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः ।
वृष्टिं व्यभिचरन्तीह नैव प्रायः पयोमुचः ॥
अनभ्युपगमे चैवमनुमानस्य जीवितम् ।
न स्याद्धूमविशेषाणामपि बोद्धुमशक्तितः ॥

यदपि कार्यप्रत्यक्षत्वमाशङ्कितं तदप्ययुक्तम्, न ह्यत्र वृष्ट्यनुमानसमये एव शिरसि सलिलकणाः पतन्तः पयोदमुक्ता दृश्यन्ते, परोक्षे लिङ्गिनि ज्ञानमनुमानमिति च विशेषणोपादानात्, यत्र तत्र न तदानीमेव वृष्टिः प्रत्यक्षीभवति तदुदाहरणं भविष्यति, अपि च अनुपजातावयवक्रियतया ऽनाशङ्क्यमानविनाशेऽन्त्यतन्तौ जातया क्रियया पटनिष्पत्त्यनुमाने क्रियमाणे पटप्रत्यक्षताकाले व्यवधानसम्भवात्, तथा हि, एकतस्तावत् अन्त्यतन्तौ क्रियादर्शनम् अविनाभावस्मरणम् परामर्शज्ञानम् अनुमेयप्रतीतिरिति त्रिचतुराः क्षणाः अन्यतस्तु क्रिया क्रियातो विभागः विभागात्पूर्वसंयोगनिवृत्तिः ततः उत्तरसंयोगोत्पादः ततः पटनि-

---

( १ ) श्लोकवार्तिकेऽनुमाग्रन्थे श्लोकः ४७ ।

ष्पत्तिः निष्पन्ने पटे क्षणान्तरे रूपादिगुणारम्भः रूपादिजन्मनि पटस्य समवायिकारणत्वात् कारणस्य कार्यादवश्यं पूर्वकालभावित्वम्, अतो निष्पन्नो ऽपि नूनमेकस्मिन् क्षणे नीरूपः पटो भवतीति न तदैव प्रत्यक्षः, ततः क्षणान्तरे रूपोत्पादाद्रूपवद् द्रव्यमिन्द्रियसन्निकर्षात्प्रत्यक्षं भविष्यतीत्यतिवहव एते क्षणा अतो न कार्यप्रत्यक्षत्वम्, नापि विधुरप्रत्ययादिना कार्यानुत्पत्तिरनुत्पन्नावयवक्रियत्वविशेषणोपादानेन तद्विनाशानाशङ्कनात्क्रियातश्चोत्तरोत्तरकर्याणामवश्यम्भावित्वात् ।

यदपि हेतुना यः समग्रेणेत्यादिना योग्यतानुमानं व्याख्यातं तदप्यसाधु स्वभावानुमानस्य निरस्तत्वात्, लोकश्च कारणादविकलात्कार्यमेव कल्पयति न योग्यतामित्यलं प्रसङ्गेन ।

## शेषवत्पदस्यार्थः—

शेषवदिति यत्र कार्येण कारणमनुमीयते यथा नदीपूरेणोपरितने देशे वृष्टिरिति, अत्रापि वृष्टिमदुपरितनदेशसंसर्गलक्षणो नदीधर्मः तद्धर्मेणैव विशिष्टेन पूर्णतादिना ऽनुमीयते, वृष्टिमत्पृष्ठदेशसंसृष्टा इयं नदी फेनिलकलुषत्वादिविशिष्टपूरोपेतत्वात् पूर्वोपलब्धैवंविधधुनीवत्, अयं देशो वा वृष्टिविशिष्टदेशान्तरसंसृष्टः विशिष्टनदीपूरवत्त्वेनानुमीयते इति प्राक्तनवैयधिकरण्यादिचोद्यचक्रस्येहापि नास्ति प्रसरः, फलतस्त्वियं वाचोयुक्तिः कार्येण कारणमनुमीयते इति परमार्थतस्तु धर्मो धर्मवत्त्वेन धर्मवाननुमीयते इति स्थितिः, यदाह भट्टः—

स एव चोभयात्मा ऽयं गम्यो गमक एव च ।
असिद्धेनैकदेशेन गम्यः सिद्धेन बोधक इति(१) ॥

यत्तु सेतुभङ्गहिमविलयनादिनापि नदीपूरोपपत्तिर्दृष्टेति तत्राप्युच्यते ।

आवर्त्तवर्त्तनाशालिविशालकलुषोदकः ।
कल्लोलविकटास्फालस्फुरत्फेनच्छटाञ्चितः ॥
वहद्बहलशैवलवनशाद्वलसंकुलः ।
नदीपूरविशेषो ऽपि शक्येत न निवेदितुम् ॥
प्रमातुरपराधो ऽयं विशेषं यो न पश्यति ।
नानुमानस्य दोषो ऽस्ति प्रमेयाव्यभिचारिणः ॥
रोधोपघातसादृश्यव्यभिचारनिबन्धनम् ।
अनुमानाप्रमाणत्वमतो वक्तुमसांप्रतम् ॥

---

(१) श्लोकवार्तिके अनुमानग्रन्थे श्लोकः २४ ।

पारम्पर्येण वृष्टिश्च नदीपूरस्य कारणम् ।
पतद्घनपयोबिन्दुसंदोहस्पन्दनक्रमात् ॥

## सामान्यतो दृष्टपदस्यार्थः ।

सामान्यतोदृष्टं तु यदकार्यकारणभूताल्लिङ्गात्तादृशस्यैव लिङ्गिनो ऽनुमानं यथा कपित्थादौ रूपेण रसानुमानम् , रूपरसयोः समवायिकारणमेकं कपित्थादि द्रव्यं न तु तयोरन्योन्यं कार्यकारणभावः, शाक्यदृष्ट्या ऽपि वर्त्तमानयोः क्षणयोरितरेतरकार्यकारणता न सम्भवत्येव, धर्मिणश्च रूपवत्त्वेन रसवत्तानुमानाद् असिद्धादिचोद्यानां पूर्ववदनवकाशो वक्तव्यः, यत्पुनर्भाष्यकारेण भास्करस्य देशान्तरप्राप्त्या गत्यनुमानमुदाहृतं तदयुक्तम् , देशान्तरप्राप्तेर्गतिकार्यत्वात्कार्येण कारणानुमानं शेषवदेवेदं स्यात् ।

अपि च देशान्तरप्राप्तिर्देशान्तरसंयोगः न च (१)दशशतांशोर्देशान्तरेण शैलादिना संयोगः सम्भवति नभसा तु भवन्नपि दिशा वा दुर्लक्ष्यः प्रत्यक्षेतरवृत्तित्वात् पवनवनस्पतिसंयोगवत् मातृगर्भसंयोगवद्वा ।

अथ देशान्तरे तरणिदर्शनं हेतुरुच्यते तस्यापि गतिकार्यता पारम्पर्येण विद्यते एव गत्या प्राप्तिः प्राप्त्या च तत्र दर्शनमिति, अथ देशान्तरे उपवने दर्शनं पक्षीकृत्य दर्शनत्वेन च दर्शनशब्दवाच्यत्वेन च वा तस्य गतिपूर्वकत्वमनुमीयते देशान्तरे दिवाकरदर्शनं गतिपूर्वकं देशान्तरदर्शनत्वात्तच्छब्दवाच्यत्वाद्वा देवदत्तदेशान्तरदर्शनवदिति तथा ऽपि पारम्पर्येण गतिकार्यता न निवर्त्तते एव, न हि दर्शनत्वं गोत्वादिवत्सामान्यमस्ति किं तु भावप्रत्ययेनात्र दर्शनोत्पादिका शक्तिरुच्यते सा च नातीन्द्रिया नित्या का चिद् अपि तु स्वरूपसहकारिस्वभावैवेति दृश्यमानं च देशान्तरप्राप्त्यात्मकमिति गतिकार्यम्, एवं दर्शनशब्दवाच्यत्वे ऽपि हेतूकृते वक्तव्यम् , गत्या देशान्तप्राप्तिः जन्यते तया तत्र दर्शनं तेन शब्दप्रयोगः स एव वाच्यत्वमिति भावप्रत्ययेनोक्तः तस्मात्सर्वथा गतिकार्यत्वानपायाच्छेषवदेवेदमनुमानम् ।

तदेतद्भाष्यकारीयमुदाहरणमीदृशम् ।
रूपाद्रसानुमानं तु तस्माद्युक्तमुदाहृतम् ॥
अकार्यकरणप्रायहेतूनां च प्रदर्शितः ।
भदन्तकलहे(२) ऽस्माभिरुदाहरणविस्तरः ॥

---

(१) दशशतांशोः—सूर्यस्य ।
(२) भदन्तो—बौद्धः ।

## अनुमानत्रैविध्यान्तरम्—

एवं तावन्मतुव्याख्यया त्रैविध्यमनुमानस्य वर्णितम्, एतत्तु फल्गुप्रायमिव मन्यन्ते नियमात्मकसंबन्धबलादेव लिङ्गस्य गमकत्वमुक्तं न कार्यादिस्वरूपेण तत्किमीदृशत्रैविध्येन दर्शितेनेति वतिप्रत्ययमाश्रित्यान्यथा व्याचक्षते, पूर्ववदिति अत्र संबन्धग्रहणकाले लिङ्गलिङ्गिनोः प्रत्यक्षतः स्वरूपमवधार्य पुनस्तादृशैव लिङ्गेन तादृगेव लिङ्गी गम्यते तत्पूर्वेण तुल्यं वर्त्तते इति पूर्ववदनुमानम्, यथा महानसे धूमाग्नी सहचरितौ दृष्ट्वा पुनः पर्वते धूमाग्न्यनुमानम्,

ननु प्रत्यक्षप्रतीत्या विषयगतसकलविशेषसाक्षात्करणक्षमया तुल्या नानुमानिकी मतिरिति कथं क्रियातुल्यत्वं तदभावात्कथं वतिः, सत्यमेवम्, तथापि वह्नेरेव तादृशस्य वैलक्षण्यापादकविशेषावच्छिन्नस्य लिङ्गेन ग्रहणाददूरविप्रकर्षेण क्रियातुल्यत्वमुपपत्स्यते, शेषवन्नाम परिशेषः स च प्रसक्तप्रतिषेधे ऽन्यत्राप्रसङ्गाच्छिष्यमाणसंप्रत्ययः, यथा क चित्प्रदेशे धूमेनाग्निमात्रे ऽनुमिते किमिन्धनो ऽयमग्निरिति विमर्शे प्रसक्तानां तृणपर्णकाष्ठादीनां प्रतिषेधान्मृत्पाषणादीनामप्रसङ्गाच्च गोमयेन्धनो ऽग्निः परिकल्प्यते, यथा वा शब्दे द्रव्यकर्मत्वप्रतिषेधात्सामान्यादावप्रसङ्गाच्च गुणत्वानुमानं वक्ष्यते, सामान्यतोदृष्टं तु यत्र संबन्धकाले ऽपि लिङ्गस्वरूपमप्रत्यक्षं नित्यपरोक्षमेव सामान्यतोव्याप्तिग्रहणादनुमीयते यथा शब्दाद्युपलब्ध्या श्रोत्रादि करणम्, इन्द्रियाणामतीन्द्रियत्वान्न कदा चित्प्रत्यक्षगम्यत्वम् अथ च च्छेदनादिक्रियाणां परश्वधादिकरणपूर्वकत्वेन व्याप्तिग्रहणाच्छब्दाद्युपलब्धिक्रियाणां करणपूर्वकत्वमनुमीयते।

अत्र वतिव्याख्याने चोदयन्ति, पूर्ववदेवमेकमनुमानमुक्तं स्यान्न त्रिविधम्, यतो न तावदनवगतव्याप्तिकं लिङ्गं गमकं भवति विशेषाणामनन्तत्वेन च तदन्वयव्यतिरेकयोर्दुरवगमत्वात्सर्वत्र सामान्येनैव व्याप्तिग्रहणम्, यच्चेत्थं व्याप्तिज्ञानं तत्तुल्यं त्रितये ऽपि अतः सर्वं पूर्ववदेव स्याद्वतेः सर्वत्र सम्भवात्।

तदेतदयुक्तम्, अवान्तरविशेषस्य सुस्पष्टस्य भावात्, व्याप्तिपूर्वकमनुमानमित्येतावता यद्येकविधमुच्यते तत्सत्यम्, एवं प्रकारमेवेदं तस्मिन्सत्यपि तु साम्ये भेदान्तरसम्भवात्त्रैविध्यमस्य प्रतिपाद्यते, तथा हि, धूमज्वलनयोः पूर्वं प्रत्यक्षेण ग्रहणादिदानीं तेनैव धूमेन स एवाग्निरनुमीयते इति पूर्ववदिदमनुमानमुच्यते यत्प्रत्यक्षपूर्वकमिति प्रसिद्धम्।

ननु धूमान्तरेण वह्न्यन्तरानुमानं किं न प्रत्यक्षपूर्वकम्, क एवमाह न पूर्ववदिति, कथं तर्हीदमुच्यते तेनैव धूमेनेति, जात्यभिप्रायमेतदुच्यते न व्यक्त्यभिप्रायम्।

ननु सामान्यतस्तर्हि तत्परिच्छेदात्सामान्यतोदृष्टमेवेदं स्यात्, न सामा-

न्यतोदृष्टस्य नित्यपरोक्षानुमेयैकविषयत्वात्, प्रसक्तप्रतिषेधादिना च नियतसाध्यपरिच्छेदहेतुः परिशेषानुमानमुच्यते, यथा गोमयेन्धनदहनानुमानमुदाहृतं शब्दे वा गुणत्वकल्पनम्, सामान्यतोदृष्टं तु नित्यपरोक्षविषयमुदाहृतमेव श्रोत्राद्यनुमानम्, तदेवं भेदसम्भवात्त्रिविधमनुमानमिति युक्तम्।

आस्तां वोदाहरणभेदः एकत्राप्युदाहरणे त्रैविध्यमभिधातुं शक्यते, यथा इच्छादिकार्यमाश्रितं कार्यत्वाद् घटवद् इत्याश्रयमात्रे साध्ये पूर्ववदनुमानम्, प्रसक्तशरीरेन्द्रियाद्याश्रयप्रतिषेधेन विशिष्टाश्रयकल्पने तदेव परिशेषानुमानम्, अनुमेयस्य नित्यपरोक्षत्वात् तदेव सामान्यतोदृष्टं च।

## सामान्यतोदृष्टशेषवदनुमानयोर्भेदः

ननु परिशेषस्य सामान्यतोदृष्टस्य च को विशेषः, उच्यते—परिशेषानुमानप्रवृत्तावन्यः पन्थाः सामान्यतोदृष्टस्यान्यः, इच्छादिकार्यं देहादिविलक्षणाश्रयं शरीरादिषु बाधकप्रमाणोपपत्तौ सत्यां कार्यत्वादिति सामान्यतोदृष्टस्य क्रमः, परिशेषानुमानस्य तु इत्थं प्रवृत्तिः इच्छादेराश्रयत्वेन प्रसक्तानि शरीरेन्द्रियमनांसि निषिध्यन्ते दिक्कालादौ च तत्प्रसङ्गो नास्ति तत्पारिशेष्यादात्मैव तदाश्रय इति, परिशेषानुमाने च सर्वत्र नैष नियमः साध्यस्यातिपरोक्षत्वमिति गोमयाग्निकल्पनादिदर्शनात्, सामान्यतोदृष्टं तु नित्यपरोक्षविषयमेवेति सूक्तं त्रैविध्यम्।

अपरे पुनः अदृष्टस्वलक्षणविषयं शक्तिक्रियानुमानं सामान्यतोदृष्टमुदाहरन्ति देवदत्तादावपि क्रियायाः परोक्षत्वात्, चलतीति प्रत्यये हि न देवदत्तस्वरूपातिरिक्तक्रियातत्त्वप्रतिभासः।

> य एव देवदत्तात्मा तिष्ठत्प्रत्ययगोचरः।
> चलतीत्यपि संवित्तौ स एव प्रतिभासते॥

अविरलसमुल्लसत्संयोगविभागप्रबन्धविषयत्वाच्चलतीति प्रत्ययस्य न सर्वदा तदुत्पादः, कथं तर्हि नित्यपरोक्षे क्रियास्वलक्षणे ऽनुमानं क्रमते इति चेत् कार्यस्य कादाचित्कत्वेन कारणपूर्वकत्वात् परिदृश्यमानस्य द्रव्यस्वरूपस्य कारणत्वे सर्वदा कार्योत्पादनप्रसङ्गात् सर्वदा तत्स्वरूपसद्भावाद्, न च सर्वदा कार्यमुत्पद्यते इति तदतिरिक्तक्रियानुमानम्, एवं शक्तावपि द्रष्टव्यम्, क्रियाशक्तिस्वरूपस्य च नित्यपरोक्षत्वात्तददृष्टस्वलक्षणविषयमनुमानमुच्यते न तु विशेषविषयं विशेषव्याप्तिग्रहणस्यासम्भवादिति।

तदिदमनुपपन्नम्, परिस्पन्दरूपस्योत्क्षेपणादिभेदवतः कर्मणः चलत्यादिप्रतीतौ प्रकाशमानत्वेन प्रत्यक्षत्वाद् न तस्य नित्यानुमेयत्वम्, संयोगविभागालम्बनत्वे तु संयुज्यते विभज्यते इति प्रतीतिः स्याद् न चलतीति यथाविषयं प्रत्ययोपादात्, संवेदनानुसारिणी च विषयव्यवस्था अन्यथा घटप्रत्यये ऽपि परस्या-

लम्बनता स्यात्, संयोगविभागालम्बनत्वे सति तिष्ठत्यपि चलत्प्रत्ययः प्राप्नोति तत्रापि संयोगविभागसम्भवात्, स्थाणौ च श्येनसंयोगविभागवति चलतीति प्रतिभासो भवेत्, अविरलतदुपजनप्रबन्धे ऽपि भूतभाविनोः संयोगविभागयोः परोक्षत्वाद्वर्त्तमानयोर्ग्रहणम्, तौ च चलित्वा ऽपि स्थिते देवदत्ते स्त इति तत्रापि कथं न चलतीति प्रत्ययः ।

निरन्तरं च संयोगविभागश्रेणिदर्शनात् ।
भूमावपि भवेद् बुद्धिश्चलतीति मनुष्यवत् ॥

अथ मनुषे यत्क्रियाजन्यत्वं संयोगविभागयोस्तत्रैव चलतीत्यादिबुद्धिः नान्यत्र देवदत्तक्रियया च तौ जन्येते न निष्क्रियया भूम्येति न तस्यां तथा प्रत्ययः, यद्येवं क्रियान्वयव्यतिरेकानुविधानात्क्रियालम्बन एवायं प्रत्ययो न संयोगविभागालम्बनः, तदालम्बनत्वे हि तयोर्द्वयवृत्तित्वाविशेषाद्विशेषे कारणं वाच्यं येन पुरुष एवायं प्रत्ययो न भूमामिति, देवदत्तक्रियाजन्यत्वेन तु न विशेषो यतः क्रियायाः परोक्षत्वे सति तदेव न विद्मः किमसौ देवदत्ताश्रया क्रिया किं वा भूम्याश्रितेति, संयोगविभागकार्यानुमानस्योभयत्रापि तुल्यत्वात्, न च देवदत्ते गच्छति भूमावनवरतवहद्वातसंयोगविभागवत्यपि वा तरङ्गिणीतीरपाषाणे चलतीति प्रत्ययो दृष्टः, तस्मात्क्रियाविषय एव चलतीति प्रत्ययो न संयोगविभागालम्बनः, संयोगविभागाग्रहणे ऽपि च निरालम्बे विहायसि विहरति विहंगमे चलतीति संवेदनं दृश्यते, न च गगनसंयोगः प्रत्यक्षः प्रत्यक्षेतरवृत्तित्वाद् गन्धवहमहीरुहसंयोगवद्, विततालोकावयव्याकाशस्तत्संयोगश्च पक्षिणः प्रत्यक्ष इति चेन्नैतदेवम्–

तमालनीलजीमूतसमूहपिहिताम्बरे ।
निशीथे सान्धकारे ऽपि चलत्खद्योतदर्शनात् ॥

न तत्रालोकावयवी न च कश्चन तिमिरावयवी वा विद्यते इति केन संयोगो गृह्यते विभागो वा, भूकम्पोत्पाते च जाते चलति वसुमतीति मतिरस्ति न तत्र संयोगविभागौ गृह्येते बहुलनिशीथे च नतराम्, तस्मान्न संयोगाद्यालम्बना चलतीति मतिरपि तु क्रियालम्बनैवेति, न च नित्यपरोक्षा क्रिया ऽनुमातुमपि शक्या कार्यस्य कारणपूर्वकत्वेन भवन्मते संबन्धग्रहणानुपपत्तेः, न हि ते द्रव्यस्वरूपं कारणमपि तु क्रियाऽऽविष्टम्, क्रियायाश्च परोक्षत्वान्न तदाविष्टद्रव्यग्रहणं सुघटमिति कारणत्वाग्रहणाद् घटादावपि दुर्घटा व्याप्तिप्रतीतिः, आत्मानुमाने तु नायं दोषः घटादेः कार्यस्याश्रितस्य प्रत्यक्षमुपलम्भात् तस्मान्न कार्यानुमेया क्रिया न च संयोगानुमेया संयोगान्तं कर्मेति न्यायाद् वर्त्तमानायाः क्रियायास्तेनानुमातुमशक्यत्वात्, क्रियानुमानवादश्च सामान्यलक्षणे विस्तरेण निरस्तः ।

एतेन शक्त्यनुमानमपि व्युदस्तं वेदितव्यम्, पुरा च सविस्तरमतीन्द्रियशक्तिनिराकरणं कृतमेव ।

तेनादृष्टक्रियाशक्तिस्वलक्षणमिति क्षमम् ।
नेदं सामान्यतोदृष्टमिति पूर्वोक्तमेव तत् ॥
इति मतुपि वतौ वा प्रत्यये वर्त्तमाने
त्रिविधमिदमिहोक्तं युक्तमेवानुमानम् ।
परकविरचितानां लक्षणानां त्वमुष्मि-
न्सति न भवति शोभा भास्वतीवेन्दुभासाम् ॥
बौद्धोक्तप्रतिबन्धदूषणदिशा तल्लक्षणं दूषितं
भूयोदृष्टसितान्वयैककरणं शोच्यं पुनः शाबरम् ।
सांख्यानां तु कुतो ऽनुमानघटनोपादानरूपा यत-
स्तेषां जातिरसौ च तद्विकृतिवद्भिन्नेति दुःस्थो ऽन्वयः ॥

## अनुमानस्य त्रिकालविषयत्वम्

इदमिदानीं चिन्त्यते, यदेतदिन्द्रियादिसन्निकर्षजत्वादिना लक्षितमस्मदादिप्रत्यक्षं तत्किल प्रायशो वर्त्तमानकालविशिष्टवस्तुविषयम्, एवमिदमनुमानमपि किं तद्गोचरमेव किं वा कालान्तरपरिच्छेदे ऽपि क्षममिति तदुच्यते, त्रिकालविषयमनुमानमिति, कस्मात् त्रैकाल्यग्रहात् त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते, भूता नदीपूरेण वृष्टिरनुमीयते सैव भविष्यन्ती मेघोन्नत्या धूमेन वर्त्तमानोऽग्निरिति, अतश्च यन्मीमांसकैरुच्यते चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यदिति तदयुक्तम्, चोदनावत्प्रमाणान्तरस्याप्येवंजातीयकविषयत्वोपपत्तेः, प्रत्यक्षमपि योगिनां त्रिकालविषयमुक्तमस्मदादीनामपि क्वचिदिति ।

### कालाक्षेपः—

अत्र चोदयन्ति, काले सति त्रैकाल्यग्रहणं चिन्त्यं स एव तु दुरुपपादः तदभावे कस्य वर्त्तमानादिविभागो निरूप्यते ।

न तावद् गृह्यते कालः प्रत्यक्षेण घटादिवत् ।
चिरक्षिप्रादिबोधो ऽपि कार्यमात्रावलम्बनः ॥
न चामुनैव लिङ्गेन कालस्य परिकल्पना ।
प्रतिबन्धो हि दृष्टो ऽत्र न धूमज्वलनादिवत् ॥
प्रतिभासाऽतिरेकस्तु कथं चिदुपपत्स्यते ।
प्रचितां कां चिदाश्रित्य क्रियाक्षणपरम्पराम् ॥

न चैष ग्रहनक्षत्रपरिस्पन्दस्वभावकः ।
कालः कल्पयितुं युक्तः क्रियातो नापरो ह्यसौ ॥
मुहूर्त्तयामाहोरात्रमासर्त्वयनवत्सरैः ।
लोके काल्पनिकैरेव व्यवहारो भविष्यति ॥
यदि त्वेको विभुर्नित्यः कालो द्रव्यात्मको मतः ।
अतीतवर्त्तमानादिभेदव्यवहृतिः कुतः ॥

## केषांचिन्मतेन कालस्य प्रत्यक्षत्वम्--

एवमाक्षिप्ते सति—

प्रत्यक्षगम्यतामेव केचित्कालस्य मन्वते ।
विशेषणतया कार्यप्रत्यये प्रतिभासनात् ॥
क्रमेण युगपत्क्षिप्रं चिरात्कृतमितीदृशः ।
प्रत्यया नावकल्पन्ते कार्यमात्रावलम्बनाः ॥

न हि विषयातिशयमन्तरेण प्रतिभासातिशयो ऽवकल्पते ।

अरूपो नन्वयं कालः कथं गृह्येत चक्षुषा ।
रूपमेव तवारूपं कथं गृह्येत चक्षुषा ॥
कथं वा रूपवन्तो ऽपि परोक्षाः परमाणवः ।
तस्मात्प्रतीतिरन्वेष्या किं निमित्तपरीक्षया ॥

ननु द्रव्ये ऽयं नियमो न रूपादौ, द्रव्ये ऽपि नायं नियमः यद्रूपवत्तत्प्रत्यक्षमिति येन परमाणूनां तथाभावः स्यात् , किं तु यत्प्रत्यक्षं तद्रूपवदिदिति, तदुक्तम् , त्रयाणां प्रत्यक्षत्वरूपवत्त्वद्रवत्वादीनीति (१)नेदं दैविकं वचनं यदनतिक्रमणीयम्, न च वचनेन प्रत्यक्षत्वमप्रत्यक्षत्वं वा व्यवस्थाप्यते प्रत्यक्षत्वं ह्यैन्द्रियकप्रतीतिविषयत्वमुच्यते तच्चेदस्ति कालस्य नीरूपस्यापि प्रत्यक्षता केन वार्यते, रूपित्वं तद् द्रव्याणामस्तु तथा दर्शनात्,

न चानुद्घाटिताक्षस्य क्षिप्रादिप्रत्ययोदयः ।
तद्भावानुविधानेन तस्मात्कालस्तु चाक्षुषः ॥

स्वतन्त्र एव तर्हि घटादिवत्कस्मान्न गृह्यते काल इति चेद्वस्तुस्वभाव एष न पर्यनुयोगार्हः, रूपिद्रव्यविशेषणतां गतस्य तस्य ग्रहणं न दण्डादिवत्स्वतन्त्रस्यापीति गगनादेस्त्वन्यविशेषणतया ऽपि न ग्रहणमस्तीति तस्याप्रत्यक्षत्वं न त्वरूपत्वात् ।

अथ वदेद् विशेषणस्यापि रूपवत एव दण्डादेः चक्षुषा ग्रहणं न कालादेरिति तदयुक्तम्, अरूपस्यापि सामान्यादेर्विशेषणस्य चक्षुषा ग्रहणात् , द्रव्ये नि-

---

( १ ) वैशेषिकदर्शने प्रशस्तपादभाष्ये प्रथमाह्निके ।

यम इति चेद् उक्तमत्र यदेव नयनकरणकावगमगोचरे संचरति तदेव चाक्षुषं रूपवदरूपं वा द्रव्यमद्रव्यं वेति, एवं गुरु द्रव्यमिति कार्तस्वरादौ प्रतिभासाद् गुरुत्वमपि प्रत्यक्षं न पतनानुमेयमेव।

तस्मात्स्वतन्त्रभावेन विशेषणतया ऽपि वा।
चाक्षुषज्ञानगम्यं यत्तत्प्रत्यक्षमुपेयताम्॥

अत एव प्रत्यक्षः कालः, एवं समानन्यायत्वात्पूर्वापरादिप्रत्ययगम्या दिगपि प्रत्यक्षा वेदितव्येति।

## कालस्यानुमेयत्वम्

अन्ये मन्यन्ते, दण्डी देवदत्तो नीलमुत्पलमितिवद्विषयातिरेकस्याग्रहणात्प्रत्ययातिशयस्य च परोक्षकालपक्षे ऽपि तत्कारणकस्योपपत्तेरनुमेय एव कालः।

अप्रत्यक्षत्वमात्रेण न च कालस्य नास्तिता।
युक्ता पृथिव्यधोभागचन्द्रमःपरभागवत्॥

अप्रतिभासमानो ऽपि कालः संस्कार इवेन्द्रियसहचरितः प्रत्यभिज्ञां क्षिप्रादिप्रतीतिं जनयिष्यति कृतश्च प्रत्यक्षलक्षणे महान्कलिः किं विषयभेदादेव प्रतिभासभेदः उतोपायभेदादपीति तदलं पुनस्तद्विमर्देन।

प्रमाणमिति निर्णीतं प्रत्यक्षं सविकल्पकम्।
तस्मान्न कल्पनामात्रं चिरक्षिप्रादिसंविदः॥

न च संपरिदृश्यमानकारणविनिर्मितत्वमुपपद्यते क्रियमाणस्य पटादेः कार्यस्य तदुत्पादस्य च तन्तुतुरीवेमशलाकाकुविन्दादिकारणवृन्दस्य साम्ये ऽपि क चित्तूर्णं कृतं क चिच्चिरेण कृतमिति प्रतिभासभेददर्शनान्निमित्तान्तरं चिन्तनीयम्,

ननु परिस्पन्दादिक्रियाभेद एवात्र निमित्तं कश्चित्परिस्पन्दश्चतुरः कश्चिन्मन्थर इति क चित्क्षिप्रबुद्धिः क चिच्चिरबुद्धिरिति, नैतच्चारु, परिस्पन्दगतयोरपि चातुर्यमान्थर्ययोर्निमित्तान्तरकार्यत्वात्, परिस्पन्दे ऽपि चिरेण गच्छति शीघ्रं धावतीति चिरक्षिप्रादिप्रतीतिर्दृश्यते, आह—न देवदत्तादिपरिस्पन्दनिबन्धनाः क्रमाक्रमादिप्रत्ययाः किं तु ग्रहनक्षत्रादिपरिस्पन्दनिबन्धनाः, स एव च ग्रहतारादिपरिस्पन्दः काल इत्युच्यते, तत्कृत एवायं यामाहोरात्रमासादिव्यवहारः, तस्य स्वत एव भेदादौपाधिकभेदकल्पनाक्लेशो न भविष्यति, भेदपरिच्छेदे नालिकाप्रहरादिरुपायः इयती नालिका इयन्मुहूर्तम् इयान्प्रहरः इति, तत्रैकस्मिन्मुहूर्ते प्रहरे वा निर्वर्त्यमानेषु बहुषु कार्येषु युगपदिति भवति मतिः, मुहूर्तान्तरापेक्षेषु क्रमेणेति, तस्माद् ग्रहादिपरिस्पन्द एव तैस्तैर्निमित्तैरुपलक्ष्यमाणप्रमाणः काल इति, कालविदश्च ज्योतिर्गणकास्त एवैनं बुध्यन्ते, तदसांप्रतम्, चन्द्रादिग्रहपरिच्छेदे ऽपि क्रियादिप्रतीतिदर्शनात्।

चिरेणास्तं गतो भानुः शीतांशुः शीघ्रमुद्गतः ।
उदिताविव दृश्येते युगपद्भौमभार्गवौ ॥

इति दृश्यते प्रतिभासः, न च ग्रहान्तरपरिस्पन्दकारणक एष शक्यते वक्तुमनवस्थाप्रसङ्गात्, तस्मान्न ग्रहादिपरिस्पन्दः कालः किं तु वस्त्वन्तरं यत्कृतोऽयं क्रमादिव्यवहारः ।

ननु भवत्कल्पितोऽपि कालः किं स्वत एव क्रमस्वभावः हेत्वन्तराद्वा, स्वतस्तस्य तत्स्वभावत्वे कार्यस्यैव पटादेः परिदृश्यमानस्य तत्स्वाभाव्यं भवतु किं कालेन, हेत्वन्तरपक्षे त्वनवस्था तस्यापि हेत्वन्तरापेक्षत्वादिति ।

तदेतद्बालिशचोद्यम्, शुक्लगुणादावप्येवं वक्तुं शक्यत्वात्, गुणस्य स्वतः शुक्लस्वभावत्वे द्रव्यस्यैव तद्भवतु किं गुणेन गुणान्तरकल्पने त्वनवस्थेति, अथ तत्र तथा दर्शनान्नेदं चोद्यं तदिहापि समानम्, कार्येषु पटादिषु निमित्तान्तरकृतः क्रमादिव्यवहारो निमित्तान्तरे निमित्तान्तरं न मृग्यमिति, तस्मादस्ति युगपदादिव्यवहारहेतुः कालः, अतश्चैवम्—

दृष्टः परापरत्वस्य दिक्कृतस्य विपर्ययः ।
युवस्थविरयोः सोऽपि विना कालं न सिध्यति ॥

दूरतरदिगवच्छिन्नो देवदत्तादिः पर इति प्रतिभासते निकटदिगवच्छिन्नस्तु अपर इति, तदत्र न कालव्यतिरिक्तं कारणमुपपद्यते इत्यतोऽनुमीयते कालः, सचायमाकाशवत्सर्वत्रैकः कालः यथाऽऽकाशलिङ्गस्य शब्दस्य सर्वत्राविशेषाद्विशेषलिङ्गाभावाच्चैकः आकाशः, सर्वत्र तद्व्यवहाराद्विभुः, अवयवाश्रयानुपलम्भाद् निरवयवः, अनाश्रितश्चानाश्रितत्वादेव द्रव्यम्, अत एवावयवविभागादिनाशकारणानुपपत्तेर्नित्य इति ।

## कालत्रैविध्यम्

नन्वेवं चैकत्वात्कालस्य कुतो वर्त्तमानादिविभागः तदभावात्कथं त्रिकालविषयमनुमानमुच्यते, उच्यते न तात्त्विकः कालस्य भेदो वर्त्तमानादिः, किं त्वसन्नप्यसौ व्यवहारसिद्धये केन चिदुपाधिना कल्प्यते, कः पुनरसावुपाधिः क्रियेति ब्रूमः ।

ननु तस्या अपि न स्वतो वर्त्तमानादिभेदः तद्भावे वा सैव तथा भवतु किं कालेन, मैवम्, उत्पत्तिस्थितिनिरोधयोगिफलावच्छेदेन नानाक्षणपरम्परात्मिकापि क्रियेत्युच्यते सा वर्त्तमानादिभेदवती च, तथा हि, स्थाल्यधिश्रयणात्प्रभृति आ तदवतरणादुत्पद्यमानौदनाख्यफलावच्छेदात्क्रिया वर्त्तमानोच्यते पचतीति तदवच्छेदाद् घटाकाशवत्कालोऽपि तावान् वर्त्तमान इत्युच्यते, अभिनिर्वृत्तफलावच्छेदात्मा परिस्पन्दसन्ततिरतीता भवति अपाक्षीदिति तदवच्छेदात्का-

लो ऽप्यतीत उच्यते, अनारब्धफलावच्छेदाद्भविष्यन्ती क्रियोच्यते पत्स्यतीति तथा कालो ऽपीत्येवं सोपाधिकः काले एव वर्त्तमानादित्रयव्यवहारः, अतश्च यदुच्यते वृक्षात्पततः पर्णस्य भूतभविष्यन्तावध्वानौ दृश्येते न वर्त्तमानः तस्माद्वर्त्तमानः कालो नास्तीति तदसंबद्धम्, अध्वव्यङ्ग्यत्वाभावात्कालस्य, न ह्यध्वव्यङ्ग्यः कालभेदः किं तु यथोक्तक्रमेण क्रियाव्यङ्ग्य एवेति, क्रियापरिकल्पितभेदनिबन्धनश्चायं क्षणलवकाष्ठाकलानालिकामुहूर्त्तयामाहोरात्रमासर्त्वयनसंवत्सरयुगमन्वन्तरकल्पव्यवहार इत्यलं प्रसङ्गेन ।

तिथ्यादिभेदावधारणं च वैदिककर्मप्रयोगाङ्गम्, पौर्णमास्यां पौर्णमास्यया यजेत अमावस्यायाममावास्यया यजेतेति, एवं वसन्ताद्यृतुभेदो ऽपि तदङ्गं वसन्ते ब्राह्मणो ऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः वर्षासु रथकार इति, स चायमृतुतिथ्यादिविभागः क्रिययैव ज्योतिःशास्त्रोपदिष्टविशिष्टराशिसंसृष्टचन्द्रादिग्रहगतया लक्ष्यते लौकिकेन च लक्ष्मणा तेन तेनेति, तद्यथा—

चञ्चच्चञ्चुम्बिताताम्रचूताङ्कुरकदम्बकैः ।
कथ्यते कोकिलैरेव मधुर्मधुरकूजितैः ॥
दिवाकरकरालातपातनिर्दग्धवीरुधः ।
मार्गाः समल्लिकामोदा भवन्ति ग्रीष्मशंसिनः ॥
शिखण्डमण्डनारब्धोद्दण्डताण्डवडम्बरैः ।
प्रावृडाख्यायते मेघमेदुरैर्मेदिनीधरैः ॥
मौक्तिकाकारविस्तारितारानिकरचित्रितम् ।
शरत्पिशुनतां याति यमुनाम्भोनिभं नभः ॥
आयामियामिनीभोगसफलाभोगविभ्रमाः ।
हेमन्तमभिनन्दन्ति सोष्माणस्तरुणीस्तनाः ॥
आस्कन्दनदलत्कुन्दकलिकोत्करदन्तुराः ।
वदन्ति शिशिरं वातास्तुषारकणकर्कशाः ॥
तस्मादेको ऽप्ययं कालः क्रियाभेदाद्विभिद्यते ।

## दिङ्निरूपणम्—

एतेन सदृशन्यायान् मन्तव्या दिक्समर्थिता ॥

पूर्वपश्चिमादिप्रत्ययानां केवलवृक्षादिप्रत्ययवैलक्षण्येन कारणान्तरानुमानात्, दिग्लिङ्गाविशेषादेकत्वे ऽपि दिशो दशविधाः, प्रदक्षिणावर्त्तपरिवर्त्तमानमार्तण्डमण्डलमरीचिनिचयचुम्ब्यमानकाञ्चनाचलकटकसंयोगोपाधिकृतः पूर्वपश्चिमादिभेदः कल्प्यते, पूर्वा पूर्वदक्षिणा दक्षिणा दक्षिणपश्चिमा पश्चिमा पश्चिमोत्तरा उत्तरा उत्तरपूर्वा अधस्तनी ऊर्ध्वा चेति, देवतापरिग्रहवशाच्च पुनरेषैव

दिग्दशधोच्यते, ऐन्द्री आग्नेयी याम्या नैर्ऋती वारुणी वायव्या कौबेरी ऐशानी नागीया ब्राह्मी चेति ।

ननु च येनैव प्रत्ययेन प्रत्यक्षेण लिङ्गेन वा सता दिक्कालाववगम्येते तेनैव तयोर्भेदग्रहणात्कथमेकत्वं तदवगमसमय एव तथा भेदप्रतिभासात्, उक्तमत्र सर्वत्र तत्प्रत्ययाविशेषादिति, व्यत्ययदर्शनाच्च यैवैकत्र पूर्वा दिक्सैवान्यत्र दक्षिणेति गृह्यते 'प्राग्भागो यः सुराष्ट्राणां मालवानां स दक्षिण' इति, कालेऽपि चिरक्षिप्रादिविभागश्चाव्यवस्थित एव दृश्यते यो हि अनागत इति परिस्फुरति कालः स एव वर्त्तमानो भवति भूतो भवति च, तथा च चिरमपि शीघ्रीभवति शीघ्रमपि चिरीभवति, तस्मात्तद्भेदो ऽप्यौपाधिक इति सिद्धम् ।

समानतन्त्रे दिक्कालौ वैतत्येन विचिन्तितौ ।
तन्नेह लिख्यते लोके द्वेष्या हि बहुभाषिणः ॥
सिद्धः कालश्चाक्षुषो लैङ्गिको वा तन्नानात्वं सिद्धमौपाधिकं च ।
तस्माद्युक्तं निश्चिकाय त्रिकालग्राहीत्येवं सूत्रकारो ऽनुमानम् ॥

## इत्यनुमाननिरूपणम्

## अथोपमानलक्षणम्—

अनुमानानन्तरमुपमानं विभागसूत्रे पठितमिति तत्क्रमेण तस्य लक्षणमुच्यते ।

**प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ॥ ६ ॥**

अत्र वृद्धनैयायिकास्तावदेवमुपमानस्वरूपमाचक्षते, संज्ञासंज्ञिसम्बन्धप्रतीतिफलं प्रसिद्धेतरयोः सारूप्यप्रतिपादकमतिदेशवाक्यमेवोपमानम्, गवयार्थी हि नागरको ऽनवगतगवयस्वरूपस्तदभिज्ञमारण्यकं पृच्छति कीदृग्गवय इति स तमाह यादृशो गौस्तादृशो गवय इति, तदेतद् वाक्यमप्रसिद्धस्य प्रसिद्धेन गवा सादृश्यमभिदधत्तद्द्वारकमप्रसिद्धस्य गवयसंज्ञाभिधेयत्वं ज्ञापयतीत्युपमानमुच्यते ।

ननु शब्दस्वभावत्वादस्याप्तोपदेशः शब्द इत्यनेन गतार्थत्वान्नेदं प्रमाणान्तरं भवेत्, न च संज्ञासंज्ञिसंबन्धपरिच्छेदफलत्वेन प्रमाणान्तरता वक्तव्या फलवैचित्र्येण प्रमाणानन्त्यप्रसङ्गात्, लौकिकानि हि वचनानि वैदिकानि च विधिनिषेधबोधकानि नानाफलान्यपि भवन्ति न शब्दतामतिक्रामन्ति ।

उच्यते—यत्र शब्दप्रत्ययादेव तत्प्रणेतृपुरुषप्रत्ययादेव वा अर्थतथात्वमुपायान्तरानपेक्षमवगम्यते स आगम एव ततस्तदर्थप्रतीतेः, यत्र तु पुरुषः प्रतीत्युपायमपरमुपदिशति तत्र तत एवोपायात्तदर्थावधारणम्, उपायमात्रावगमे तु

शब्दव्यापारो यथा परार्थानुमाने, अग्निमानयं पर्वतो धूमवत्त्वान्महानसवदिति, अत्र हि न पुरुषोपदेशविश्वासादेव शैलस्य कृशानुमत्तां प्रतिपत्ता निमित्तान्तरनिरपेक्षः प्रतिपद्यते अपि तु तदवबोधकधूमाख्यलिङ्गसामर्थ्यादेव, तदिह यद्याटविको नागरकाय गवयार्थिने तदवगमोपायं प्रसिद्धसाधर्म्यं नाभ्यधास्यत्तर्हि तदुपदेश आगमे एव अन्तरभविष्यत्, तदुपदेशात्तु तत एव तदर्थावगम इति सत्यपि शब्दस्वभावत्वे प्रमाणान्तरमेवेदम्, प्रतिपत्ता ऽपि नागरको नारण्यकवाक्यादेव तं प्राणिनं गवयशब्दवाच्यतया बुध्यते किं तु सारूप्यं प्रसिद्धेन गवा तस्य पश्यति, किमारण्यकवाक्येन न संप्रत्ययो नागरकस्य, न ब्रूमो न संप्रत्यय इति किं तु सारूप्यमुपायान्तरं तदवगतावसावुपदिष्टवानिति ततो ऽवगतिर्भवन्ती न निह्नोतुं शक्यते इति न शाब्दी सा प्रतीतिरपि त्वौपमानिकीति वचनमपि भवदिदमुपमानं प्रमाणान्तरमिति युक्तम्, भाष्याक्षराण्यपि चैतत्पक्षसाक्षच्छायामिव वदन्ति लक्ष्यन्ते, तानि तु ग्रन्थगौरवभयान्न योज्यन्ते इत्यलं प्रसङ्गेन ।

अद्यतनास्तु व्याचक्षते श्रुतातिदेशवाक्यस्य प्रमातुरप्रसिद्धे पिण्डे प्रसिद्धपिण्डसारूप्यज्ञानमिन्द्रियजं संज्ञासंज्ञिसंबन्धप्रतिपत्तिफलमुपमानम्, तद्धीन्द्रियजनितमपि धूमज्ञानमिव तदगोचरप्रमेयप्रमितिसाधनात्प्रमाणान्तरम्, श्रुतातिदेशवाक्यो हि नागरकः कानने परिभ्रमन् गोसदृशं प्राणिनमवगच्छति ततो वनेचरपुरुषकथितं यथा गौस्तथा गवय इति वचनमनुस्मरति स्मृत्वा च प्रतिपद्यते अयं गवयशब्दवाच्य इति, तदेतत्संज्ञासंज्ञिसंबन्धज्ञानं तज्जन्यमित्युपमानफलमित्युच्यते ।

प्रत्यक्षं तावदेवैतद्विषये न कृतश्रमम् ।<br>
वनस्थगवयाकारपरिच्छेदफलं हि तत् ॥<br>
अनुमानं पुनर्नात्र शङ्कामप्यधिरोहति ।<br>
क्व लिङ्गलिङ्गिसंबन्धः क्व संज्ञासंज्ञितामतिः ॥<br>
आगमादपि तत्सिद्धिर्न वनेचरभाषितात् ।<br>
तत्कालं संज्ञिनो नास्ति गवयस्य हि दर्शनम् ॥

संज्ञासंज्ञिनोश्च परिच्छेदे सति तत्संबन्धः सुशको भवति नान्यथा, अत एव प्रत्यक्षपूर्वकं संज्ञाकर्मेत्याचक्षते, एतदाक्षिपति—

## उपमानस्य प्रमाणान्तरत्वे आक्षेपः—

ननु नागरकप्रश्नमनुरुध्य वनेचरः ।<br>
ब्रूते ऽतिदेशकं वाक्यं यथा गौर्गवयस्तथा ॥

अस्यायमर्थो यस्य त्वं गोसादृश्यं निरीक्षसे ।
तमेव गवयं विद्याः स चायं संज्ञिनो ग्रहः ॥
संबन्धकारणं चेह विशेषेषु न युज्यते ।
आनन्त्यात्किं तु सामान्ये तच्चेत्थमवधारितम् ॥
प्रत्यक्षपूर्वकं संज्ञाकर्मेति न हि वैदिकी ।
चोदना किं त्ववच्छेदः संज्ञिनो ऽत्र विवक्षितः ॥
स तु प्रत्यक्षतो वा ऽस्तु प्रमाणान्तरतोऽपि वा ।
स्मर्यमाणो ऽपि चार्थोऽस्ति संकेते कारणं क चित् ॥
यो ऽसौ तत्र त्वया दृष्टः प्राणी स रुरुरुच्यते ।
क चित्तु कैश्चिन्निर्दिश्य परोक्षमुपलक्षणैः ॥
संज्ञिनं व्यवहर्त्तारस्तत्र संज्ञां नियुञ्जते ।
दन्तुरो रोमशः श्यामो वामनः पृथुलोचनः ॥
यस्तत्र चिपिटग्रीवस्तं चैत्रमवधारयेः ।
एवमत्रापि गोपिण्डसारूप्येणोपलक्षिते ॥
वाच्ये वाचकसंबन्धबोधनं नैव दुर्घटम् ।
अथ सोपप्लवा वाक्याद् बुद्धिरित्यभिधीयते ॥
उपप्लवो ऽपि संबन्धे न कश्चिदनुभूयते ।
यस्त्वस्ति गवयाकारं प्रति कीदृगसाविति ॥
सो ऽपि प्रत्यक्षतो दृष्टे गवये विनिवर्त्तते ।
प्रत्यक्षागमसिद्धे ऽर्थे तस्मान्मानान्तरेण किम् ॥

### उपमानस्य प्रमाणान्तरत्वसमर्थनम्—

अत्राहुः, नाटविकरटितवाक्याद्विस्पष्टः संज्ञासंज्ञिसंबन्धप्रत्ययो भवितुमर्हति संज्ञिनस्तदानीमप्रत्यक्षत्वात्, यद्यपि गोसारूप्यविशिष्टतया तदवगम उपपादितः तथा ऽपि सोपप्लवैव भवति तदानीं बुद्धिः ।

न निराकाङ्क्षताबुद्धिस्तदानीमुपजायते ।
तदुत्पादनपर्यन्तः शब्दव्यापार इष्यते ॥
न चासौ निर्वहत्यत्र वाच्यसंवित्त्यपेक्षणात् ।
शब्देन तदनिर्वाहान्न स्वकार्यं कृतं भवेत् ॥
संबन्धप्रतिपत्तिश्च सामान्ये यदि येष्यते ।
तदप्यविदितव्यक्ति न सम्यगवधारितम् ॥
गवयाकारवृत्तिश्च तदानीं बुद्ध्युपप्लवः ।
संबन्धे ऽपि द्व्यधिष्ठाने दधाति श्यामलां धियम्

प्रत्यक्षपूर्वकं तस्मात्संज्ञाकर्मेति गीयते ।
क्वचित्तदेव प्रत्यक्षं स्मृतिद्वारेण कारणम् ॥

पूर्वदृष्टे कुरङ्गादौ संबन्धो दर्शितो यथा ।
चैत्रे प्रत्यक्षवत्सिद्धिर्दन्तुरादिविशेषणैः ॥

इह पुनरतिदेशवचनसमये गोसादृश्यमात्रोपदेशे सत्यपि संज्ञिनि न निवर्त्तते एवोपप्लवः प्रमाणान्तरपरिच्छेदसापेक्षकसंज्ञिरूपोपदेशात्, यत्र गोसादृश्यं पश्यसीति प्रत्यक्षादेव तर्हि उपप्लवो विरंस्यतीति चेद् न, प्रत्यक्षस्येन्द्रियसन्निकर्षादिस्वभावस्य संज्ञासंज्ञिसंबन्धबोधकरणासमर्थत्वात् ।

प्रत्यक्षफलमेतत्तु समर्थं सत्यमिष्यते ।
तस्यैव च वयं ब्रूम उपमानप्रमाणताम् ॥

यथा प्रत्यक्षफलमपि धरणिधरकुहरभुवि धूमदर्शनमनिन्द्रियविभावसुबोधसाधनत्वादनुमानम् एवं गोसारूप्यविशेषितविपिनगतगवयपिण्डदर्शनमध्यक्षफलमपि तदनवगतसंज्ञासंज्ञिसंबन्धबोधविधानादुपमानमुच्यते, यथा च तत्र पूर्वावगतधूमाग्निप्रतिबन्धस्मरणं सहकारितामुपैति तथा इहापि पूर्वश्रुतारण्यकवाक्यार्थस्मरणम्, यथा तत्र व्याप्तिवेलायामनालीढविशेषा बुद्धिरधुना पक्षधर्मताबलाद्विशेषे व्यवतिष्ठते अत्राग्निरिति तथा ऽत्राप्यनवगतवाच्यविशेषाद्वाक्याद् बुद्धिरिदानीं वाच्यविशेषे दृष्टे निरुपप्लवा जायते अयं स गवयशब्दाभिधेय इति, नैतावता ऽनुमानमेवेदमित्याशङ्कनीयम् अनपेक्षितधर्मान्वयव्यतिरेकादिसामग्रीकस्य तत्प्रत्ययोत्पादात् ।

तस्मादयं स गवयो नामेत्येवंविधा मतिः ।
उपमानैकजन्यैव न प्रमाणान्तरोद्भवा ॥

न चैषा नास्ति सन्दिग्धा बाध्यते कल्पनामात्रं वेति सर्वथैतस्याः प्रमितेः साधनमुपमानं प्रमाणमिति सिद्धम्, तदिदमाह प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्, प्रसिद्धसाधर्म्यादिति कर्मधारयः तृतीयासमासो बहुव्रीहिर्वा, प्रसिद्धं च तत्साधर्म्यं प्रसिद्धेन गवा वा साधर्म्यं गवयस्य प्रसिद्धं वा साधर्म्यं यस्य स प्रसिद्धसाधर्म्यो गवयः तस्मात्प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्, साध्यः संज्ञिसंबन्धः तस्य साधनं बोधनं संज्ञासंज्ञिसम्बन्धज्ञानं वा साध्यं तस्य साधनं जननमित्यर्थः, एवं प्रसिद्धसाधर्म्यज्ञानमुपमानं फलं संज्ञासंज्ञिसंबन्धज्ञानमित्युक्तं भवति ।

साध्यसाधनशब्देन करणस्य प्रमाणताम् ।
ब्रवीत्येतच्च मन्तव्यं सर्वत्र परिभाषितम् ॥

अत एव मध्ये लिखितमिदं यदुभयतः प्रमाणलक्षणानि व्याप्स्यतीति ।

अत्यन्तप्रायसाधर्म्यविकल्पादिनिबन्धनः ।
क्षिप्तः सूत्रकृतः साक्षादुपमानस्य विप्लवः ॥

येन सदृशप्रतीतिर्जन्यते तत्सदृशमिति किमत्यन्तसादृश्यादिविकल्पैः ।

अभिन्नप्रत्यये हेतुर्यथा सामान्यमुच्यते ।
सदृशप्रत्यये हेतुस्तथा सादृश्यमुच्यते ॥

ननूपमानलक्षणमस्मिन् मोक्षशास्त्रे क्वोपयुज्यते, आगमात्तावदात्मज्ञानं मोक्षसाधनं सेतिकर्तव्यताकमवगम्यते, अनुमानादागमप्रामाण्यनिश्चयः, प्रत्यक्षादनुमानस्य व्याप्तिपरिच्छेद इति त्रयमेवोपदेष्टव्यम्, सत्यमेवम्, उपमानमपि क्वचिद्गवयालम्भादिचोदनार्थानुष्ठाने सोपयोगम्, अनवगतगवयस्वरूपे तदालम्भाभावात्, यथा मुद्गस्तम्भस्तथा मुद्गपर्णीति मुद्गपर्ण्याद्यौषधिपरिज्ञाने ऽपि तदुपयोगि भवति ।

सर्वानुग्रहबुद्ध्या च करुणार्द्रमतिर्मुनिः ।
मोक्षोपयोगाभावे ऽपि तस्य लक्षणमुक्तवान् ॥

नन्वेवं सति यागौषधाद्युपयोग्यन्यदपि बहूपदेष्टव्यं स्यात्, न प्रमाणशास्त्रत्वादस्य प्रमाणमेवार्थपरिच्छित्तिसाधनमिहोपदिश्यते, तच्चतुर्विधमेव न न्यूनमधिकं वेति निर्णीतम्, प्रमेयं तु मोक्षाङ्गमेवोपदिश्यते इत्यलं प्रसङ्गेन ।

## मीमांसकाभिमतोपमानस्वरूपनिरूपणम्—

जैमिनीयास्तु अन्यथोपमानस्वरूपं वर्णयन्ति, यदा श्रुतातिदेशवाक्यस्य वने गवयपिण्डदर्शनानन्तरं नगरं गतं गोपिण्डमनुस्मरत एतेन सदृशो गौरिति ज्ञानं तदुपमानम्, तस्य विषयः सम्प्रत्यवगम्यमानगवयसादृश्यविशिष्टः परोक्षो गौः तद्वृत्ति वा गवयसादृश्यम्, अत एव तज्ज्ञानं प्रत्यक्षजन्यं परोक्षगोपिण्डविषयत्वात्, अश्रुतातिदेशवाक्यस्याभावान्न शाब्दम् ।

न च स्मरणमेवेदं प्रमेयाधिक्यसम्भवात् ।
गवयेन हि सादृश्यं न पूर्वमवधारितम् ॥
भूयोऽवयवसामान्ययोगो यद्यपि मन्मते ।
सादृश्यं तस्य तु ज्ञप्तिर्गृहीते प्रतियोगिनि ॥

न चानुमानिकमिदं ज्ञानमनपेक्षितपक्षादिधर्मादिकस्य भावात्, न च गवयगतं सारूप्यं तत्र लिङ्गमपक्षधर्मत्वात्, नापि गोगतमप्रसिद्धत्वात् प्रतिज्ञार्थैकदेशत्वाच्च, विषाणाद्यवयवजातमपि न गोगतं लिङ्गमिदानीं वनस्थस्य तद्ग्रहणाभावात्, अगृहीतस्य च लिङ्गत्वानुपपत्तेः, गवयगतमपि तदलिङ्गमेव पूर्ववदपक्षधर्मत्वात्, तस्माद् गवयसादृश्यविशेषितनगरगतपरोक्षगोपिण्डज्ञानं काननवर्तिनः प्रमातुः प्रमाणान्तरं भवतीत्यभ्युपगन्तव्यम् ।

## मीमांसकाभिमतोपमानस्वरूपनिराकरणम्—

तदिदमनुपपन्नम्, एवंविधप्रतीत्यभावात्।

प्रसिद्धेन हि सादृश्यमप्रसिद्धस्य गम्यते।
गवा गवयपिण्डस्य न तु युक्तो विपर्ययः॥

तथा हि, अश्रुतातिदेशको नागरकः कानने परिभ्रमन्नदृष्टपूर्वं गोसदृशं प्राणिनमुपलभमान एवं बुद्ध्यते ब्रवीति च अहो नु गवा सदृश एष कश्चन प्राणीति, न त्वनेन सदृशो गौरिति ज्ञानमभिधानं वा तदानीं कस्य चिदस्तीति अतः प्रमितेरेवाभावात्किं प्रमाणचिन्तया, भवतु वैषा बुद्धिरनेन सदृशो गौरिति तथाऽपि स्मृतित्वान्न प्रमाणफलम्।

नन्वत्र गोपिण्डमात्रे सत्यं स्मृतिरेवैषा सम्प्रत्यवगतगवयसादृश्यविशिष्टत्वं तु तस्य पूर्वमनुपलब्धमधुनैव गम्यते इति न तस्मिन्नेषा स्मृतिः, मैवम्, गवयसादृश्यस्यापि तत्र पूर्वं ग्रहणात्,

नन्वनवगतगवयेन गवि गवयसादृश्यमवगतमिति चित्रम्, व्यक्तितिरस्कृतस्य ग्रहणात्।

नन्विदमपि चित्रतरं गृहीतं च व्यक्तितिरस्कृतं चेति व्यक्तिर्हि ग्रहणमेव तत्तिरस्कारे च नास्त्येव ग्रहणम्, उच्यते, नैतदपि चित्रतरम्, तथाहि वने गवयमालोक्य नागरको न करेणुमनुस्मरति न करभं न तुरङ्गम् अपि तु विशिष्टमेव पिण्डं न च निर्निबन्धनमेवेदं विशिष्टविषयस्मरणमुत्पत्तुमर्हति, तस्माद्यत्रैव परिदृश्यमानपिण्डसादृश्यं पूर्वमवगतं स एव पिण्डोऽस्मिन्दृश्यमाने स्मरणपथमवतरति नेतर इति, सादृश्यग्रहणमसंवेद्यमानमप्यनभ्यस्तविषयाविनाभावस्मृतिबलात्परिकल्प्यते पूर्वं च गवयग्रहणाद्विना गवयसदृशीयं गौरिति ग्रामीणस्यानुभवो न भवतीति व्यक्तितिरस्कृतं तत्सादृश्यग्रहणमुच्यते इति न किंचिच्चित्रम्, तस्मात्स्मृतिरेवेयं तथा हि प्रतीतिः अनेन सदृशो गौः मया नगरे दृष्ट इति, नत्वद्यैतत्सदृशो गौर्दृश्यते इति बुद्धिः।

ननु प्रतियोगिग्रहणाद्विना कथं ग्राम्यस्य सादृश्यग्रहणम्, अत्र भवतैवात्मनः प्रतिकूलमभिहितम्—

सामान्यवच्च सादृश्यमेकैकत्र समाप्यते।
प्रतियोगिन्यदृष्टेपि तस्मात्तदुपलभ्यते(१)॥ इति।

---

(१) श्लोकवार्तिके उपमानग्रन्थे श्लो० ३६। ननु प्रतियोग्यपेक्षस्य सादृश्यस्य प्रतियोगिनोऽग्रहे कथं ग्रहणमत आह—सामान्यवदिति। यदि द्वयोर्व्यासक्तं सादृश्यं स्यात् तदा प्रतियोगिनोऽग्रहे न गृह्येत अस्ति च प्रत्येकपर्याप्तं सादृश्यं जातिवत् अतो गवयेऽपि कृत्स्नस्य गोसादृश्यस्य सत्त्वादगृह्यमाणेऽपि गवि स्मर्यमाणेऽपि युक्तं सादृश्यस्य प्रत्यक्षमितिभावः।

स च भूयोऽवयवसामान्ययोगो ऽगृहीतगवयेनापि नागरकेण ग्रहीतुं शक्यते। अथ तदा तद्ग्रहणे ऽपि सति न तस्य सदृशप्रत्ययः, न तर्हि भूयोऽवयवसामान्ययोगः सादृश्यम्, यथोक्तं सादृश्यं सदृशप्रत्ययहेतुत्वमेव सादृश्यम्, भूयोऽवयवसामान्ययोगे च तल्लक्षणे चित्रादावव्याप्तिः, अतिव्याप्तिश्च प्राण्यन्तरेषु विसदृशेष्वपि तदवयवसामान्यानां खुरादीनां भावात्, भूयस्त्वं तु कियत्तेषामिति न विद्मः, यावता सदृशप्रत्ययोत्पत्तिरिति चेत् तर्हि सदृशप्रत्ययहेतुत्वमेव सादृश्यमस्त्वित्युक्तम्, तस्माद् गवयदर्शनात्पूर्वमपि गव्यनभिव्यक्तसादृश्यग्रहणोपपत्तेः स्मृतिरेवेयम्।

अथ मतं यथा नैयायिकानामतिदेशवाक्यवेलायां सोपप्लवा संज्ञासंज्ञिसम्बन्धबुद्धिरुपमानं निरुपप्लवीभवति एवमियमपि या ऽसौ पूर्वं व्यक्तितिरस्कृता गवि गवयसादृश्यबुद्धिरभूत्सेदानीमुपमानाद्व्यक्तीभविष्यतीति।

नैतदस्ति गवयग्राहिणा प्रत्यक्षेणैव तत्स्पष्टतासिद्धेः यथा भवद्भिर्नैयायिका उक्ताः 'अथ त्वधिकता का चित्प्रत्यक्षादेव सा भवेत्' इति (१), तथा नैयायिका अपि युष्मान्वदयन्ति।

ननु वनस्थप्रमातुर्गवयविषयं प्रत्यक्षं कथं ग्रामवर्त्तिनि गवि सादृश्यबुद्धेः स्पष्टतामादधीत, किं कुर्मस्तद्दर्शनानन्तरं सुस्पष्टतत्सादृश्यविशिष्टगोपिण्डस्मरणात्।

नन्वत एवेदमुपमानं प्रमाणान्तरमुच्यते प्रत्यक्षस्य सन्निहितगवयस्वरूपमात्रनिष्ठत्वात्, परोक्षे च गवयसादृश्यप्रत्ययस्य विस्पष्टस्यान्यतोऽसिद्धेरिति, उक्तमत्र स्मृतिरेवेयं तथाऽवभासनात्, अनधिगतार्थग्राहि च प्रमाणमुपगच्छन्ति भवन्तः, भवतु स्मृतिविलक्षणेयं प्रतीतिः तथा ऽप्यनुमानजन्यत्वान्न प्रमाणान्तरमाविशति, स्मर्यमाणो गौः धर्मी एतत्सदृश इति साध्यो धर्मः एतदवयवसामान्ययोगित्वात्सन्निहितद्वितीयगवयपिण्डवत्, तदसन्निधाने सामान्येन व्याप्तिर्दर्शयितव्या यत्र यदवयवसामान्ययोगित्वं तत्र तत्सादृश्यं यथा यमयोरिति, विशिष्टस्य तद्योगस्य हेतुत्वान्नानैकान्तिकत्वम्, सामान्ययोगो ऽन्यो ऽन्यच्च सादृश्यमित्युक्तत्वान्न प्रतिज्ञार्थैकदेशो हेतुः, अव्युत्पन्नस्य नारिकेलद्वीपवासिनो

---

(१) श्लोकवार्तिके उपमानग्रन्थे श्लो० ९। यावद्धीन्द्रियसम्बन्धस्तत्प्रत्यक्षमितिस्थितम् इति उत्तरार्द्धम्। प्रत्युत्पन्नकारणजन्यं यदनवगतविषयं ज्ञानं तदनुवादः तच्च स्मृतिवन्न प्रमाणम् अतोऽतिदेशवाक्यावगतं यदत्र गृह्यते तत्तावन्न प्रमेयम् यत्त्वनवगतं गवयस्वरूपं तस्य च सादृश्यविशिष्टत्वं तत्प्रत्यक्षमेवेत्याह—अथेति। ननु उपलब्धगवयस्य स्मरणान्तरितेन्द्रियव्यापारं कथं प्रत्यक्षमत आह—यावदिति। प्रत्यक्षसूत्रे 'न हि स्मरणतो यत्प्राक् तत्प्रत्यक्षमिति स्मृतम्' इति।

बालस्य वा तत्प्रत्ययानुत्पादान्न व्याप्तिनैरपेक्ष्येण सा प्रतीतिरिति वक्तव्यम्, तस्मादित्थमनुमानजन्यत्वात्स्मृतित्वाद्वा पूर्वोक्तादसम्भवादेव वा नेयमवगतिरुपमानकार्येति सिद्धम्, कश्चास्य भवदुपमानस्य स्वतन्त्रोपयोग एवं ह्याहुर्भवन्तः(१)

अपरीक्षामिषेणापि लक्षणानि वदन्नयम्।
न स्वतन्त्रोपयोगित्वनिरपेक्षाणि जल्पति॥

ननूक्त एवोपयोगः सौर्ये चरौ द्रव्यदेवतासारूप्यादाग्नेयविध्यन्तलाभः आग्नेयो ऽष्टकपाल इत्युपदिष्टादृष्टेतिकर्त्तव्यताकलापतया निराकाङ्क्षो विधिः सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यत्र प्रधानमात्रोपदेशाद्विध्यादिरस्ति न तु विध्यन्त इतिकर्त्तव्यताऽभिधानम्, न चानितिकर्त्तव्यताकं कर्म प्रयोगयोग्यम्, अतः किमीयमितिकर्त्तव्यताजातमिह गृह्यतामित्यपेक्षायां चरुपुरोडशयोर्व्रीह्याद्यौषधसाधनत्वेन द्रव्यसादृश्यात्सूर्याग्न्योश्च तेजस्वितया देवतयोः सारूप्यादाग्नेयेतिकर्त्तव्यता सौर्ये क्रियते इत्युपमानाद् गम्यते, अपि च क्व चिच्चोदितद्रव्यादावलभ्यमाने प्रतिनिध्युपादानेन कर्मसमापनात्प्रतिनिधिमात्रोपादाने प्राप्ते व्रीहिसदृशनीवारोपादानमुपमानात्प्रतीयते इति, तदाह—

भिन्ना ऽनुमानादुपमेयमुक्ता
सौर्यादिवाक्यैरसहापि दृष्टम्।
सादृश्यतोऽग्न्यादियुतं कथं नु
प्रत्याययेदित्युपयुज्यते नः॥
प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद्
भवति तदपचारे यत्र नीवारजातौ।
तदपि फलमभीष्टं लक्षणस्योपमायाः
प्रकृतिरपि च गौणैर्बाध्यते यत्र चान्यैः(२)॥

---

(१) श्लोकवार्तिके शब्दलक्षणग्रन्थे श्लो० ७। 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थेविज्ञानम्' इति भाष्ये प्रत्यक्षादिषु शब्दमात्रस्य लक्षणे प्रतिपादनीये शास्त्रस्य लक्षणं कथमभिहितमिति शङ्कायाः समाधानमिदम् अपरीक्षामिषेणेति। मिषेण छलेन स्वतन्त्रो वेदः वेदं व्याख्यातुकामस्य शब्दलक्षणं नातोवोपयुक्तमिति भावः।

(२) श्लोकवार्तिके उपमानग्रन्थे श्लो० ५२। कः पुनरुपमानस्य प्रमाणान्तरस्य स्वतन्त्रोपयोग इति दर्शयति भिन्नेति। न हि सौर्यतद्वाक्ययोराग्नेयतद्वाक्याभ्यामन्वयो गृहीतःयेनानुमानं स्यात् निर्वापो लोकवेदसाधारणः एवं तद्धितनिर्देशादयोऽपि प्रमाणान्तरेण तूपमानेन आग्नेयवाक्यसदृशेन सौर्यवाक्येनोपमितम्। अग्न्यादियुतमाग्नेयवाक्यं स्वार्थमुपस्थापयति यस्य च त्र्यंशस्य साध्यसाधनांशानपेक्षितत्वाद्भावना इत्यन्तिमांशोऽपेक्षावशात्सौर्यभावनया गृह्यते एवमस्योपयोगः इति (न्यायरत्नाकरः)

## मीमांसकानां स्वोक्तिविरोधः—

तदेतदसमञ्जसम्, प्रसिद्धेनाप्रसिद्धस्य सादृश्यमवगम्यते इत्येष भवद्भिरुत्सृष्टः पन्थाः, विपर्ययस्तु आश्रितः, यदप्यदृष्टेन नूतनेनाप्रसिद्धेन गवयेन वाक्यसिद्धस्य गोः सादृश्यमुपमानात्प्रतीयते इति तदिहापि निर्ज्ञातेतिकर्त्तव्यताकेन गोवत्प्रसिद्धेनाग्नेयेन सौर्यस्य गवयवदप्रसिद्धस्य सादृश्यमवगम्यते न तु गवयेन गोः सौर्येणाग्नेयस्य, तदिह यस्य विध्यन्तार्थिता न तत्रोपमानात्सादृश्यावगमो यत्र वा तदवगमो न तत्रेतिकर्त्तव्यतार्थित्वम्,

ननु सौर्ये विध्यन्तार्थिनि प्रतीयमाने द्रव्यदेवतासारूप्यादेराग्नेयः स्मरणपथमवतरतीति तत एवासौ विध्यन्तमधिगच्छतीति, एवमपि स्मरणमात्रात्सिद्धेऽर्थे किमुपमानेन, आग्नेयस्मरणादेव तदितिकर्त्तव्यता सौर्ये उपादास्यते, स्मृतिविशेष एव विषयाधिक्यादुपमानमुच्यते इति चेत्प्रतिविहितमेतदित्यलं प्रसङ्गेन।

किं चोपमानप्रतिपादितार्थो
न चोदनालक्षणतां बिभर्त्ति।
तस्मान्न युज्येत ततोऽधिगन्तु-
माग्नेयविध्यन्तविशेषलाभः॥
प्रतिनिधिरपि चैवं नास्ति नीवारजाते-
र्न हि भवदुपमानाद् व्रीहिसादृश्यबुद्धिः।
भवति तु मतिरेषा व्रीहयस्तत्सदृक्षा
इति न च फलमस्याः किंचिदस्ति प्रतीतेः॥
भवत्यङ्गं यागे क्व चन गवयालम्भनमतः
तदाकारज्ञाने प्रतिनिधिविवेके च कृतिनाम्।
उपायत्वं युष्मत्कथितमुपमानं न भजते
परिग्राह्यं तस्मात्प्रवरमुनिगीतं सुमतिभिः॥

इति द्वितीयमाह्निकम्॥

---

प्रयोजनान्तरमाह—प्रतिनिधिरितिपादद्वयेन एवं व्रीह्यपचारे सदृशतया नीवारेषु अवगतेषु तत्सदृशत्वेन च व्रीहिद्वयमिति व्रीह्यवयवसामान्यावगमात्तल्लाभाय तेषां प्रतिनिधिः सिध्यतीति। प्रयोजनान्तरमाह प्रतिकृतिरित्यादिना। उपमानेन हि काचित्प्रतिकृतिः सादृश्यं गौणैः सामान्यैरीषत्सदृशं बाध्यते इत्यर्थः (न्यायरत्नाकरः)

## शब्दप्रमाणलक्षणम्—

उपमानानन्तरं शब्दस्य विभागसूत्रे निर्देशात्तस्य लक्षणं प्रतिपादयितुमाह—

**आप्तोपदेशः शब्दः ॥ ७ ॥**

उपदेशः शब्द इत्युच्यमाने पर्यायमात्रोच्चारणादकारके शब्दमात्रे प्रसक्तिरिति प्रत्यक्षसूत्राज् ज्ञानपदस्य स्मृतिजनकस्य व्यवच्छेदार्थं चार्थग्रहणस्य संशयविपर्ययजनकनिराकरणाय च व्यवसायात्मकाव्यभिचारपदयोरनुवृत्तिरित्येवमव्यभिचारादिविशेषणार्थप्रतीतिजनक उपदेशः शब्द इत्युक्तं भवति।

तदेवं पर्यायमेवोपदेशशब्दं शब्दलक्षणमपेक्षितपूर्वसूत्रोपात्तविशेषणपदं केचिद्व्याचक्षते, आप्तग्रहणं च लक्षणनिश्चयार्थमाहुः, 'घ्राणरसनत्वक्चक्षुःश्रोत्राणीन्द्रियाणि भूतेभ्य'(१) इत्यत्र भूतग्रहणं वक्ष्यते, एवं हि ऐतिह्यस्य न प्रमाणान्तरता भविष्यति उपदेशरूपत्वाविशेषादिति।

अन्ये तु ब्रुवते युक्तमुपदेशपदमेव शब्दलक्षणं युक्तं च तन्निश्चयार्थमाप्तग्रहणं पूर्वसूत्रोपात्तविशेषणपदानुवृत्तिस्तु नोपयुज्यते सामान्यलक्षणानन्तरं विशेषलक्षणप्रक्रमात्, सामान्यलक्षणेन च स्मृत्यादिजनकसकलप्रमाणाभासव्युदासे कृते सजातीयप्रत्यक्षादिव्यवच्छेद एव केवलमिदानीं वक्तव्यः, तत्र च पर्यायतापर्याप्तमुपदेशपदमेव बुद्ध्यादिपदवदिति किं विशेषणानुवृत्तिक्लेशेनेति।

अपर आह—अनवलम्बितसामान्यलक्षणानुसरणदैन्यमनध्याहृतप्राक्तनविशेषणपदमाप्तोपदेशः शब्दलक्षणं न चाकारकेण शब्दान्तरकारिणा वा स्मृतिजनकेन वा संशयाधायिना वा शब्देन किंचिदुपदिश्यते इति निर्वचनसव्यपेक्षादुपदेशग्रहणादेव तन्निवृत्तिः सिद्धा, मिथ्योपदेशे तु रथ्यापुरुषादिवचसि विपरीतप्रतीतिकारिणि प्रसङ्गो न निवर्त्तते इति तत्प्रतिक्षेपार्थमाप्तग्रहणम्, ऐतिह्ये यथार्थप्रतीतिहेतावाप्तानुमानान्न प्रमाणन्तरत्वमिति, तस्माद्यथाश्रुतमेव सूत्रं शब्दलक्षणार्थं युक्तम्,

भवत्वेवम् उपदिश्यते इति कोऽर्थः, अभिधानक्रिया क्रियते, केयमभिधानक्रिया नाम प्रतीतिरिति चेच्चक्षुरादेरपि तत्करणत्वादुपदेशत्वप्रसङ्गः, स्वसादृश्येन प्रतीतिरिति चेद् बिम्बस्यापि पादाद्यनुमितावुपदेशत्वप्रसङ्गः, शब्दे च तदभावादनुपदेशत्वं स्यात्, शब्दावच्छिन्ना प्रतीतिरिति चेच् श्रोत्रस्य तज्जनकत्वादुपदेशत्वप्रसङ्गः, शब्दस्य च स्वावच्छेदेन प्रतीतिजकत्वनिषेधादनुपदेशत्वप्रसङ्गादित्यभिधानक्रियास्वरूपानिश्चयान्न तस्याः करणमु-

---

(१) गौतमसूत्रम्। अ० १। आ० १ सू० १२

पदेशः, उच्यते, श्रोत्रग्राह्यवस्तुकरणिका तदर्थप्रतीतिरभिधानक्रिया इत्थं लोके व्यवहरात्, उक्तो ऽभिहितश्च स एवार्थो लोके व्यपदिश्यते, यस्तु तथाविधप्रतीतिविषयतां प्रतिपन्नः श्रोत्रग्राह्यस्य वर्णराशेरेवार्थप्रतीतिकरणत्वान्न तु श्रोत्रप्रत्ययाविषयविशेषः स्फोटात्मा शब्दः, श्रोत्रग्रहणे ह्यर्थे शब्दशब्दः प्रसिद्धः वर्णा एव च श्रोत्रग्रहणाः, यतो ऽर्थप्रतीतिः स शब्द इति तूच्यमाने धूमादिरपि शब्दः स्यात्, अगृहीतसम्बन्धश्च शब्दः शब्दत्वं जह्यादर्थप्रतिपत्तेरकरणात् ।

ननु प्रतीतेः संविदात्मकत्वान्नाभिधानक्रिया नाम का चिदपूर्वा संवदन्या विद्यते तत्करणस्य चोपदेशतायामतिप्रसङ्ग इत्युक्तम्, सत्यम्, सम्विदात्मैव सर्वत्र प्रतीतिः सा चक्षुरादिकरणिका प्रत्यक्षफलं श्रोत्राग्राह्यकरणिका ऽनुमानफलम् श्रोत्रग्राह्यकरणिका शब्दफलम्, न हि दृश्यते अनुमीयते ऽभिधीयते इति पर्यायशब्दः, तत्प्रतीतिविशेषजनने च शब्दस्योपदेशत्वमुच्यते विवक्षादौ तु तस्य लिङ्गत्वमेवेत्यलं प्रसङ्गेन ।

आप्तो भाष्यकृता व्याख्यातः, आप्तः खलुसाक्षात्कृतधर्मा यथा दृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः उपदेष्टा चेति ।

धर्म इत्युपदेष्टव्यः कश्चिदर्थो विवक्षितः ।
साक्षात्करणमेतस्य यथार्थं उपलम्भनम् ॥

न तु प्रत्यक्षेणैव ग्रहणमिति नियमः अनुमानादिनिश्चितार्थोपदेशिनो ऽप्याप्तत्वानपायात् ।

चिख्यापयिषया युक्त इत्युक्ता वीतरागता ।
उपदेष्टेत्यनेनोक्तं प्रतिपादनकौशलम् ॥

वीतरागो ऽपि मूकादिरुपदेष्टुमशक्तः किं कुर्यात्, वक्तुं शक्तो ऽपि साक्षात्कृतधर्मोप्यवीतरागो न वक्ति तूष्णीमास्ते इति ।

तस्य च प्रतिपाद्ये ऽर्थे वीतरागत्वमिष्यते ।
सर्वथा वीतरागस्तु पुरुषः कुत्र लभ्यते ॥
ऋष्यार्यम्लेच्छसामान्यं वक्तव्यं चाप्तलक्षणम् ।
एवं हि लोके ऽप्याप्तोक्त्या व्यवहारो न लङ्घ्यति ॥

येऽप्याप्तिं दोषक्षयमाचक्षते तैरपि दोषक्षयः प्रतिपाद्यार्थेष्वेव वर्णनीयो ऽन्यथा लोके दृश्यमानस्याप्तोक्तिनिबन्धस्य व्यवहारस्य निह्नवः स्यात्, अथ वा वेदप्रामाण्यसिद्ध्यर्थत्वाच्छास्त्रस्य तत्प्रणेतुराप्तस्येश्वरस्य यथाश्रुतमेवेदं लक्षणं स साक्षात्कृतधर्मैव धर्मस्येश्वरप्रत्यक्षगोचरत्वात्, चिख्यापयिषया प्रयुक्त इति कारुणिक एव भगवानिति वक्ष्यते, उपदेष्टा च वेदाद्यागमानां तत्प्रणीतत्वस्य समर्थयिष्यमाणत्वादिति ।

आह आस्तां तावदेतद् इदं तु चिन्त्यतां किमर्थमिदं पुनः शब्दस्य पृथग्लक्षणमुपवर्ण्यते—

शब्दस्यानुमानान्तर्भावाक्षेपः—

शब्दस्य खलु पश्यामो नानुमानाद्विभिन्नताम् ।
अतस्तल्लक्षणाक्षेपान्न वाच्यं लक्षणान्तरम् ॥
परोक्षविषयत्वं हि तुल्यं तावद् द्वयोरपि ।
सामान्यविषयत्वं च सम्बन्धापेक्षणाद् द्वयोः ॥
अगृहीते ऽपि सम्बन्धे नैकस्यापि प्रवर्त्तनम् ।
सम्बन्धश्च विशेषाणामानन्त्याद‌तिदुर्गमः ॥
यथा प्रत्यक्षतो धूमं दृष्ट्वा ऽग्निरनुमीयते ।
तथैव शब्दमाकर्ण्य तदर्थो ऽप्यवगम्यते ॥
अन्वयव्यतिरेकौ च भवतो ऽत्रापि लिङ्गवत् ।
यो यत्र दृश्यते शब्दः स तस्यार्थस्य वाचकः ॥
पक्षधर्मत्वमप्यस्ति शब्दः एव यतो ऽर्थवान् ।
प्रकल्पयिष्यते पक्षो धूमो दहनवानिव ॥
तत्र धूमत्वसामान्यं तद्वदत्रापि वक्ष्यते ।
एवं विषयसामग्रीसाम्यादेकत्वनिश्चये ॥
न विलक्षणतामात्रं किं चिदन्यत्वकारणम् ।
पूर्ववर्णक्रमोद्भूतसंस्कारसहकारिता ॥
पुरुषापेक्षवृत्तित्वं विवक्षानुस्मृतिक्रमः ।
इत्यादिना विशेषेण न प्रमाणान्तरं भवेत् ॥
कार्यकारणधर्मादिविशेषो ऽत्रापि नास्ति किम् ।
यथेष्टविनियोज्यत्वमपि नान्यत्वकारणम् ।
हस्तसंज्ञादिलिङ्गे ऽपि तथाभावस्य दर्शनात् ॥
दृष्टान्तनिरपेक्षत्वमभ्यस्ते विषये समम् ।
अनभ्यस्ते तु सम्बन्धस्मृतिसापेक्षता द्वयोः ॥
अनेकप्रतिभोत्पत्तिहेतुत्वमपि विद्यते ।
अस्पष्टलिङ्गे कस्मिंश्चिदश्व इत्यादिशब्दवत् ॥
स्फुटार्थानवसायाश्च प्रमाणाभासतो यथा ।
लिङ्गे तथैव शब्दे ऽपि नानार्थभ्रमकारिणि ॥
अपि च प्रतिभामात्रे शब्दाज्जाते ऽपि कुत्र चित् ।
आप्तवादत्वलिङ्गेन जन्यते निश्चिता मतिः ॥

अत एव हि मन्यन्ते शब्दस्यापि विपश्चितः ।
आप्तवादाविसम्वादसामान्यादनुमानताम् ॥
किं च शब्दो विवक्षायामेव प्रामाण्यमश्नुते ।
न बाह्ये व्यभिचारित्वात्तस्यां चैतस्य लिङ्गता ॥

## शब्दस्यानुमानात्पार्थक्यम्—

तत्राभिधीयते—द्विविधः शब्दः, पदात्मा वाक्यात्मा चेति, तत्र वाक्यमनवगतसम्बन्धमेव वाक्यार्थमवगमयितुमलम् , अभिनवविरचितश्लोकश्रवणे सति पदसंस्कृतमतीनां तदर्थावगमनदर्शनात् , अतः सम्बन्धाधिगममूलप्रवृत्तिना ऽनुमानेन तस्य कथं साम्यसम्भावना, पदस्य तु सम्बन्धाधिगमसापेक्षत्वे सत्यपि सामग्रीभेदाद् विषयभेदाच्चानुमानाद्भिन्नत्वम् , विषयस्तावद्विसदृश एव पदलिङ्गयोः, तद्वन्मात्रं पदस्यार्थ इति च स्थापयिष्यते, अनुमानं तु वाक्यार्थविषयम् अत्राग्निरग्निमान्पर्वत इति ततः प्रतिपत्तेः, उक्तं च तत्र धर्मविशिष्टो धर्मी साध्य इति ।

ननु पदान्यपि वाक्यार्थवृत्तीनि सन्ति गोमानौपगवः कुम्भकार इति, सत्यम् , किं तु तेष्वपि साकाङ्क्षप्रत्ययानुत्पादात् , गोमान्क इत्याकाङ्क्षाया अनिवृत्तेः ।

अपि च पर्वतादिविशेष्यप्रतिपत्तिपूर्विका पावकादिविशेषणावगतिर्लिङ्गादुदेति पदात्तु विशेषणावगतिपूर्विका विशेष्यावगतिरिति विषयभेदः ।

ननूक्तं यथा ऽनुमाने धर्मविशिष्टो धर्मी साध्य एवमिहार्थविशिष्टः शब्दः साध्यो भवतु, मैवम् , शब्दस्य हेतुत्वात् , न च हेतुरेव पक्षो भवितुमर्हति ।

ननु यथा अग्निमानयं धूमो धूमवत्त्वान्महानसधूमवदित्युक्तं 'सा देशस्याग्नियुक्तस्य धूमस्यान्यैश्च कल्पिता'इति (१) , एवं गोशब्द एवार्थवत्त्वेन साध्यतां गोशब्दत्वादित्यादि सामान्यं च हेतूक्रियतामिति, एतदपि दुर्घटम् , शब्दस्य धर्मिणः किमर्थविशिष्टत्वं वा साध्यते प्रत्यायनशक्तिविशिष्टत्वं वा अर्थप्रतीतिविशिष्टत्वं वा न तावदर्थविशिष्टत्वं साध्यं शैलज्वलनयोरिव शब्दार्थयोः धर्मधर्मिभावाभावात् ,

अथार्थविषयत्वाच्छब्दस्यार्थविशिष्टतेत्युच्यते तदप्ययुक्तम् , तत्प्रतीतिजननमन्तरेण तद्विषयत्वानुपपत्तेः, प्रतीतौ तु सिद्धायां किं तद्विषयत्वद्वारकेण तद्धर्मत्वेन, यदि तु तद्विषयत्वमूलं तद्धर्मित्वपूर्विकार्थप्रतीतिरर्थप्रतीतिमूलं

---

( १ ) श्लोकवार्तिके अनुमानग्रन्थे श्लो० ४८ । सा प्रमेयता ( अनुमेयता ) अग्निविशिष्टस्य पर्वतस्य धूमं धर्मीकृत्य अन्यैस्तार्किकैः स्वीकृतेत्यर्थः ।

तद्विषयत्वं तदितरेतराश्रयम् , तस्मान्नार्थविशिष्टः शब्दः साध्यः, नाप्यर्थप्रत्यायनशक्तिविशिष्टः तदर्थितया शब्दप्रयोगाभावात् ।

न शक्तिसिद्धये शब्दःकथ्यते श्रूयते ऽपि वा ।
अर्थगत्यर्थमेवामुं शृण्वन्ति च वदन्ति च ॥

नाप्यर्थप्रतीतिविशिष्टः शब्दः पक्षतामनुभवितुमर्हति सिद्ध्यसिद्धिविकल्पानुपपत्तेः ।

असिद्धया ऽपि तद्वत्त्वं शब्दस्यार्थधिया कथम् ।
सिद्धायां तत्प्रतीतौ वा किमन्यदनुमीयते ॥

ज्वलनादावपि तुल्यो विकल्प इति चेद् न हि तत्राग्निर्धूमेन जन्यते अपि तु गम्यते, इयं त्वर्थप्रतीतिर्जन्यते शब्देनेत्यस्यामेव सिद्धासिद्धत्वविकल्पावसरः, तस्मात्त्रिधा ऽपि न शब्दस्य पक्षत्वम् ,

अपि च गोशब्दे धर्मिणि गत्वादिसामान्यात्मकस्य हेतोर्ग्रहणं ततो व्याप्तिस्मरणं ततः परामर्शः ततो ऽर्थप्रतिपत्तिरिति कालद्राघीयस्त्वाद्धर्मी तिरोहितो भवेद् न पर्वतवदवस्थितिस्तस्यापि तूच्चरितप्रध्वंसित्वं शब्दस्य, न च शब्दमर्थवत्त्वेन लोकः प्रतिपद्यते किं तु शब्दात्पृथगेवार्थमिति न सर्वथा शब्दः पक्षः, अतो धर्मविशिष्टस्य धर्मिणः साध्यस्येहासम्भवाच्छब्दलिङ्गयोर्महान्विषयभेदः ।

सामग्रीभेदः खल्वपि पक्षधर्मान्वयादिरूपसापेक्षमनुमानं व्याख्यातं शब्दे तु न तानि सन्ति रूपाणि, तथा च शब्दस्य पक्षत्वप्रतिक्षेपान्न तद्धर्मतया गत्वादिसामान्यस्य लिङ्गता, न चार्थस्य धर्मित्वं सिद्ध्यसिद्धिविकल्पानुपपत्तेः, न च तद्धर्मत्वं शब्दस्य शक्यते वक्तुं तत्र वृत्त्यभावात् , प्रतीतिजनकत्वेन तद्धर्मतायामुच्यमानायां पूर्ववदितरेतराश्रयम् , पक्षधर्मादिबलेन प्रतीतिः प्रतीतौ च सत्यां पक्षधर्मादिरूपलाभः,

अपि च यद्यर्थधर्मतया शब्दस्य पक्षधर्मत्वं भवेत्तदाऽनवगतधूमाग्निसंबन्धो ऽपि यथा धूमस्य पर्वतधर्मतां गृह्णात्येव तथा ऽनवगतशब्दार्थसंबन्धोऽपि अर्थधर्मतां शब्दस्य गृह्णीयान्न च गृह्णातीत्यतो नास्ति पक्षधर्मत्वं शब्दस्येति, अन्वयव्यतिरेकावपि तस्य दुरुपपादौ देशे काले च शब्दार्थयोरनुगमाभावात् , न हि यत्र देशे शब्दः तत्रार्थः यथोक्तं श्रोत्रियैः, मुखे हि शब्दमुपलभामहे भूमावर्थमिति, वयं तु कर्णाकाशे शब्दमुपलभामहे इत्यास्तामेतत् , नापि यत्र काले शब्दः तत्रार्थः तदानीं युधिष्ठिरार्थाभावेऽपि तद्बुद्ध्योरन्वयो ग्रहीष्यते इत्युच्यते तर्हि वक्तव्यं किमर्थबुद्धावुत्पन्नायामन्वयो गृह्यते अनुत्पन्नायां वा अनुत्पन्नायां तावत्स्वरूपासत्त्वात्कुतोऽन्वयग्रहणम् , उत्पन्नायां त्वर्थबुद्धौ किमन्वयग्रहणेनेति नैष्फल्यम् , तत्पूर्वकत्वे तु पूर्ववदितरेतराश्रयम् , एतेन व्यतिरेकग्रहणमपि व्याख्यातम् ।

नन्वावापोद्वापद्वारेण शब्दार्थसम्बन्धे निश्चीयमाने उपयुज्येते एवान्वयव्यतिरेकौ, यथोक्तं 'तत्र यो ऽन्वेति यं शब्दमर्थस्तस्य भवेदसौ' इति(१), सत्यमेतत्, किं तु समयबलेन सिद्धायामर्थबुद्धौ समयनियमार्थावन्वयव्यतिरेकौ शब्देनान्वयव्यतिरेककृता च धूमादेरिव ततो ऽर्थबुद्धिः, अपि च—

धूमादिभ्यः प्रतीतिश्च नैवावगतिपूर्विका—
इहावगतिपूर्वैव शब्दादुत्पद्यते मतिः ॥
स्थविरव्यवहारे हि बालः शब्दात् कुतश्चन ।
दृष्ट्वा ऽर्थमवगच्छन्तं स्वयमप्यवगच्छति ॥

तत्राप्येवं समयः क्रियते एतस्माच्छब्दादयमर्थः त्वया प्रतिपत्तव्य इति तत्रापि प्रतीतिरेव, अविनाभावो नाम सम्बन्धः अन्यश्च शब्दार्थयोः समयापरनामा वाच्यवाचकभावः सम्बन्धः कारणत्वेन निर्दिष्टो द्रष्टव्यः तस्मादन्यो लिङ्गलिङ्गिनोरविनाभावाद्वाच्यवाचकभावः सम्बन्धः प्रतीत्यङ्गम् । एवंविधविषयभेदात्सामग्रीभेदाच्च प्रत्यक्षवदनुमानादन्यः शब्द इति सिद्धम् ।

यत्तु पूर्ववर्णक्रमापेक्षणादिवैलक्षण्यमाशङ्क्य दूषितं कस्तत्र फल्गुप्राये निर्बन्धः ।

यत्पुनरभिहितम्(२) 'आप्तवादाविसम्वादसामान्यादनुमानता' इति तदतीव सुभाषितम्, विषयभेदात्, आप्तवादत्वहेतुना हि शब्दार्थबुद्धेः प्रामाण्यं साध्यते न तु सैव जन्यते, यदाह(३)—

---

(१) श्लोकवार्तिके वाक्याधिकरणे श्लो. १६७ । 'अन्यथानुपपत्त्या हि शक्तिस्तत्रावतिष्ठते' इति उत्तरार्द्धम् अयमर्थः यं शब्दं योऽर्थोऽन्वेति तस्य शब्दस्य सोऽर्थः इत्यन्यथानुपपत्त्या तस्य शब्दस्य तत्रार्थे शक्तिरस्तीत्यवगम्यते यथा वृक्षं वृक्षेणेत्यादौ अमाद्यपगमे कर्मत्वं न प्रतीयते वृक्षं घटमित्यादौ अमः सत्त्वे कर्मत्वं प्रतीयते इति अन्वयव्यतिरेकाभ्यां अमादेः कर्मत्वादौ शक्तिर्निश्चीयते इति ।

(२) श्लोकवार्तिके शब्दलक्षणे श्लो. २३ । 'काळाद्यपेक्षया चान्य|उक्ता चान्यैरभिन्नता' इति कारिकापूर्वार्द्धम् । अन्यैः शाक्यैः आप्तवादित्वाविसम्वादित्वयोर्व्याप्तिदर्शनात् अनुमानतः शब्दस्याभिन्नता उक्ता । शब्दानुमाने शब्दार्थयोः सम्बन्धः पुरुषापेक्षः अग्निधूमयोर्देशापेक्षः चन्द्रोदयसमुद्रवृद्ध्योः कालापेक्षः इतीतः पूर्वतनश्लोकस्याभिप्रायः ।

(३) श्लोकवार्तिके वाक्याधिकरणे श्लो. २३१ । आप्तवादत्वानादरेण पदार्थेभ्यो वाक्यार्थबोधे जाते अप्रमाण्यशङ्कानिवर्तनमात्रमाप्तवादत्वेन क्रियते न च बुद्ध्युत्पत्तिः इदमेवाह-अन्यदेवेति । आप्तवादत्वहेतुकं सत्यत्वमन्यत् वाक्यार्थश्चान्यः आप्तवादत्वेन सत्यत्वानुमानेऽपि वाक्यार्थस्यानुमानता नायाति इत्यर्थः ननु बुद्ध्युत्प-

अन्यदेव हि सत्यत्वमाप्तवादत्वहेतुकम् ।
वाक्यार्थश्चान्य एवेह ज्ञातः पूर्वतरं च सः ॥
ततश्चेदाप्तवादेन सत्यत्वमनुमीयते ।
वाक्यार्थप्रत्ययस्यात्र कथं स्यादनुमानता ॥
जन्म तुल्यं हि बुद्धीनमाप्तानाप्तगिरां श्रुतौ ।
जन्माधिकोपयोगी च नानुमायां त्रिलक्षण इति ॥

न च प्रामाण्यनिश्चयाद्विना प्रतिभामात्रं तदिति वक्तव्यं शब्दार्थसम्प्रत्ययस्यानुभवसिद्धत्वात्,

एतेन विवक्षाविषयत्वमपि प्रत्युक्तम्, न हि विवक्षा नाम शब्दस्य वाच्यो विषयः किं त्वर्थ एव तथा ।

विवक्षायां हि शब्दस्य लिङ्गत्वमिह दृश्यते ।
आकाशइव कार्यत्वान्न वाचकतया पुनः ॥
शब्दादुच्चरिताच्च वाच्यविषया तावत्समुत्पद्यते
संवित्तिस्तदनन्तरं तु गमयेत्कामं विवक्षामसौ ।
अर्थोपग्रहवर्जिता तु नियमात्सिद्धैवमाजीविता
तद्वाच्यार्थविशेषिता त्वविदिते नैषां तदर्थे भवेत् ॥

## शब्दप्रामाण्याक्षेपः—

ननु सिद्धे प्रामाण्त्वे भेदाभेदपरीक्षणम् ।
क्रियते न तु शब्दस्य प्रामाण्यमवकल्पते ॥
अर्थप्रतीतिजनकं प्रमाणमिति वर्णितम् ।
विकल्पमात्रमूलत्वान्नार्थं शब्दाः स्पृशन्त्यमी ॥
अर्थो निरूप्यमाणश्च को वा शब्दस्य शक्यते ।
वक्तुं न जातिर्न व्यक्तिर्न तद्वान्नाम कश्चन ॥
सम्बन्धोऽप्यस्य नार्थेन नित्योऽस्ति समयोऽथ वा ।
शक्यः सन्नपि वा बोद्धुमर्थे कथमतीन्द्रिये ॥
वाक्यार्थोऽपि न निर्णेतुं पार्यते पारमार्थिकः ।

---

त्तिरपि आप्तवादत्वलिङ्गादेव भविष्यति तथाहि आप्तस्य गोपदरचनमर्थान्तरसास्नादिमद्बुद्धिपूर्वकं सा चार्थव्याप्ता तज्ज्ञानं जनयति इति न शब्दस्यानुमानभिन्नत्वमत आहजन्मेति-( पक्षसत्त्वाबाधितत्वासत्प्रतिपक्षितत्वरूप ) त्रिलक्षण लिङ्गजन्यादिधीरनुमानं न चेयं तज्जन्या पदार्थैरेवागृहीतसम्बन्धैरियं जन्यते इति प्रमाणान्तरमेव शब्द इति भावः ।

नियोगभावनाभेदसंसर्गादिस्वभावकः ॥
तत्प्रतीत्यभ्युपायश्च किं पदार्थः पदानि वा ।
वाक्यं वा व्यतिषक्तार्थं स्फोटो वेति न लक्ष्यते ॥
सिद्धायामपि तद्बुद्धौ तस्या द्रढिमकारणम् ।
नित्यत्वमाप्तोक्तत्वं वा न सम्यगवतिष्ठते ॥
पदे नित्ये ऽपि वैदिक्यो रचनाः कर्त्तृपूर्विकाः ।
नित्या वा कृतकत्वे ऽपि कृताः केनेति दुर्गमम् ॥
कर्त्ता ऽस्ति स च निर्द्वन्द्वः स चैकः स च सर्ववित् ।
स च कारुणिको वेति प्रतिपत्तुं न शक्यते ॥
परस्परविरुद्धाश्च सन्ति भूयांस आगमाः ।
तेषां कस्येश्वरः कर्त्ता कस्य नेति न मन्महे ॥
वेदे दोषाश्च विद्यन्ते व्याघातः पुनरुक्तता ।
फलस्यानुपलम्भश्च तथा फलविपर्ययः ॥
कीदृशश्चार्थवादानां विरुद्धार्थाभिधायिनाम् ।
मन्त्राणां नामधेयादिपदानां वा समन्वयः ॥
सिद्धकार्योपदेशाच्च वेदे संशेरते जनाः ।
किमस्य कार्ये प्रमाण्यं सिद्धे ऽर्थे वोभयत्र वा ॥
तेन वेदप्रमाणत्वं विषमे पथि वर्त्तते ।
जीविकोपायबुद्ध्या वा श्रद्धया वा ऽभ्युपेयताम् ॥

## शब्दप्रमाणसमर्थनम्—

अत्राभिधीयते, सर्वएवैते दोषा यथाक्रमं परिहरिष्यन्ते इत्यलं समाश्वासेन सुप्रतिष्ठमेव वेदप्रामाण्यमवगच्छत्वायुष्मान्,

नन्वर्थासंस्पर्शित्वमेव तावत्कथं परिह्रियते न हि बाह्ये ऽर्थे शब्दाः प्रतीतिमादधति ते हि दुर्लभवस्तुसंपर्कविकल्पमात्राधीनजन्मानः स्वमहिमानमनुवर्त्तमानास्तिरस्कृतबाह्यार्थसमन्वयान्विकल्पप्रायान्प्रत्ययानुत्पादयन्तो दृश्यन्ते अङ्गुल्यग्रे हस्तियूथशतमास्ते इति स्वभाव एव शब्दानामर्थासंस्पर्शित्वम्, चक्षुरादीनामप्यलीककचकूर्चकादिप्रतीतिकारणत्वमस्ति न च तेषामर्थासंस्पर्शित्वमिति चेत् तेषां हि तिमिरादिदोषकलुषितवपुषां तथाविधविभ्रमकारणत्वं न तु स्वमहिम्नैव, इहापि पुरुषदोषाणामेष महिमा न शब्दानामिति चेद्—

नैवम् दोषवता ऽपि पुरुषस्य मूकादेरनुच्चारितशब्दस्येदृशविप्लवोत्पादनपाटवाभावात्, असत्यपि च पुरुषहृदयकालुष्ये यथा प्रयुज्यमानान्यङ्गुल्यग्रादिवाक्यानि विप्लवमावहन्त्येवेति शब्दानामेवैष स्वभावो न वक्तृदोषाणाम्, अपि

च न चक्षुरादिबाधकज्ञानोदये सति न विरमति विपरीतवेदनजन्मनः शुक्तिकारजतादिबुद्धिषु विभ्रमस्यापायदर्शनात्, शब्दस्तु शतकृत्वो ऽपि बाध्यमानो यथैवोच्चरितः 'करशाखादिशिखरे करेणुशतमास्ते' इति तदैव तथाभूतं भूयोऽपि विकल्पमयथार्थमुत्पादयत्येवेति विकल्पाधीनजन्मत्वाच्छब्दानामेवेदं रूपं यदर्थासंस्पर्शित्वं नामेति । तदुक्तम्—

विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
तेषामन्योन्यसम्बन्धे नार्थं शब्दाः स्पृशन्त्यमी ॥ इति ।

अत्राभिधीयते—भवेदेतदेवं यदि न कदा चिदपि यथार्थं शब्दः प्रत्ययमुपजनयेत्, अर्थसंस्पर्शित्वमेवास्य स्वभाव इत्यवगम्यते, भवति तु गुणवत्पुरुषभाषितान्नद्यास्तीरे फलानि सन्तीति वाक्यादतिरस्कृतबाह्यार्थो यथार्थः प्रत्ययः, ततः प्रवृत्तस्य तदर्थप्राप्तेः न चेयमर्थप्राप्तिरर्थस्पर्शशून्यादपि शब्दविकल्पात्पारम्पर्येण मणिप्रभामणिबुद्धिवदवकल्पते इत्युपरिष्टाद्दर्शयामः ।

ननु गुणवद्वक्तृकादङ्गुल्यादिवाक्याद् दृष्ट एवासमीचीनः प्रत्ययः, मैवम्—गुणवतामेवंविधवाक्योच्चारणचापलाभावात् ।

यत्तु आप्तो ऽपि कं चिदनुशास्ति मा भवानभूतार्थं वाक्यं वादीः 'अङ्गुलिकोटौ करिघटाशतमास्ते' इति तत्रेतिकरणावच्छिन्नस्य दृष्टान्ततया शब्दपरत्वेनोपादानात्प्रतिषेधैकवाक्यतया यथार्थत्वमेव अर्थपरत्वे तु निषेधैकवाक्यतैव न स्यादिति, तस्मादाप्तवाक्यानामयथार्थत्वाभावान्न स्वतो ऽर्थासंस्पर्शिनः शब्दाः पुरुषदोषानुषङ्गकृत एवायं विप्लवः ।

नन्वाप्तैरेवंविधवाक्याप्रयोगेपि सन्दिग्धो व्यतिरेकः किं शब्दाभावादयथार्थप्रत्ययानुत्पादः उत वक्तृदोषाभावादिति नैतदेवम्—

अनुच्चरितशब्दो ऽपि पुरुषो विप्रलम्भकः ।
हस्तसंज्ञाद्युपायेन जनयत्येव विप्लवम् ॥

न च हस्तसंज्ञादिना शब्दानुमानं तत्कृतश्च विप्लव इति वक्तव्यम् इत्थमप्रतीतेः, उत्पन्ने च क चिन्नद्यादिवाक्याद्विज्ञाने तरङ्गिणीतीरमनुसरन्ननासादितफलः प्रवृत्तबाधकप्रत्ययः पुरुषमेवाधिक्षिपति धिक् हा तेन दुरात्मना विप्रलब्धो ऽस्मीति न शब्दम् प्राप्तफलश्च पुमांसमेव श्लाघते साधु साधुना तेनोपदिष्टमित्यतः पुरुषदोषान्वयानुविधानात्तदभावकृत एव आप्तेषु तूष्णीमासीनेषु विभ्रमानुत्पाद इति न सन्दिग्धो व्यतिरेकः, पुरुषदोषकृत एव शब्दाद्विप्लवो न स्वरूपनिबन्धनः ।

ननु पुरुषदोषास्तत्र किं कुर्युः पुरुषस्य हि गुणवतो दोषवतो वा शब्दोच्चारणमात्रे एव व्यापारः ततः परं तु कार्यं शब्दायत्तमेवेति तत्स्वरूपकृत एवायं विभ्रमः, हन्त तर्हि वक्तरि गुणवति सति सरितस्तीरे फलानि सन्तीति सम्यक्प्रत्यये

ऽपि शब्दस्यैव व्यापारात्पुरुषस्योच्चारणमात्रे चरितार्थत्वान्नैकान्ततः शब्दस्यार्थासंस्पर्शित्वमेव स्वभावः युक्तं चैतदेव यद्दीपवत्प्रकाशत्वमात्रमेव शब्दस्य स्वरूपं न यथार्थत्वमयथार्थत्वं वा विपरीते ऽप्यर्थे दीपस्य प्रकाशत्वानतिवृत्तेः, अयं तु विशेषः प्रदीपे व्युत्पत्तिनिरपेक्षमेव प्रकाशत्वं शब्दे तु व्युत्पत्त्यपेक्षमिति, प्रकाशात्मनस्तु शब्दस्य वक्तृगुणदोषाधीने यथार्थेतरत्वे, अत एवाङ्गुलिशिखराधिकरणकरेणुशतवचसि बाधिते ऽपि पुनः पुनरुच्चार्यमाणे भवति विभ्रमः प्रकाशकत्वतद्रूपानपायात् न त्वेष शब्दस्य दोषः ।

पदार्थानां तु संसर्गमसमीक्ष्य प्रजल्पतः ।
वक्तुरेव प्रमादो ऽयं न शब्दो ऽत्रापराध्यति ॥

तदुक्तम् , प्रमाणान्तरदर्शनमत्र बाध्यते न पुनर्हस्तियूथशतमिति शाब्दो ऽन्वयः, पुरुषो हि स्वदर्शनं शब्देन परेषां प्रकाशयति तत्र तद्दर्शनं चेद् दुष्टं दुष्टः शाब्दः प्रत्ययः अदुष्टं चेददुष्ट इति गुणवतः पुरुषस्यादुष्टं दर्शनं भवति दोषवतो दुष्टमिति, अदृष्ट्वा ऽपि वस्तु यदुपदिश्यते सो ऽपि बुद्धिदोष एव, तस्मात्पुरुषगतगुणदोषान्वयव्यतिरेकानुविधायित्वात् तत्कृते एव शाब्दयथार्थत्वायथार्थत्वे, तदुक्तं 'तथ्यमपि भवति वितथमपि भवति' इति(१) ।

तेनाभिधातृदौरात्म्यकृतेयमयथार्थता ।
प्रत्ययस्येति शब्दानां नार्थासंस्पर्शिता स्वतः ॥
या तु जात्यादिशब्दार्थपराकरणवर्त्मना ।
अर्थासंस्पर्शिता प्रोक्ता सा पुरस्तान्निषेत्स्यते ॥

## प्रामाण्यं स्वतः परतो वेति विचारावतरणम् ।

प्रमाणत्वं तु शब्दस्य कथमित्यत्र वस्तुनि ।
जैमिनीयैरयं तावत्पीठबन्धो विधीयते ॥
प्रामाण्यमप्रामाण्यं वा सर्वविज्ञानगोचरः ।
स्वतो वा परतो वेति प्रथमं प्रविविच्यताम् ॥

ननु शब्दप्रामाण्यचिन्तावसरे सकलप्रमाणप्रामाण्यविचारस्य कः प्रसङ्गः, न स्वातन्त्र्येण परीक्षणमपि तु तदर्थमेव समानमार्गत्वात् ,

अथान्येषां स्वतः परतो वा प्रामाण्यं तथा शब्दस्यापि भविष्यतीति न हि तस्य स्वरूपमिव प्रामाण्यमपि तद्विसदृशमिति, तदुच्यते, किं विज्ञानानां प्रामाण्यमप्रामाण्यं चेति द्वयमपि स्वतः(२) उत उभयमपि परतः(३) आहो

(१) शाबरभाष्यम् अ. १ पा. १ सू. २ ।
(२) इदं सांख्यमतम् । (३) इदं तार्किकमतम् ।

स्विदप्रामाण्यं स्वतः प्रामाण्यं तु परतः(१) उत स्वित्प्रामाण्यं स्वतः अप्रामाण्यं तु परत(२) इति,

**मीमांसकमतेन सर्वप्रमाणानां स्वतः प्रामाण्यनिरूपणम् ।**

तत्र द्वयमपि स्वत इति तावदसांप्रतम्, प्रवृत्तस्य विसंवाददर्शनात्, यदि हि प्रामाण्यमितरद्वा स्वत एव ज्ञानस्य गम्यते तर्हि शुक्तौ रजतज्ञानं प्रमाणतया वा प्रतिपन्नमन्यथा वा ।

प्रमाणत्वपरिच्छित्तौ विसंवदति तत्कथम् ।
अप्रामाण्यगृहीतौ वा तस्मिन्कस्मात्प्रवर्त्तते ॥

एतेन तृतीयो ऽपि पक्षः प्रत्युक्तः यदप्रामाण्यं स्वतः प्रामाण्यं परत इति, स्वतो ह्यप्रामाण्ये निश्चिते प्रवृत्तिर्न प्राप्नोतीति, किं च अप्रामाण्यमुत्पत्तौ कारणदोषापेक्षं निश्चये च बाधकज्ञानापेक्षं तत्कथं स्वतो भवितुमर्हति, यच्च 'अप्रामाण्यमवस्तुत्वान्न स्यात्कारणदोषत' इति(३) कैश्चिदुच्यते तदपि यत्किञ्चित्, संशयविपर्ययात्मनः अप्रामाण्यस्य वस्तुत्वात्तद्गतमप्रामाण्यमपि वस्त्वेवेति, परतस्तु प्रामाण्यं यथा नावकल्पते तथा विस्तरेणोच्यते, एवं चायं द्वयमपि परत इति द्वितीयपक्षप्रतिक्षेपो ऽपि भविष्यति, अर्थतथात्वप्रकाशकं हि प्रमाणमित्युक्तम्, तस्य स्वप्रमेयाव्यभिचारित्वं नाम प्रामाण्यम्, अतश्च परापेक्षायां सत्यां परत इति कथयितुमुचितम्, न चास्य परापेक्षा क चिद्विद्यते सा हि भवन्ती उत्पत्तौ वा स्यात् स्वकार्यकरणे वा प्रामाण्यनिश्चये वा, उत्पत्तौ कारकस्वरूपमात्रापेक्षा तदतिरिक्ततद्गतगुणापेक्षा वा, कारकस्वरूपमात्रापेक्षायां सिद्धसाध्यत्वम् असत्सु कारकेषु कार्यस्य ज्ञानस्यात्मलाभाभावात् कस्य प्रामाण्यमप्रामाण्यं वा चिन्त्यते, कारकातिरिक्ततदधिकरणगुणापेक्षणं तु दुर्घटम्, अप्रामाणिकत्वेन कारणगुणानामाकाशकुशेशयसदृशवपुषामपेक्षणीयत्वाभावात् ।

न कारणगुणग्राहि प्रत्यक्षमुपपद्यते ।
चक्षुरादेः परोक्षत्वात्प्रत्यक्षास्तद्गुणाः कथम् ॥
लिङ्गं चादृष्टसंबन्धं न तेषामनुमापकम् ।
यथाऽर्थबुद्धिसिद्धिस्तु निर्दोषादेव कारकात् ॥

यदि हि यथार्थत्वायथार्थत्वरूपद्वयरहितं किं चिदुपलब्ध्याख्यं कार्यं भवेत्ततः कार्यत्रैविध्यात्कारणत्रैविध्यमवश्यमवसीयेत यथार्थोपलब्धेर्गुणवत्कारकं कारकम् अयथार्थोपलब्धेर्दोषकलुषं कारकं कारकम् उभयरूपरहितायास्तु

(१) इदं सौगतमतम् । (२) इदं मीमांसकमतम् । (३) श्लोकवार्तिके सू. २ श्लो. ३९।

तस्याः स्वरूपावस्थितमेव कारकं कारकमिति, न त्वेवमस्ति, द्विविधैव खल्वियमुपलब्धिः यथार्थत्वायथार्थत्वभेदेन तत्रायथार्थोपलब्धिस्तावद् दुष्टकारककार्यैव दृष्टा।

दृष्टः कुटिलकुम्भादिसम्भवो दुष्टकारणात्।
तथा मानान्तरमितात्तिमिरादेर्द्विचन्द्रधीः।

अयथार्थोपलब्धौ च दुष्टकारककार्यत्वेन सिद्धायामिदानीं तृतीयकार्याभावात् यथार्थोपलब्धिः स्वरूपावस्थितेभ्य एव कारकेभ्यो ऽवकल्पते इति न गुणकल्पनायै प्रभवति, अनुमाने च यैव पक्षधर्मान्वयादिसामग्री ज्ञानस्य जनिका सैव प्रामाण्यकारणत्वेन दृष्टा, न च स्वरूपस्थितानि कारणानि कार्यजन्मन्युदासते एव येन यथार्थोपलब्धिजनने तेषां गुणसहकारिता कल्प्यते इत्यतो न सन्ति कारणगुणाः, नैर्मल्यव्यपदेशस्तु लोचनादेः काचकामलादिदोषापायनिबन्धन एव न स्वरूपातिरिक्तगुणकृतः अञ्जनाद्युपयोगो ऽपि दोषनिर्हरणायैव न गुणजन्मने।

तस्मादवितथा संवित् स्वरूपस्थितहेतुजा।
दोषाधिकैस्तु तैरेव जन्यते विपरीतधीः॥
अत एवाप्रमाणत्वं परतो ऽभ्युपगम्यते।
जन्मन्यपेक्षते दोषान् बाधकं च स्वनिश्चये॥

तस्मान्नोत्पत्तौ गुणापेक्षं प्रामाण्यम्, नापि स्वकार्यकरणे किं चिदपेक्षते अर्थप्रकाशनस्वभावस्यैव तस्य स्वहेतोरुत्पादात्, अर्थप्रकाशनमेव च प्रमाणकार्यं प्रवृत्त्यादेः पुरुषेच्छानिबन्धनत्वात्।

नैव वा जायते ज्ञानं जायते वा प्रकाशकम्।
अर्थप्रकाशने किं चिन्न तूत्पन्नमपेक्षते॥

तथा चोक्तम्—

मृद्दण्डचक्रसूत्रादि घटो जन्मन्यपेक्षते।
उदकाहरणे त्वस्य तदपेक्षा न विद्यते॥ इति।

अथ वा—

सापेक्षत्वं घटस्यापि सलिलाहरणं प्रति।
यत्किं चिदस्ति न त्वेवं प्रमाणस्योपपद्यते॥
न च स्वग्रहणापेक्षं ज्ञानमर्थप्रकाशकम्।
तस्मिन्ननवबुद्धे ऽपि तत्सिद्धेश्चक्षुरादिवत्॥

उक्तं च 'न ह्यज्ञाते ऽर्थे कश्चिद् बुद्धिमुपलभते ज्ञाते त्वनुमानादवगच्छति' इति(१) तस्मात्स्वकार्यकरणे ऽपि न स्वग्रहणापेक्षं प्रमाणम्, नापि प्रामाण्य-

(१) शाबरभाष्ये अ. १ पा. १ सू. ५

निश्चये किं चिदपेक्षते अपेक्षणीयाभावात्, तथा ह्यस्य कारणगुणज्ञानाद्वा प्रामाण्यनिश्चयो भवेद्बाधकाभावज्ञानाद् वा संवादाद्वा, न तावत्कारणगुणज्ञानात्कारणगुणानामिदानीमेव निरस्तत्वात्।

अपि च न कारकगुणज्ञानमिन्द्रियकारणकम् अतीन्द्रियकारकाधिकरणत्वेन परोक्षत्वाद्गुणानाम्, अपि तूपलब्ध्याख्यकार्यपरिशुद्धिसमधिगम्यगुणस्वरूपमप्रवृत्तस्य च प्रमातुर्न कार्यपरिशुद्धिर्भवति तन्नेदानीं प्रमाण्यनिश्चयपूर्विका प्रवृत्तिर्भवेत्, अन्यथा वा, अनिश्चितप्रामाण्यादेव ज्ञानात्प्रवृत्तिसिद्धौ किं पश्चात्तन्निश्चयेन प्रयोजनम् निश्चितप्रामाण्यात्तु प्रवृत्तौ दुरतिक्रमः चक्रकक्रकचपातः प्रवृत्तौ सत्यां कार्यपरिशुद्धिग्रहणं कार्यपरिशुद्धिग्रहणात्कारणगुणावगतिः कारणगुणावगतेः प्रामाण्यनिश्चयः प्रामाण्यनिश्चयात्प्रवृत्तिरिति, नापि बाधकाभावपरिच्छेदात्प्रामाण्यनिश्चयः स हि तात्कालिको वा स्यात्कालान्तरभावी वा।

तात्कालिको न पर्याप्तः प्रामाण्यपरिनिश्चये।

कूटकार्षापणादौ किं चित्कालमनुत्पन्नबाधके ऽपि कालान्तरे तदुत्पाददर्शनात्।

सर्वथा तदभावस्तु नासर्वज्ञस्य गोचरः॥

अथ संवादात्प्रामाण्यनिश्चय उच्यते तन्नुच्यतां को ऽयं संवादो नाम, किमुत्तरं तद्विषयं ज्ञानमात्रम् उतार्थान्तरज्ञानम् अहो स्विदर्थक्रियाज्ञानमिति आद्ये पक्षे कः पूर्वोत्तरज्ञानयोर्विशेषो यदुत्तरज्ञानसम्वादात्पूर्वं पूर्वं ज्ञानं प्रामाण्यमश्नुवीत।

अपि चोत्तरसंवादात्पूर्वपूर्वप्रमाणताम्।
वदन्तो नाधिगच्छेयुरन्तं युगशतैरपि॥
सुदूरमपि गत्वा तु प्रामाण्यं यदि कस्य चित्।
स्वत एवाभिधीयेत को द्वेषः प्रथमं प्रति॥

यदाह—

कस्य चित्तु यदीष्येत स्वत एव प्रमाणता।
प्रथमस्य तथाभावे विद्वेषः किंनिबन्धन इति (१)॥

अथान्यविषयज्ञानमप्यस्य संवाद उच्यते तदयुक्तम् अदर्शनात्, न हि स्तम्भज्ञानं कुम्भज्ञानस्य संवादः,

---

(१) श्लोकवार्तिके सू. २ श्लो. ४७। स्वत इति। यदि ज्ञानस्य स्वविषयतथात्वावधारणे स्वतः शक्तिर्न स्यात्तदा नान्येनापि संपादयितुं शक्यते अतो न कदाचित् कस्य चित्कश्चिदप्यर्थोऽवधार्यतेत्यान्ध्यमेवाशेषस्य जगतः प्रसज्येतेति भावः।

अथार्थक्रियाज्ञानसंवादात्प्रथमस्य प्रवर्त्तकस्य ज्ञानस्य प्रामाण्यमिष्यते तदपि ह्यनवसितप्रामाण्यं कथमादिमस्य प्रामाण्यमवगमयेत्, कश्चार्थक्रियाज्ञानस्य पूर्वस्माद्विशेषो यदेतदायत्तस्तस्य प्रामाण्याधिगमः, अर्थक्रियाज्ञानत्वमेव विशेष इति चेत्किल सलिलज्ञानमाद्यमविद्यमाने ऽपि पयसि पूषदीधितिषु दृष्टमिति न भवति विस्रम्भभूमिः, इदं पुनरर्थक्रियासंवेदनमम्बुमध्यवर्त्तिनः पानावगाहनादिविषयमपीत्यनवधारितव्यभिचारतया तत्प्रामाण्यनिश्चयाय कल्पते इति, तदसत्, स्वप्ने पानावगाहनस्यापि व्यभिचारोपलब्धेः, किं च चरमधातुविसर्गो ऽपि स्वप्नसीमन्तिनीमन्तरेण भवतीति महानेष व्यभिचारः।

अथ रागोद्रेकनिमित्तत्वेन पित्तादिधातुविकृतिनिबन्धनत्वेन वा तद्विसर्गस्य न स्वसाधनव्यभिचार इत्युच्यते तदसमञ्जसम्, असकृदनुभूतयुवतिपरिरम्भाद्यन्वयव्यतिरेकानुविधायित्वेन तत्कार्यत्वावधारणात्।

तस्मादर्थक्रियाज्ञानव्यभिचारावधारणात्।
तत्प्रामाण्यपरीक्षायामनवस्था न शाम्यति॥
अथ वा ऽऽप्तफलत्वेन किं तत्प्रामाण्यचिन्तया।

न चेदमर्थक्रियाज्ञानमप्रवृत्तस्य पुंसः समुद्भवति तत्र प्रामाण्यावधारणपूर्विकायां प्रवृत्तौ कारणगुणनिश्चेयप्रामाण्यचर्चाबद्धचक्रकक्रकचचोद्यप्रसङ्गस्तदवस्थ एव, अनिश्चितप्रामाण्यस्य तु प्रवृत्तौ पश्चात्तन्निर्णयो भवन्नपि कृतचौरस्य नक्षत्रपरीक्षावदफल एवेत्युक्तम्,

तत्रैतत्स्याद् द्विविधा हि प्रवृत्तिः आद्या चाभ्यासिकी च, तत्राद्या यथा विनिहितसलिलावसिक्तमसृणमृदि शरावे शाल्यादिबीजशक्तिपरीक्षणाय कतिपयबीजकणवापरूपा, ततस्तत्र तेषामङ्कुरकरणकौशलमविकलमवलोकयन्तः कीनाशा निःशङ्कं केदारेषु तानि बीजान्यावपन्तीति सेयमाभ्यासिकी प्रवृत्तिः, एवमिहापि प्रथमपरीक्षितप्रमाणभावादेव ज्ञानात्कुतश्चित्कश्चिद्विपश्चिदपि व्यवहरंस्तद्व्यवहारपरस्तत्तत्फलज्ञाने तस्य प्रामाण्यमवगच्छन् पुनस्तथाविधे जाते सति सुखमेव प्रवृत्त्यादिकं व्यवहारमशङ्कितकालुष्यः करिष्यतीति न सर्वात्मना वैयर्थ्यमिति, उच्यते विषमो ऽयं दृष्टान्तः—

तज्जातीयतया बीजं शक्यते यदि वेदितुम्।
तत्र तन्निश्चयाद्युक्तं निर्विशङ्कं प्रवर्त्तनम्॥
ज्ञाने तथाविधत्वं तु बोधरूपाविशेषतः।
कार्याद्वा कारणाद्वा ऽपि ज्ञातव्यं न स्वरूपत॥ इति।
कारणानां परोक्षत्वान्न तद्द्वारा तदा गतिः।
कार्यात्तु नाप्रवृत्तस्य भवतीत्युपवर्णितम्॥
तस्माद्वैयर्थ्यचोद्यस्य नायं परिहृतिक्रमः।

एवं चार्थक्रियाज्ञानात्कीदृक् प्रामाण्यनिश्चयः॥
समर्थकारणज्ञानाद्यो ऽपि प्रामाण्यनिश्चयम् ।
ब्रूते सो ऽपि कुतोद्ग्राहस्तत्र लग्नं परीक्षते ॥

किलातिविकसितकुसुममकरन्दपानमुदितमधुकरकुले कस्मिंश्चिदुद्याने वाद्यमानायां वीणायां निरन्तरलतासन्तानान्तरितवपुषि विदूरादनवलोक्यमाने वादके वीणाध्वनिसंविदि रोलम्बनादसंदेहदूषितायां तदभिमुखमेव प्रतिष्ठमानः श्रोता परिवादके दर्शनपथमवतीर्णे स्वरानुकूलकारणनिश्चयात्तत्प्रतीतौ संशयनिवृत्तेः प्रामाण्यं निश्चिनोतीत्येष समर्थकारणज्ञानकृतः प्रामाण्यनिश्चयः ।

तत्रापि नाप्रवृत्तस्य हेतुसामर्थ्यदर्शनम् ।
एवमेव प्रवृत्तौ तु निश्चितेनापि तेन किम् ॥
तन्निश्चयात्प्रवृत्तौ वा पुनरन्योन्यसंश्रयम् ।
तन्निश्चयात्प्रवृत्तिः स्यात्प्रवृत्तेस्तद्विनिश्चयः ॥

तदेवं न कुतश्चिदपि प्रामाण्यनिश्चयः चक्रकेतरेतराश्रयानवस्थावैयर्थ्यादिदूषणातीतस्थितिरस्तीति,अतः प्रामाण्यनिश्चयेऽपि न किं चिदपेक्षते प्रमाणम्, ततश्चोत्पत्तौ स्वकार्यकरणे स्वप्रामाण्यनिश्चये च निरपेक्षत्वादपेक्षात्रयरहितत्वात्स्वतः प्रामाण्यमिति सिद्धम् । तदुक्तम् (१) ।

स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम् ।
न हि स्वतो ऽसती शक्तिः कर्तुमन्येन पार्यते ॥

अप्रामाण्यं तूत्पत्तौ दोषापेक्षत्वात्स्वनिश्चये बाधकप्रत्ययादिसापेक्षत्वात्परत इत्युक्तमेव, तस्मात्पक्षत्रयस्यानुपपत्तेश्चतुर्थ एवायं पक्षः श्रेयान्, प्रामाण्यं स्वतः अप्रामाण्यं परत इति ।

ननु चोत्पत्तिवेलायां न विशेषो ऽवधार्यते ।
प्रमाणेतरयोस्तेन बलाद्भवति संशयः ॥

परिच्छित्तिमात्रं प्रमाणकार्यं तच्च यथार्थेतरप्रमितिसाधारणं रूपं साधारणधर्मग्रहणं च संशयकारणमिति प्रसिद्धः पन्थाः । एवं च स्थिते—

प्रमाणान्तरसंवादविसंवादौ विना कथम् ।
प्रमाणेतरनिर्णीतिरतश्च परतो द्वयम् ।

---

(१) श्लोकवार्त्तिके सू. २ श्लो. ७६ संङ्गत्या तदि चेष्येत पूर्वपूर्वप्रमाणता । प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि । इति पूर्वः श्लोकः अयमभिप्रायः संगत्या संवादेन यदि प्रमाणता स्वीक्रियते तदाऽव्यवस्था, कस्यचित्संवादमन्तरा स्वतः प्रामाण्याङ्गीकारे तु प्रथमस्य स्वतः प्रामाण्याङ्गीकारे को द्वेष इति ।

तदेतदचतुरस्रम् , सत्यं परिच्छित्तिरेव प्रमाणकार्यम् , सा पुनरुपजायमानैव न संदेहादिदूषिततनुरुपलभ्यते इत्यौत्सर्गिकं प्रामाण्यमेव सा भजते । अर्थपरिच्छेदाच्च प्रवर्त्तमानः प्रमाता प्रमाणेनैव प्रवर्त्तितो भवति न संशयात्प्रवृत्तः, स्थितिश्चैवमौत्सर्गिके प्रामाण्ये यत्र तस्यापवादः क चिद्भवति तत्राप्रामाण्यम् अप्रामाण्ये चावश्यंभावी अपवादः द्विविध एव तदपवादः बाधकप्रत्ययः कारणदोषज्ञानं च, तदुक्तं भाष्यकृता(१), 'यत्र च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य' इति, वार्त्तिककरोऽप्याह(२)

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते इति ॥

तत्र बाधकज्ञानं पूर्वज्ञानोपमर्दद्वारेणैव तस्मिन्विषये जायते इति समानविषयत्वात्स्पष्टमेव बाधकम् , कारणदोषज्ञानं तु भिन्नविषयमपि कार्यैक्याद्बाधकतां प्रतिपद्यते, यथा चमसेनापः प्रणयन्तीति दर्शपूर्णमासाङ्गत्वात् क्रत्वर्थश्चमसः गोदोहनेन पशुकामस्य प्रणयेदिति काम्यमानपशुनिर्देशात्पुरुषार्थगोदोहनेन निर्वृत्ते तस्मिंश्चमसो निवर्त्तते, एवमिह कारणदोषज्ञानं दोषविषयमपि दोषाणामयथार्थज्ञानजननस्वभावत्वात्तस्य ज्ञानस्य प्रामाण्यं बाधते, तदुक्तम् (३)

दुष्टकारणबोधे तु जाते ऽपि विषयान्तरे ।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवदिति ॥

---

( १ ) शाबरभाष्ये अ. १ पा. १ सू. ५ ।

( २ ) श्लोकवार्तिके सू. २ श्लो. ५३ । तस्मादिति । तस्मात् बोधस्वभावानुबन्धि ज्ञानानामौत्सर्गिकं प्रामाण्यमिति हेतोः बुद्धेः प्रमाणता विषयतथात्वं प्राप्ता अवगता अर्थान्यथात्वज्ञानेन हेतूत्थदोषज्ञानेन च अपोद्यते बाध्यते इत्यर्थः ।

( ३ ) श्लोकवार्तिके सू २ श्लो. ५८ । ननु साक्षाद्विपर्ययज्ञानेन परेण पूर्वस्य बाधः उभयो समानविषयत्वात् यत्र तूत्तरं कारणदोषविषयं भवति तत्र भेदान्न बाधो युक्त इत्यत आह दुष्टेति । अयं भावः यद्यपि दुष्टकारणबोधे विषयभेदः पीतशङ्खादिविभ्रमेषु तथाप्यर्थात् तुल्यार्थतां प्राप्य बाधो भवत्येव । शङ्खे हि पीत इति विदिते परतश्च ज्ञानकारणदोषेऽवगतेऽर्थात् पीतिमा शङ्खस्य प्रतिक्षिप्तो भवति, यत्कारणाधीनात्मलाभं हि यत्कार्यं तद्दोषे दुष्यति एष च ज्ञानस्य दोषः यदन्यथास्थितस्यान्यथाप्रकाशनम् । अतः कारणदोषावगमेऽर्थान्यथात्वमेवावगतं भवति । यथा दर्शपूर्णमासयोः क्रत्वर्थेन चमसेन अपां प्रणयने विहिते 'गोदोहनेन पशुकामस्य प्रणयेत्' इति पुरुषार्थेन गोदोहनेन क्रत्वर्थस्य चमसस्य बाधः तत्र क्रतूपकारः चमससाध्यः पशुः गोदोहनसाध्य इति विषयभेदेऽपि अर्थात्तुल्यार्थतया बाधः । गोदोहनं द्रव्यम् न हि तत् क्रियामनाश्रित्य फलं जनयितुं समर्थमिति यां कांचित्क्रियामाश्रयतया समीहमानं सन्निहितं

यत्र पुनरिदमपवादद्वयमपि न दृश्यते तत्र तदौत्सर्गिकं प्रामाण्यमनपोदितमास्ते इति न मिथ्यात्वाशङ्कायां निमित्तं किं चित्, यदाह (१)--

दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणिका। इति।

तथा हि--

कश्चिदुत्पन्न एवेह स्वसंवेद्यो ऽस्ति संशयः।
स्थाणुर्वा पुरुषो वेति को नामापह्नुवीत तम्॥
हठादुत्पद्यमानस्तु हिनस्ति सकलाः क्रियाः।
स्वभार्यापरिरम्भे ऽपि भवेन्मातरि संशयः॥
विनाशी संशयात्मेति पाराशर्यो ऽप्यभाषत।
नायं लोको ऽस्ति कौन्तेय न परः संशयात्मन॥ इति।

यत्रापि क चिद्बाधकप्रत्यये संशयो जायते तत्रापि तृतीयज्ञानापेक्षणान्नानवस्था, न च स्वतः प्रामाण्यहानिः यत्र प्रथमविज्ञानसंवादि तृतीयज्ञानमुत्पद्यते तत्र प्रथमस्य प्रामाण्यमौत्सर्गिकं स्थितमेव, द्वितीयविज्ञानारोपितालीककालुष्यशङ्कानिराकरणं त्वस्य तृतीयेन क्रियते न त्वस्य संवादात्प्रामाण्यम्, यदि तु द्वितीयज्ञानसंवादि तृतीयं ज्ञानं तदा प्रथमस्याप्रामाण्यम्, तच्च परत इष्टमेव, द्वितीयस्य तु ज्ञानस्य न तृतीयसंवादकृतं प्रामाण्यम् अपि तु सङ्कल्प्यमानकुशङ्काऽऽचमनमात्रे तस्य व्यापारः, उक्तं च(२)--

एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुते॥ इति।

---

क्रत्वर्थमपां प्रणयनं गृह्णातीति तदाश्रितेन पशवो भावयितव्या इति शास्त्रार्थोऽवतिष्ठते एवं च तेनैव क्रत्वर्थमपां प्रणयनं सिद्धमिति चमसो निवर्तते एवमत्रापीति न दोषः।

(१) श्लोकवार्तिके सू. २ श्लो. ६०। दोषज्ञाने इति। 'स्वत एव हि तत्रापि दोषाज्ञानात्प्रमाणता' इति पूर्वार्द्धम्। ननु प्रमाणेन सता तृतीयेन बाधकं बाध्यते तदेव तु कथं प्रमाणमत आह स्वत इति। सर्वं खलु विज्ञानजातं स्वत एव प्रमाणमविज्ञायमानदोषम् तथा च तृतीयम् अतस्तेन बाधकबाधने कृते भवत्याद्यस्य मानतेति। नन्वसत्स्वपि दोषेषु दोषाशङ्का यथा आदिमे जाता एवमन्तिमेऽपीति प्रामाण्यं नावतिष्ठेतेत्यत आह--दोषेति। अयमभिप्रायः यावद्धि दोषाणामभावो नावधार्यते तावत् प्रमाणेतरसाधारणधर्मदर्शिनो भवत्याशङ्का प्रमाणवती दोषाभावावधारणे तु जाते तानाशङ्कमानस्याभावविरोध एवेत्यर्थः।

(२) श्लोकवार्तिके सू. २ श्लो. ६०। एवं त्रिचतुरैरेव ज्ञानैर्दोषाभावसिद्धेर्न ततोऽधिका मतिः प्रार्थनीया प्रामाण्यसिद्धये येनानवस्था भवेत् यावदेव तु तृतीयं

## वेदानामपौरुषेयतयापि स्वतः प्रामाण्यनिरूपणम्—

तदेवं सर्वप्रमाणानां स्वतः प्रामाण्ये सिद्धे समानन्यायतया शब्दस्यापि तथैव प्रामाण्यं भवति, न च नैसर्गिकमर्थासंस्पर्शित्वमेव शब्दस्य स्वरूपमिति परीक्षितमेतत्, किं त्वर्थबोधजनकत्वात्तस्य नैसर्गिके प्रामाण्ये सति पुरुषदोषानुप्रवेशकारितः क्व चिद्धि विप्लवः, तदुक्तम्, 'शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितिः'(१) तत्र पौरुषेये वचसि गुणवति वक्तरि तद्गुणापसारितदोषतया तत्प्रामाण्यमौत्सर्गिकमनपोदितं भवति न तु गुणकृतं तत्प्रामाण्यमनङ्गत्वात्प्रामाण्ये गुणानाम्, बोधकत्वनिबन्धनमेव तदित्युक्तम्, वेदे तु प्रणेतुः पुरुषस्याभावात् दोषाशङ्कैव न प्रवर्तते वक्त्रधीनत्वाद्दोषाणाम्, न च बाधकप्रत्ययो ऽद्य यावद्वेदार्थे कस्य चिदुत्पन्न इति निरपवादं वेदप्रामाण्यम्, आह च(२)—

तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।
वेदे तेनाप्रमाणत्वं न शङ्कामधिगच्छतीति ॥

तदिदमुक्तं तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति(३) ।

गिरां मिथ्यात्वहेतूनां दोषाणां पुरुषाश्रयात् ।
अपौरुषेयं सत्यार्थमिति युक्तं प्रचक्षते ॥
गिरां सत्यत्वहेतूनां गुणानां पुरुषाश्रयात् ।
अपौरुषेयं सत्यार्थमित्ययुक्तं तु मन्वते ॥
न हि पुरुषगुणानां सत्यतासाधनत्वं
वचसि खलु निसर्गादेव सत्यत्वसिद्धिः ।
गुणमपि नरवाचां विप्लवाधायिदोष-
प्रशमनचरितार्थं सङ्गिरन्ते गुणज्ञाः ॥

---

चतुर्थं वा ज्ञानमुत्पन्नं तावदेवैकं पूर्वमुत्तरं वा निरपवादं स्वतः प्रामाण्यमापद्यत इत्याह एवमिति ।

(१) श्लोकवार्तिके सू. २ श्लो. ६२ । शब्दे वक्त्रधीना एव दोषा न स्वाभाविका इति वेदे वक्तुरभावात् स्वतः प्रामाण्यं निरपवादमेवावतिष्ठते इति भावः ।

(२) श्लोकवार्तिके सू. २ श्लो. ६८ । अकर्तृके वेदे निराश्रया दोषाः शङ्कामपि नाधिरोहन्ति इति अप्राण्यशङ्कैव नोदेति । औत्सर्गिकस्य प्रामाण्यस्यापवादभूतमप्रामाण्यं तन्निर्मुक्तिर्वेदे लघीयसी न पुंवाक्यवद् गुणापेक्षितया गुर्वी वस्तुतस्तु पुंवाक्येष्वपि न गुणापेक्षं प्रमाण्यमिति भावः ।

(३) जैमिनिसूत्रम् । अ. १. पा. १. सू ५ ।

## मीमांसकाभिमतप्रामाण्यस्वतस्त्वस्य निरासः—

अत्राभिधीयते, प्रत्यक्षादिषु दृष्टार्थेषु प्रमाणेषु प्रामाण्यनिश्चयमन्तरेणैव व्यवहारसिद्धेस्तत्र किं स्वतःप्रामाण्यमुत परत इति विचारेण न नः प्रयोजनम् अनिर्णय एव तत्र श्रेयान्, अदृष्टे तु विषये वैदिकेष्वगणितद्रविणवितरणादिक्लेशसाध्येषु कर्मसु तत्प्रामाण्यावधारणमन्तरेण प्रेक्षावतां प्रवर्त्तनमनुचितमिति तस्य प्रामाण्यनिश्चयो ऽवश्यकर्त्तव्यः, तत्र परत एव वेदस्य प्रामाण्यमिति वक्ष्यामः।

यच्चेदमियता विस्तरेण स्वतः प्रामाण्यमुपपादितं तद् व्याख्येयम्, स्वतः प्रामाण्यमिति को ऽर्थः किं स्वत एव प्रमाणस्य प्रामाण्यं भवति उत स्वयमेव तत्प्रमाणमात्मनः प्रामाण्यं गृह्णातीति, न तावत्स्वयमेव प्रामाण्यग्रहणमुपपन्नम् अप्रामाणिकत्वात्, तथा हि यदेतन्नीलप्रकाशने प्रवृत्तं प्रत्यक्षं तन्नीलं प्रति तावत्प्रत्यक्षं प्रमाणं तावदिन्द्रियार्थसन्निकर्षोत्पन्नमिति जानीम एवैतत्किमत्र विचार्यते, प्रामाण्यपरिच्छेदे तु किं तत्प्रमाणमिति चिन्त्यताम्, प्रत्यक्षमनुमानं वा प्रमाणान्तराणामनाशङ्कनीयत्वात्, न तावत्स्वप्रामाण्यपरिच्छेदे तत्प्रत्यक्षं प्रमाणं तद्विज्ञानस्य वा प्रामाण्यं गृह्णीयात् तत्फलस्य वा तत्र ज्ञातृ व्यापारात्मनो ज्ञानस्य भवन्मते नित्यपरोक्षत्वात्प्रत्यक्षतः परिच्छेदानुपपत्तौ तत्प्रामाण्यस्यापि कथं प्रत्यक्षेण ग्रहणम्, फलस्याप्यर्थप्रकाशनाख्यस्य संवेदनात्मनो नेन्द्रियसंसर्गयोग्यता विद्यते येन तद्गतमपि यथार्थत्वलक्षणं प्रामाण्यमिन्द्रियव्यापारलब्धजन्मना प्रत्यक्षेण परिच्छिद्येत, न च मानसमपि प्रत्यक्षं फलगतयथार्थताऽवसायसमर्थमिति कथनीयं तदानीमननुभूयमानत्वात्, न हि नीलसंवित्प्रसवसमनन्तरं यथार्थेयं नीलसंवित्तिरिति संवेदनान्तरमुत्पद्यमानमनुभूयते, अनुभवे वा ततो द्वितीयात्प्रथमोत्पन्ननीलज्ञानयाथार्थ्यग्रहणान्न स्वतः प्रामाण्यनिश्चयः स्यात्, तस्मान्न प्रत्यक्षस्यैष विषयः, अनुमानेनापि कस्य प्रामाण्यं निश्चीयते ज्ञानस्य फलस्य वेति पूर्ववद्वाच्यम्, फलस्य तावत्तन्निश्चये लिङ्गत्वमेव तावन्न कस्य चित्पश्यामः, ज्ञातृव्यापारात्मनो ज्ञानस्य तु स्वकार्यं फलं भवेदपि लिङ्गं फलस्य क्रियामात्रव्याप्तिग्रहणात्स्वरूपसत्तामात्रमनुमापयितुमुत्सहते न यथार्थत्वलक्षणं प्रामाण्यम्, तद्धि फलं निर्विशेषणं वा स्वकारणस्य ज्ञातृव्यापारस्य प्रामाण्यमनुमापयेद् यथार्थत्वविशिष्टं वा, आद्ये पक्षे यतः कुतश्चन फलात्तत्प्रामाण्यानुमाने नेदानीं किं चिदप्रमाणं भवेत्, उत्तरो ऽपि नास्ति पक्षः फलगतयाथार्थ्यपरिच्छेदोपायाभावादित्युक्तम्।

ननु सो ऽनुभव एवात्रोपायः, तद्धि नीलसंवेदनतया फलं स्वत एव प्रकाशते नीलसंवेदनत्वमेव चास्य यथार्थत्वं नान्यत्, यद्येवं शुक्तिकायामपि रजत-

संवेदने समानो न्यायः, न हि रजतसंवेदनादन्या यथार्थत्वसंवित्तिरिति ।

ननु तत्र बाधकप्रत्ययोपनिपातेनायथार्थत्वमुपनीयते नूनं चास्य मिथ्याद-र्शनेषु देशान्तरे वा शुक्तिकारजतादिज्ञाने कालान्तरे वा कूटकार्षापणादिप्रतीतौ पुरुषान्तरे वा जाततैमिरिके द्विचन्द्रप्रतीतौ अवस्थान्तरे पीतशङ्खादिप्रतिभासे भवति बाधकप्रत्ययः, तदसत्त्वे न तच्छङ्का युक्तिमतीत्युक्तमेव, सत्यमुक्तमयुक्तं तु एवं हि वदता बाधकाभावज्ञानाधीनं प्रामाण्यमभिहितं भवति तच्च तात्का-लिकं कालान्तरभावि वेति कल्प्यमानं नोपपद्यते इति दर्शितम् , तस्मादुत्प-द्यमानमेव प्रमाणमात्मनः प्रामाण्यं निश्चिनोतीति न युक्तमेतत् , यदि तु प्रस-वसमये एव ज्ञानस्य प्रामाण्यं निश्चिनुयाम तर्हि ततः प्रवर्त्तमाना न क चिदपि विप्रलभ्येमहि, विप्रलभ्यामहे तु तेन मन्यामहे न निश्चितं तत्प्रामाण्यं संशया-देव व्यवहराम इति ।

ननु संशयो ऽपि तदा नानुभूयते एव किमिदं रजतमिति अपि तु रजत-मित्येव प्रतीतिः न हि संशयानाः प्रवर्त्तन्ते लौकिकाः किं तु निश्चिन्वन्त एव विषयमिति किमननुभूयमान एवारोप्यते संशयः, एकतरग्राह्यप्ययं प्रत्ययः तन्निश्चयोपायविरहात्संशयकोटिपतित एव बलाद्भवति यथा ऽस्ति कूपे जल-मिति भित्तवो मन्यन्ते, एवं रजतमिदमित्येकपक्षग्राह्यपि तदानीं प्रतिभासः वस्तुवृत्तेन संशय एव, यदि हि प्रमाणतया ऽसौ गृह्येत कथं क चिद्विसंवदेत्, अप्रमाणतया तु गृह्यमाणः कथं पुमांसं प्रवर्त्तयेत् ।

उभाभ्यामपि रूपाभ्यामथ तस्यानुपग्रहः ।
सो ऽयं संशय एव स्यादिति किं नः प्रकुप्यसि ॥

यत्तु नानुभूयते संशय इति, सत्यम् अननुभूयमानो ऽपि न्यायादभ्यस्ते विषये ऽविनाभावस्मरणात्स परिकल्प्यते निश्चयनिमित्तस्य तदानीमविद्यमा-नत्वात् , संशयजननहेतोश्च सामग्र्याः सन्निहितत्वात् , तथा हि, यथार्थेत-रार्थसाधारणो धर्मो बोधरूपत्वमूर्ध्वत्वादिवत्तदा प्रकाशते एव, न च प्रामाण्या-विनाभावी विशेषः कश्चन तदानीमवभाति तदग्रहणे च समानधर्माधिगमप्रबो-ध्यमानवासनाधीना तत्सहचरितपर्यायानुभूतविशेषस्मृतिरपि संभवत्येवेतीयं सा संशयजननी सामग्री सन्निहितैवेति कथं तज्जन्यः संशयो न स्यात् ।

ननु प्रमाणभूते प्रत्यये जायमान एव तद्गतो विशेषः परिस्फुरतीति कथं विशेषाग्रहणमुच्यते, भो महात्मन् कथ्यतां स विशेषो न हि तं वयमनुपदिष्टं कु-शमतयो जानीमः, यदि तावत् स्पष्टताविशेषः शुक्तिकायामपि रजतावभासः स्पष्ट एव, न हि तत्रानध्यवसायकालुष्यं किं चिदस्ति, अथ निष्कम्पता शुक्तिकाया-मपि रजतावभासो निष्कम्प एव न ह्यसौ जायमान एवाङ्गुल्यग्रादिवाक्यकरण-

बोधवत्कम्पमानो जायते, अथ निर्विचिकित्सता शुक्तिकायामपि रजतावभासो निर्विचिकित्स एव किं स्विदिति कोटिद्वयानवमर्शात्, अथ यस्मिन् सति बाधा न दृश्यते सोऽस्य विशेष इति, नन्वेतदेव पृच्छामि कस्मिन् सति बाधा न दृश्यते इति सर्वावस्थस्य बाधदर्शनात्, न चासौ चिरमपि चिन्तयित्वा विशेषयितुं शक्यः, अथ स्वविषयाव्यभिचारित्वमेव विशेषः स तदानीं नावभासते इत्युक्तम् अपि च यदि तथाविधोऽपि विशेषः समस्ति तर्हि यत्र ज्ञाने ऽसौ न दृश्यते ततः किमिति प्रवर्त्तते, तद्विशेषदर्शी वा प्रवर्त्तमानः कथं विप्रलभ्येतेत्युक्तम्, यदयं स्थाणुर्न पुरुषः।

तेनैव व्यवहारस्य सिद्धत्वात्सर्वदेहिनाम् ।
अतश्च संशयादेव व्यवहारं वितन्वताम् ॥
लौकिकानां प्रयोक्तव्या नाभिशापपरम्पराः ।

न च सर्वथा संशयसमर्थने ऽस्माकमभिनिवेशः, प्रामाण्यं तु ज्ञानोत्पत्तिकाले ग्रहीतुमशक्यमिति नः पक्षः, प्रामाण्याग्रहणमेवानध्यवसायस्वभावं संशयशब्देनेह व्यपदेक्ष्यामः, प्रामाण्याग्रहणं च प्रदर्शितम्, प्रत्यक्षेणानुमानेन वा सता प्रमाणेनात्मनः प्रमाणत्वपरिच्छेदायोगात्, तस्मात्स्वयं प्रामाण्यं गृह्यते इत्येष दुर्घटः पक्षः।

## प्रामाण्योत्पत्तौ स्वतस्त्वनिरासः—

अथ स्वतः प्रामाण्यं भवतीत्येष पक्ष आश्रीयते सोऽप्ययुक्तः, कार्याणां कारणाधीनजन्मत्वात्प्रामाण्यस्य च कार्यत्वात्, अस्ति च प्रामाण्यं वस्तु च तद् न च नित्यमिति कार्यमेव तत् कार्यं च कार्यत्वादेव न स्वतो भवितुमर्हति इति, अथोत्पत्तौ स्वकारकातिरिक्तगुणानपेक्षित्वमेव प्रामाण्यस्य स्वतो भवनमुच्यते न पुनरकार्यत्वमेवेति तदप्यसम्यक्, सम्यग्रूपस्य कार्यस्य गुणवत्कारकव्यतिरेकेणानिष्पत्तेः, द्विविधं कार्यं भवति सम्यगसम्यग्वा तत्र गुणवता कारणेन सम्यक् कार्यमुत्पद्यते दोषवता त्वसम्यगिति ।

निर्दोषं निर्गुणं वापि न समस्त्येव कारणम् ।
अत एव तृतीयस्य न कार्यस्यास्ति सम्भवः ॥

सम्यग्ज्ञानोत्पादकं कारकधर्मि स्वरूपातिरिक्तस्वगतधर्मसापेक्षं कार्यनिर्वर्त्तकमिति साध्यो धर्मः कारकत्वात् मिथ्याज्ञानोत्पादककारकवत्, सम्यग्ज्ञानं वा धर्मिस्वरूपातिरिक्तधर्मसम्बन्धवत्कारकनिष्पाद्यमिति साध्यो धर्मः कार्यत्वान्मिथ्याज्ञानवत्, आयुर्वेदाच्चेन्द्रियगुणान् प्रतिपद्यामहे, यदमी वैद्याः स्वस्थवृत्तेरौषधोपयोगमुपदिशन्ति तद्गुणोपयोगायैव न दोषशान्तये, दृश्यते च तदुपदिष्टौषधोपयोगादिन्द्रियातिशयः, तद्विषय एव च लोके नैर्मल्यव्यपदेशो न दोषाभाव-

मात्रप्रतिष्ठ इत्यलं विमर्देन, तस्मादुत्पत्तौ गुणानपेक्षत्वात्स्वतः प्रामाण्यमिति यदुक्तं तदयुक्तम् ।

यदपि च स्वकार्यकरणे प्रमाणस्य परानपेक्षत्वमुच्यते तदपि व्याख्येयं किं प्रमाणं स्वकार्यकरणे निरपेक्षं सामग्री वा तदेकदेशो वा तज्जन्यं वा ज्ञानमिति, तत्र सामग्र्याः सत्यं स्वकार्यजन्मनि नैरपेक्ष्यमस्ति न तु तावता स्वतः प्रामाण्यं तत्परिच्छेदस्य परायत्तत्वात्, सामग्र्यन्तर्गतकारकस्य स्वकार्ये परापेक्षत्वमपरिहार्यम्, एकस्मात्कारकात्कार्यनिर्वृत्त्यभावात्, ज्ञानं फलमेव न प्रमाणमित्युक्तम्, न च फलात्मनस्तस्य स्वकार्यं किंचिदस्ति यत्र सापेक्षत्वमनपेक्षत्वं वा ऽस्य चिन्त्येत, पुरुषप्रवृत्त्यादौ तु तदिच्छाद्यपेक्षत्वं विद्यते एवेति यत्किंचिदेतत् ।

यदपि प्रामाण्यनिश्चये नैरपेक्ष्यमभ्यधायि तदपि न साम्प्रतम्, प्रामाण्यनिश्चयस्य हि द्वयी गतिर्नास्तित्वं कारणापेक्षिता वा न पुनरस्ति च प्रामाण्यनिश्चयः कारणानपेक्षश्चेति शक्यते वक्तुम्, तत्र प्रथमप्रवर्त्तकप्रतिभासप्रसवसमये तावन्नास्त्येव प्रामाण्यनिश्चय इत्युक्तम्, न हि नीलग्राहिणा प्रमाणेन लीनस्वरूपमिव स्वप्रामाण्यमपि तदानीं निश्चेतुं शक्यते इति, कालान्तरे तत्प्रामाण्यनिश्चयः सत्यमस्ति न तु तत्र नैरपेक्ष्यं प्रवृत्तिसामर्थ्याधीनत्वात्तन्निश्चयस्य ।

ननु क्षणिकत्वात्कालान्तरे ज्ञानमेव नास्ति कस्य प्रामाण्यं निश्चिनुमः, शिशुचोद्यमेतद् अप्रामाण्यमपि बाधकप्रत्ययादिना कालान्तरे कस्य निश्चिनुमः क्षणिकत्वेन ज्ञानस्यातीतत्वात्, अतिक्रान्तस्यापि स्मर्यमाणस्य तदुत्पादस्य वा वर्त्तमानस्य कारकचक्रस्येति चेत्प्रामाण्यनिश्चयेपि समानो ऽयं पन्थाः,

यत्पुनः कालान्तरे तन्निश्चयकरणे दूषणमितरेतराश्रयत्वं वा मुण्डितशिरोनक्षत्रान्वेषणवद्वैयर्थ्यं वेति वर्णितं तत्राद्दष्टे विषये प्रामाण्यनिश्चयपूर्विकायाः प्रवृत्तेरभ्युगमान्नेतरेतराश्रयं चक्रकं वा, दृष्टे विषये ह्यनिर्णीतप्रामाण्य एवार्थसंशयात्प्रवृत्तिरूपमनर्थसंशयाच्च निवृत्त्यात्मकं व्यवहारमारभमाणो दृश्यते लोकः एतदेव युक्तमित्युक्तम्, न प्रामाण्यनिश्चयपुरःसरं प्रवर्त्तनमिति कुत इतरेतराश्रयम्, वैयर्थ्यं तु दृष्टे विषये सत्यमिष्यते किं तु तत्र प्रवृत्तिसामर्थ्येन प्रामाण्यं निश्चिन्वन्नाप्तोक्तत्वस्य हेतोः प्रामाण्येन व्याप्तिमवगच्छतीति, ह्यदृष्टविषयोपयोगिवेदादिप्रमाणप्रामाण्यपरिच्छेदे पारम्पर्येणोपायत्वात्स्वविषये व्यर्थो ऽप्यसौ तत्र सार्थकतामवलम्बते इत्यदोषः ।

किं पुनरिदं प्रवृत्तिसामर्थ्यं नाम यतः प्रामाण्यनिश्चयमाचक्षते नैयायिकाः, उच्यते पूर्वप्रत्ययापेक्षोत्तरा संवित्प्रवृत्तिसामर्थ्यं विशेषदर्शनं वेति पूर्वाचार्यैस्तत्स्वरूपमुक्तम्, तत्पुनर्नातीव हृदयंगमम् इति भाष्यकृतैव 'समीहा प्रवृ-

त्तिरित्युच्यते सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्ध'(१) इति वदता ऽर्थक्रियाख्यफलज्ञानमेव प्रवृत्तिसामर्थ्यमिति निर्णीतम् ।

यत्पुनरर्थक्रियाज्ञानस्यापि पूर्वस्मात्को विशेषः तस्यापि चान्यतः प्रामाण्यनिश्चयापेक्षायामनवस्थेत्युक्तं तदपि सकलप्राणभृत्प्रतीतिसाक्षिकव्यवहारविरोधित्वादसंबद्धाभिधानम् , अपरीक्षणीयप्रामाण्यत्वादर्थक्रियाज्ञानस्य, प्रवर्त्तकं न सर्वज्ञानं प्रवृत्तिसिद्धये परीक्षणीयप्रामाण्यं वर्त्तते, फलज्ञाने तु सिद्धप्रयोजनत्वात् प्रामाण्यपरीक्षापेक्षैव नास्तीति कुतोऽनवस्था, संशयाभावाद्वा तत्प्रामाण्यविचाराभावः, प्रवर्त्तकं हि प्रथममुदकज्ञानमविद्यमाने ऽपि नीरे मिहिरमरीचिषु दृष्टमिति तत्र संशेरते जनाः, अर्थक्रियाज्ञानं तु सलिलमध्यवर्त्तिनां भवत्तदविनाभूतमेव भवतीति न तत्र संशयः, तदभावान्न तत्र प्रामाण्यविचारे विचारस्य संशयपूर्वकत्वात् , विशेषदर्शनाद्वा फलज्ञाने प्रामाण्यनिश्चयः ।

कः पुनर्विशेष इति चेद् योऽयं शौचाचमनमज्जनामरपितृतर्पणपटक्षालनश्रमतापनोदनविनोदनाद्यनेकप्रकारनीरपर्यालोचनप्रबन्धः न ह्ययमियान्कार्यकलापो मिथ्याज्ञानात्प्रवृत्तस्य क्व चिदपि दृष्टः , स्वप्ने ऽप्यस्य प्रबन्धस्य दर्शनमस्तीति चेद् न, स्वप्नदशाविसदृशविस्पष्टजाग्रदवस्थाप्रत्ययस्य संवेद्यत्वात् , एषो ऽस्मि जागर्मि न स्वपिमीति स्वप्नविलक्षणमनिद्रायमाणः प्रत्यक्षमेव जाग्रत्समयं सकलो जनश्चेतयते, न च तस्मिन्नवसरे सलिलमन्तरेणैताः क्रियाः वर्त्तमाना दृश्यन्ते इति तद्विशेषदर्शनात् सुज्ञानमर्थक्रियाज्ञानप्रामाण्यम्, कारणपरीक्षातो वा तस्मिन् प्रामाण्यं निश्चेष्यामः, यथोक्तं भवद्भिरेव(२) 'प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेम तत्प्रमाणाभावाददुष्टमितिमन्येमहि' इति तथा हि विषयस्य चलत्वसादृश्यादिदोषविरहः आलोकस्य मलीमसत्वादिकारणवैकल्यम् अन्तःकरणस्य निद्राद्यदूषितत्वम् आत्मनः क्षुत्प्रकोपाद्यनाकुलत्वम् ईक्षणयुगलस्य तिमिरपटलादिविकलत्वमित्यादि, स्वयं च कार्यद्वारेण परोपदेशेन च सर्वं सुज्ञानम्, अतो निरवद्यकारणजन्यत्वात्प्रमाणमर्थक्रियाज्ञानमिति विद्मः,।

यद्येवं प्रथमे प्रवर्त्तके एव प्रत्यये कस्मात्कारणपरीक्षैवेयं न क्रियते किमर्थं क्रियाज्ञाने, न आयुष्मन्नाद्ये ऽपि ज्ञाने कारणपरीक्षायां क्रियमाणायां कः प्रमादः, किमेवं सति स्वतः प्रामाण्यं सिद्ध्यति तव, मम वा परतः प्रामाण्यमपहीयते, किं तु लोकः प्रवर्त्तकज्ञानानन्तरं फलप्राप्तिं प्रति यथा सोद्यमो दृश्यते न तथा तत्कारणपरीक्षां प्रति फलज्ञानमेवेत्थं परीक्ष्यते, आद्यस्य हि ज्ञानस्य फलज्ञानादेव प्रामाण्यसिद्धिः, कश्च नाम निकटमुपायमुपेक्ष्य दूरं गच्छेदिति ।

---

(१) वात्स्यायनभाष्ये अ० १ पा० १ सू० १ ।

(२) शाबरभाष्ये अ० १ पा० १ सू० ५ ।

अथ संशयोत्पत्तिसामर्थ्यादेव यथार्थनिश्चयः फलज्ञानेन लप्स्यते संशयो हि नाम द्वैविध्यदर्शनाद् विना न भवत्येव, न हि स्थाणुपुरुषसाहचर्यमूर्ध्वताख्यस्य धर्मस्य यो न जानाति स तं दृष्ट्वा स्थाणुर्वा स्यात्पुरुषो वेति संशेते एवमूर्ध्वत्वाद्बाधरूपत्वस्य व्यभिचारित्वाव्यभिचारित्वाभ्यां सह दर्शनमवश्यमाश्रयणीयम् अन्यथा तद्विषयसंशयानुत्पादाद्, अतः पूर्वमव्यभिचारित्वदर्शने सिद्धे यस्तदा तत्परिच्छेदोपायः स पश्चादपि भविष्यतीति सर्वथा सिद्धचत्यव्यभिचारित्वनिश्चयः, अनिश्चितप्रामाण्यादपि वा फलज्ञानात्प्रवर्त्तकस्य प्रामाण्यनिश्चयो युक्तः न तु स्वत उत्पत्तौ प्रमाणतदाभासयोर्विशेषग्रहणात् फलज्ञाने च तद्विशेषप्रतिभासात्।

यत्तु विशेषज्ञानं निश्चितप्रामाण्यमनिश्चितप्रामाण्यं वेति विकल्प्यानवस्थापादनमप्रतिपत्तिप्रहततकथनं वा तद्दृष्टे विरुद्धत्वात्प्रलापमात्रमित्यलमलीकोक्तविकल्पकलापनिर्मथनोदितदुरामोदास्वादनेन, स्थितमेतदर्थक्रियाज्ञानात्प्रामाण्यनिश्चय इति, तदिदमुक्तम्, 'प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्' इति(१), तस्मादप्रामाण्यमपि परोक्तमित्यतो द्वयमपि परत इत्येष एव पक्षः श्रेयान्।

यत्तु कश्चित्प्राज्ञमानी वदति अभ्यस्ते विषये स्वतः प्रामाण्यमनभ्यस्ते तु परत इति सोयमभ्यस्ते विषये इति च ब्रवीति स्वतश्च प्रामाण्यं मन्यते इति स्वयमेवात्मानं वाच्यमानं न चेतयते, अभ्यासो हि नाम पुनः पुनः प्रयोगः क्रियाभ्यावृत्तिः विषयस्य चाभ्यस्तता भूयो भूयः प्रवृत्तिः अतश्च स्वशरीरग्रहे निजगृहकुड्यस्तम्भादिप्रतिभासे वा सहस्रकृत्वः प्रवृत्तिसंवादज्ञानजन्मना प्रामाण्यनिश्चय उक्तो भवति स्वतः अभ्यस्तत्वं चान्यथा न भवेदिति यत्किंचिदेतत्, तस्मात्परतः प्रामाण्यमिति सिद्धम्।

यत्पुनः कैश्चिच्चोद्यते प्रमाणानां न परीक्षणमुपपद्यते तद्धि प्रमाणैः क्रियेताप्रमाणैर्वा प्रमाणैरपि परीक्षितैरपरीक्षितैर्वा, तत्र न नाम प्रमाणपरीक्षणं शक्यक्रियं प्रमाणैरप्यपरीक्षितैः तत्करणे वरं व्यवहार एव तादृशैः क्रियतां किं परीक्षणेन, परीक्षितैस्तु तत्परीक्षाकरणमपर्यवसितमनवस्थाप्रसङ्गादित्यादि तदप्युक्तेन न्यायेन परिहृतं भवति, दृष्टे विषये प्रमाणपरीक्षां विनैव व्यवहारात्, अदृष्टे तु परीक्षाया अवश्यकर्त्तव्यत्वादुपपत्तेश्चेति।

तस्माददृष्टपुरुषार्थपदोपदेशि
मानं मनीषिभिरवश्यपरीक्षणीयम्।
प्रामाण्यमस्य परतो निरणायि चेति
चेतःप्रमाथिभिरलं कुविकल्पजालैः॥

---

(१) वात्स्यायनभाष्यप्रथमवाक्यम्।

## परतः प्रामाण्यनिरासाय विपरीतख्यातिमाक्षिप्याख्यातिवादेन प्रत्यवस्थानम्—

सुशिक्षितास्त्वाचक्षते युक्तं यदमी मीमांसकपांशाः काशकुसुमराशय इव शरदि मरुद्भिरतिदूरात्समुत्सार्यन्ते दुष्टतार्किकैः, ये हि किलाभ्युपयन्ति च विपरीतख्यातिवादमकृतास्त्राः प्रामाण्यं च स्वत इति च वदन्ति तेषां कुतः कौशलं विपरीतख्यातावभ्युपगम्यमानायां बाध्यबोधसंदर्भसुभिक्षे सति तत्साधर्म्यादनुत्पन्नबाधकेऽपि बोधे दुष्परिहरः संशयः, संशये च संवादाद्यन्वेषणमपि ध्रुवमवतरतीति परतः प्रामाण्यमनिवार्यम्,

### बाध्यज्ञानाभावस्थापनमुखेन विपरीतख्यातिखण्डनम् ।

यदा तु न बाध्यो नाम जगति कश्चिदपि बोधः तदा किंसाधर्म्यात्संशेरतां प्रमातारः, असंशयानाश्च किमिति परमपेक्षन्ताम् अनपेक्षमाणाः कथं परतः प्रामाण्यं प्रतिपद्यन्तामिति निश्चलं स्वत एव प्रामाण्यमवतिष्ठते,

कथं पुनर्बाध्यो नाम नास्ति बोधः शुक्तिकादौ रजतादिप्रत्ययाः प्राचुर्येण बाध्यमाना दृश्यन्ते, अनभिज्ञो भवान्न हि ते बाध्याः प्रत्ययाः, इदं हि निरूप्यतां क इवोत्तरज्ञानेन पूर्वज्ञानस्य बाधः, बाधार्थमेव न विद्मः, यदि तावन्नाश एव बाधः स न तेषामेव बुद्धेर्बुद्ध्यन्तराद्विरोध इति सकलबोधसाधारणत्वात्, अथ सहानवस्थानं तदपि समानम् अबाधितानामपि ज्ञानानां सहावस्थानासंभवात् ।

अथ संस्कारोच्छेदो बाधः सोऽपि तादृगेव सम्यक्प्रत्ययोपजनितसंस्कारस्याप्युच्छेददर्शनात्, कश्चिद्भवदभिमतबाध्यबोधाहितोऽपि संस्कारः सत्यपि बाधकप्रत्यये नोच्छेदमुपगच्छति कालान्तरे तत्कारणकतद्विषयस्मरणदर्शनात् ।

अथ विषयस्यापहारो बाधः सोऽपि दुर्घटः, प्रतिभासत्वेन विषयस्यापहर्तुमशक्यत्वात्, न हि बाधकं ज्ञानमित्थमुत्तिष्ठति यत्प्रतिभातं तन्न प्रतिभातमिति ।

अथ तदभावग्रहो बाधः स तात्कालिकः कालान्तरभावी वा, कालान्तरभावितदभावग्रहणस्य बाधकत्वे प्रागवगतमुद्गरदलितघटाभावग्राहिणोऽपि विज्ञानस्य तद्बाधकत्वप्रसङ्गः, तदैव तु तदभावग्रहणे प्रत्ययद्वयसमर्पितरूपद्वितययोगादुभयात्मकमेव तदस्तु वस्तु किं कस्य बाध्यं बाधकं वा ।

अथ फलापहारो बाधः सो ऽपि न सम्भवति संविदः प्रमाणफलस्य उत्पन्नत्वेनानपहरणीयत्वात्, न हि यदुत्पन्नं तदनुत्पन्नमिति वदति बाधकः ।

अथ हानादिफलापहारो बाधः न तस्य प्रमाणफलत्वाभावात् ।

हानादिव्यवहारो हि पुरुषेच्छानिबन्धनः ।
न तेनापहृतेनापि प्रमाणं बाधितं भवेत् ॥

तस्मान्न बाधो नाम कश्चित्, इतश्च नास्ति स हि समानविषययोर्वा ज्ञानयोरिष्यते भिन्नविषययोर्वा, न समानविषययोर्धारावाहिज्ञानेष्वदृष्टत्वात्, नापि भिन्नविषययोः स्तम्भकुम्भोपलम्भयोस्तदनुपलम्भात्, यदि चोत्तरेण ज्ञानेन पूर्वज्ञानेन गृहीतादर्थादर्थो ऽन्य इदानीं गृहीतः तत्पूर्वज्ञानं किमिति बाधितमुच्यते।

अपि च पूर्वस्मिन्प्रत्यये प्राप्तप्रतिष्ठे सति आगन्तुरुत्तरः प्रत्ययो बाधितुं युक्तं न पूर्वो न चैवं दृश्यते, तस्मान्न बाध्यं नाम विज्ञानमस्ति तदभावान्न तत्साधर्म्यनिबन्धनः संशयः तदभावात्संवादाद्यनन्वेषणान्न परतः प्रामाण्यम्।

## कारणभावमुखेन विपरीतख्यातिखण्डनम्—

नन्वेवं बाधे ऽपि निराक्रियमाणे किममी शुक्तिकारजतादिग्राहिणो विपरीतप्रत्यया अबाधिता एवासताम् आः कुमते नामी विपरीतप्रत्ययाः न हीदृशानां विपर्ययाणामुत्पत्तौ किमपि कारणमुत्पश्यामः, न तावदिन्द्रियमेवंविधबोधविधायि भवितुमर्हति सर्वदा तदुत्पादप्रसङ्गात्, नापि दोषकलुषितं दुष्टं कारणं स्वकार्यकरणे एव कुण्ठितशक्ति जातमिति तदेव मा जीजनत्, विपरीतकार्यकरणस्य किं वर्त्तते न हि दुष्टानि शालिबीजानि यवाङ्कुरकरणकौशलमवलम्बेरन्, तस्मात्कारणाभावादपि न विपरीतप्रत्ययास्ते।

तत्किं सम्यक्प्रत्यय एव शुक्तिकायां रजतप्रतिभासः, अयि मूढ नायमेकः प्रत्यय इदं रजतमिति किं तु द्वे एते ग्रहणस्मरणे इदमिति पुरो ऽवस्थितभास्वराकारधर्मिप्रतिभासः रजतमिति तु भास्वररूपदर्शनप्रबोध्यमानसंस्कारकारणकं तत्साहचर्यादवगतरजतस्मरणम्, अतश्चेदं स्मरणं यतः प्रागनवगतरजतस्य न जायते विदितरजतस्यापि रजन्यामन्यदा वा सादृश्यदर्शनाद्विना न भवतीति, स्मरणमपि भवदिदमात्मानं तथा न प्रकटयतीति प्रमुषितमुच्यते, स्वरूपेण चाप्रतिभासमानायां स्मृतावनुभवस्मरणयोर्विवेको न गृहीतो भवतीत्यग्रहणमख्यातिरुच्यते।

तथा हि भ्रान्तबोधेषु प्रस्फुरद्वस्तुसंभवात्।
चतुष्प्रकारा विमतिरुपपद्येत वादिनाम्॥

विपरीतख्यातिः असत्ख्यातिः आत्मख्यातिरख्यातिरिति तत्र विपरीतख्यातिस्तावत्कारणाभावादेव निरस्ता,

## विपरीतख्यातेः ख्यात्यन्तरेण सांकर्यापादनम्-

अपि च विपरीतख्यातौ त्रयी गतिः रजतं वा ऽन्यदेशकालमत्रालम्बनं शुक्तिका वा निगूहितनिजाकारा सती परिगृहीतरजताकारा च अथ वा अन्यदालम्बनमन्यश्च प्रतिभाति आलम्बनं शुक्तिका रजतं च प्रतिभातीति, तत्र यदि

रजतमालम्बनं तदियमसत्ख्यातिरेव न विपरीतख्यातिः असतस्तत्र रजतस्य प्रतिभासात् ।

अथान्यदेशकालं तदस्त्येवेत्यभिधीयते ।
इहासन्निहितस्यास्य तेन सत्त्वेन को गुणः ॥

अपि च देशकालावपि किं सन्तौ प्रतिभासेते उतासन्ताविति, यदि सन्तौ तर्हि तद्देशकालमेवेदं रजतमवभातमिति न भ्रान्तिरेषा स्यात् असन्तौ तूभावपि रजतवन्नालम्बनं भवितुमर्हतः ।

अथ स्मृत्यारूढं रजतमस्यां प्रतीतौ परिस्फुरतीत्युच्यते तर्हि स्मृत्युपारूढमिति को ऽर्थः, स्मरणमपि ज्ञानमेव तदपि कथमसदर्थविषयं स्यात्, स्मृतेरनर्थजत्वमेव स्वरूपमितिचेद् अस्तु कामं तत्सामान्यादत्राप्येवं प्रयोग इत्येतदपि तावन्न ब्रूमः, तथा त्वनर्थजन्यया स्मृत्या सो ऽर्थः कथमिह सन्निधापयितुं पार्यते सा हि न स्पृशत्येवा ऽर्थम्, तस्मादसन्निहितरजतालम्बना विपरीतख्यातिरसत्ख्यातेर्न्न विशिष्यते एव ।

अथ स्थगितनिजवपुरुपगृहीतरजतरूपा शुक्तिका ऽत्र प्रकाशते इति नेयमसत्ख्यातिरुच्यते तदिदमपूर्वं किमपि नाटकमियमस्मिन् कृत्यासीता प्रवृत्तेति, तथाहि किमत्र शुक्तीतिप्रतीतिरुत रजतमिति, शुक्तिकाप्रतीतौ तु शुक्तिरेव न रजतमत्र भ्रमार्थः कः, रजतप्रतीतौ तु शुक्तिरसावित्यत्र किं प्रमाणम्, बाधकप्रत्ययादेवमधिगतम् इति चेन्मैवम्, न हि ज्ञानान्तरेणास्याः प्रतीतेर्विषयो व्यवस्थापयितुं युक्तः, बाधकेन हि ज्ञानेन पूर्वज्ञानगृहीतस्य वस्तुनो ऽसत्त्वं नाम ख्याप्यतां न तु तस्य विषयो निरूप्यते, अनर्थित्वाद्वा कदा चिदप्रवृत्तस्य पुंसो बाधकानुत्पत्तौ को ऽस्याः प्रतीतेः विषयं व्यवस्थापयिष्यति, तस्माद्यदेवास्यां चकास्ति तदेव रजतमस्या विषय इति युक्तं वक्तुम्, शुक्तिस्तु निगूहितनिजवपुरिति दुर्विदग्धवाचोयुक्तिरियम् ।

ये त्वालम्बनतां शुक्ते रजतस्यावभासनम् ।
वदन्त्यस्मिन् भ्रमज्ञाने तेषामतितरां भ्रमः ॥
न ह्यालम्बनता युक्ता सन्निधाननिबन्धना ।
तत्रैव भूप्रदेशस्य तथाभावप्रसङ्गतः ॥
तदेवालम्बनं बुद्धेर्यदस्यामवभासते ।
अन्यदालम्बनं चान्यद्भातीति भणितिर्नवा ॥
अतो रजतमेवैतद्बुद्धिग्राह्यमसच्च तत् ।
एवं विपर्ययख्यातिरसत्ख्यातेर्न भिद्यते ॥

### असत्ख्यात्यभावाक्षेपः—

तत्किमसत्ख्यातिरेव साधीयसी तामेवाभ्युपगच्छामः मैवम्, सा ऽपि नोपपद्यते एव, असत्ख्यातिरिति को ऽर्थः, किमेकान्तासत एवार्थस्य प्रथनम् अथ देशान्तरादौ विद्यमानस्येति, उत्तरस्मिन् पक्षे विपरीतख्यातिरेवैषा परैरपि तत्र रजतस्य सत्त्वानभ्युपगमात्, देशान्तरादौ तु तत्सत्तायास्त्वयापि प्रतिपन्नत्वाद्, एकान्तासतस्त्वर्थस्य ख्यातिरिति न पेशलम् आकाशनलिनीपल्लवादेरप्रतिभासनात्, वासनाभ्यासादसतामपि प्रतिभासा भविष्यन्तीति चेद् न, अर्थमन्तरेण वासनया अप्यनुपपत्तेः, अर्थानुभवसमाहितो हि संस्कारो वासना कथ्यते सा कथमसदर्थप्रतिभासहेतुः स्यात्, भवत्वन्या वा भवदभिमता का चन वासना ऽपि त्वसत्त्वाविशेषे किमिति रजतमितिमुपजनयति न गगननलिनप्रतीतिमिति कुतस्त्यो नियमः, तदलमनया।

नात्यन्तमसतो ऽर्थस्य सामर्थ्यमवकल्पते।
व्यवहारधुरं वोढुमियतीमनुपप्लुताम्॥

### आत्मख्यात्यभावाक्षेपः—

अपि च सत्त्वेन प्रतिमातीति असत्ख्यातिरपि न विपरीतख्यातिमतिवर्त्तते, तस्माद्वरमात्मख्यातिरस्तु।

विज्ञानमेव खल्वेतद् गृह्णात्यात्मानमात्मना।
बहिर्निरूप्यमाणस्य ग्राह्यस्यानुपपत्तितः॥
बुद्धिः प्रकाशमाना च तेन तेनात्मना बहिः।
तद्वहत्यर्थशून्या ऽपि लोकयात्रामिहेदृशीम्॥

उच्यते—नात्मख्यातिरपि युक्तिमती, विज्ञानात्मनो हि प्रतिभासे ऽहं रजतमिति प्रतीतिः स्याद् नेदं रजतमिति, किं च यदन्तर्ज्ञेयरूपं हि बहिर्वदवभासत इत्यभ्युपगमादियमपि विपरीतख्यातिरेव स्यात्, असत्ख्यातिरपि चेयं भवत्येव बहिर्बुद्धेरसत्त्वात्, बुद्धिरस्त्येवेति चेद् बहिष्ट्वं तर्हि चिन्त्यं सदसत्त्वादिति, न तावत्सद् बुद्धेर्बाह्यत्वाभावात्, असत्त्वे त्वसत्ख्यातिरित्युक्तम्।

### स्वतः प्रामाण्यसमर्थनाय अख्यात्युपपादनम्—

तस्मात्ख्यातित्रये ऽप्यस्मिन्नन्योन्यानुप्रवेशिनि।
युक्त्या विरुध्यमाने च श्रेयस्यख्यातिरेव सा॥

ख्यातित्रयवादिभिरपि चेयमप्रत्याख्येया नूनमख्यातिः, आत्मख्यातौ तावदात्मतया विज्ञानस्य ख्यातिर्नास्ति विच्छेदप्रतिभासादित्युक्तत्वात्, असत्ख्यातावपि असत्त्वमर्थस्य नैव प्रतिभासते प्रवृत्त्यादिव्यवहारोच्छेदप्रसङ्गात्,

विपरीतख्यातावपि रजतस्य सन्निहितस्य ज्ञानजनकत्वम् अजनकस्य च प्रतिभासे नेष्यते एव, तत्र स्मृत्युपस्थापितं रजतमवगतिजनकमुपगतम्, अतश्च रजतस्मृतिरपरिहार्या, सा च रजतस्मृतिर्न तदा स्वेन रूपेण प्रकाशते स्मरामीति प्रत्ययाभावात्।

तस्मात्प्रमुषितामेनां स्मृतिमिच्छन्ति तार्किकाः।
अभ्यस्ते विषये लिङ्गप्रतिबन्धां स्मृतिं यथा॥
सो ऽयं स्मृतिप्रमोषस्तत्त्वाग्रहणमख्यातिरुच्यते।
एवं सतीयमख्यातिरिष्यते सर्ववादिभिः।
तथा प्रकटयद्भिस्तु पीतं प्राभाकरयशः॥

ननु रजतमिति स्मृतेः स्वरूपोल्लेखो मा भूद् इदमित्यत्र पुरोऽवस्थितधर्मिप्रतिभासात्कथमख्यातिः, उच्यते, न पुरोऽवस्थितो धर्मी शुक्तिकेयमिति स्पष्टतया गृह्यते तथा चाभ्युपगमे भ्रमाभावप्रसङ्गात्, किं तु तेजस्वितादिविपरीतं धर्मिमात्रमवभासते, धर्मसारूप्याच्च तदानीं रजतं स्मर्यते, ते एते ग्रहणस्मरणे विविक्ते अपि विविक्ततया न गृह्येते इति विवेकाग्रहणमख्यातिः न तु सर्वेण सर्वाप्रतिपत्तिरेव, व्यधिकरणयोश्च ग्रहणस्मरणयोर्वैयधिकरण्यं चेन्न गृहीतं किमन्यदस्तु सामानाधिकरण्यात्, न तु यदेवेदं तदेव रजतमिति सामानाधिकरण्येन ग्रहणमस्ति सा हि विपरीतख्यातिरेव स्यात्, वैयधिकरण्यानुपग्रहादेव प्रमातुः प्रवृत्तिः अविवेकात्साधारण्याभिमानेन प्रवृत्तिरिति फलत इयं वाचोयुक्तिः—

सामानाधिकरण्येन केचित्तत्पृष्ठभाविनम्।
परामर्शमपीच्छन्ति तन्न श्रद्दध्महे वयम्॥
अख्यातिपक्ष एवं हि हीयेतैकत्ववेदनात्।
वक्रैश्च वितथा ख्यातिरन्यैः कथिता भवेत्॥

नन्वेवमख्यातिपक्षे प्रतिष्ठाप्यमाने नेदं रजतमिति पूर्वावगतरजतप्रतिबोधबोधी बाधकप्रत्ययो दृश्यमानः कथं समर्थयिष्यते, अप्रतीतिज्ञो देवानांप्रियः, न ह्यनेन रजतनिषेधो विधीयते किं तु प्रागगृहीतो विवेकः प्रख्याप्यते, न इदं रजतं यदेवेदं तदेव रजतमित्येतन्न इदमिदं रजतं रजतम्, एतदुक्तं भवति इदमन्यद्रजतमन्यदिति, सो ऽयं विवेकः ख्यातितो भवति।

नन्वेवमिदं रजतमित्यादौ स्मरणानुभवयोर्भवतु विवेकाग्रहणं स्वप्ने तु कथमेतद्भविष्यति, भीरो किं जातं स्वप्ने—

विवेकेन न गृह्येते स्मरणानुभवौ क्वचित्।
स्वप्ने तु स्मृतिरेवैका तथात्वेन न गृह्यते॥

सदृशदर्शनाद्विना स्मृतिरेव कुतस्त्येति चेद् न, नानाकारणकत्वात्स्मरणस्य निद्राकषायितमप्यन्तः करणं स्मरणकारणं भवत्येव, यद्येवं द्विचन्द्रतिक्तशर्करादिप्रत्ययेषु कथं स्मृतिप्रमोषः आः कुण्डशेखर कथमसकृदभिहितमपि न बुध्यसे—

न सर्वत्र स्मृतेरेव प्रमोषो ऽभ्युपगम्यते ।
किं त्वख्यातिरतश्चासौ कथं चित्कस्य चित्क चित् ॥
भवत्यनुभवस्मृत्योर्विवेकाग्रहणं क चित् ।
क चित्तु स्मर्यमाणस्य तथात्वेनानुपग्रहः ॥
द्विधाकृता क चिद्वृत्तिर्नेत्रस्य तिमिरादिना ।
न हि ग्रहीतुमैक्येन शक्नोति शिशिरत्विषम् ॥
क चिद्रसनसंपृक्ते पित्ते तिक्तत्ववेदनात् ।
परिच्छेत्तुं न शक्नोति माधुर्यं शर्करागतम् ॥
गृह्णाति यत्तु तिक्तत्वं वस्तुतः पित्तवर्त्ति तत् ।
तथा तु न विजानाति निगिरन्नेष शर्कराम् ॥

एतेन पीतशङ्खादिख्यातयो ऽपि व्याख्याताः ।

तदेवं सति सर्वत्र सम्यगग्रहणं भ्रमः ।
न मिथ्याप्रत्ययः कश्चिदस्ति शङ्कानिबन्धनम् ॥
अजातमिथ्याशङ्कश्च न संवादमपेक्षते ।
तस्मान्न कश्चित्परतः प्रामाण्यमधिगच्छति ॥
एवं स्वतः प्रमाणत्वे सिद्धे वेदे ऽपि सा गतिः ।
अपवादद्वयाभावो वक्तव्यश्चात्र पूर्ववत् ॥

## परतः प्रामाण्यसमर्थनाय विपरीतख्यातिसमर्थनम्—

अत्र प्रतिविधीयते, यदुक्तमिदं रजतमिति स्मरणानुभवस्वभावे विवेकेनागृह्यमाणे द्वे एते ज्ञाने इति तदसाम्प्रतम्, प्रत्यभिज्ञावदेकत्वेनैव संवेद्यमानत्वात्, यदेवेदं पुरोऽवस्थितं भास्वररूपाद्यधिकरणं धर्मिसामान्यं तदेव रजतमिति विशेषतः प्रतिपद्यते, यदिदमग्रतः स्थितं तद्रजतमिति सत्यरजतप्रतीतिवत्, अनुभूततया हि न रजतमत्र प्रकाशते किं त्वनुभूयमानतया, अनुभूतताग्रहणं च स्मरणमुच्यते नानुभूयमानताग्रहणम् स्वप्रकाशा च संवित्तिरिति भवतां दर्शनम्, तत्रैषा रजतसंवित्तिः केन रूपेण प्रकाशतामिति चिन्त्यम्, यदि स्मरणात्मना कः प्रमोषार्थः, अथानुभवात्मना तदियं विपरीतख्यातिरेव स्मृतेरनुभवत्वेन प्रतिभासात्, अथ संविन्मात्रतयैव प्रकाशते तदपि न युक्तम्, रजतविषयोल्लेखात् स्मरणानुभवविशेषरहितायाश्च विषयसंवित्तेरनुपपत्तेः, न चेयम-

प्रतिपत्तिरेवेति वक्तुमुचितं मदमूर्च्छादिदशाविसदृशस्वप्रकाशसंवेदनानुभवात्, यथा इदमित्यंशे स्वप्रकाशं संवेदनं तथैव रजतमित्यत्रापि।

अपि च द्वयोश्चांशयोः समाने संवेदने तत एकं प्रत्यक्षलब्धमपरं स्मरणफलमिति कुतस्त्यो विभागः, इदमित्यत्र च किमवभासते इति निरूप्यम्, यदि शुक्तिकाशकलं सकलस्वगतविशेषखचितमवभाति तदा तद्दर्शने सति रजतस्मरणस्य को ऽवसरः, भवदपि वा सादृश्यकृतं स्मरणं न तदविवेकाय कल्पते देवदत्तदर्शनानन्तरोद्गततत्सदृशपुरुषान्तरस्मरणवत्।

अथ धर्मिमात्रमिदमिति प्रत्यये प्रतिभाति न शुक्तिकाशकलं तद्गाढमिष्यते तदेव चेदं सामान्यधर्मग्रहणवशाविरुद्धसंस्कारोपनिबन्धनविरुद्धविशेषस्मरणकारणकमिदं रजतमिति सामान्योपक्रमे विशेषपर्यवसानं ज्ञानं यदिदं तद्रजतमिति सामानाधिकरण्यावमर्शात्, रजतानुभवाभिमानेनैव च रजतार्थी तत्र प्रवर्त्तते।

ननु स्मरणानुभवयोर्विवेकमप्रतिपद्यमानः प्रवर्त्तते इत्युक्तम्, श्रुतमिदं यदत्र भवद्भिर्धर्मकीर्त्तिगृहादाहृतं दृश्यविकल्पावर्थावेकीकृत्य प्रवर्त्तते इति, किं च चौर्यमपीदं न कथं चन स्वार्थं पुष्णाति, यावद्धि दृश्यं गृहीतमिति न जातः प्रत्ययः तावत्कथं दृश्यार्थिनस्तत्र प्रवृत्तिः, एवमिहापि यावद्रजतं गृहीतमिति न जातः प्रत्ययः तावत् कुतस्तदर्थिनां प्रवृत्तिः, तस्मादस्ति रजतग्रहणं न तु तत्स्मरणप्रमोषमात्रम्।

ननु रजतस्मरणं विपरीतख्यातिवादिभिरप्यङ्गीकृतमित्युक्तम्, सत्यं रजतगतविशेषस्मरणमभ्युपगतम्, यथा हि पुरोवस्थिते धर्मिण्यूर्ध्वत्वादिसाधारणधर्मग्रहणात्स्थाणुपुरुषगतविशेषाग्रहणादुभयविशेषस्मृतेः संशयो भवति एवमिहापि तेजस्वितादिसामान्यधर्मग्रहणाद्विशेषाग्रहणाद्रजतगतविशेषस्मृतेश्च तस्मिन्धर्मिणि रजतप्रत्ययो भवति विपर्ययात्मकः, संशये ह्युभयविशेषस्मरणं कारणम् इह त्वन्यतरविशेषस्मरणमिति विशेषः, अत एव चागृहीतरजतस्येदं ज्ञानं नोत्पद्यते सदृशाग्रहणे वा निशीथादाविति, न त्वेतावता स्मरणमात्रमेवेदमितीयति विरम्य स्थातव्यम्, स्मरणजन्यस्य विपर्ययप्रत्ययस्यापि संवेदनात्, अत एव तत्पृष्ठभाविपरामर्शवादिनो वरं सत्यवाचः, ते हि प्रतिभासं न निह्नुवते,

यत्तु विपर्ययावगतेः कारणं विकल्पितं तत्रोक्तमेव प्रामाणिकैः।

कार्यं चेदवगम्येत किं कारणपरीक्षया।
कार्यं चेन्नावगम्येत किं कारणपरीक्षया॥

कार्याकस्मिकतानुपपत्तेश्च कल्प्यतां कारणं तच्च क्लृप्तमेव दोषसहितमिन्द्रियं यथा संस्कारसहकारि प्रत्यभिज्ञायामिति।

सुवते शालयो दुष्टा न यद्यपि यवाङ्कुरम्।
शालिकार्यं त्वपूपादि जनयन्त्येव कल्मषम्॥

तस्माद्दोषकलुषितादिन्द्रियात्पुरोऽवस्थितधर्मिगतत्रिकोणत्वादिविशेषावमर्शकौशलशून्यात्सामान्यधर्मसहचरितपदार्थान्तरगतविशेषस्मरणोपकृताद्भवति विपरीतप्रत्ययः, सम्यग्ज्ञानापेक्षया च तद् दुष्टमुच्यते स्वकार्ये तु विपर्ययज्ञाने तत्कारणमेव न दुष्टम्, तस्माद्रजतमित्यनुभव एव न प्रमुषितस्मृतिः ।

अपि च नेदं रजतमिति बाधकज्ञानं पूर्वानुभवविषयीकृतरजतनिषेधमधिगमयदुत्पद्यते नेदं रजतमिति यदहमद्राक्षं तद्रजतं न भवतीति, प्रसक्तस्य चायं निषेधः अननुभूतं त्वप्रसक्तमपि प्रतिषिध्यमानं रजतमिव कनकमपि किमिति न प्रतिषिध्यते ।

यत्तु व्याख्यातं प्रागनवगतस्मरणानुभवविवेकप्रतिपादकं बाधकज्ञानमिति तद्व्याख्यानमात्रमेव तथा ऽननुभवात्, न ह्येवं बाधक उद्घाट्यते यदविविक्तं तद्विविक्तमिति, अतो यत्किंचिदेतत्, तस्मान्न रजतस्मरणं रजते वा कदा चिदनुभवो ऽभूदिति स्मरणमभिधीयमानं नात्यन्तमलौकिकम्, स्वप्ने तु स्वशिरश्छेदादेरत्यन्ताननुभूतस्य स्मृतिरिति कथ्यमानमेव त्रपाकरम्, जन्मान्तरे निजमस्तकलवनमनुभूतमनेनेति चेद् इदमपि स्वभाषितमसारम्, यज्जन्मान्तरानुभूतं स्मर्यते तत्र च कुतस्त्य एष नियमो यत्कदा चिदेव स्मर्यते न सर्वदा सर्वमिति ।

ननु भवता ऽप्यसत्ख्यातिं निरस्यता स्वप्नज्ञानेषु तादृक्षु किं वक्तव्यं यद्वक्तव्यं तत्रैव श्रोष्यसि असन्न प्रतीभातीत्युच्यते न त्वननुभूतमिति ।

नन्वननुभूतं सत्कथं जानीषे सदिति चेज् ज्ञानं तदनुभूतमिति, नैवम्, मया तन्नानुभूतम् अन्येनानुभविष्यते परानुभूतं च सदिति शक्यते वक्तुम्, परानुभूते तु स्मरणमघटमानमिति नावयोरत्र वस्तुनि समानयोगक्षेमत्वम् ।

अपि च भवन्मते स्वप्नस्मृतेः स्मृतित्वेनाग्रहणे केन रूपेण ग्रहणमिति चिन्त्यम्, रूपान्तरेण ग्रहणे विपरीतख्यातिः सर्वात्मना त्वग्रहणे स्वप्नसुषुप्तयोरविशेषप्रसङ्गः, अनुभवप्रत्ययश्च स्वप्ने संवेद्यते न स्मरणानुल्लेखमात्रमिति दुरभिनिवेश एव स्मृतिप्रमोषसमर्थनं नामेति, द्विचन्द्रादिप्रत्ययेषु कथमख्यातिः ।

ननूक्तं सुषिरभिन्ना नयनवृत्तिरेकत्वेन ग्रहीतुं न शक्नोति शशाङ्कमिति, भोः श्रोत्रिय तादृशी दृशो वृत्तिरेकत्वमिन्दोर्मा ग्रहीद् द्वित्वानुभवं तु भ्रान्तं क प्रच्छादयामः, ननु चक्षुर्वृत्तौ तद् द्वित्वं तद्गतत्वेन तु यत्तस्याग्रहणं स एव भ्रमः, नैतदेवम्, नेत्रवृत्तेः सर्वत्र परोक्षत्वात् ।

किमेकचन्द्रबोधेऽपि वृत्त्येकत्वं प्रतीयते ।
इयं ह्यगृह्यमाणैव चक्षुर्वृत्तिः प्रकाशिका ॥

एवमुच्यमाने चैकचन्द्रग्रहणे ऽपि व्यक्त्येकत्वाग्रहणादख्यातिरेव भवेत्, यदपि तिक्तशर्करादिप्रत्ययेष्वख्यातिसमर्थनकदाशया पित्तवृत्तेस्तिक्तत्वस्य संवेद्यमानस्य तत्स्थत्वेनाग्रहणमुपवर्णितं तदपि कुशकाशावलम्बनप्रायम् ।

मोहात्पित्तगतत्वेन तिक्तता चेन्न गृह्यते ।
सा ग्राहि शर्करायां तु किंकृता तिक्ततामतिः ॥

पित्तं त्विन्द्रियस्थं तिमिरवदगृह्यमाणमपि भ्रममुपजनयति शरीरस्थमिव ज्वरं शिरोऽर्त्यादि रोगमित्यलं प्रसङ्गेन ।

एवं सर्वत्र नाख्यातिर्निर्वहन्तीव लक्ष्यते ।
न चैतयापि परतः प्रामाण्यमपहन्यते ॥
रजते ऽनुभवः किं स्यादुत प्रमुषिता स्मृतिः ।
द्वैविध्यदर्शनादेवं भवेत्तत्रापि संशयः ॥
संशयानश्च संवादं नूनमन्वेषते जनः ।
तदपेक्षाकृत तस्मात्प्रामाण्यं परतो ध्रुवम् ॥
न चैष शून्यवादस्य प्रतीकारक्रियाक्रमः ।
अनर्थजा हि निर्दग्धपित्रादौ भवति स्मृतिः ॥
दृष्टान्तीकृत्य तामेव शून्यवादे समुत्थितः ।
भ्रमोपह्नवमात्रेण प्रतिहन्तुं न शक्यते ॥
अथास्ति का चित्परतः प्रामाण्यस्य निषेधिका ।
शून्यवादस्य या युक्तिः सैव वाच्या किमेतया ॥
तस्माद्यथार्थमस्याः संश्रयणं तद् निषिद्धमख्यातेः ।
संविद्विरोध एव प्रकटित इति धिक् प्रमादित्वम् ॥

तदुक्तम्——

कृतश्च शूलविध्वंसो न चानङ्गश्च सङ्गतः ।
आत्मा च लाघवं नीतस्तच्च कार्यं न साधितम् ॥

यत्पुनर्विपरीतख्यातौ पक्षत्रयमाशङ्क्य दूषितं तदपि न युक्तम्, अस्तु तावदयमेव पक्षः रजतमालम्बनं तदेव चास्यां प्रतीतौ परिस्फुरतीति ।

नन्वत्र चोदितम् असत्ख्यातिरेव सा भवेदिति नैतत्साधु, देशान्तरादौ रजतस्य विद्यमानत्वात्, असत्ख्यातिपक्षे हि—

तत्रैकान्तासतो ऽर्थस्य किं देशान्तरचिन्तया ।
किं कुर्मस्तादृशस्येव वस्तुनः ख्यातिदर्शनात् ॥
यस्तु देशान्तरे ऽप्यर्थो नास्ति कालान्तरे ऽपि वा ।
न तस्य ग्रहणं दृष्टं गगनेन्दीवरादिवत् ॥

अयमेव च द्वयोरसत्त्वयोर्विशेषः यदेकस्य ग्रहणं दृष्टमितरस्य न दृष्टमिति ।

ननूक्तं तत्रासतो ऽर्थस्य कथं ज्ञानजनकत्वमजनकस्य वा कथं प्रतिभासः उक्तमत्र सदृशपदार्थदर्शनोद्भूतस्मृत्युपस्थापितस्य रजतस्यात्र प्रतिभासनमिति, न चास्योपस्थानं पशोरिव रज्ज्वा संयम्य ढौकनम् अपि तु हृदये परिस्फुरतो ऽर्थस्य बहिरवभासनम्, न चैतावतेयमात्मख्यातिरसत्ख्यातिर्वेति वक्तव्यं विज्ञानाद्विच्छेदप्रतीतेः अत्यन्तासदर्थप्रतिभासाभावाच्चेति, अत एव पिहितस्वाकारा परिगृहीतपराकारा शुक्तिकैवात्र प्रतिभातीति भवतु पक्षः ।

ननूक्तं कृत्यासीतावर्तिकमिदं वेशभाषापरिवर्तनं कथं च रजतज्ञाने शुक्तिका ऽवभासितुमर्हति, श्रुतमिदं नाटकं न तु वयमत्रापहासपात्रम् , शुक्तिकेति वस्तुस्थितिरेषा कथ्यते पुरोऽवस्थितं धर्मिमात्रं भास्वररूपादिसादृश्योपजनितरजतविशेषस्मरणमत्र प्रतिभातीति ब्रूमः, यदेतत्पुरः किमपि वर्त्तते तद्रजतमित्यनुभवात् , वस्तुस्थित्या तु शुक्तिरेव सा त्रिकोणत्वादिविशेषग्रहणाभावाच्च निगूहितनिजाकारेत्युच्यते रजतविशेषस्मरणाच्च परिगृहीतरजताकारेति, एतच्च विषयेन्द्रियादिदोषप्रभवेषु शुक्तिकारजतावभासभास्करकिरणजलावगमजलदगन्धर्वनगरनिर्वर्णनरज्जुभुजगग्रहणरोहिणीरमणद्वयदर्शनशङ्खशर्करापीततिक्तताव्सायकेशकूर्चकालोकनादिविभ्रमेष्वभ्युपगम्यते मनोदोषनिबन्धनेषु तु मिथ्याप्रत्ययेषु निरालम्बनेषु स्मृत्युल्लिखितनिराकारः प्रकाशते इति,

यस्तु तृतीयः पक्षः अन्यदालम्बनमन्यश्च प्रतिभातीति कैश्चिदाश्रितः तत्रापि न सन्निहितस्यालम्बनत्वमुच्यते येन भूप्रदेशस्यापि तथात्वमाशङ्क्येत, नापि आलम्बनस्याजनकत्वं यच्चक्षुरादावपि प्रसज्येत, किं त्विदमित्यङ्गुल्या निर्दिश्यमानं कर्मतया यज्ज्ञानस्य जनकं तदालम्बनमित्युच्यमाने न कश्चिद्दोषः।

ननु केशोण्डूकज्ञाने किमालम्बनकारणम्, किं चित्तु तिमिरं रोमराजिरिव नयनधाम्नो मध्ये एवास्ते तेन द्विधा कृता नयनवृत्तिः द्वित्वेन चन्द्रमसं गृह्णाति, किं चित्तु तिमिरं तत्र विवरवदन्तराऽन्तरा तिष्ठति चक्षुषः तेन विरलप्रसृता नयनरश्मयः सूक्ष्माः सूर्यांशुभिरभिहन्यमानाः केशकूर्चकाकारा भवन्तीति तदेवालम्बनम् , अनुदिते ऽस्तमिते वा सवितरि केशोण्डूकप्रत्ययस्यानुत्पादात् ।

गन्धर्वनगरज्ञाने जलदाः पाण्डुरत्विषः ।
आलम्बनं गृहाट्टालप्राकाराकारधारिणः ॥

तस्माद्विपरीतख्यातौ पक्षत्रयमपि निरवद्यम् ।

यः पुनरितरेतरसङ्करः ख्यातीनामुदाहारि तत्रात्मख्यात्यसत्ख्याती अपवर्गाह्निके वयमपि विज्ञानाद्वैतमपाकरिष्यन्तः पराकरिष्याम इति किं तच्चिन्तया, विपरीतख्यातौ तु तत्साङ्कर्यं परिहृतम ।

यत्पुनरवादि सर्ववादिभिः स्मृतिप्रमोषो ऽभ्युपगत एव प्राभाकरैस्तु यशःपातमिति तत्र वाद्यन्तराणि तावद्यथा भवन्ति तथा भवन्तु वयं तु स्मृत्युपारू-

द्रजताद्याकारप्रतिभासमभिवदन्तो वाढं स्मृतिप्रमोषमभ्युपगतवन्तः, किं तु न तावत्येव विश्राम्यति मतिः, अपि तु रजताद्यनुभवो ऽपि संवेद्यते इति न स्मृति-प्रमोषमात्रे एव विरन्तव्यम् , अतो विपरीतख्यातिपक्ष एव निरवद्य इति स्थितम् ।

यस्तु बाधप्रकारः प्राग्विकल्पितः तत्र सहानवस्थानसंस्कारोच्छेदादिपक्षा अनभ्युपगमेनैव निरस्ता इत्यस्थाने कण्ठशोष आयुष्मता ऽनुभूतः, विषयापहा-रस्तावदस्तु बाधः विषयस्य च न प्रतिभातत्वमपह्रियते किन्तु प्रतिभात-स्यासत्त्वं ख्याप्यते इत्यपहारार्थः, असत्त्वमपि नेदानीमुपनतस्य ख्याप्यते येन दृष्टपूर्वद्रुघणभग्नकुम्भाभावप्रतिभासवद्बाधः स्यात् , न च तदानीमप्य-भावग्रहणे वस्तुनो द्व्यात्मकत्वमाशङ्कनीयं पूर्वावगताकारोपमर्दद्वारेण बाध-कप्रत्ययोत्पादात् , यन्मया तदा रजतमिति गृहीतं तद्रजतं न भवति अन्यदेव तद्वस्त्विति ।

ननु स्वकालनियतत्वाज् ज्ञानानां कथमुत्तरस्य ज्ञानस्य पूर्वज्ञानोत्पादका-लावच्छिन्नतद्विषयाभावग्रहणसामर्थ्यम् , किं कुर्मः तथा प्रत्ययोत्पादात् , न भग्नघटवदिदानीं तन्नास्तिता गृह्यते अपि तु तदैव तदसदिति प्रतीतिः, यथा च न वर्तमानैकनिष्ठा एव विषयप्रतीतयस्तथा क्षणभङ्गभङ्गे वक्ष्यामः,

अथ वा फलापहारो भवतु बाधः प्रमाणफलत्वं च हानादिबुद्धीनां प्रत्य-क्षलक्षणे वर्णितमिति तदपहरणात्प्रमाणं बाधितं भवत्येव, किं कुर्वता बाधकेन प्रमाणफलमपहृतमिति चेत् ।

गायता नृत्यता वा ऽपि जपता जुह्वता ऽपि वा ।
तच्चेत्काय कृतं तेन किमवान्तरकर्मणा ॥
तदभ्युपगमे वापि तत्किं विदधता कृतम् ।
तच्च किं कुर्वतेत्येवमवधिः को भविष्यति ॥

तदलममुनावान्तरप्रश्नेन सर्वत्र बाधकप्रत्ययोपजनने सति हानादिरूपं पूर्वप्रमाणफलं निवर्तते इति तेन तद्बाधितमुच्यते, समानासमानविषय-विकल्पो ऽपि न पेशलः एकस्मिन्विषये विरुद्धाकारग्राहिणोर्ज्ञानयोर्बाध्यबाध-कभावाभ्युपगमात् , चित्रादिप्रत्यये कथं न बाध इति चेत् पूर्वज्ञानोपमर्देनोत्त-रविज्ञानानुत्पादात् , अत एवैकत्रापि धर्मिणि बहूनां धर्माणामितरेतरानुपम-र्देन वेद्यमानानामस्त्येव समावेशः, पूर्वोपमर्देनेतरविज्ञानाजननाच्चैतदपि प्रत्यु-क्तं भवति ।

यदुक्तं पूर्वस्मिन् प्रत्यये प्राप्तप्रतिष्ठे सत्यागन्तुज्ञानमुत्तरं बाध्यतामिति, यतः पूर्वोपमर्देनैव तदुत्तरं ज्ञानमुदेति विषयसहायत्वात्प्रमाणान्तरानुगृह्यमा-णत्वाच्च उत्तरमेव ज्ञानं बाधकमिति युक्तम् , तस्मादस्ति ज्ञानानां बाध्यबाध-

कभावः स चायं बाधव्यवहारो विपरीतख्यातिपक्षे एव सामर्थ्यमस्खलितं दधातीति स एव ज्यायान् ।

### मीमांसकैकदेशिमतखण्डनम्—

अज्ञः को ऽपि नाम मीमांसकस्त्वाह, येयं शुक्तिकायां रजतप्रतीतिर्विपरीतख्यातिरिति तद्वादिनामभिमता सा तथा न भवतीति सत्यरजतप्रतीतिवदत्राप्यवभास्यरजतसद्भावात्, लौकिकालौकिकत्वे तु विशेषः, रजतज्ञानावभास्यं हि रजतमुच्यते तच्च किं चिद्व्यवहारप्रवर्त्तकं किं चिन्नेति, तत्र व्यवहारप्रवर्त्तकं लौकिकमुच्यते ततो ऽन्यदलौकिकमिति यच्च शुक्तिकाशकलमिति भवन्तो वदन्ति तदलौकिकं रजतं रजतज्ञानावभास्यत्वाद्रजतं तद्व्यवहाराप्रवृत्तेरलौकिकमिति ।

तदेतदपरामृष्टसंवेदनेतिवृत्तस्याभिनवपदार्थसर्गप्रजापतेरभिधानम् बाधकप्रत्ययेन तत्र रजताभावस्य ख्यापनात्, नेदं रजतमिति हि रजतं प्रतिषेधत्येव प्रत्ययो न विद्यमानरजतस्यालौकिकत्वमवद्योतयते इति ।

अथ नेदं लौकिकमिति व्याख्यायते हन्त वाक्यशेषः क्रियतां संयजत्रैरङ्गानीतिवत्, सो ऽयं श्रोत्रियः स्वशास्त्रवर्त्तनीमिहापि न तां त्यजति न तु तस्या अयमवसरः, अगृह्यमाणे तु रजताख्ये ऽन्यधर्मिणि कथं तद्धर्मत्वेन लौकिकत्वं गृह्यते, रजताभावग्रहणे त्वेष न दोषः भावतदभावयोः धर्मधर्मिभावाभावात्, स्मर्यमाणप्रतियोग्यवच्छिन्नो हि अभावो गृह्यते एव, तस्मादत्र नास्त्येव रजतं न पुनरलौकिकं तदस्ति, न च रजतज्ञानावभास्यत्वमात्रं रजतलक्षणमपि त्वबाधितरजतज्ञानगम्यत्वम् ।

अपि च लौकिकालौकिकप्रविभागः प्रतिभासनिबन्धनो वा स्याद्व्यवहारसदसद्भावनिबन्धनो वा, न तावत् प्रतिभासनिबन्धनः यथाप्रतीति भावात् क चिद्धि रजतं क चिच्च तदभावः प्रतीयते न तु लौकिकत्वमलौकिकत्वं वा ।

अथ व्यवहारप्रवृत्त्यप्रवृत्तिभ्यां लौकिकालौकिकत्वे व्यवस्थाप्येते तद्वक्तव्यं को ऽयं व्यवहारो नामेति, ज्ञानाभिधानस्वभावो हि व्यवहारः स तद्विषयो नास्तीत्युक्तम्, तदर्थक्रियानिर्वर्त्तनं व्यवहार इति चेत् तर्हि स्वप्ने परिरभ्यमाणाया याचितः कूटकार्षापणस्य च लौकिकत्वं प्राप्नोति, उत्पद्य नष्टे घटे अर्थक्रियाया निवृत्तेरलौकिकत्वं स्यात् ।

अपि च यः शुक्तिकायां रजतव्यवहारं न करोति स रजताभावमेव बुद्ध्वा न रजतस्य सतस्तस्यालौकिकताम्, यदि चेदमलौकिकं रजतं तत्किमर्थमिह तदर्थक्रियार्थं प्रवर्त्तते, अलौकिकं लौकिकत्वेन गृहीत्वेति चेत् सैवेयं तपस्विनी विपरीतख्यातिरायाता, तस्माद्विपरीतख्यातिद्वेषेण कृतमीदृशा अत्रापि लोकसिद्धेव प्रतीतिरनुगम्यताम् ।

न वा मीमांसका एते स्वभार्यामपि वेश्मतः ।
निःसारयितुमिच्छन्ति स्वतःप्रामाण्यतृष्णया ॥
न चैवमपि तत्सिद्धिबुद्धिद्वैविध्यदर्शनात् ।
संशये सति संवादसापेक्षत्वं तथैव तत् ॥
क्लेशेन तदमुना ऽपि स्वार्थस्तेषां प्रसिद्ध्यति न कश्चित् ।
यद्भवति चैव गत्या राजपथेनैव तद्भवतु ॥
नात्मख्यातिर्बाह्यतया ऽर्थप्रतिभासा-
न्नासत्ख्यातिर्न ह्यसतां धीविषयत्वम् ।
उक्तो ऽख्यातौ दूषणमार्गो विपरीत-
ख्यातिस्तस्मादश्रयणीया मतिमद्भिः ॥
स्थिते च तस्मिन्विपरीतवेदने
तदीयसाधर्म्यकृतो ऽस्ति संशयः ।
तदा च संवादमुखप्रतीक्षणा-
द्भजन्ति वेदाः परतःप्रमाणताम् ॥

## शब्दे परतःप्रमाण्यसमर्थनम्—

प्रत्यक्षादिप्रमाणानां तद्यथा ऽस्तु तथा ऽस्तु वा ।
शब्दस्य हि प्रमाणत्वं परतो मुक्तसंशयम् ॥

दृष्टे हि विषये प्रामाण्यनिश्चयमन्तरेणैव लघुपरिश्रमेषु कर्मसु प्रवृत्तिरिति तदुपयोगिप्रत्यक्षादिप्रमाणप्रामाण्यनिश्चये ऽदुरुपपादे को ऽभिनिवेशः, शब्दे पुनरदृष्टपुरुषार्थपथोपदेशिनि प्रमाण्यसनिश्चित्य महाप्रयत्ननिर्वर्त्यानि ज्योतिष्टोमादीनि न प्रेक्षापूर्वकारिणो यज्वानः प्रयुञ्जीरन् इत्यवश्यं निश्चेतव्यं तत्र प्रामाण्यम्, तच्च परत एवेति ब्रूमः, शब्दस्य वृद्धव्यवहाराधिगतसंबन्धोपकृतस्य सतः प्रतीतिजनकत्वं नाम रूपमवधृतम्, तत्तु नैसर्गिकशक्त्यात्मकसंबन्धमहिम्ना वा पुरुषघटितसमयसम्बन्धबलेन वेति विचारयिष्यामः, प्रकाशकत्वमात्रं तु दीपादेरिव तस्य रूपम्, यथा हि दीपः प्रकाशमानः शुचिमशुचिं वा यथासन्निहितमर्थमवद्योतयति तथा शब्दो ऽपि पुरुषेण प्रयोज्यमानः श्रवणपथमुपगतः सत्यो ऽनृतो वा समन्विते ऽसमन्विते वा सफले निष्फले वा सिद्धे कार्ये वा ऽर्थे प्रमितिमुपजनयतीति तावदेवास्य रूपम्, अयं तु दीपाच्छब्दस्य विशेषो यदेष सम्बन्धव्युत्पत्तिमपेक्षमाणः प्रमामुत्पादयतीति दीपस्तु तन्निरपेक्ष इति, तस्याः शब्दजनितायाः प्रमितेर्यथार्थेतरत्वं पुरुषाधीनं सम्यग्दर्शिनि शुचौ पुरुषे सति सत्यार्था सा भवति प्रतीतिरितरथा तु तद्विपरीतेति, तत्र यथा नैसर्गिकमर्थसंस्पर्शित्वं शब्दस्य न रूपमिति समर्थितम् एवमस्य स्वाभाविकं सत्यार्थत्वमपि न रूपम्,

एवमभ्युपगम्यमाने विप्रलम्भकवचसि विसंवाददर्शनं न भवेत्, तस्मात्पुरुषगुणदोषाधीनावेव शाब्दे प्रत्यये संवादविसंवादौ, न चेन्द्रियादाविव तत्र दुर्भणा गुणाः रागादयो दोषाः करुणादयो गुणाः पुरुषाणामतिप्रसिद्धा एव, पुरुषगुणा एव शब्दस्य गुणाः न स्वशरीरसंस्थाः चक्षुरादेरिवेति, तत्र यदि पुरुषगुणानां प्रामाण्यकारणता नेष्यते दोषाणामपि विप्लवहेतुता माभूत् ।

यत्तु दोषप्रशमनचरितार्था एव पुरुषगुणाः प्रामाण्यहेतवस्तु न भवन्तीत्यत्र शपथशरणा एव श्रोत्रियाः, न च बाधानुत्पत्तिमात्रेण वैदिक्याः प्रतीतेः प्रामाण्यं भवितुमर्हति 'पद्मलाक्षीलक्षमभिरमयेद् विद्याधरपदकाम' इत्यादावपि प्रामाण्यप्रसङ्गात्, उक्तं च केन चित्—

यथा हि स्वप्नदृष्टो ऽर्थः कश्चिद् द्वीपान्तरादिषु ।
असंवादविसंवादः श्रद्धातुं नैव शक्यते ॥
तथा चोदनया ऽप्यर्थं बोध्यमानमतीन्द्रियम् ।
असंवादविसंवादं न श्रद्दधति के चनेति ॥

तत्र स्वप्नज्ञाने हेतुः निद्रादिदोषो ऽस्तीति दुष्टकारणज्ञानादप्रामाण्यमिति चेत् लोलाक्षीलक्षवाक्ये किं वक्ष्यसि, प्रभवस्तस्य न ज्ञायते इति चेन्नतरामसौ वेदेऽपि त्वन्मते ज्ञायते इति को विशेषः, महाजनादिपरिग्रहो ऽस्य नास्तीति चेद् अन्वेषणीयं तर्हि प्रामाण्यकारणं न बुद्ध्युत्पादकत्वादेवौत्सर्गिकं प्रामाण्यमिति युक्तम् ।

साक्षाद्द्रष्टृनरोक्तत्वं शब्दे यावन्न निश्चितम् ।
बाधानुत्पत्तिमात्रेण न तावत्तत्प्रमाणता ॥

यदपि वेदे कारणदोषनिराकरणाय कथ्यते 'यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रया'(१) इति तदपि न साम्प्रतम्, असति वक्तरि प्रामाण्यहेतूनां गुणानामप्यभावेन तत्प्रामाण्यस्याप्यभावात्, न च वेदे वक्तुरभावः सुवचः, तथा ह्येतदेव तावद्विचारयामः किं वेदे वक्ता विद्यते न वेति ।

---

(१) श्लोकवार्तिके सू० २ श्लो० ६३ । 'तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसंभवात्' इति कारिकापूर्वार्द्धम् । ननु वक्तृगुणा वक्तर्येव दोषानुत्सारयन्ति कथं तैर्निरस्तैः शब्दे निर्दुष्टत्वमत आह—तद्गुणैरिति । वक्तृदोषा एव शब्दं दूषयन्ति इत्युक्तं ते चेद् गुणैरुत्सारिता दोषास्तदा कः प्रसङ्गः शब्दे दोषाणाम् न हि वक्तर्यनाश्रितानामेव दोषाणां शब्दे संक्रान्तिः संभवति इति । वक्तुरभावादेव निराश्रया दोषा न नित्ये वेदवाक्ये भवितुमुत्सहन्त इत्याह—यद्वेति—दोषाभावाच्च वेदानां स्वतः प्रामाण्यं विहन्यत इति भावः ।

ननु च वेदे प्रमाणान्तरसंस्पर्शरहितविचित्रकर्मफलगतसाध्यसाधनभावोपदेशिनि कथं तदर्थसाक्षाद्दर्शी पुरुष उपदेष्टा भवेत्, उच्यते—

वेदस्य पुरुषः कर्त्ता न हि यादृशतादृशः।
किं तु त्रैलोक्यनिर्माणनिपुणः परमेश्वरः॥
स देवः परमो ज्ञाता नित्यानन्दः कृपान्वितः।
क्लेशकर्मविपाकादिपरामर्शविवर्जितः॥

## ईश्वराङ्गीकारे पूर्वपक्षः—

अत्राह किं ब्रूषे त्रैलोक्यनिर्माणनिपुण इति अहो तव सरलमतित्वम्, न हि तथाविधपुरुषसद्भावे किंचन प्रमाणमस्ति।

तथा हीश्वरसद्भावो न प्रत्यक्षप्रमाणकः।
न ह्यसावक्षविज्ञाने रूपादिरिव भासते॥
न च मानसविज्ञानसंवेद्यो ऽयं सुखादिवत्।
योगिनामप्रसिद्धत्वान्न तत्प्रत्यक्षगोचरः॥
प्रत्यक्षप्रतिषेधेन तत्पूर्वकमपाकृतम्।
अनुमानमविज्ञाते तस्मिन् व्याप्त्यनुपग्रहात्॥
न च सामान्यतोदृष्टं लिङ्गमस्यास्ति किं चन।
क्षित्यादीनां तु कार्यत्वमसिद्धं सुधियः प्रति॥
शैलादिसन्निवेशो ऽपि नैष कर्त्रनुमापकः।
कर्त्रपूर्वककुम्भादिसन्निवेशविलक्षणः॥
दृष्टः कर्त्रविनाभावी सन्निवेशो हि यादृशः॥
तादृङ् नगादौ नास्तीति कार्यत्ववदसिद्धता।
सिद्धत्वेपि न सिद्धत्वमनैकान्त्यात्तृणादिभिः॥
अकृष्टजातैः कर्त्तारमन्तरेणाप्तजन्मभिः।
तेषामुत्पत्तिसमये प्रत्यक्षत्वं न लक्ष्यते॥
कर्त्तुर्दृश्यत्वमप्येवमभावो ऽनुपलब्धितः।
न च क्षितिजलप्रायदृष्टहेत्वतिरेकिणः॥
कस्यापि कल्पनं तेषु युज्यते ऽतिप्रसङ्गतः॥
तेन कर्तुरभावे ऽपि सन्निवेशादिदर्शनात्।
अनैकान्तिकता हेतोर्विप्रत्वे पुरुषत्ववत्।
किं च व्याप्त्यनुसारेण कल्प्यमानः प्रसिद्ध्यति॥
कुलालतुल्यः कर्त्तेति स्याद्विशेषविरुद्धता।

व्यापारवानसर्वज्ञः शरीरी क्लेशसंकुलः ।
घटस्य यादृशः कर्त्ता तादृगेव भवेद् भुवः ।
विशेषसाध्यतायां वा साध्यहीनं निदर्शनम् ॥
कर्त्तृसामान्यसिद्धौ तु विशेषावगतिः कुतः ।

अपि च, सशरीरो वा जगन्ति रचयेदीश्वरः, शरीररहितो वा तदीयं शरीरं कार्यं नित्यं वा भवेत् सर्वथा ऽनुपपत्तिः—

अशरीरस्य कर्तृत्वं दृश्यते नहि कस्य चित् ।
देहो ऽप्युत्पत्तिमानस्य देहत्वाच्चैत्रदेहवत् ।

कार्यमपीश्वरशरीरं तत्कर्तृकं वा, स्यादीश्वरान्तरकर्तृकं वा तत्र—

स्वयं निजशरीरस्य निर्माणमिति साहसम् ।
कर्त्रन्तरकृते तस्मिन्नीश्वरानन्त्यमापतेत् ॥

भवतु को दोष इति चेत् प्रमाणाभाव एव दोषः, एकस्यापि तावदीश्वरस्य साधने पर्याकुलतां गताः किं पुनरनन्तानाम् , किं च व्यापारेण वा कुलालादिरिव कार्याणि सृजेदीश्वर इच्छामात्रेण वा द्वयमपि दुर्घटम् ,

व्यापारेण जगत्सृष्टिः कुतो युगशतैरपि ।
तदिच्छां चानुवर्त्तन्ते न जडाः परमाणवः ॥

अपि च किं ? किमपि प्रयोजनमनुसंधाय जगत्सर्गे प्रवर्त्तते प्रजापतिः एवमेव वा, निष्प्रयोजनायां प्रवृत्तावप्रेक्षापूर्वकारित्वादुन्मत्ततुल्यो ऽसौ भवेत , पूर्वो ऽपि नास्ति पक्षः ।

अवाप्तसर्वानन्दस्य रागादिरहितात्मनः ।
जगदारभमाणस्य न विद्मः किं प्रयोजनम्

अनुकम्पया प्रवर्त्तत इति चेद् नैवम्—

सर्गात् पूर्वं हि निःशेषक्लेशसंस्पर्शवर्जिताः ।
नास्य मुक्ता इवात्मानो भवन्ति करुणाऽस्पदम् ॥

परमकारुणिकानामपि दुःसहदुःखदहनदन्दह्यमानमनसो जन्तूनवलोकयतामुदेति दया न पुनरपवर्गदशावदेषा दुःखशून्यानिति ।

करुणाऽमृतसंसिक्तहृदयो वा जगत्सृजन् ।
कथं सृजति दुर्वारदुःखप्राग्भारदारुणम् ॥

अथ केवलं सुखोपभोगप्रायं जगत्स्रष्टुमेव न जानाति स्रष्टमपि वा न चिरमवतिष्ठते इत्युच्यते तदप्यचारु, निरतिशयस्वातन्त्र्यसीमनि वर्त्तमानस्य स्वेच्छानुवर्त्तिसकलपदार्थसार्थस्थितेः परमेश्वरस्य किमसाध्यं नाम भवेत , नानाऽऽत्मगतशुभाशुभकर्मकलापापेक्षः स्रष्टा प्रजापतिरिति चेत् कर्माण्येव हि तर्हि सृजन्तु जगन्ति किं प्रजापतिना, अथाचेतनानां चेतनानधिष्ठितानां स्रष्टृ-

त्वमघटमानमिति तेषामधिष्ठाता चेतनः कल्प्यते इति चेन्न, तदाश्रयाणामात्मनामेव चेतनत्वात् त एवाधिष्ठातारो भविष्यन्ति किमधिष्ठात्रन्तरेणेश्वरेण, तस्यापि तादृशा परकीयकर्मान्तरापेक्षासङ्कोचितस्वातन्त्र्येण किमैश्वर्येण कार्यम्, राज्यमिव मन्त्रिपरवशमैश्वर्यं क्वोपयुज्यते तादृग् यत्रापरनिरपेक्षं रूच्यैव न रच्यते ऽभिमतम्, अन्येनाप्युक्तम्—

किमीश्वरतयेश्वरो यदि न वर्त्तते स्वेच्छया।
न हि प्रभवतां क्रियाविधिषु हेतुरन्विष्यते॥ इति।

अथ क्रीडार्थो जगत्सर्गे भगवतः प्रवृत्तिरीदृशा च शुभाशुभरूपेण जगता सृष्टेन क्रीडति परमेश्वर इत्युच्यते तर्हि क्रीडासाध्यसुखरहितत्वेन सृष्टेः पूर्वमवाप्तसकलानन्दत्वं नाम तस्य रूपमवहीयते।

न च क्रीडापि निःशेषजनतातङ्ककारिणी।
आयासबहुला चेयं कर्तुं युक्ता महात्मनः॥

तस्मान्न जगतां नाथ ईश्वरः स्रष्टा संहर्ता ऽपि भवति।

न ह्यस्य ध्रियमाणेषु पूर्यन्ते जन्तुकर्मसु।
सकृत् समस्तत्रैलोक्यनिर्मूलनमनोरथाः॥
कर्मोपरमपक्षे तु पुनः सृष्टिर्न युज्यते।
न कर्मनिरपेक्षो हि सर्गवैचित्र्यसंभवः॥

अथ ब्राह्मेण मानेन संवत्सरशतनिष्ठामधितिष्ठति परमेष्ठिनि महेश्वरस्य संजिहीर्षा जायते तया तिरोहितस्वफलारम्भशक्तीनि कर्माणि संभवन्तीति संपद्यते सकलभुवनप्रलयः पुनश्च तावत्येव रात्रिप्राये काले व्यतीते सिसृक्षा भवति भगवतः तया ऽभिव्यक्तशक्तीनि कर्माणि कार्यमारप्स्यन्ते इति तदप्ययुक्तम्—

उद्भवाभिभवौ तेषां स्यातां चेदीश्वरेच्छया।
तर्हि सैवास्तु जगतां सर्गसंहारकारणम्॥

किं कर्मभिः, एवमस्त्विति चेद् न, ईश्वरेच्छावशित्वपक्षे हि त्रयो दुरतिक्रमाः दोषाः तस्यैव तावन्महात्मनो निष्करुणत्वमकारणमेव दारुणसर्गकारिणः, तथा वैदिकीनां विधिनिषेधचोदनानामानर्थक्यम् ईश्वरेच्छात एव शुभाशुभफलोपभोगसंभवात्, अनिर्मोक्षप्रसङ्गश्च मुक्ता अपि प्रलयसमये इव जीवाः पुनरीश्वरेच्छया संसरेयुः, तस्मान्नेश्वराधीनो जगतां सर्गः संहारो वा।

इत्यनन्तरगीतेन नयेनेश्वरसाधने।
नानुमानस्य सामर्थ्यमुपमाने तु का कथा॥
आगमस्यापि नित्यस्य तत्परत्वमसांप्रतम्।
तत्प्रणीते तु विस्रम्भः कथं भवतु मादृशाम्॥
किं चागमस्य प्रामाण्यं तत्प्रणीतत्वहेतुकम्।

तत्प्रामाण्याच्च तत्सिद्धिरित्योन्याश्रयं भवेत् ॥
अन्यथाऽनुपपत्त्या तु न शक्यो लब्धुमीश्वरः ।
न हि तद् दृश्यते कार्यं तं विना यन्न सिद्धयति ॥

तस्मात्सर्वसद्विषयप्रामाणानवगम्यमानस्वरूपत्वादभाव एवेश्वरस्येति सिद्धम्।

न च प्रसिद्धिमात्रेण युक्तमेतस्य कल्पनम् ।
निर्मूलत्वात्तथा चोक्तं प्रसिद्धिर्वटयक्षवत् ॥
अत एव निरीक्ष्य दुर्घटं जगतो जन्मविनाशडम्बरम् ।
न कदा चिदनीदृशं जगत्कथितं नीतिरहस्यवेदिभिः ॥

## ईश्वरसत्त्वसमर्थनम् ।

अत्र वदामः, यत्तावदिदमगादि नगादिनिर्माणनिपुणपुरुषपरिच्छेददक्षं प्रत्यक्षं न भवतीति तदेवमेव, प्रत्यक्षपूर्वकमनुमानमपि तेनैव पथा प्रतिष्ठितमिति तदप्यास्ताम् ।

सामान्यतोदृष्टं तु लिङ्गमीश्वरसत्तायामिदं ब्रूमहे पृथिव्यादि कार्यं धर्मि तदुत्पत्तिप्रकारप्रयोजनाद्यभिज्ञकर्तृपूर्वकमिति साध्यो धर्मः कार्यत्वाद् घटादिवत्।

## ईश्वरानुमानानुपपत्तिपरिहारौ ।

ननु कार्यत्वमसिद्धमित्युक्तम्, क एवमाचष्टे चार्वाकः शाक्यो मीमांसको वा।

चार्वाकस्तावद्वेदरचनाया रचनान्तरविलक्षणाया अपि कार्यत्वमभ्युपगच्छति यः स कथं पृथ्व्यादिरचनायाः कार्यत्वमपह्नुवीत ।

मीमांसको ऽपि न कार्यत्वमपह्नोतुमर्हति यत एवमाह येषामप्यनवगतोत्पत्तीनां रूपमुपलभ्यते तन्तुव्यतिषक्तजनितोऽयं पटस्तद्व्यतिषङ्गविमोचनात्तन्तुविनाशाद्वा नङ्क्ष्यतीति कल्प्यते इति एवमवयवसंयोगनिर्वर्त्यमानवपुषः क्षितिधरादेरपि नाशसम्प्रत्ययः सम्भवत्येव, दृश्यते च क्व चिद्विनाशप्रतीतिः प्रावृषेण्यजलधरधारासारनिर्लुठित एव पर्वतैकदेशे पर्वतस्य खण्डः पतित इति, वस्तुगतयोश्च कार्यत्वविनाशित्वयोः समव्याप्तिकता वार्त्तिककृता ऽप्युक्तैव—

तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसम्मतौ ।
तत्रापि व्याप्यतैव स्यादङ्गं न व्यापिता मितेरिति(१) ॥

---

(१) श्लोकवार्तिके अनुमानग्रन्थ श्लो० ९ । अयमर्थः—यत्र हि न्यूनाधिकत्वेन व्याप्यव्यापकभावोऽसंकीर्णः यथा गोत्वविषाणित्वयोः तत्र व्याप्यमेव गोत्वं विषाणित्वमनुमापयति न तु व्यापिका विषाणिता गोत्वम्, अतः समोदाहरणेऽपि व्याप्यतैव मितेरनुमानस्याङ्गं न व्यापकतेति । इति न्यायरत्नाकरे पार्थसारथिमिश्राः ।

वदता, तस्माद्विनाशित्वेनापि कार्यत्वानुमानात्तन्मते ऽपि न कार्यत्वमसिद्धम्।

शाक्योऽपि कार्यत्वस्य कथमसिद्धतामभिदधीत येन नित्यो नाम पदार्थः प्रणयकेलिष्वपि न विषह्यते, तस्मात्सर्ववादिभिरप्रणोद्यं पृथिव्यादेः कार्यत्वम्, अथ वा सन्निवेशविशिष्टत्वमेव हेतुमभिदध्महे यस्मिन् प्रत्यक्षत उपलभ्यमाने सर्वोपलापलम्पटा अपि न केचन विप्रतिपत्तुमुत्सहन्ते, तस्मान्नासिद्धो हेतुः।

ननु कर्त्रविनाभावितया यथाविधस्य सन्निवेशस्य शरावादिषु दर्शनं तादृशमेव सन्निवेशमुपलभ्य क्वचिदनुपलभ्यमानकर्तृके कलशादौ कर्त्रनुमानमिति युक्तम्, अयं त्वन्य एव कलशादिसन्निवेशात्पर्वतादिसन्निवेशः, नात्र सन्निवेशसामान्यं किंचिदुपलभन्ते लौकिकाः, सन्निवेशशब्दमेव साधारणं प्रयुञ्जते, न च वस्तुनोरत्यन्तभेदे सति शब्दसाधारणतामात्रेण तदनुमानमुपपद्यते, न हि पाण्डुतामात्रसाधारणत्वेन धूमादिवन्मुकुलरजोराशेरपि कृशानुरनुमातुं शक्यते इति तदुक्तम्—

सिद्धं यादृगधिष्ठातृ भावाभावानुवृत्तिमत्।
सन्निवेशादि तत्तस्माद्युक्तं यदनुमीयते॥
वस्तुभेदप्रसिद्धस्य शब्दसाम्यादभेदिनः।
न युक्ता ऽनुमितिः पाण्डुद्रव्यादिव हुताशने॥ इति।

उच्यते, यादृगिति न बुद्ध्यामहे धूमो हि महानसे कुम्भदासीफूत्कारमारुतसन्धुक्ष्यमाणमन्दज्वलनजन्मा कृशप्रायप्रकृतिरुपलब्धः स यदि पर्वते प्रबलसमीरणोल्लसितहुतवहप्लुष्यमाणमहामहीरुहस्कन्धेन्धनप्रभवो बहुलबहुलः खमण्डलमखिलमाक्रामन्नुपलभ्यते तत्किमिदानीमनलप्रमितिं मा कार्षीत्, अथ विशेषरहितं धूममात्रमग्निमात्रेण व्याप्तमवगतमिति ततस्तदनुमानम् इहापि सन्निवेशमात्रं कर्तृमात्रेण व्याप्तमिति ततो ऽपि तदनुमीयताम्।

ननु सन्निवेशशब्दसाधारण्यमात्रमत्र न वस्तुसामान्यं किञ्चिदस्ति भिन्नो धूमेऽपि भवद्दर्शने किं वस्तुसामान्यमस्ति, मा भूद्वस्तुसामान्यमाकाशकालादिव्यावृत्तिरूपं तु संव्यवहारकारणमस्त्येव, हन्त तर्हि प्रकृते ऽपि असन्निवेशव्यावृत्तिरूपं भवतु सामान्यमाकाशकालादिविलक्षणरूपत्वात् पृथिव्यादेः।

ननु तत्र धूमो धूम इत्यनुवृत्तविकल्पबलेन कल्पितमपोहस्वभावं सामान्यमभ्युपगतम्, इहापि सन्निवेशविकल्पानुवृत्तेः त्वत्कल्पितमपोहरूपमेव सामान्यमिष्यताम्, अपि च सकर्तृकत्वाभिमतेष्वपि संस्थानेषु न सर्वात्मना तुल्यत्वं प्रतीयते, न हि घटसंस्थानं पटसंस्थानं चतुःशालसंस्थानं च सुसदृशमिति संस्थानसामान्यं तु पर्वतादावपि विद्यते एवेति सर्वथा यादृगित्यवाचको ग्रन्थः।

यदपि व्यभिचारोद्भावनमकृष्टजातैः स्थावरादिभिरकारि तदपि न चारु, तेषां पक्षीकृतत्वात् पक्षेण च व्यभिचारचोदनायां सर्वानुमानोच्छेदप्रसङ्गः।

ननु च पृथिव्यादेरुत्पत्तिकालस्य परोक्षत्वात्कर्त्ता न दृश्यते इति तदनुपलब्ध्या तदसत्त्वनिश्चयानुपपत्तेः कामं संशयो ऽस्तु, वनस्पतिप्रभृतीनां तु प्रसवकालमध्यत्वे न वयमेव पश्यामः, न च यत्नतो ऽप्यन्वेषमाणाः कर्त्तारमेषामुपलभामहे, तस्मादसौ दृश्यानुपलब्धेर्नास्त्येवेत्यवगच्छामः, अपि च येन येन वयं व्यभिचारमुद्भावयिष्यामः तं तं चेत्पक्षीकरिष्यति भवान्सुतरामनुमानच्छेदः सव्यभिचाराणामप्येवमनुमानत्वानपायात्,

उच्यते, स्थावराणामुत्पत्तिप्रत्यक्षत्वे ऽपि कर्त्तुरदृश्यत्वमेवाशरीरत्वनिश्चयात्, अशरीरस्य तर्हि तदुत्पत्तावव्याप्रियमाणत्वात्कर्तृत्वमपि कथमिति चेद् एतदग्रतो निर्णेष्यते, अदृश्यस्य च कर्तुरनुपलब्धितो नास्तित्वनिश्चयानुपपत्तेः नाकृष्टजातवनस्पतीनामकर्तृकत्वमिति विपक्षता।

यत्तूक्तं परिदृश्यमानक्षितिसलिलादिकारणकार्यत्वात्स्थावराणां किमदृश्यमानकर्तृकल्पनयेति चेत् तदपेशलम्, परलोकवादिभिरदृश्यमानानां कर्मणामपि कारणत्वाभ्युपगमात्, बार्हस्पत्यानां तु तत्समर्थनमेव समाधिः,

अथ जगद्वैचित्र्यं कर्मव्यतिरेकेण न घटते इति कर्मणामदृश्यमानानामपि कारणत्वं कल्प्यते तत्र यद्येवमचेतनेभ्यः कारकेभ्यश्चेतनानधिष्ठितेभ्यः कार्योत्पादानुपपत्तेः कर्त्ता ऽपि चेतनस्तेषामधिष्ठाता कल्प्यताम्, तस्मात्स्थावराणामकर्तृकत्वाभावान्न विपक्षता इति न तैर्व्यभिचारः।

यदप्युक्तम्, येन येन व्यभिचार उद्भाव्यते स चेत्पक्षेन्तर्भावयिष्यते क इदानीमनुमानस्य नियम इत्येतदपि न साधु, यदि हि भवान्निश्चिते विपक्षे वृत्तिमुपदर्शयेत्कस्तं पक्षेऽन्तर्भावयेत्, न हि विप्रत्वे पुंस्त्वस्य नित्यतायां वा प्रमेयत्वस्य व्यभिचारे चाद्यमाने वेधसा ऽपि विपक्षः पक्षीकर्तुं शक्यः, वादीच्छया वस्तुव्यवस्थाया अभावात्, इह तु स्थावरादौ कर्त्रभावनिश्चयो नास्तीत्युक्तम्।

ननु स्थावरेषु पक्षीकृतेष्वपि व्यभिचारो न निवर्त्तते एव न हि सपक्षविपक्षव्यतिरेकेण तात्त्विकः पक्षो नाम कश्चिदस्ति वस्तुनो द्वैरूप्यानुपपत्तेः, वस्तुस्थित्या सकर्तृकाश्चेद्वनस्पतिप्रभृतयः सपक्षा एव ते न चेत्तर्हि विपक्षा एव न राश्यन्तरं समस्तीति।

उच्यते, पक्षाभावे सपक्षविपक्षवाचोयुक्तिरेव तावत्किमपेक्षा पक्षानुकूलो हि सपक्ष उच्यते तत्प्रतिकूलश्च विपक्ष इति।

यद्येवं वक्तव्यं तर्हि को ऽयं पक्षो नामेति--

साध्यधर्मान्वितत्वेन द्वाभ्यामप्यवधारितः।
सपक्षस्तदभावेन निश्चितस्य विपक्षता॥

विमतो यत्र तु तयोस्तं पक्षं सम्प्रचक्ष्महे।
वस्तुनो द्व्यात्मकत्वं तु नानुमन्यामहे वयम् ॥
वादिबुद्ध्यनुसारेण स्थितिः पक्षस्य यद्यपि।
तथा ऽपि व्यवहारो ऽस्ति वस्तुनस्तन्निबन्धनः ॥

संदिग्धे हि न्यायः प्रवर्त्तते नानुपलब्धे न निर्णीते इत्युक्तमेतत्। संदिह्यमान एव चार्थः पक्ष उच्यते किं चित्कालं तस्य पक्षत्वं यावन्निर्णयो नोत्पन्नः, तदुत्पादे तु नूनं सपक्षविपक्षयोरन्यतरत्रानुप्रवेदयत्यसौ, अतश्च पक्षावस्थायां तेन व्यभिचारोद्भावनमसमीचीनम्,

ननु निश्चितविपक्षवृत्तिरिव संदिग्धविपक्षवृत्तिरपि न हेतुरेव तदेवं वीरुदादिषु संदिग्धे ऽपि कर्त्तरि सन्निवेशस्य दर्शनाद् अहेतुत्वात्, नैतत्सारम्, सदसत्पावकतया पर्वते संदिग्धे विपक्षे वर्त्तमानस्य धूमस्याहेतुत्वप्रसङ्गात्, सर्वएव च साध्यांशसंशयाद्विपक्षा एव जाता इति पक्षवृत्तयो हेतव इदानीं विपक्षगामिनो भवेयुरित्यनुमानोच्छेदः।

अथ पक्षीकृते ऽपि धर्मिणि सदसत्साध्यधर्मतया सन्दिग्धे वर्त्तमानो धूमादिरन्यत्र व्याप्तिनिश्चयाद् गमक इष्यते तर्हि सदसत्कर्तृकतया संदिग्धे ऽपि वसुंधरावनस्पत्यादौ वर्त्तमानं कार्यत्वमन्यत्र व्याप्तिनिश्चयाद् गमकमिष्यताम्, विशेषो वा वक्तव्यः।

अन्ये मन्यन्ते किमकृष्टजातस्थावरादिव्यभिचारस्थानान्वेषणेन पृथिव्यादिभिरेवात्र व्यभिचारः, अस्य व्याप्तिग्रहणस्य प्रतीघातात्, व्याप्तिर्हि गृह्यमाणा सकलसपक्षविपक्षक्रोडीकारेण गृह्यते, इत्थं च तस्यां गृह्यमाणायामेव यद्यत् सन्निवेशविशिष्टं तत्तद्बुद्धिमत्कर्त्तृकमित्यस्मिन्नेवावसरे सन्निवेशवन्तो ऽपि कर्त्तृशून्यतया शैलादयश्चेतसि स्फुरन्ति, यथा कृतकत्वेन वह्नेरनुष्णताऽनुमाने यद्यत्कृतकं तत्तदनुष्णमिति व्याप्तिपरिच्छेदवेलायामेव वह्निरुष्णो ऽकृतक इति हृदयपथमवतरति, तत्र हतिव्याप्तौ गृह्यमाणायां ततो हेतोः षण्ढादिव पुत्रजननमघटमानमेव वन्ध्यानुमानमिति।

तदेतदनुपपन्नम्--विशेषोल्लेखरहितसामान्यमात्रप्रतिष्ठितस्य व्याप्तिपरिच्छेदस्यानुमानलक्षणे निर्णीतत्वात्, अग्न्यनुष्णताऽनुमाने हि न व्याप्तिग्रहणप्रतिघातादप्रामाण्यमपि तु प्रत्यक्षविरोधादित्युक्तमेतत, अपि चायं पृथिव्यादौ कर्त्रनुमाननिरासप्रकारः शब्दाद्युपलब्धयः करणपूर्विकाः क्रियात्वाच् छिदिक्रियावदित्यत्र श्रोत्रादिकरणानुमाने ऽपि समानः, प्रतिबन्धावधारणवेलायामेव करणशून्यानां शब्दाद्युपलब्धिक्रियाणामवधारणात्ताभिरेव व्यभिचारात्पक्षेण च पृथिव्यादिना व्यभिचारचोदनमत्यन्तमलौकिकम्--

ननु वस्तुस्थित्या पर्वतादयो ऽपि विपक्षा एव त्वया तु तेषां पक्ष इति नाम

कृतं न च त्वदिच्छया वस्तुस्थितिर्विपरिवर्तते ।

नन्वेवं शब्दाद्युपलब्धयो ऽपि वस्तुस्थित्या विपक्षा एव तासामपि पक्ष इति नामकरणमेव स्यात् , न तासां करणभावनिश्चयानुत्पादान्न विपक्षत्वम् , पर्वतादावपि कर्त्रभावनिश्चयानुत्पादान्न विपक्षत्वम्, तेषु कर्त्ता नोपलभ्यते इति चेच् शब्दाद्युपलब्धिकारणमपि नोपलभ्यते एव, कारणमदृश्यमानत्वादेव नोपलभ्यते न नास्तित्वादिति चेत् कर्त्ता ऽप्यदृश्यत्वादेव नोपलभ्यते न नास्तित्वात् , अनुमानात्करणमुपलभ्यते तद्व्यतिरेकेण क्रियाऽनुपपत्तेरिति चेत् कर्त्ता ऽप्यनुमानादुपलप्स्यते कर्त्तारमन्तरेण कार्यानुपपत्तेः ।

तेनानुमानगम्यत्वान्न कर्तुर्नास्तिताग्रहः ।
तदभावाद्विपक्षत्वं क्षित्यादेरपि दुर्भणम् ॥
लिङ्गात्पूर्वं तु सन्देहो दहने ऽपि न वार्यते ।
तथा सति प्रपद्येत धूमो ऽप्यननुमानताम् ॥
अथास्य लिङ्गाभासत्वं क्षित्यादौ कर्त्रदर्शनात् ।
धूमे ऽपि लिङ्गाभासत्वं तत्र देशे ऽग्न्यदर्शनात् ॥
ननु तं देशमासाद्य गृह्यते धूमलाञ्छनः ।
अनयैव धिया साधो चरस्व शरदां शतम् ॥
यत्पश्चाद्दर्शनं तेन किं लिङ्गस्य प्रमाणता ।
अनर्थित्वाददृष्टे वा कृशानौ किं करिष्यसि ॥

तस्मात्सर्वथा नायमनैकान्तिको हेतुः ।

यदपि विशेषविरुद्धत्वमस्य प्रतिपादितं तदप्यसमीक्षिताभिधानम् , विशेषविरुद्धस्य हेत्वाभासस्याभावात् , अभ्युपगमे वा सर्वानुमानोच्छेदप्रसङ्गात् , श्रोत्राद्यनुमाने ऽपि यथोदाहृते शक्यमेवमभिधातुम् , यादृगेव लवनक्रियायां दात्रादि करणं काठिन्यादिधर्मकमवगतं तादृगेव श्रोत्रादि स्यात्तद्विलक्षणकरणसाध्यतायां तु साध्यविकलो दृष्टान्तः, छेदनादिक्रियाणामतीन्द्रियकरणकार्यत्वादर्शनादिति ।

अथ क्रियामात्रं करणमात्रेण व्याप्तमवगतमिति तावन्मात्रमनुमापयति तदिहापि सन्निवेशमात्रमधिष्ठातृमात्रेण व्याप्तमुपलब्धमिति तावन्मात्रमेवानुमापयतु विशेषाणां तु न तल्लिङ्गमस्ति यन्न बाधकम्, अनित्यः, शब्दः कृतकत्वादित्ययमपि श्रावणत्वादि शब्दस्य विशेषजातं बाधतएव, धूमो ऽपि पर्वताग्निविशेषान् कांश्चिन्महानसाग्नावदृष्टानपहन्त्येव, तस्माद्यथानिर्दिष्टसाध्यविपर्ययसाधनमेव विरुद्धो हेतुर्न हि विशेषविपर्ययावहः, प्रकृतहेतुश्च साध्यविपर्ययस्याकर्तृपूर्वकस्य न साधकः अश्वो ऽयं विषाणित्वादितिवत्, तस्मान्न विरुद्धः, नापि कालात्ययापदिष्टः प्रत्यक्षागमयोर्बाधकयोरदर्शनात्, प्रत्युतागममनुग्राहकमिहो-

दाहरिष्यामः, नापि सत्प्रतिपक्षोऽयं हेतुः संशयबीजस्य विशेषाग्रहणादेरिह हेतुत्वेनानुपादानात्, नाप्ययमप्रयोजको हेतुः यथा परमाणूनामनित्यत्वे साध्ये मूर्त्तत्वमभिधास्यते न हि मूर्त्तत्वप्रयुक्तमनित्यत्वमिह तु कार्यत्वप्रयुक्तमेव सकर्तृकत्वं तत्र तत्रोपलब्धमित्यत एवानुमानविरोधस्येष्टविघातकृतश्च न कश्चिदिहावसरः, प्रयोजके हेतौ प्रयुक्ते तथाविधपांसुप्रक्षेपप्रयोगानवकाशात् तस्मात्परोदीरिताशेषदोषविकलकार्यानुमानमहिम्ना नूनमीश्वरः कल्पनीयः सकललोकसाक्षिकमनुमानप्रामाण्यमपीक्षणीयम्, अनुमानप्रामाण्यरक्षणे च कृत एव परिकरबन्धः प्रागिति सिद्ध एवेश्वरः, अन्यदपि तदनुमानमन्यैरुक्तम्, महाभूतादिव्यक्तं चेतनाधिष्ठितं सत्सुखदुःखे जनयति रूपादिमत्त्वात्तूर्यादिवत्, तथा पृथिव्यादीनि भूतानि चेतनाधिष्ठितानि सन्ति धारणादिक्रियां कुर्वन्ति युग्यादिवदिति, अत्रापि दोषाः पूर्ववदेव परिहर्त्तव्याः ।

यत्पुनरवादि 'कर्तृसामान्यसिद्धौ वा विशेषावगतिः कुत' इति तत्र केचिदागमाद्विशेषप्रतिपत्तिमाहुः—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एक(१)इति ।

तथा

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति सर्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति(२) ॥

श्रुतौ पठ्यते, ततः सर्वस्य कर्त्ता सर्वज्ञ ईश्वरो ज्ञाप्यते, न च कार्ये एवार्थे वेदः प्रमाणमिति मन्त्रार्थवादानामतत्परत्वमभिधातुमुचितं कार्ये इव सिद्धेऽप्यर्थे वेदप्रामाण्यस्य वक्ष्यमाणत्वात्, न चेतरेतराश्रयम् आगमैकशरणत्वाभावादीश्वरसिद्धेः ।

अन्ये त्वन्वयव्यतिरेकिहेतुमूलकेवलव्यतिरेकिबलेन विशेषसिद्धिमभिदधति, देहादिव्यतिरिक्तात्मकल्पनमिव सुखदुःखादिगतेन कार्यत्वेन वर्णयिष्यते पृथिव्यादिकार्यमस्मदादिविलक्षणसर्वज्ञैककर्तृकम् अस्मदादिषु बाधकोत्पत्तौ सत्यां कार्यत्वादिति ।

अपरे पक्षधर्मताबलादेव विशेषलाभमभ्युपगच्छन्ति न हीदृशं परिदृश्यमानमनेकरूपमपरिमितमनन्तप्राणिगतविचित्रसुखदुःखसाधनं भुवनादि कार्यमनतिशयेन पुंसा कर्तुं शक्यमिति, यथा चन्दनधूममितरधूमविसदृशमवलोक्य चन्दनएव वह्निरनुमीयते तथा विलक्षणात्कार्याद्विलक्षण एव कर्त्ताऽनुमा-

---

(१) नारायणोपनिषदि खण्डः ३ मन्त्रः २ ।
(२) श्वेताश्वतरोपनिषदि अ. ३ मन्त्रः १९ ।

स्यते, यथा सुचेलकेभ्य इव तत्कुशलः कुविन्दः, यथा च कुलालः सकलकलशादिकार्यकलापोत्पत्तिसंविधानप्रयोजनाद्यभिज्ञो भवंस्तस्य कार्यचक्रस्य कर्त्ता तथैवतस्त्रैलोक्यस्य निरवधिप्राणिसुखदुःखसाधनस्य सृष्टिसंहारसंविधानं सप्रयोजनं बहुशाखं जानन्नेव स्रष्टा भवितुमर्हति महेश्वरस्तस्मात्सर्वज्ञः ।

अपि च यथा नियतविषयवृत्तीनां चक्षुरादीन्द्रियाणामधिष्ठाता क्षेत्रज्ञस्तदपेक्षया सर्वज्ञः एवं सकलक्षेत्रज्ञकर्मविनियोगेषु प्रभवन्नीश्वरस्तदपेक्षया सर्वज्ञः, तथा चाह व्यासः (१)—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थो ऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः ॥

मन्त्रश्च तदर्थानुवादी पठ्यते(२) ।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ इति ।

अतश्च सर्वज्ञ ईश्वरः ।

पुंसामसर्ववित्त्वं हि रागादिमलबन्धनम् ।
न च रागादिभिः स्पृष्टो भगवानिति सर्ववित् ॥
इष्टानिष्टार्थसंभोगप्रभवाः खलु देहिनाम् ।
रागादयः कथं ते स्युर्नित्यानन्दात्मके शिवे ॥

मिथ्याज्ञानमूलाश्च रागादयो दोषास्ते कथं नित्यनिर्मलज्ञानवतीश्वरे भवेयुः ।

## ईश्वरज्ञानादेर्नित्यत्वम् ।

नित्यं तज्ज्ञानं कथमिति चेत् तस्मिन् क्षणमप्यज्ञातरि सति तदिच्छाप्रेर्यमाणकर्माधीननानाप्रकारव्यवहारविरामप्रसङ्गात् , प्रलयवेलायां तर्हि कुतस्तन्नित्यत्वकल्पना इति चेन्मैवम् आप्रलयात्सिद्धे नित्यत्वे तदा विनाशकारणाभावादस्यात्मन इव तज्ज्ञानस्य नित्यत्वं सेत्स्यति, पुनश्च सर्गकाले तदुत्पत्तिकारणाभावादपि नित्यत्वं तज्ज्ञानानाम् , एवं च तदतीतानागतसूक्ष्मव्यवहितादिसमस्तवस्तुविषयं न भिन्नं क्रमयौगपद्यविकल्पानुपपत्तेः, क्रमाश्रयणे क्वचिदज्ञातृत्वं स्यादिति व्यवहारलोपः, यौगपद्येन सर्वज्ञातृत्वे कुतस्त्यो ज्ञानभेदः, प्रत्यक्षसाधर्म्याच्च तज्ज्ञानं प्रत्यक्षमुच्यते न पुनरिन्द्रियार्थसन्निकर्षोत्पन्नत्वमस्यास्ति अजनकानामेवार्थानां सवितृप्रकाशेनेव ग्रहणात्, ज्ञानवदन्ये ऽप्यात्मगुणा ये ऽस्य

---

( १ ) भगवद्गीतायाम् । अ. १५ श्लो. १६ ।
( २ ) मुण्डकोपनिषदि मु० ३ मन्त्र १ ।

सन्ति ते नित्या एव मनः संयोगानपेक्षजन्मत्वात् ।

दुःखद्वेषास्तस्य तावन्न सन्त्येव, भावनाख्येन संस्कारेणापि न प्रयोजनम् , सर्वदा सर्वार्थदर्शित्वेन स्मृत्यभावात् , अत एव न तस्यानुमानिकं ज्ञानमिष्यते, धर्मस्तु भूतानुग्रहवतो वस्तुस्वाभाव्याद्भवन्न वार्यते तस्य च फलं परमार्थनिष्पत्तिरेव, सुखं त्वस्य नित्यमेव नित्यानन्दत्वेनागमात्प्रतीतेः, असुखितस्य चैवंविधकार्यारम्भयोग्यताऽभावात् ।

ननु ज्ञानानन्दवदिच्छाऽपि नित्या चेदीश्वरस्य तर्हि सर्वदा तदिच्छासम्भवात्सर्वदा जगदुत्पत्तिरिति जगदानन्त्यप्रसङ्गः, सर्गेच्छानित्यत्वाच्च संहारो न प्राप्नोति, संहारेच्छाया अपि नित्यत्वाभ्युपगमेन नक्तंदिनं प्रलयप्रबन्धो न विरमेदेव जगतामिति, नैष दोषः, अनात्ममनःसंयोगजत्वादिच्छा स्वरूपमात्रेण नित्या ऽपि कदाचित्सर्गेण कदाचित्संहारेण वा विषयेणानुरज्यते सर्गसंहारयोरन्तराले तु जगतः स्थित्यवस्थायामस्मात्कर्मण इदमस्य सम्पद्यतामितीच्छा भवति प्रजापतेः, प्रयत्नस्तस्य सङ्कल्पविशेषात्मक एव, तथा चागमः, सत्यकामः सत्यसङ्कल्प इति, काम इतीच्छा उच्यते सङ्कल्प इति प्रयत्नः, तदेवं नवभ्य आत्मगुणेभ्यः पञ्च ज्ञानसुखेच्छाप्रयत्नधर्माः सन्तीश्वरे, चत्वारस्तु दुःखद्वेषाधर्मसंस्कारा न सन्तीत्यात्मविशेष एवेश्वरो न द्रव्यान्तरम्, आह च पतञ्जलिः, 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति, सो ऽयमागमादनुमानात्पक्षधर्मतो वा विशेषलाभ इति स्थितम् ।

## ईश्वरस्याशरीरत्वम् ।

यत्पुनर्विकल्पितं सशरीर ईश्वरः सृजति जगद् अशरीरो वेति तत्राशरीरस्यैव स्रष्टृत्वमस्याभ्युपगच्छामः ।

ननु क्रियावेशनिबन्धनं कर्तृत्वं न पारिभाषिकं तदशरीरस्य क्रियाविरहात्कथं भवेत्, कस्य च कुत्राशरीरस्य कर्तृत्वं दृष्टमिति, उच्यते, ज्ञानचिकीर्षाप्रयत्नयोगित्वं कर्तृत्वमाचक्षते तच्चेश्वरे विद्यते एवेत्युक्तमेतत् , स्वशरीरप्रेरणे च दृष्टमशरीरस्याप्यात्मनः कर्तृत्वम् इच्छामात्रेण च तस्य कर्तृत्वादनेकव्यापारनिर्वर्त्तनोपात्तदुर्वहक्लेशकालुष्यविकल्पो ऽपि प्रत्युक्तः ।

नन्वत्रोक्तम्—

कुलालवच्च नैतस्य व्यापारो यदि कल्प्यते ।
अचेतनः कथं भावस्तदिच्छामनुवर्त्तते ॥ इति ।

अस्माभिरप्युक्तमेव—

यथा ह्यचेतनः काय आत्मेच्छामनुवर्त्तते ।
तदिच्छामनुवर्त्स्यन्ते तथैव परमाणवः ॥

यस्तु प्रयोजनविकल्पः किमर्थं सृजति जगन्ति भगवानिति सो ऽपि न पेशलः, स्वभाव एवैष भगवतो यत्कदा चित्सृजति कदा चिच्च संहरति विश्वमिति, कथं पुनर्नियतकाल एषो ऽस्य स्वभाव इति चेद् आदित्यं पश्यतु देवानां प्रियः यो नियतकालमुदेत्यस्तमेति च, प्राणिकर्मसापेक्षमेतद्विवस्वतो रूपमिति चेद् ईश्वरे ऽपि तुल्यः समाधिः ।

क्रीडार्थे ऽपि जगत्सर्गे न हीयेत क्रियार्थता ।
प्रवर्त्तमाना दृश्यन्ते न हि क्रीडासु दुःखिताः ॥

अथ वा अनुकम्पयैव सर्गसंहारावारभतामीश्वरः ।

नन्वत्र चोदितम् अनुपपन्नं तु अनादित्वात्संसारस्य शुभाशुभसंस्कारानुविद्धा एवात्मानस्ते च धर्माधर्मनिगडसंवृतत्वादपवर्गपुरद्वारप्रवेशमलभमानाः कथं नानुकम्प्याः, अनुपभुक्तफलानां कर्मणां न प्रक्षयः सर्गमन्तरेण च तत्फलभोगाय नरकादिसृष्टिमारभते दयालुरेव भगवान्, उपभोगप्रबन्धेन परिश्रान्तानामन्तरान्तरा विश्रान्तये जन्तूनां भुवनोपसंहारमपि करोतीति सर्वमेतत्कृपानिबन्धनमेव ।

ननु च युगपदेव सकलजगत्प्रलयकरणमनुपपन्नम् अविनाशिनां कर्मणां फलोपभोगप्रतिबन्धासम्भवादिति चोदितम्, न युक्तमेतत्, ईश्वरेच्छाप्रतिबद्धानां कर्मणां स्तिमितशक्तीनामवस्थानात्, तदिच्छाप्रेरितानि कर्माणि फलमादधति तदिच्छाप्रतिबद्धानि च तत्रोदासते, कस्मादेवमिति चेत्, अचेतनानां चेतनानधिष्ठितानां स्वकार्यकरणानुपलब्धेः ।

ननु तेषामेव कर्मणां कर्त्तार आत्मानश्चेतना अधिष्ठातारो भविष्यन्ति, यथा ऽऽह भट्टः(१)कर्मभिः सर्वजीवानां तत्सिद्धे सिद्धसाधनमिति, नैतदेवम्, नैते अधिष्ठातारो भवितुमर्हन्ति, बहुत्वाद्विरुद्धाभिप्रायत्वाच्च, तथा ह्येक एव कश्चित्स्थावरादिविशेषो राजादिविशेषो वा प्राणिकोटीनामनेकविधसुखदुःखोपभोगस्य हेतुः स तैर्बहुभिरव्यवस्थिताभिप्रायैः कथमारभ्येत तेषामेकत्र संमानाभावात्, शठपरिषदो ऽपि क्व चिदेव सकलधारणोपकारिणि कार्ये भवत्यैकमत्यम् न सर्वत्र महाप्रासादाद्यारम्भे बहूनां तक्षादीनामेकस्थपत्याशयानुवर्त्तित्वं दृश्यते, पिपीलिकानामपि मृत्कूटकरणे तुल्यः कश्चिदुपकारः प्रवर्त्तकः

---

(१) श्लोकवार्तिके सम्बन्धाक्षेपे श्लो० ७९ । यदि हेतुत्वमात्रमधिष्ठातृत्वं तदा सर्वेषां जीवानां कर्मभिद्वारभूतैरस्त्येव सर्वं कार्यजातं प्रति हेतुत्वं कर्मनिमित्तं हि सर्वं कार्यं सिद्धं च पृथिव्यादेरपि खननपूरणादिभिः कथं चिन्नाशोत्पादवत्त्वमिति सिद्धस्यैव साधनमिति अतो नानुमानेन कृत्स्नस्यैकेन सर्वज्ञेन निष्पत्तिः युगपत्सेद्धुमर्हतीति भावः ।

स्थपतिवदेकाशयानुवर्त्तित्वं वा कल्प्यम्, इह तु तत्स्थावरं शरीरं केषां चिदुपकारकारणमितरेषामपि भूयसामपकारकारणमिति कथं तैः संभूय सृज्यते अनधिष्ठितानां त्वचेतनानामारम्भकत्वमयुक्तमेव तस्मादवश्यमेकस्तेषां कर्मणामधिष्ठाता कल्पनीयः, यदिच्छामन्तरेण भवन्त्यपि कर्माणि न फलजन्मने प्रभवन्ति ।

अत एवैक ईश्वर इष्यते न द्वौ बहवो वा भिन्नाभिप्रायतया लोकानुग्रहोपघातवैशसप्रङ्गात्, इच्छाविसंवादसंभवेन च ततः कस्य चित्संकल्पविघातद्वारकानैश्वर्यप्रसङ्गाद् इत्येक एवेश्वरः, तदिच्छाया कर्माणि कार्येषु प्रवर्त्तन्ते इत्युपपन्नः सर्गः, तदिच्छाप्रतिबन्धात्स्तिमितशक्तीनि कर्माण्युदासते इत्युपपन्नः प्रलयः, एवं च यदुक्तं–

तस्माद्द्यवदेवात्र सर्गप्रलयकल्पना ।
समस्तक्षयजन्मभ्यां न सिद्धत्यप्रमाणिका(१) ॥

इत्येतदपि न सांप्रतम्, तिष्ठतु वा सर्गप्रलयकालः अद्यत्वेऽपि यथोक्तनयेन तदिच्छामन्तरेण प्राणिनां कर्मविपाकानुपपत्तेरवश्यमीश्वरो ऽभ्युपगन्तव्यः इतरथा सर्वव्यवहारविप्रलोपः, तदुक्तम्—

अज्ञो जन्तुरनीशो ऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वेति(२) ॥

नन्वेवं तर्हि ईश्वरेच्छैव भवतु कर्त्री संहर्त्री च किं कर्मभिः, नैवम् कर्मभिर्विना जगद्वैचित्र्यानुपपत्तेः कर्मनैरपेक्ष्यपक्षे ऽपि त्रयो दोषा दर्शिता एवेश्वरस्य निर्दयकर्मचोदनानर्थक्यमनिर्मोक्षप्रसङ्गश्चेति, तस्मात्कर्मणामेव नियोजने स्वातन्त्र्यमीश्वरस्य न तन्निरपेक्षत्वम्, किं तादृशैश्वर्येण प्रयोजनमिति चेन्न, न प्रयोजनानुवर्त्ति प्रमाणं भवितुमर्हति, किं वा भगवतः कर्मापेक्षिणो ऽपि न प्रभुत्वमित्यलं कुतर्कलवलिप्तमुखनास्तिकालापपरिमर्देन ।

तस्मात्कुतार्किकोद्गीतदूषणाभासवारणात् ।
सिद्धस्त्रैलोक्यनिर्माणनिपुणः परमेश्वरः ॥
ये त्वीश्वरं निरपवाददृढप्रमाण-
सिद्धस्वरूपमपि नाभ्युपयन्ति मूढाः ।

---

(१) श्लोकवार्तिके सम्बन्धाक्षेपे श्लो० ११३ । सृष्टिप्रलयवादस्य दैवप्रभावकथनार्थत्वं तथाहि समस्तपुरुषकाराभावेऽपि सृष्टिकाले दैववशेन सर्वं प्रवर्तते प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमादेवोपरमति तस्माद्धर्मानुष्ठान एव यतितव्यमित्येवं परं सृष्टिप्रलयवचनम् इति पू`संदर्भार्थः तस्मादित्यनेन परामृश्यते इति ध्येयम् ।

(२) महाभारते वनपर्वणि अ० ३० श्लो० २८ ।

पापाय तैः सह कथा ऽपि वितन्यमाना
जायेत नूनमिति युक्तमतो विरन्तुम् ।
यस्येच्छयैव भुवनानि समुद्भवन्ति
तिष्ठन्ति यान्ति च पुनर्विलयं युगान्ते ।
तस्मै समस्तफलभोगनिबन्धनाय ।
नित्यप्रबुद्धमुदिताय नमः शिवाय ॥

## शब्दनित्यमीमांसकाभिमतनिरूणम् ।

ननु त्रैलोक्यनिर्माणनिपुणे परमेश्वरे ।
सिद्धे ऽपि तत्प्रणीतत्वं न वेदस्यावकल्पते ॥
पदे शब्दार्थसम्बन्धे वेदस्य रचनासु वा ।
कर्तृत्वमस्याशङ्क्येत तच्च सर्वत्र दुर्वचम् ।
वर्णराशिः क्रमव्यक्तः पदमित्यभिधीयते ॥
वर्णानां चाविनाशित्वात्कथमीश्वरकार्यता ।
सम्बन्धो ऽपि न तत्कार्यः स हि शक्तिस्वभावकः ॥
शब्दे वाचकशक्तिश्च नित्यैवाग्नाविवोष्णता ।
रचना अपि वैदिक्यो नैताः पुरुषनिर्मिताः ॥
कविप्रणीतकाव्यादिरचनाभ्यो विलक्षणाः ।
एवं च वेदे स्वातन्त्र्यमीश्वरस्य न कुत्र चित् ॥
कामं तु पर्वतानेष विदधातु भिनत्तु वा ।
स्वतः प्रामाण्यसिद्धौ तु वेदे वक्त्रनपेक्षताम् ॥
वदामो न तु सर्वत्र पुरुषद्वेषिणो वयम् ।
अनपेक्षत्वमेवातो वेदप्रामाण्यकारणम् ॥
युक्तं वक्तापि वेदस्य कुर्वन्नपि करोतु किम् ।
कथं पुनरमी वर्णाः श्रुतमात्रतिरोहिताः ॥
नित्या भवन्तु को ऽयं वा शब्दस्वातन्त्र्यदोहदः ॥

उच्यते—

## शब्दनित्यत्वाक्षेपः ।

शब्दस्य न ह्यनित्यत्वे युक्तिः स्फुटति का चन ।
प्रत्यक्षमर्थापत्तिश्च नित्यतां त्वधिगच्छतः ॥

तथाहि, अनित्यहेतव इमे किल कथ्यन्ते प्रयत्नानन्तरमुपलब्धेः कार्यः शब्द इति, कार्यत्वानित्यत्वयोः परस्पराविनाभावादेकतरसिद्धावन्यतरसिद्धि-

र्भवत्येवेति क चित्किञ्चित्साधनमुच्यते प्रयत्नप्रेरितकौष्ठ्यमारुतसंयोगविभागानन्तरमुपलभ्यमानः शब्दस्तत्कार्यः एवेति गम्यते, उच्चारणादूर्ध्वमनुपलब्धेः अनित्यः शब्दः न ह्येनमुच्चरितं मुहूर्त्तमप्युपलभामहे तस्माद्विनष्ट इत्यवगच्छामः, करोतिशब्दव्यपदेशाच्च कार्यः शब्दः शब्दं कुरु शब्दं मा कार्षीरिति व्यवहर्त्तारः प्रयुञ्जते ते नूनमवगच्छन्ति कार्यः शब्द इति, नानादेशेषु च युगपदुपलम्भात्, तेषु तेषु देशेषु क्रियमाणानामुपपद्यते ऽनेकदेशसम्बन्ध इति, शब्दान्तरविकार्यत्वाच्च अनित्यः शब्दः दध्यत्रेति इकार एव यकारीभवति सादृश्यात् स्मृतेश्चावगम्यते, विकार्यत्वाच्च द्राक्षेक्षुरसादिवदनित्यत्वमस्येति, कारणवृद्ध्या च वर्धमानत्वात्, बहुभिर्महाप्रयत्नैरुच्चार्यमाणो महान् गोशब्द उपलभ्यते अल्पैरल्पप्रयत्नैरुच्चार्यमाणो ऽल्प इत्येतच्च तन्तुवृद्ध्या वर्धमानः पटः ज्ञातः, सिद्धे नित्यत्वे प्रयत्नानन्तरमुपलम्भादभिव्यक्तिः प्रयत्नकार्या शब्दस्य नोत्पत्तिरिति गम्यते, तदेवं व्यङ्ग्ये ऽपि प्रयत्नानन्तरमुपलम्भसम्भवादनैकान्तिकत्वम्, अभिव्यञ्जकानां च पवनसंयोगविभागानामचिरस्थायित्वान्न चिरमुच्चारणादूर्ध्वमुपलभ्यते शब्दः, प्रयोगाभिप्रायश्च करोतिशब्दव्यपदेशो ऽस्य भविष्यति गोमयानि कुरु काष्ठानि कुर्वितिवत्, तस्मात्सो ऽपि नैकान्तिकः, नानादेशेषु युगपदुपलम्भनमेकस्य स्थिरस्यापि शब्दस्य विवस्वत इव सेत्स्यति, विकार्यत्वं त्वसिद्धमेव शब्दान्तरत्वात्, दधिशब्द इकारान्तः संहिताव्यतिरिक्तविषयवृत्तिः यकारस्त्वयमन्य एवाचि परतः संहिताविषये प्रयुज्यमानः, न पुनरिकार एवायं यकारीभूतः क्षीरमिव दधिभूतमुपलभ्यते, न हीचुयशास्तालव्या इति स्थानसादृश्यमात्रेण तद्विकारत्ववर्णनमुचितम्, अप्रकृतिविकारयोरपि नयनोत्पलपल्लवयोः सादृश्यदर्शनात्, इको यणचीति पाणिनिस्मृतेरपि नायमर्थः इकारो यकारीभवति क्षीरमिव दधीभवति किं त्वस्मिन्विषये ऽयं वर्णः प्रयोक्तव्यो ऽस्मिन्नयमिति सूत्रार्थः, सिद्धे शब्दे ऽर्थे सम्बन्धे च तच्छास्त्रं प्रवृत्तमिति, अपि च क्षीरं दधित्वमुपैति न तु दधि क्षीरताम् इह तु यकारो ऽपि क चिदिकारतामुपैति विध्यतीति संप्रसारणे सति, तस्मादसिद्ध एव वर्णानां प्रकृतिविकारभावः नापि कारणवृद्ध्या वर्धते शब्दःबलवता ऽप्युच्चार्यमाणानि बहुभिश्च तावन्त्येवाक्षराणि ध्वनय एव तथा तत्र प्रवृद्धा उपलभ्यन्ते न वर्णा इति ।

### शब्दनित्यत्वसाधनार्थापत्तिप्रमाणोपन्यासः ।

तस्मादनित्यतासिद्धिर्नैवंप्रायैरसाधनैः ।
शब्दस्य नित्यतायां तु सैषा ऽर्थापत्तिरुच्यते ॥
शब्दस्योच्चारणं तावदर्थगत्यर्थमिष्यते ।

न चोच्चारितनष्टो ऽयमथ गमयितुं क्षमः ॥
सर्वेषामविवादो ऽत्र शब्दार्थव्यवहारिणाम् ।
यदि विज्ञातसम्बन्धः शब्दो नार्थस्य वाचकः ॥
वेद्यमानः स सम्बन्धः स्थविरव्यवहारतः ।
द्राघीयसा न कालेन विना शक्येत वेदितुम् ॥

तथा हि गां शुक्लामानयेत्येकवृद्धप्रयुक्तशब्दश्रवणे सति चेष्टमानमितरं वृद्धमवलोकयन् बालस्तटस्थः तस्यार्थप्रतीतिं तावत्कल्पयति आत्मनि तत्पूर्विकायाश्चेष्टाया दृष्टत्वात्, प्रमाणान्तरासन्निधानादेतद्वृद्धप्रयुक्तशब्दसमनन्तरं च प्रवृत्तेः तत एव शब्दात्किमप्यनेन प्रतिपन्नमिति मन्यते, ततः क्षणान्तरे तमर्थं तेन वृद्धेनानीयमानमुपलभमान एव बुध्यते अयमर्थो ऽमुतः शब्दादनेनावगत इति, स चार्थो ऽनेकगुणक्रियाजातिव्यक्त्यादिरूपसंकुल उपलभ्यते, शब्दो ऽप्यनेकपदकदम्बकात्मा श्रुतः तत्कतमस्य वाक्यांशस्य कतमो ऽर्थांशो वाच्य इत्यावापोद्वापयोगेन बहुकृत्वः शृण्वन् गुणक्रियादिपरिहारेण गोत्वसामान्यमस्मन्मते त्वन्मते वा तद्वन्मात्रं गोशब्दस्याभिधेयं निर्धारयतीति ।

एवं दीर्घाध्वसापेक्षसंबन्धाधिगमावधि ।
शब्दस्य जीवितं सिद्धमिति नाशुविनाशिता ॥

भवतु वा नश्वरस्यापि शब्दस्य सम्बन्धग्रहणं तथा ऽपि तस्मिन् गृहीतसम्बन्धे शब्दे विनष्टे सति कथमनवगतसम्बन्धादभिनवादिदानीमन्यस्माच्छब्दादर्थप्रतिपत्तिः ।

अन्यस्मिन् जातसम्बन्धे यद्यन्यो वाचको भवेत् ।
वाचकाः सर्वशब्दाः स्युरेकस्मिन् जातसंगतौ ॥

न च वक्ता व्यवहरमाणः तदैव शब्दं चोच्चारयति सम्बन्धं करोति चैतं च व्युत्पादयति परं च व्यवहारयतीति, न हि युगपदिमाः क्रियाः भवितुमर्हन्ति एवमदर्शनात्, अथादौ सम्बन्धग्रहणे वृत्ते तस्मिन्विनष्टे ऽपि गोशब्दः स एवेति, न च भूयोऽवयवसामान्ययोगरूपसादृश्यं वर्णानामनवयवानामुपपद्यते अभिनवस्य शब्दस्य स्वयमर्थवत्ताऽनवधारणात्कथमयममुतः श्रोता प्रतिपद्येतेति शङ्कमानो वक्ता कथं प्रयोगं कुर्यात्, अथ सो ऽप्यर्थवत्सदृशस्तमसौ प्रयुङ्क्ते तस्याप्यन्यसादृश्यादेवार्थवत्तेति जगत्सर्गकालकृतस्य मूलभूतस्यार्थवतः शब्दस्य स्मरणं तन्मूलत्वाद् व्यवहारस्य न चैवमस्ति, न च ततः प्रभृत्यद्य यावत्सादृश्यमनुवर्तते तत्सदृशसदृशकल्पनायां मूलसादृश्यविनाशात्, विशेषतस्तु शब्दानाम् ।

भिन्नवक्तृमुखस्थानप्रयत्नकरणादिभिः ।
न निर्वहति सादृश्यं शब्दानां दूरवर्त्तिनाम् ॥

सादृश्यजनितत्वे च मिथ्यैवार्थगतिर्भवेत् ।
धूमानुकारिनीहारजन्यज्वलनबुद्धिवत् ॥

तस्मात्सादृश्यनिबन्धनार्थप्रतीत्यनुपपत्तेः गोशब्द एव स्थायीत्यभ्युपगमनीयम्,

ननु यथा धूमव्यक्तिभेदे ऽपि धूमत्वमतिमवलम्ब्य सम्बन्धग्रहणादिव्यवहारनिवहनिर्वहणमेवमिह गकारादिवर्णव्यक्तिभेदे ऽपि सामान्यनिबन्धनस्तन्निर्वाहः करिष्यते इति ।

मैवं तत्र हि धूमत्वसामान्यं विद्यते ध्रुवम् ।
शब्दत्वं व्यभिचार्यत्र गोशब्दत्वं तु दुर्घटम् ॥
भिन्नैरयुगपत्कालैरसंसृष्टैर्विनश्वरैः ।
वर्णैर्घटयितुं शक्यो गोशब्दावयवी कथम् ॥
अनारब्धे च गोशब्दे गोशब्दत्वं क्व वर्त्तताम् ।
पटत्वं नाम सामान्यं न हि तन्तुषु वर्त्तते ॥

ननु मा भूद्गोशब्दत्वं सामान्यं भिन्नाकारगकारादिव्यक्तिवृत्तिभिरेव गत्वादिजातिभिः कार्यं पूर्वोक्तमुपपद्यते, एतदपि नास्ति, गत्वादिजातीनामनुपपत्तेः, भेदाभेदप्रत्ययप्रतिष्ठो हि व्यक्तिजातिप्रविभागव्यवहारः, इह चायमभेदप्रत्ययो वर्णैक्यनिबन्धन एव न जातिकृतः, भेदप्रतिभासस्य व्यञ्जकभेदधीसुस्पष्टसिद्धत्वेन व्यञ्जकाद्युपाधिनिबन्धनत्वोपपत्तेः परस्परविभक्तस्वरूपतया हि शाबलेयबाहुलेयपिण्डाः प्रत्यक्षमुपलभ्यन्ते, स्थिते च व्यक्तिभेदे सर्वत्र गौरिति तदभेदप्रत्ययस्यानन्यविषयत्वादिष्यते एव गोत्वजातिः, इह पुनः—

गकारव्यक्तयो भिन्नाः शाबलेयादिपिण्डवत् ।
क्व नाम भवता दृष्टा येनासां जातिमिच्छसि ॥
शिशौ पठति वृद्धे वा स्त्रीजने वा शुके ऽपि वा ।
वक्तृभेदं प्रपद्यन्ते न वर्णव्यक्तिभिन्नताम् ॥

तथा च गर्गः पठति माठरः पठतीत्युच्चारयितृभेद एव प्रतीयते अमुं गविशेषमेष पठतीति नोच्चार्यमाणभेदः ।

एककर्त्तृप्रयोगे ऽपि तस्यैवोच्चारणं पुनः ।
गङ्गागगनगर्गादौ न रूपान्तरदर्शनम् ॥
द्रुतादिभेदबोधोपि नादभेदनिबन्धनः ।
न व्यक्तिभेदजनितः शाबलेयादिभेदवत् ॥

अभ्युपगते ऽपि गत्वसामान्ये तस्य द्रुतादिभेदप्रतिभासे सत्यपि न भिन्नत्वमेषितव्यम् औपाधिक एव तस्मिन् भेदप्रतिभासो वर्णनीयः, सो ऽयं गकारव्यक्तावेव कथं न वर्ण्यते, तस्या एवैकत्वादेकप्रत्ययो भेदभ्रमस्तु व्यञ्जकाधीन

इति, एवं हि कल्पना लघीयसी भवति, तस्मान्न नानागकारवृत्ति गत्वसामान्यं नाम किं चिदस्ति ।

अपि च गोगुरुगेहादौ भिन्नाजुपश्लेषकारित एव व्यञ्जनेषु बुद्धिभेदः परोपाधिरवधार्यते सो ऽयमच्ष्वपि परोपाधिरेव भवितुमर्हति, वर्णाश्रितत्वाद्व्यञ्जकभेदप्रत्ययवदिति, तस्माद्गत्ववदत्वसामान्यमपि नास्ति, यत्पुनरष्टादशभेदमवर्णकुलमुच्यते तदौपाधिकमेव ह्रस्वदीर्घप्लुतसंवृतविवृतादिबुद्धीनां ध्वनिभेदानुविधायित्वात् ।

विवृतः संवृतादन्यो न गकाराद्वकारवत् ।
अपि त्वकार एवासौ प्रतिभाति यथा तथा ॥

कथं तर्हि शब्दभेदाभावे भिन्ने अर्थप्रतिपत्ती अरण्यमारण्यमिति ध्वनिकृते एव ते भविष्यतः, अशब्दधर्मस्य दीर्घत्वादेः कथमर्थप्रतीत्यङ्गत्वमिति चेत् तुरगवेगवद्भविष्यति ।

यथा तुरगदेहस्थो वेगः पुंसो ऽर्थसिद्धये ।
परधर्मो ऽपि दीर्घादिरेवं तस्योपकारकः ॥

इतश्चैतदकारसामान्यमनुपपन्नम्, अत्वं हि न दीर्घप्लुतयोरनुगतं भवति आत्वं न ह्रस्वदीर्घयोरिति, तस्मादेकत्वाद्वर्णानां नावान्तरजातयः सम्भवन्ति शब्दत्वं तु नियतार्थप्रतिपत्तौ व्यभिचारीत्यतो नात्र धूमादिन्यायः ।

तेनार्थप्रत्ययः शब्दादन्यथा नोपपद्यते ।
न चेद् नित्यत्वमित्यस्मिन्नर्थापत्तेः प्रमाणता ॥
अनुमानादन्यथात्वमर्थापत्तेर्न दृश्यते ।
तेनानुमानमप्येतत्प्रयोक्तुं न न शक्यते ॥

तदिदमुच्यते शब्दो धर्मी नित्य इति साध्यो धर्मः सम्बन्धग्रहणसापेक्षार्थप्रतिपादकत्वाद् धूमादिजातिवत्, तदिदमुक्तं "नित्यत्वं तु स्याद्दर्शनस्य परार्थत्वादिति"(१), एवं सम्बन्धग्रहणात्प्रभृत्यार्थप्रतिपत्तेरवस्थितस्य विनाशहेत्वभावादात्मादिवन्नित्यत्वम्, न ह्ययमवयवविनाशान्नश्यति शब्दो निरवयवत्वात्, तदेव कथमिति चेद् उच्यते—

स्वल्पेनापि प्रयत्नेन यदि वर्णः प्रयुज्यते ।
यदि वा नानुभूयेत शकलो नानुभूयते ॥

---

(१) जैमिनिसू० अ० १ पा० १ सू० १८ नित्यस्तु स्यादिति पाठः । तुशब्दोऽवधारणे शब्दः नित्य एव स्यात् दर्शनस्य दृश्यते श्रूयतेऽनेनेति दर्शनमुच्चारणं तस्य परार्थत्वात् परं प्रति अर्थप्रत्यायनार्थत्वात् शब्दस्य अनित्यत्वे च अर्थप्रतीतिपर्यन्तमनवस्थानात् परस्यार्थप्रतीतिरेव न स्यादिति तदर्थः इति मत्प्रणीतायां जैमिनिसूत्रप्रभायाम् ।

सावयवे हि वस्तुनि द्विधा ऽवयवा दृश्यन्ते आरब्धकार्याश्चानारब्धकार्याश्चेति, इह पुनरारब्धकार्या अनारब्धकार्या वा पटे तन्त्वादय इव वर्णे न केचिदवयवा उपलभ्यन्ते न चानुमीयन्ते लिङ्गाभावात्, नाप्याश्रयविनाशाद्विनाशः शब्दस्यात्मादिवदनाश्रितत्वात्, आकाशाश्रितत्वपक्षे वा तन्नित्यत्वात्, न चान्यः-

तस्मात्तिरोहितो ऽप्यास्ते यदि शब्दः क्षणान्तरम् ।
मृत्योर्दुःखादपक्रान्तः पुनः केनैष हन्यते ॥

अतश्च नित्यः शब्दः संख्याभावाद्, अष्टकृत्वो गोशब्दः प्रयुक्त इति वदन्ति न त्वष्टौ गोशब्दा इति तेनैकत्वमवगम्यते, यो ऽयं क्रियाभ्यावृत्तिगणने विहितः कृत्वसुच्प्रत्ययः स क्रियावतामभेदे भवति तेनोच्चारणावृत्तिमात्रं, तदुक्तम्—

क्रियावतामभेदे हि क्रियावृत्तिषु कृत्वसुच् ।
तत्प्रयोगाद् ध्रुवं तस्य शब्दस्यावर्त्तते क्रियेति(१) ॥

संख्यावताम् ।

संख्याभिधायिनः शब्दात्कृत्वसुच्प्रत्ययं विदुः ।
तदनेन प्रकारेण प्रत्यभिज्ञानमुच्यते ॥
प्रमाणं शब्दनित्यत्वे सकलश्रोतृसाक्षिकम् ।
तथा ह्यस्ति स एवायं गोशब्द इति वेदनम् ॥
श्रौत्रं करणकालुष्यबाधसन्देहवर्जितम् ॥

श्रोत्रेन्द्रियव्यापारान्वयव्यतिरेकानुविधानाच्छ्रौत्रमिदं विज्ञानम्, न चैतज्जनकस्य करणस्य किमपि दौर्बल्यमुपलभ्यते, न च किं स्विदिति कोटिद्वयसंस्पर्शितयेदं विज्ञानमुपजायते नच नैतदेवमिति प्रत्ययान्तरमस्मिन्बाधकमुत्पश्यामः, इदानींतनास्तित्वप्रमेयाधिक्यग्रहणाच्चेदमनधिगतार्थग्राह्यपि भवितुमर्हति, भवन्मते च गृहीतग्राहित्वे ऽपि प्रत्यभिज्ञायाः प्रामाण्यमिष्यते न हि तदप्रामाण्यं वक्तुं शक्यते शाक्यैरिव भवद्भिः क्षणिकपदार्थानभ्युपगमात् ।

न सादृश्यनिमित्तत्वं वक्तुं तस्याश्च युज्यते ।
सामान्यविषयत्वं वा द्वयस्यापि निषेधनात् ॥
कैश्चित्तिरोहिते भावादित्यप्रामाण्यमुच्यते ।
तदसत्तत्प्रतीत्यैव तिरोधाननिषेधनात् ॥

---

(१) श्लोकवार्तिके शब्दाधिकरणे श्लोक ३६२ । "अष्टकृत्वो गोशब्द उच्चरितः इति हि वदन्ति नाष्टौ गोशब्दा" इति शाबरभाष्यस्याभिप्रायमाह—क्रियावतामिति । क्रियावतामभेदे क्रियाभ्यावृत्तिगणने कृत्वसुच् विहितः तेन शब्दस्य उच्चारणक्रिया आवर्तते न शब्द इत्यर्थः ।

जीवति त्वन्मते ऽप्येष शब्दस्त्रिचतुरान् क्षणान् ।
प्रत्यभिज्ञा च कालेन तावता न न सिद्ध्यति ॥
एकक्षणायुषि त्वस्मिन्प्रतीतिरतिदुर्लभा ।
न खल्वजनकं किं चिद्वस्तु ज्ञानेन गृह्यते इति ॥

क्षणभङ्गभङ्गे वक्ष्यते, अपि च—

यथा निशीथे रोलम्बश्यामलाम्बुदडम्बरे ।
प्रत्यभिज्ञायते किं चिदचिरद्युतिधामभिः ॥
तथा ऽविरतसंयोगविभागक्रमजन्मभिः ।
प्रत्यभिज्ञायते शब्दः क्षणिकैरपि मारुतैः ॥

## शब्दाभिव्यक्तावनुपपत्तिप्रदर्शनम्

अत्राह, मारुतैरित्युपोद्घातेन साधु स्मृतम्, तिष्ठतु तावत्प्रत्यभिज्ञानं प्रथममेव शब्दस्य यन्नियतग्रहणं तदभिव्यक्तिपक्षे दुर्घटम् ।

नित्यत्वाद्व्यापकत्वाच्च सर्वे सर्वत्र सर्वदा ।
शब्दाः सन्तीति भेदेन ग्रहणे किं नियामकम् ॥

ध्वनयो हि नाम संयोगविभागविशेषिता वायवः वायुवृत्तयो वा संयोगविभागास्ते हि शब्दस्य व्यञ्जका इष्यन्ते तैश्च करणं वा संस्क्रियते कर्म वा द्वयं वा सर्वथा च प्रमादः ।

करणे संस्कृते तावत्सर्वशब्दश्रुतिर्भवेत् ।
गकारायैव संस्कार इत्येष नियमः कुतः ॥

अपि च—स्तिमितसमीरणापसरणमेव करणस्य संस्कारः स चायं तद्देशव्यवस्थितसकलतद्विषयसाधारण एव ।

यथा जवनिकापायप्राप्तप्रसरमीक्षणम् ।
रङ्गभूमिषु तद्देशमशेषं वस्तु पश्यति ॥
तथा प्रसरसंरोधिसमीरोत्सारणे सति ।
श्रोत्रं तद्देशनिःशेषशब्दग्राहि भविष्यति ॥

आकाशं च श्रोत्रमाचक्षते भवन्तः तच्च विभु निरवयवं चेति क चिदेव तस्मिन्संस्कृते सति सर्वे च तदैव संस्कृतकरणाः प्राणिनः संपन्ना इति सर्व एव शृणुयुः, विषये तु संस्क्रियमाणे तस्यानवयवस्य व्यापिनश्च संस्कृतत्वात्सर्वत्र श्रवणमिति मद्रेष्वभिव्यक्तो गोशब्दः कश्मीरेष्वपि श्रूयेत, न हि तस्याधारद्वारकः संस्कारः आकाशवदनाश्रितत्वात्, आकाशाश्रितत्वपक्षे ऽपि तदेकत्वाद्, नापि भागशः संस्क्रियते गोशब्दः तस्य निरवयवत्वात् उक्तं हि—

अल्पीयसा प्रयत्नेन शब्दमुच्चारितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटमिति(१) ॥

उभयसंस्कारपक्षे तु दोषद्वयस्याप्यनतिवृत्तिः सर्वेषां ग्रहणं सर्वत्र श्रवणमिति, न च समानदेशानां समानेन्द्रियग्राह्याणां च भावानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमुपलब्धम् ।

गृहे दधिघटीं द्रष्टुमानीतो गृहमेधिना ।
अपूपानपि तद्देशान् प्रकाशयति दीपकः ॥

तस्मात्कृतकपक्ष एव नियतदेशं शब्दस्य ग्रहणं परिकल्पते नाभिव्यक्तिपक्षे इति, अपि च, अभिव्यक्तिपक्षे तीव्रमन्दविभागो ऽभिभवश्च शब्दस्य शब्दान्तरेण न प्राप्नोति, न हि शब्दस्तीव्रो मन्दो वा कश्चित् स्वतस्तस्य भेदाभावात्, संस्कारस्य च तदभिव्यक्तिहेतोर्न का चन तीव्रता मन्दता वा यदनुसारेण विषये तथा बुद्धिः स्यात्, पवनधर्मो वा तीव्रादिभवन्कथं श्रोत्रेण गृह्येत, सावयवे हि वस्तुनि सकलविशेषग्रहणाग्रहणसंभवात्तदपेक्षया प्रतीतिभेदो भवेत्, इह तु निरवयवे शब्दे न तथोपपद्यते इति, तस्मात्कृतकपक्ष एव श्रेयानिति ।

## शब्दाभिव्यक्तिपक्षानुपपत्तिपरिहरणम्

अत्रोच्यते, करणसंस्कारपक्ष एव तावदस्तु, तच्च करणं किं चिदेव मरुद्भिरुपाहितसंस्कारं कं चिदेव शब्दं गृह्णाति ।

यथा ताल्वादिसंयोगविभागाः के चिदेव नः ।
कस्य चिद्ग्रहणे शक्तं श्रोत्रं कुर्वन्ति संस्कृतम् ॥
यथा च तेषामुत्पत्तौ सामर्थ्यनियमस्तव ।
तथैवैषामभिव्यक्तौ सामर्थ्यनियमो मम ॥

व्यञ्जकानां नियमो न दृष्ट इति चेत् क एवमाह सहस्राक्षः, तथा हि पृथिव्यामेव वर्त्तमानो गन्धः समानदेशो भवति समानेन्द्रियग्राह्यश्च घ्राणैकविषयत्वात् तस्य च नियमतस्तद्व्यञ्जकव्यङ्ग्यता दृश्यते एव ।

क चित्पावकसम्पर्कादर्कांशुस्पर्शतः क चित् ।
क चित्सलिलसंसेकाद्गन्धो ऽभिव्यज्यते भुवः ॥

न च स्तिमितिपवनापनोदनमात्रं करणस्य संस्कार इष्यते यः सर्वसाधारणः स्यात्, किं त्वन्य एव नियतः प्रतिविषयं योग्यतालक्षणः ।

---

(१) श्लोकवार्तिके स्फोटग्रन्थे श्लोक १० । अयमाशयः—'ते च श्रोत्रग्रहणाः' इति भाष्ये गकारादीनामेव श्रौत्रत्ववचनात्तदवयवानां तत्समुदायस्य च श्रौत्रत्वं निराकृतं साकल्यवैकल्यग्रहणे हि स्यादवयवसिद्धिः न तु तदस्ति मतिः प्रत्यक्षं सकलं विकलं वा न गृह्णाति इति ।

यत्पुनरभ्यधायि नभसि श्रोत्रे ऽभ्युपगम्यमाने सर्वप्राणिनामेकमेव श्रोत्रं भवेद् इति तदप्यसाधु धर्माधर्मयोर्नियामकत्वात्, आकाशस्यापि घटाकाशवदन्यावच्छेदोपपत्तेः धर्माधर्मनिबन्धन एव बधिरेतरविभागः, अपि च भवतामेवैष दोषो येषामाकाशमेव श्रोत्रमित्यभ्युपगमनियमः मीमांसकानां तु नावश्यमाकाशमेव श्रोत्रं कार्यार्थापत्तिकल्पितं तु किमपि करणमात्रं प्रतिपुरुषनियतं श्रोत्रमिति नातिप्रसङ्गः, तथा च भर्तृमित्रः पवनजनितसंस्कारपक्षो भवतु तथा ऽपि नातिप्रसङ्गः नियतदेशस्यैव तत्र संस्कारात्, न चास्य भागशः संस्कारो निरवयत्वात्, तथा ऽपि जातिवदस्य ग्रहणनियमो भविष्यति तथा च भवतामेव पक्षे—

यथा सर्वगता जातिः पिण्डदेशैव गृह्यते।
न च कार्त्स्न्यगृहीता ऽपि पिण्डे ऽन्यत्र न दृश्यते॥
तथा सर्वगतः शब्दो नादशेषेषु(१) गृह्यते।
कार्त्स्न्येन च गृहीतो ऽपि पुनरन्यत्र गृह्यते॥
पिण्डो ऽभिव्यञ्जको जातेः शब्दस्य व्यञ्जको ध्वनिः।
आश्रितानाश्रितत्वादिविशेषः कोपयुज्यते॥

सर्वगतत्वनिरवयवत्वाविशेषात् तीव्रमन्दत्वादयश्च ध्वनिधर्मा अपि भवन्तः शब्दवृत्तितया ऽवभान्ति, यथा स्थूलत्वकृशत्वादयः पिण्डधर्मा अपि जातिवृत्तित्वेन क चिद् गृह्यन्ते अगृहीतशाबलेयादिविशेषस्य कृशा गाव इत्यादिप्रतिभासदर्शनात्।

यद्वा न तीव्रमन्दादेर्वर्णधर्मतया ग्रहः।
बुद्धिरेव तथोदेति व्यञ्जकाऽनुविधायिनी॥
तावन्त एव ते वर्णाः प्रचयापचयस्पृशः।
एवं चाभिभवो ऽप्येषां स्वतो नास्ति परस्परम्॥
महद्भिरभिभूयन्ते मारुता एव दुर्बलाः।
तेजोभिरिव दीप्तांशोर्दिवा दीपप्रभादयः॥

द्वयसंस्कारपक्षो ऽप्येवं समाहितो भवति उभयेषामपि दोषाणामुत्सारणात्, तस्मात्प्रत्यभिज्ञाप्रत्ययप्रभावसिद्धनित्यत्वस्य शब्दस्याभिव्यक्तिरेव साधीयसी।

## कार्यशब्दपक्षापेक्षयाभिव्यङ्ग्यशब्दपक्षे लाघवप्रदर्शनम्

इदं चालोच्यतामार्याः कार्याभिव्यङ्ग्यपक्षयोः।
शब्दस्य ग्रहणे गुर्वी लघ्वी वा कुत्र कल्पना॥

---

(१) नाददेशेष्विति युक्तः पाठः।

तथा हि भवन्तो वैशेषिकाः सांख्या जैनाः सौगताश्च कार्यशब्दवादिनः; चार्वाकास्तु वराकाः कस्यैवं विधासु गोष्ठीषु स्मृतिपथमुपयान्ति,

तत्रभवतां वैशेषिकाणां शब्दस्य श्रवणे तावदेषा तुल्यैव कल्पना, संयोगाद्विभागाद्वा शब्दउपजायते जातश्चासौ तिर्यगूर्ध्वमधश्च सर्वतोदिक्कानि कदम्बगोलकाकारेण सजातीयनिकटदेशानि शब्दान्तराण्यारभते तान्यपि तथेत्येवं वीचीसन्तानवृत्त्यारम्भप्रबन्धप्राप्तो ऽन्त्यः श्रोत्राकाशजन्मा शब्दस्तत्समवेतस्तेनैव गृह्यते इति तदियं तावदतिघर्घरा कल्पना ।

शब्दः शब्दान्तरं सूते इति तावदलौकिकम् ।
कार्यकारणभावो हि न दृष्टस्तेषु बुद्धिवत् ॥
जन्यन्ते ऽनन्तरे देशे शब्दैः स्वसदृशाश्च ते ।
तिर्यगूर्ध्वमधश्चेति केयं वा श्रद्धानता ॥
शब्दान्तराणि कुर्वन्तः कथं च विरमन्ति ते ।
न हि वेगक्षयस्तेषां मरुतामिव कल्पते ॥
कुड्यादिव्यवधाने च शब्दस्यावरणं कथम् ।
व्योम्नः सर्वगतत्वाद्धि कुड्यमध्ये व्यवस्थितिः ॥

अथावरणात्मककुड्यादिद्रव्यसंयोगरहितमाकाशं शब्दजन्मनि समवायिकारणमिष्यते तदत्र प्रमाणं विशेषे वक्तव्यम् ।

तुल्यारम्भे च मन्देन तीव्रस्य जननं कथम् ।
श्रूयते चान्तिकात्तीव्रःशब्दो मन्दस्तु दूरतः ॥
वीचीसन्तानतुल्यत्वमपि शब्दे सुदुर्वचम् ।
मूर्त्तिमत्त्वक्रियायोगवेगादिरहितात्मसु ॥

यदप्युच्यते सजातीयजनकः शब्दः गुणत्वाद्रूपादिवदिति तदिदमसिद्धमसिद्धेन साध्यं गुणत्वस्यासिद्धत्वात् ।

न शब्दः पारतन्त्र्येण कदा चिदुपलभ्यते ।
द्रव्यस्थ इव रूपादिरतो ऽस्य गुणता कुतः ॥

अपि च–न शब्दान्तरारम्भकः शब्दो गुणत्वाद् रूपवत् , शब्दः शब्दं नारभते शब्दत्वाच्छ्रोत्रशब्दवत् , न संयोगविभागौ शब्दस्य जनकौ संयोग विभागत्वादन्यसंयोगविभावगवद् इत्यादयः प्रतिहेतवो ऽप्यत्र सुलभा इति यत् किं चिदेतत् ।

कापिलास्तु ब्रुवते श्रोत्रवृत्तिः शब्ददेशं गच्छति सा शब्देन विक्रियते इति तत्र श्रोत्रस्य व्यामिश्रत्वान्निकटदेशेनैव शब्देन तद्वृत्तिर्विक्रियते न दूरदेशेनेत्यत्र को नियमः, नियमाभावाच्च कान्यकुब्जप्रयुक्तो गोशब्दो गौरमूलके ऽपि

श्रूयेत, अमूर्त्ता च श्रोत्रवृत्तिः प्रसरन्ती न मूर्त्तैः कुड्यादिभिरभिहन्तुं शक्यते इति व्यवहितस्यापि शब्दस्य श्रवणं स्यात्।

वायौ शब्दानुकूले च न तस्य श्रवणं भवेत्।
गच्छन्त्याः प्रतिकूलो हि श्रोत्रवृत्तेः स मारुतः॥

दूरे ऽपि शब्दस्य श्रवणं यद्दृष्टं प्रतिवातं च निकटे ऽपि यदश्रवणं तदस्मिन् पक्षे विपरीतं स्यात्।

वृत्तिवृत्तिमतोर्भेदो नास्तीतीन्द्रियवद्भवेत्।
व्यापिका वृत्तिरित्येवं कथं सर्वत्र न श्रुतिः॥

आर्हतास्त्वाहुः सूक्ष्मैः शब्दपुद्गलैरारब्धशरीरः शब्दः स्वप्रभवभूमेः निष्क्रम्य प्रतिपुरुषं कर्णमूलमुपसर्पतीति तदेतदतिसुभाषितम्।

वर्णस्यावयवाः सूक्ष्माः सन्ति के चन पुद्गलाः।
तैर्वर्णो ऽवयवी नाम जन्यते पश्य कौतुकम्॥
तेषामदृश्यमानानां कीदृशो रचनाक्रमः।
केन तत्संनिवेशेन कः शब्द उपजायताम्॥
लघवो ऽवयवाश्चैते निबद्धा न च केन चित्।
न चैनं कठिनं कर्तुं वर्णावयविनं क्षमाः॥
कृशश्च गच्छन्स कथं न विक्षिप्येत मारुतैः।
दलशो वा न भज्येत वृक्षाद्यभिहतः कथम्॥
प्रयाणकावधिः कश्च गच्छतो ऽस्य तपस्विनः।
एकश्रोत्रप्रविष्टो वा स श्रूयेतापरैः कथम्॥
निष्क्रम्य कर्णादेकस्मात्प्रवेशः श्रवणान्तरे।
यदीष्येत कथं तस्य युगपद्बहुभिः श्रुतिः॥
श्रोतृसंख्यानुसारेण न नानावर्णसंभवः।
वक्तुस्तुल्यप्रयत्नत्वाच्छ्रोतृभेदे तदत्यये॥
तदलं परिहासस्य महतो हेतुभूतया।
नग्नक्षपणकाचार्यप्रज्ञाचातुर्यचर्चया॥

शाक्यप्रायास्त्वाचक्षते अप्राप्त एव शब्दः श्रोत्रशक्त्या गृह्यते इति तदेतदतिव्यामूढभाषितम्, अप्राप्त्या तुल्यतायां दूरव्यवहितादीनामश्रवणकारणाभावात्, प्राप्यकारिताख्यकर्मधर्मोप्रसङ्गाच्च, न च चार्वाकवदपरीक्षित एवायमर्थ उपेक्षितुं युक्तः।

इति कार्यत्वपक्षे ऽमूः श्रुतास्तार्किककल्पनाः।
अथाभिव्यक्तिपक्षे ऽस्य शृणु श्रोत्रियकल्पनाम्॥

विवक्षापूर्वकप्रयत्नप्रेर्यमाणस्तावद्वेगवत्तया क्रियावत्तया च कोष्ठ्यो बहि-

निस्सरति समीरण इति सुस्पष्टमेतत् , प्रत्यक्षपवनवादिनां पक्षे पवनसमये वक्तृवदननिकटनिहितहस्तस्पर्शेनैव स उपलभ्यते, अनुमेयमारुतपक्षे ऽपि तदानीमास्यसमीपसन्निधापिततूलककर्मणा सोऽनुमीयते ।

स गच्छन्सर्वतोदिक्कः स्तिमितानिलनोदनम् ।
करोति कर्णाकाशे च प्रयाति श्रुतियोग्यताम् ॥
स च प्रयत्नतीव्रत्वमन्दत्वेन तदात्मकः ।
शब्दे तथाविधज्ञप्तिहेतुतामवलम्बते ॥
स चैष गच्छन्नुद्दामवेगयोगाहितक्रियः ।
शरवद्वेगशान्त्यैव न दूरं गन्तुमर्हति ॥
स मूर्त्तः प्रसरन्मूर्त्तैरपरैः प्रतिरुध्यते ।
कुडयादिभिरितो नास्य श्रुतिर्व्यवहितात्मनः ॥
स वेगगतियोगित्वादागच्छति यतो यतः ।
श्रोता ततस्ततः शब्दमायान्तमभिमन्यते ॥
स तु शङ्खादिसंयोगप्रेर्यमाणः समीरणः ।
शब्दस्यावर्णरूपस्य भवति व्यक्तिकारणम् ॥
यद्वा यद्यपि वर्णात्मा श्रोत्रग्राह्यो न विद्यते ।
तथा ऽपि तत्र शब्दत्वं श्रवणेन ग्रहीष्यते ॥

तदिह न का चिदस्माभिरधिका कल्पना कृता मारुतगतेरस्याः सर्वलोकप्रसिद्धत्वात्कर्णाकाशसंस्कारमात्रमदृष्टं कल्पितं तदपि कार्यार्थापत्तिगम्यत्वान्नापूर्वमिति ।

अपक्षपातिनः सभ्याः सत्यमुत्पश्यपेक्षया ।
शब्दस्य कल्पनामाहुरभिव्यक्तौ लघीयसीम् ॥

तदेवमभिव्यक्तिपक्षे नियतग्रहणोपपत्तेः प्रत्यभिज्ञाप्रत्ययप्रामाण्यान्नित्यत्वमेवोपगन्तव्यम् ।

या त्वनैकान्तिकत्वोक्तिः धीकर्मप्रत्यभिज्ञया ।
प्रत्यक्षे चोद्यमाना ऽसौ दर्शयत्यति मूढताम् ॥
तेनानुमानदोषेण प्रत्यक्षं न हि दूष्यते ।
सिद्धान्तान्तरचिन्ता तु भवेद्भृशमसंगता ॥
निर्बाधं प्रत्यभिज्ञानमस्ति चेद्बुद्धिकर्मणोः ।
तयोरप्यस्तु नित्यत्वं नो चेत्का शब्दतुल्यता ॥

## शब्दनित्यत्वोपसंहारः

तस्मान्नित्यः प्रत्यभिज्ञाप्रभावात्सिद्धः शब्दः पश्यतां तार्किकाणाम् ।
अर्थापत्तिः पूर्वमुक्ता च तस्मिन्नस्थायित्वे युक्तयश्च व्युदस्ताः ॥

अस्ति च वेदे वचनं सिद्धामनुवदति यद् ध्रुवां वाचम् ।
तल्लिङ्गदर्शनादपि नित्यः शब्दो ऽभिमन्तव्यः ॥

शिक्षाविदस्तु पवनात्मकमेव शब्दमाचक्षते तदसमञ्जसमप्रतीतेः ।
अर्हन्मतप्रथितपुद्गलपर्युदासनीत्या च वाय्वयवा अपि वारणीयाः ॥

ये ऽपि स्थूलविनाशदर्शनवशाद् ब्रूयुः क्षणध्वंसिनो
भावाँस्ते ऽपि न शक्नुवन्ति गदितुं शब्दस्य विध्वंसिताम् ।
अन्ते हि क्षयदर्शनात् किल तथा तेषां भ्रमो ऽस्मिन्पुनः
शब्देनान्तपरिक्षयाविति कथं कुम्भादिवद्भङ्गिता ॥

## शब्दनित्यत्वखण्डनोपक्रमः ।

अत्र ब्रूमहे—न खलु भवदभिहितमेतत्प्रमाणद्वयमपि शब्दनित्यतां प्रसाधयितुमर्हति, यावता यदर्थापत्तिरवादि दर्शनस्य परार्थत्वादिति सा क्षीणैवार्थप्रतीतेरन्यथा ऽप्युपपन्नत्वात् , तत्र सादृश्यमप्यनभ्युपगतमेव दूषितमित्यस्थाने क्लिष्टा भवन्तः ।

गत्वादिजातीराश्रित्य सम्बन्धग्रहणादिकः ।
अर्थावगतिपर्यन्तो व्यवहारः प्रसेत्स्यति ॥
ननु गत्वं प्रतिक्षिप्तमेतदेव परीक्ष्यताम् ।
अस्मिन्समाप्यते वादो मर्मस्थानमिदं च नः ॥
प्रतिक्षिप्ते च गत्वादौ नार्थसम्प्रत्ययो ऽन्यथा ।
प्रत्यभिज्ञानभूमिश्च नान्या ऽस्तीति वयं जिताः ॥
सिद्धे तु गत्वसामान्ये तत एवार्थवेदनम् ।
तदेव प्रत्यभिज्ञेयमिति यूयं पराजिताः ॥
तेनान्यत्सर्वमुत्सृज्य वादस्थानकडम्बरम् ।
गत्वादिजातिसिद्ध्यर्थमथातः प्रयतामहे ॥

## प्रत्यभिज्ञोपपादकगत्वादिजातिसमर्थनाय वर्णभेदोपपादनम् ।

तत्रेदं विचार्यताम्—य एव गकारभेदप्रतिभासः स किं व्यञ्जकभेदकृत उत वर्णभेदविषय इति, व्यञ्जकभेदकृते तस्मिन्नेकत्वाद्गकारस्य किंवृत्ति गत्वसामान्यं स्यात् , वर्णभेदविषयत्वे तु तद्भेदसिद्धेरभेदप्रत्ययस्य विषयो मृग्य इति तद्ग्राह्यमपरिहार्यं गत्वसामान्यम् , तदुच्यते नायं व्यञ्जकभेदकृतः गकारभेदप्रत्ययः यदि हि व्यञ्जकभेदाधीन एष भेदप्रतिभासस्तर्हि यरलत्वादिवर्णभेदप्रत्ययो ऽपि तत्कृत एव किमिति न भवति , ततश्च सकलवर्णविकल्पातीतमेकमनवयवं शब्दतत्त्वं वैयाकरणवदभ्युपगन्तव्यम् ।

अथ मनुषे यरलवादीनामितरेतरविभक्तस्वरूपप्रतिभासात् शुकसारिकामनुष्येषु हि वक्तृभेदे सति व्यञ्जकनानात्वसम्भावनया वर्णभेदप्रत्ययस्य तत्कृतत्वं काममाशङ्क्येतापि वक्त्रेकत्वे तु गगनादौ कुतस्तत्कृतो भेदः।

ननु तत्रापि मरुतो भिन्ना एव व्यञ्जकाः मुखं त्वेकं भवतु किं तेन तदपि वा भिन्नमित्येके, उच्यते स तर्हि मरुतां भेदो यरलवादिष्वपि तुल्य इति मा भूत्तेषामपि भेदः।

ननु यरलवानां विशेषप्रतीतिरस्ति गकारे तु सा नास्तीत्युक्तं उच्चारणस्यैव तत्र भेदो नोच्चार्यस्येति, नैतत्सारम्, मा भूदेष विशेष इति प्रतीतिर्भेदबुद्धिस्तु विद्यते एव, अन्या च विशेषबुद्धिरुच्यते अन्या च भेदबुद्धिरिति, विशेषाप्रतिभासे ऽपि क चिद्विच्छेदप्रतीतिदर्शनात्।

नन्वत्रोच्यते—

दृश्यते शाबलेयादिव्यक्तयन्तरविलक्षणा।
वाहुलेयादिगोव्यक्तिस्तेन भेदो ऽस्ति वास्तवः॥
न तु द्रुतादिभेदेन निष्पन्ना सम्प्रतीयते।
गव्यक्तयन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा॥

इति नैतद्युक्तम्, शाबलेयादौ प्रतिव्यक्ति सास्नाखुरककुदाद्यवयववर्त्तिनो विशेषाः प्रतिभासन्ते ते च स्थूलत्वात्सुगमा भवन्ति, यत्र तु तिलतण्डुलकुलत्थादौ प्रतिसिक्थं विशेषा न प्रतिभासन्ते तत्र विशेषप्रतीत्यभावे ऽपि विच्छेदप्रतिभासो विद्यते एव सिक्थात् सिक्थान्तरत्वेन प्रतिभासात्, एवमिहाप्येष गकारविशेष इति प्रतिभासाभावे ऽपि विच्छेदग्रहणाद् गकारनानात्वम्,

ननु तण्डुलादावपि सिक्थात्सिक्थान्तरे विशेषाः प्रतिभासन्ते एव तदप्रतिभासे भेदस्यापि ग्रहोतुमशक्यत्वात्, मैवं वादीः—यत्ने सति चतुरश्रत्रिकोणवर्त्तुलत्वादिविशेषा अप्यमुत्र प्रतिभासिष्यन्ते, प्रयत्नं विना ऽपि तु प्रथमाक्षनिपात एव विच्छेदबुद्धिरुत्पद्यते इति तयैव नानात्वसिद्धिः।

ननु नैवानधिगतविशेषस्य विच्छेदबुद्धिरुत्पत्तुमर्हति इति विशेषबुद्धिरेव विच्छेदबुद्धिः, नैतदेवम, भ्रमणादिकर्मक्षणानां सूक्ष्मविशेषाप्रतिभासे ऽपि विच्छेदप्रतिभासात, ननु तत्रापि विशेषग्रहणं कल्प्यते अन्यथा विच्छेदप्रतीत्यनुपपत्तेः, यद्येवं वर्णष्वपि गगनादौ विच्छेदप्रतीतिदर्शनात्कल्प्यतां विशेषग्रहणम्, नन्वस्त्येव तत् किं त्वौपाधिकः स्फटिके रक्तताप्रत्ययवत्, विषमो दृष्टान्तः स्फटिकस्य शुद्धस्य दृष्टत्वाल्लाक्षाद्युपाधिनिमित्तको रक्तताप्रत्ययः वर्णानां तु नित्यमेवोदात्तादिविशेषवतां प्रतिभासात्तद्रहितानामनुपलब्धेश्च नैसर्गिक एवायं भेदः, तद्यथा बुद्धीनां घटपटादिविषयविशेषशून्यानामसंवेदनात्प्रतिविषयं नानात्वं तथा वर्णानामपि प्रत्युदात्तादिविशेषं नानात्वम्, न च बुद्धिरेकैव

नित्या च विषयभेदोपाधिनिबन्धनस्तद्भेद इति साम्प्रतम्, स्वयमेव बुद्धिजन्म प्रत्यक्षमित्यभिधानात्, अस्माभिश्च बुद्धिनित्यताया उपरिष्टान्निराकरिष्यमाणत्वात्, विषयभेदाच्च तद्भेदाभिधाने विषयस्यापि कुत इदानीं भेदः, बुद्धिभेदादिति चेद् इतरेतराश्रयप्रसङ्गः, तदिमाः स्वत एव भेदवत्यो बुद्धयः विषयाणामपि स्वत इव भेदो भवति स च बुद्धिभिर्ज्ञायते इत्यलमर्थान्तरगमनेन, यथा च शुक्लगुणस्य भास्वरधूसरादिभेदवतो नानात्वं तथा वर्णस्याप्युदात्तादिभेदवतः, शुक्लगुणो ऽप्येक एव आश्रयभेदात्तु तद्भेद इति चेद् अहो रससमारूढो भट्टः।

कर्मैकं बुद्धिरप्येका जगत्येकस्सितो गुणः।
तैश्च तन्नित्यमित्येताः स्त्रीगृहे कामुकोक्तयः॥

अपि चैकात्मवादो ऽप्येवमेवावतरेत्सुखिदुःख्यादिभेदस्य शरीरभेदेनाप्युपपत्तेः, अद्वैतस्य च नातिदवीयानेष पन्था इत्यलमलीकविकत्थनेन, तस्माद् बुद्ध्यादिवत्सर्वदा सविशेषाणामेव वर्णानां ग्रहणान्नानात्वम्, तत्रैतत्स्याद् गगनादावकारोपश्लेषकृत एव भेदप्रत्ययो न स्वरूपभेद इति, तदयुक्तम्, अकारस्यापि भवन्मते भेदाभावात्, अविद्यमाने च तदुपश्लेषे दिग्गजो दिग्गज इति भेदेन प्रतिभासो भवत्येव, तथा च समदः सम्मदः पटः पट्टः आसनम् आसन्नं मलः मल्लः अविकः अविक्कः पतिः पत्तिः पतनं पत्तनमित्यादावपि वर्णभेदप्रतीतिः, अर्थप्रतीतिभेदो ऽपि च दिगजदिग्गजादौ शब्दान्तरनिमित्तको भवितुमर्हति न द्विरुच्चारणकृतः, ग्रन्थाधिक्यादर्थाधिक्यं नोच्चारणभेदात्, शतकृत्वो ऽपि प्रयुक्ते गोशब्दे सास्नादिमदर्थव्यतिरिक्तवाच्यसंप्रत्ययाभावात्, तथा च दिग्गज इति द्विगकारको निर्देश इत्याचक्षते शब्दविदो न द्विर्गकार उच्चारित इति।

ननु गोगुरुगिरिगेहादावज्भेदे ऽपि गकारप्रत्ययानुवृत्तेरेक एवायं गकारः, मैवं वोचः, एष एव हि भेदप्रत्ययो ऽस्माभिरुपदर्शितः, विना ऽपि च अजुपश्लेषं दिग्गजादौ भेदप्रत्ययो वर्णितः, न च वयमभेदप्रत्ययमपह्नुमहे किं तु भेदप्रत्ययस्याप्यबाधितस्य भावादनन्यथासिद्धत्वाच्च गवादिवत्सामान्यविशेषरूपतां ब्रूमः, व्यञ्जकभेदनिबन्धनत्वं तु यरलवादावपि वक्तुं शक्यमित्युक्तमेव।

अपि च शावलेयादिभेदप्रत्ययस्यापि व्यञ्जकभेदनिबन्धनत्वादेक एवासौ स्यात्।

ननु तत्र को व्यञ्जको यद्भेदकृतः पिण्डभेदप्रत्यय इष्यते, आह च—

न पिण्डव्यतिरेकेण व्यञ्जको ऽत्र ध्वनिर्यथा।
पिण्डव्यङ्ग्यैव गोत्वादिजातिर्नित्यं प्रतीयते(१) इति॥

---

(१) श्लोकवार्तिके स्फोटग्रन्थे श्लो० ३६। अत्र शब्दे यथा शब्दव्यतिरेकेण व्यञ्जको ध्वनिर्वर्तते इति तद्भेदकृत एव शब्दभेदव्यवहारस्तथा गवादौ पिण्डव्यतिरे-

तदयुक्तम्, गोत्वजातेर्गत्ववदिदानीं विवादास्पदीभूतत्वात् पिण्डभेदप्रत्ययस्य चक्षुर्व्यापारभेदादप्युपपत्तेः ।

ननु सकृदपि व्यापृतलोचनस्य परस्परविभक्तपिण्डप्रतिभासो भवति, मैवम्, तदानीं गोमात्रप्रतीतिरेष शाबलेय एष बाहुलेय इति तु विशेषग्रहणे चक्षुर्व्यापारभेदो ऽपरिहार्यः, यदि चाद्यगोपिण्डभेदे प्रथमाक्षसन्निपातजा बुद्धिः सुभगतां गता गकारभेदे तर्हि किंकृतमस्या दौर्भाग्यम्, तत्रापि प्रथमश्रोत्रव्यापारवेलायामनवगतव्यञ्जकविभागस्यापि गगनगङ्गादौ गकारभेदः प्रतिभासते एवेत्यलं प्रसङ्गेन ।

## गत्वादिजातिसमर्थनम्—

तदयं वस्तुसंक्षेपः, उपेक्ष्यतां वा सर्वत्र सामान्यविशेषव्यवहारः, इष्यतां वा गोत्वादिवद्गकारभेदवृत्ति गत्वसामान्यम् ।

अत्वमपि गत्ववदप्रत्याख्येयम् इतरेतरविलक्षणानामकाराणां ह्रस्वदीर्घप्लुतादिभेदेन प्रतिभासात्, यः पुनरकारेऽप्यकारप्रत्यभिज्ञानं ब्रूयात्तस्येकारोकारप्रतीतिष्वप्यकारस्यैव ग्रहणप्रसक्तिरक्षत्वाविशेषात्, अथ तदविशेषे ऽपि अवर्णादिवर्णस्य भेद इष्यते स तर्ह्यकारस्य न निह्नोतव्यः, एवं च सत्यरण्यारण्यशब्दाभ्यां भिन्नार्थप्रतीतिरुपपत्स्यते, उदात्तानुदात्तस्वरितसंवृतविवृतादिभेदो ऽपि शब्दविदां प्रत्यक्ष एव गीतज्ञानामिव स्वरग्रामभाषाविभागः, तस्मादष्टादशभेदमकारमाचक्षते, अत्वं च तत्सामान्यमवर्णकुलशब्देन व्यवहरन्तीति प्रतिपद्यन्ते लोका न मरुद्भ्यः, अथ मरुतामपि तथा व्युत्पत्तेरर्थप्रतीतिहेतुत्वं तर्हि व्युत्पत्तिरेव प्रमाणं स्याद् न शब्दः, व्युत्पत्तेरव्यभिचारात् शब्दस्य च व्यभिचारादित्यास्तामेतत् ।

तस्माद्गत्वादिसामान्यैरर्थसंप्रत्ययात्मनः ।
कार्यस्य परिनिष्पत्तेर्न वर्णव्यक्तिनित्यता ॥

अपर आह, तिष्ठतु तावद् दूरत एव गत्वाद्यपरसामान्यं महासामान्यमपि शब्दत्वं वर्णेषु नोपपद्यते ।

व्यक्त्यन्तरानुसंधानं यत्रैकव्यक्तिदर्शने ।
तत्रैकरूपसामान्यमिष्यते तत्कृतं च तत् ॥
गकारश्रुतिवेलायां न वकारावमर्शनम् ।
बाहुलेयपरामर्शः शाबलेयग्रहे यथा ॥

---

केण व्यञ्जको नास्ति इति किं भेदकृतः पिण्डभेदव्यवहारः स्यात् तथा च प्रत्यभिज्ञाबलात् शाबलेयादिषु गोत्वादिसामान्यमभ्युपगन्तव्यं गत्वादिसामान्ये तु मानाभाव इत्यर्थः ।

शब्दः शब्दोऽयमित्येवं प्रतीतिस्त्वप्रयोजिका ।
एषा हि श्रोत्रगम्यत्वमुपाधिमनुरुध्यते ॥

तदेतन्निरनुसंधानस्याभिधानम्, अनुसन्धानप्रत्ययस्य सामान्यसिद्धावप्रयोजकत्वात्, अनुसंधानं हि सारूप्याद्विजातीयेष्वपि भवति गवयग्रहणसमये गोपिण्डानुसंधानवत्, तस्मादबाधितैकरूपप्रत्ययप्रतिष्ठ एव सामान्यव्यवहारः ।

समानबुद्धिग्राह्ये ऽपि सामान्ये ऽवस्थिते क्व चित् ।
भवत्यन्यानुसंधानं क्व चिद्वा न भवत्यपि ॥
तदस्ति खण्डमुण्डादौ पिण्डसारूप्यकारितम् ।
गकारादिषु वर्णेषु तदभावात्तु नास्ति तत् ॥

न तु सामान्याभावात्, न च सारूप्यमेव सामान्यं साङ्ख्यवदभिधातुं युक्तं विजातीयेष्वपि गोगवयादिषु तस्य दृष्टत्वात्, यदि च शब्दः शब्द इत्यनुवृत्तबुद्धेः श्रोत्रगम्यत्वोपाधिकृतत्वमुच्यते तर्हि गवादावप्येकबुद्धेर्वाहदोहाद्येकार्थक्रियाकारित्वनिबन्धनत्वाद् गोत्वादिजातिनिह्नवो बौद्धवन्मन्तव्यः, न चैतदेवम्, तद् गोत्ववच्छब्दत्वमपि न प्रत्याख्येयम् ।

एतेन ब्राह्मणत्वादिसामान्यमपि समर्थितं वेदितव्यम् उपदेशसहायप्रत्यक्षगम्यत्वात्, न चोपदेशापेक्षणादप्रत्यक्षत्वं तस्य भवितुमर्हति गोत्वादिप्रत्ययस्यापि सम्बन्धग्रहणकाले तदपेक्षत्वदर्शनात्, उक्तं च न हि यद् गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षमिति, न चौपाधिकः पैठीनसिपैप्पलादिप्रभृतिषु ब्राह्मणप्रत्ययः उपाधेरग्रहणात्, औपाधिकत्वस्य गोत्वादावपि वक्तुं शक्यत्वात् ।

अपि चोपदेशनिरपेक्षमपि चक्षुः क्षत्रियादिविलक्षणां सौम्याकृतिं ब्राह्मणजातिमवगच्छति इत्येके । तदलमनया कथया ।

## शब्दनित्यत्वसमर्थकयुक्तीनां परिहरणम्—

प्रकृतमुच्यते, गत्वादिभिर्जातिभिरेवार्थसंप्रत्ययोपपत्तेर्यदुक्तं 'नित्यस्तु दर्शनस्य परार्थत्वात्' इति एतदयुक्तम्, एतेन 'सर्वत्र यौगपद्यात्'(१) इत्येतदपि प्रत्युक्तम्, सम्बन्धनियमस्य गत्वादिभ्य एव सिद्धेः,

यदपि संख्याभावात्कृत्वसुच्प्रयोगदर्शनमुदग्राहि तदपि व्यभिचारि ।

कृतं कान्तस्य तन्वङ्ग्या त्रिरपाङ्गविलोकनम् ।
चतुरालिङ्गनं गाढमष्टकृत्वश्च चुम्बनमिति ॥

---

(१) जै० अ० १ पा १ सू० १९ । अयमर्थः गो शब्दे उच्चरिते सर्वगोव्यक्तीनां बोधस्य यौगपद्यादाकृतिवचनत्वं शब्दस्य, न चाकृत्याऽनित्यशब्दस्य शक्तिग्रह इति शब्दस्य नित्यत्वमास्थेयम् । इति विस्तरस्तु मद्रचितजैमिनिसूत्रप्रभायाम् ।

तद्भेदे ऽपि दर्शनात्, अथ तत्र स्त्रीपुंसयोरभेदे चुम्बनादिक्रियामात्रभेद एवेत्युच्यते तथा ऽप्यपूर्वेषु ब्राह्मणेषु भुक्तवत्सु पञ्चकृत्वो ब्राह्मणा भुक्तवन्त इति व्यवहारो दृश्यते।

कविना सदनुप्रासे निबद्धे ऽक्षरडम्बरे।
गकारा बहवो दृष्टा इति व्यवहरन्ति हि॥
यदपि प्रत्यभिज्ञानं तद्‌द्वारकमुदाहृतम्।
तस्यापि सिद्धे प्रामाण्ये जात्यालम्बनता भवेत्॥
नृत्ताभिनयचेष्टादिप्रत्यभिज्ञानतो वयम्।
विशेषं प्रत्यभिज्ञाने न पश्यामो मनागपि॥
शब्दस्य प्रत्यभिज्ञानवेलायामेव दृश्यते।
शब्दरूपस्य विध्वंस इति तन्नित्यता कुतः॥

यद्यपि च क्षणभङ्गभङ्गे प्रत्यभिज्ञाप्रामाण्यमस्माभिरपि समर्थयिष्यते तथा ऽपि स्तम्भादिप्रत्यभिज्ञायाः शब्दप्रत्यभिज्ञाया एष एव विशेषः यदत्र ध्वस्तः शब्द इति तदैव प्रत्ययो जायते अत एव तिरोहिते ऽपि भावादियमप्रमाणं प्रत्यभिज्ञेत्याहुः।

यद्यपि ध्रियते ऽस्माकं शब्दो द्वित्रानपि क्षणान्।
प्रत्यभिज्ञा तु कालेन तावता नावकल्पते॥

तथा हि शब्द उत्पद्यते तावत्ततः स्वविषयं ज्ञानं जनयति अजनकस्य प्रतिभासायोगात् ततस्तेन ज्ञानेन शब्दो गृह्यते ततः संस्कारबोधः ततः पूर्वज्ञातशब्दस्मरणं ततस्तत्सचिवं श्रोत्रं मनो वा शब्दप्रत्यभिज्ञानं जनयिष्यति तथा शब्दो ग्रहीष्यते इतीयत्कुतो ऽस्य दीर्घमायुः, प्रत्यभिज्ञाप्रामाण्यादेव तावदायुस्तस्य कल्प्यते इति चेत्सत्यं कल्प्येत यदि विनाशप्रत्ययस्तदैव न स्यात्, अपि च गोशब्दो ऽयमश्वशब्दो ऽयमिति तदभिधानविशेषोल्लेखात्।

नानानुस्मरणं तस्य तदैवावश्यमापतेत्।
विज्ञानयौगपद्याच्च कालो दीर्घतरो भवेत्॥
यदप्युदितमुद्दाममेघश्यामासु रात्रिषु।
साम्यं सौदामिनीधामजन्यया प्रत्यभिज्ञया॥
तदसत्कालदैर्घ्येण तदवस्थितिसम्भवात्।
विद्युद्दृष्टे च वृत्तादौ नाशसंवित्त्यसम्भवात्॥

प्रत्यभिज्ञा नाम स्मर्यमाणानुभूयमानसामानाधिकरण्यग्राहिणी संस्कारसचिवेन्द्रियजन्या प्रतीतिरिति केचित्।

अन्ये मन्यन्ते स्मर्यमाणपूर्वज्ञानविशेषितार्थग्राहित्वात्प्रत्यभिज्ञायास्तद्विशेषणस्य चार्थस्य बाह्येन्द्रियग्राह्यत्वानुपपत्तेः स्तम्भादावपि मानसी प्रत्यभिज्ञेति।

निर्बन्धस्त्विह नास्माकं सा यथा ऽस्तु तथास्तु वा ।
शब्दे विनाशज्ञानात्तु न सा नित्यत्वसाधिका ॥
बाध्यबाधकभावे तु नियमो ननु किंकृतः ।
शब्दस्य प्रत्यभिज्ञानविनाशप्रतिभासयोः ॥
उच्यते प्रत्यभिज्ञानमन्यथा ऽप्युपपद्यते ।
गत्वादिजातिविषयं यद्वा सादृश्यहेतुकम् ॥
न त्वभिव्यञ्जकध्वंसान्नाशधीरपि सेत्स्यति ।
तदसावपि बाध्या ऽस्तु यद्वा भवतु संशयः ॥
मैवं विनाशिताबुद्धिर्भेदबुद्ध्युपबृंहिता ।
सा चेयं चान्यथासिद्धे इति वक्तुमसाम्प्रतम् ॥
प्रत्यभिज्ञा च सापेक्षा निरपेक्षा त्वभावधीः ।
तेनैवमादौ विषये प्रत्यभिज्ञैव बाध्यते ॥

शब्दाभावस्य ग्रहणात्प्रत्यभिज्ञायाश्च पूर्वानुसन्धानादिसव्यपेक्षत्वात्, अपि च प्रत्यभिज्ञा व्यभिचरति कर्मादिषु गृह्यते तेनास्यां शब्दे ऽप्यभावप्रत्ययोपहतवपुषि कः समाश्वासः, न चेदं प्रत्यक्षे ऽप्यनैकान्तिकत्वोद्भावनम् अपि तु विनाशप्रत्ययप्रतिहतप्रभावा प्रत्यभिज्ञा नित्यत्वं कर्मादिष्विव शब्देपि न साधयितुं प्रभवति इति दृष्टान्तस्य को ऽवसरः, सत्यम् ग्राहिकास्तु भवादृशाः स्वयमनवबुध्यमाना एवं बुद्ध्यन्ते ।

यत्तु प्रवृद्धरभसतया बुद्धिकर्मादावपि नित्यत्वसमर्थनं तदत्यन्तमलौकिकमित्युक्तम् ।

किं नाम शब्दनित्यत्वसमर्थनतृषातुरः ।
जङ्गमं स्थावरं चैव सकलं पातुमिच्छसि ॥

तस्मादलमतिरभसप्रवृत्ताभिराभिर्बुद्धिकर्मादिनित्यत्वसमर्थनकथाभिः ।

## शब्दाभिव्यक्तिपक्षखण्डनम्

यत्पुनरभिव्यक्तिपक्षे शब्दस्य ग्रहणे नियमाभावमाशङ्क्य श्रोत्रसंस्कारेण विषयसंस्कारेणोभयसंस्कारेण वा नियतं ग्रहणमुपवर्णितं तद्वञ्चनामात्रम्, समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादर्शनात्, ये पुनरत्र गन्धा उदाहृताः ते समानेन्द्रियग्राह्या भवन्ति न समानदेशाः ।

एकभूम्याश्रितत्वेन तुल्यदेशत्वकल्पने ।
भवेत्समानदेशत्वं हिमवद्विन्ध्ययोरपि ॥
एकत्वे ऽपि भुवो भान्ति पदार्थाः पार्थिवाः पृथक् ।
व्यज्यन्ते तदधिष्ठाना गन्धास्तैस्तैर्निबन्धनैः ॥

भवन्त्वनाश्रिताः शब्दा यदि वा ऽऽकाशसंश्रिताः ।
सर्वथा भिन्नदेशत्वमेषां वक्तुं न शक्यते ॥

ननु यथैकत्वे ऽपि नभसः तद्भागकल्पनया प्रतिपुरुषं श्रोत्रेन्द्रियभेदः एवं तद्भागकल्पनयैव शब्दानामपि असमानदेशत्वान्नियतव्यञ्जकव्यङ्ग्यता भविष्यति नैवमुपपद्यते यत्रैव वक्तृमुखाकाशदेशे श्रोतृश्रोत्राकाशदेशे वा गोशब्द उपलब्धः तत्रैवाश्वशब्द इदानीमुपलभ्यते न पुनरतिमुक्तकुसुमे य उपलब्धो गन्धः स बन्धूके मधूके वा कदा चिदुपलभ्यते इति ।

तस्मात्समानदेशत्वान्न व्यक्तौ नियमो भवेत् ।
उत्पत्तौ तु व्यवस्थायां तद्भेद उपपद्यते ॥
नादैः संस्क्रियतां शब्दः श्रोत्रं वा द्वयमेव वा ।
सर्वथा नियमो नास्ति व्यञ्जकेष्विति निश्चयः ॥
व्यवस्था व्यञ्जकानां चेदुच्यते ऽदृष्टकारिता ।
उत्पत्तौ दृश्यमानायां दृष्टमप्यविरोधकम् ॥

न च स्तिमितमारुतापनयनव्यतिरिक्तः कश्चन श्रोत्रसंस्कारो विद्यते, तत्र चातिप्रसङ्ग उक्त एवातिरिक्तसंस्कारकल्पनायां त्वदृष्टकल्पना, स्थिरे च शब्दसंस्कारग्रहणमिति पुनरनभिव्यक्तस्यापि गोशब्दस्य श्रवणं स्यात्, तद्ग्रहणहेतोः संस्कारस्य स्थिरत्वात्, तत्क्षणिकत्वे तु शब्दक्षणिकतैव साध्वी प्रतीयमानत्वात्।

यत्तु भर्तृमित्रस्तमेव संस्कारं श्रोत्रेन्द्रियमभ्युपैति तदिदमपूर्वकं किमपि पाण्डित्यम्, इन्द्रियस्य हि संस्कार्यस्य कल्पनमनुपपन्नम्, अनश्वरत्वे तु शश्वदेव शब्दकोलाहलप्रसङ्ग इति यत्किं चिदेतत्, भट्टेनैव सोपहासमेष दूषितः पक्ष इति किमत्र विमर्देन ।

यदपि भट्ट आह—

यदि त्ववश्यं वक्तव्यस्तार्किकोक्तिविपर्ययः ।
ततो वेदानुसारेण कार्या दिक्श्रोत्रतामतिरिति(१) ॥

तदप्यसांप्रतम्—

दिशां कार्यान्तराक्षेपादागमान्यपरत्वतः ।
आहोपुरुषिकामात्रं दिग्द्रव्यश्रोत्रकल्पनम् ॥

इन्द्रियाणां भौतिकत्वस्य साधयिष्यमाणत्वाद्दिशश्चामूर्तत्वान्नेन्द्रियप्रकृतित्वं व्यापकत्वाविशेषे वा कालात्मनोरपि तथाभावप्रसङ्गः, तयोरन्यत्र व्यापारकत्वान्नेन्द्रियप्रकृतित्वमिति चेद् दिग्द्रव्ये ऽपि तुल्यमेतत्, आगमस्त्वन्यपर एव,

---

(१) श्लोकवार्तिके शब्दाधिकरणे श्लो॰ १९० । अध्रिगुप्रैषे संज्ञप्यमानस्य पशोरङ्गानां प्रकृतौ लयः सूर्यं चक्षुर्गमयतादित्यादिना उक्तस्तत्रैव 'दिशःश्रोत्रम्' इति श्रोत्रस्य दिशि लयः प्रतिपादित इतिवेदानुसारेण दिश एव श्रोत्रत्वं नाकाशस्येत्यर्थः ।

यथा हि सूर्यं चक्षुर्गमयताद् दिशः श्रोत्रमिति पठ्यते एवमन्तरिक्षमसूनिति च पठ्यते एव, न चासवो ऽन्तरिक्षप्रकृतिकाः पवनात्मकत्वात् , तस्मात्कृतं दिशा आकाशदेश एव कर्णशष्कुल्यवच्छिन्नः शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धः श्रोत्रमित्युक्तम् ।

ननु धर्माधर्मकृतश्रोत्रनियमवदभिव्यक्तिनियमो ऽपि शब्दस्य तत्कृत एव भविष्यति किमिति तदनियमो नित्यत्वपक्षे चोद्यते इति, नैतद्युक्तम् , चक्षुरादीन्द्रियाणां वैकल्यमदृष्टनिबन्धनमन्धकारप्रभृतिषु दृश्यते न पुनः पदार्थस्थितिरदृष्टवशाद्विपरिवर्तते, व्यञ्जकधर्मातिक्रमे हि हिममपि शैत्यं स्वधर्ममतिक्रामेत् , व्यञ्जकेषु नियमो न दृष्ट इत्युक्तम् , दृष्टे च वर्णभेदे नियतोपलब्धिहेतौ सम्भवति सति किमयमदृष्टमस्तके भार आरोप्यते, कथं चाभिव्यक्तिपक्षे तीव्रमन्दविभागः, तीव्रतादयो हि वर्णधर्मा वा स्युः ध्वनिधर्मा वा वर्णधर्मत्वे तीव्रगकारादन्यत्वं मन्दस्येत्यस्मन्मतानुप्रवेशः ।

ध्वनिधर्मत्वपक्षे तु श्रोत्रेण ग्रहणं कथम् ।
न हि वायुगतो वेगः श्रवणेनोपलभ्यते ॥

यत्तु व्यक्तिधर्माः कृशत्वस्थूलत्वादयो जातावुपलभ्यन्ते इति दर्शितं तत्काममुपपद्येतापि जातेर्व्यक्तेस्तद्धर्माणां च समानेन्द्रियग्राह्यत्वात् ।

इह तु स्पर्शनग्राह्यः पवनो ऽतीन्द्रियो ऽथ वा ।
तद्धर्माः श्रावणे शब्दे गृह्यन्त इति विस्मयः ॥

यत्तु बुद्धिरेव तीव्रमन्दवतीति तदतीव सुभाषितम् , असति विषयभेदे बुद्धिभेदानुपपत्तेः ।

किं च नित्यपरोक्षा ते बुद्धिरेवं च नादवत् ।
तदग्रहान्न तीव्रादितद्धर्मग्रहसम्भवः ॥
अहो तीव्रादयस्तीव्रे प्रपाते पतिता अमी ।
यो गृह्यते न तद्धर्मो यद्धर्माः स न गृह्यते ॥
यश्चाभिभववृत्तान्तस्त्वन्मते मरुतामसौ ।
अनिले चाभिभूते ऽपि शब्दो न श्रूयते कथम् ॥
दीपे ऽभिभूते रविणा न हि रूपं न गृह्यते ।
नियतव्यञ्जकत्वं तु प्रतिक्षिप्तमदर्शनात् ॥
यत्तु शङ्खादिशब्दानां श्रोत्रग्राह्यत्वसिद्धये ।
शब्दत्वं तत्र तद्ग्राह्यमित्यवादि तदप्यसत् ॥
सत्यं वदत दृष्टं वा श्रुतं वा क्व चिदीदृशम् ।
आश्रयस्य परोक्षत्वे तत्सामान्योपलम्भनम् ॥

शब्दो न ते ऽस्त्य(स्ति)वर्णात्मा न शङ्को(ब्दो)वर्णसम्भवः ।
न नादवृत्ति शब्दत्वमिति तद्ग्रहणं कथम् ॥

## अभिव्यङ्ग्यशब्दपक्षापेक्षया कार्यशब्दपक्षे लाघवम् ।

यत्पुनरिदं सन्धारितं व्यङ्ग्यकार्यपक्षयोः क शब्दग्रहणे गुर्वी कल्पना भवति क वा लघ्वीति तदपि मौलप्रमाणविचारसापेक्षत्वादप्रयोजकम् ।

यदि मौलप्रमाणेन साधिता नित्यशब्दता ।
त्वदुक्ता कल्पना साध्वा मदुक्ता तु विपर्यये ॥

कोष्ठ्येन च बहिः प्रसरता समीरणेन सर्वतः स्मिमितमारुतापसरणं क्रियते इत्येतदेव तावदलौकिकं कल्पितम्, "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति(१) मरुतां तिर्यग्गमनस्वभावत्वादूर्ध्वमधश्च शब्दश्रवणं न भवेत् ।

यावन्न वेगिना ऽन्येन प्रेरितो मातरिश्वना ।
तावन्नैसर्गिको वायुर्न तिर्यग्गतिमुज्झति ॥
अधोमुखप्रयुक्तो ऽपि शब्द ऊर्ध्वं प्रतीयते ।
उत्तानवदनोक्तो ऽपि नाधो न श्रूयते च सः ॥
कदम्बगोलकाकारशब्दारम्भो हि सम्भवेत् ।
न पुनर्दृश्यते लोके तादृशी मरुतां गतिः ॥
आकण्ठानद्धनीरन्ध्रचर्मावृतमुखोदितः ।
शब्दो यः श्रूयते तत्र न कोष्ठ्यानिलसर्पणम् ॥

कुड्यादिप्रतिबन्धेन वायोरप्रसरणं भवद्भिरपि कथितमेव निर्विवरचर्मपुटोपरुद्धो ऽप्यसौ न प्रसरेत् ।

अपि च सर्वतोनिरुद्धनवद्वारस्यापि जठरे गुरगुराशब्दो मन्दाग्नेः श्रूयते अत्र कुतो व्यञ्जकानां कोष्ठ्यपवनानां निस्सृतिः, रोमकूपनिस्सृतानामपि सूक्ष्मतया स्तिमितबाह्यवाय्वपसरणसामर्थ्याभावः, किं च मनागपि बहिर्वायौ वाति न शब्दश्रवणं स्यादिति दुर्बलो ऽपि बाह्यः पवनः प्रबलादपि कोष्ठ्यवायोर्बलीयान्भवतीति कथं तेनापसार्येत, अन्ये एव सूक्ष्मा वायवः शब्दावरणकारिणो न पुनरेते परिदृश्यमानाः श्यामाः श्यामाकलतालास्योपदेशिनो मातरिश्वान इति चेन्न, विशेषे प्रमाणाभावात् यं च सूक्ष्मा अपि वायवः तिरोदधति तं सुतरां बलीयांसो ऽपि विवृणुयुरिति यत्किं चिदेतत्, तस्मात्सजातीयशब्दसन्तानारम्भपक्ष एव युक्त्यनुगुणः, तथा हि सजातीयगुणारम्भिणो गुणास्तावद्दृश्यन्ते एव रूपादयः, अमूर्ता ऽपि च बुद्धिर्बुध्यन्तरमारभमाणा दृश्य-

---

(१) वैशेषिकसूत्रम् अ० ५ आ० २ सू० १४ ।

ते देशान्तरे ऽपि सैव कार्यमारभते पथि गच्छतो देवदत्तादेरेकस्मादात्मप्रदेशात्प्रदेशान्तरे बुद्ध्युत्पाददर्शनात्, कार्यारम्भविरतिरपि भवति अदृष्टाधीनसंसर्गाणां सहकारिणामनवस्थानात्।

तीव्रेणापि शनैरेवमतीव्रारम्भसम्भवः।
सीदत्सचिवसामर्थ्यसापेक्षक्षीणवृत्तिना॥
वीचीसंतानदृष्टान्तः किं चित्साम्यादुदाहृतः।
न तु वेगादिसामर्थ्यं शब्दानामस्त्यपामिव॥

यत्तु कुड्यादिव्यवधाने किमिति विरमति शब्दसन्तानारम्भ इति, नैष दोषः, निरावरणस्य हि व्योम्नः शब्दारम्भे समवायिकारणत्वं तथा दर्शनात्कल्प्यते नाकाशमात्रस्येति।

## शब्दस्य गुणत्वसाधनम्।

यदपि गुणत्वमसिद्धं शब्दस्येति तत्र केचिदाश्रितत्वाद् गुणत्वमाचक्षते, तदयुक्तम्—

आश्रितत्वं गुणत्वे हि न प्रयोजकमिष्यते।
षण्णामपि पदार्थानामाश्रितत्वस्य सम्भवात्॥
दिक्कालपरमाण्वादिनित्यद्रव्यातिरेकिणः।
आश्रिताःषडपीष्यन्ते पदार्थाः कणभोजिना॥

न च व्योमाश्रितत्वमपि शब्दस्य प्रत्यक्षमप्रत्यक्षे नभसि तदाश्रितत्वस्याप्यप्रत्यक्षत्वात्।

कथमाधारपारोक्ष्ये शब्दाप्रत्यक्षतेति चेत्।
यथैवात्मपरोक्षत्वे बुद्ध्यादेरुपलम्भनम्॥

एतदेवासिद्धमिति चेद् अलं वादान्तरगमनेन उपरिष्टान्निर्णेष्यमाणत्वात्, किमेतर्हि शब्दस्य गुणत्वे प्रमाणं परिशेषानुमानमिति ब्रूमः, प्रसक्तयोर्द्रव्यकर्मणोः प्रतिषेधे सामान्यादावप्रसङ्गाच्च गुण एवावशिष्यते शब्दः, कथं पुनः न द्रव्यं शब्दः एकद्रव्यत्वात्, अद्रव्यं वा भवति द्रव्यम् आकाशपरमाण्वादि अनेकद्रव्यं वा द्व्यणुकादि कार्यद्रव्यम, एकद्रव्यं तु शब्दः एकाकाशाश्रितत्वात् तस्मान्न द्रव्यम्, नापि कर्मशब्दः शब्दान्तरजनकत्वात्, कर्मणो हि समानजात्यारम्भकत्वं नास्ति सत्ताशब्दत्वादिसामान्यसम्बन्धाच्च सामान्यादित्रयप्रसङ्गो ऽस्य नास्तीति पारिशेष्याद् गुण एव शब्दः।

ननु गुणत्वासिद्धौ सत्यामाकाशाश्रितत्वं शब्दस्य भविष्यति गुणस्य द्रव्यानाश्रितस्यादर्शनात पृथिव्यादीनां च शब्दाश्रयत्वानुपपत्तेः, ततश्च गुणत्वे सत्येकद्रव्यत्वम् एकद्रव्यत्वे सति गुणत्वमितीतरेतराश्रयत्वम्, तथा च समानजा-

तीयारम्भकत्वमपि गुणत्वसिद्धिमूलमेव, गुणत्वे सति शब्दस्याकाशाश्रितत्वात्तदात्मकेन श्रोत्रेण ग्रहणं तच्च देशान्तरगतसंयोगविभागप्रभवस्य शब्दस्य सन्तानमन्तरेण श्रोत्रदेशप्राप्त्यभावान्न सिद्ध्यतीति गुणत्वसिद्धिमूला सन्तानकल्पना सन्तानकल्पनायां च समानजात्यारम्भकत्वात्कर्मव्यवच्छेदे सति गुणत्वसिद्धिरितीतरेतराश्रयत्वमेव,

उच्यते, नोभयत्राप्येष दोषः श्रोत्रग्राह्यत्वादेव शब्दस्याकाशाश्रितत्वं कल्प्यते समानजातीयारम्भकत्वं च गुणत्वात्, आकाशैकदेशो हि श्रोत्रमिति प्रसाधितमेतत्, प्राप्यकारित्वं चेन्द्रियाणां वक्ष्यते, न चाकाशानाश्रितत्वे शब्दस्य श्रोत्रेण प्राप्तिर्भवति न चाप्राप्तस्य ग्रहणमिति तदाश्रितत्वं कल्प्यते, एवं समानजातीयारम्भकत्वमपि तत एव श्रावणत्वात् दूरवर्त्तिनः शब्दस्य श्रवणे सति कल्प्यते न तु गुणत्वादिति नेतरेतराश्रयत्वम्, कार्यत्वादाकाशाश्रितत्वं कल्प्यते इत्येके ।

ननु कार्यत्वादप्याकाशाश्रितत्वकल्पनायां तदवस्थमेवेतरेतराश्रयं कार्यत्वादाकाशाश्रितत्वमाकाशाश्रितत्वे सति नियतग्रहणपूर्वं पूर्वरीत्या कार्यत्वमिति, नैतदेवम्, भेदविनाशप्रतिभासाभ्यामेव कार्यत्वसिद्धेः, किमर्थस्तर्हि नियतग्रहणसमर्थनायायमियान्प्रयासः क्रियते, नियतग्रहणमपि कार्यपक्षानुगुणमिति दर्शयितुं न पुनरेषैव कार्यत्वे युक्तिरित्यलं सूक्ष्मेक्षिकया ।

अपर आह परिस्पन्दविलक्षणस्य प्रत्यक्षत्वादकर्मत्वं शब्दस्य साध्यते न समानजात्यारम्भकत्वादितीतरेतराश्रयस्पर्शोऽपि नास्तीति, तस्मात्सर्वथा परिशेषानुमानाच्छब्दस्य गुणत्वसिद्धिः, कथं तर्ह्यस्य महत्त्वादियोगो निर्गुणा गुणा इति काणादाः, अस्ति हि प्रतीतिर्महान् शब्द इति, समानजातीयगुणाभिप्रायं तत्कणादवचनमिति न दोषः, तस्मादाकाशगुणः, शब्दः । अपि च—

यथाऽऽत्मगुणता होच्छाद्वेषादेरुपपत्स्यते ।
शब्दो नयेन तेनैव भविष्यति नभोगुणः ॥

ये तु समानजातीयशब्दारम्भकत्वनिषेधहेतवः शब्दत्वाक्षित्यादयः परैरुपन्यस्ताः तेषामप्रयोजकत्वान्न साधनत्वम् ।

इत्थं सन्तानवृत्त्या च शब्दग्रहणसम्भवे ।
कल्पनाऽल्पतराऽस्माकं न शब्दव्यक्तिवादिनाम् ॥
शाक्यकापिलनिर्ग्रन्थग्रथितप्रक्रियाम्प्रति ।
यत्तु दूषणमाख्यातमस्माकं प्रियमेव तत् ॥

तस्मात्कार्यपक्षे नियतग्रहणोपपत्तेः अभिव्यक्तिपक्षे च तदभावात्कार्य एव शब्द इति स्थितम्, तदिदमुक्तं सूत्रकृता 'आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुप-

चाराच्चानित्यः शब्द' इति(१)। आदिमत्त्वादिति संयोगविभागादीनां शब्दे कारकत्वं न व्यञ्जकत्वमिति दर्शितम्, अतश्च न प्रयत्नानान्तरीयकत्वमनैकान्तिकम्, ऐन्द्रियकत्वादिति, कार्यपक्षे एव शब्दस्य नियतं ग्रहणमित्युक्तम् , प्रतिपुरुषं प्रत्युच्चारणं च शब्दभेदस्यैन्द्रियकत्वादिति वा हेत्वर्थः, तेन प्रत्यभिज्ञादुराशा श्रोत्रियाणामपाकृता भवति, कृतकवदुपचारादिति तीव्रमन्दविभागाभिभवादिव्यवहारदर्शनात्सुखदुःखादिवदनित्यः शब्द इति दर्शितम् , तथा "प्रागुच्चारणादनुपलब्धेः आवरणाद्यनुपलब्धेश्च" इत्यनेन(२) सूत्रेण शब्दाभावकृतमेव तदग्रहणमिति, न हि स्तिमिता वायवः शब्दमावरीतुमर्हन्ति मूर्त्तं हि मूर्त्तेन व्यवधीयते नामूर्तमाकाशादिवत्, न च प्रकृत्यैवाकाशादिवदतीन्द्रियः शब्दः, तस्मात्क्षणिकप्रतीतेस्तत्कालमेव शब्दस्यावस्थानमित्यस्थानहेतो(३)रपि नान्यथासिद्धत्वम् , वार्त्तिककृता(४) शब्दानित्यत्वे साधनमभिहितम् अनित्यः शब्दो जातिमत्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वाद् घटवदिति ।

यत्त्वत्र जातीनामपि जातिमत्त्वादनैकान्तिकत्वमुद्भावितम् 'एकार्थसमवायेन जातिर्जातिमती यत' इति तदत्यन्तमनुपपन्नम्, निस्सामान्यानि सामान्यादीनीति सुप्रसिद्धत्वात्, न हि घटे घटत्वपार्थिवत्वे स्त इति घटत्वसामान्ये ऽपि पार्थिवत्व सामान्यमस्तीति शक्यते वक्तुम् , अतो निरवद्य एवायं हेतुः,तेन यदुच्यते—

जातिमत्त्वैन्द्रियत्वादिवस्तुसन्मात्रबन्धनम् ।
शब्दानित्यत्वसिद्ध्यर्थं को वदेद्यो न तार्किक इति ॥

तदविदिततार्किकपरिस्पन्दस्य व्याहृतम्, इह त्वप्रयोजका हेतवो भवन्ति ।

ह्यस्तनोच्चारितस्तस्माद्गोशब्दो ऽद्यापि वर्त्तते ।
गोशब्दज्ञानगम्यत्वाद्यथोक्तो ऽद्यैष गौरिति(५) ॥
विज्ञानग्राह्यता नाम वस्तुस्वाभाव्यबन्धना ।
नित्यत्वे कृतकत्वे वा न खल्वेषा प्रयोजिका ॥
अप्रयोजकता चैवंप्रायाणां चैवमुच्यते ।
स्वयं चैते प्रयुज्यन्ते हेतुत्वेनेति किं त्विदम् ॥

---

(१) गौतमसूत्रम् अ.२ आ. २ सू. १४ ।

(२) गौतमसूत्रम् । अ. २ आ. २ सू. १९ ।

(३) कूपपूरणयत्नेन खं तिरोधीयते यदा । अस्थानादित्ययं हेतुस्तदानैकान्तिको भवेत् । आकाशधीप्रबन्धो हि तदा तस्मिन्न तिष्ठति ॥३४॥ तिरोहितानभिव्यक्तेः शब्दबुद्धिप्रबन्धवत् । इतिश्लोकवार्तिके शब्दनित्यताप्रकरणे ।

(४) औद्योतकरे न्यायवार्तिके अ. २ आ. २ सू. १४ शब्दत्वे व्यभिचारवारणाय सत्यन्तम् । आत्मनिव्यभिचारवारणाय बाह्येति ।

(५) श्लोकवार्तिके शब्दनित्यताप्रकरणे ४१६ श्लो० ।

एवं नित्यत्वे दुर्बलो युक्तिमार्गः
तस्मान्मन्तव्यः कार्य एवेति शब्दः ।
वाचोयुक्तित्वे वैदिको यो ऽनुवादः
न्याये प्रयुक्ते किंफलस्तत्प्रयोगः ॥

क्षणिभङ्गिभावस्याभावादपि शब्दस्य क्षणिकतां न वक्तुमलम् । स्थूलविनाशभावादिति यदुक्तं तदपि नृत्तम् ।

सूक्ष्मविनाशापेक्षी नाशः स्थूलस्थिरस्य कुम्भादेः ।
प्रकृतितरलस्य नाशः शब्दस्य स एव हि स्थूलः ॥
सत्त्वाद्यदि क्षणिकतां कथयेत्पुरो वा
शब्दस्तदैष कथमक्षणिको ऽभिधेयः ।
युक्त्यन्तराद्यदि तदेव हि तर्हि चिन्त्यं
किं प्रौढिवादबहुमानपरिग्रहेण ॥
अलमतिविततोक्त्या त्यज्यतां नित्यवादः
कृतक इति नयज्ञैर्गृह्यतामेष शब्दः ।
सति च कृतकभावे तस्य कर्त्ता पुराणः
कविरविरलशक्तिर्युक्त एवेन्दुमौलिः ॥

**इति श्रीजयन्तभट्टविरचितायां न्यायमञ्जर्यां तृतीयमाह्निकम् ।**

---

## वेदानां पौरुषेयत्वम् ।

एवं कृतकत्वे वर्णानां साधिते सति वर्णात्मनः पदात्प्रभृति सर्वत्र पुरुषस्य स्वातन्त्र्यं सिद्धं भवति ।

पदनित्यत्वपक्षे ऽपि वाक्ये तद्रचनात्मके ।
कर्तृत्वसम्भवात्पुंसो वेदः कथमकृत्रिमः ॥

तथा च वैदिक्यो रचनाः कर्तृपूर्विकाः रचनात्वाल्लौकिकरचनावत्, एष च पञ्चलक्षणो हेतुः प्रयोजकश्चेति गमक एव न हेत्वाभासः, न तावदयमसिद्धो हेतुः 'शन्नो देवीरभीष्टये' इत्यादिषु वेदवाक्यसन्दर्भेषु पदरचनायाः स्वरक्रमादिविशेषवत्याः प्रत्यक्षत्वेन पक्षे हेतोः वर्तमानत्वात्, नापि विरुद्धः कर्तृत्ववति सपक्षे कुमारसम्भवादौ रचनात्वस्य विद्यमानत्वात्, नाप्यनैकान्तिकः कर्तृरहितेषु गगनादिषु गगनकुसुमादिषु वा रचनाया अदृष्टत्वात्, नापि कालात्ययापदिष्टः, प्रत्यक्षेणागमेन वा वेदे वक्त्रभावनिश्चयानुत्पादात्, नापि सत्प्रतिपक्षः प्रकरणचिन्ताहेतोः स्थाणुपुरुषविशेषानुप-

लब्धेरिव हेतुत्वेनानभिधानात्, नापि परमाण्वनित्यतायामिव मूर्त्तत्वमप्रयोजकमिदं साधनं रचनाविशेषाणां कर्त्तृव्यापारसाध्यत्वावधारणात, यथा धूमस्य ज्वलनाधीन आत्मलाभो ज्ञप्तिस्तु धूमादग्नेः तथेह कर्त्रधीना रचनानामभिनिर्वृत्तिः प्रतीतिस्तु ताभ्यः कर्त्तुरिति, तस्मात्प्रयोजक एवायं हेतुः।

## वेदापौरुषेयत्वहेतुनिरासः

ननु सत्प्रतिपक्षत्वे विवदन्ते च तथा च मीमांसकैः प्रतिहेतुरिह गीयते।

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनवाच्यत्वादधुना ऽध्ययनं यथा॥ इति।

नैतद्युक्तम्, एवंप्रायाणां प्रयोगाणामप्रयोजकत्वात्, न हि तच्छब्दवाक्यत्वकृतमनादित्वमुपपद्यते, अनैकान्तिकश्चायं हेतुर्भारते ऽप्येवमभिधातुं शक्यत्वात, भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकं भारताध्ययनवाच्यत्वादिदानींतनभारतध्ययनवदिति,

ननु भारते कर्त्तृस्मृतिरविगीता विद्यते यद्येवं वेदे ऽपि प्रजापतिः कर्त्ता स्मर्यते एव, अथ वैदिकमन्त्रार्थवादमूलेयं प्रजापतिस्मृतिः प्रजापतिना चत्वारो वेदा असृज्यन्त चत्वारो वर्णाश्चत्वार आश्रमा इति तत्र पाठादिति,

उच्यते, हन्त तर्हि भारते ऽपि तत्र वचनमूलैव पाराशर्यस्मृतिरिति शक्यते वक्तुम्।

यथा प्रजापतिर्वेदे तत्र तत्र प्रशस्यते।
भारते ऽपि तथा व्यासस्तत्र तत्र प्रशस्यते॥
अथ प्रणेता वेदस्य न दृष्टः केन चित्क चित्।
द्वैपायनो ऽपि किं दृष्टो भवत्पितृपितामहैः॥
सर्वेषामविगीता चेत् स्मृतिः सत्यवतीसुते।
प्रजापतिरपि स्रष्टा लोके सर्वत्र गीयते॥

आः किमिति सदसद्विवेकविकलशाकटिकादिप्रवादविप्रलब्ध एवं भ्राम्यसि किल स्वल्पमपि कर्म पित्रा मात्रा वोपदिश्यमानं तद्वचनप्रत्ययादनुष्ठीयते तदयमियाननेकक्लेशवित्तव्ययादिनिर्वर्त्यो वैदिकः कर्मकलाप एवमेव तदुपदेशिनमाप्तमस्मृत्वैव क्रियते इति महान्प्रमादः, एवं चोच्चावचकविरचितजरत्पुस्तकलिखितकाव्यवदस्मर्यमाणकर्तृकेण वेदेन व्यवहारानुपपत्तेरवश्यस्मरणीयस्तत्र कर्त्ता स्यात्, न च कदा चन वेदेषु व्यवहारविच्छेदः संभाव्यते येन तत्कृतं जरत्कूपारामादिष्विव तेषु कर्त्रस्मरणं स्यात्, तस्मादवश्यं स्मर्येत कर्त्ता न च संस्मर्यते स्मर्त्तुं शक्यते वा, स्मृतिर्हि भवन्ती तदनुभवमूला भवति न च मूले ऽपि कर्त्रनुभवः कस्य चिज्जातः सर्गादेरभावात्, भावे वा कर्त्तुरशरीरत्वेन दर्शनयोग्यत्वाभावात्।

सशरीरत्वपक्षे वा पुरुषः को ऽपि तादृशः ।
तदानीं दृश्यमानो ऽपि वेदं कुर्वन्न दृश्यते ॥
अधीयमाने दृष्टे ऽस्मिँस्तदा संशेरते जनाः ।
किमेष रचयेद्वेदमुत वा ऽन्यकृतं पठेत् ॥
यत्कृतं वा पठेदेष तस्मिन्नपि हि संशयः ।
भङ्गचा चेदमनादित्वमुन्मीलदिव दृश्यते ॥
असत्यादिप्रमाणे च कर्तृताऽनुभवं प्रति ।
स्मृतिः प्रबन्धसिद्धा ऽपि स्पृशत्यन्धपरम्पराम् ॥
योगिभिर्ग्रहणं कर्तुरित्येतदपि दुर्वचम् ।
कर्तृता हृदि दुर्बोधा कथं गृह्येत तैरपि ॥
योगिभिः सा गृहीतेति वयमेतन्न मन्महे ।
असन्वानाश्च गच्छेम विस्रब्धास्तत्पथं कथम् ॥
वेदात्कर्त्रवबोधे तु स्पष्टमन्योन्यसंश्रयम् ।
ततो वेदप्रमाणत्वं वेदात्कर्तुश्च निश्चयः ॥

तस्मात्पौर्वापर्यपर्यालोचनारहितयथाश्रुतमन्त्रार्थवादमूला भ्रान्तिरेषा न पुनः परमार्थतः कश्चित्कं चिद्वेदस्य कर्तारं स्मरति, तस्मादकृतका वेदाः, अवश्यस्मरणीयस्यापि कर्तुरस्मरणात्, न च व्यधिकरणो हेतुरस्मर्यमाणकर्तृकत्वादित्येवं साधनप्रयोगात्,

अत्रोच्यते, अपि तद्गुर्वध्ययनपूर्वकत्वं साधनमुपेक्षितं याज्ञिकैः अयमभिनवो हेतुरस्मर्यमाणकर्तृकत्वादिति प्रयुक्तः, तस्मादस्तु नाम नैनान् हेत्वन्तरोपन्यासिनो निगृह्णीमः, अक्षुद्रकथेयं प्रस्तुता अयमपि त्वस्मर्यमाणकर्तृकत्वादिति हेतुः किं स्वतन्त्र एवाकर्तृकत्वसिद्धये प्रयोज्यते उतास्मदुपचरितरचनात्वप्रतिघातायेति, तत्र न तावदनुमानमनुमानान्तरपरिपन्थि कथयितुमुचितम्, प्रत्यक्षागमवदनुमानस्याप्यनुमानबाधकत्वानुपपत्तेः, न हि तुल्यबलयोरनुमानयोर्बाध्यबाधकभावस्तुल्यबलत्वादेव, अतुल्यबलत्वे तु यत्कृतमन्यतरस्य दौर्बल्यं तत एव तदप्रामाण्यसिद्धेः किमनुमानबाधया, तद्विडम्बनार्थं तदभिधानमिति चेत् तदप्ययुक्तम्, एकत्र धर्मिणि युगपदितरेतरविरोधिधर्मद्वयप्रयोजकहेतुद्वयोपनिपातायोगात्, न हि द्व्यात्मकानि वस्तूनि भवितुमर्हन्ति इत्यवश्यमन्यतरस्तत्राप्रयोजकहेतुरप्रयोजकत्वादेव तस्यागमकत्वे किं विडम्बनार्थेन, हेत्वन्तरेण प्रयुक्तेन विरुद्धाव्यभिचार्यपि नाम न कश्चिद्धेत्वाभास इति वक्ष्यामः, प्रकरणसमो ऽपि न यः कश्चित्सत्प्रतिपक्षो हेतुरिष्यते ऽपि तु संशयबीजभूतो ऽन्यतरविशेषानुपलम्भे भ्रान्त्या हेतुत्वेन प्रयुज्यमानस्तथोच्यते इति दर्शयिष्यामः, तस्मात्परोदीरितं हेतुं निराचिकीर्षिता

वादिना तद्गतपक्षवृत्तितादिधर्मपरीक्षणे मनः खेदनीयम् , न हि प्रतिहेतुत्वा- न्वेषिणा धृथाऽटाट्या कर्त्तव्या ।

ननु कतरदनयोः साधनयोरप्रयोजकं रचनात्वादस्मर्यमाणकर्तृकत्वादिति च, उच्यते, रचनात्वमेव प्रयोजकं न हि पुरुषमन्तरेण क चिदक्षरविन्यासो दृष्टः ।

भो भगवन्तः सभ्याः केदं दृष्टं क वा श्रुतं लोके ।
यद्वाक्येषु पदानां रचना नैसर्गिकी भवति ॥
यदि स्वभाविकी वेदे पदानां रचना भवेत् ।
पटे हि हन्त तन्तूनां कथं नैसर्गिकी न सा ॥

शन्नो देवीरभिष्टये, नारायणं नमस्कृत्य, अस्त्युत्तरस्यां दिशि देवतात्मा, इति तुल्ये रचनात्वे क चित्कर्तृपूर्वकत्वमपरत्र तद्विपर्य्यय इति महान् व्यामोह एवं धूमोपि कश्चिदग्निमान् कश्चिदनग्निक इत्यपि स्यात् , किमिदानीं कुमारसम्भव- तुल्यो ऽसौ वेदः सम्पन्नः, अहो सर्वास्तिकधुर्येण वेदप्रामाण्यं साधितं नैया- यिकेन, अलमुपहासेन रचनामात्रमेव तुल्यं वेदस्य कुमारसम्भवेन नान्यत् , न चेयतोपहसितुं युक्तम्, किमस्य शब्दत्वं सामान्यं शङ्खशब्दसाधारणं नास्ति सत्तासामान्यं वा सर्वसाधारणमिति ।

ननु याः कालिदासादिरचनाः कर्तृपूर्विकाः ।
ताभ्यो विलक्षणैवेयं रचना भाति वैदिकी ॥
इहाध्ययनवेलायां रूपादेव प्रतीयते ।
अकृत्रिमत्वं वेदस्य भेदैस्तैस्तैरनन्यगैः ॥
नामाख्यातोपसर्गादिप्रयोगगतयो नवाः ।
स्तुतिनिन्दापुराकल्पपरकृत्यादिनीतयः ॥
शाखान्तरोक्तसापेक्षविक्षिप्तार्थोपवर्णनम् ।
इत्यादयो न दृश्यन्ते लौकिके सन्निबन्धने ॥
तेनाध्येतृगणाः सर्वं रूपाद्वेदमकृत्रिमम् ।
मन्यन्ते एव लोके तु पीतं मीमांसकैर्यशः ॥
वेदा न पठिता यैस्तु त्वादृशैः कुण्ठबुद्धिभिः ।
कार्यत्वं ब्रुवते तेऽस्य रचनासाम्यमोहिताः ॥

उच्यते, मीमांसका यशः पिबन्तु पयो वा पिबन्तु बुद्धिजाड्यापनयनाय ब्राह्मीघृतं वा पिबन्तु वेदस्तु पुरुषप्रणीत एव नात्र भ्रान्तिः ।

यथा घटादिसंस्थानाद्भिन्नमप्यचलादिषु ।
संस्थानं कर्तृमत्सिद्धं वेदे ऽपि रचना तथा ॥

यच्चात्र किं चिद्वक्तव्यं तत्पूर्वमेव सविस्तरमुक्तम् , अपि च यद्विलक्षणेयं रचना तद्विलक्षण एव कर्ता ऽनुमीयतां न पुनस्तदपलापो युक्त इत्यप्युक्तम्,

याश्चैता निर्विवादसिद्धकर्तृकाः कालिदासादिरचनाः चमत्कारिण्यः तासामन्योन्यविसदृशं रूपमुपलभ्यते एव ।

अमृतेनेव संसिक्ताश्चन्दनेनेव चर्चिताः ।
चन्द्रांशुभिरिवोद्घृष्टाः कालिदासस्य सूक्तयः ॥

प्रकटरसानुगुणविकटाक्षररचनाचमत्कारितसकलकविकुला बाणस्य वाचः, प्रतिकाव्यं च तानि तानि वैचित्र्याणि दृश्यन्ते एव, नामाख्यातादिवैचित्र्यमात्रेण कर्त्रभावो वेदे रूपादेव प्रतीयते इति नूतनेयं वाचोयुक्तिः, अपि च यदि रूपे समाश्वसिति भवतो मनः तदादिमदर्थाभिधानमपि वेदस्य रूपं कथं न परीक्षसे 'बबरः प्रावाहणिरकामयत' 'कुसुरविन्दः औद्दालकिः अकामयत पुरूरवो मा मृथा' इति, प्रतिसर्गं पुनस्तेषां भावादनादित्वमिति चेत्प्रतिसर्गं तर्हि वेदान्यत्वमपि भविष्यति यथोक्तम्—"प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इति—

रूपादकृत्रिमत्वं च कल्पना कल्पितैव सा ।
आदिमद्वस्तुबुद्धिस्तु वाचकैरक्षरैः स्फुटैः ॥

तेषामन्यथा व्याख्यानं तु व्याख्यानमेव पठन्त एव त्वध्येतारस्तत आदिमतो ऽर्थान्बहूनवगच्छन्तीति नानादिर्वेदः, तस्मान्न रचनात्वमप्रयोजकम् ।

कर्त्रस्मरणमेव त्वप्रयोजकमसिद्धत्वात्, सिद्धमपि वा वेदे कर्त्रस्मरणमन्यथासिद्धं वेदकरणकालस्यातिदवीयस्त्वात्, तत्प्रणेतुश्च पुंसः सकलपुरुषविलक्षणत्वान्नियतशरीरपरिग्रहाभावादिदन्तयाऽस्य पाणिनिपिङ्गलादिवत्स्मरणं नास्ति न तु स नास्त्येवानुमानागमाभ्यां तदवगमात्, कथं पक्षधर्मतया ग्रहीतु शक्यते कर्त्रस्मरणं तद्धयेतत्पुरुषसम्बन्धि व्यभिचरति सर्वपुरुषसम्बन्धि तु दुरवगमम्, सर्वे पुमांसः कर्त्तारं वेदस्य न स्मरन्तीति कथं जानाति भवान्न हि तव सकललोकहृदयानि प्रत्यक्षाणि सर्वज्ञत्वप्रसङ्गात्, न च यत्त्वं न जानासि तदन्यो ऽपि न जानातीति युक्तम् अतिप्रसङ्गात्, तस्मादस्मर्यमाणकर्तृकत्वं दुर्बोधमेव, अपि च कर्तुरस्मरणे सति सुतरां वेदार्थानुष्ठानं प्रेक्षावतां शिथिलीभवेन्न ह्यकर्तृक एवोपदेशः सम्भवति सम्भवन्नपि वा प्रामाण्यनिश्चयनिमित्ताभावात्कथं विस्रम्भभूमिरसौ भवेत्, बाधकाभावमात्राच्च न प्रामाण्यनिश्चयो वचसामित्युक्तं प्राक्, तस्मादाप्तप्रत्ययादेव निर्विचिकित्सं वेदार्थानुष्ठानं सप्रतिष्ठानां सम्भवति नान्यथेति, तस्मान्न कर्त्रस्मरणस्य रचनात्वप्रतिपक्षतयोपन्यास उपपन्नः ।

नापि स्वतन्त्रमेवेदं कर्त्रभावसाधनं भवितुमर्हति अनुपलब्धिरियमनेन प्रकारेण किलोच्यते सा ऽनुपपन्ना मानेन कर्तुरुपलम्भात्, अनुमानेनापि यदुपलब्धं तदुपलब्धमेव भवति, ननु कर्त्रभावस्मरणबाधितत्वादनुमानमि-

दमयुक्तम्–इतरेतराश्रयप्रसङ्गात् अनुपलब्धौ सिद्धायामनुमाननिरासः अनुमाननिरासे च सत्यनुपलब्धिसिद्धिः, अनुमानप्रामाण्ये ऽपि समानो दोष इति चेद् न, तस्य प्रतिबन्धमहिम्ना प्रामाण्यसिद्धेः, न हि तस्यानुपलब्धिसिद्धिनिरासापेक्षं प्रामाण्यम्।

तत्रैतत्स्याद् न वयं कर्त्रभावे प्रामाण्यं ब्रूमः सकललोकपदार्थव्यवहारिणो हि मीमांसकाः, परं तु वेदस्य पौरुषेयतां ब्रुवाणं प्रमाणं पृच्छामः, तच्चास्य नास्तीति बलादनुपलब्ध्या तदभावनिश्चयो व्यवतिष्ठते इति, स्यादेतदेवं यद्यनुमानं न स्यात्, उक्तं च रचनात्वादित्यनुमानम्।

यत्पुनरवादि वेदेषु पुरुषस्य कर्तृत्वमशक्यं ग्रहीतुमिति तदप्यसाधु, परोक्षस्य कुविन्दादेरपि अभिनवावरकपटादौ कार्ये कथं कर्तृता ऽवगम्यते।

पटादिरचनां दृष्ट्वा तस्य चेत्सा ऽनुमीयते।
वेदे ऽपि रचनां दृष्ट्वा कर्तृत्वं तस्य गम्यताम्॥

शरीरपरिग्रहमन्तरेण प्राणिनामुपदेशस्य कर्तुमशक्यत्वात्कदा चिदीश्वरः शरीरमपि गृह्णीयादिति कल्प्यते नियतशरीरपरिग्रहाभावाच्च व्यासादिवदसौ न स्मर्यते ततश्च—

अद्य सद्यः कविः काव्ये यथा कर्त्तेति मीयते।
तथा तत्कालजैः पुम्भिः सो ऽपि कर्त्तेति मास्यते॥
यथा परकृताशङ्का तस्मिन् काव्ये व्यपैति ते।
वेदे ऽप्यन्यकृताशङ्का तथा तेषां व्यपैष्यति॥
परोक्षमनुमानेन यच्च बुद्ध्यामहे वयम्।
प्रत्यक्षं योगिनां तच्चेत्युक्तं प्रत्यक्षलक्षणे॥
प्रत्यक्षमनुमानं च तदेवं कर्तृतामितौ।
मूलप्रमाणमस्तीति स्मृतौ निन्दापरम्परा॥
मन्त्रार्थवादमूलत्वं तत एव न तत्स्मृतेः।
यथोदितानुमानादिप्रमाणान्तरसम्भवात्॥

यदपीतरेतराश्रयमभाषि पुरुषोक्ते वेदे प्रामाण्यं वेदप्रामाण्यात्पुरुषसिद्धिरिति तदपि न सम्यक् पूर्व परिहृतत्वात्, अनुमानात्प्रसिद्धे कर्त्तरि वेदवाक्यैस्तत्प्रतीतेरुपोद्बलनमिष्यते न त्वागमैकशरण एव कर्त्रवगमः, उक्तं च पूर्वमपि पृथिव्यादिना कार्येण कर्तुरनुमानम्,

## वेदकर्तुरेव पृथ्व्यादिकर्तृत्वम्।

किं येनैव कर्त्रा पृथिव्यादि कार्यं निर्मितं तेनैव वैदिक्यो रचना निर्मिता इति चेद् ओमित्युच्यते, किमत्र प्रमाणमिति चेत्—

उच्यते तर्हि सर्वज्ञः स्रष्टुं प्रभवतीदृशम्।

विचित्रं प्राणिभृत्कर्मफलभोगाश्रयं जगत् ॥
तत्कर्मफलसम्बन्धविदा तदुपदेशिना ।
तेनैव वेदा रचिता इति नान्यस्य कल्पना ॥
एकेनैव च सिद्धे ऽर्थे द्वितीयं कल्पयेम किम् ।
अनेककल्पनाबीजं न हि किं चन विद्यते ॥

जगत्सर्गे तावदेक एवेश्वर इष्यते न द्वौ बहवो वा भिन्नाशयकल्पने एकत्र वैयर्थ्यादितरत्र व्यवहारवैशसप्रङ्गेन तत एकस्येश्वरत्वविघातात्, तथा हि—

अनेकेश्वरवादो हि नातीव हृदयङ्गमः ।
ते चेत्सदृशसङ्कल्पाः को ऽर्थो बहुभिरीश्वरैः ॥
सङ्कल्पयति यदेकः शुभमशुभं वा ऽपि सत्यसङ्कल्पः ।
तत्सिद्ध्यति तद्विभवादित्यपरस्तत्र किं कुर्यात् ॥
भिन्नाभिप्रायतायां तु कार्यविप्रतिषेधतः ।
नूनमेकः स्वसङ्कल्पविहत्या ऽनीश्वरो भवेत् ॥
एकस्य किल सङ्कल्पो राजा ऽयं क्रियतामिति ।
हन्यतामिति चान्यस्य तौ समाविशतः कथम् ॥
राज्यसङ्कल्पसाफल्ये विहता वधकामना ।
तस्याः सफलतायां वा राज्यसङ्कल्पविप्लवः ॥
तेन चित्रजगत्कार्यसंवाहानुगुणाशयः ।
एक एवेश्वरः स्रष्टा जगतामिति साधितम् ॥

## सर्ववेदानामेककर्तृकत्वम् ।

एवं जगत्सर्गवत्स एव वेदानामप्येकः प्रणेता भवितुमर्हति नानात्वकल्पनायां प्रमाणाभावात्कल्पनागौरवप्रसङ्गाच्च, तेन यदुच्यते—

नन्वेकः सर्वशाखानां कर्त्तेत्यवगतं कुतः ।
बहवो बहुभिर्ग्रन्थाः कथं न रचिता इमे ॥

इति तत्परिहृतं भवति, अतश्चैककर्तृका वेदा यतः परस्परव्यतिषक्तार्थोपदेशिनो दृश्यन्ते, एकमेव हि कर्म वेदचतुष्टयोपदिष्टैः पृथग्भूतैरप्येकार्थसमवायिभिरङ्गैरन्वितं प्रयुज्यते, तत्र हि हौत्रमृग्वेदेन यजुर्वेदेनाध्वर्यवम् औद्गात्रं सामवेदेन ब्रह्मत्वमथर्ववेदेन क्रियते, पैप्पलादादिशाखाभेदोपदिष्टं च तत्तदङ्गजातं तत्र तत्रापेक्ष्यते, तत्र सर्वशाखाप्रत्ययमेकं कर्मेत्याहुः, एतच्चादूरएवाग्रे निर्णेष्यते ।

एकाभिप्रायबद्धत्वं तेन सर्वत्र गम्यते ।
भवेद्भिन्नाशयानां हि कथमेकार्थमीलनम् ॥

काव्यसमस्यापूरणे का वार्त्तेति चेत्—

तत्रापि प्रथमस्यैव कवेस्तद्वस्तुदर्शनात् ।
तदभिप्रायवेदी तु सो ऽन्यस्तमनुवर्त्तते ॥
अन्यथा ऽनन्वितं काव्यं स्याद्विश्ववसुकाव्यवत् ।
अन्वितत्वे तु सा नूनमाद्यस्यैव कवेर्मतिः ॥
इहाप्येकाशयाभिन्नद्वितीयेश्वरकल्पने ।
एकाभिप्रायतैव स्यात्किं स्यात्तत्कल्पने फलम् ॥

तस्मादेक एव कर्त्ता सर्वशाखानां काठकादिव्यपदेशस्तु प्रकृष्टाध्ययननिबन्धनो भविष्यतीति भवद्भिरप्युक्तम्, अपि च यथा तरोर्विक्षिप्ताः शाखा भवन्ति न च कृत्स्नं पुष्पफलपत्रमेकस्यां शाखायां सन्निहितं भवति किं तु कस्यांचित्कस्यांचित्, एवं वेदस्यापि शाखाः पृथगङ्गकर्मोपदेशिन्यो विक्षिप्ताश्च ।

तासां च वृक्षशाखानामेकस्माज्जन्म बीजतः ।
तथैव सर्वशाखानामेकस्मात्पुरुषोत्तमात् ॥
कर्त्ता य एव जगतामखिलात्मवृत्ति-
कर्मप्रपञ्चपरिपाकविचित्रताज्ञः ।
विश्वात्मना तदुपदेशपराः प्रणीता-
स्तेनैव वेदरचना इति युक्तमेतत् ॥
आप्तं तमेव भगवन्तमनादिमीश-
माश्रित्य विश्वसिति वेदवचःसु लोकः ।
तेषामकर्तृकतया न हि कश्चिदेवं
विस्रम्भमेति मतिमानिति वर्णितं प्राक् ॥

एवं च पदवाक्यरचनादौ तावद्वेदेषु पुरुषापेक्षित्वमुपपादितम् ।

## शब्दार्थसम्बन्धनिरूपणम्

यदपि सम्बन्धकरणे पुरुषानपेक्षत्वमुच्यते चित्रभानोरिव दहनशक्तिः शब्दस्य नैसर्गिकी वाचकशक्तिः व्युत्पत्तिस्तु वृद्धेभ्य एव व्यवहरमाणेभ्य उपलभ्यते इति किमत्र पुरुषः करिष्यतीति तदप्यघटमानम्-पुरुषपरिघटितसमयसम्बन्धव्यतिरेकेण शब्दादर्थप्रत्ययानुत्पत्तेः ।

ननु नैव शब्दस्यार्थेन सम्बन्धः कश्चिदस्ति कस्येदं पुरुषसापेक्षत्वं तन्निरपेक्षत्वं वा चिन्त्यते, न हि शब्दार्थयोः कुण्डबदरयोरिव संयोगस्वभावः तन्तुपटयोरिव समवायात्मा वा सम्बन्धः प्रत्यक्षमुपलभ्यते, तन्मूलत्वाच्च सम्बन्धान्तराण्यपि न सन्ति, तदुक्तं मुखे शब्दमुपलभामहे भूमावर्थमिति, नाप्यनुमीयते शब्दस्यार्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणे मुख-

स्य पाटनपूरणानुपलम्भात्, न च शब्ददेशे अर्थः सम्भवति न चार्थदेशे शब्दः स्थानकरणप्रयत्नानां तद्धेतूनां घटाद्यर्थदेशेऽनुपलम्भात्, व्यापकत्वं तु शब्दस्य प्रतिषिद्धमेव—

उच्यते, न संश्लेषलक्षणः शब्दार्थसम्बन्धो ऽस्माभिरभ्युपगम्यते, तत् किं कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयिभावादयः शब्दस्यार्थेन सम्बन्धाः, एते ऽपि नतराम्, न तर्हि तस्य कश्चिदर्थेन सम्बन्धः, न नास्ति शब्दस्यार्थेन सम्बन्धः प्रत्ययनियमहेतुत्वाद् धूमादिवत्, तत् किं शब्दार्थयोरविनाभावः सम्बन्धः सो ऽपि नास्ति, एवं हि शब्दो ऽनुमानमेव स्यात्, कस्तर्हि समय इति ब्रूमः, को ऽयं समयो नाम, अभिधानाभिधेयनियमनियोगः समय उच्यते, यद्येवं किमनाशङ्कनीयसंश्लेषपरिचोदनेन तद्दूषणेन च, उच्यते, शब्दार्थाभेदवादिनां हि वैयाकरणानामेष संश्लेष उपपत्तिमान् समयो ऽप्ययमनुपपन्न एव, स हि पुरुषकृत सङ्केतो न च पुरुषेच्छया वस्तुनियमो ऽवकल्पते तदिच्छाया अव्याहतप्रसरत्वात्, अर्थो ऽपि किमिति वाचको न भवति, न चैवमस्ति न हि दहनमनिच्छन्नपि पुरुषो धूमान्न तं प्रत्येति जलं वा तत इच्छन्नपि प्रतिपद्यते, तत्र यथा धूमाग्न्योर्नैसर्गिक एवाविनाभावो नाम सम्बन्धः ज्ञप्तये तु भूयोदर्शनादि निमित्तमाश्रीयते एवं शब्दार्थयोस्सांसिद्धिक एव शक्त्यात्मा सम्बन्धः तद्व्युत्पत्तये तु वृद्धव्यवहारप्रसिद्धिसमाश्रयणम्, स्वाभाविके सम्बन्धे सति दीपादिवत् किं तद्व्युत्पत्त्यपेक्षणेनेति चेद् न शब्दस्य ज्ञापकत्वात्, ज्ञापकस्य धूमादेरेतद्रूपं यत्सम्बन्धग्रहणापेक्षं स्वज्ञाप्यज्ञापकत्वम्, तद्योग्यतादयस्तु प्रत्यक्षसामग्र्यन्तर्गतत्वान्न व्युत्पत्त्यपेक्षा भवन्ति, शक्तिस्तु नैसर्गिकी यथा रूपप्रकाशिनी दीपादेस्तथा शब्दस्यार्थप्रतिपादने, तस्मान् न समयमात्रादर्थप्रतिपत्तिः।

अपि चाभिधानाभिधेयनियमनियोगरूपः समयो ज्ञानमेव न ततोऽर्थान्तरं ज्ञानं चात्मनि वर्त्तते न च शब्दार्थयारिति न तयोः सम्बन्धः स्यात्, किं च समयः क्रियमाणः प्रत्युच्चारणं वा क्रियते प्रतिपुरुषं सर्गादौ वा सकृदीश्वरेणेति, प्रत्युच्चारणं प्राक्तन एव क्रियते नूतनो वा, नवस्य तावत्क्रियमाणस्य कथमर्थप्रत्यायनसामर्थ्यमवगम्यते तदवगतौ वा किं तत्करणेन, पूर्वकृतस्य तदा कृतत्वादेव पुनः करणमनुपपन्नम्, एकस्य वस्तुनो ज्ञप्तिरसकृदावर्त्तते नोत्पत्तिः, प्रतिपुरुषमपि सम्बन्धो भिन्नो ऽभिन्नो वा क्रियते, भेदपक्षे कथमेकार्थसञ्ज्ञानं गोशब्दस्य सास्नादिमानर्थः केसरादिमानश्वशब्दस्येति, अभेदे ऽपि तथैव कृतस्य करणायोगाज् ज्ञानमेव सम्बन्धस्य न करणम्, सर्गादावपि सकृत्सम्बन्धकरणमयुक्तं तथाविधकालासम्भवादेव न हि शब्दार्थव्यवहाररहितः कश्चित्काल उपपद्यते, तस्मान्नित्यस्यैव सम्बन्धस्य लोकतो व्युत्पत्तिः न पुनः करणम्, व्युत्पत्तिपक्षं च न करणपक्षाभिहता दोषाः स्पृशन्ति प्रत्यक्षसिद्धत्वात्, प्रत्यक्षं

हीदमुपलभ्यते वृद्धानां हि स्वार्थे व्यवहरमाणानामुपशृण्वन्तो बालास्ततस्ततः शब्दात्तं तमर्थं प्रतियन्ति ते ऽपि वृद्धा यदा बाला आसंस्तदा ऽन्येभ्यो वृद्धेभ्यस्तथैव प्रतिपन्नवन्तस्ते ऽप्यन्येभ्य इति नास्त्यादिस्संसारस्येति ।

अपि च समयमात्रशरणः शक्तिशून्यः शब्दः कथमक्षिनिकोचहस्तसंज्ञादिभ्यो भिद्येत, स हि तदानीं कशाङ्कुशप्रतोदाभिघातस्थानीय एव भवेत्तथा च शब्दादर्थं प्रतिपद्यामहे इति लौकिको व्यपदेशो बाध्येत, समयादर्थं प्रतिपद्यामहे इति स्यात्, समयपक्षे च यदृच्छाशब्दतुल्यत्वं सर्वशब्दानां प्राप्नोति तेन गवाश्वादीनां शब्दानां नियतविषयत्वं न स्यात् ।

यत्पुनरुच्यते जातिविशेषे चानियमात्समयरूपः सम्बन्ध इति, जातिशब्देनात्र देशो विवक्षितः, किल क चिद्देशविशेषे कश्चिच्छब्दो देशान्तरप्राप्तप्रसिद्धमर्थमुत्सृज्य ततो ऽर्थान्तरे वर्तते, यथा चौरशब्दस्तस्करवचन ओदने दाक्षिणात्यैः प्रयुज्यते, एतच्च समयपक्षे युज्यते, नित्ये तु सम्बन्धे कथं तदर्थव्यभिचार इति, तदप्ययुक्तम्, सर्वशब्दानां सर्वार्थप्रत्यायनशक्तियुक्तत्वात् क चिद्देशे केन चिदर्थेन व्यवहारः, अत एव चानवगतसम्बन्धे श्रुते सति सन्देहो भवति कमर्थं प्रत्याययितुमनेनायं शब्दः प्रयुक्तः स्यादिति, असत्यां हि शक्तौ अकृतसमये निरवलम्बना प्रत्यायकत्वाशङ्केति, अथ वा ऽऽर्यदेशप्रसिद्ध एव शब्दानामर्थः इतरस्तु म्लेच्छजनसम्मतो नादरणीय एव, तस्मात्समयपक्षस्यातिदौर्बल्यादकृत्रिम एव शब्दार्थयोः सम्बन्ध इति न तत्र पुरुषस्य प्रभविष्णुता—

## शब्दार्थसम्बन्धनित्यतानिराकरणम्

अत्रोच्यते न नित्यः सम्बन्ध उपपद्यते, शब्दवदर्थवच्च तृतीयस्य तस्य प्रत्यक्षादिना प्रमाणेनाप्रतीयमानत्वात् ,

ननुशक्तिरूपः सम्बन्ध इत्युक्तं शक्तिश्च तदाश्रितेति कथं धर्म्यन्तरवत्पृथक्तया प्रतीयते, नैतत्साम्प्रतम् , स्वरूपसहकारिव्यतिरिक्तायाः शक्तेः सूक्ष्मायाः प्रागेव विस्तरतः प्रतिक्षिप्तत्वात् , न च शक्तिः प्रत्यक्षगम्या द्रव्यस्वरूपवदनुपलम्भात्, नानुमेया कार्याणामन्यथा ऽपि घटमानत्वात् , कल्पयित्वा च शक्तिमपरिहार्यः समयः, समयमन्तरेणार्थप्रतिपत्तेरसिद्धेः, सिद्धे च समये तत एवार्थसिद्धेः किं नित्यसम्बन्धाश्रयणेन ।

यत्तूक्तं समयस्य पुरुषेच्छाधीनत्वात्तस्याश्चाव्याहतप्रसरत्वाद्वाच्यवाचकव्यत्ययः स्यादिति तदयुक्तम् , शक्त्यभावे शब्दस्यैव वाचकत्वे योग्यत्वात्, का पुनः शक्त्यभावे योग्यता ऽस्येति चेद् यो ऽयं गत्वादिजातियोगः क्रमविशेषोपकृतः गत्वौत्वादिसामान्यसम्बन्धो हि यस्य भवति स वाचकत्वे योग्य इति इतरस्तु वाच्यत्वे, यथा द्रव्यत्वाद्यविशेषे ऽपि वीरणत्वादिसामान्य-

वतां च पटनिष्पत्तौ न च तत्र शक्तिरस्तीत्युक्तम्, न च कारणे कार्यं सदिति सांख्यैरिव भवद्भिरिष्यते तस्यामसत्यामपि शक्तौ सामान्यविशेषसम्बन्धस्य नियामकत्वान्न वाच्यवाचकयोर्व्यत्यय इति न शक्तिरूपः शब्दार्थयोः सम्बन्धः, न च तयोरविनाभावे धूमाग्न्योरिव सम्बन्धः, तत्र हि सम्बन्धः प्रतीयमान एव प्रतीयते धूमो ऽग्निं विना न भवतीति इह पुनरयमस्मात्प्रतीयते इति एतावदेव व्युत्पत्तिपर्यवसानम्, अत एवावगतिपूर्विकेवावतिरिहेत्यनुमानाच्छब्दस्य भेद उक्त, प्रकाशकत्वमपि शब्दस्य समयप्रसादोपनतमेव न स्वाभाविकम्, सांसिद्धिके हि तथात्वे भ्रमित्वादिप्रयुक्तादन्यतो वा यतः कुतश्चिदभिनवादपि दीपादिव शब्दादर्थप्रतीतिः स्यात्,

यत्तु नैसर्गिके ऽपि प्रकाशकत्वे शब्दस्य धूमादेरिव ज्ञापकत्वात्संबन्धग्रहणसापेक्षत्वमुक्तं स एष विषम उपन्यासः, न हि धूमादेः प्रत्यायकत्वं स्वाभाविकम् अनलाविनाभावित्वं तु तस्य निजं बलं तत्र चागृहीते तस्मिन्प्रतीतिरेव न जायते इति युक्तं तद्ग्रहणं प्रतीत्यर्थम्, इह तु प्रतीतिशक्तिरेव स्वाभाविकी भवता ऽभ्युपगम्यते सा चेत्स्वाभाविकी किं व्युत्पत्त्यपेक्षणेनेति, यच्चोच्यते प्रत्यायक इति प्रत्ययं दृष्ट्वा ऽवगच्छामो न प्रथमश्रवण इति यावत्कृत्वः श्रुतेनेयं संज्ञा ऽयं संज्ञीत्यवगम्यते तावत्कृत्वः श्रुतादर्थावगम इति सो ऽयं समयोपयोग एव कथितो भवति, संज्ञासंज्ञिसम्बन्धो हि समय एवोच्यते तदुपयोगमन्तरेण प्रत्यायकत्वानवगमान्न स्वाभाविकी शक्तिः ।

यत्त्वभ्यधायि समयस्य ज्ञानात्मकत्वादात्मनि वृत्तिः न शब्दार्थयोरित्येतदप्यचतुरश्रम्, तदाश्रयत्वाभावेऽपि ज्ञानस्य तद्विषयत्वोपपत्तेः,

यदप्यभाणि समयमात्रशरणे सृणिप्रतोदनोदननिर्विशेषे शब्दे शब्दादर्थं प्रतिपद्यामहे इति व्यपदेशो न स्यादिति तदपि न किं चित्, नैसर्गिकशक्तिपक्षे ऽपि शक्तेरर्थं प्रतिपद्यामहे न धूमादिति स्यात्, तदङ्गत्वादविनाभावादेर्न तथा व्यपदेश इति चेत् तदितरत्रापि समानम् ।

धूमे हि व्याप्तिपूर्वत्वं शब्दे समयपूर्वता ।
नानयोस्तदपेक्षायां करणत्वं विहन्यते ॥

अपि च, लौकिको व्यपदेशः समयपक्षसाक्षितामिव भजते देवदत्तेनोक्तम् अमुतः शब्दादमुमर्थं प्रतिपद्यस्वेति एवं हि व्यपदिशति लोकः, तस्मात्समय एव, अतश्चैवं देशान्तरे सङ्केतवशेन तत एव शब्दादर्थान्तरप्रतिपत्तिः ।

नन्वत्रोक्तं सर्वशब्दाः सर्वार्थप्रत्यायनयुक्ता इति केन चिदर्थेन क चिद्व्यवहार इति तदेतदयुक्तम्, शक्तीनां भेदाभेदविकल्पानुपपत्तेः, न शब्दस्वरूपाद्भिन्नाः शक्तयः तथा ऽनवभासात्, अव्यतिरेके चैकस्माच्छब्दादनन्यत्वात्परस्परमव्यतिरेकस्तासां स्यात्, न च भिन्नकार्यानुमेया भिन्नाः शक्तयः कार्यभेदस्यान्यथा

ऽव्युपपत्तेः, सर्वशक्तियोगे च सर्वार्थप्रत्ययप्रसङ्गः, समयोपयोगो नियामक इति चेत् स एवास्तु किं शक्तिभिः ।

यदप्यगादि शब्दश्रवणे सति सर्वार्थविषयसन्देहदर्शनात्सर्वत्र तस्य शक्तिः कल्प्यते इति तदप्यसारम्, न हि शक्तिकृतः सन्देहः किं तु गत्वादिवर्णसामान्यनिबन्धनः तथा च गत्वादिजातिमतां वर्णानामर्थे वाचकत्वमवगतम्, अमी तज्जातियोगिनो वर्णाः कस्यार्थस्य वाचकाः स्युरिति भवति सन्देहः ।

यत्पुनरवादि स एव शब्दस्यार्थो यत्रैनमार्याः प्रयुञ्जते न म्लेच्छजनप्रसिद्ध इति तदेतत्कथमिव शपथमन्तरेण प्रतिपद्येमहि, न हि म्लेच्छदेशे ऽपि तदर्थप्रत्ययो न जायते बाध्यते वा सन्दिग्धो वेति कथं न शब्दार्थः, आर्यप्रसिद्धिर्बाधिकेति चेद् आर्यप्रसिद्धेरपि म्लेच्छप्रसिद्धिः कथं न बाधिका, अक्षादिवच्च विकल्पमानार्थोपपत्तेः व्यवस्थितविषय एव विकल्पो भविष्यति, पिकनेमतामरसादिशब्दानां च भवद्भिः म्लेच्छप्रयोगादर्थनिश्चय आश्रित एव, अवेष्ट्यधिकरणे(१) च राज्यशब्दमान्ध्रप्रसिद्धे ऽर्थे वर्णितवन्तो भवन्त इत्यलमवान्तरचिन्तनेन, तस्मात्समय एव सम्बन्ध इति युक्तम्, तदुक्तं जातिविशेषे चानियमादिति ।

अथ यदुक्तं समयः प्रत्युच्चारणं प्रतिपुरुषं च तत्करणम् अनभ्युपगतमेव दूषितम्, सर्गादौ सकृदेव समयकरणमिति नः पक्षः, अत एव न सर्वशब्दानां यदृच्छातुल्यत्वम्, केषां चिदेव शब्दानामस्मदादिभिरद्यत्वे सङ्केतकरणात्त एव यदृच्छाशब्दा उच्यन्ते, सर्गादिश्च समर्थित एव ईश्वरसिद्धावप्यविकल्पमनुमानमुपन्यस्तम्, एष एव चावयोर्विशेषो यदेष शब्दार्थसम्बन्धव्यवहारस्तवानादिर्मम तु जगत्सर्गात्प्रभृति प्रवृत्त इति, अद्यत्वे तु शब्दार्थसम्बन्धव्युत्पत्तौ तुल्य एवावयोः पन्थाः, तत्रापि त्वयं विशेषो यत्तव शक्तिपर्यन्ता व्युत्पत्तिर्मम तु तद्व्रजमिति, तथा चेयमियती व्युत्पत्तिः लोके दृश्यते यदयमस्य वाच्यो ऽयमस्य वाचक इति न पुनः शक्तिपर्यन्ता व्युत्पत्तिरस्ति, तथा हि यत्र शृङ्गग्राहिकया शब्दमर्थं च निर्दिश्य सम्बन्धः क्रियते तत्रेयन्तमेवैनं क्रियमाणं पश्यामः, अयमस्य वाच्यो ऽयमस्य वाचक इति, यत्रापि च वृद्धेभ्यो व्यवहरमाणेभ्यो व्युत्पद्यते तत्रापीयदेवासौ जानाति अयमर्थः अमुतः शब्दादनेन प्रतिपन्न इति न त्वन्यास्य का चिच्छक्तिरस्तीति, इयत्यैव च व्युत्पत्त्या शब्दादर्थप्रत्ययोपपत्तेरस्याश्चापरिहार्यत्वादधिककल्पनाबीजाभावाच्च न नित्यः शब्दार्थसम्बन्धः, अत एव च सम्बन्धस्त्रिप्रमाणक

(१) शाबरभाष्ये अ० २ पा० ३ सू० ३

इति(१) यत्त्वयोच्यते तदस्माभिर्न मृष्यते, 'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति' इति सत्यं "श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया" इत्येतदपि सत्यम्, "अन्यथाऽनुपपत्त्या तु बुध्येच्छक्तिं द्वयात्मिकाम्" इत्येतत्तु न सत्यम्, अन्यथाऽप्युपपत्तेरित्युक्तत्वात्, तस्माद् द्विप्रमाणकः सम्बन्धनिश्चयो न त्रिप्रमाणकः, तदेवं शब्दस्य नैसर्गिकशक्त्यात्मकसम्बन्धाभावादीश्वरविरचितसमयनिबन्धनः शब्दार्थव्यवहारो नानादिः।

नन्वीश्वरोऽपि सम्बन्धं कुर्वन्नवश्यं केन चिच्छब्देन करोति तस्य केन कृतः सम्बन्धः, शब्दान्तरेण चेत्तस्यापि केन कृतस्तस्यापि केनेति न कश्चिदवधिस्तस्मादवश्यमनेन सम्बन्धं कुर्वता वृद्धव्यवहारसिद्धाः केचिदकृतसम्बन्धा एव शब्दा अभ्युपगन्तव्या अस्ति चेद्व्यवहारसिद्धिः किमीश्वरेण किं वा तत्कृतेन समयेनेत्यनाद्यपक्ष एव श्रेयान्, उच्यते—

अस्त्रमायुष्मता ज्ञातं विषयस्तु न लक्षितः।
अस्मदादिषु दोषो ऽयमीश्वरे तु न युज्यते॥
नानाकर्मफलस्थानमिच्छयैवेदृशं जगत्।
स्रष्टुं प्रभवतस्तस्य कौशलं को विकल्पयेत्॥

इच्छामात्रेण पृथिव्यादेरियतः कार्यस्य करणमस्मदादीनां यन्मनोरथपदवीमपि नाधिरोहति तदपि यतः सम्पद्यते तस्य कियानयं प्रयासः, तदत्रेश्वरसद्भावे परं विप्रतिपत्तयः, तस्मिंस्तु सिद्धे क एवंविकल्पानामवसरः, उक्तं च तत्सिद्धौ निरपवादमनुमानम्, वयं तु न कर्त्तार एव सम्बन्धस्य यत एवमनुयुज्येमहि—

अङ्गुल्यग्रेण निर्दिश्य कं चिदर्थं पुरः स्थितम्।
व्युत्पादयन्तो दृश्यन्ते बालानस्मद्विधा अपि॥

तस्मादीश्वरविरचितसम्बन्धाधिगमोपायभूतवृद्धव्यवहारलब्धतद्व्युत्पत्तिसापेक्षः शब्दो ऽर्थमवगमयतीति सिद्धम्, न च नित्यसम्बन्धाभावे ऽपि शब्दस्यार्थास्पर्शित्वं समयबलेनार्थप्रत्ययस्याबाधितस्य सिद्धेरित्युक्तत्वाद् इत्यलं विस्तरेण।

तस्मात्पदे च वाक्ये च सम्बन्धे च स्वतन्त्रता।
पुरुषस्योपपन्नेति वेदानां तत्प्रणीतता॥

---

(१) न ह्यसौ ज्ञातसामर्थ्यो विनान्यैर्व्यवहर्तृभिः। शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति॥ १४०॥ श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया। अन्यथानुपपत्त्या च बुद्ध्येच्छक्तिं द्वयाश्रिताम्॥ १४१॥ अर्थापत्त्यावबुध्यन्ते सम्बन्धं त्रिप्रमाणकम्॥ इति सम्बन्धाक्षेपपरिहारे श्लोकवार्तिके।

## आप्तोक्ततया वेदप्रामाण्यावगमनिरूपणम्

तस्मादाप्तोक्तत्वादेव वेदाः प्रमाणं न नित्यत्वात्, नन्वाप्तोक्तत्वस्य हेतोः पक्षधर्मत्वं कथमवगम्यते न प्रत्यक्षेण क्षोणीधरधर्मत्वमिव धूमस्य वेदानामाप्तप्रणीतत्वमवगम्यते श्रवणयुगलकरणलब्धजन्मनि प्रत्यये वेदाख्यस्य शब्दराशेरेव प्रतिभासात्, न चोदात्तादिवद्वर्णधर्मत्वेनाप्तोक्तत्वं गृह्यते, नाप्यनुमानमस्मिन्नर्थे सम्भवति लिङ्गाभावात्, प्रामाण्ये हि वेदस्याप्तोक्तत्वं लिङ्गम् आप्तोक्तत्वानुमितौ तु न लिङ्गान्तरमुपलभामहे इति कुतस्त्यः पक्षधर्मत्वनिश्चयः, उच्यते, अलं सरस्वतीक्षोदेन उक्त एव पक्षधर्मत्वनिश्चयोपायः, तथाहि—

शब्दस्य साधितं तावदनित्यत्वं सविस्तरम् ।
रचनाः कर्तृमत्यश्च रचनात्वादिति स्थितम् ॥
कर्त्ता सर्वस्य सर्वज्ञः पुरुषो ऽस्तीति साधितम् ।
कार्येणानुगुणं कल्प्यं निमित्तमिति च स्थितम् ॥
प्रत्यक्षादिविसंवादो वेदे परिहरिष्यते ।
व्याघातपौनरुक्त्यादिदोषश्च वचनान्तरे ॥
विध्यर्थवादमन्त्राणामुपयोगश्च वक्ष्यते ।
न मात्रामात्रमप्यस्ति वेदे किं चिदपार्थकम् ॥
शब्दब्रह्मविवर्त्तादिकल्पनाश्च पुरोदिताः ।
सर्वाः परिहरिष्यन्ते कार्यत्वस्य विरोधिकाः ॥

इत्थं च स्थिते किमन्यदवशिष्टं वेदेष्वाप्तोक्ततानिश्चयस्य, सो ऽयं सकलशास्त्रार्थस्थितौ सत्यां पक्षधर्मत्वनिश्चयो हेतोराप्तोक्तत्वस्य गीयते ।

यत्तु प्रत्यक्षमनुमानं वा तन्निश्चयानिमित्तमिति विकल्पितं तत्र प्रत्यक्षमास्ताम्, अनुमानानि तु यानि रचनात्वादीन्युक्तानि यानि च परदर्शनद्वेषि वक्ष्यन्ते तानि सर्वाण्याप्तोक्ततायाः पक्षधर्मतासिद्धौपयिकानीत्यलं विस्तरेण ।

व्याप्तिः पुनरस्य हेतोरायुर्वेदादिवाक्येषु निश्चीयते पिप्पलीपटोलमूलादेरप्यौषधस्येत्थमुपयोगादिदमभिमतमासाद्यते अस्य च क्षीरतक्रादिविरोध्यशनस्य परिहारादिदमनिष्टमुपशाम्यतीत्यादिष्वायुर्वेदशास्त्रेषु प्रत्यक्षेण तस्यार्थस्य तथा निश्चयादर्थाविसंवादित्वं नाम प्रामाण्यं प्रतिपन्नं तच्चेदमाप्तवादप्रयुक्तम्, यतो यत्राप्तवादत्वं तत्र प्रामाण्यमिति व्याप्तिर्गृह्यते, तथा मन्त्राणां प्रयोगे वृश्चिकभुजगदष्टस्य भक्षितविषस्य वा निर्विषत्वम् अपस्मारपिशाचरूपिकागृहीतस्य तदुन्मोचनम् अतिरभसोज्जिहानेषु दुष्टमेघेषु सस्यरक्षणमित्येवमुपलब्धम्, अतस्तेषां विषभूताशनिशमनकुशलानामाप्ता उपदेष्टार इति तत्रापि तथैव व्याप्तिनिश्चयः ।

नन्वायुर्वेदादौ प्रामाण्यं प्रत्यक्षादिसंवादात्प्रतिपन्नं नाप्तप्रामाण्यात्, अतः

कथमाप्तोक्तत्वस्य तत्र व्याप्तिग्रहणम् , नैतदेवम् , प्रत्यक्षादिसंवादात्तन्निश्चीयतां नाम प्रामाण्यम् उत्थितं तु तदाप्तोक्तत्वात् , प्रत्यक्षादावप्यर्थक्रियाज्ञानसंवादात्प्रामाण्यस्य ज्ञप्तिरुत्पत्तिस्तु गुणवत्कारककृतेत्युक्तम् , नद्यादिवाक्यानि च विप्रलम्भकपुरुषभाषितानि विसंवदन्ति लोके दृश्यन्ते, तेनाप्तप्रणीतत्वमेव तेषां प्रामाण्यकारणं कारणशुद्धिमन्तरेण सम्यक्प्रत्ययानुत्पादात् , निश्चयापायस्तु प्रत्यक्षं भवतु न तु तत्कृतमेव प्रामाण्यम् ; अतो युक्तमाप्तोक्तताया आयुर्वेदादौ व्याप्तिग्रहणम् ,

नन्वेवमपि न युक्तम् आप्तोक्तत्वस्य तत्र परिच्छेत्तुमशक्यत्वात् , अन्वयव्यतिरेकमूलमेवायुर्वेदवाक्यानां प्रामाण्यं नाप्तकृतम् , अन्वयव्यतिरेकौ च यावत्येव दृश्येते तावत्येवार्थे प्रामाण्यं यथा हरीतक्यादिवाक्यार्थे, यत्र तु तयोरदर्शनं तत्राप्रामाण्यम् यथा सोमराज्युपयोगे समाः सहस्रं जीव्यते, आप्ते तु कल्प्यमाने ऽर्धजरतीयं स्यात् , अर्धे तस्याप्तत्वमर्धे च कथमनाप्तत्वमिति, तदिदमनुपपन्नम् , अन्वयव्यतिरेकयोर्ग्रहीतुमशक्यत्वात् , तौ हि स्वात्मनि वा ग्रहीतुं शक्येते व्यक्त्यन्तरे वा व्यक्त्यन्तरे ऽपि सर्वत्र क्वचिदेव वा व्यक्तिविशेषे सर्वथा संकटो ऽयं पन्थाः, व्याधीनां तन्निदानानां तदुपचयानां तदुपशमोपायानामौषधानां तत्संयोगवियोगविशेषाणां तत्परिमाणानां तद्रसवीर्यविपाकानां देशकालपुरुषदशाभेदेन शक्तिभेदस्यैकेन जन्मना ग्रहीतुमशक्यत्वात् , जन्मान्तरानुभूतानां च भावानामस्मरणात् ।

जनो ऽनन्तस्तावन्निरवधिरिह व्याधिनिवहो
न संख्यातुं शक्या बहुगुणरसद्रव्यगतयः ।
विचित्राः संयोगाः परिणतिरपूर्वेति च कुतः
चिकित्सायाः पारं तरति युगलक्षैरपि नरः ॥
यदेव द्रव्यमेकस्य धातोर्भवति शान्तये ।
योगान्तरात्तदेवास्य पुनः कोपाय कल्पते ॥
या द्रव्यशक्तिरेकत्र पुंसि नासौ नरान्तरे ।
हरीतक्या ऽपि नोद्भूतवातकुष्ठे विरेच्यते ॥
शरद्युद्रिक्तपित्तस्य ज्वराय दधि कल्पते ।
तदेव भुक्तं वर्षासु ज्वरं हन्ति दशान्तरे ॥
न चोपलक्षणं किं चिदस्ति तच्छक्तिवेदने ।
येनैकत्र गृहीता ऽसौ सर्वत्रावगता भवेत् ।
यो वा ज्ञातुं प्रभवति पुरुषः तत्सामर्थ्यं निरवधिविषयम् ।
स्यात्सर्वज्ञः स इति न विमतिस्तस्मिन्कार्या स्ववचनकथितैः ॥

अथोच्यते अनादिरेवैषा चिकित्सकस्मृतिः व्याकरणादिस्मृतिवत् , संक्षेप-

विस्तरविवक्षयैव चरकादय: कर्त्तार: न तु ते सर्वदर्शिन:, न च स्मृतावन्धपरम्परादोष: समूलत्वात् , यथा व्याकरणस्मृते: शिष्टप्रयोगो मूलमेवमिहान्वयव्यतिरेकौ शिष्टविरोधे सति यथा मूलविरोधिनी पाणिन्यादिस्मृतिरप्रमाणं तथा चाहुरिह न भवत्यनभिधानादिति एवं वैद्यस्मृतिरप्यन्वयव्यतिरेकविरुद्धा न प्रमाणमिति, तदेतदयुक्तम् , अन्वयतिरेकयोर्यथोक्तनयेन परिच्छेदासम्भवेन तन्मूलत्वानुपपत्ते:, यदि ह्यन्वयव्यतिरेकाभ्यामशेषद्रव्यशक्तीर्निश्चित्य चरकादिभिर्विरचितं शास्त्रमितीदृशमन्वयव्यतिरेकित्वमुच्यते तदपाकृतम् , अद्यत्वे यावन्तावन्वयव्यतिरेकौ वयमुपलब्धुं शक्नुम: तावद्भ्यां ताभ्यामेकदेशसंवादात्प्रामाण्यकल्पनात् तत्र प्रवर्त्तनं न तु तौ तावन्तौ शास्त्रस्य मूलं भवितुमर्हत: सर्वैरस्मदादिभिस्तादृशशास्त्रप्रणयनप्रसङ्गात् , अनादित्वमपि शास्त्राणां वेदवदनुपपन्नम् , चरकादिकर्तृस्मृते: कालिदासादिस्मृतिवदविगीतत्वात् , न च चिकित्सास्मरणप्रबन्ध एवमनादि: तथात्वे ऽन्धपरम्पराकारणानवधारणात् , न च तदुक्तं तन्मूलं भवितुमर्हति व्युदस्तत्वात् , तस्मात्सर्वज्ञप्रणीत एवायुर्वेद: ।

ननु अविदुषामुपदेशो नावकल्पते इति विद्वांस: चरकादय: कल्प्यन्तां ते तु प्रत्यक्षेणैव सर्वं विदितवन्त इत्यत्र किं मानम् , उच्यते, अन्वयव्यतिरेकयोर्निरासान्नानुमानस्यैष विषय:, वेदमूलत्वमपि मन्वादिस्मृतिवदयुक्तं कल्पयितुं कर्त्तृसामान्यासम्भवादिति वर्णयिष्याम:, पुरुषान्तरोपदेशपूर्वकत्वे चरकेणैव किमपराद्धम् , उपमानमनाशङ्कनीयमेवास्मिन्नर्थे, अर्थापत्तिस्तु न प्रमाणान्तरम् , अप्रामाण्यं तु नास्ति बहुकृत्व: संवाददर्शनात् , अत: परिशेषात्प्रत्यक्षीकृतदेशकालपुरुषदशाभेदानुसारिसमस्तव्यस्तपदार्थसार्थशक्तिनिश्चयाश्चरकादय इति युक्तं कल्पयितुम् , यद्येवं कथं तर्हि सोमराज्यादिवाक्येषु व्यभिचार: व्यभिचारे चार्धजरतीयमित्युक्तम् , नैष दोष:, कर्मकर्तृसाधनवैगुण्यादेषु व्यभिचारो भविष्यति, वैदिकेषु च कर्मसु मीमांसकस्य समानो दोष: ।

कारीर्यादौ का ते वार्त्ता यस्यां न स्यादिष्टौ वृष्टि: ।
वैगुण्यं चेत्कर्त्रादीनामत्राप्येवं शक्यं वक्तुम् ॥
यदि विधुरमयुक्तं कर्म शास्त्रीयमन्यत्
फलविघटनहेतु: कल्प्यते सो ऽपि तुल्य: ।
क्व चिदथ फलसंपद् दृश्यते तत्प्रयोगे
तदिह दृढशरीरा: सन्ति दीर्घायुषश्च ॥
आयुर्वेदश्च तस्मादाप्तकृतो नान्यमूल इति सिद्धम् ।
एवं फलवेदादौ प्रकाशमाप्तप्रणीतत्वम् ॥

तस्मादाप्तोक्तत्वस्य सिद्धमायुर्वेदादौ व्याप्तिग्रहणम्, व्याप्तिप्रदर्शनायैव सूत्रकृता "स द्विविधो दृष्टादृष्टार्थत्वात्"(१) इत्युक्तम्, दृष्टार्थशब्दे गृहीताविनाभावमाप्तोक्तत्वम् अदृष्टार्थे ऽपि प्रामाण्यं साधयतीति, अत एवोक्तम्, "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इति(२)।

नन्वत्रापि न वैद्यकं विरचयन्दृष्टो मुनिः सर्ववि-
त्तद्व्याप्तिग्रहणं जने यदि वृथा ऽऽयुर्वेदसङ्कीर्त्तनम्।
सत्यं किं तु दृढा तथा ऽपि चरकाद्याप्तस्मृतिर्वैद्यके
नासौ चार्यनिबन्धनेति कथिता तस्येह दृष्टान्तता॥
इत्यायुर्वेदवाक्यप्रभृतिषु भवति व्याप्तिराप्तोक्तताया:
पूर्वोक्तेन क्रमेण स्फुटमकथि तथा पक्षधर्मत्वमस्याः।
न प्रत्यक्षागमाभ्यामपहृतविषया नानुमानान्तरेण
व्याधूता वेति सैषा भजति गमकतां पञ्चरूपोपपत्तेः॥
अनपेक्षतया न वेदवाचां घटते निष्प्रतिमः प्रमाणभावः।
क्व गिरामयथार्थतानिवृत्तिः पुरुषप्रत्ययमन्तरेण दृष्टा॥
तत्प्रत्ययाद्बहुतरद्रविणव्ययादि-
साध्येषु कर्मसु तपःसु च वैदिकेषु।
युक्तं प्रवर्त्तनमबाधनकेन नैव
तत्सिद्धिरित्यलमसम्मत एष मार्गः॥

तस्मादाप्तोक्तत्वादेव वेदः प्रमाणमिति सिद्धम्,

## मीमांसकाभिमतवेदप्रामाण्यावगमोपायनिरूपणम्

अन्ये त्वन्यथा वेदप्रामाण्यं वर्णयन्ति, तस्य हि प्रामाण्ये ऽभ्युपगतपरलोको ऽनभ्युपगतपरलोको वा परो विप्रतिपद्यते, तत्रानभ्युपगतपरलोकं प्रति तावदात्मनित्यतादिन्यायपूर्वकं परलोकसमर्थनमेव विधेयम्, परलोकवादिनां तु मते यदेतत्सुखिदुःख्यादिभेदेन जगतो वैचित्र्यं दृश्यते तदवश्यं कर्मवैचित्र्यनिबन्धनमेव, कर्माणि चाननुष्ठितानि नात्मानं लभन्ते, अलब्धात्मनां च नभःकुसुमनिभानां कुतो विचित्रसुखदुःखादिफलसाधनत्वम्, तस्मादनुष्ठानमेषामेषितव्यम्, अनुष्ठानं च नाविदितस्वरूपाणां कर्मणामुपपन्नम् अजानन्पुरुषस्तपस्वी किमनुतिष्ठेत्, तदवश्यं ज्ञात्वा ऽनुष्ठेयानि कर्माणि तदिदानीं तेषां परिज्ञाने को ऽभ्युपायः, न प्रत्यक्षमस्मदादीनां स्वर्गाद्यदृष्टपुरुषार्थसाधनानि कर्माणि दर्शयितुं प्रभवति।

(१) गौतमसूत्रम् अ० १ आ० १ सू० ८।
(२) गौतमसूत्रम् अ० २ आ० २ सू० ६७।

नाप्यनुमानम् अन्वयव्यतिरेकाभ्यां तृप्तिभोजनयोरिव स्वर्गयागयोः साध्यसाधनसम्बन्धानवधारणात्, जगद्वैचित्र्यान्यथाऽनुपपत्त्या तु विचित्रं कारणमात्रमनुमीयते न च तावता ऽनुष्ठानसिद्धिः, उक्तं च —

अधर्मे धर्मरूपे वा ऽप्यविभक्ते फलं प्रति ।
किमप्यस्तीति विज्ञानं नराणां कोपयुज्यते इति ॥

उपमानं त्वत्र शङ्क्यमानमपि न शोभते, नापि परस्परमुपदिशन्तो लौकिकाः कर्माणि परलोकफलानि जानीयुरिति वक्तुं युक्तम्, अज्ञात्वा उपपादयतामाप्तत्वायोगात्, ज्ञानं तु लौकिकानां दुर्घटं प्रमाणाभावाद् इत्युक्तत्वात्, एवमेव हि पुरुषोपदेशपरम्पराकल्पनायामन्धपरम्परान्यायः स्यात्, तस्मादवश्यमभ्युपगतपरलोकैः परलोकफलानि कर्माणि कुर्वद्भिः शास्त्रात्कर्मावबोधो ऽभ्युपगन्तव्यः, शास्त्रं च वेदा एवेति सिद्धं तत्प्रामाण्यम् ।

ननु लोकप्रसिद्धित एव धर्माधर्मसाधनानि कर्माणि ज्ञास्यन्ते किं शास्त्रेण, उपकारापकारौ हि धर्माधर्मयोर्लक्षणमिति प्रसिद्धमेवैतत, तथा ऽऽह व्यासः—

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनमिति ॥

नैतद्युक्तं लोकप्रसिद्धेर्निर्मूलायाः प्रमाणत्वानुपपत्तेः, लोकप्रसिद्धिर्नाम लौकिकानामविच्छिन्ना स्मृतिः, स्मृतिश्च प्रभवन्ती प्रमाणान्तरमूला भवति न स्वतन्त्रेत्यवश्यमस्या मूलमन्वेषणीयम्, तच्च प्रत्यक्षादि नोपपद्यते इति नूनं शास्त्रमूलैव लोकप्रसिद्धिः, विरुद्धानेकप्रकारत्वाच्च लोकप्रसिद्धेर्न तस्यां स्वतन्त्रायां समाश्वसिति लोकः, न चोपकारकमात्रलक्षणावेव धर्माधर्मौ वक्तुं युज्येते जपशीधुपानादौ तदभावात, गुरुदारगमनादौ च विपर्ययादित्यवश्यं शास्त्रशरणावेव तावेषितव्यौ ।

अपि चेदमिष्टिमन्त्रादिकमेव फलम् अयमस्मिन्नधिकृत इति इयमितिकर्त्तव्यता एष देशः इमे ऋत्विजः इत्यादि किं लोकप्रसिद्धेरधिगन्तुं शक्यते, तस्मादवश्यं शास्त्राधीन एव विशिष्टकर्मावबोध एषितव्यः, शास्त्रं च वेद एवेत्युक्तम्, अतस्तस्य निर्विवादसिद्धमेव प्रामाण्यमिति ।

एवं तु वर्ण्यमाने संसारानादित्वं तावदुक्तं स्यात्, वेदस्यानादित्वं कर्मज्ञानानादित्वात्, यतश्च मीमांसकवर्त्मनैव प्रमाणता सिद्ध्यति नाप्तवादात्, तस्माद्यथोदाहृत एव मार्गः प्रमाणतायामनुवर्त्तनीयः, अथ वा—

वयमपि न विशिंष्मो ऽनादिसंसारपक्षं
युगपदखिलसर्गध्वंसवादे तु भेदः ।
अकथि च रचनानां कार्यता तेन सर्गा-
त्प्रभृति भगवतेदं वेदशास्त्रं प्रणीतम् ॥

अनादिरेवेश्वरकर्तृको ऽपि सदैव सर्गप्रलयप्रबन्धः ।
सर्गान्तरेष्वेव च कर्मबोधो वेदान्तरेभ्यो ऽपि जनस्य सिध्येत् ॥
अन्यत्वे किं प्रमाणं ननु तव सुमते किं तदैक्यप्रमाणं
ध्वस्तं तावत्समस्तं भुवनमिति तदा वेदनाशो ऽप्यवश्यम् ।
एकस्त्वीशो ऽवशिष्टः स च रचयति वा प्राक्तनं संस्मरेद्वा
वेदे स्वातन्त्र्यमस्मान्नियतमुभयथा ऽप्यस्ति चन्द्रार्धमौलेः ॥
एकस्य तस्य मनसि प्रतिभासमानो
वेदस्तदा हि कृतकान्न विशिष्यते ऽसौ ।
प्रत्यक्षसर्वविषयस्य तु नेश्वरस्य
युक्ता स्मृतिः करणमेव ततो ऽनवद्यम् ॥
तेनाप्तनिर्मिततयैव निरत्ययार्थ-
संप्रत्ययोपजननाय जनस्य वेदे ।
शास्त्रं सुविस्तरमपास्तकुतर्कमूल-
मोहप्रपञ्चमकरोन्मुनिरक्षपादः ॥

## अथर्ववेदप्रमाण्याक्षेपः ।

अत्र कश्चिदाह, युक्तमितरेतरव्यतिषक्तार्थोपदेशित्वेनैककर्तृकत्वानुमानद्वारकं त्रिवेद्याः प्रामाण्यम्, अथर्ववेदस्य तु त्रय्याम्नातधर्मोपयोगानुपलब्धेस्त्रयीबाह्यत्वेन तत्समानयोगक्षेमत्वम्, अनपेक्षत्वलक्षणप्रामाण्यपक्षे ऽपि विक्षिप्तशाखान्तरोपदिष्टविशिष्टज्योतिष्टोमाद्यनेककर्मानुप्रविष्टहौत्राध्वर्यवादिव्यापारव्यतिषङ्गदर्शनात्तदर्था त्रय्येव यथा प्रमाणभावभागिनी भवितुमर्हति न तथा पृथग्व्यवहारा ऽऽथर्वणश्रुतिः, तथा च लोके चतस्र इमा विद्याः प्राणिनामनुग्रहाय प्रवृत्ता आन्वीक्षकी त्रयी वार्त्ता दण्डनीतिरिति प्रसिद्धिः ।

श्रुतिस्मृती अपि तदनुगुणार्थे एव दृश्येते, श्रुतिस्तावद् (१) "ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये ऽह्नः सामवेदेनास्तमेति वेदैरशून्यस्त्रिभिरेति सूर्यः" इति, तथा "प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तपो ऽतप्यत स तपस्तप्त्वेमांस्त्रीँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवमिति तांल्लोकानभ्यतपत्तेभ्यस्त्रीणि ज्योतींष्यजायन्त अग्निरेव पृथिव्या अजायत वायुरन्तरिक्षाद्दिव आदित्य इति तानि ज्योतींष्यभ्यतपत्तेभ्यस्त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" (२) इति, तथा सैषा विद्या त्रयी तपतीति (३),

---

(१) तैत्तिरीयब्राह्मणे अन्तिमप्रपाठके अ० १८ ।

(२) शतपथब्राह्मणम् । काण्ड ११ प्रपाठक० ४ ब्राह्मणम् ११ ।

(३) नारायणोपनिषदि अ० १४ ।

स्मृतिरपि मानवी प्रतिवेदं द्वादशवार्षिकब्रह्मचर्योपदेशिनी दृश्यते षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतमिति, श्राद्धप्रकरणे ऽपि(१)।

यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्।
शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगमिति ॥

त्रिवेदपारगानेव श्राद्धभुजो ब्राह्मणान् दर्शयति नाथर्ववेदाध्यायिनः प्रत्युत निषेधः क चिदुपदिश्यते तस्मादाथर्वणं न प्रवृञ्ज्यादिति।

## अथर्ववेदप्रामाण्याक्षेपपरिहारः

एवमाक्षेपे सति केचिदाचक्षते—

यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः।
अर्थान्तरे प्रमाणत्वं केनास्याः प्रतिहन्यते ॥
शान्तिपुष्ट्यभिचारार्था एकब्रह्मर्त्विगाश्रिताः।
क्रियास्तया प्रमीयन्ते त्रय्येवात्मीयगोचर इति ॥

एवं तत्तु सर्वं न साध्वभिधीयते, तथा हि तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति(२) य एष वेदप्रामाण्याधिगतौ जैमिनिना निरदेशि पन्थाः यो वा ऽक्षपादेन कणादेन प्रकटितः तद्वचनादाम्नायस्य प्रामाण्यमिति मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रमाण्यमाप्तप्रामाण्यादिति स चतुर्ष्वपि वेदेषु तुल्यः, तत्र विशेषतुषो ऽपि न कश्चिदस्ति प्रयत्नेनान्विष्यमाणः प्राप्यते, न हि मीमांसकपक्षे एवं वक्तुं शक्यते त्रय्येवानादिमती नाथर्वणश्रुतिस्तस्यां कर्तृस्मरणसम्भवादिति, नापि नैयायिकादिपक्षे एवं शक्यम् आप्तप्रणीतास्त्रयो वेदाः चतुर्थस्तु नाप्तप्रणीत इति, तेन प्रामाण्याधिगमोपायाविशेषात्समानयोगक्षेमतया चत्वारो ऽपि वेदाः प्रमाणम्।

व्यवहारो ऽपि सर्वेषां सारेतरविचारचतुरचेतसां चतुर्भिरपि वेदैश्चतुर्णां वर्णानामाश्रमाणां चतसृषु दिक्षु चतुरब्धिमेखलायामवनौ प्रसिद्ध इति को ऽयमत्रान्यथात्वभ्रमः, श्रुतिस्मृतिमूलश्चार्यावर्त्तनिवासिनां भवति व्यवहारः, ते च श्रुतिस्मृती चतुरो ऽपि वेदान् समानकक्षानभिवदतः, ऋग्यजुःसामवेदेष्वपि अथर्ववेदाशंशीनि भूयांसि वचांसि भवन्ति, तद्यथा शतपथे अथ तृतीये ऽहनीत्युपक्रमस्याश्वमेधे परिप्लवाख्याने सो ऽयमाथर्वणो वेद' (३)इति श्रूयते, छान्दोग्योपनिषदि(४) च "ऋग्वेदो यजुर्वेदः सामवेद आथर्वणः चतुर्थ" इति पठ्यते।

---

(१) मनुस्मृतौ अ० २ श्लो० १४९।

(२) जैमिनिसूत्रम् अ० १ पा० १ सू० ५।

(३) प्रकरणम् १३ प्रपाठक ३ कण्डिका ७।

(४) सप्तमप्रपाठके ६ खण्डे।

नन्वितिहासपुराणानि पञ्चम इति तत्र पठ्यते एव, किं चातः, किमियता ऽऽथर्वणश्चतुर्थो न भवति वेदः, चतुर्थशब्दोपादानादितिहासादितुल्यो ऽसौ न वेदसमानकक्ष इति चेत् केयं कल्पना, चतुर्थशब्दोपादानादप्राधान्ये त्रयो वेदा असृज्यन्तेत्यादौ त्रित्वसंख्योपादानात्ते ऽपि न प्रधानतामधिगच्छेयुः, इतिहासादिभिर्वा सह परिगणनमप्राधान्यकारणं यदुच्यते तदपि सर्ववेदसाधारणमिति यत्किंचिदेतत्, तथा शताध्ययने ऽपि ऋचो वै ब्रह्मणः प्राणा इत्यभ्युपक्रम्य आथर्वणो वै ब्रह्मणः समान इति पठ्यते, तथा ये ऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्यो ऽथर्वाङ्गिरस एव मधुकृत इति(१), तथा तैत्तिरीये(२) तस्माद्वा एतस्मात्प्राणमयादन्योन्तर आत्मा मनोमय इति प्रस्तुत्य तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरः पक्षः आदेश आत्माऽथर्वाङ्गिरसः पुच्छं प्रतिष्ठेति पठ्यते, तथान्यत्र(३) ऋचां प्राची महती दिगुच्यते दक्षिणामाहुर्यजुषां साम्नामुत्तराम् अथर्वणामङ्गिरसां प्रतीची महती दिगुच्यते इति, शतपथे ब्रह्मयज्ञविधिप्रक्रमे "मध्यमे पयआहुतयो वा एता देवानां यदृच इत्युपक्रम्य मेदआहुतयो वा एता देवानां यदथर्वाङ्गिरसः स्म य एवं विद्वानथर्वाङ्गिरसो ऽहरहः स्वाध्यायमधीते मेदआहुतिभिरेव देवान् स तर्पयति त एनं तृप्तास्तर्पयन्ति"(४)इति, मन्त्रा अपि तदर्थप्रकाशनपरा अनुश्रूयन्ते, (५)"त्वामग्ने पुष्करादध्यथर्वा निरमन्थत" इत्यादयो न चैषामथर्वा नाम कश्चिदृषिरित्येवंप्रकारं व्याख्यानं युक्तम् अन्यत्राप्यसमाश्वासप्रसङ्गात्, इत्येवंजातीयकास्तावदुदाहृताः श्रुतिवाचः, स्मृतिवाक्यानि खल्वपि मनुस्तावत्, "श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यभिचारयन्" इति श्रुतिशब्देन त्रयीवद् व्यवहरति याज्ञवल्क्यः चतुर्दशविद्यास्थानानि गणयन्—

पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति ॥

चतुर एव वेदानावेदयते, नान्यथा हि चतुर्दशसंख्या पूर्यते, स्मृत्यन्तरे च स्पष्टमेवोक्तम्—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशेति ॥

---

(१) छान्दोग्योपनिषदि प्र० ३ खण्ड ३ ।

(२) ब्रह्मोपनिषदि अ० ३ ।

(३) तैत्तिरीयब्राह्मणे अन्तिमप्रपाठके अ० १० ।

(४) काण्ड० ११ प्र० ३ ब्राह्मणम् ८ ।

(५) तैत्तिरीयसंहिता अ० ३ प्र०५ अ० ११ ।

अन्यत्राप्युक्तम्, पुराणं धर्मशास्त्रं मीमांसा न्यायश्चत्वारो वेदाः षडङ्गानीति चतुर्दश विद्यास्थानानीति, शातातपोऽप्याह—

ऋक्सामयजुरङ्गानामथर्वाङ्गिरसामपि ।
अणोरप्यस्य विज्ञानाद्यो ऽनूचानस्स नो महानिति ॥

तथा ऽन्यत्र चत्वारश्चतुर्णां वेदानां पारगा धर्मज्ञाः परिषदित्युक्तम्, शङ्खलिखितौ च ऋग्यजुःसामाथर्वविदः षडङ्गविद्धर्मविद्वाक्यविद् नैयायिको नैष्ठिको ब्रह्मचारी पञ्चाग्निरिति दशावरा परिषदित्यूचतुः, प्राचेतसे चत्वारो वेदविदो धर्मशास्त्रविद्दिति पञ्चावरा परिषदित्युक्तम्, तथा च पङ्क्तिपावनप्रस्तावे चतुर्वेदः षडङ्गवित् ज्येष्ठसामगो ऽथर्वाङ्गिरसो ऽप्येते पङ्क्तिपावना गण्यन्ते, तदयमेवमादिवेदचतुष्टयप्रतिष्ठाप्रगुण एव प्राचुर्येण धर्मशास्त्रकाराणां व्यवहारः, अन्ये ऽपि शास्त्रकारास्तथैव व्यवहरन्तो दृश्यन्ते, यथा च महभाष्यकारो भगवान् पतञ्जलिरथर्ववेदमेव प्रथममुदाहृतवान् शन्नो देवीरभिष्टये इति, मीमांसाभाष्यकारेणापि वेदाधिकरणे(१) काठकं कालापकं मौद्गलं पैप्पलादकमिति यजुर्वेदादिकवदथर्ववेदे ऽपि पैप्पलादकमुदाजह्रे, सर्वशाखाधिकरणे(२) ऽपि वेदान्तरशाखान्तरवन्मौदकपैप्पलादकाख्ये अथर्वशाखे अप्युदाहृत्य विचारः कृतः तथा च प्रथमयज्ञो नाम चतुर्षु वेदेषु न कश्चिदस्तीत्यधिकरणान्ते एव लिखितम्, एवं श्रुतिस्मृतिशिष्टाचारव्यवहारविदामत्र विप्रतिपत्तिसम्भावनैव नास्ति ।

आह, न ब्रूमः अथर्ववेदो न प्रमाणमिति किं तु त्रयीबाह्य इति, उच्यते, त्रयीयमथर्ववेदबाह्यैव न केवलमेवं त्रय्यामपि परस्परबाह्यत्वमस्त्येव ऋक्सामबाह्यानि यजूंषि यजुःसामबाह्या ऋचः ऋग्यजुर्बाह्यानि सामानीति कियानयं दोषः सर्वभावानामितरेतरसांकर्यरहितत्वात्, ये हि शब्दात्मानो ग्रन्थसंदर्भस्वभावा ये च तदभिधेया अर्थस्वभावास्ते सर्वे ऽन्योन्यसंमिश्रितात्मान एव न च परेणात्मानममिश्रयन्तो ऽपि ते स्वरूपमपि हारयन्तीति ।

अथोच्यते नेदृशं त्रयीबाह्यत्वमथर्ववेदे विवक्षितम् अपि तु यदेष न त्रयीप्रत्ययं कर्मोपदिशति न तत्सम्बद्धं किं चिदिति तदस्य त्रयीबाह्यत्वमिति, एतददपि न साधूपदिष्टम्, इष्टिपश्वेकाहाहीनसत्रादिकर्मणां तत्रोपदेशदर्शनात्, सर्वशाखाप्रत्ययमेकं कर्मेति न्यायात्, त्रय्युपदिष्टे ऽपि कर्मणि सम्बन्धसर्वशाखाप्रत्ययमेव नाथर्वशाखाप्रत्ययम् यतः सोमयागादिकर्मणामृग्वेदेन हौत्रं यजुर्वेदेनाध्वर्यवं सामवेदेनौद्गात्रं क्रियते नाथर्ववेदेन किं चिदिति, तदयुक्तम्, अथर्ववेदेन ब्रह्मत्वस्य करणात् तथा च गोपथब्राह्मणम्, प्रजापतिः सोमेन यक्ष्यमाणो वेदानुवाच कं वो होतारं वृणीयमिति प्रक्रम्य तस्मादृग्विदमेव होतारं

(१) शाबरभाष्ये अ० १ पा० १ सू० २७ ।
(२) शाबरभाष्ये अ० २ पा० ४ सू० ८ ।

वृणीष्व स हि हौत्रं वेद यजुर्विदमेवाध्वर्युं वृणीष्व स हि आध्वर्यवं वेद सामविदमेवोद्गातारं वृणीष्व स हि औद्गात्रं वेद अथर्वाङ्गिरोविदमेव ब्रह्माणं वृणीष्व स हि ब्रह्मत्वं वेदेति एवमभिधाय पुनराह अथ चेन्नैवम्विधं होतारमध्वर्युमुद्गातारं ब्रह्माणं वा वृणुते पुरस्तादेव वैषां यज्ञो रिष्यतीति तस्मादृग्विदमेव होतारं कुर्याद् यजुर्विदमेवाध्वर्युं सामविदमेवोद्गातारम् अथर्वाङ्गिरसोविदमेव ब्रह्माणमिति, तथा यज्ञे यदूनं च विरिष्टं च यातयामं च करोति तदथर्वणां तेजसाप्याययतीति अथानन्ते भृग्वङ्गिरोभ्यः सोमः पातव्य इति ।

## अथर्ववेदस्य त्र्यात्मकत्वम्—

नन्वेताः श्रुतीरथर्वाण एवाधीयते नान्ये त्रयीविदः ते त्वेवं पठन्ति यदृचा हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्ना औद्गात्रम् अथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्ययेति ब्रूयादिति, तथा च यदृचैव हौत्रमकुर्वत यजुषाऽऽध्वर्यवं साम्नौद्गात्रं यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमिति ।

उच्यते, वयमप्येवमादीनि वाक्यानि न नाधीमहि किं त्वेषामयमेवार्थोऽथर्वाङ्गिरोविदेव ब्रह्मेति, कथम्, यतो न त्रयी नाम किमपि वस्त्वन्तरम्, अपि तु त्रयाणां वेदानां समाहार इति, समाहारश्च समाह्रियमाणनिष्ठो भवति, समाह्रियमाणाश्च ऋग्वेदादयस्त्रयो हौत्रादिपरत्वे चरितार्था न पुनस्तत्र भेदमर्हन्ति, एकैकशः चरितार्थानां समुदायोऽपि चरितार्थ एव, समुदायबुद्धौ हि विभज्यमानायां समुदायिन एव प्रस्फुरन्ति नावयविवदर्थान्तरं ते चान्यत्र व्यापृताः, किं नु खलु ऋग्वेदादीनां ब्रह्मत्वं कुर्वतामतिभारो भवति, न ब्रूमः अतिभार इति किं तु त्र्यात्मकत्वेन ब्रह्मत्वकर्त्तव्यतोपदिश्यते त्र्यात्मकश्चान्यतमोऽपि तेषां न भवति वेदः अथर्ववेदस्तु त्र्यात्मक एव, तत्र हि ऋचो यजूंषि सामानि इति त्रीण्यपि सन्ति तेन ब्रह्मत्वं क्रियमाणं त्रय्या कृतं भवति ।

ननु यस्त्रीन्वेदानधीते तेन चेद् ब्रह्मत्वं क्रियेत तत्किं तया न कृतं भवति, बाढमित्युच्यते सोऽपि एकस्मै वा कामायान्ये यज्ञक्रतवस्समाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः सर्वेभ्यो दर्शपूर्णमासाविति श्रुतावपि(१) योगसिद्ध्यधिकरणन्यायेनान्यतममेव बुद्धावादाय विदध्यान्न समुदायं बुद्धावारोपयितुं शक्नुयादित्येके नैतत्कृतं भवति न त्रय्येति ।

नन्वन्येऽपि त्र्यात्मका वेदाः यद्येवं सुतरामथर्ववेदो न पृथक् करणीयः सर्वेषां रूपाविशेषात्, तेषां पृथक्प्रतिष्ठैः स्वैः स्वैर्ऋगादिभिरेव व्यपदेश इति न ते समुदायशब्दव्यपदेश्याः, यत्तु वाक्यान्तरे त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमिति तत्रेयं चतुर्थी षष्ठ्याः स्थाने प्रयुक्ता शुक्रमिति सारमाचक्षते तेन त्रयी-

---

(१) जैमिनिसूत्रम् । अ० ४ पा० ३ सू० २६-२८ ।

विद्यायाः सारेण ब्रह्मत्वं क्रियते इत्युक्तं भवति, न च त्रय्येव त्रय्याः शुक्रं भवति न चात्यन्तं ततोऽर्थान्तरमेव तेनेदमथर्ववेदात्मकमेव त्रय्याः शुक्रं, शुक्रमिति च गुह्यमाहुः, अथर्वशब्दोऽपि रहस्यवचनो यज्ञाथर्वाणं वैकस्या इष्टय इति, तेन त्रयीशुक्ररूपेणाथर्ववेदेन ब्रह्मत्वमितीत्थमथर्ववेदस्य न त्रयीबाह्यत्वमित्थं सर्वशाखाप्रत्ययमेकं कर्मेति न सर्वशब्दः सङ्कोचितो भवति, अत एव ब्रह्मवेदोऽथर्ववेद इति पूर्वोत्तरब्राह्मणे पठ्यते ऋग्वेदो यजुर्वेदः सामवेदः ब्रह्मवेद इति, तथा च काठकशताध्ययने ब्राह्मणे ब्रह्मौदने श्रूयते ब्रह्मवादिनो वदन्ति पुरा वा औद्दालकिरारुणिरुवाच ब्रह्मणे त्वा प्राणाय जुष्टं निर्वपामि ब्रह्मणे त्वा व्यानाय जुष्टं निर्वपामीत्युपक्रम्य आथर्वणो वै ब्रह्मणः समानोऽथर्वणमेवैतज्जुष्टं निर्वपति चतुः शरावो भवति चत्वारो हीमे वेदास्तानेव भागिनः करोति मूलं वै ब्रह्मणो वेदाः वेदानामेतन्मूलं यदृत्विजः प्राश्नन्ति तद् ब्रह्मौदनस्य ब्रह्मौदनत्वमिति, तथा सामवेदे पृष्ठ्यस्य चतुर्थेहन्यार्भवे पवमाने आथर्वणे साम्नौगात्रं यत्तद्विधाने श्रूयते चतुर्विधमाथर्वणं भवति चतूरात्रस्य वृत्त्यै चतुष्पदामानुष्टुभाऽनुष्टुभमेवैतदहर्यच्चतुर्थं भेषजं वाथर्वाणं तद्धि भैषज्यमेव तत्करोत्याथर्वणानि यागभेषजानीत्येतदालम्बनेयं स्तुतिरत एव प्रागुक्तं यज्ञे यदूनं च विरिष्टं च यातयामं च करोति तदथर्वणा तेजसाप्याययतीति तस्मादाथर्वण एव ब्रह्मेति, एतच्च शास्त्रान्तरे विस्तरेणाभियुक्तैर्युक्तिभिरुपपादितमिति नेहात्यन्ताय प्रतायते।

यत्तु नाथर्वणेन प्रवृञ्ज्यादिति तत्कल्पसूत्रवाक्यत्वाद्वेदविरुद्धमित्यनादृतम्, अथापि श्रौतमिदं वाक्यं तदापि प्रकरणाधीतं चेत्तत्रव क चित्कर्मणि निवेक्ष्यते, अनारभ्यवादपक्षेऽपि पूर्वोक्तवाक्यविसदृशार्थत्वादथर्ववेदस्य च त्रयीबाह्यत्वेन सम्पर्कपरिहारार्हत्वान्नियतविषयमेव व्याख्यास्यते।

यदप्युच्यते उच्चैर्ऋचा क्रियते उच्चैस्साम्नोपांशु यजुषेतिवदथर्वधर्मोऽपि न कश्चिदाम्नात इति तदप्यसारम्, मन्त्रधर्मो ह्ययमुपदिश्यते न वेदधर्मः। मन्त्रब्राह्मणसमुदायस्वभावा हि चत्वार इमे वेदग्रन्था मन्त्रास्तु ते गद्यपद्यभेदाद् द्विधैव गद्यबन्धो यजुरुच्यते पद्यबन्ध ऋगिति गीतिनिबन्धनं तु भेदान्तरं सामेति, अत एव जैमिनिना मन्त्रविभागं प्रस्तुत्य(१) तेषामृग्यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुः शब्द, इत्थमेव तेषां त्रैविध्यमुपपादितम्, तेषामेव चायमुच्चैरादिधर्मो न वेदशब्दवाच्यानां मन्त्रब्राह्मणसमुदायात्मनां ग्रन्थानाम, अथर्ववेदेपीयं त्रिविधैव मन्त्रजातिरिति तत्रापीदं धर्म-

(१) प्रकरणादीनामिति मुले पाठः।

(२) जैमिनिसूत्रम्। अ० २ पा० १ सू० ३५-३६-३७।

जातमुपदिष्टं भवति, मन्त्रविभागकृत एवायं त्रयीव्यपदेश इति, तच्च सैषा त्रयी विद्या तपतीत्याद्यपि न विरोत्स्यते, एवं ऋग्यजुःसामसमुदायात्मकमन्त्रोपबन्धात् त्रय्यन्तर्गतश्च अथर्ववेदः पृथग्व्यवस्थितग्रन्थसंदर्भस्वभावत्वाच्च भिन्न इति स्थितम् ।

अन्ये पुनः ऋक्प्रचुरत्वात्प्रविरलयजुर्वाक्यत्वादगीयमानसाममन्त्रतावशाच्च ऋग्वेदमेवाथर्ववेदमाचक्षते अयमपि पक्षो ऽस्तु न कश्चिद्विरोधः ।

यत्पुनरभिधीयते वेदशब्दस्त्रयाणामेव वाचको न चतुर्थस्येति सोयमत्युत्कटो द्वेषः, वृद्धव्यवहारो ह्यत्र प्रमाणम्, वेदो ऽयं ब्राह्मणो ऽयमिति तत्र तत्र वेदशब्दे उच्चारिते चत्वारो ऽपि प्रतीयन्ते, वेदो मया ऽधीत इति वदन्तं पृच्छन्ति व्यवहर्त्तारः कतमस्त्वया ऽधीतो वेद इति स आह अथर्ववेद इति न तमेवमाक्षिपन्ति नासौ वेदो यस्त्वया पठित इति, सोपपदो ऽथर्ववेदे वेदशब्द इति चेद् वेदान्तरेष्वपि तुल्यमेतत, ऋग्वेदो यजुर्वेदः सामवेद इति, निरुपपदो ऽपि तेषु वेदशब्दः प्रयुज्यते इति चेत् तदितरत्रापि समानमित्युक्तम्, चतुर्वेदाध्यायी भारद्वाज इति, सर्वथा तु सोपपद एवायुर्वेदादिषु वेदशब्द इति न तत्तुल्यकक्षताधिक्षेपक्षेत्रतामथर्ववेदो नेतव्यः, ब्रह्मयज्ञविधिश्च श्रौतश्चतुर्ष्वप्यविशिष्ट इत्युक्तम्, स्मार्त्तो ऽपि तथाविध एवास्ति, यथा ऽऽह याज्ञवल्क्यः(१)—

मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विज इति ॥

साम्प्रदायिकमध्यापनादियजनादि सर्वमभिन्नमेवेत्यलं प्रसङ्गेन ।

तेन प्रमाणतायां वेदस्वध्यायशब्दवाच्यत्वे पुरुषार्थसाधनविधावपि चत्वारः समा वेदाः ।

### अथर्ववेदस्य प्राथम्यम्—

यदि पुनरौत्तराधर्येण विना न परितुष्यते तदथर्ववेद एव प्रथमः ततः परमस्य मन्त्रस्य ब्रह्मणः प्रणवस्याभिव्यक्तेः, तथा च श्रुतिः, ब्रह्म ह वा इदमग्र आसीदित्युपक्रम्याथर्वणं वेदमभ्यस्याश्नास्यदभ्यतपत्सन्तपत्तस्माच्छ्रान्तात्सन्तप्रादोमिति मन एवोर्ध्वमक्षरमुदक्रामदित्यादि, तथा महाव्याहृतीनां शाखान्तरप्रसिद्धानामप्रसिद्धानां च बृहदित्यादीनां तत एवोत्थानम्, अथर्ववेदकृतोपनयनसंस्कारस्य वेदान्तराध्ययनमविरुद्धम्, अन्यवेदोपनीयमानस्य तु नाथर्वणोपनयनसंस्कारमप्रापितस्याथर्ववेदाध्ययने ऽधिकारः, तदुक्तम्, भृग्वङ्गिरोविदा संस्कृतो न्यान्वेदानधीयीत नान्यत्र संस्कृतो भृग्वङ्गिरसो ऽधीयीतेति, त्रय्येकशरणैरपि चैतदवश्याश्रयणीयम् अथर्ववेदविहित स्वकर्मभ्रंशे प्रायश्चित्तमाचरद्भिरित्यथर्व-

(१) याज्ञवल्क्यस्मृतौ । अ० १ श्लो० ४४ ।

वेद एव ज्यायान् ।

यत्तु मानवं वाक्यमुदाहृतं षट्त्रिंशदाब्दिकं तत्त्रिवेदाध्ययनविषयं वैकल्पिकं वेदानधीत्य वेदौ वा वेदं वा ऽपि यथाक्रममिति एकस्मिन्वेदे द्वादशवर्षाणि व्रतं द्वयोश्चतुर्विंशतिः त्रयाणां षट्त्रिंशदिति, यस्तु चतुरो वेदानधीते तस्याष्टचत्वारिंशद्वर्षं वेदब्रह्मचर्यमुपासीतेति स्मृत्यन्तरमस्ति न च तदार्यैर्नादृतम्, तत्र त्रिवेदाध्यायिनामेव प्रतिवेदं षोडशवर्षाणि व्रतं चरेदिति व्याख्यानमसङ्गतम्, उपक्रमविरोधाद् अनुपयोगाच्च, तेन वेदान्तराध्ययनकृत एवायं विकल्पविधिर्न द्वादशषोडशवर्षापेक्ष इत्यनादरो ऽप्यस्यां स्मृतौ कृष्णकेशो ऽग्नीनादधीतेति श्रुतिविरोधकृतो नाथर्ववेदाध्ययननिषेधगर्भ इति, त्रैवेदिकव्रतब्रह्मचर्यस्मृतिरपि चेयम् अथर्ववेदाध्ययनपर्युदासमेव विषयीकरोति न च वेदान्तराध्ययननिषेधमिति अत्रापि न विशेषहेतुरस्ति, त्रिषु वेदेष्विदं व्रतं न पुनरेष्वेव त्रिष्विति नियामकं वचनमस्ति ।

यदपि श्राद्धप्रकरणे यत्नेन भोजयेदितित्रिवेदपारगपरिकीर्त्तनं तद्वेदपारगमिति शाखान्तरगमिति समाप्तिगमिति विशेषणपदपर्यालोचनया ऋग्वेदाद्येकवेदाध्यायिनामनधिकारमेव श्राद्धे सूचयति अथर्वणस्तु अथर्वशिरो ऽध्ययनमात्रलब्धपङ्क्तिपावनभावस्यैकदेशपाठिनो ऽपि तत्राधिकार उपपद्यते, दर्शितं चाथर्वशिरोऽध्ययनमात्रादपि पङ्क्तिपावनत्वं पङ्क्तिपावनश्च श्राद्धभोजने ऽनधिकृत इति विप्रतिषिद्धम् ।

यत्तु ज्येष्ठसामगस्त्रिमधुस्त्रिसुपर्णिक इति वेदान्तरैकदेशाध्यायिनामपि श्राद्धभोजनाभ्यनुज्ञानं तदनुकल्परूपमिव भाति प्रथमकल्पेन समग्रवेदाध्ययनोपदेशादिति, तस्मान्नाथर्वनिषेधार्थमेतद्वाक्यमिति, तदेवमवस्थिते यद्वार्त्तिककारेण भयादिव द्वेषादिव मोहादिव सानुकम्पमिव वेदमुच्यते(१) यदि यज्ञोपयोगित्वमित्यादि तदहृदयङ्गमम्, अथर्ववेदे पूर्वोत्तरब्राह्मणे विस्पष्टमिष्टिपश्वेकाकाहाहीनसत्राणामुपदेशात्, वेदान्तरेषु तच्चोदनाभावात्किमथर्ववेदे तदुपदेशेनेति चेत् सुभाषितमिदम्, एवमपि हि वक्तुं शक्यम् अथर्ववेदे तच्चोदनाया दर्शनात्किं तदुपदेशेनेति, न च जाने कस्यैष पर्यनुयोगः किं नित्यस्य वेदस्य किं वा तत्प्रणेतुरीश्वरस्येति द्वावपि हि तावपर्यनुयोज्यावित्युक्तम्, अर्थान्तरशान्तिपुष्ट्यभिचारादि वेदान्तरेष्वपि न न दृश्यते श्येनो हि सामवेद उत्पन्नः अद्भुतशान्त्यादयश्च यजुर्वेदइति तदपि समानम्, एकब्रह्मर्त्विगाश्रिता इत्येतदपि न सत्यम्, यत एवं तत्र पठ्यते द्वे यज्ञवृत्ती भवतो वैहारिकी च पाकयज्ञवृत्तिश्चोत तत्र वैहारिकी नामानेकर्त्विगाश्रितानामेकक्रियाणामुपदेशः श्रुतावेकब्रह्मर्त्विगाश्रिता-

---

(२) तन्त्रवार्तिके अ १ पा० ३ सू० ४ ।

स्तु शान्त्यादिक्रियाः स्मृताविरयभूमिज्ञोक्तिरेषा त्रय्येवात्मीयगोचरा इति एतद-पि परमसाध्यस्थ्यम्, न ह्यात्मीयः परकीयो वा कश्चिदस्ति वेदार्थः सर्वशाखाप्रत्ययत्वादेकस्य कर्मणः।

## वेदचतुष्टयसमानत्वोपसंहारः—

तस्मात्समानयोगक्षेमत्वात्सर्ववेदानामेकस्य ततः पृथक् करणं वेदनिन्दाप्रायश्चित्तनिर्भयधियामेव चेतसि परिस्फुरति न साधूनामित्युपरम्यते।

इति तुल्यप्रभावर्द्धिवर्धमानोचितस्तवाः।
विविधाभिमतस्फीतफलसंपादनोद्यताः॥
चत्वारो ऽपि पराक्षेपपरिहारस्थिरस्थितिम्।
भजन्ति वेदाः प्रामाण्यलक्ष्मीं हरिभुजा इव॥
चतुःस्कन्धोपेतः प्रथितपृथगर्थैरवयवैः
कृतान्योन्यश्लेषैरुपचितवपुर्वेदविटपः।
प्रतिस्कन्धं शाखाफलकुसुमसंदर्भसुभगाः
प्रकाशन्ते तस्य द्विजमुखनिपीतोत्तमरसाः॥

## तन्त्रागमादिप्रामाण्यविचारः—

आह—

किमेतदित्थं प्रामाण्यं वेदानामेव साध्यते।
तन्त्रागमान्तराणां वा सर्वेषामियमेव दिक्॥

किं चातः—

आद्ये पक्षे परेष्वेवं ब्रुवाणेषु किमुत्तरम्।
उत्तरत्र तु मिथ्या स्युः सर्वे ऽन्योन्यविरोधिनः॥

कानि पुनरागमान्तराणि चेतसि विधायैवं वत्सः पृच्छति, पुराणेतिहासधर्मशास्त्राणि वा शैवपाशुपतपञ्चरात्रबौद्धार्हतप्रभृतीनि वा तत्र शैवादीनि तावन्निरूपयिष्यामः, मन्वादिप्रणीतानि धर्मशास्त्राणि वेदवत्तदर्थानुप्रविष्टविशिष्टकर्मोपदेशीनि प्रमाणमेव कस्तेषु विचारः, तेषां तु प्रमाणत्वं वेदमूलत्वेनैव केचिदाचक्षते, तथा हि न तावन्मन्वादिदेशना भ्रान्तिमूलाः संभाव्यन्ते बाधकाभावात्, अद्य यावदपरिम्लानादरैर्वेदविद्भिस्तदर्थानुष्ठानात्, नाप्यनुभवमूलाः प्रत्यक्षस्य त्रिकालानवच्छिन्नकार्यरूपधर्मपरिच्छेददशासामर्थ्यासंभवात्, न च पुरुषान्तरोपदेशमूलाः पुरुषान्तरस्यापि तदवगमे प्रमाणाभावत्, भावे वा मनुना किमपराद्धम्, असति हि मूलप्रमाणे पुरुषवचनपरम्परायामेव कल्प्यमानायामन्धपरम्परास्मरणतुल्यत्वं दुर्निवारम्, न च विप्रलम्भका एव भवन्तो मन्वादय एवमुपदिशेयुरिति युक्ता कल्पना बाधकाभावात् साधुजनपरिग्रहाच्चेत्युक्तम्,

तस्मात्पारिशेष्याद्वेदाख्यकारणमूला एव भवितुमर्हन्ति मन्वादिदेशनाः, तद्वच-नुगुणं समर्थं च कारणमिति तदाह भट्टः(१)—

भ्रान्तेरनुभवाद्वापि पुंवाक्याद्विप्रलम्भकात् ।
दृष्टानुगुण्यसामर्थ्याच्चोदनैव लघीयसीति ॥

तत्र केचित्परिदृश्यमानमन्त्रार्थवादबलोन्नीतविधिमूलत्वं मन्यन्ते, अन्ये विप्रकीर्णशाखामूलत्वम् ।

अपरे पुनरुत्सन्नशाखामूलत्वमिति, अनेन च विशेषविवरणेन न नः प्रयोजनं सर्वथा यथोपपत्ति वेद एव तत्र मूलं प्रकल्प्यतां न मूलान्तरम् अप्रमाणकत्वात्, वेदमूलत्वपक्षे ऽपि चेयमखिलजगद्विदिता स्मृतिसमाख्या ऽनुगृहीता भविष्यति, प्रत्यक्षमूलत्वे हि वेदवदत्रापि कः स्मृतिशब्दार्थः, किं च वेदमूलत्वे सति स्मृतेः श्रुतिविरोधे सति तदतुल्यकक्षत्वाद्बाध्यत्वं सुवचं भवति क्लृप्तमेकत्र मूलमितरत्र कल्प्यम् यावदेव भवान्स्मृतेः श्रुतिः कल्पयितुं व्यवस्यति तावदेतद्विरोधिनी प्रत्यक्षश्रुता श्रुतिरवतरति हृदयपथमिति कथं तदा मूलकल्पनायै स्मृतिः प्रभवेत्, तदाह--

सो ऽयमाभाणको लोके यदश्वेन हृतं पुरा ।
तत्पश्चाद्गर्दभः प्राप्तुं केनोपायेन शक्नुयादिति(२) ॥

अपर आह, विकल्प एवात्र युक्तः किल द्विविधो वेदः श्रूयमाणो ऽनुमीयमानश्च श्रूयमाणश्च श्रुतिरित्युच्यते अनुमीयमानश्च स्मृतिरिति, द्वावपि चैतावनादी इति किं केन बाध्यते व्यक्ताव्यक्तो हि वेद एवासौ, अत एव न मन्त्रार्थवादादिमूलकत्वकल्पनं युक्तं स्मर्यमाणस्य वेदस्यानादित्वात् ।

नन्वेवं वेदमूलत्वेन प्रामाण्ये वर्ण्यमाने बाह्यस्मृतीनामपि प्रामाण्यं वदन्तः प्रवादुकाः कथं प्रतिवक्तव्याः, उच्यते प्रत्युक्ता एव ते तपस्विनः, उक्तं हि भगवता जैमिनिना, अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यादिति (३)कर्तृसामान्यादिति को ऽर्थः एकाधिकारावगमादिति, य एव वेदार्थानुष्ठाने ऽधिकृताः कर्त्तारस्त एव स्मृत्यर्थानुष्ठाने आचमनादिस्मार्तपदार्थसंवलितवेदिस्तरणादिवैदिकपदार्थप्रयोगदर्शनात्, न त्वेवमधिकारावगमो बाह्यस्मृतिषु विद्यते, तस्मान्मन्वादिस्मृतय एव प्रमाणं न बाह्यस्मृतयः ।

ननु मन्वादिस्मृतयो ऽपि वेदमूलत्वात्प्रमाणं नान्यतः इति, अत्रोच्यते, तदेतद्वेदमूलतया प्रामाण्यं योगिप्रत्यक्षं धर्मग्राहकममृष्यमाणाः किलाचक्षते भवन्तः, एतच्च न युक्तम्, यथा हि भगवानीश्वरः सर्वस्य कर्त्ता सर्वस्येशिता सर्व-

(१) तन्त्रवार्तिके अ० १ पा० ३ सू० २ ।
(२) तन्त्रवार्तिके अ० १ पा० ३ सू० ३ अर्थानुवादोऽयम् ।
(३) जैमिनिसूत्रम् । अ० १ पा० ३ सू० २ ।

दर्शी सर्वानुकम्पी च वेदानां प्रणेता समर्थितः तथा योगिप्रत्यक्षमपि धर्मग्रहणे निपुणमस्मदादिप्रत्यक्षविलक्षणं प्रत्यक्षलक्षणे समर्थितमेव तस्मात्तन्मूला एव मन्वादिदेशना भवन्तु।

यत्तु त्रिकालानवच्छिन्नः कथं प्रत्यक्षगम्यो धर्मः स्यादिति चोदनैव तत्र प्रमाणमुच्यते, प्रतिविहितं तदीश्वरप्रत्यक्षं यथाऽग्निहोत्रादेर्धर्मत्वस्य ग्राहकमेवमष्टकादियागे तस्य ग्राहकं मन्वादिप्रत्यक्षं भविष्यतीति किमत्र त्रिकालानवच्छेदेन तदवच्छेदेन वा कृत्यम्, यद्येवमष्टकादिकर्मणां धर्मत्वाग्राहित्वादसर्वज्ञ ईश्वरः स्यात्, ज्ञात्वा वाऽनुपदिशन्नकारुणिको भवेत्, नैष दोषः, सर्वं जानात्येव भगवान् किंचित्स्वयमुपदिशति किंचित्परानुपदेशयति, ते हि तस्यानुग्राह्या भगवतस्तेषां च तदनुग्रहकृतैव तथाविधज्ञानप्राप्तिः, मन्वादीनां प्रत्यक्षो धर्म इति वेदेऽपि पठ्यते साक्षात्कृतधर्माण ऋषयो बभूवुः ते परेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्राहुरिति वेदेऽपि पठ्यते।

नन्वेवं प्रत्यक्षमूलत्वाविशेषाच्छ्रुतिस्मृत्योर्विरोधे विकल्पः प्राप्नोति बृहद्रथन्तरविध्योरिव न बाध्यबाधकभावः, न हीश्वरप्रत्यक्षस्य योगिप्रत्यक्षस्य च प्रामाण्ये कश्चिद्विशेषः नैसर्गिकाहार्यत्वकृतस्तु भविष्यति किं तेन, उच्यते, भवतु विकल्पः को दोषः वेदमूलत्ववादिभिरपि कश्चिद्विकल्पो व्याख्यात एव, विषयविभागेन वा विकल्पो व्याख्यास्यते न च श्रुतिस्मृतिविरोधोदाहरणं किंचिदस्तीति स्वाध्यायाभियुक्ताः, तस्मादाप्तप्रत्यक्षमूलत्वेन वेदानामिव धर्मशास्त्राणां हि पञ्चमं वेदमाहुः, उक्तं च—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यतीति॥

अथ वा किमस्माकं दुरभिनिवेशेन वेदमूलत्वात्स्मृतीनां स्मृतिवत्पुराणानामपि भवतु प्रामाण्यम्, सर्वथा तावद्वेदाश्चत्वारः पुराणं स्मृतिरिति षडिमानि विद्यास्थानानि साक्षात्पुरुषार्थसाधनोपदेशीनि, व्याकरणादीनि षडङ्गानि अङ्गत्वेनैव तदुपयोगीनि न साक्षाद्धर्मोपदेशीनि, कल्पसूत्रेष्वपि विहितप्रकर्मक्रमनियमसंग्रहमात्रं नापूर्वोपदेशः, मीमांसा वेदवाक्यार्थविचारात्मिका वेदप्रामाण्यनिश्चयहेतुश्च न्यायविस्तर इत्यामुखे एवोक्तम्, तदिमानि चतुर्दश विद्यास्थानानि प्रमाणम्, कानिचित्साक्षादुपदेशीनि कानिचित्तदुपयोगीनि इति सिद्धम्।

## शैवपाशुपताद्यागमप्रामाण्यस्थापनम्—

यानि पुनरागमान्तराणि परिदृश्यन्ते तान्यपि द्विविधानि कानिचित्सर्वात्मना वेदविरोधेनैव प्रवर्त्तन्ते बौद्धादिवत्, कानिचित्तदविरोधेनैव कल्पितव्रतान्तरोपदेशीनि शैवादिवत्, तत्र शैवाद्यागमानां तावत्प्रामाण्यं ब्रूमहे

तदुपजनितायाः प्रतीतेः संदेहबाधकारणकालुष्यकलापस्यानुपलम्भात्, ईश्वरकर्तृकत्वस्य तत्रापि स्मृत्यनुमानाभ्यां सिद्धत्वात्, मूलान्तरस्य लोभमोहादेः कल्पयितुमशक्यत्वात्, न हि तत्रेदंप्रथमता स्मर्यते वेदवदेकदेशसंवादाश्च भूम्ना दृश्यन्ते इति कुतो मूलान्तरकल्पनाऽवकाशः, न च वेदप्रतिपक्षतया तेषामवस्थानं वेदप्रसिद्धचातुर्वर्ण्यादिव्यवहारापरित्यागात्।

मन्वादिचोदनान्यायः स यद्यपि न विद्यते।
शैवागमे तथाऽप्यस्य ननु युक्ता प्रमाणता॥
सर्वोपनिषदामर्था निःश्रेयसपदस्पृशः।
विविच्यमाना दृश्यन्ते ते हि तत्र पदे पदे॥
ये च वेदविदामग्र्याः कृष्णद्वैपायनादयः।
प्रमाणमनुमन्यन्ते तेऽपि शैवादिदर्शनम्॥
पञ्चरात्रेऽपि तेनैव प्रामाण्यमुपवर्णितम्।
अप्रामाण्यनिमित्तं हि नास्ति तत्रापि किं चन॥

तत्र च भगवान्विष्णुः प्रणेता कथ्यते स चेश्वर एव।

एकस्य कस्य चिदशेषजगत्प्रसूति-
हेतोरनादिपुरुषस्य महाविभूतेः।
सृष्टिस्थितिप्रलयकार्यविभागयोगाद्
ब्रह्मेति विष्णुरिति रुद्र इति प्रतीतिः॥

वेदे च पदे पदे एक एव रुद्रो ऽवतस्थे न द्वितीय इति इदं विष्णुर्विचक्रमे इति रुद्रो विष्णुश्च पठ्यते, तद्योगाच्च तदाराधनोपाया वेदे ऽपि चोदिता एव शैवपञ्चरात्रयोस्तु तद्योगा एवान्यथोपदिश्यन्ते, न चैष वेदविरोधो वैकल्पिकत्वादुपायानाम्, अत आप्तप्रणीतत्वाद्वेदाविरुद्धत्वाच्च न तयोरप्रामाण्यम्।

## बौद्धाद्यागमानामप्रामाण्यम्—

ये तु सौगतसंसारमोचकागमाः पापकाचारोपदेशिनः कस्तेषु प्रामाण्यमार्यो ऽनुमोदते।

बुद्धशास्त्रे हि विस्पष्टा दृश्यते वेदबाह्यता।
जातिधर्मोचिताचारपरिहारावधारणात्।
संसारमोचकाः पापाः प्राणिहिंसापरायणाः।
मोहप्रवृत्ता एवेति न प्रमाणं तदागमः॥
निषिद्धसेवनप्रायं यत्र कर्मोपदिश्यते।
प्रामाण्यकथने तस्य कस्य जिह्वा प्रवर्त्तते॥
ततो यद्यपि सिद्धिः स्यात् कदा चित्कस्य चित् क चित्।

ब्रह्महत्यार्जितग्राम्यभोगवन्नरकाय सा ॥
निषिद्धाचरणोपात्तं दुष्कृतं केन शाम्यति ।
अतः कालान्तरेणापि नरके पतनं पुनः ॥

यत्त्वत्र चोदितं परेषु पूर्वोक्तक्रमेण बुद्धाद्याप्तकल्पनां कुर्वत्सु किं प्रतिविधेयमिति तत्रोच्यते, महाजनप्रसिद्ध्यनुग्रहे हि सति सुवचमाप्तोक्तत्वं भवति नान्यथा, महाजनश्च वेदानां वेदार्थानुगामिनां च पुराणधर्मशास्त्राणां वेदाविरोधिनां च केषांचिदागमानां प्रामाण्यमनुमन्यते न वेदविरुद्धानां बौद्धाद्यागमानाम् इति कुतस्तेषामाप्तप्रणीतत्वम्, मूलान्तरं हि तत्र सुवचम् अज्ञानलोभादीत्येवमभिधाय वेदस्पर्धिनो बौद्धादयो निषेद्धव्याः, आह—

को ऽयं महाजनो नाम किमाकारः किमास्पदः ।
किंसंख्यः किंसमाचार इति व्याख्यातुमर्हसि ।

अपि च, बौद्धादयो बुद्धादीनाप्तान् स्वागमप्रामाण्यसिद्धये वदन्ति ते महाजनमपि निजं तत्सिद्धये वृन्दादिकं वदेयुरेव कस्तत्र प्रतीकारः, उच्यते, चातुर्वर्ण्यं चातुराश्रम्यं च यदेतदार्यदेशप्रसिद्धं स महाजन उच्यते, आकारस्तु तस्य कीदृशं पाणिपादं कीदृशं शिरोग्रीवं वा कियती तस्य संख्येति पुरुषलक्षणानि गणयितुं न जानीमः, चातुर्वर्ण्यचातुराश्रम्यरूपश्चैष महाजनो वेदप्रथमप्रवृत्त आगमान्तरवादिभिरप्रत्याख्येय एव, तथा चैते बौद्धादयो ऽपि दुरात्मानो वेदप्रामाण्यनियमिता एव चण्डालादिस्पर्शं परिहरन्ति निरस्ते हि जातिवादावलेपे वा क्व चाण्डालादिस्पर्शे दोषः ये ऽपि अन्ये केचिदशुचिभक्षणागम्यागमनादिनिर्विकल्पदीक्षाप्रकारमकार्यमनुतिष्ठन्ति ते ऽपि चातुर्वर्ण्यादिमहाजनभीतास्तं तं रहसि कुर्वन्ति न प्रकाशम् , निर्विशङ्के हि तच्छास्त्रप्रत्यये किमिति चौर्यवत्तदर्थानुष्ठानम् , अत एव न निजो महाजन उत्थापयितुं शक्यते वृन्दकादिः किं त्वयमेव चातुर्वर्ण्यादिमहाजनः स चैष महाजनो वेदविरुद्धमागमं परिहरत्येव नानुमोदते ।

संसारमोचकं स्पृष्ट्वा शिष्टाः स्नान्ति सवाससः ।
बौद्धैरपि सहैतेषां व्यवहारो न कश्चन ॥
वेदधर्मानुवर्त्ती च प्रायेण सकलो जनः ।
वेदबाह्यस्तु यः कश्चिदागमो वञ्चनैव सा ॥

ईदृशश्चायमनन्यसामान्यविभवो महाभागो वेदनामा ग्रन्थराशिः यदन्ये बाह्यागमवादिन एवमेव स्पर्धन्ते, ते हि स्वागमप्रामाण्यमभिवदन्तो वेदरीत्याभिदधति वेदे यथा तथा प्रवेष्टुमीहन्ते वैदिकानर्थानन्तरान्तरा स्वागमेषु निबध्नन्ति वेदस्पर्शपूतमिवात्मानं मन्यन्ते तेषामप्यन्तर्हृदये ज्वलतीव प्रामाण्यम् , अत एवंविधाया महाजनप्रसिद्धेरागमान्तरेष्वदर्शनान्न तेषामाप्तप्रणी-

तत्वम् , आह—

महाजनप्रसिद्ध्यैव वेदप्रामाण्यनिश्चयात् ।
किमर्थः कण्ठशोषो ऽयमियानार्येण संश्रितः ॥

वेदप्रामाण्यसिद्ध्यर्थं हि इदं शास्त्रमारब्धमिति गीयते वेदप्रामाण्यस्य च महाजनसिद्ध्यैव सिद्धत्वात्किं शास्त्रेण, अलं क्षुद्रचोद्यैरीदृशैः ।

महाजनप्रसिद्धं हि केचिद्विप्लावयन्त्यपि ।
अतस्तदुपघाताय शास्त्रमेतत् प्रयुज्यते ॥

तस्मात्पूर्वोक्तानामेव प्रामाण्यमागमानां न वेदबाह्यानामिति स्थितम् ।

## आप्तोक्तत्वेन सर्वागमानां प्रामाण्यस्य स्थापनम्—

अन्ये सर्वागमानां तु प्रामाण्यं प्रतिपेदिरे ।
सर्वत्र बाधसन्देहरहितप्रत्ययोदयात् ॥
सर्वत्र वेदवत्कर्तुराप्तस्य परिकल्पना ।
दृष्टार्थेष्वेकदेशेषु प्रायः संवाददर्शनात् ॥

यत्पुनरत्रोक्तं सर्व एवागमाः परस्परविरुद्धार्थोपदेशित्वादप्रमाणं स्युरिति तत्रोच्यते, आप्तप्रणीतत्वेन तुल्यकक्ष्यत्वादन्यतमदौर्बल्यनिमित्तानुपलम्भाच्च न कश्चिदागमः कंचिद्बाधते, विरोधमात्रं त्वकिंचित्करं प्रमाणत्वाभिमतेषु वेदवाक्येष्वपि परस्परविरोधदर्शनात् , पुरुषशीर्षस्पर्शनसुराग्रहणगवालम्भादिचोदनासु वचनान्तरविरुद्धमर्थजातमुपदिष्टमेव, किं चागमानां विरोधो ऽपि नातीव विद्यते प्रमाणानां पुरुषार्थे सर्वेषामविवादात् ।

नानाविधैरागममार्गभेदैरादिश्यमाना बहवो ऽभ्युपायाः ।
एकत्र ते श्रेयसि संपतन्ति सिन्धौ प्रवाहा इव जाह्नवीयाः ॥

तथा ह्यपवर्ग उपेयः सर्वशास्त्रेषु निर्दिश्यते ज्ञानविषये तु विवदन्ते, तत्रापि प्रायश आत्मविषयतायां बहूनामविप्रतिपत्तिः, प्रकृतिपुरुषविवेकज्ञानपक्षे तु प्रकृतेर्विविक्ततया पुरुष एव ज्ञेयः, नैरात्म्यवादिनस्तु आत्मशैथिल्यजननायाऽपदिशन्ति, स्वच्छं तु ज्ञानतत्त्वं यत्तैरिष्यते तत्स्वातन्त्र्यादनाश्रितत्वादात्मकल्पमेव कूटस्थनित्यत्वे प्रवाहनित्यत्वे च विशेषः, एवं प्रधानयोस्तावदुपायोपेययोरविवादः, क्रिया तु विचित्रा प्रत्यागमं भवतु नाम भस्मजटापरिग्रहो वा दण्डकमण्डलुग्रहणं वा रक्तपटधारणं वा दिगम्बरता वा ऽवलम्ब्यतां को ऽत्र विरोधः, वेदे ऽपि किमल्पीयांसः पृथगितिकर्त्तव्यताकलापखचिताः स्वर्गोपायाश्चोदिताः, तस्मात्परस्परविरोधे ऽपि न प्रामाण्यविरोधः, अतश्च यदुच्यते—

कपिलो यदि सर्वज्ञः सुगतो नेति का प्रमा ।
अथोभावपि सर्वज्ञौ मतभेदस्तयोः कथम् ॥

इति तदपास्तं भवति, प्रधाने सति भेदाभावात्, क चिच्च तद्भावे प्रामाण्यविरोधात्, न च क्रोशनहेतुकर्मोपदेशादागमान्तराणामप्रामाण्यम् तस्याप्रमाणतायामप्रयोजकत्वात्।

विचिकित्सा हि नृशिरःकपालाद्यशनेषु या।
सा ऽप्यन्यदर्शनाभ्यासभावनोपनिबन्धना॥
तथा च शान्तचित्तानां सर्वभूतदयावताम्।
वैदिकीष्वपि हिंसासु विचिकित्सा प्रवर्त्तते॥

अभिचारादिहिंसायां वैदिक्यामपि भवतु हृदयोत्कम्पः, करुणांशोपनिपातिनी हिंसेति लिप्सातस्तस्यां प्रवृत्तिः।

यत्त्वग्नीषोमीयादिपशुहिंसेतिकर्त्तव्यतांशस्था यस्यां क्रत्वर्थो हि शास्त्रादवगम्यते इति वैदी प्रवृत्तिः तस्यामपि कारुणिको लोकः सविचिकित्सो भवति वदति च "यत्र प्राणिवधो धर्मस्त्वधर्मस्तत्र कीदृशः" इति, न चैतावता वेदस्याप्रामाण्यमेवमागमान्तरेष्वपि भविष्यति।

यत्तु आगमान्तरेभ्यः कौलादिभ्यः खेचरताद्यर्थसिद्धावपि निषिद्धाचरणकृतः कालान्तरे ऽवश्यं भावीत्युक्तम्, तदपि न युक्तम्, तस्यार्थस्य तदागतिनिषिद्धत्वाभावात् आगमान्तरनिषिद्धत्वे ऽपि वैकल्पिकत्वकल्पनोपपत्तेः, पुरुषार्थप्राप्त्युपायत्वाच्च तस्य तस्मिन्सिद्धे कुतः प्रत्यवायः, भवतु वा कालान्तरे ततः प्रत्यवायः तथा ऽप्यधिकारिभेदेन तत्फले कर्मणि चोद्यमाने श्येनादाविव नागमप्रामाण्यमत्र हीयते, श्येनेनाभिचरन्यजेतेत्यत्राभिचरन्निति शता लङ्घितनिषेधमधिकारिणमाचष्टे तस्य च श्येनयागश्चोदितः स च तत्प्रयोगात्कृतवधः प्रत्यवैत्येव न च वेदस्याप्रामाण्यम्, उक्तं च(१) उभयमिह चोदनया लक्ष्यते अर्थो ऽनर्थश्चेति, अधिकारभेदाच्च विचित्रकर्मचोदना नानुपन्ना, मरणकामस्य सर्वस्वारः चोदितः आयुष्कामस्य कृष्णलचरुः, तस्मादेतदपि नाप्रामाण्यनिमित्तम्।

यदपि बौद्धागमे जातिवादनिराकरणं तदपि सर्वानुग्रहप्रवणकरुणातिशयप्रशंसापरं न च यथाश्रुतमवगन्तव्यम्, तथा च तत्रैतत्पठ्यते न जातिकायदुष्टान्प्रव्राजयेदिति, तस्मात्सर्वेषामागमानामाप्तैः कपिलसुगतार्हत्प्रभृतिभिः प्रणीतानां प्रामाण्यमिति युक्तम्।

## सर्वागमानामीश्वरप्रणीतत्वम्—

अन्ये मन्यन्ते सर्वागमानामीश्वर एव भगवान्प्रणेतेति स हि सकलप्राणिनां कर्मविपाकमनेकप्रकारमवलोकयन् करुणयाताननुग्रहीतुमपवर्गप्राप्तिमार्गं

(१) शाबरभाष्ये अ. १ पा. सू. २।

बहुविधमुत्पश्यन्नाशयानुसारेण केषांचित्क्वचित्कर्मणि योग्यतामवगम्य तं तमुपायमुदिशति स्वविभूतिमहिम्ना च नानाशरीरपरिग्रहात्स एव संज्ञाभेदानुपगच्छति अर्हन्निति कपिल इति सुगत इति स एवोच्यते भगवान्, नानासर्वज्ञकल्पनायां यत्नगौरवप्रसङ्गात्।

ननु बुद्धः शुद्धोदनस्याऽपत्यं स कथमीश्वरो भवेत् परिहृतमेतद्भगवता कृष्णद्वैपायनेन—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदा ऽऽत्मानं सृजाम्यहमिति॥

शरीरमेव शुद्धोदनस्यापत्यं नात्मा, अतः प्रतियुगं विष्णुरेव भगवान्धर्मरूपेणावतरतीत्यागमविदः प्रतिपन्नाः।

ननु वेदसमानकर्तृकेष्वागमान्तरेषु कथं तादृशो महाजनसंप्रत्ययो नास्ति, एवं नास्ति तेन वर्त्मना भगवता कतिपये प्राणिनो ऽनुगृहीताः येषां तादृश आशयो लक्षितः, वैदिकेन तु वर्त्मना निःसंख्यकाः प्राणिनो ऽनुगृहीता इति तत्र महानादरः आगमान्तरेषु कृश इति, एककर्तृके परस्परविरोधः कथमिति चेद् वेदैरेवात्र वर्णितः समाधिः, तेष्वपि भूम्नः परस्परविरोधस्य दर्शनादित्युक्तम्, तस्मादीश्वरप्रणीतत्वादेव सर्वागमानां प्रामाण्यम्।

अपरे पुनर्वेदमूलत्वेन सर्वागमप्रामाण्यमभ्युपागमन्, यो हि मन्वादिदेशनानां वेदमूलतायां न्याय उक्तः—

भ्रान्तेरनुभवाद्वापि पुंवाक्याद्विप्रलम्भकात्।
दृष्टानुगुणसामर्थ्याच्चोदनैव लघीयसीति॥

स सर्वागमेषु समानः, न च मन्वादिस्मृतीनां मूलभूता श्रुतिरुपलभ्यते अनुमानेन तु तत्कल्पनमागमान्तरेष्वपि तुल्यम्।

ननु चोक्तम् अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यादिति तच्चेह नास्तीति कथं श्रुत्यनुमानम्, नैष दोषः—

एकाधिकारावगमो न प्रामाण्ये प्रयोजकः।
मिश्रानुष्ठानसिद्धौ तु कामं भवतु कारणम्॥

न च पृथगनुष्ठीयमानमपि कर्म न प्रमाणमूलं भवति वर्णाश्रमभेदानुष्ठेयकर्मवत्।

कर्तृसामान्यशून्यत्वादथ मूलान्तरोदयः।
तदसद्बाधकाभावाद् भ्रान्त्यादिप्रतिषेधनात्॥
प्रत्यक्षमूलतायां तु गुर्वी भवति कल्पना।
वेदस्त्वनन्तशाखत्वान्मूलं तत्र स्वसङ्गतम्॥
नन्वत्र वेदमूलत्वे द्वेषो वेदविदां कथम्।

गत्वा त एव पृच्छ्यन्तां येषां द्वेषादि विद्यते ॥
गोवधे वा कथं तेषां द्वेषः सुस्पष्टवैदिके ।
प्रत्युक्तं च विरुद्धत्वं शाखानन्त्याच्च दुर्गमम् ॥
किमियद्वेदसर्वस्वं यावदस्मन्मुखे स्थितम् ।
शाखान्तराद्वा संवादो न लभ्येतेति का प्रमा ॥

तथाच सांख्यशास्त्रप्रसिद्धत्रिगुणात्मकप्रकृतिसूचनपरम् अजामेकां लोहितशुक्लकृष्णामिति वैदिकं लिङ्गमुपलभ्यते, निर्ग्रन्थकथितवचसः चित्तत्त्वज्ञानशंसी चायमनुवादो दृश्यते मुनयो वातरसना इति, एवं रक्तपटपरिग्रहभस्मकपालधारणादिमूलमप्यभियुक्ता लभन्ते एव ।

मन्वादिस्मृतिवत्कर्तृसाम्यस्यासम्भवे ऽप्यतः ।
प्रमाणं वेदमूलत्वाद्वाच्या सर्वागमा स्मृतिः ॥

ततश्च—

(१)यः कश्चित्कस्य चिद्धर्मो मनुना परिकीर्त्तितः ।
स सर्वो ऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥

इत्यत्र यथा मनुग्रहणं गौतमयमापस्तम्बसंवर्तकाठकादिस्मृत्यन्तरोपलक्षणम् एवमर्हत्कपिलसुगताद्युपलक्षणपरमपि व्याख्येयम् ।

ननु च लोकायताद्यागमो ऽप्येवं प्रामाण्यं प्राप्नोति विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञा ऽस्तीति वेदमूलदर्शनात्, ततश्च लोकायतदर्शने प्रमाणभूते सति स्वस्ति सर्वागमेभ्यः, उच्यते—

न हि लोकायते किं चित् कर्तव्यमुपदिश्यते ।
वैतण्डिककथैवासौ न पुनः कश्चिदागमः ॥

ननु च यावज्जीवं सुखं जीवेदिति तत्रोपदिश्यते, न स्वभावसिद्धत्वेनात्रोपदेशवैफल्यात्, धर्मो न कार्यस्तदुपदेशेषु न प्रत्येतव्यमित्येवं वा यदुपदिश्यते तत्प्रतिविहितमेव पूर्वपक्षवचनमूलत्वाल्लोकायतदर्शनस्य, तथा च तत्रोत्तरब्राह्मणं भवति(२) न वा अरे अहं मोहं ब्रवीमि अविनाशी वा अरे ऽयमात्मा मात्रासंसर्गस्त्वस्य भवतीति, तदेवं पूर्वपक्षवचनमूलत्वाल्लोकायतशास्त्रमपि न स्वतन्त्रम्, उत्तरवाक्यप्रतिहतत्वात्तु तदनादरणीयम्, शास्त्रान्तराणां तु पूर्वपक्षवाक्यमूलकत्वकल्पनमयुक्तम्, समनन्तरमेव तत्प्रतिपक्षवचनानुपलब्धेरित्यतो वेदमूलत्वात्सर्वागमः प्रमाणम् ।

---

(१) मनुस्मृतौ अ. १ श्लो. ७ ।
(२) बृहदारण्यकोपनिषदि अ० ४ ब्रा० ४ खं० १२-१३ ।

## आगमविशेषाप्रामाण्यस्थापनम्—

सर्वागमप्रमाणत्वे नन्वेवमुपपादिते ।
अहमप्यद्य यं कं चिदागमं रचयामि चेत् ॥
तस्यापि हि प्रमाणत्वं दिनैः कतिपयैर्भवेत् ।
तस्मिन्नपि न पूर्वोक्तन्यायो भवति दुर्वचः ॥

जरत्पुस्तकलिखितं यदपि तदपि किं चिदिदानीं केनापि धूर्तेन प्रख्याप्यते।

महाजनसमूहे ये प्रसिद्धिं प्रापुरागमाः ।
कृतश्च बहुभिर्येषां शिष्टैरिह परिग्रहः ॥
अद्य प्रवर्तमानाश्च नापूर्वा इव भान्ति ये ।
येषां न मूलं लोभादि येभ्यो नोद्विजते जनः ॥
तेषामेव प्रमाणत्वमागमानामिहेष्यते ।
न मृष्यते तु यत्किं चिदप्रमाणं कुट्टिनीमतम् ॥

तथा हि—

अमितैकपटनिवीतानियतस्त्रीपुंसविहितबहुचेष्टम् ।
नीलाम्बरव्रतमिदं किल कल्पितमासीद्विटैः कैश्चित् ॥
तदपूर्वमिति विदित्वा निवारयामास धर्मतत्त्वज्ञः ।
राजा शङ्करवर्मा न पुनर्जैनादिमतमेवम् ॥
इत्याप्तोक्तत्वहेतोः परिमुषितपरोदीरिताशेषदोषा-
देषां वेदागमानां सुदृढमुपगते मानभावे प्ररोहम् ।
तन्मूलत्वात्तथात्वं पुरुषवचनतो वा ऽस्तु शास्त्रान्तराणां
तद्द्वारेणापि वक्तुं न खलु कलुषता शक्यते वेदवाचाम् ॥

## वेदप्रामाण्याक्षेपः—

ननु नाद्यापि वेदस्य प्रामाण्यं सुस्थवत्स्थितम् ।
स्वदेहसंभवैरेव दोषैरनृततादिभिः ॥

चित्रया यजेत पशुकामः पुत्रकामः पुत्रेष्ट्या यजेतेति श्रूयते न चेष्ट्यनन्तरं पुत्रपश्वादिफलमुपलभ्यते, तस्मादसत्याः चित्रादिचोदनाः,

ननु च यः पशुकामः स इष्टिं कुर्यादितीयानेव वाक्यार्थः तत्र यागात्पशवो भवन्तीति एतदेव तावदुपपाद्यम्, ते च भवन्तो ऽप्यनन्तरमेव भवन्तीति एतद् दुरुपपादनम् अतः कथं न सत्यार्थत्वं चित्रादिचोदनानाम्,उच्यते यावज्जीवं यजेत यावज्जीवं जुहुयादिति जीवनवदसाध्यमानपशुकामनैव नाधिकारिविशेषणं भवितुमर्हति पशूनां ततः कर्मणः सिद्धिमनवबुध्यमानस्य तत्राधिकार एव न सम्प्रवर्तते एव इति निर्णेष्यते एतत् , आनन्तर्यमपि कर्मस्वभावपर्यालोचनेनैव गम्यते

समनन्तरफलत्वेन कर्मणां दृष्टत्वात्, आह च कर्मकाले च फलेन भवितव्यम् यत्कालं हि मर्दनं तत्कालं मर्दनसुखमिति, अधिकार्यपि पश्चाद्भावपरितप्यमानमानस एव कर्मण्यधिक्रियते यदि सद्य एव ततः फलमासादयेत्, कालान्तरे च कर्मणः प्रध्वंसात्कुतः फलम्, आह च यदा तावदियं विद्यमाना ऽऽसीत्तदा फलं न दत्तवती यदा फलमुत्पद्यते तदाऽसौ नास्ति असती कथं फलं दास्यतीति अपि च कालान्तरे फलस्यान्यत् प्रत्यक्षं कारणमुपलभ्यते सेवादि तस्मिंश्च कारणे दृष्टे सति को नाम सूक्ष्मदृष्टिरदृष्टं चित्रादिकारणं कल्पयेत्, तस्मादसत्याश्चित्रादिचोदनाः प्रत्यक्षादिप्रमाणपरिच्छेदयोग्यार्थोपदेशत्वे सत्यपि तत्संवादशून्यत्वाद् एवंविधविप्रलम्भकवाक्यवत् ।

चित्रादिवचसामेवमपचारस्य दर्शनात् ।
अनाश्वासो ऽग्निहोत्रादिचोदनास्वपि जायते ॥

अग्निहोत्रचोदना मिथ्या वेदैकदेशत्वाच्चित्रादिचोदनादिवत्, तदत्र तावदसंवादादप्रामाण्यम्, एवं पुत्रकामः पुत्रेष्ट्या यजेतेत्येवमादावपि असंवादो द्रष्टव्यः ।

विसम्वादो ऽपि क चिद्दृश्यते, प्रमीते यजमाने पात्रचयाख्यं कर्मोपदिश्यैवमादिदेश वेदः स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति तत्रैष इति तावदात्मनो निर्देशः क्लिष्ट एव परोक्षत्वात्, स्फ्यकपालादियज्ञायुधसंबन्धाभावाच्च, कायस्त्वेष निर्दिश्यते स न स्वर्गं लोकं यातीति तद्विपरीतभस्मीभावोपलम्भादिति विसंवादः, एवं चासंवादविसंवादाभ्यामप्रमाणं वेदः ।

व्याघाताच्च उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यमिति होमकालत्रयमपि विधाय निन्दाऽर्थवादैः तदेव निषेधति, श्यावो वा अस्याहुतिमभ्यवहरति य उदिते जुहोति शबलो वा अस्याहुतिमभ्यवहरति यो ऽनुदिते जुहोति श्यावशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति, न चार्थवादमात्रमेतदिति वक्तव्यम्, यतः—

विधानं कल्पते स्तुत्या निन्दया च निषेधनम् ।
विधिस्तुत्योः समा वृत्तिस्तथा निन्दानिषेधयोः ॥

न हि निन्दा निन्दितुमुपादीयते किं तु निन्दितादितरत्प्रशंसितुमित्ययमपि प्रकारो ऽत्र न सम्भवति, कालत्रयस्याप्यत्र निषेधात्कस्यान्यस्य तन्निन्दया प्रशंसा विधीयते, तस्मात्परस्परविरुद्धार्थोपदेशलक्षणाद्व्याघातादप्रमाणं वेदः ।

पौनरुक्त्याच्च त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यभ्यासचोदनायां प्रथमोत्तमयोः सामिधेन्योस्त्रिर्वचनात्पौनरुक्त्यम्, सकृदनुवचनेन तत्प्रयोजनसम्पत्तेरनर्थकं त्रिर्वचनम्, तस्मादित्थमनृतव्याघातपुनरुक्तदोषकलुषितत्वादप्रमाणं वेदः, तदाह

सूत्रकारः "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः"(१) पुत्रकामेष्टिहवनाभ्यासेष्विति ।

## वेदप्रामाण्याक्षेपपरिहारः—

अत्र समाधिमाह "न कर्मकर्तृसाधनवैगुण्यादिति"(२)अयमाशयः अप्रामाण्यसाधनमनृतत्वं परैरुक्तम्, अनृतत्वे च साधनं फलादर्शनम् एतच्चानैकान्तिकम्, अन्यथा ऽपि फलादर्शनोपपत्तेः किं वेदस्यासत्यार्थत्वादत्र फलादर्शनम् उत कर्त्रादिवैगुण्यादिति न विशेषहेतुरस्ति, ननु न कदा चिदपि कर्मसमनन्तरमेव फलमुपलब्धमिति तदनृतत्वमेव तददर्शनकारणं न कारणवैगुण्यमिति तदयुक्तम्, अविगुणायां कारीर्यां प्रयुक्तायां सद्य एव वृष्टेर्दर्शनात्, न च तत्काकतालीयम् आगमेनान्वयव्यतिरेकाभ्यां च तत्कारणत्वदर्शनात्, पुत्रादिस्त्वैहिकमपि फलं वस्तुस्वभावपर्यालोचनयैव न सद्यो भवितुमर्हति न हि नभसस्तदानीमेव वृष्टिरिव निपतति पुत्रः स्त्रीपुंसयोगकारणान्तरसव्यपेक्षत्वात्तदुत्पत्तेः, पश्वादिप्राप्तिस्तु कस्य चिदुत्तरकाले ऽपि दृश्यते प्रतिग्रहादिना, तथा ह्यस्मत्पितामह एव ग्रामकामः सांग्रहणीं कृतवान् स इष्टिसमाप्तिसमनन्तरमेव गौरमूलकं ग्राममवाप, नन्वेवं तर्हि प्रतिग्रहाद्येव दृष्टं कारणमस्तु पश्वादेः पुत्रस्य च स्त्रीपुंसयोगः किमिष्टेः कारणत्वकल्पनयेति मैवं वोचः, सत्स्वपि च दृष्टेषु कारणेषु तददर्शनाद् इष्टिप्रयोगानन्तरं चैतद्दर्शनादिष्टिकृतं स्त्रीपुंसयोगादिकारणत्वमिति निश्चीयते । किं च—

सेवाध्ययनकृष्यादिसाम्ये ऽपि फलभेदतः ।
वक्तुं न युक्ता तत्प्राप्तिर्दृष्टकारणमात्रजा ॥
भूतस्वभाववादादि पुरस्तात्प्रतिषिध्यते ।
तस्मान्ननमुपेतव्यमत्रान्यदपि कारणम् ॥

तदुक्तम् तच्चैव हि कारणं शब्दश्चेति, यत्र पुनरविगुणे ऽपि कर्मणि प्रयुज्यमाने कालान्तरे ऽपि पुत्रपश्वादिफलं न दृश्यते तत्र तीव्रं किमपि प्राक्तनं कर्म प्रतिबन्धकं कल्पनीयम्, यथोक्तम् "फलति यदि न सर्वं तत्कदा चित्तदेव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते" इति, कर्मादिवैगुण्यग्रहणमुपलक्षणार्थमृषिणा प्रयुक्तम्, न तु वेदस्याप्रामाण्यकल्पना साध्वी साद्गुण्ये कर्मणः प्राचुर्येण फलदर्शनात्,

अपि च चित्रातः पशवो भवन्तीत्येतावानेव शास्त्रार्थः आनन्तर्ये तु न किंचित्प्रमाणमस्ति तदयं प्रत्यक्षादिसंवाद आनन्तर्यविषयः चित्रादिचोदना त्वनिर्दिष्टकालविशेषविषयेति विषयभेदान्न सा तेन बाध्यते । तदाह भट्टः

(१) गौतमसूत्रम् अ. १ आ. २ सू. ५६ । (२) गौतमसूत्रम् अ. १ आ. २ सू. ५७ ।

आनन्तर्याद्यसंवादो नाविशेषप्रवर्तिनीम् ।
चोदनां बाधितुं शक्तः स्फुटाद्विषयभेदत(१) इति ॥

यत्तु कर्मस्वभावपर्यालोचनया चित्रादेरनन्तरफलत्वमुक्तम् यत्कालं हि मर्दनं तत्कालं मर्दनसुखमिति तदेतदत्यन्तमनभिज्ञस्याभिधानम् विधिफलानां क्रियाफलतुल्यत्वानुपपत्तेः इह, किं चिद्विधिफलं भवति किं चित्क्रियाफलम्, कृष्यादौ तु भूमिपाटवादि क्रियाफलं सस्यसम्पत्तिस्तु विधिफलम्, कः पुनः कृष्यादौ विधिः अस्ति वार्त्ताविद्यायां वृद्धोपदेशे वा कश्चिद्विधिः, अन्वयव्यतिरेकौ वा तत्र विधिस्थानीयौ भविष्यतः, लोके ऽपि च वेतनकामः पचतीत्यादौ पाकक्रियाफलमोदनः विधिफलं तु वेतनम्, तत्र क्रियाफलानामेवैष नियमो यत्क्रियानन्तरभावित्वम्, विधिफलानां तु वेतनादीनां नास्ति कालनियमः इष्टावपि हविर्विकारादि क्रियाफलं सद्यो भवति मृद्गतस्तु पुंसः सेवाफलमनियतफलम् ।

ग्रामकामो महीपालं सेवेतेत्येवमादिषु ।
लौकिकेषु विधिष्वस्ति न कालनियमः फले ॥

आयुर्वेदोपदिष्टानामप्यौषधविधीनां न क्रियावत्सद्य एव फलदर्शनम् अपि तु कालापेक्षमेवेति न फलानन्तर्ये किं चित्प्रमाणम्,

यत्तु पशुविरहकृतकदशनादिदोदूयमानाधिकारिस्वरूपपर्यालोचनया सद्यः फलत्वमुच्यते तदपि न साम्प्रतम्, पुरुषेच्छामात्रमेतन्न प्रमाणवृत्तम्,

अपि चैहिकत्वं फलस्य तावता सेत्स्यति न पुनः क्रियाफलवत्सद्यस्त्वम्, सन्ति चैहिकफलान्यपि कालान्तरसव्यपेक्षाणि कर्माणि यथा "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे" इति न तत्र पञ्चमवर्षे उपनीतमात्र एव माणवको ब्रह्मवर्चससम्पन्नो भवति कालान्तरे तु भवतीति, एवं वीर्यकामादिष्वपि द्रष्टव्यम्, तस्माद्विधिफलानामानन्तर्यनियमाभावान्न तद्विसंवादो दोषाय कालान्तरे ऽपि यत्र फलादर्शनं तत्र क्रियावैगुण्यकर्मान्तरप्रतिबन्धादि कारणमित्युक्तम् ।

## मतान्तरेण वेदप्रामाण्याक्षेपपरिहारः ।

अन्ये कर्त्रादिवैगुण्यकल्पनाननुमोदिनः ।
इहाफलस्य चित्रादेः फलमामुत्रिकं जगुः ॥

सर्वाङ्गोपसंहारेण काम्यकर्मप्रयोगात्को ऽवसरः कर्मवैगुण्यकल्पनायाम्, जन्मान्तरे तु तत्फलमिति कल्पना,

तथा च त्रिविधं कर्म किं चिदैहिकफलमेव किं चिदनियतफलमेव किं चिदामुष्मिकफलमेव इति कल्पना, तत्र कारीर्यादि तावदैहिकफलमेव तद्धि

(१) श्लोकवार्तिके चित्रापरिहारे श्लो० ४ ।

सकलजनपदसंतापकारिणि महत्यवग्रहे प्रस्तूयते वृष्टिलक्षणं च तत्फलं स्वभावत एव सकललोकसाधारणम् आसन्नतयैव तदभिलषणीयमिति सद्य एव भवतुमर्हति वचनानि च तत्र तादृश्येव दृश्यन्ते यदि वर्षेत्तावत्येवेष्टिं समापयेद्यदि न वर्षेच्छ्वोभूते जुहुयादिति, आमुष्मिकफलं तु कर्म ज्योतिष्टोमादि फलस्वभावमहिम्नैव पारलौकिकफलं भवति ।

स्वर्गो निरुपमा प्रीतिर्देशो वा तद्विशेषणः ।
भोक्तुं नोभयथा ऽप्येष देहेनानेन शक्यते ॥

चित्रादि त्वनियत फलं कर्म तत्फलस्य पश्वादेरिह वा परत्र वा लोके संभवात्, अवश्यं चैतदेवं विज्ञेयम्, तथा ह्यकृतचित्रायागानामपि इह जन्मनि पशवो दृश्यन्ते ते परिदृश्यमानसेवाप्रतिग्रहादिकारणका एवेति कथ्यमाने कर्मनिमित्तत्वहानेः बृहस्पतिमतानुप्रवेशप्रसङ्गः, कर्मनिमित्तकत्वे तु तेषां पशूनामुपपादकं किं कर्मेति निरूपणीयम् न हि ब्रह्मवर्चसादिफलात् कर्मणः पशवो निष्पद्यन्ते, चित्रा च पशुफलेह जन्मनि तैर्न कृतैव पूर्वजन्मकृता तु तस्मिन्नेव जन्मनि फलं दत्तवतीति नियतैहिकफलाभ्युपगमादिति कुतः पशुसंपत्, ननु गौतमवचनप्रामाण्यात्पूर्वकृतभुक्तशिष्टज्योतिष्टोमादिकर्मनिमित्तकः पशुलाभो भविष्यति, यथोक्तम्(१) वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य फलमनुभूय पतन्तः शेषेण विशिष्टदेशश्रुतवृत्तवित्तादियुक्तं जन्म प्रतिपद्यन्ते इति, नैतद्यथाश्रुतं बोद्धुं युक्तम्—

न ह्यन्यफलकं कर्म दातुमीष्टे फलान्तरम् ।
साध्यसाधनभावो हि नियतः फलकर्मणाम् ॥

तस्मात्समूहापेक्षाशेषवाचोयुक्तिर्व्याख्येया बहूनि कर्माणि वर्णा आश्रमाश्च कृतवन्तः ततः कर्मसमूहाज्ज्योतिष्टोमादिफलं प्रेत्यानुभूयते ततः शेषेण चित्रादिना कर्मणा विशिष्टं जन्म प्रतिपद्यन्ते इत्यर्थः, तस्मात्पूर्वजन्मकृतचित्रादिनिबन्धन इह जन्मनि पशुलाभो नाकर्मनिमित्तको नान्यकर्मनिमित्तक इत्येवमनियतफलत्वाच्चित्रादेरिह जन्मनि फलादर्शने ऽपि नानृतत्वं तच्चोदनानां जन्मान्तरे हि ता इष्टयः फलं दास्यन्तीति ।

## मतान्तरेण वेदप्रामाण्याक्षेपपरिहारस्य निराकरणम् ।

अत्रोच्यते, किं वाचनिकमेतत्कर्मणां त्रैविध्यम् अथ विधिवृत्तपरीक्षागम्यम् आहो फलरूपपर्यालोचनया लभ्यम् उत पुरुषेच्छाधीनमिति, तत्र वचनं तावत्त्रिविधविभागप्रतिपादकं नास्ति कारीरीं निर्वपेद् वृष्टिकामः ज्योतिष्टोमेन स्वर्गकामो यजेतेति चित्रया पशुकामः इत्येतावन्मात्रश्रवणम्, न ह्यत्रैहिकत्वं

(१) शांकरब्रह्मसूत्रभाष्ये अ० ३ पा० १ सू० ८ स्मृतित्वेनेदम् ।

पारलौकिकत्वमनियतत्वं वा फलस्य क चित्पठितम् , विधिवृत्तमपीयदेव यत्स-
त्प्रत्ययप्रवर्त्तनं नाम तत्रेदमेवंकामेन कर्त्तव्यमित्येतावाँल्लिङर्थः अपुरुषार्थरूपे
तु व्यापारे प्रवर्त्तकत्वलक्षणस्वव्यापारनिर्वहणमनधिगच्छन्विधिरधिकारिविशेष-
णस्य काम्यमानस्य स्वर्गादेर्भावार्थस्य च यागादेः साध्यसाधनसम्बन्धमाक्षि-
पति न काम्यमानस्य सद्यः कालान्तरे वा निष्पत्तिमाक्षिपतीति, फलस्वरूपपर्या-
लोचनया तु सत्यं स्वर्गस्य पारलौकिकत्वमवगम्यते न तु पश्वादेर्नियमः, पुरु-
षेच्छा तु पुरुषेच्छैव न तया शास्त्रार्थो व्यवस्थापयितुं शक्यः तस्मान्निष्प्रमा-
णकं त्रैविध्यम्,

यस्तु चित्रादीनामनियतफलत्वे न्याय उक्तः "चित्रादीनां फलं तावत् क्षीणं तत्रैव जन्मनि" इत्यादि(१) स कारीर्यामपि निश्चितैहिकफलायां योजयितुं शक्यः।

अद्याकृतायां कारीर्यां न हि देवो न वर्षति ।
जन्मान्तरकृता तत्र कारीर्या (री) किं न कारणम् ॥

तस्मात्सा ऽप्यनियतफला भवतु, अथ सस्यसम्पत्सम्पाद्यसुखसम्भोगसाधनभूतादृष्टनिमित्ता कारीरीष्टिरद्याकृतायामपि कारीर्यामिति मन्यसे तर्हि दधिक्षीरादिभक्षणसुखाक्षेपिकर्मनिमित्तकः पशुलाभो भविष्यति, अकृतचित्रायागानां कारीर्यधीन ओदनः चित्रादीनां दधीति दध्योदनभोजनसुखसाधनादृष्टकारिता पशुवृष्टिसृष्टिर्भवतु, अथ शृङ्गग्राहिकया पशुफला चित्रेष्टिरुपदिश्यते तेन न सुखसामान्याक्षेपकर्मनिबन्धनः पशुलाभः एवं तर्हि वृष्टावपि शृङ्गग्राहिकया कारीरी पठ्यते एवेति वृष्टिरपि सामान्यादृष्टनिबन्धना मा भूत् ।

अथ न यदि वर्षेच्छ्वोभूते जहुयादित्यादिवचनपर्यालोचनया तस्यामैहिकफलत्वमुच्यते यद्येवं यत्र तादृशं वचनं नास्ति यो वृष्टिकामः स सौभरेण स्तुवीत यदि कामयेत वर्षेत्पर्जन्य इति नीचैः सदो मिनुयादित्यादौ तत्र पारलौकिकफलत्वं स्यात् , यदि च श्वोभूते जुहुयादिति वचनमहिम्नैव फले सद्यस्त्वमात्रमधिकं भवतु तादृशवचनरहितानां कर्मणां विस्पष्टसिद्धमप्यैहिकफलत्वं निवर्त्तते ।

यत्पुनर्बहुसाधारणत्वेन वृष्टेरैहिकत्वमुच्यते तदपि पश्वादौ समानम् न ह्यात्मम्भरिरेव यजमानो भवति तस्यापि स्ववासिनीकुमारातिथिभृत्यादिभोजनपूर्वकस्वभोजननियमोपदेशाद् बहुतरोपकारकत्वं तु वृष्टेरित्यलं तुलया ।

यदपि प्रत्यासन्नत्वेन काम्यमानत्वाद् वृष्टेरैहिकत्वं कथ्यते तदपि तादृगेव-पश्वादेरपि तथैव काम्यमानत्वात् तत्रावग्रहविहितसन्तापतया प्रत्यासन्नत्वेन वृष्टिरभिलष्यते इहापि दौर्गत्योद्वेगादासन्नतयैव पशवः काम्यन्ते "तस्माद्दारिद्-

---

(१) श्लोकवार्तिके चित्रापरिहारे श्लो० १९ ।

स्तृप्तिमाप्नोति सुखमक्षयमन्नद" इत्यादिवचनोपदिष्टसामान्यसुखसाधनादृष्टनिबन्धनैवेयमिहाकृतकर्मणां वृष्टिपश्वादिसम्पदिति न बृहस्पतिमतवदकर्मनिमित्तं फलम्, नापि कर्मफलसाध्यसाधनभावनियमव्यवहारोल्लङ्घनमिति।

यच्च कारीर्याः क्वचित्फलविसंवादे समाधानमुक्तं "फलति यदि न सर्वं तत्कदाचित्तदेव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते" इति तेन सा ऽप्यनियतफलैव स्याद् न हि तत्कर्मान्तरमासंसारं प्रतिबन्धकं भवति फलोपभोगाद्धि तस्यावश्यं क्षयेण भवितव्यम्, प्रतिबन्धके च क्षीणे कारीर्या स्वफलं तदा दातव्यमेव सा ऽप्यदत्तफला न क्षीयत एवेत्येवं जन्मान्तरे तत्फलसम्भवात्तस्य अनियतफलत्वम्, अनेन च प्रकारेण चित्रादेरप्यनियतफलत्वमस्माभिरिष्यते एव यत्र सम्यक् प्रयुक्तायामपीष्टौ कर्मान्तरप्रतिबन्धादेव पशूनामनुपलम्भः कल्प्यते सर्वथा सद्यःफलत्वमात्रवर्जं समानयोगक्षेमा कारीर्या चित्रेष्टिः, एतेन ब्रह्मवर्चसवीर्यान्नाद्यग्रामादिकामेष्टयो ऽपि व्याख्याताः, तस्माद्यथाश्रुतं गौतमं बोद्धव्यम्।

यदप्यभ्यधायि समग्राङ्गोपसंहारेण काम्यकर्मप्रयोगात्कुतः कर्मणो वैगुण्यावसर इति तदप्यसारम्, सर्वाङ्गोपसंहारेण प्रवृत्तावपि प्रमादादसंवेद्यमानवैगुण्यसम्भवात्, स च विचित्रः भाष्यकारेण प्रदर्शितः तस्मात्पूर्वोक्त एव प्रतिसमाधानमार्गः श्रेयान्।

## स्वमतेन धर्मपदार्थनिरूपणम्।

यत्पुनः पूर्वपक्षिकेण कथितं कालान्तरे कर्माभावात्कुतः फलमिति तदपि न सम्यक्—

यद्यप्या फलनिष्पत्तेः कर्मणो नास्त्यवस्थितिः।
तथा ऽप्यस्त्येव संस्कारः पुरुषस्य तदाहितः॥
कर्मजन्यो हि संस्कारः पुंसां बुद्ध्यादिवद्गुणः।
तस्य चाफलसंयोगादवस्थितिरुपेयते॥
यथेन्द्रियादिसंयोगादात्मनो बुद्धिसंभवः।
तथा यागादिकर्मभ्यस्तस्य संस्कारसंभवः॥
बुद्धिस्तु भङ्गुरा तस्य संस्कारस्तु फलावधिः।
साध्यसाधनभावो हि नान्यथा फलकर्मणोः॥
स्मृतिबीजं तु संस्कारस्तस्यान्यैरपि मृष्यते।
तथैव फलसंयोगबीजं सो ऽस्य भविष्यति॥
स यागदानहोमादिजन्यो धर्मगिरोच्यते।
ब्रह्महत्यादिजन्यस्तु सो ऽधर्म इति कथ्यते॥

## मतान्तरेण धर्मपदार्थस्य निरूपणं तत्खण्डनं च ।

कापिलास्तु अन्तःकरणस्य बुद्धेर्वृत्तिविशेषमाहुः, आर्हताः पुण्यपुद्गलान् धर्मत्वेन व्यपदिशन्ति, शाक्यभिक्षवश्चित्तवासनां धर्ममाचक्षते, वृद्धमीमांसकाः यागादिकर्मनिर्वर्त्यमपूर्वं नाम धर्ममभिवदन्ति, यागादिकमेव शाबरा ब्रुवते, वाक्यार्थ एव नियोगात्मा ऽपूर्वशब्दवाच्यो धर्मशब्देन स एवोच्यते इति प्राभाकराः कथयन्ति, तत्र पुण्यपुद्गलवृत्तिपक्षयोः कपिलार्हद्ग्रन्थकथितयोस्तन्मतनिरासादेव निरासः, आत्मनश्च समर्थयिष्यमाणत्वात्तस्यैव वासना न चेतस इति सौगतपक्षो ऽप्ययुक्तः, स्वर्गयागान्तरालवर्त्तिनश्च स्थिरस्य निराधारस्यापूर्वस्य निष्प्रमाणकत्वाज्जरज्जैमिनीयप्रवादो ऽप्यपेशलः, अपि च फलस्य वा का चिदुत्पद्यमानदशा यागस्य वा शक्तिरग्निशब्देनोच्यते न चानियोगो वाक्यार्थ एवापूर्वशब्दवाच्यः तस्योपरिष्टादपाकरिष्यमाणत्वात् , नापि यो यागमनुतिष्ठति तं धार्मिक इत्याचक्षते इति यागादिसामानाधिकरण्येन प्रयोगात्स एवधर्मशब्दवाच्य इति युक्तं वक्तुम् , तस्य क्षणिकत्वेन कालान्तरे फलदातृत्वानुपपत्तेः सामानाधिकरण्यप्रयोगो ऽपि चैकान्ततो नास्त्येव ।

यागदानादिना धर्मो भवतीत्यपि लौकिकाः ।
प्रयोगाः सन्ति ते चामी संस्क्रियापक्षसाक्षिणः ॥

एवं यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति वैदिकोपि प्रयोगः तद्विषय एव व्याख्येयः तस्य स्थायित्वेन कालान्तरे फलदानयोग्यतोपपत्तेः ।

संस्कारो नृगुणः स्थायी तस्माद्धर्म इति स्थितम् ।
तस्माच्च फलनिष्पत्तेर्न चित्रादौ मृषार्थता ॥

यदपि यज्ञायुधिवाक्ये प्रत्यक्षविरुद्धत्वमुपपाद्यते स्म भस्मीभावोपलम्भात्कायस्येति तदप्यसमीचीनम् , एष इति शरीराभेदोपचारेणात्मन एव निर्देशात्तस्य च स्वर्गगमनं भवत्येव गमनं च तदुपभोग एव तस्योच्यते यथा शरीरादियोगवियोगौ जन्ममरणे इति न तु व्यापिनः परिस्पन्दात्मकक्रियायोग उपपद्यते ज्ञानचिकीर्षाप्रयत्नसमवायश्च तस्य कर्तृत्वमिति वर्णयिष्यते, यज्ञायुधसम्बन्धो ऽपि स्वस्वामिभावादिस्तस्यैव व्यापकत्वाविशेषे ऽपि व्यवस्थयोपपद्यते इति न कश्चिदत्र विरोधः, तस्मात्सर्वत्र निरवकाशमनृतत्वादिदूषणम् ।

## वेदे व्याघातादिदोषाभावः ।

यो ऽपि हवनकालविधौ व्याघातदोषो दर्शितः सो ऽपि न दोष एव—

तत्रानुष्ठानभेदेन कालत्रितयचोदनात् ।
यो यस्य चोदितः कालो लङ्घनीयो न तेन सः ॥

ततश्चान्यतमं कालमभ्युपेत्यैनमुज्झतः ।
निन्देति न विरोधो ऽत्र कश्चिद्विधिनिषेधयोः ॥

अभ्यासे पौनरुक्त्यं च कार्यार्थत्वाददूषणम् ।
संपाद्यं पाञ्चदश्यं हि सामिधेनीषु चोदितम् ॥

इममहं पञ्चदशारेण वज्रेणापबाधे यो ऽस्मान् द्वेष्टि यं च वयं द्विष्म इति श्रूयते एकादशसामिधेन्य ऋचः पठ्यन्ते तत्राभ्यासमन्तरेण पाञ्चादश्यं नावकल्पते इत्येवमवश्यकर्त्तव्यो ऽभ्यासः स चायमनियमेन प्राप्तो वचनेन नियम्यते प्रथमोत्तमे ऋचौ त्रिरुच्चारणीये इति तस्मात्तत्प्रयोजनार्थत्वान्न पुनरुक्ततादोषः ।

अभ्यासे फलरहिते हि पौनरुक्त्यं
दोषः स्यादिह तु न तस्य निष्फलत्वम् ।
व्याघाताऽनृतपुनरुक्ततादि तस्मा-
द्वेदस्य श्लथयति न प्रमाणभावम् ॥

इयं च वाक्यार्थविचारणा ऽपि
प्रामाण्यसिद्ध्यौपयिकीति मत्वा ।
चक्रे स्वशास्त्रे मुनिनेह वेद-
प्रामाण्यनिर्वाहणदीक्षितेन ॥

## अर्थवादवाक्यमूलक-वेदप्रामाण्याक्षेपः ।

ननु नाद्यापि वेदस्य भवद्भिर्निपुणैरपि ।
स्वदेहसंभवा दोषा निखिलाः परिपिञ्जिताः ।

तथा हि सो ऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् प्रजापतिरात्मनो वपामुदखिदत्तामग्नौ प्रागृह्णात् ततो ऽजस्तूपर उदगात् देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्नित्येवमादीनामर्थवादानां किं यथाश्रुतवस्तुपरत्वमुत तेभ्यः कार्यरूपार्थोपदेशपरिकल्पनम् उत लिङादियुक्तवाक्यान्तरप्रतिपाद्यमानकार्यरूपार्थौपयिकत्वमिति चिन्त्यम् , सर्वथा च प्रमादः, स्वरूपपरत्वे तावत्प्रमाणान्तरविरुद्धार्थोपदेशादप्रामाण्यमेवावतरति रोदनवपोत्खेदनदिङ्मोहादेरर्थस्य तथात्वे निश्चयाभावात् ।

किं च स्तेनं मनो ऽनृतवादिनी वागित्येवंजातीयकानामर्थवादवाक्यानां विस्पष्टमेव प्रमाणान्तरविरुद्धार्थप्रत्यायकत्वम् न हि निसर्गत एव सर्वप्राणिनामनृतवादिनी वाग्भवति स्तेनं वा मनः ।

अपि च धूम एवाग्नेर्दिवा ददृशे नार्चिस्तस्मादर्चिरेवाऽग्नेर्नक्तं ददृशे न

धूम इति प्रत्यक्षविरुद्धमिदमभिधीयते नक्तंदिनं द्वयोरपि इन्द्रियार्थसन्निकर्षे सति ग्रहणात् ।

किं च एतन्न विद्मो यदि ब्राह्मणाः स्मोऽब्राह्मणा वेति ब्राह्मणजातेरुपदेशसहायप्रत्यक्षगम्यत्वात्तद्विरुद्ध एषो ऽर्थवादः शास्त्रविरोधो ऽप्यस्ति को ह वै तद्वेद यदमुष्मिँल्लोके ऽस्ति वा न वेति, शास्त्रे स्वर्गादिफलानां ज्योतिष्टोमादिकर्मणामुपदेशात्क्वेयमनवक्लृप्तिः ।

अपि च गर्गत्रिरात्रब्राह्मणमधिकृत्य श्रूयते शोभते ऽस्य मुखं य एवं वेदेति न हि कस्य चिदेवं विदुषो मुखं शोभते इति प्रत्यक्षविरोधः ।

अन्यकर्मानर्थक्यशंसी च कश्चिदर्थवादो भवति पूर्णाहुत्या सर्वान्कामानवाप्नोति पशुबन्धयाजी सर्वांल्लोकानभिजयति तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां यो ऽश्वमेधेन यजते यश्चैवं वेदेति यदि पूर्णाहुत्यैव सर्वकामावाप्तिः पशुबन्धयागेनैव सर्वलोकजयः अश्वमेधवेदनेनैव तत्फलावाप्तिः तत्किमर्थमन्यकर्मोपदेशः, उपदिष्टान्यपि तानि बहुक्लेशसाध्यानि कर्माणि व्यर्थानि भवेयुरनेनैव लघुनोपायेन तत्फलप्राप्तेर्दर्शनात् ।

अपि च न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति वेदे चयननिषेध एवात्र भङ्ग्या भवेद्दिवि चान्तरिक्षे च तावच्चयनप्रयोग एव नास्ति किं तन्निषेधेन पृथिवीचयननिषेधार्थं च यद्वाक्यं तच्चयनप्रतिषेधार्थमेव भवेत्, अपृथिव्यधिकरणस्य चयनस्यानुपपत्तेः,

अपि च यजमानः प्रस्तर आदित्यो यूप इत्येवंजातीयकानां प्रत्यक्षविरुद्धार्थाभिधायिनामर्थवादानां का परिनिष्ठेति, तस्मान्न स्वरूपपरत्वं तेषामुपपद्यते,

नापि तेभ्य एव कार्यरूपार्थपरिकल्पनमुपपन्नम् अशक्यत्वात्, सो ऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यत्र कार्यं कल्प्यमानमेवं कल्प्येत रुद्रः किल रुरोद अतो ऽन्येनापि रोदितव्यमिति तच्चाशक्यम् प्रियविप्रयोगजनितसंतापवशेन हि बाष्पमोचनं रोदनमुच्यते न तच्चोदनोपदेशात्कर्तुं शक्यते, प्रजापतिरात्मनो वपामुदखिदत् तस्मादन्यो ऽप्येवमुत्खिदेदात्मनो वपामिति दुरनुष्ठानो ऽयमर्थः को हि नामात्मनो वपामुत्खिदेत् कस्य वा वपाहोमे सति समनन्तरमेव अजः पशुस्तूपर उदगच्छेद् इति देवा दिशो नाज्ञासिषुरतो ऽन्यो ऽपि न जानीयादिति अशक्योपदेशो न हि दिङ्मोहो नामोपदेशात्कर्तुं शक्यः, न च सर्वस्मादर्थवादाद्विधिः कल्पयितुं शक्यः इति मध्यमो ऽपि न सत्पक्षः ।

नापि तृतीयः पक्षः संभवति वाक्यान्तरविहितकार्यरूपार्थौपयिकत्वं हि तदुपयोगिद्रव्यदेवतादिविधानद्वारकं भवति यथा ऽग्निहोत्रं जुहोतीत्यत्र दध्ना जुहोति पयसा जुहोतीति द्रव्यविनियोगविधेर्यदग्नये च प्रजापतये च सायं जुहोति देवताविधेर्वा, न चायमर्थवादेषु प्रकारः संभवति न चैभिः व्रीहानवह-

न्ति व्रीहीन् प्रोक्षतीतिवद्दृष्टा ऽदृष्टा वा का चिदितिकर्त्तव्यतोपदिश्यते तस्मान्न तेषां तदौपयिकत्वम् ।

ननु प्रेक्षावतां प्ररोचनातिशयकरणेन प्रवृत्त्युत्साहमावहन्तो ऽर्थवादास्तदुपयोगिनो भविष्यन्ति, नैतदपि सम्यक्, प्रवृत्त्युत्साहो हि केषां चिन्मते निरपेक्षशब्दप्रत्ययादेव सिद्ध्यति अस्मन्मते तु तत्प्रणेतृपुरुषप्रत्ययादिति किं प्ररोचनया, एवंकाम इदं कुर्यादित्युक्ते यस्तत्र न प्रवर्त्तते स प्ररोचनयापि न प्रवर्तत्तैवेति यत्किं चिदेतत्, तदेवं प्रकारत्रयेणाप्यर्थवादपदानामनन्वयात् एकदेशाक्षेपेण सर्वाक्षेप एव क्रियते इति अप्रमाणं वेदः ।

ननु यावत्येव प्रमाणान्तरविरुद्धत्वमुपलभ्यते तावत्येवाप्रामाण्यमस्तु सर्वत्र तु कुतस्त्या तदाशङ्केति, मैवम् तत्सामान्यादन्यत्राप्यनाश्वासः, मीमांसकपक्षे हि अर्थवादरहितकेवलवेदग्रन्थानुपलम्भात् तदनुषङ्गेण सर्वत्र सापेक्षत्वमवतरति, नैयायिकमते तु वेदप्रणेतुरीश्वरस्य क चिद्वितथवादित्वे दृश्यमाने कथमन्यत्र सत्यवादितायां दृढः प्रत्ययो भवेदित्यप्रामाण्यं सर्वत्रेति ।

## अर्थवादवाक्यमूलकस्य वेदप्रामाण्याक्षेपस्य परिहारः ।

अत्राभिधीयते, विध्येकवाक्यतयैव भूम्ना तावदर्थवादपदानि पठ्यन्ते वायव्यं श्वेतमालभेत भूतिकामः वायुर्वै क्षेपिष्ठा देवता इत्यतो यद्यपि क्रिया नावगम्यते नापि तत्संबद्धः कश्चिदर्थः तथा ऽपि विध्युद्देशेनैकवाक्यत्वं प्रतीयते भूतिकाम इत्येवमन्ते विध्युद्देशस्तेनैकवाक्यभूतो वायुर्वैक्षेपिष्ठेत्येवमादिः कथमेकवाक्यभावः पदानां साकाङ्क्षत्वात्,

ननु भूतिकाम इत्येवमन्तेन वाक्येन विधेयं विहितम् उत्पादितं प्रतिपत्तुरनाकाङ्क्षत्वं कृतं च शब्दकर्त्तव्यमिति किमनेन क्षेपिष्ठेत्यादिना प्रयोजनम्, तदर्थस्यैव स्तुतिरिति ब्रूमः ।

ननु स्तुत्या किं प्रयोजनम् स्तुतो ऽस्तुतश्च तावानेव सो ऽर्थः, मैवम्, सस्तुतिपदे हि वाक्ये स्तुतिपदसहितं विधायकं विधायकं भवति किमिदानीं केवलं लिङादियुक्तं वाक्यं न विधायकमुच्यते यदि स्तुतिपदानि न श्रूयन्ते तद्बाढं भवति विधायकम्, एतेषु च सत्सु तत्सहितं तद्विधायकं भवति न केवलं तथा प्रतीतेः, स्तुतिपदसंबन्धे सति भिन्नवाक्यता मा भूदिति विधिपदेन च स्तुतिपदेन च संभूयार्थो विधीयते तथा ऽवगमात्, अन्यथा हि प्रतीयमानः पदार्थान्वयस्त्यज्येत वाक्यभेदो वा कल्प्येत तस्मान्न स्तुतिपदानामानर्थक्यम्,

ननु केवलस्यापि विधिवाक्यस्य सामर्थ्यात्किमर्थं स्तुतिपदानि प्रयुज्यन्त इति, उच्यते, अपर्यनुयोज्यो जैमिनीयानां मते शब्दः अस्माकं च भगवानीश्वरः उक्ते सति प्रतिपत्तारो वयं वेदस्य न कर्त्तारः, प्रतिपत्तौ च क्रमो दर्शितः, एवं च

यद्यपि द्रव्यदेवतेतिकर्त्तव्यताविधानद्वारकमङ्गविधिवदर्थवादवाक्यानां कार्यौपयिकत्वं नास्ति तथापि प्रतीत्यङ्गत्वं न निवार्यते, अत एव प्रामाण्योपयोगित्वमाचक्षते न प्रमेयोपयोगित्वम् , केवलविधिपदश्रवणे हि न तदाद्रियन्ते यज्वानः, तत्र विधिविभक्तेः शक्तिरवसीदति तां निमज्जन्तीमिवार्थवादजनितकर्मप्राशस्त्यप्रत्यय उत्तम्भाति सर्वजिता यजेतेत्यतो न तथाविधः श्रद्धाऽतिशयो भवति, यथाविधः सर्वजिता वै देवाः सर्वमयजन्सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेन सर्वं जयति इत्यर्थवादपदेभ्यः, लोके ऽपि इयं गौः क्रेतव्येत्यतो न तथा क्रेतारः प्रवर्त्तन्ते यथा एषा बहुस्निग्धक्षीरा सुशीला सापत्या अनवप्रजा चेत्येवमादिभ्यः स्तुतिपदेभ्यः, स्वानुभवसाक्षिको ऽयमर्थः अत एव के चिदश्रुतार्थवादके ऽपि विधिवाक्ये तत्कल्पनमिच्छन्ति, यथा क चिदर्थवादाद्विधिकल्पनमिति यथोक्तम् "विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते" अनधिगम्यमानविधिवाक्यसंबन्धाच्चार्थवादाद्विधिरुन्नीयते न गम्यमानविधिसंबन्धात् ।

अत एव च सो ऽरोदीदित्येवमादिभ्यो न रोदितव्यमित्यादिविधिकल्पनमिष्यते मुधैव पूर्वपक्षिणा तदाशङ्कितम्, विध्यन्तरेणैकवाक्यत्वं हि प्रत्यक्षमिहोपदिश्यते बर्हिषि रजतं न देयमित्यस्य विधेः शेषो ऽयं सो ऽरोदीदित्यादिः रुद्रो रुरोद तस्य यदश्रु अशीर्यत तद्रजतमभवत् यो हि बर्हिषि रजतं ददाति पुरा ऽस्य संवत्सराद् गृहे रोदनं भवतीति तस्माद्बर्हिषि रजतं न देयमिति, प्राजापत्यमजं तूपरमालभेतेत्येतस्य विधेः शेषः प्रजापतिरात्मनो वपामुदखिदिति वपाहोममाहात्म्यप्रदर्शनार्थमुच्यते अग्नौ वै प्रगृहीतमात्रायां वपायामजस्तूपर उदगादिति, आदित्यः प्रायणीयश्चरुरित्यस्य विधेः शेषो ऽयं देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्नित्थं व्यामोहानामादित्यः चरुर्नाशयिता यथा दिङ्मोहस्येति एवं तत्र तत्र विधिशेषत्वमर्थवादानां वेदितव्यम् ।

कथं पुनरिदमसत्यमेवोच्यते रुद्ररुदिताद्रजतमजायत प्रजापतिवपाहोमसमिद्धादग्नेरजस्तूपर उदगादिति, उच्यते नेदमसत्यम् यदस्य वाक्यस्य प्रतिपाद्यं तत्र सत्यार्थमेवेदम् , न चास्य यथाश्रुतो ऽर्थः प्रतिपाद्यः किं तु विधेयो निषेध्यो वा कश्चिदर्थः इहान्वाख्याने द्वयमापतति यच्च वृत्तान्तज्ञानं यच्च कस्मिँश्चिदर्थे प्ररोचनाद्वेषौ तत्र वृत्तान्तज्ञानं न प्रवर्त्तकं न निवर्त्तकमिति प्रयोजनाभावादनर्थकमनादरणीयम् , प्ररोचनाद्वेषौ तु प्रवृत्त्यङ्गत्वात्तदर्थौ गृहीत्वा प्ररोचनायाः प्रवर्त्तेत द्वेषान्निवर्त्तेतेति तत्र तत्प्रतिपाद्यसत्यार्थ एवार्थवादः ।

यत्त्वरुदति रुद्रे कथं तद्रोदनवचनम् अरोदनप्रभवे वा रजते कथं तदुद्भवताभिधानमिति, गुणवादमात्रं गौण एष वादः श्वेतवर्णसारूप्यादिना रोदनप्रभवं रजतं निन्दितुमुच्यते, एवं पशुयागे वपाहोमप्रशंसायै प्रजापतिरात्मनो वपामुदखिददिति वृत्तान्ताख्यानं योजनीयम्, आदित्यचरुप्रशंसायै देवा

देवयजनमध्यवसाय दिशो न प्राजानन्निति ।

अथ वा नैयायिकानामनेकप्रकारपुरुषातिशयवादिनां यथाश्रुते ऽप्यर्थे नात्यन्तमसंभवः रुद्रस्य रुदिताद्रजतजन्म प्रजापतेर्वपोत्खेदः तद्धोमात्तूपरपशूद्गमः देवानां देवयजनाध्यवसाने दिङ्मोह इत्येवंजातीयकमपि सत्यमस्तु को दोषः, तत्सर्वथा ऽर्थवादानां प्रामाण्यम् ।

एवं स्तेनं मनो ऽनृतवादिनी वागिति गौण एष वादः प्रच्छन्नतया स्तेनं मन उच्यते बाहुल्याभिप्रायेण चानृतवादिनी वागिति,

धूम एवाग्नेर्दिवा ददृशे नार्चिरर्चिरेवाग्नेर्नक्तं ददृशे न धूम इति दूरभूयस्त्वाभिप्रायेण कस्मै चित्प्रयोजनाय सायंप्रातर्होमदेवतास्तुतये कथ्यते,

न चैतद्विद्मो यदि ब्राह्मणाः स्मोऽब्राह्मणा वेति प्रवरानुमन्त्रणप्रशंसायै संशय इव दर्शितः अब्राह्मणो ऽपि यजमानः प्रवरानुमन्त्रणेन ब्राह्मणः स्यादिति,

को ह वै तद्वेद यदमुष्मिंल्लोके ऽस्ति वा न वेति दृष्टफलं किमपि कर्म स्तोतुमुच्यते,

शोभतेऽस्य मुखं य एवं वेदेति विद्याप्रशंसैषा शोभते इति शिष्यैरुद्वीक्ष्यमाणस्य मुखमिति, सर्वान्कामानवाप्नोति इति सर्वत्वं प्रकृतापेक्षम् स्तुत्यर्थं चाश्वमेधाध्ययने ऽपि तत्फलवचनम् ,

हिरण्यं निधाय चेतव्यमिति स्तुत्यर्थतया दिव्यन्तरिक्षे पृथिव्यां च चयनं प्रतिषिध्यते अनुपहितहिरण्यायां पृथिव्यामग्निर्न चेतव्यो न पुनर्न चेतव्य एव तस्यामिति,

आदित्यो यूप इत्थमञ्जने सति तेजस्वितया यूपस्यादित्यरूपतास्तुतये कथ्यते, तत्कार्यकारित्वाच्च यजमानः प्रस्तर उच्यते, न हि मुख्ययैव वृत्त्या लोके शब्दाः प्रवर्त्तन्ते गौण्या ऽपि वृत्त्या व्यवहारदर्शनात् , एवं वेदे ऽपि तेषां तथा प्रयोगो भविष्यति, इत्थं च मन्त्रेष्वप्यैन्द्या गार्हपत्योपस्थानमविरुद्धम् , एवं स्तुतिनिन्दास्वरूपास्तावदर्थवादाः विध्येकवाक्यत्वेन प्रमाणम् , पुराकृतिपुराकल्पस्वरूपा अपि तथैव योज्याः,

क्वचित्पुनरर्थवादेनैव कश्चिदंशः पूर्यते इति न तु प्रतीत्यङ्गत्वमेव तस्य कार्याङ्गत्वमपि भवति, यथा प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति इत्यश्रूयमाणाधिकारस्य रात्रिसत्रविधेरधिकारांशो ऽर्थवादादेव लभ्यते यथोक्तं(१) फलमात्रेयो निर्देशादिति, तत्र हि प्रतिष्ठाकामाः सत्रमासीरन्नित्यर्थवादवशाद्गम्यते वाक्यार्थः

क्व चिद्विधिवाक्यस्यार्थसंदेहे ऽर्थवादात्मकाद्वाक्यशेषात्तन्निश्चयो भवति यथा अक्ताः शर्करा उपदधातीत्यञ्जनद्रव्ये घृततैलवसादिभेदेन संदिह्यमाने

---

( १ ) जैमिनिसूत्रम् अ० ४ पा० ३ सू० १८ ।

तेजो वै घृतमिति अर्थवादाद् घृतेनाक्ताः शर्करा उपधेया इति गम्यते ।

इत्यर्थवादा विधिनैक्यभावा-
त्तद्वत्प्रमाणत्वममी भजन्ते ।
अस्ति प्रतीत्यन्वयिता हि तेषां
क्व चिच्च कार्यान्वयिता तु दृष्टा ॥
यद्वा स्वरूपपरतामपि संस्पृशन्ति
प्रामाण्यवर्म त इमे न परित्यजन्ति ।
नैयायिका हि पुरुषातिशयं वदन्तो
वृत्तान्तवर्णनमपीह यथार्थमाहुः ॥
आदित्ययूपवचनादिषु तु स्वरूप-
याथार्थ्यमित्थमुपपादयितुं न शक्यम् ।
गौणीं तु वृत्तिमवलम्ब्य कृता तदर्थ-
व्याख्येति तेष्वपि न विप्लवनावकाशः ॥

## मन्त्रप्रामाण्याक्षेपः ।

अथेदानीं मन्त्रा विचार्यन्ते किमर्थप्रकाशनद्वारेण विध्यर्थोपयोगिता तेषामुतोच्चारणमात्रेणेति, ननूभयथा ऽपि प्रामाण्याविशेषात्किं तद्विचारेण, न हीदं शास्त्रं वेदस्यार्थविचाराय मीमांसावत्प्रवृत्तम् , अपि तु प्रामाण्यनिर्णयायैवेति, सत्यम् , प्रामाण्यनिर्णयायेदं शास्त्रं प्रवृत्तम् अविवक्षितार्थत्वे तु मन्त्राणामप्रतिपादकत्वलक्षणमप्रामाण्यमेव भवेत्तत्सामान्याद्वेदब्राह्मणवाक्यानामपि तथाभावप्रसङ्ग इति वेदस्य कर्मावबोधार्थत्वं हीयते, न च संशयविपर्ययजननमेवाप्रामाण्यम् अज्ञानजनकत्वमप्यप्रामाण्यमेव, तदुच्यते उच्चारणमात्रोपकारिणो मन्त्राः कुतः तथा विनियोगोपदेशात् , उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति यद्यर्थप्रकाशनोपकारिणो मन्त्राः सामर्थ्यादेव प्रथनोपयोगी मन्त्रो ऽयमिति किमर्थं प्रथने विनियुज्यते वचनेन, यथा साक्षः पुरुषः परेण चेन्नीयते नूनमक्षिभ्यां न पश्यतीति गम्यते, अग्नीदग्नीन्विहरेति च करात्येवासौ ऋत्विगग्निविहरणं किं वचनेन, उच्चारणमात्रोपकारिणि मन्त्रे तदुच्चारणादेवादृष्टं किं चिदुपकारजातं कल्प्यते वाक्यक्रमनियमाच्चाविवक्षितार्थान् मन्त्रानवगच्छामः, नियतपदक्रमा हि मन्त्राः पठ्यन्ते यद्यर्थप्रतिपादनेनोपकुर्युः नियतक्रमाश्रयणमनर्थकं स्यात् क्रमान्तरेणापि तदर्थावगमसंपत्तेः ।

इतश्चाविवक्षितार्था मन्त्राः अविद्यमानार्थप्रकाशिनो हि के चिद्दृश्यन्ते यथा "चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश" इति, न हि चतुः शृङ्गं

त्रिपादं द्विशिरस्कं सप्तहस्तं किं चिद्यज्ञसाधकमस्ति यदनेन प्रकाश्येत, अतश्चैवम् अचेतनप्रैषप्रदर्शनाद् ओषधे त्रायस्वैनमिति न ह्योषधिर्बुद्ध्यते त्राणाय नियुक्तास्मीति, शृणोत ग्रावाण इति चोदाहरणम् न ह्यचेतना ग्रावाणः श्रोतुं नियुज्यन्ते, अपि च अदितिर्द्यौरन्तरिक्षमिति विप्रतिषिद्धमभिव दन्ति मन्त्राः कथं सैव द्यौस्तदेवान्तरिक्षं भवितुमर्हति, केषां चिच्च मन्त्राणा- मर्थो ज्ञातुमेव न शक्यते ते कथमर्थप्रकाशनेनोपकुर्युः अम्यक्सा त इन्द्र ऋष्टि- रिति सृण्येव जर्फरी तुर्फरीतु इति इन्द्रः सोमस्य काकेति च, तस्मादविवक्षि- तार्था मन्त्राः ।

अपि चोच्चारणमुभयथा ऽपि कर्त्तव्यं मन्त्राणामदृष्टाय वाऽर्थप्रत्यायनाय वा यतो ऽर्थमपि नानुच्चारिताः शब्दाः प्रत्याययितुमुत्सहन्ते, तस्मादवश्यकर्त्तव्ये ऽस्मिन्नुच्चारणे तत एव यज्ञोपकारे सिद्धे किमर्थप्रतिपादनद्वारपरिग्रहेण प्रयोज- नमिति ।

## मन्त्रप्रामाण्यसमर्थनम् ।

तत्रोच्यते, किं मन्त्रेभ्यो ऽर्थप्रतीतिरेव नास्ति किं वा भवन्त्यपि निर्निमित्ता ऽसौ उत सन्निमित्ता ऽपि ग्रहैकत्वप्रतीतिवदविवक्षितेति, न तावत्प्रतीतिरेव ना- स्ति शब्दार्थसम्बन्धव्युत्पत्तिसंस्कृतमतीनां बर्हिर्देवसदनं दामीत्येवमादिमन्त्रश्र- वणे सति तदर्थप्रतीतेः स्वसंवेद्यत्वात्, नाप्यसौ निर्निमित्ता लोकवत्पदानामेवात्र- निमित्तत्वात्, व्युत्पत्तिरपि न नास्ति य एव लौकिकाः शब्दास्त एव वैदिकाः तएव तेषामर्था इति लोकव्यवहारतस्तद्व्युत्पत्तिसम्भवात्, नापि सम्भवन्त्यपि मन्त्रेभ्यो ऽर्थप्रतीतिः ग्रहैकत्वप्रतीतिवदविवक्षिता भवितुमर्हति अविवक्षानिब- न्धनस्य कस्य चिदप्यभावात्, ग्रहादिवचनान्तरनिर्ज्ञातसंख्यत्वात्सोमावसेकनिर्ह- रणस्य च सम्मार्गकार्यस्य सर्वग्रहसाधारणत्वाद् ग्रहमिति विभक्तेश्च कर्मकार- कसमर्पणमात्रेणापि सार्थक्योपपत्तेः युक्तमेकत्वमविवक्षितमिति कथयितुम्, इह तु बर्हिर्देवसदनं दामीत्येवमादिवाक्यक्रियमाणं क्रतूपयोगिद्रव्यादिप्र- काशनं तस्य विध्यपेक्षितत्वान्मन्त्रेण स्मृतं कर्म करोति तथा क्रियमाणमभ्युद- यकारि भवति इति न यज्ञाङ्गप्रकाशनमविवक्षितम्, अतो नोच्चारणमात्रोपकारि- णो मन्त्राः, जपमन्त्राणां तु पावमानीं जपेदिति विधिनैव तावन्मात्राक्षेपणान्नार्थे- न प्रकाशितेन प्रयोजनमिति किं तत्र क्रियते, यत्र तु जपेदिति विधिर्न श्रूयते न तत्र तदर्थः प्रतीयमानो ऽपेद्यमाणश्चोपेक्षितुं युक्तः ।

ननु यदि जपेदिति विधेर्वैष्णव्यादिषु नार्थो विवक्ष्यते तर्हि स्वाध्यायो ऽध्येतव्य इत्यक्षरग्रहणमात्रविधानात्सर्वस्यैव वेदस्याविवक्षितार्थत्वं स्यात्, एतच्च शास्त्रान्तरे विस्तरतो निर्णीतम् इह तु वितन्यमानमस्माकमवान्तरवि-

चारवाचालतामाविष्करोतीति न प्रतन्यते,

यत्तु तदर्थविनियोगोपदेशादित्यविवक्षितार्थत्वमुक्तं तत्र उरु प्रथा उरु प्रथस्वेति लिङ्गादेव मन्त्रस्य प्रथनविनियोगसिद्धेः कामं तद्विधायकं वचनमनर्थकं भवतु प्राप्तानुवादकत्वाद् न तु प्रतीयमानो मन्त्रादर्थस्त्यक्तुं युक्तः, तत्किं वचनमनर्थकमेव नानर्थकं प्रतिपन्नार्थविषयं तु तत्, अर्थवादार्थं वा तद्वचनम् यज्ञपतिमेव तत्प्रथयतीति तद्यज्ञपतिं यजमानमेवप्रजया पशुभिः प्रथयतीति, क चित्तु गुणार्थविधानं यथा तां चतुर्भिरादत्ते इति, एवमभीदग्नीन्विहरेत्यादावपि द्रष्टव्यम्,

यत्तु नियतपदक्रमत्वादुच्चारणमात्रोपयोगिनो मन्त्रा इति तदप्यसाधु, मीमांसकानामनादित्वाद्वेदस्य तत्क्रमलङ्घनानुपपत्तेः यथोक्तम्(१) "अन्यथा करणे चास्य बहुभ्यः स्यान्निवारणम्" इति, 'अस्माकमपि यादृगीश्वरप्रणीतो वेदः तदन्यथाकरणे किमध्येतणां स्वातन्त्र्यमस्ति, तस्मान्नार्थविवक्षायै मन्त्रक्रमः प्रभवति ब्राह्मणवाक्यक्रमवत् ,

यदपि चत्वारि शृङ्गेत्यविद्यमानार्थवचनमाशङ्कितम्, तदप्यनभिज्ञतया यज्ञस्य वैष गुणवादेन संस्तवः चत्वारि शृङ्गा इति वेदा उक्ताः त्रयो ऽस्य पादा इति सवनानि द्वे शीर्षे इति दम्पती यजमानौ सप्त हस्तास इति च्छन्दांसि त्रिधा बद्ध इति मन्त्रब्राह्मणकल्पैर्निबद्धः वृषभ इति कामान्वर्षति रोरवीतीति स्तोत्रशस्त्रप्रयोगबाहुल्याच्छब्दायमानः महोदेवो मर्त्यानाविवेशेति मनुष्यकर्तृकत्वेनैवमेष यज्ञः स्तुतो भवति तद्यथा चक्रवाकमिथुनस्तनी हंसदन्तावली शैवालकेशी काशवसनीति नदी स्तूयते,

ओषधे त्रायस्वैनमिति चेतनवन्नियोगस्तस्याः स्तुत्यर्थः, शृणोत ग्रावाण इति प्रातरनुवाकस्तुतिः इत्थं नामैष प्रातरनुवाकः प्रशस्यो यदचेतना ग्रावाणो ऽपि शृणुयुः अदितिर्द्यौरदितिरन्तरिक्षमिति गुणवादादप्रतिषेधः, तद्यथा लोके त्वमेव मे माता त्वमेव मे पिता त्वमेव भगिनी त्वमेव मे भ्रातेति ।

यत्तु केषां चिन्मन्त्राणामर्थो न ज्ञायते इति पुरुषापराधः अर्थावगमोपायेषु बहुषु सत्स्वपि तदन्वेषणालसः पुरुषो नार्थमवगच्छति न पुनर्मन्त्रो ऽपराध्यति ब्राह्मणवाक्यवदुपायतस्तदर्थावगमदर्शनात्, उपायश्च प्रथमस्तावद्वृद्धव्यवहार एव तुल्यत्वाल्लोके वेदे शब्दार्थानां य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्था इति,

यद्यपि च अग्निर्वृत्राणि जङ्घनदिति वेदे कृतणत्वमग्निशब्दं पठन्ति उत्ताना वै देवगवा वहन्ति वनस्पते हिरण्यपर्ण प्रदिवस्ते अर्थ-

(१) श्लोकवार्तिके तृतीयसूत्रे श्लो. १४९ ।

मिति लौकिकवैदिकयोः शब्दयोरर्थयोश्च नानात्वमिवाशङ्क्यते तथा ऽपि तथात्वं प्रत्यभिज्ञानेनावधार्य ईषद्विकृतास्त एव वेदे इति लौकिक्येव व्युत्पत्तिः, लोकप्रसिद्धिविप्रतिषेधे तु शास्त्रवित्प्रसिद्धिः प्रमाणीक्रियते यथा यवमयश्चरुर्वाराही उपानहौ वैतसे कटे प्राजापत्या सञ्चिनोतीति यववराहवेतसशब्दा दीर्घशूकसूकरवञ्जुलकेषु शिष्टप्रसिद्धा नियम्यन्ते न प्रियङ्गुकृष्णशकुनिजम्बूष्विति, यत्र तु शिष्टप्रसिद्धिः नास्ति तत्र म्लेच्छेभ्यो ऽपि तदर्थव्युत्पत्तिराश्रीयते यथा पिकनेमतामरसशब्देषु, म्लेच्छप्रसिद्धेरप्यभावे निगमनिरुक्तव्याकरणवशेन धातुतो ऽर्थः परिकल्पनीयः, तेनाश्विनसूक्तप्रक्रमाज्जरणमरणनिमित्तौ जर्फरीतुर्फरीतू इति द्विवचनान्तसरूपावेतौ शब्दावश्विनोर्वाचकाविति गम्यते, एवमन्यत्राप्युत्प्रेक्षणीयम् , तदनेनापि निमित्तेन न मन्त्राणामविवक्षितार्थत्वं वक्तव्यम् ।

अमी तस्मादर्थप्रकटनमुखेनैव दधति
क्रियार्थत्वं मन्त्रा न तु पठनमात्रेण जपवत् ।
न तद्द्वारेणापि श्लथयितुमतः शक्यत इदं
प्रमाणत्वं वेदे सकलपुरुषार्थामृतनिधौ ॥

### नामधेयप्रमाण्याक्षेपः—

इदमिदानीं परीक्ष्यते, उद्भिदा यजेत चित्रया यजेत पशुकामः अग्निहोत्रं जुहुयात्स्वर्गकामः श्येनेनाभिचरन्यजेत वाजपेयेन स्वाराज्यकामो यजेतेति श्रूयते, तत्र किमुद्भिदेति चित्रयेति अग्निहोत्रमिति श्येनेनेति वाजपेयेनेति गुणविधय एते तत्तत्कर्मनामधेयानि वेति, किमनेन परीक्षितेन प्रयोजनम् , उभयत्रापि प्रामाण्यं नोपपद्यते इति तदर्थमेवेदं परीक्ष्यते, यदि तावद्व्रीहिभिर्यजेत दध्ना जुहोतीतिवद् गुणः कश्चिदुद्भिदादिपदैर्विधीयते अनेन द्रव्यविशेषेण यागः कर्त्तव्य इति तदा भावार्थस्य यज्यादेरन्यतो ऽवगतिर्मृग्या, अनवगते भावार्थे गुणविधानस्यानुपपन्नत्वात् , आग्नेयो ऽष्टाकपालो भवति अग्निहोत्रं जुहोतीति विध्यन्तरेण भावार्थे चोदिते तत्र व्रीहिभिर्यजेत दध्ना जुहोतीति ।

ननु वाजपेयेन स्वाराज्यकामो यजेतेत्यनेनैव वाक्येन यागाख्यो भावार्थः चोदयिष्यते गुणश्च तस्मिन्वाजपेयाख्यो विधास्यते इति को दोषः, कथं न दोषः, अर्थद्वयविधानेन वाक्यभेदप्रसङ्गात् , यागेन स्वाराज्यं कुर्यादित्येको ऽर्थः वाजपेयेन गुणेन यागं कुर्यादिति द्वितीयो ऽर्थः, न च सकृदुच्चारितं वाक्यमर्थद्वयविधानाय प्रभवति ।

ननु यजेतेति रूपसाम्यादुभयत्रापि संबध्यते यजेत स्वाराज्यकामो वाजपेयेन चेति तुल्यमस्योभयत्रापि रूपम् , न रूपसाम्यस्यासिद्धत्वात् , स्वाराज्यं

प्रति यजिरप्राप्तत्वाद्विधीयते गुणं च प्रति प्राप्तत्वादनूद्यते, अनवगते हि कर्मणि गुणविधानमघटमानमित्यवश्यं गुणविधिपक्षे गुणं प्रति यजिः प्राप्तत्वादुद्देश्यो भवति प्रधानं च, स एव स्वाराज्यं प्रति विधेयत्वादुपादेयो गुणश्चेति विरुद्धरूपापत्तेर्न यजिरुभाभ्यां युगपत्संबन्धुमर्हति यः स्वाराज्यं साधयितुमिच्छेत् स यजेतेत्यन्यद्रूपम् , यद्यजेत तद्वाजपेयेनेत्यन्यपद्रूम् , तस्माद्भावार्थप्राप्तौ प्रमाणान्तरापेक्षणाद् गुणविधिपक्षे तदप्रमाणं वचनम् , अथैष दोषो मा भूदिति नामधेयपक्ष आश्रीयते तदैषामुद्भिदादिपदानां विस्पष्टमेवानर्थक्यम् , यावदेवोक्तं भवति यजेतेति तावदेव वाजपेयेनेति, एवमानर्थक्यादन्यत्राप्यसमाश्वासः ।

## नामधेयप्रामाण्याक्षेपनिरासः

अत्रोच्यते गुणविधिपक्षे यथा भवानाह तथैव नामधेयपक्ष एव तु श्रेयानित्यभ्युपगम्यते, तथा हि, भावार्थस्य फलं प्रति करणत्वात्तत्सामानाधिकरण्येन तृतीया प्रयुज्यते तत्र वाजपेयेनेति, साध्यश्च भवन्भावार्थः करणभावमनुभवतीति साध्यत्वापेक्षया तत्सामानाधिकरण्येन क्व चिद् द्वितीया ऽपि प्रयुज्यते अग्निहोत्रं जुहोतीति ।

ननु गुणवन्नामापि विधातव्यमेवानभिहितस्यानवगमात् , ततश्च गुणविधिपक्षस्पृशो वाक्यभेदादिदोषास्तदवस्था एव, नैतदेवम् , न ह्यस्य कर्मण इदं नाम वेदितव्यमिति संज्ञासंज्ञिसंबन्धं वेदो विदधाति योगेन तु केन चित्प्रवर्त्तमानं नामधेयमवगम्यते एव, उद्भेदनमनेन पशूनां क्रियते इत्युद्भिदिदम् , दधि मधु घृतं धाना उदकं तत्संसृष्टं प्राजापत्यमिति नानाविधविचित्रद्रव्यसाध्यत्वाच्चित्रा अग्नये होत्रमस्मिन्नित्यग्निहोत्रं यथैव श्येनो निपत्यादत्ते एवमनेन द्विषन्तं भ्रातृव्यमादत्ते इत्यर्थवादात् श्येन एव श्येनो यागः वाजमन्नं पीयते ऽस्मिन्निति वाजपेयो यागः, तस्मात्कर्मनामान्येतानि ।

यत्तु नामधेयपक्षे नैरर्थक्यमाशङ्कितं तदपि न चारु, नामापि गुणफलोपलब्धे अर्थवदिति अभियुक्तैः परिहृतत्वात् , एवंनामेदं कर्मेत्यवगम्यते तत्र गुणो द्रव्यदेवतादिः फलं च तस्य स्वर्गः पश्चादवगम्यते इति, तस्मान्नामधेयपदानामविरुद्धो ऽन्वयः, क्व चित्पुनरप्राप्ते भावार्थे सगुणमेव तत्कर्म चोद्यते यथा आग्नेयो ऽष्टाकपालो ऽमावास्यायां पौर्णमास्यां चाऽच्युतो भवति इति, यथा वा एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति, अलं शास्त्रान्तरोक्तगहनकथाविस्तरेण इति नास्ति नामधेयद्वारेणापि प्रामाण्याक्षेपः सर्वप्रकारमेव सिद्धं वेदप्रमाणत्वमिति ।

वेदप्रामाण्यसिद्ध्यर्थमित्थमेताः कथाः कृताः ।
न तु मीमांसकख्यातिं प्राप्तास्मीत्यभिमानतः ॥

### कार्य एवार्थे पदसङ्गतिग्रहः—

नन्वेवं विध्यर्थवादमन्त्रनामधेयानां कार्यौपयिकत्वदर्शनात्कार्यएवार्थे वेदः प्रमाणमित्युक्तं स्यात्, ततः किं सिद्धे ऽर्थे तस्य प्रामाण्यं हीयते, ततोपि किं भूयान्भूतार्थाभिधायिग्रन्थराशिरुपेक्षितो भवेत, सकलस्य च वेदस्य प्रामाण्यं प्रतिष्ठापयितुमेतत्प्रवृत्तं शास्त्रम्, अत्र केचिदाहुः, सर्वस्यैव वेदस्य कार्ये ऽर्थे प्रामाण्यम्, तथा हि, गृहीतसम्बन्धः शब्दो ऽर्थमवगमयति सम्बन्धग्रहणं चास्य वृद्धव्यवहारात्, वृद्धानां च व्यवहारः पानीयमानय गां बधान ग्रामं गच्छेति कार्यप्रतिपादकैरेव शब्दैः प्रवर्त्तते इति तत्रैव व्युत्पद्यन्ते बालाः, प्रयोजनोद्देशेन हि वृद्धा वाक्यानि प्रयुञ्जते, न च सिद्धार्थाभिधायिना प्रवृत्तिनिवृत्ती अनुपदिशता शब्देन किंचित्प्रयोजनमभिनिर्वर्त्ततइति तस्य न प्रयोगयोग्यत्वम्, अप्रयुज्यमानस्य च न सम्बन्धग्रहणम् अगृहीतसम्बन्धस्य च न प्रतिपादकत्वम् अप्रतिपादकस्य च न प्रामाण्यम्, अपि च आख्यातपदोच्चारणमन्तरेण निराकाङ्क्षप्रत्ययानुत्पादादवश्यमाख्यातयुक्तं वाक्यं प्रयोक्तव्यम्, आख्यातपदेन साध्यरूपो ऽर्थ उच्यते नामधेयपदेन च सिद्धः, भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते इति वाक्यस्य साध्यार्थनिष्ठतेति न भूतार्थविषयं तस्य प्रामाण्यम्, अतश्च कार्ये ऽर्थे शब्दस्य प्रामाण्यम्, यतश्च कार्यरूपो ऽर्थः शब्दस्यैव विषय इति, न च शब्दः प्रमाणतां सिद्धे ऽथ लभते सिद्धो ऽर्थः प्रसिद्धत्वादेव प्रमाणान्तरपरिच्छेदयोग्य इति तत्प्रतिपादने तत्प्रमाणान्तरसव्यपेक्षः शब्दो भवति, ततश्च तद्ग्राहिणः प्रमाणान्तरस्यैव तत्र प्रामाण्यं स्यान्न शब्दस्य, शब्दश्च तदुपस्थापनमात्रनिष्ठ एव स्यात्, तस्माच्छब्दप्रामाण्यमिच्छता कार्ये एवार्थे तत्प्रामाण्यमङ्गीकर्त्तव्यमिति ।

### अकार्येऽपि पदसङ्गतिग्रहोपपादनम्

अत्रोच्यते, यद् ब्रूषे कार्यएवार्थे वाक्यस्य व्युत्पत्तिरिति तदयुक्तम्, एवं हि सिद्धरूपो ऽयं तस्यार्थ इति कथं त्वयोच्यते, न ह्यलब्धव्युत्पत्तेः शब्दादर्थप्रत्ययो युज्यते, अर्थप्रतीतिश्च ततो दृश्यते व्युत्पत्तिश्च तत्र नास्तीति चित्रम्, न च कार्यपरैरेव शब्दैः लोके व्यवहारो वर्त्तमानापदेशकेभ्योऽपि व्यवहारप्रवृत्तेस्तत्रापि व्युत्पत्तिर्भवत्येव, अपि चाङ्गुल्यादिना पुरोऽवस्थितमर्थं निर्दिश्य यदा कश्चित्कथयत्यस्येदं नामेति तदा कार्योपदेशमन्तरेणापि भवत्येव व्युत्पत्तिः, अस्माच्छब्दादयमर्थः प्रतिपत्तव्य इति कार्योपदेश एवासौ इति चेत् तादृशानामक्षराणामश्रवणात्, अस्येदं नामेति हि श्रूयते नास्मादयं प्रतिपत्तव्य इति,

अस्येदं नामेत्येषामेवाक्षराणामेषो ऽर्थ इति चेद् न, अपदार्थस्य वाक्यार्थत्वायोगात्, न चैवं कल्पयितुमपि शक्यते अस्येदं नामेत्येतावतैव च तत्प्रतिपत्तिसिद्धेः प्रतिपत्तिकर्त्तव्यताभिधानस्य निष्प्रयोजनत्वात्, कार्यपरादपि शब्दाद् व्युत्पत्तिर्भवन्ती न वाक्यार्थमात्रपर्यवसायिनी भवति किं त्वेकैकपदादावापोद्वापद्वारकपदार्थपर्यन्ता सा भवति पदार्थव्युत्पत्तिसंस्कृतमतेश्चाभिनवकविविरचितवर्त्तमानापदेशश्लोकश्रवणे ऽपि वाक्यार्थप्रतीतिर्दृश्यत एवेति नाव्युत्पत्तिकृतमप्रामाण्यम्, न चासौ भूतार्थप्रतिपादकशब्दजनिता प्रतीतिर्बाध्यते संदिग्धा वा तेन प्रत्यक्षादिप्रमाणान्तरकरणकप्रतीतिवत्प्रमाणफलमेव सा भवितुमर्हति ।

यत्पुनरभ्यधायि कार्ये ऽर्थे प्रमाणान्तरनिरपेक्षतया प्रमाणं भवति शब्दः न सिद्धे ऽर्थे प्रमाणान्तरसापेक्षत्वादिति तदसत्, प्रवर्त्तयितुमेव न शक्नोति इत्यवोचाम वक्ष्यामश्च वाक्यार्थचिन्तायामपि, प्रमाणान्तरसापेक्षत्वं तस्य प्रत्युत प्रामाण्यमावहति, किं चेदं सापेक्षत्वमिति वक्तव्यम्, किं सिद्धार्थाभिधायिनः शब्दस्योत्पत्तावेव प्रामाण्यान्तरापेक्षत्वम् उत तद्विषयस्य प्रमाणान्तरपरिच्छेदयोग्यत्वमित्युभयथा ऽतिप्रसङ्गः, उत्पत्तौ प्रमाणान्तरसव्यपेक्षतया यद्यप्रामाण्यं वर्ण्यते हन्त हतमनुमानं तस्योत्पत्तौ प्रत्यक्षादिसापेक्षत्वात्, वर्णितं च तत्पूर्वकं त्रिविधमनुमानमिति, तद्विषयस्य प्रमाणान्तरग्रहणयोग्यतायां तु तदप्रामाण्ये प्रत्यक्षादीनां सर्वेषामप्रामाण्यं प्राप्नोति प्रमाणसंप्लवस्य प्राक् प्रतिपादितत्वात्, अपि च विधियुक्तेष्वपि वैदिकेषु लौकिकेषु वाक्येष्वधीष्व गां बधान ग्रामं गच्छेत्येवमादिष्वन्वयव्यतिरेकाभ्यां हिताहितप्राप्तिपरिहारसाधनसामर्थ्यावगमेन प्रवृत्तिसिद्धेः विनियोगमात्रनिष्ठ एव विधिर्भवति, अप्रवृत्तप्रवर्त्तनात्मकनिरपेक्षनिजव्यापारवैधुर्यात्कार्यपरत्वानुपपत्तेः अनुवादमात्रं विधिवचनमिति कार्यार्थप्रामाण्यवादिनां सर्वमेव लौकिकं वाक्यमप्रमाणं स्यात् ।

ये तु भूतार्थवादिषु प्रवृत्तिनिवृत्तिकारिषु विधिनिषेधौ कल्पयन्ति ते नितरामृजवः, श्रूयमाणो ऽपि विधिरनुवादीभवति यत्र तत्राश्रुतः कल्प्यते इति किमन्यदेतत्परमार्जवम्, प्रवृत्तौ तु तत्र विधिरप्रयोजक एव अन्वयव्यतिरेकाभ्यां पुरुषार्थसाधनसामर्थ्यावगमात्पुरुषप्रत्ययाद्वा लोकेषु प्रवृत्तिसिद्धेः, तत्रैतत्स्यात् लौकिकवाक्यानां विवक्षापरत्वान्न कार्यार्थत्वम्,

अपि च पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययो नैवमर्थप्रतीतिः, वैदिकानि पुनरपौरुषेयतया कार्यपराण्येव वाक्यानीति एतदपि न पेशलम्, अपौरुषेयस्य वचसः प्रतिक्षिप्तत्वात्, वेदे ऽपि कर्तुः ईश्वरस्य साधितत्वात्, न च पुरुषवचनमपि विवक्षापरमिति दर्शितम्, तथा हि न विवक्षा वाक्यार्थों देवदत्त गामभ्याज कृष्णां दण्डेनेति पदग्रामे विवक्षावाचिनः पदस्याश्रवणात्, अपदार्थस्य

वाक्यार्थत्वानुपपत्तेः, न च विषभक्षणवाक्यस्येव परगृहे भोजननिवृत्तौ पौरुषेयवचसो विवक्षायां तात्पर्यशक्तिरपि प्रभवति, न हि सर्वात्मना ऽभिधात्रीं शक्तिमवधीर्यैव तात्पर्यशक्तिः प्रसरतीति न विवक्षापरत्वम्, कथं तर्हि पुरुषवचनादुच्चारिताद् विवक्षाऽवगम इति चेद् अनुमानादिति ब्रूमः, कार्यत्वात्पदरचनायाः पुरुषेच्छापूर्वकत्वमनुमीयते अर्थावगमपुरःसरं च पुरुषवचनाद्विवक्षानुमानमेवमयं वेद एवमयं विवक्षतीति अर्थोपरागरहितस्य विवक्षामात्रस्य जीवतां निसर्गत एव सिद्धेः, अयमर्थो विवक्षित इत्यर्थोपरज्यमाना तु विवक्षा न शक्या ऽर्थे ऽनवगते ऽवगन्तुम्, अर्थश्चेत्प्रथममवगतो त्वान्वयान्न तर्हि तद्विवक्षापरम्, अर्थपरमेव भवितुमर्हति, लोकवाक्यानां विवक्षापरत्वे बाह्ये ऽर्थे सम्बन्धग्रहणासम्भवाद्वेदादपि वाक्यार्थावगमो न स्यादित्यलं प्रसङ्गेन, तस्मान्न कार्यपरत्वेनैव शब्दस्य प्रामाण्यम्।

यत्पुनरभाणि नाख्यातशून्यं वाक्यं प्रयोगार्हं तेन विना नैराकाङ्क्ष्यानुपपत्तेः आख्यातस्य च भव्यरूपो ऽर्थो न नाम्ना इव भूतो भूतभव्यसमुच्चारणे च भूतं भव्यायोपदिश्यते इति सर्वत्र कार्यपरत्वम्, तदपि न सांप्रतम्, पुत्रस्ते जातः कन्या ते गर्भिणीति सुखदुःखकारिणामनुपदिष्टप्रवृत्तिनिवृत्तिकानामनाख्यातानामपि वाक्यानां लोके प्राचुर्येण प्रयुज्यमानत्वात्।

अथ सुखी भव दुःखी भवेति तत्र कार्यपरत्वं व्याख्यायते तदपि न युक्तम्, ईदृशानामक्षराणामश्रवणात् कल्पनायाश्च निष्फलत्वात्, न हि भवेत्युपदेशादसौ सुखी भवति सुखीभवितुं वा क्व चित्प्रवर्त्तते, उपाये पूर्वमेव प्रवृत्तत्वात्, उपेये च प्रवृत्त्यनुपपत्तेः, किं तु पुत्रजन्मश्रवणत एवासौ सुखीभवति तथा कस्य चिदुत्तरीयावगुण्ठिततनोर्निद्रायमाणस्य क्व चित्केन चित्केलिना रज्जुवेष्टितवपुषः पश्चात्प्रबोधसमये सहसा सरीसृपवलितमात्मानं मन्यमानस्य भयादनुन्मीलितचक्षुषः केन चित्प्रयुज्यमानं रज्ज्वा वेष्टितो ऽसीति वचः श्रवणपथमवतरति तत्सिद्धार्थबोधकमपि प्रमाणम्, न च तत्र मा भैषीरिति प्रयोगकल्पनाप्रयोजनम् रज्जुवेष्टनप्रत्ययादेव भयनिवृत्तेः सिद्धत्वात्, तथा च विषमविषधराधिष्ठितो ऽयमध्वा निधियुक्तो ऽयं भूभाग इति भूतार्थख्यापकं वचो दृश्यते न च तदप्रमाणम्, न च तत्र मा गास्त्वमनेनाध्वना निधिं गृहाणेति विधिनिषेधपरत्वं युक्तम्, एषां पदानामश्रवणात्।

ननु वक्तुः प्रेक्षापूर्वकारितया निष्प्रयोजनवचनानुच्चारादवश्यं मा गा गृहाणेति कार्याक्षराणि हृदये परिस्फुरन्ति कथं चिदालस्यादिना नोच्चारितानीति, नैतद्युक्तम्, प्रेक्षापूर्वकारित्वादेव वक्तुः यथावस्थितवस्तुस्वरूपमात्राख्यापकवचनोच्चारणमेव युक्तम्, अर्थात्प्रवृत्तिनिवृत्त्योः सिद्धत्वात्, पराभिप्रायस्य चानवस्थितत्वेन नियतोपदेशानुपपत्तेः, सर्पबन्धजीविनो हि सपन्नगः पन्था उपादेय-

तया ऽवभाति वीतरागस्य च ब्रह्मविदो वित्तैषणाव्युत्थितस्य गोविन्दस्वामिन इव निधिरपि हेयतया परिस्फुरतीति कस्मै किमुपदिश्यताम् , वस्तुस्वरूपे तु कथिते यथाहृदयवर्त्तिरागद्वेषानुवर्तनेन कश्चित्तत्र प्रवर्ततां कश्चित्ततो निवर्त्ततामिति भूतार्थकथनमेव लोके प्रेक्षावान् करोति न विधिनिषेधौ प्रयोक्तुमर्हतीति,

ये ऽपि ब्रुवते सर्वत्र प्रतिपत्तिकर्त्तव्यताविधानमेवादौ वेदितव्यम् अविधिकस्य वाक्यस्य प्रयोगानर्हत्वादिति ते ऽपि न साधु बुध्यन्ते, विदितशब्दार्थसम्बन्धस्य पुंसः शब्दश्रवणे सति प्रतिपत्तेः स्वतः सिद्धत्वेनानुपदेश्यत्वात् , असिद्धायां वा प्रतिपत्तौ प्रतिपत्तिकर्त्तव्यतापि कुतः प्रतीयेत ।

ननु कार्यार्थप्रतिपादकं पदमन्तरेण पदान्तराणि संसर्गमेव न भजन्ते कार्याकाङ्क्षानिबन्धत्वात्सम्बन्धस्य तेन सर्वत्र कार्यपरत्वम् , उच्यते, नैष नियमः कार्य्याकाङ्क्षागर्भ एव सर्वत्र सम्बन्ध इति वर्त्तमानापदेशकानामपि प्रेक्षापूर्वकारिवाक्यानामितरेतरसंसृष्टार्थप्रतीतिजनकत्वदर्शनात्, न हि दशदाडिमादिवाक्यसदृंशि वर्त्तमानापदेशीनि वचांसि भवन्ति कार्यनिबन्धने हि सम्बन्धे तद्रहितानामनन्वय एव स्यात्, दर्शितश्चान्वयः पूर्वोदाहृतवाक्यानाम् , अपि च लिङन्तपदयुक्ते ऽपि वाक्ये पदान्तरार्थानां परस्परमन्वयो दृश्यते एव स कथं समर्थयिष्यते, कार्याकाङ्क्षानिबन्धने हि कार्ये सर्वेषामन्वयो न परस्परमिति ।

अथ ब्रूयात् सर्वथा कार्यसम्बन्धे प्रथममवगते सति पश्चादरुणैकहायनीन्यायेन वाक्यीयः परस्परान्वयो ऽपि सेत्स्यतीति, हन्त तर्हि परस्परान्वये कार्याकाङ्क्षा कारणं तद्यरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणातीति द्रव्यगुणयोर्विभक्त्या सोमक्रयं प्रति युक्तत्वात्प्रथमं क्रयसम्बन्ध एव तयोर्गम्यते यश्च पाश्चात्यः परस्परान्वयस्तत्र कार्यपारतन्त्र्यापादिका विभक्तिरकारणमसत्यामपि तस्यां शुक्लः पट इति सामानाधिकरण्यप्रयोगेणान्वयसिद्धेः, तस्मात्कार्यैक्यनिबन्धनो ऽन्वय इति नियमो य उच्यते स कल्पनामात्रप्रभवो न प्रामाण्यव्यवस्थागम्य इति ।

यत्तु भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यतइत्ययमपि न सार्वत्रिको नियमो विपर्ययस्यापि व्रीहीन्प्रोक्षतीत्यादौ दर्शनादलं वा दर्शपूर्णमासप्रकरणनिवेशानुज्भितकार्यमुखप्रेक्षणदैन्येन व्रीहिप्रोक्षणोदाहरणेन,

आत्मा ज्ञातव्य इति तु सिद्धपर एव साध्योपदेशः, नह्यत्र कर्म किं चित्साध्यं प्रधानमुपदिश्यते ऽधिकाराश्रवणात् , न च विश्वजिदादिवदधिकारकल्पना काचिदुपदिश्यते न च कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्येति वक्ष्यामः, अर्थवादस्त्वर्थवाद एव नाधिकारिकल्पनाय प्रभवति, तस्मादपहतपाप्मत्वादिगुणयुक्तात्मस्वरूपनिष्ठत्वमेव तत्रावतिष्ठते, तस्मिन्नवगते पुरुषान्तरप्रार्थनादैन्यानुपपत्तेः स एव ह्युत्तमः पुरुषार्थः, स च सिद्ध एव न साध्यः, यत्नस्तु कृतबुद्धीनाम-

विद्योपरमायैवेति व्याचक्षते,

ज्ञातव्य इति प्रतिपत्तिकर्त्तव्यतापरो ऽयं विधिरिति चेन्न, प्रतिपत्तेः प्रमितित्वात्प्रमितेश्च प्रमेयनिष्ठत्वाज्ज्ञातव्य इति कर्मणि च कृत्यप्रत्ययनिर्देशात्कर्मणश्चेप्सिततमत्वात्तत्परत्वमेवावगम्यते विधिस्त्वत्र प्रसरन् क्व प्रसरेत्, फलं तावद्विधेर्न विषय एव, यथाऽऽह भट्टः(१) 'फलांशे भावनायाश्च प्रत्ययो न विधायक' इति, उपायस्तु ज्ञानमेव ज्ञानं च ज्ञेयनिष्ठमित्युक्तम्,

यस्तु यमनियमादिप्रतिपत्तीतिकर्त्तव्यताप्रकारोपदेशः सो ऽपि तथाविधात्मरूपाधिगतये सत्यासत्यस्वभावनामरूपप्रपञ्चविलापनद्वारा तत्रोपयुज्यते इति सिद्धतन्त्रमेव साध्यम्,

तिष्ठतु वा यमनियमप्राणायामप्रत्याहारधारणाध्यात्मज्ञानयोगीतिकर्त्तव्यताविधिः अन्येऽपि ज्योतिष्टोमादिविधयस्तन्निष्ठा एवेति वेदान्तिनः, साध्यस्य सर्वस्य क्षयित्वेनानुपादेयत्वात्सिद्धस्य ब्रह्मण एवानाद्यविद्यातीतस्यानपायिनः पुरुषार्थत्वात्, स्तोकस्तोकप्रपञ्चविलापनद्वारेणोत्तमाधिकारयोग्यत्वापादनाद् ब्रह्मप्राप्त्यौपयिका एव सर्वविधयः, तथा च मनुः—

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरिति(२) ॥
तदेवं सिद्ध एवार्थे वेदस्याहुः प्रमाणताम् ।
सर्वस्तावद्विषयो बहु वक्तव्यः प्रमाणता तु गिराम् ॥
किंतन्त्रता भवति कस्य तयोरितीयं
चर्चा चिराय न महत्युपयुज्यते नः ।
सन्तोषवृत्तिमवलम्ब्य वयं हि वेद-
प्रामाण्यमात्रकथनाय गृहीतयत्नाः ॥
प्रामाण्यसाधनविधावुपयोगि यच्च
वक्तव्यमत्र तदवादि यथोपयोगम् ।
वक्तव्यमिष्टमपि किं चिदिहाभिदध्म-
स्तच्छ्रूयतां यदि न धीः परिखिद्यते वः ॥

**इति श्रीजयन्तभट्टकृतौ न्यायमञ्जर्यां चतुर्थमाह्निकम् ॥**

---

( १ ) श्लोकवार्त्तिके २सू० २श्लो २२२ ननु अभिचारविधिना विहिता हिंसा कथं निषिध्येतेत्यत आह—फलांशे इति । तथा च फलस्याविधेयत्वात् सामान्यतः प्राप्तो निषेधोऽभिचारविधिना फलांशे वारयितुं न शक्यत इत्यर्थः ।

( २ ) मनुस्मृतिः अ०२श्लो०२८

ॐ

प्रपन्नाय विपन्नानां दुःखितानां सुखात्मने ।
सम्पूर्णाय दृढाशानां नमोऽकारणबन्धवे ॥

अथ यदुक्तं वास्तवस्य शब्दार्थस्याविद्यमानत्वादर्थासंस्पर्शिनः शब्दा इति तत्प्रतिविधीयते, द्विविधः शब्दः पदं वाक्यं च, तत्र पदार्थपूर्वकत्वाद्वाक्यार्थस्य प्रथमं पदार्थो निरूप्यते ।

पदं च द्विविधं नाम आख्यातं च, उपसर्गनिपातकर्मप्रवचनीयानामपि नामान्तर्भावमाचक्षते, तदुक्तम् सुप्तिङन्तं पदमिति,इहापि सूत्रकृदाह ते विभक्त्यन्ताः पदमिति(१),

तत्र तिङन्तपदार्थचिन्ता वाक्यार्थविचारावसरे एव करिष्यते तदौपयिकत्वात्, सुबन्तानां त्वर्थो ऽयमुच्यते, ते च चतुर्विधाः सुबन्ताः पदात्मनः शब्दा भवन्ति, जातिशब्दा गुणशब्दाः द्रव्यशब्दाः क्रियाशब्दा इति, तत्र गवादिजातिशब्दानां गोत्वादिजात्यवच्छिन्नं व्यक्तिमात्रमर्थो यस्तद्वानिति नैयायिकगृहे गीयते ।

ननु शुक्लादिगुणाधिकरणं क्रियाश्रयश्च द्रव्यं व्यक्तिः सास्नाद्यवयवसन्निवेशात्मिका आकृतिः शाबलेयादिसकलगोपिण्डसाधारणं रूपं जातिरिति व्यक्त्याकृतिजातिसन्निधाने समुच्चारित एष गोशब्दः कथमितरातिरस्कारेण तद्वन्मात्रवचनतामवलम्बते, आह वितता त्वियं कथा वर्तयिष्यते तावत् ।

## जात्यङ्गीकारे आक्षेपः

इदं तु चिन्त्यताम्, जातेरेव प्रमाणातीतत्वेन शशशृङ्गवदविद्यमानत्वात्कथं तद्वान्पदार्थो भविष्यति, तथा हि न तावत्सामान्यग्रहणनिपुणमक्षजं ज्ञानं भवितुमर्हति तस्य पूर्वापराननुस्यूतस्वलक्षणमात्रपरिच्छेदपरिसमाप्तव्यापारत्वात् ।

समानवृत्तिता नाम सामान्यस्य निजं वपुः ।
कथं स्पृशति सापेक्षमनपेक्षा ऽक्षजा मतिः ॥

समानेष्वाकलितेषु तद्वृत्ति साधारणरूपमवधार्य सामान्यं गृह्यते इति सापेक्षं तत्स्वरूपग्रहणम्, इयं च प्रथमनयनसन्निपातसमुद्गतमतिः पूर्वापरानुसन्धानवन्ध्या निरपेक्षा कथं तद्ग्रहणाय प्रभवेत्, तत्पृष्ठभाविनस्तु विकल्पाः स्वभावत एव वस्तुसंस्पर्शकौशलशून्यात्मान इति तद्विषयीकृतस्यापि सामान्यस्य न परमार्थसत्त्वं भवितुमर्हति, न चानुमानं शब्दो वा सामान्यस्वरूपवास्तवत्वव्यवस्थापनसामर्थ्यमश्नुते शब्दलिङ्गयोर्विकल्पविषयत्वेन वस्तुग्राहित्वासम्भवात्, तत्प्रा-

(१) गौतमसूत्रम् । अ० २ आ० २ सू० ६० ।

त्त्यादिव्यवहारस्तु प्रकारान्तरेण दर्शयिष्यते, अतश्च न व्यक्तिव्यतिरिक्तं सामान्यं भेदेनानुपलम्भात्, तथा हि, कुवलयामलकबिल्वादीनि करतलवर्तीनि पृथगवलोक्यन्ते न जातिव्यक्ती इति न तयोर्भेदः, देशभेदस्य चाग्रहणाद्यत्खलु यतोऽतिरिक्तं तत्तदधिष्ठितदेशव्यतिरिक्तदेशाधिष्ठानमवधार्यते घटादिव पटः न चैवं जातिव्यक्ती इति न तयोर्भेदः, अतश्चैवं तदग्रहे तद्बुद्धयभावाद्यद्धि यतो व्यतिरिक्तं तस्मिन्नगृह्यमाणे ऽपि गृह्यते घटादिव पटो न च व्यक्तावनुपलभ्यमानायां जातिरुपलभ्यते तस्मान्न ततो ऽसौ भिद्यते, तद्वृत्तित्वात्सामान्यस्य तदग्रहे तदानुपलब्धिरिति चेन्न वृत्त्यनुपपत्तेः ।

## जातिव्यक्तिसम्बन्धानुपपत्तिप्रदर्शनम्

किं प्रतिपिण्डं कात्स्न्येन वर्त्तते जातिरुतैकदेशेनेति द्वयमपि चानुपपन्नम्—

पिण्डे सामान्यमन्यत्र यदि कार्त्स्न्येन वर्त्तते ।
तत्रैवास्य समाप्तत्वान्न स्यात्पिण्डान्तरे ग्रहः ॥
एकदेशेन वृत्तौ तु गोत्वजातिर्न कुत्र चित् ।
समग्रा ऽस्तीति गोबुद्धिः प्रतिपिण्डं कथं भवेत् ॥

जातेश्च निरवयवत्वान्न के चिदेकदेशाः सन्ति यैरेषा प्रतिपिण्डं वर्त्तेत, न चैकत्र पिण्डे समाप्त्या वर्त्तमाना पिण्डान्तरे समाप्त्यैव वर्त्तितुमर्हति, समाप्तस्य पुनरुत्पत्तिं विना समाप्त्यन्तरानुपपत्तेः, तथा भूतस्य च वृत्तिप्रकारस्य क चिदप्यदर्शनात, या च समवायात्मिका पिण्डेषु वृत्तिः सामान्यस्यौलुक्यैरुच्यते तामपि न बुद्ध्यामहे वयम् ।

अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवाय इति यदुच्यते तद्विप्रतिषिद्धम्, अयुतसिद्धता च सम्बन्धश्चेति कथं सङ्गच्छते, पृथक्सिद्धे हि वस्तुनी कुण्डबदरवदन्योन्यं सम्बध्येते स्त्रीपुंसवद्वा, अयुतसिद्धे तु तदेकत्वात्किं केन सम्बध्यते, द्रव्यगुणयोरपृथक्सिद्धयोरपि सम्बन्धो विद्यते एवेति चेत् तदिदमन्यत्तस्योन्मत्तसंवर्णनम्, गुणिनोऽपि गुणव्यतिरिक्तस्यानुपलम्भात्, अयं गुणी रूपादिभ्योऽर्थान्तरत्वेन नात्मानमुपदर्शयति व्यतिरेकं च तेभ्यो वाञ्छन्तीति चित्रम् ।

यदपि नित्यानित्यविभागेन युतसिद्धेः स्वशास्त्रे परिभाषणं कृतम्, नित्यानां परमाणूनां पृथग्गतिमत्त्वं युतसिद्धिरनित्यानां तु युताश्रयिसमवायित्वं विभूनां परस्परमाकाशादीनां सम्बन्ध एव नास्तीति तदपि प्रक्रियामात्रम्, नानात्वेन सिद्धिर्निष्पत्तिर्ज्ञप्तिर्वा युतसिद्धिरित्युच्यते तद्विपर्ययादयुतसिद्धिरैक्येन सिद्धिरवतिष्ठते तथा च सति सम्बन्धो दुर्वचः, अवयवावयविनोरपि समवाया-

त्मा सम्बन्ध एवमेव परिहर्त्तव्यः, यथाऽऽह भट्टः(१) नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धतेति, परमाण्वाकाशयोः परमाणुकालयोश्च सम्बन्ध इष्यते नाकाशकालयोरन्योन्यमिति प्रक्रियैवेति अलमवान्तरचिन्तनेन, तस्मान्न जातिव्यक्त्योः का चिद् वृत्तिरुपपद्यते ।

सुशिक्षितास्तु रूपरूपित्वलक्षणमाचक्षते जातिव्यक्त्योः सम्बन्धं सोऽपि नोपपद्यते, रूपशब्दः किं शुक्लादिवचनः आकारवचनः स्वभाववचनो वा, शुक्लादिवचनत्वे नीरूपाणां पवनमनःप्रभृतीनां द्रव्याणां गुणकर्मणां च सामान्यशून्यता स्यात्, आकारवचनत्वेऽपि अवयवसन्निवेशरहितानां तेषामेव गुणादीनां सामान्यवत्ता न प्राप्नोति, स्वभाववचनत्वे तु जातिजातिमतोरव्यतिरेक एव भवेत् ।

अवभाति हि भेदेन स्वभावो न स्वभाविनः ।
शब्दातिरिक्ततैवेयं न तु वस्त्वतिरिक्तता ॥

किं चेदं रूपं नाम किं वस्त्वेव वस्तुधर्मो वस्त्वन्तरं वा, वस्त्वन्तरं तावन्न प्रतिभातीत्युक्तम्, वस्तुधर्मोऽपि तद्व्यतिरिक्ततया स्थितो न चकास्त्येव, अव्यतिरेके च सम्बन्धवाचोयुक्तिरनुपपन्नेत्युक्तम्, न च रूपरूपित्वलक्षणसम्बन्धः संयोगसमवायव्यतिरिक्तः कोऽपि श्रोत्रियैर्विविच्य व्याख्यातुं शक्यते यथा इदमिति, तस्माद्वाचोयुक्तिनूतनतामात्रमिह कृतं न त्वर्थः कश्चिदुत्प्रेक्ष्यते इत्यलं प्रसङ्गेन ।

## जात्याधारानुपपत्तिप्रदर्शनम् ।

अपि चेयं जातिः—

सर्वसर्वगता वा स्यात्पिण्डसर्वगता ऽपि वा ।
सर्वसर्वगतत्वे स्यात्कर्कादावपि गोमतिः ॥
अश्वधीः शाबलेयादावुष्ट्रबुद्धिर्गजादिषु ।
पदार्थसंकरश्चैवमत्यन्ताय प्रसज्यते ॥
अथापि व्यक्तिसामर्थ्यनियमान्नैष संकरः ।
न हि कर्कादिपिण्डानां गोत्वादिव्यक्तिकौशलम् ॥
नैवं खण्डाद्यभिव्यक्तमपि गोत्वमनंशकम् ।

(१) श्लोकवार्त्तिके सू० ४ श्लो० १४६ । न चाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना । इति कारिकापूर्वार्द्धम् । अयमर्थः वैशेषिकाः जातिव्यक्त्योरेकान्तभेदमेवाङ्गीकृत्य समवायसम्बन्धं मन्यन्ते यदाहुः 'अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्ययहेतुर्यः सम्बन्धः स समवाय' इति अयुतसिद्धिश्चापृथक्सिद्धिः, तान्निराचष्टे न चेति । अनिष्पन्नस्य घटादेः सामान्येन सम्बन्धो न सम्भवति निष्पत्तौ च युतसिद्धता इति अपृथक्सिद्धत्वानुपपत्तिरिति ।

सर्वत्रैव प्रतीयेत न वा सर्वगतं भवेत् ॥
तद्देशग्रहणे तस्य न हि किं चिन्नियामकम् ।
दीपवद्व्यञ्जकः पिण्डो न तु तत्पिण्डवृत्ति तत् ॥
सर्वत्र गृह्यमाणं च सर्वत्रास्तीति मे ऽन्वयः ।
सर्वसर्वगतं तस्मान्न गोत्वमुपपद्यते ॥
पिण्डसर्वगतत्वे तु काममेतद्दूषणम् ।
किं तु नैवाद्य जातायां गवि गोप्रत्ययो भवेत् ॥
पिण्डे नासीदसंजाते जातिर्जाते च विद्यते ।
संक्रामति न चान्यस्मात्पिण्डादन्यत्र निष्क्रिया ॥
आयान्त्यपि न तं पिण्डमपोज्झति पुरातनम् ।
न चांशैर्वर्त्तते तत्र कष्टा व्यसनसन्ततिः ॥

## सर्वबुद्धीनां व्यावृत्त्यनुवृत्त्यनुगमात्मकत्वशङ्कापरिहारौ—

भट्टास्तु ब्रुवते भिन्नाभिन्नमेकम्—

वस्तुबुद्धिर्हि सर्वत्र व्यावृत्त्यनुगमात्मिका ।
जायते द्व्यात्मकत्वेन विना सा च न सिद्ध्यति(१) ॥

केवलविशेषात्मकपदार्थपक्षे सामान्यप्रतीतेर्नालम्बनत्वं सामान्यमात्रवादे विशेषबुद्धेरनुपपत्तिः ।

न चाप्यन्यतरा भ्रान्तिरुपचारेण गम्यते ।
दृढत्वात्सर्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम्(२) ॥

न हि मिहिरमरीचिनिचयनीरप्रतीतिवत्सामान्यप्रत्ययोपमर्देन विशेषप्रतीतिः विशेषप्रत्ययोपमर्देन वा सामान्यप्रतीतिरुदेति किं तु अविरोधेनैव युगपदुभयावभासः, अत एव निर्विकल्पबोधे न द्व्यात्मकस्यापि वस्तुनो ग्रहणमुपेयते ।

तदेतदभिधीयमानमेव न मनोज्ञमिवाभाति ।

नानारूपं त्वयैकस्य विरुद्धं वदता स्वयम् ।
दूषणादानमौखर्यमस्माकमपवारितम् ॥

---

(१) श्लोकवार्त्तिके आकृतिवार्त्तिके श्लो० ९ वस्तुनः द्व्यात्मकत्वमन्तरा व्यावृत्त्यनुगमात्मिका बुद्धिर्न संभवति यदि सौगतवत् स्वलक्षणमेव स्यान्न सामान्यं तदानुवृत्तबुद्धिर्न स्यात् यदि च वेदान्तिवत् सामान्यमेव स्यात्तदा व्यावृत्तबुद्धिर्न स्यादित्यर्थः।

(२) तत्रैव श्लो० ७ ननु एकस्य सामान्यविशेषात्मकत्वं न युक्तिसहमित्यन्यतरद् भ्रान्तं स्यादित्यत आह—न चेति । उभयोर्दृढत्वान्नैकस्य भ्रान्तत्वं कल्पयितुं शक्यमित्यर्थः ।

तदेव सामान्यं स एव विशेषः तदेवैकं तदेव नाना तदेव नित्यं तदेवानित्यं तदेवास्ति नेति चादृष्टमिदमुच्यते उच्यमानमपि न शोभते ।

दृष्टत्वान्न विरोधश्चेन्न तथा तदवेदनात् ।
उक्तं हि नानुवृत्तार्थग्राहिणी नेत्रधीरिति ॥

विचित्रकल्पनाप्रबन्धविप्रलब्धबुद्धयः खल्वेवं मन्यन्ते भवन्तु ते न त्वेकं वस्तु बहुरूपं भवितुमर्हति ।

एकं हि वस्तुनो रूपमितरत्कल्पनामयम् ।
नानुवृत्तविकल्पेषु विस्रम्भ उचितः सताम् ॥
द्रागितो ह्यन्यसंस्पर्शनैरपेक्ष्येण दृश्यते ।
स्वलक्षणमतो भेदस्तान्त्विको ऽनुगमो मृषा ।
दृढादृढत्वमक्षुण्णमपरीक्ष्यैव संविदाम् ।
द्वयप्रतीतिमात्रेण द्वयाभ्युपगमो भ्रमः ॥
न नेति प्रत्ययादेव मिथ्यात्वं केवलं धियाम् ।
किं तु युक्तिपरीक्षा ऽपि कर्त्तव्या सूक्ष्मदर्शिभिः ॥
न चैकं शबलं वस्तु निर्विकल्पकगोचरः ।
व्यक्त्यन्तरानुसंधानाद्विना ऽनुगमधीः कुतः ॥

येष्वनुगतं तत्सामान्यं तेषु बुद्ध्याननुसंधीयमानेषु तद्वृत्तिसामान्यग्रहणासम्भवान्न चानुसंधानसामर्थ्यं बुद्धेरस्ति ।

अत एव न ते सम्यगक्षजज्ञानवेदिनः ।
अभेदवृत्तिप्रत्यक्षमाहुरद्वैतवाञ्छया ॥

तस्माद्भेदविषयत्वात्प्रत्यक्षस्य न तद्गतं सामान्यम्,

## जात्यनङ्गीकारेऽप्यनुगतप्रतीत्युपपादनम्—

नन्वेवमपह्नूयमाने सामान्ये गौर्गौरिति शाबलेयादिषु यो ऽयमनुवृत्तः प्रत्ययः स कथं समर्थयिष्यते, उक्तमत्र विकल्पमात्रमेष प्रत्ययो विकल्पाश्च नार्थाधीनजन्मान इति, तथा च परपरिकल्पितेषु सत्तादिसामान्येष्वपि निःसामान्यानि सामान्यानीत्यभ्युपगमात्, औपाधिक एषु सामान्येष्वनुगतविकल्प इति चेद् आयुष्मन् गवादिष्वपि कं चिदुपाधिलेशमवलम्ब्य गौर्गौरित्यनुस्यूतविकल्पो भविष्यति, कः पुनरसावुपाधिरिति चेदेकार्थक्रियाकारित्वमिति ब्रूमः ।

यदेव वाहदोहादि कार्यमेकेन जन्यते ।
गोपिण्डेन तदेवान्यैरिति तेष्वनुवृत्तिधीः ॥

ननु प्रतिव्यक्ति कार्यं भिन्नमेव सत्यम्—
भेदबुद्धिभयात्तत्तदेकमित्युपचर्यते ।

कर्कादिकार्यादन्यत्वं यथा ह्येतस्य दृश्यते ।
न तथा खण्डकार्यस्य मुण्डकार्याद्विभिन्नता ॥

ननु तथा मा भून्न त्वभिन्नमेव खण्डमुण्डयोः कार्यम्, दर्शनमेव तर्हि तयोरेकं कार्यं भविष्यति तच्चाभिन्नम् , ननु दर्शनमपि प्रतिव्यक्ति भिन्नमेव सत्यम्, तत्तु स्वपृष्ठभाविप्रत्यवमर्शाख्यकार्यैक्यादेकमित्युच्यते, यथैव शाबलेयादिपिण्डदर्शनेऽपि गौरित्येवावमर्श इति तदेकत्वमुच्यते, तदुक्तम्—

एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामपि भिन्नतेति ॥

तस्मादौपाधिकत्वादनुवृत्तबुद्धेर्न सामान्यं किं चिद्वास्तवमस्तीति ।

### जात्यनङ्गीकारेऽपि शब्दानुमानयोः सबन्धग्रहणोपपादनम् ।

तत्राह—

अनिष्यमाणे सामान्ये ननु शब्दानुमानयोः ।
कथं प्रवृत्तिः सम्बन्धग्रहणाधीनजन्मनोः ॥
न हि व्यक्तिषु सम्बन्धो ग्रहीतुमिह शक्यते ।
स हि व्यक्तिषु गृह्येत सर्वास्वेकत्र वा क चित् ॥

न तु सर्वासु देशकालादिभेदेन तदानन्त्यादशक्यत्वात्, नैकस्यां व्यभिचारात्ततो ऽन्यत्रापि स शब्दः प्रवर्त्तमानो दृश्यते, अगृहीतसम्बन्धे च न शब्दलिङ्गे तत्प्रतीतिमुत्पादयितुमुत्सहेते इति, उच्यते स्यादेतदेवं यदि प्रत्यक्षविषये स्वलक्षणे शब्दलिङ्गयोः प्रवृत्तिः स्यात् , ननु प्रत्यक्षविषये तयोर्वृत्तावनिष्यमाणायामनवस्थादिदोषोपघातादप्रवृत्तिरेव स्यात्, मैवं वोचः कथमसकृदभिहितमपि न बुद्ध्यसे ।

विकल्पविषये वृत्तिरिष्टा शब्दानुमानयोः ।
अवस्तुविषयाश्चैते विकल्पा इति वर्णितम् ॥

### अपोहस्य विकल्पविषयत्वम् ।

ननु विकल्पानामपि विषयो यद्यनुगामी कश्चिन्नेष्यते तदुत्सीदेतामेव शब्दानुमाने, बाढमस्ति विकल्पानामनुस्यूतो विषयः स तु न वास्तवः, कः पुनरसाविति चेत्—

अतद्रूपपरावृत्तिस्वभावमबहिर्गतम् ।
बहिः स्थमिव सामान्यमालम्बते हि विकल्पः ॥
या च भूमिर्विकल्पानां स एव विषयो गिराम् ।
अत एव हि शब्दार्थमन्यापोहं प्रचक्षते ॥

तथा हि न विकल्पा वस्तु स्पृशन्ति । कुतः—

एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।
को ऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥

तस्माद् भ्रमनिमित्तसमारोपिताकारान्तरनिषेधाय तेषां प्रवृत्तिः, यथा रूपसाधर्म्यसमारोपितरजताकारनिवारणाय शुक्तौ प्रमान्तरं प्रवर्त्तते नेदं रजतमिति तथेहापि शाबलेयादिस्वलक्षणे निर्विकल्पकेन सर्वात्मना परिच्छिन्ने कुतश्चिन्निमित्तादारोपितमगोरूपमिव व्यवच्छिन्दन्ति विकल्पाः, अगौर्न भवतीति न तु गोः स्वलक्षणग्रहणे तेषां व्यापारः प्रागेव गृहीतत्वात् ।

अथ ब्रूयात् नानाविशेषनिकरकल्माषितवपुषस्तस्यार्थस्य किं चिद्विशेषणं गृहीतं विकल्पैर्गृह्यते इति तदप्ययुक्तम्, विशेषणनिकररूषितस्यापि वस्तुनः तद्विशेषणोपकारशक्त्यव्यतिरिक्तात्मनो ऽनुपलाम्भात्तदभेदे सति तद्विशेषणोपकार्यवस्तुस्वरूपग्रहणवेलायामेव तत्त्वात्तच्चित्रग्रहणासिद्धेर्विकल्पान्तराणामानर्थक्यमेव, तदुक्तम्—

यस्यापि नानोपाधिर्निर्वाहिका ऽर्थस्य भेदिनः, तस्यापि—

नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ।
सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चित इति ।

तस्मादपोहविषयाः शब्दा विकल्पश्चेति ।

## मीमांसकरीत्या अपोहनिराकरणम् ।

नन्वपोहशब्दार्थपक्षे महतीं कृपाणवृष्टिमुत्ससर्ज भट्टः, तथा हि अपोहो नाम व्यावृत्तिरभाव इष्यते न चाभावः स्वतन्त्रतया घटवदवगम्यते, तदयमन्याश्रितो वक्तव्यः कश्च तस्याश्रयः इति चिन्त्यम्, न तावद्गोः स्वलक्षणमाश्रयः तस्य विकल्पभूमित्वाभावात्, नाप्यवान्तरसामान्यं शाबलेयत्वादि तदाश्रयः तद्धि अशाबलेयनिवृत्तेराश्रयतां प्रतिपद्यते न ह्येवमुपपद्यते अशाबलेयो भवतीति गौः किं तु शाबलेय इति, शाबलेयव्यावृत्तिर्हि गोष्वपि बाहुलेयादिष्वस्ति ।

अथ वा शाबलेयादिस्वलक्षणसमुदायमगोव्यावृत्तेराश्रयं ब्रूयुः सो ऽप्यघटमान एव समुदायिव्यतिरेकेण तस्यानुपलम्भात्, समुदायिनां च स्वलक्षणानां देशकालादिभेदेनानन्त्याद्वर्गीकरणं पुरुषायुषशतेनापि न शक्यक्रियमिति समुदायो ऽपि न तदाश्रयः, तस्मात्सर्वसाधारणं प्रतिपिण्डं परिसमाप्तं किमपि नूतनमगोव्यावृत्तेरधिकरणमभिधातव्यम्, तच्च गोत्वमेव तस्मिन्नङ्गीकृते वा किमगोव्यावृत्तिकल्पनाऽऽयासेन ।

अपि च न केवलमाश्रयाभावात्तद्ग्रहणं सम्भवति नापि वर्गीकरणनिमि-

त्तमेषां किं चिदस्ति, अश्वादयश्च विधिरूपतया भवन्मते न गृह्यन्ते किं त्वन्यव्यवच्छेदेनैवेति तेषामपि व्यवच्छेदग्रहणे सैव वार्त्तेति नेदानीं विकल्पैः क चिदपोहो विषयीकर्त्तुं शक्यते निर्विकल्पेन च न कश्चिद्व्यवहार इति सकलयात्रोत्सादप्रसङ्गः, किं च ये एते शावलेयादिशब्दाः ते सर्वे एवापोहवाचित्वाविशेषात्पर्यायाः स्युः, अपोहभेदाददोष इति चेन्न, अपोहानां भेदाभावात्, भिद्यमानत्वे वा स्वलक्षणवदेषां वस्तुत्वप्रसक्तिः, भवत्पक्षे ऽपि सामान्यमात्रवाचित्वाविशेषात्पर्यायत्वं समानो दोष इति चेन्न, सामान्यानां विधिरूपत्वात्परस्परसंरहितस्वभावतया नानात्वावगमात्, अपोहस्त्वभावमात्ररूपविशेषान्न परस्परं भिद्यते, कर्कादिशावलेयाद्याधारभेदादपोहभेद इति चेन्न, तेषामाधारत्वस्य निरस्तत्वात्, आधारभेदेन वा तद्भेदाभ्युपगमे प्रतिस्वलक्षणमपोहतद्भेदप्रसङ्गः, ततश्च समान्यात्मता ऽस्य हीयते।

अथापोह्यभेदेनापोहभेदमवधार्य पर्यायता पराणुद्यते तदप्यसारम्, भवन्नपोह्यभेदाद्भेदो न पर्यायत्वमपहन्ति भाक्तो ह्यसौ न मुख्यः, न चापोह्यभेदाद्भेदो ऽपोहस्यावकल्पते, यो हि सम्भाव्यमानसंसर्गैराधारैरपि न भेत्तुं पार्यते स दूरवर्त्तिभिरलब्धसबन्धैरतिबाह्यैः कथं भिद्येत।

अभ्युपगम्यापि ब्रूमः यद्यपोह्यभेदादपोहभिन्नत्वमपोह्यैक्यात्तर्हि तदैक्येनापि भवितव्यम्, अतश्च गवाश्वयोरन्यापोहेन व्यवस्थाप्यमानयोरगावो ऽनश्वाश्च हस्त्यादयो ऽपोह्यास्तुल्या भूयांसो वा भवन्ति असाधारणस्तु एको गौरश्वे गवि चाश्वो ऽतिरिच्यते तत्रेहापोह्यभेदाद्गवाश्वयोर्भेदो भवतु भूयसामपोह्यानामभेदादभेदो भवत्विति विचारणायां विप्रतिषिद्धधर्मस्य समवाये भूयसां स्यात्सधर्मत्वमित्यभेद एव न्याय्यो भवेत्।

अथ साधारणत्वादश्वापोह्य एव गोऽपोहेन व्यवस्थाप्य इष्यते स तर्हि सिंहादावप्यस्तीति सोपीदानीं गौर्भवेत्, अथाश्वादिविशेषोद्घोषरहितमागोरूप्यं व्यवच्छेद्यमुच्यते तत्प्रत्येकं ग्रहीतुमशक्यमानन्त्यात्, वर्गीकरणकारणं च किंचिन्नास्त्येव न हि सर्वेषामगवामश्वादीनामेकदेशत्वमेककालत्वं वा समस्ति।

अथ गोप्रतिषेध एव वर्गीकरणहेतुरिष्यते हन्त तर्हि गौः पूर्वसिद्ध एषितव्यः यत्प्रतिषेधेनागावः प्रतीयेरन्, पूर्वसिद्धे च गवि लब्धे किमगोभिः किं तदपोहेन प्रयोजनम्, पूर्वसिद्धं गोस्वलक्षणमस्त्येवेति चेन्न तेन व्यवहाराभावात्, गोसामान्ये तु पूर्वसिद्धे सुधा ऽपोहप्रयत्न इत्युक्तम्।

अथ गोसामान्यमगोप्रतिषेधेन सिद्ध्यति तदा दुस्तरमितरेतराश्रयत्वम् अगोनिषेधेन गोसिद्धिः गोसिद्ध्या चागोनिषेधसिद्धिरिति, तस्मादपोहस्यैव निरूपयितुमशक्यत्वान्न तद्भेदादपोहभेदः सिद्ध्यति।

अपि चाश्वादयः सामान्यरूपेण वापोह्येरन्विशेषात्मना वा, न विशेषात्मना तदनङ्गत्वादशब्दवाच्यत्वाच्च, सामान्यात्मना तु तेषामप्यपोहरूपत्वादभावत्वम्, कथं चाभावस्यैवाभावः क्रियते करणे वा प्रतिषेधद्वययोगाद्विधिरवतिष्ठते इति विधिरूपः शब्दार्थः स्यात्, अपोह्यात्मनश्च तुरगादेर्यो ऽपोहः स तस्माद्विलक्षणः अन्यथा वा, वैलक्षण्ये तस्य भावात्मता भवेत्, अवैलक्षण्ये तु यादृश एव अपोह्यः तादृश एव तदपोह इति गौरप्यगौः स्यात्, किं चापोहशब्दार्थपक्षे नीलमुत्पलमित्यादौ विशेषणविशेष्यभावसामानाधिकरण्यादिव्यवहारा विलुप्येरन् न ह्येकस्मिन्नर्थे द्वयोरपोहयोर्वृत्तिरुपपद्यते, न चैकः कश्चिदर्थो ऽस्ति यत्र तयोर्वृत्तिः स्वलक्षणस्याशब्दार्थत्वादन्यस्य चासम्भवात्, न च वृत्तिरपि का चिदस्ति सज्ज्ञेयादिशब्दानामपोहनिरूपणासम्भवान्नापोहवाचित्वम्, न ह्यसदज्ञेयं वा किं चिदवगतं यद्व्यवच्छिद्यते ज्ञातं चेत्सदेव तज्ज्ञेयं चेत्यतः कथं सच्छब्देन सदेव ज्ञेयशब्देन च ज्ञेयमेवापोह्यते, अज्ञातं तु नितरामनपोह्यम्, कल्पितं तु तद्वक्तुमशक्यं कल्पनयैव सत्त्वाज्ज्ञेयत्वाच्च, अपोहशब्दस्य च किं वाच्यमिति चिन्त्यम्, अनपोहो न भवतीत्यपोहः कश्चायमनपोहः कथं वा ऽसौ न भवति अभवन्वा किमवशिष्यते इति सर्वमवाचकम्, प्रतिषेधवाचिनां च नञादिशब्दानां का वार्त्ता अत्र न भवतीति नेति कोऽर्थः उपसर्गनिपातानां च कथमपोहविषयत्वमाख्यातशब्दानां च पचतीत्यादीनामपोहो दुरुपपादः नाम्नामेव जातिशब्दानामपोहविषयत्वमिष्यते येषां भवन्तो जातिवाचित्वं तद्वद्वाचित्वं वा प्रतिपद्यन्ते इति चेत् ततो ऽन्येषां तर्हि का वार्त्ता, बाह्यार्थवाचित्वे जातिशब्देषु को द्वेषः निरालम्बनत्वे ज्ञानांशालम्बनत्वे वा जातिशब्दानामपि तदेवास्तु किमपोहवादप्रमादेन ।

यथैव प्रतिभामात्रं वाक्यार्थ उपकल्पितः ।
पदार्थो ऽपि तथैवास्तु किमपोहाग्रहेण वः ॥
इत्यादि दूषणौदार्यमपोहे बहु दर्शितम् ।
अतः शब्दार्थतामस्य वदेयुः सौगताः कथम् ॥

## बौद्धाभिमतापोहनिरूपणम् ।

उच्यते तदेतदविदितबौद्धसिद्धान्तानामभिधानम्—

अपोहो यदि भावात्मा बहिरभ्युपगम्यते ।
ततो भवति भावत्कं वाग्जालं न त्वसौ तथा ॥

किं तु खल्वयमान्तरो ज्ञानात्मा सौगतानामपोहः सम्मतः तथा ऽभ्युपगमे केयमपोहवाचोयुक्तिः, स्वांशविषयं पदार्थज्ञानमित्येतदेव वक्तुमुचितम्, एतदपि नास्ति नायमान्तरो न बाह्यो ऽपोहः किं तु ज्ञानार्थाभ्यामन्य एव ।

ननु यद्विद्यते नान्तर्न बहिः परमार्थतः ।
न तु विद्यत एवेति कथं शब्दार्थ उच्यते ॥
पारमार्थिकशब्दार्थसमर्थनपिपासिताः ।
नेहागताः स्मो येनैवमनुयुज्येमहि त्वया ॥

यत एव तन्नान्तर्बहिरस्ति तत एव मिथ्येति काल्पनिकमिति च गीयते, किं पुनस्तत्, आरोपितं किं चिदाकरमात्रं विकल्पोपरञ्जकम्, ननु बाह्यार्थव्यतिरेकेण किमीय आकारः आन्तरान्तरस्य ज्ञानस्योपरञ्जक उच्यते दृश्यतयैवानुरञ्जिका विकल्पना नेदृशो ऽर्थः, व्यावृत्तं हि वस्तु दर्शनानां विषयः तच्च स्प्रष्टुमक्षमा विकल्पा इत्युक्तम्, अथ तच्छायमवलम्बमाना विकल्पा व्यावृत्तस्याग्रहणाद्व्यावृत्तिविषया इत्युच्यन्ते ।

ननु व्यावृत्तितद्वतोरभेदाद्व्यावृत्तिर्यच्च व्यावृत्तं स्वलक्षणं तदेकमेवेति व्यावृत्तिग्राहिभिर्विकल्पव्यावृत्तमपि गृहीतं स्यादिति दर्शनतुल्या भवेयुः, नैतदेवम्, न विकल्पैर्व्यावृत्तं वस्तु गृह्यते न च पारमार्थिकी व्यावृत्तिरपि तु कश्चिदारोपित आकारः वास्तवत्वे हि व्यावृत्तेः वस्तुसंस्पर्शिन एव दोषाः प्रादुःष्युः न त्वसौ तथेत्युक्तम्, अत एव यत्के चन पर्यचूचुदन् किल व्यावृत्तग्रहणपक्षे त्रितयग्रहणं प्राप्नोति यद्व्यावृत्तं येन निमित्तेन व्यावृत्तं यतश्च व्यावृत्तमिति न च त्रितयमस्तीत्यतः कथं व्यावृत्तग्रहणमिति तदप्यपास्तं भवति, यदि हि व्यावृत्तं गृह्णीम इति एवमुल्लेखो भवेद्व्यवहर्तृजनस्य तदैवमसौ पर्यनुयुज्येत न त्वेवमस्तीत्यचोद्यमेतत् ।

नन्वेवमारोपिताकारविषया विकल्पा युक्ता भवन्ति व्यावृत्तिविषयत्ववाचोयुक्तिरनन्वितेत्युक्तम् , समाहितमेतद् दर्शनपृष्ठभाविभिर्गौरित्यादिविकल्पैरतत्कार्यपरावृत्त आकार उल्लिख्यते न हि गोविकल्पैरतत्कार्याणामश्वादीनामुल्लेखः स्वलक्षणं च न स्पृश्यते सामान्यं च वास्तवं नास्ति तस्मादतत्कार्यपरावृत्तिविषयत्वमेव विकल्पानामवतिष्ठते इत्येवं युक्त्या तेषामपोहविषयत्वमुच्यते न प्रतिपत्तितः ।

नन्वतत्कार्यपरावृत्तमिव सजातीयव्यावृत्तमपि दृश्यस्वरूपं तत्र विजातीयव्यावृत्तिः स्वलक्षणं चान्यद् न चैकतराकारोल्लेखननियमहेतुमुत्पश्यामः, धीमन्मैवं मंस्थाः निश्चयात्मनो निर्विकल्पाः सजातीयविजातीयव्यावृत्ताकारोल्लेखे च सर्वात्मना तन्निश्चयाद्विकल्पान्तराणां शब्दान्तराणां प्रवृत्तिः स्यात् , तथा च गौरिति शाब्दादुत्पद्यमानो विजातीयव्यावृत्ताकारोल्लेखीव विकल्पः संवेद्यते न सजातीयव्यावृत्तोल्लेखी तुल्यविषयाश्च विकल्पैः शब्दा इत्यन्यापोहविषया उच्यन्ते, सो ऽयमारोपिताकारो न बहिरारोपितत्वादेव नान्तः अबोधरूपत्वात् , अतश्चासौ न किं चिदेव न किं चिदपि भवन्नपोह इति फलत उपचर्यते,

अतश्च बाह्यमभावात्मकमपोहमाश्रित्य स्वरूपे दूषणोपन्यासे कण्ठशोषमनुभवन्नस्थाने क्लिष्टो देवानांप्रियः।

अपि च विकल्पभूमिरर्थो विकल्पान्तरसन्निधापितभावाभावाक्षेपी नियतरूपो बाह्यसदृशश्च प्रतीयते, न चेदं रूपत्रयमपि बाह्ये वस्तुनि युज्यते, बाह्यस्य हि वस्तुनः स्वरूपेणावगतस्य न विकल्पान्तरोपनीतभावसम्बन्ध उपपद्यते वैयर्थ्यात्, नाप्यभावसम्बन्धो विप्रतिषेधात्, नियतरूपता च विकल्पविषयस्य गौरेव नाश्व इत्येवमवगम्यमाना वस्त्वन्तरव्यवच्छेदमन्तरेण नावकल्पते इति बलाद्व्यवच्छेदविषयत्वम्, अन्यथा नियमपरिच्छेदासम्भवात्सन्दिग्धं च वस्तु न गृह्यते, एवं बाह्यवस्तुविषयत्वे च निरस्ते विकल्पानामेकस्यार्थस्वभावस्येति न्यायेन पौनरुक्त्यादबाह्यविषयत्वं न्याय्यम्, अबाह्यान्तरारोपितं रूपं तच्च बाह्यवदवभासते न च व्यावृत्तिच्छायमपहाय बाह्यारोपितयोः सादृश्यमन्यदस्तीति व्यावृत्तिविषया एव विकल्पाः फलतो भवन्ति।

यद्यपि विधिरूपेण गौरश्व इति तेषां प्रवृत्तिस्तथापि नीतिविदो ऽन्यापोहविषयानेव तान् व्यवस्थापयन्ति, यथोक्तं "व्याख्यातारः खल्वेवं विवेचयन्ति न व्यवहर्तार" इति, सो ऽयं नान्तरो न बाह्यो ऽन्य एव कश्चिदारोपित आकारो व्यावृत्तिच्छायायोगादपोहशब्दार्थ उच्यते इतीयमसत्ख्यातिवादगर्भा सरणिः।

अथ वा विकल्पप्रतिबिम्बकं ज्ञानाकारमात्रकमेव तदबाह्यमपि विचित्रवासनाभेदोपाहितरूपभेदं बाह्यवदवभासमानं लोकयात्रां बिभर्त्ति, व्यावृत्तिच्छायायोगाच्च तदपोह इति व्यवह्रियते, सेयमात्मख्यातिगर्भा सरणिः।

ननूभयथाऽपि वस्तुविषयत्वाभावे विकल्पानां कथं वस्तुनि व्यवहाराः प्रवर्त्तन्ते, दृष्टे ऽपि क्वचिद्वस्तुनि तृणादौ प्रवृत्त्यभावाद् अर्थित्वं तु प्रवृत्तेः कारणम्, कथमिति वक्तव्यमुच्यते, प्रवृत्तिस्तावद्दृश्यविकल्पयोरेकीकरणनिबन्धना दृश्यदर्शनानन्तरमुत्पन्ने विकल्पे विकल्प्य तेन प्रतिपद्यते प्रमाता, दर्शनानन्तर्यविप्रलब्धस्तु दृश्यमेव गृहीतं मन्यते तदभिमानेन च प्रवर्त्तते इदं तदेकीकरणमाहुः, दृश्यविकल्पयोर्भेदो यन्न गृह्यते न पुनर्भिन्नयोरभेदाध्यवसाय एकीकरणमिष्यते, दृश्याद् विभिन्नस्य विकल्पस्य शुक्तेरिव रजतस्य निर्देष्टुमशक्यत्वादभेदाध्यवसाये चोभयाभावान्न भेदाध्यवसाये दर्शनमुपायो विकल्पाविषयत्वान्न विकल्पो दृश्याविषयत्वात्तस्माद् भेदानध्यवसायादेव प्रवृत्तिः, प्राप्तिरपि दृश्यस्यैवार्थक्रियाकारिणो वस्तुनः पारम्पर्येण तन्मूलत्वात्कार्यप्रबन्धस्य दृश्यादर्शनं ततो विकल्पः ततः प्रवृत्तिरिति।

अथ हि मूलवर्तिनमुपलभ्य प्रवर्त्तमानस्तमाप्नोति अपवरकनिहितमणिप्रसृतायां कुञ्चिकाविवरनिर्गतायामिव प्रभायां मणिबुद्ध्या प्रवर्त्तमानः, यत्र तु मूले ऽप्यर्थो नास्ति तत्र व्यामोहात् प्रवर्त्तमानो विप्रलभ्यते दीप-

प्रभायामिव तथैव मणिबुद्धया प्रवर्त्तमानः, एवं च बाह्यवस्तुसंस्पर्शशून्येष्वपि विकल्पेषु समुल्लसितेषु बाह्यो ऽर्थो मया प्रतिपन्नः तत्र चाहं प्रवृत्तः स च मया प्राप्त इत्यभिमानो भवति लौकिकानाम् , न त्वयमर्थाध्यवसायमूलः, तदुक्तं "यथाऽध्यवसायमतत्त्वाद्यथातत्त्वं चानध्यवसायात्" इति स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायात्प्रवृत्तिरित्यत्रापि ग्रन्थे ऽर्थाध्यवसायो भेदानध्यवसाय एव व्याख्येयः, एवं दृश्यविकल्पावर्थावेकीकृत्य प्रवर्त्तते प्राप्नोति चार्थमिति ।

तदेवमेष लोकस्य व्यवहारो ऽवकल्पते ।
विवेकेनापि वोढव्या लोकयात्रा ऽथ लोकवत् ॥
तस्माद्विकल्पप्रतिबिम्बनस्य शब्दार्थतामाहुरपोहनाम्नः ।
प्रतीतिमार्गस्त्वविविच्यमानो जनस्य जातिभ्रममातनोति ॥
यावांश्च कश्चिन्नियमप्रकारः प्रवर्त्तते जातिषु वृत्त्यवृत्त्योः ॥
तावानपोहेष्वपि तुल्य एव भवत्यवस्तुत्वकृतस्तु भेदः ॥
तुल्ये ऽपि भेदे शमने ज्वरादेः काश्चिद्यथा वौषधयः समर्थाः ।
सामान्यशून्या अपि तद्वदेव स्युर्व्यक्तयः कार्यविशेषयुक्ताः ॥
विशेषणादिव्यवहारक्लृप्तिः तुच्छे ऽप्यपोहे न न युज्यते नः ।
अतश्च मा कारि भवद्भिरेषा जात्याकृतिव्यक्तिपदार्थचिन्ता ॥

## जातिसाधनम्—

अत्राभिधीयते, किं जात्यादेर्बाह्यस्य शब्दार्थस्य असत्त्वादपोहपक्षपातः उत प्रतीतिबलादेवेति, प्रतीतिस्तावदपोहविषया भवद्भिरङ्गीकृतेति किमत्र कलहेन, नापि जात्यादेरसत्त्वमिन्द्रियार्थसन्निकर्षोत्पन्नबाधसंदेहरहितप्रत्ययगम्यत्वात्स्वलक्षणवत् ।

आद्यमेव हि विज्ञानमर्थसंस्पर्शि चाक्षुषम् ।
न तदुत्तरभावीति किमिदं राजशासनम् ॥
तदेवास्तु प्रमाणं वा तेनापि त्ववगम्यते ।
व्यावृत्तं वस्तुनो रूपं नानुगामीति का प्रमा ॥

तथा हि निर्विकल्पकालस्यातिसूक्ष्मत्वात्किं प्रतिभासते किं न प्रतिभासते इति कथमेष कलिरावयोरुपशाम्यतु, भवान् ब्रूते व्यावृत्तमेवावभातीति अहं ब्रुवे ऽनुवृत्तमपि प्रतिभातीति एवं कलहायमानयोरावयोः कः परिच्छेदः, न खलु शपथस्य शपमानस्य वैष विषयः, तस्मान्निर्विकल्पकानन्तरोत्पन्नस्थूलकालकार्यपर्यालोचनया तद्व्यवस्था कर्त्तव्या, तत्र च—

भवेद्यदि विशेषैकविषयं निर्विकल्पकम् ।
सामान्याध्यवसायो ऽयमकस्मात्तत्कथं भवेत् ॥

शब्द एष विकल्प इति चेन्मैवम्—

पश्यत्यनुगतं रूपमविज्ञाते ऽपि वाचके ।
दाक्षिणात्य इवाकस्मात्पश्यन्नष्टपरम्पराम् ॥

अनवगतशब्दार्थसंबन्धो ऽप्यभिनवानेकपदार्थसन्निधाने तेषामनुगतं च व्यावृत्तं च पश्यत्येव रूपम् ।

अपि च प्रथमाक्षसन्निपाते एवाङ्गुलिचतुष्टयमवलोक्यमानमन्योन्यमनुगामिना च विभक्तेन च रूपेणावगम्यते तत्कथं केवलविशेषावलम्बी चाक्षुषः प्रत्ययः ।

अपि च पुराणशाबलेयपिण्डमवलोकयतः कालान्तरे बाहुलेयं पिण्डं पश्यतः पूर्वदृष्टशाबलेयपिण्डविषयं स्मरणमुत्पद्यमानं संवेद्यते तस्मात्सामान्यानवगमो नोपपद्यते, अन्यस्मिन्नसाधारणे स्वलक्षणे दृष्टे ऽन्यस्मरणस्य किं वर्तते अस्ति च तत्तेन मन्यामहे दृष्टमुभयानुगतरूपमिति, किं च व्यक्त्यन्तरदर्शने ऽपि स एवायं गौरिति प्रत्यभिज्ञायते तस्याश्च प्रामाण्यं दर्शितं दर्शयिष्यते च विस्तरतः क्षणभङ्गभङ्गेन, तस्मादनुगतरूपविषयैव सा प्रत्यभिज्ञा व्यक्तिभेदस्य विस्पष्टसिद्धत्वात्, यत्र च लघुतरपरिमाणतिलमुद्गादिप्रचयसन्निधाने विच्छिन्नसिक्थस्वलक्षणग्रहणं नास्ति तत्रानुवृत्तमेव रूपमिन्द्रियेण गृह्यते, अतः निर्विकल्पकवेलायामेव व्यावृत्तवदनुगतरूपावभासान्न सामान्यापह्नवो युक्तः, प्रथमाक्षसन्निपाते ऽपि तुल्यत्वमवगम्यते नानात्वं चेति सामान्यभेदौ वास्तवौ द्वावपि ।

सामान्यमिदमित्येवं स च तत्रानुपग्रहः ।
व्यावृत्तमिदमित्येवं किं वा बुद्धिः स्वलक्षणे ॥
समानवृत्तिसापेक्षं न च सामान्यवेदनम् ।
तत्र सन्निहितत्वात्तु व्यक्तिवाचानुपग्रहः ॥
समानवृत्त्यपेक्षत्वात्सामान्यस्यानुपग्रहे ।
विशेषो ऽपि हि मा ग्राहि व्यावृत्तिं स हि चेक्षते ॥
अनुवृत्तिर्हि येष्वस्य का तेषां ग्रहणे गतिः ।
व्यावृत्तिरपि यान्यस्य या तेषां ग्रहणे गतिः ॥
अथानुवृत्तिव्यावृत्तिनिरपेक्षं न केवलम् ।
वस्त्वेव गृह्यते कार्यं कीदृक्तदिह कथ्यताम् ॥
निर्विकल्पकवेलायां निर्देष्टुं तन्न शक्यते ।
तदुत्थास्तूभयत्रापि साक्ष्यं ददति निश्चयाः ॥
वस्तुनोऽङ्गीकृता प्राज्ञैरत एवोभयात्मता ।
यौ ब्रूतस्त्वेकरूपत्वं तावुभावपि बालिशौ ॥

## जातौ पूर्वपक्षनिराकरणम् ।

यदप्यभिहितम् इतरेतरविरुद्धरूपसमावेश एकत्र वस्तुनि नोपपद्यते इति तदपि न सम्यक् ।

परस्परविरोधो ऽपि नास्तीह तदवेदनात् ।
एकबाधेन नान्यत्र धीः शुक्तिरजतादिवत् ॥

यत्र हि विरोधो भवति तत्रैकतररूपोपमर्देन रूपान्तरमुपलभ्यते प्रकृते तु नैवमिति को विरोधार्थः, छायातपावपि यद्येकत्र दृश्येते किं केन विरुद्धमभिधीयते अदर्शनात्तु तद्विरुद्धमुक्तं न चैवमिहादर्शनमित्यविरोधः ।

अत एव हि मिथ्यात्वमेति नान्यतरा मतिः ।
न ह्यन्योन्योपमर्देन बुद्धिद्वितयसम्भवः ॥

तथा चाह—

यथा कल्माषवर्णस्य यथेष्टं वर्णनिश्चयः ।
चित्रत्वाद्वस्तुनोऽप्येवं भेदाभेदावधारणम्(१) ॥
इत्येवमविरोधेन भेदाभेदावधारणात् ।
उभयात्मकतैवास्तु वस्तूनां भट्टपक्षवत् ॥

एतत्तु वृत्तिविकल्पादिभ्यो बिभ्यतेवाभ्युपगतं तत्रभवतेति तिष्ठतु तावत्किमत्र विमर्देन ।

व्यतिरिक्तैव जातिः व्यक्तिषु वर्त्तते इति ब्रूमः—

यच्च वृत्तिविकल्पादिदूषणं तत्र वर्णितम् ।
तत्प्रत्यक्षमहिम्नैव सर्वं प्रतिहतं भवेत् ॥

यत्तावदवादि भेदेन कुवलयामलकादिवदनवभासनादिति तत्र प्रतीतिभेदो दर्शित एव ।

यत्तु देशभेदेनाग्रहणात् तदग्रहे तद्बुद्ध्यभावादिति तत्र तदाश्रितत्वं कारणं जातेर्न त्वसत्त्वम्, व्यक्तिवृत्तित्वाज्जातेः पृथग्देशतया ऽनुपलम्भः तदग्रहो वा न पुनस्तदतिरिक्ताया अभावादेवेति ।

## जातिव्यक्तिसम्बन्धोपपादनम्—

यदप्युक्तं वृत्त्यनुपपत्तेरिति तत्राप्युच्यते प्रतिपिण्डं कार्त्स्न्येनैव जातिर्वर्त्तते इति, पिण्डान्तरे तदुपलम्भो न स्यादिति चेत् किं कुर्मः कमुपलभामहे,

(१) श्लोकवार्तिके आकृतिवार्तिके श्लो० ६७ । नानावर्णे हि वस्तुनि य एव वर्णो निष्कृष्य दर्शयितुमिष्यते स एव शक्यते दर्शयितुम् । एवं नानारूपे वस्तुनि सर्वस्य भेदाभेदादेः सम्भव इत्यर्थः ।

पिण्डान्तरे ऽपि तदुपलम्भोऽस्त्येव, कथं च भवन्तमेनं निह्नुमहे, एकदेशास्तु जातेर्न सन्त्येव यैरस्या वर्त्तनं ब्रूमः, क्वेदमन्यत्र चेद् अहो निपुणता तव दृष्टान्तं याचसे यस्त्वं प्रत्यनुमानवत्, किंनामधेयैषा वृत्तिरिति चेद् न नामधेयं जानीमः पिण्डसमवेता जातिरित्येतावदेव प्रचक्ष्महे।

नन्वयुतसिद्धयोः सम्बन्धः समवायः स च विप्रतिषेधादेव निरस्तः, न शक्यते निरसितुम्—

प्रतीतिभेदाद्भेदो ऽस्ति देशभेदस्तु नेष्यते।
तेनात्र कल्प्यते वृत्तिः समवायः स उच्यते॥

अवयवावयविनोर्गुणगुणिनोश्चेयमेव वृत्तिस्तयोरर्थान्तरत्वमुपरिष्टाद्दर्शयिष्यते दर्शितं चामुनैव मार्गेण देशभेदश्च तयोर्नास्तीति विस्पष्टमयुतसिद्धत्वम्।

यदप्युच्यते 'नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता' इति तदपि परिहृतमाचार्यैः "जातं च सम्बद्धं चेत्येकः काल" इति वदद्भिः, सर्वं चैतदबाधितप्रतीतिबलात्कल्प्यते न स्वशास्त्रपरिभाषया, विभूनामपि सम्बन्धः परस्परमसम्भवादेव नेष्यते न परिभाषणात्, न संयोगः तेषामप्राप्तेरभावादप्राप्तिपूर्विका हि प्राप्तिः संयोगः न च समवायस्तदाश्रितस्य तस्यानुपलम्भादित्यलं प्रसङ्गेन।

ये चेह वृत्ती स्रक्सूत्रभूतकण्ठगुणादिषु।
जात्यादीनामनंशत्वात्ताभ्यां वृत्तिर्विलक्षणा॥

तस्माद्वृत्त्यनुपपत्तेरित्यदूषणम्,

## जात्याश्रयनिरूपणम्—

यदपि सर्वगतत्वं पिण्डगतत्वं च विकल्प्य दूषितं तदपि यत्किं चिद्यथा प्रतीतिरादिशति भगवती तथा वयमभ्युपगच्छामः।

सर्वसर्वगता जातिरिति तावदुपेयते।
सर्वत्राग्रहणं तस्या व्यञ्जकव्यक्त्यसन्निधेः॥
व्यक्तिर्व्यञ्जकतामेति जातेर्दृष्टैव नान्यथा।
दृष्टिर्यत्र यदा व्यक्तेस्तदा तत्रैव तन्मतिः॥
सर्वत्र विद्यते जातिर्न तु सर्वत्र दृश्यते।
तदभिव्यञ्जिका यत्र व्यक्तिस्तत्रैव दृश्यते॥
व्यक्तेरन्यत्र सत्त्वे स्यात्किं प्रमाणं तदुच्यते।
इहाप्यानीयमानायां गवि गोत्वोपलम्भनम्॥
गोपिण्डेन सहैतस्या न चागमनसंभवः।
देहेनेवात्मनस्तस्मादिहाप्यस्तित्वमिष्यताम्॥
अभिव्यक्तिस्तु तत्काला यत्कालं व्यक्तिदर्शनम्

तस्मात्सकृदभिव्यक्ता नान्यदापि प्रतीयते ॥
अभिव्यक्तिश्च तद्देशा यद्देशा व्यक्तिरीक्ष्यते ।
तस्मात्तस्मादभिव्यक्ता न देशे ऽन्यत्र दृश्यते ॥
व्यक्तिसर्वगतत्वे ऽपि स्वयूथ्यैः कैश्चिदाश्रिते ।
भविष्यत्यद्य जातायां गवि गोधीस्तथा ग्रहात् ॥
जायमानैव हि व्यक्तिर्जायते प्रतियोगिनी ।
एक एव हि कालो ऽस्या जातेः सम्बन्धजन्मनोः ॥
नेह जातेः पुरास्तित्वं न च संक्रान्तिरन्यतः ।
किं तु स्वहेतोः सा व्यक्तिस्तादृश्यैवोपजायते ॥
कथमेतदितीदं च यो वा पर्यनुयुज्यते ।
इतरस्य परं हेतुस्तेन पर्यनुयुज्यते ॥
वृषः पिशङ्गो गौः कृष्णा सा च नीलतृणाशिनी ।
ताभ्यामुत्पादितो वत्सः कथं भवति पाण्डुरः ॥
यथा रूपाद्यसम्बद्धा न व्यक्तिरुपलभ्यते ।
तथैव जात्ययुक्तेति का ते व्यसनसंततिः ॥

### जात्यनङ्गीकारेऽनुगतप्रतीत्युपपादानासम्भवनिरूपणम्—

अगोव्यावृत्ततायां वा नैष प्रश्नो निवर्त्तते ।
कस्मादगोनिवृत्तं तदद्य जातं स्वलक्षणम् ॥
तस्माद्वस्तुस्वभावेऽस्य विदित्वा ऽननुयोज्यताम् ।
चोद्यचुञ्चुत्वमुत्सृज्य प्रतिपत्तिर्निरूप्यताम् ॥

प्रतिपत्तिश्च विशेषेष्विव सामान्येषु च निरपवादा दर्शितैव, तस्माद्विशेषवदप्रत्याख्येयं सामान्यम् , विशेषवत्प्रत्यक्षत्वात्सामान्यस्य कः कल्पनार्थः, यदि हि कार्यानुमेयं सामान्यं कल्पयेम तत एवमनुयुज्येमहि कार्यस्याप्यन्यथा सिद्धेः किं तत्कल्पनयेति, प्रत्यक्षे तु सामान्ये को ऽयमनुयोगः, का चेयमनुवृत्तिज्ञानोत्पादिका शक्तिः विशेषेभ्यो ऽव्यतिरिक्ता व्यतिरिक्ता वा नित्या ऽनित्या वा तदाश्रिता स्वतन्त्रा वा प्रत्यक्षा परोक्षा वेति विकल्प्यमाना वाचोयुक्त्यन्तरेण जातिरेव कथिता भवति न वा किंचिदिति यत्किंचिदेतत् ।

ननु यथा गोत्वादिजातिर्नियतास्वेव व्यक्तिषु वर्त्तते नासमञ्जस्येन ( न सामस्त्येन ) तथा काभिश्चिदेव व्यक्तिभिः कांचिद्गवादिबुद्धिर्जन्यते इति, नैतदेवम् विषयातिशयव्यतिरेकेण प्रत्ययातिशयानुपपत्तेः, उपयातिशये तु प्रत्ययातिशयोपकारणीष्यमाणे विषयातिशयं प्रति को द्वेषः, सिद्धे च विषयातिशये दुरपह्नवं सामान्यम् ।

ननु वृत्तिर्विनापि सामान्यान्तरेण सामान्येषु दृश्यत एवेति को ऽत्र विस्रम्भः, न चाशेषेण पश्चाशङ्कवितुमर्हति यदि हि सेनावनादिप्रत्यया: करितुरगधवखदिरादिव्यतिरिक्तमर्थमनपेक्ष्य जायमाना मिथ्या भवन्ति किमेतावता घटादिप्रत्ययैरपि मिथ्या भवितव्यम्, बाधकसद्भावनिबन्धनं हि वैतथ्यं प्रत्ययानाम्, तत्र सत्तादौ समान्यान्तरविरहान्मिथ्या प्रत्ययाः उपाधिना केन चित्प्रवर्त्तन्ते न त्वेवं गवादाविति यत्किं चिदेतत्, यदुक्तम्—

तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः ।
सामान्यशब्दः सत्तादावेकधीकरणेन वेति(१) ॥

नन्विहाप्येकार्थक्रियाकारित्वोपाधिनिबन्धन एकाकारप्रत्ययः सेत्स्यतीत्युक्तम्, सत्यमुक्तमयुक्तं तु एकार्थक्रियाकारित्वस्यैवासिद्धेः ।

यत्तूक्तम् 'एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी' इति तदसाम्प्रतम्, प्रत्यवमर्शस्याप्येकत्वानुपपत्तेः न हि बहुभिर्दर्शनैरेको विकल्पः सम्भूय साध्यते ऽपि तु नाना दर्शनानन्तरं तत्सामर्थ्यलब्धजन्मानो विकल्पा अपि तु भेदेनैवोल्लसन्ति न च तेषां किमपि कार्यान्तरमस्ति येन ते एकतामधिगच्छेयुः, केन च विकल्पानामेकत्वं गृह्यते न दर्शनेन तस्य दृश्यविषयत्वात्, न विकल्पान्तरेण सर्वविकल्पितानामारोपितार्थपर्यवसितत्वेन स्वाकारविषयत्वेन वा परस्परभेदाभेदपरिच्छेदसामर्थ्यासम्भवात्, (अथ) ब्रूयाद् विकल्पोल्लिख्यमानाकारभेदानवगमाद्विकल्पानामैक्यं यादृशमेव एकशाबलेयादिस्वलक्षणदर्शनान्तरभुवा ऽपि विकल्पेनोल्लिखित आकारो गौरिति तादृशमेव गोपिण्डान्तरदर्शनान्तरजन्मना ऽपीति विषयाभेदात्तदैक्यमुच्यते, तदुल्लिख्यमाने ऽपि विषयभेदो हि न प्रतिभासते इत्यत एष विकल्पो भिन्नान्यपि दर्शनानि मिश्रीकरोति दर्शनोपारूढस्य भेदस्याग्रहणादिति,

तदेतदपि न हृदयंगममभिधीयते, विकल्पास्तावद्विज्ञानलक्षणस्वभावत्वादन्योन्यं भिन्ना एव भवन्ति, यस्तु विकल्पोल्लिखित आकारो ऽनुपलभ्यमानभेदः तेभ्यो व्यतिरिक्तोऽव्यतिरिक्तो वा, व्यतिरिक्तश्चेत्स्यात् सामान्यमेवेदं नामान्तरेणोक्तं भवति, अवास्तवत्वकृतो विशेष इति चेन्नावास्तवत्वे युक्त्यभावात्, अव्यतिरिक्तश्चेत्स आकारस्तर्हि विकल्पस्वरूपवद्भिद्यते एवेति कथं तदैक्यं कथं वा तदैक्ये भिन्नानामपि दर्शनानां मिश्रीकरणमवकल्पते, अपि च रे मूढ सामान्यानभ्युपगमे कुतस्त्य एकाकारविकल्पोत्पाद इति पर्यनुयुक्तेन त्वया कार्यैक्याद् विकल्पैक्यादेवेत्युक्तं भवति, कथं चैवमतुन्मतो ब्रूयात्तस्मादेकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनीति व्यामूढभाषितम्,

---

(१) श्लोकवार्त्तिके आकृतिवार्तिके श्लो० २४ असत्यपि सामान्ये गोत्वसत्तादौ एकसामान्यशब्दप्रवृत्तिः औपाधिकी मिथ्या उपाधिश्च एकाकारबुद्धिजनकत्वरूपेत्यर्थः ।

## विकल्पानामपोहविषयकत्वनिराकरणम्

यदपि विकल्पनां शब्दानां चान्यापोहविषयत्वसिद्धये प्रलपितम् एकस्यार्थ-स्वभावस्येत्यादि तदपि यत्कि चित् ।

सर्वात्मना हि दृष्टोऽर्थः पुनर्न हि न दृश्यते ।
प्रदर्शितं हि प्रामाण्यं गृहीतग्राहिणामपि ॥
क्षणभङ्गे निरस्ते च देशकालादिभेदतः ।
गृहीतस्यापि भावस्य ग्रहणं न न युज्यते ॥
अपि चास्मन्मते भिन्नैर्धर्मैर्युक्तस्य धर्मिणः ।
धर्मो ऽस्य केन चित्कश्चित्प्रत्ययेन ग्रहीष्यते ॥
विचित्रसहकार्यादिशक्तिभेदश्च धर्मिणः ।
नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मता कुतः ॥

यदि च नाम निर्विकल्पकेन सर्वात्मना परिच्छिन्नं वस्तु पुनः परिच्छिन्दन्ति विकल्पान्तराणि वैफल्यमश्नुवीरन्किमेतावता तेषामप्रतीयमानार्थग्राहिता कल्पयितुं शक्यते, न हि विरतपिपासस्य हिमकरपटलमफलमिति तदेव रजतमिति कल्पयितुं पार्यताम्, तस्माद् दुराशामात्रमेतत्, इत्थं चान्यापोहनिरात्मनि बाह्ये विकल्पानां शब्दानां च विषये इष्यमाणे भट्टकुमारिलोपन्यस्तदुस्तरदूषणानामावरणकरणं न किं चित्पश्यामः,

यदपि तद्दूषणापनिनीषया विकल्पप्रतिबिम्बकमारोपिताकारमात्रव्यावृत्तिच्छायोपरक्तं किमपि परिकल्पितं तदपि न व्यवहारपदवीमवतरितुमुत्सहते ।

विकल्पो नाम बोधात्मा स च स्वच्छः स्वभावतः ।
नासावितरसंपर्कादृते कलुषतामियात् ॥
नूनमभ्युपगन्तव्यं किं चिदस्योपरञ्जकम् ।
आन्तरं वासनारूपं बाह्यं वा विषयात्मकम् ॥
यत्पुनर्विद्यते नान्तर्न बहिस्तेन रज्यते ।
विज्ञानमिति मायैषा महती धूर्तनिर्मिता ॥
विषया एव बुद्धीनामाञ्जस्येनोपरञ्जकाः ।
वासना विषयज्ञानजन्यत्वान्न तथादिताः ॥

तस्मात्तत्र देशान्तरादौ वसता केन चिदर्थेन बुद्धयो रज्यन्ताम् एकान्तासता तु केन चिदारोपितेन तदुपरञ्जनमघटमानं मनोरथप्रायम्, न चैकान्तासन्नाकार आरोपयितुमपि शक्यते, अपि च दर्शनपृष्ठभाविनो विकल्पास्तद्व्यापारकारिणो व्यावृत्तं स्प्रष्टुमसमर्था व्यावृत्तिमात्रमवलम्बन्ते इति यदुच्यते तत्र दृश्यसजातीयविजातीयव्यावृत्तत्वादुभये ऽपि व्यावृत्तिमेव स्पृशेयुः, उभयावमर्षे

सत्येषां पौनरुक्त्यादानर्थक्यमिति चेद् नानर्थक्यम्, प्रमाणवर्गे निपतन्तः कामनर्थका भवन्तु अर्थान्तरं वावलम्बन्तां व्यावृत्तिं त्ववलम्बमाना अंशत आलम्बन्ते अंशतो नेति न श्रद्दध्महे ।

सजातीयविजातीयव्यावृत्त्योर्न च भिन्नता ।
यतो ऽन्यतरसंस्पर्शो विकल्पे न प्रकल्पते ॥

सजातीयविजातीयव्यावृत्तिविमर्शे तु दर्शनवदसाधारणग्राहिण एव विकल्पाः स्युरिति सामान्यनिबन्धनसम्बन्धग्रहणादिव्यवहाराभावाच्छब्दानुमाने प्रलयं प्रतिपद्येयाताम्, व्यावृत्तिरपि बाह्या चेत्तदवस्था कौमारिलदूषणाशनिः, आन्तरत्वे तु न तया विकल्पोपरागः कर्तुं शक्यते, नान्तर्न बहिरिति तु भणितिभङ्गीमात्रम्, तत्तादृशं किंचिद् न किंचिद्वा, न किंचिच्चेन्न तेन विकल्पानामनुरञ्जनस्योपपादयितुमशक्यत्वात्, अत्यन्तमसतश्च शशविषाणादेर्व्यवहारविषयत्वाभावात्, असत्ख्यातिनिरसननीतिमेवात्रोत्तरं करिष्यामः किंचिच्चेन्नूनमन्तर्बहिर्वा तेन भवितव्यमेव, अतः कुमारिलादिप्रदूषणापनिनीषया यो ऽयमुत्प्रेक्षितः पन्था नूतनः सो ऽपि सङ्कटः, तस्माद् यथाऽध्यवसायमेवमिति युक्तम्, बाह्ये च वस्तुनि शब्दान्तरोपनीयमानभावाभावसम्बन्धावपि न न युज्येते, सर्वस्य गौरित्यादिशब्दजनितस्य ज्ञानस्यास्तित्वाद्यनपेक्ष्य सामान्यमात्रविषयत्वादाकाङ्क्षानिराकरणायास्ति नास्तीति पदान्तरं प्रयुज्यमानं सम्बध्यते, नियतरूपितानिश्चितनिजरूपे वस्तुनि वस्त्वन्तरस्य व्यवच्छेदबन्धनमिष्यते एव घटो घट इव न पट इति नैतावता तदपोह्य एव प्रत्ययो भवति इत्यलमतिक्षोदेन ॥

## जातिसाधनोपसंहारः—

बाह्यार्थविषय एवं व्यवहारो घटत इत्ययं कस्मात् ।
दृश्यविकल्पावर्थावेकीकृत्य प्रवर्तते पुरुषः ॥
एकीकारश्च कीदृग्यदि पृथगमतिस्तर्हि मूर्छाद्यवस्था-
साम्ये तत्र प्रवृत्तिः कथमथ किमपि स्यात् प्रवृत्त्यर्थरूपम् ।
तद् दृश्यं चेदपोहव्यवहृतिरफला ऽथ द्वितीयं चकास्ति
स्वेनाकारेण तस्मिन्सति सुनिपतिते चेष्टते कः सचेताः ॥

स्फुरति यदि विकल्प्यं दृश्यरूपेण कामं
स भवति विपरीतप्रत्ययो नाविवेकः ।
न वितथमतिबीजं विद्यते ह्यत्र किंचि-
न्न च रविकरनीरज्ञप्तिवद्बाधिका धीः ॥

## गवादिशब्दार्थविचारः—

अर्थप्राप्तिरतः सदर्थविषयज्ञानप्रबन्धोद्गता
साक्षादेव मणिप्रभामणिमतिन्यायेन किं कथ्यते ।
प्रामाण्ये सविकल्पकस्य कथिते बाह्यार्थसिद्धिः स्थिता
तद्व्यक्त्याकृतिजातिवाच्यकलने तावत्प्रवर्त्तामहे ॥

एवं सिद्धे बाह्ये निरस्तेषु तदपहारिषु तथागततस्करेषु अधुना विचार्यते गोशब्दः किमाकृतेर्वाचकः अथ जातेरिति ॥

## जात्याकृत्योर्भेदाभेदाचिन्ता—

तत्राकृतिपदेनेह संस्थानमभिधीयते ।
सूत्रे पृथगुपादान्न जातिजमिनीयवत् ॥

जैमिनिर्हि आकृतिस्तु क्रियार्थत्वा(१) दित्याकृतिं जातिमुपदिशति भाष्यकारो ऽपि सास्नादिविशिष्टाकृतिरिति(२) ब्रुवाणः तथैव व्यवहरति वार्त्तिककृता हि तद्व्याख्यातम् ।

जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया ।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनमिति(३) ॥

इह तु व्यक्त्याकृतिजातयस्तु पदार्थ(४) इति सूत्रकारो जातेः पृथगाकृतिवचो वदति संस्थानमेवाकृतिं मन्यते, लोको ऽपि अवयवसन्निवेशात्मिकामाकृतिं व्यपदिशति यत्राकृतिस्तत्र गुणा वसन्तीति, तस्मादवयवसन्निवेश एवाकृतिरुच्यते ।

तस्याश्च शब्दार्थतोपपद्यते न वेति परीक्षार्हत्वमस्त्येव न जैमिनीयवदुपेक्षितुं सा युक्तेति, तद्व्यक्त्याकृतिजातिसन्निधौ प्रयोगाद्गोशब्दस्य को ऽर्थ इति विचार्यते,

## व्यक्तिमात्रस्य पदवाच्यत्वनिरूपणम्—

तत्राकृतिवादिनस्तावदाहुः प्रयोगप्रतिपत्तिभ्यां किल शब्दार्थनिश्चयः, वृद्धाः स्वार्थेन व्यवहरन्तो यस्मिन्नर्थे गोशब्दं प्रयुञ्जते श्रोतारश्च यम-

---

( १ ) जैमिनिसूत्रम् अ० १ पा० ३ ० ३३

( २ ) "सास्नादिविशिष्टाकृतिरिति ब्रूमः" इति शाबरभाष्यम् अ० १ पा० १ सू० ९ ।

( ३ ) श्लोकवार्तिके आकृतिवार्तिके ३ । आक्रियते—निरूप्यते, तथा च जातिरेवाकृतिर्नान्येति नाकृतिशब्दवादे शब्दार्थानित्यत्वप्रसङ्ग इति भावः ।

( ४ ) गौतमसूत्रम् अ० २ आ० २ सू० ६८ ।

र्थं ततः प्रतिपद्यन्ते स तस्यार्थः, तत्र यदि गोशब्दः केसरादिमति न प्रयुज्यते सास्नादिमति च प्रयुज्यते तदसाधारणसन्निवेशविषय एवावगम्यते, प्रत्यक्षविषये गौरित्यादि पदं प्रयुञ्जते प्रत्यक्षं चाकृतिविषयमश्वपिण्डसन्निवेशाद्विलक्षणो हि गोपिण्डसन्निवेश इन्द्रियेण प्रतीयते तत्कृतमेव वस्तुष्वितरेतरवैलक्षण्यम्, अतः प्रत्यक्षविषये पदं प्रवर्त्तमानमाकृतावेव वर्तितुमर्हति, प्रेषणादिक्रियायोगश्च व्यक्तिद्वारक आकृतेर्भविष्यतीति तदुक्तम्—

तदयुक्तं प्रतिव्यक्ति भिन्नसंस्थानदर्शनात् ।
आनन्त्यव्यभिचाराभ्यां संबन्धज्ञप्त्यसम्भवात् ॥

न नियतस्य शाबलेयसन्निवेशस्य गोशब्दो वाचकः तदभावे ऽपि बाहुलेयसन्निवेशदर्शनात्, न च त्रैलोक्यान्तर्गतसकलगोपिण्डसन्निवेशवचनत्वमनुगवं शक्यम् आनन्त्यात्ततश्च नाकृतिः शब्दार्थः तस्यां क्रियाऽनुपपत्तेः न हि प्रेषणादिक्रियासाधनं सन्निवेशो ऽपि तु व्यक्तिः ।

न च गामानयेत्युक्तः सत्यामपि तथाकृतौ ।
चित्रमृत्स्नामयीं कश्चिद्गामानयति बुद्धिमान् ॥

ननु जातिवाच्यत्वपक्षे ऽपि गोत्वजातेः सर्वगतत्वात् किमिति मृद्गवानयनं नानुष्ठीयते, उच्यते हस्ती किं नानीयते सर्वगतत्वाज्जातेः अथ सर्वत्राश्रितत्वे ऽपि व्यञ्जकव्यक्तिनियमेनापह्नूयते हन्त तर्हि सास्नादिमत्प्राणी गोत्वजातेरभिव्यञ्जको न मृद्गव इति नातिप्रसङ्गः, सन्निवेशस्य च तत्र भावात्तद्वाच्यत्ववादिनः नैनमतिप्रसङ्गमतिक्रामन्ति, किं चाकृतिवचनत्वे गोशब्दस्य शुक्लादिगुणवाचिभिः पदान्तरैः सामानाधिकरण्यं न प्राप्नोति न हि शुक्लादिगुणा आकृतिवृत्तयः तत्सामानाधिकरण्यादिबलवत्तया वरं व्यक्तिः शब्दार्थ इष्यताम् ।

व्यक्तौ तावत्क्रियायोगो जातौ संबन्धसौष्ठवम् ।
नाकृतौ द्वयमप्येतदिति तद्वाच्यता कुतः ॥
जातिव्यक्त्योरतः कार्या वाच्यत्वे संप्रधारणा ।
तत्र व्यक्त्यभिधेयत्ववादिभिस्तावदुच्यते ॥

प्रयोगचोदनासामञ्जस्याद्व्यक्तिः शब्दार्थः, आलम्भनविशसनप्रोक्षणादिचोदना जातावसंगता भवन्ति न हि जातिरालभ्यते विशस्यते प्रोक्ष्यते वा, अपि च षड् देया द्वादश देया चतुर्विंशतिर्देया इति न जातिः षडादिसंख्याभियुज्यते ऽपि तु व्यक्तिः तस्मात्सैव शब्दार्थः, अपि च यदि पशुरुपाकृतः पलायेतान्यं तद्वर्णं तद्वयसमालभेतेति यदि जातिः शब्दार्थः स्यादन्यस्यालम्भो नावक-

त्पेतान्यस्यापनीयमानस्य पशुद्रव्यस्य सैव जातिः तत्रान्यत्वसंबन्धो व्यक्तेरवकल्पते न जातेरित्यतो ऽपि व्यक्तिः शब्दार्थः ।

चयापचयसंघातस्वस्वामित्वादिकल्पनाः ।
यान्ति व्यक्त्यभिधेयत्वपक्षे झडिति संगतिम् ॥
न व्यक्तिलक्षणाद्वारमियत्कार्यं च युज्यते ।
वक्रः पन्था न गन्तव्यः प्रष्ठे वहति वर्त्मनि ॥
उपलक्षणमाश्रित्य जातिसंबन्धवेदनम् ।
प्रसेत्स्यतीति नानन्त्यव्यभिचारकृतो ज्वरः ॥

किं च—

प्रत्यक्षविषये वृत्तिः पदस्येष्टा परैरपि ।
निष्कृष्टं न च सामान्यमात्रं प्रत्यक्षगोचरः ॥
व्यक्तेरेव पदार्थत्वं तस्मादभ्युपगम्यताम् ।
तथा च बुद्धिस्तत्रैव श्रुतशब्दस्य जायते ॥

## जातिमात्रस्य वाच्यत्वनिरूपणम्--

तदेतज्जैमिनीयैर्न क्षम्यते, तथा हि व्यक्तिमात्रं वा शब्दार्थ इष्यते विशिष्टा वा व्यक्तिः न तावद्व्यक्तिमात्रं न हि यस्यां कस्यां चिद्व्यक्तौ गोशब्दं वक्तारः प्रयुञ्जते, न च यां कां चिद्व्यक्तिं गोशब्दाच्छ्रोतारः प्रतिपद्यन्ते, अथ गोत्वविशिष्टव्यक्तिः शब्दार्थ इत्युच्यते गोत्वमेव हि तर्हि गोशब्दार्थो न व्यक्तिः, कथम्, श्रूयतां यदि हि व्यक्तिः शब्दार्थो भवेद् व्यक्त्यन्तरे न प्रयुज्येत अथ व्यक्त्यन्तरे ऽपि प्रयुज्यते सर्वव्यक्तिसाधारणस्तस्यार्थो न व्यक्तिः ।

ननु व्यक्त्यन्तरमपि व्यक्तिरेव सो ऽयं व्यक्तौ गोशब्दः प्रयुक्तो न सामान्ये, मैवम्, व्यक्तौ चेद् गोशब्दः प्रयुज्यते कर्कादिव्यक्तावपि प्रयुज्येत, यत्र प्रयोगोऽस्य दृष्टस्तत्र प्रयुज्यते इति चेद् अद्य जातायां गवि मा प्रयोजि, न हि तत्र प्रयोगो ऽस्य दृष्ट इति तस्माद्दर्शनमकारणम्, प्रतिव्यक्ति तस्यासम्भवात्, व्यक्तौ च शब्दार्थे इयं वा गौरियं वा गौरिति प्रतिपत्तिः स्यान्न त्वियमपि गौरिति भवति चैवं प्रतीतिर्न चायमविद्यमाननियन्तृक एव यदृच्छाशब्दप्रयोगः प्रवर्त्तते इति नियामकमस्य चिन्त्यम्, गोत्वमेव नियामकमिति चेदायुष्मन्साधु बुध्यसे किं तु तद्गोत्वमवगतमनवगतं वेति वक्तुमर्हसि नानवगतमतिप्रसङ्गादवगतं चेत्कुतस्तदवगच्छामः शब्दादन्यतो वा, नान्यतः प्रमाणान्तरासन्निधानात्, शब्दाच्चेत्तर्हि शब्दः प्रथमतरं गोत्वे वर्त्तितुमर्हति नागृहीतविशेषणा विशिष्टे बुद्धिरिति न्यायात् ।

ननु जातिं विशेषणत्वेन व्यक्तिं च विशेष्यत्वेन वचयति गोशब्दः न शक्नो-

ति वक्तुमतिभारप्रसङ्गात् , न च व्यक्त्यवगतौ गतिरन्या नास्ति यत इयन्तं शब्दे भारमारोपयेम, न हि वयं व्यक्तिप्रतीतिं भवन्तीमपह्नुमहे नापि भवन्तीं जातिप्रतीतिमपह्नुमहे उभयप्रतीतेः प्रत्यात्मवेदनीयत्वात् , उभयत्र चाभिधात्री शक्तिरतिभारः शब्दस्यान्यतरप्रतीत्या चान्यतरप्रतीतिसिद्धेः, तत्र गोशब्दः किं जातौ वर्त्तमानः व्यक्तिमाहो स्विद्व्यक्तौ वर्त्तमानो जातिमाक्षिपत्विति विचारणायां जातेर्विशेषणत्वात्पूर्वतरं प्रतिपत्तिरिति सैव शब्दार्थो भवितुमर्हति तस्यां च शब्दादवगतायां तत एव व्यक्त्यवगमः सेत्स्यतीति नोभयत्र शाब्दो व्यापारः ।

ननु दण्डिशब्दादिव विशेषणं च जातिं विशेष्यां च व्यक्तिं गोशब्दादेव प्रतिपत्स्यामहे को ऽस्यातिभारः, विषमो ऽयं दृष्टान्त तत्र हि प्रकृतिप्रत्ययविभागेन द्वयप्रतीतिरवकल्पते दण्डशब्दः प्रकृतिविशेषणमभिवदति मत्वर्थीयप्रत्ययश्च विशेष्यमिति, गोशब्दे तु नैष न्यायः सम्भवति, तत्र न विशेषणे दण्डिशब्दो वर्त्तते न विशेष्ये दण्डशब्दः, इह तु गोशब्द एक एव स च विशेषणे विशेष्ये वा वर्त्तेत, विशेष्ये वर्त्तमानो विशेषणे प्रमाणान्तरमपेक्षते विशेषणे तु वर्त्तमानस्तदवगमाय विशेष्यमाक्षिपतीति न कश्चिद्दोषः, तदिदमात्मप्रत्यक्षं यच्छब्दे उच्चरिते व्यक्तिरवगम्यते स किं शब्दादुत जातेरिति विवेको न प्रत्यक्षः स युक्त्या ऽवगम्यते, शब्दस्य द्वयाभिधाने यत्नगौरवाद्विरम्य व्यापारस्य चासंवेदनात् , अन्तरेणापि च शब्दं जात्यवगमाद्व्यक्तिप्रतीतिदर्शनाज् जातित एवैषा व्यक्तिप्रतीतिः जातिप्रतीतिश्च शब्दादिति निश्चीयते, भवद्भिरपि च विशेषणज्ञानपूर्विका विशेष्यावगतिरङ्गीकृतैव, यथा ऽऽह कणव्रतः(१), "समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते कार्यकारणभूते" इति ।

यत्पुनरभिहितम् आलम्भनविशसनप्रोक्षणादिक्रियायोगाद्व्यक्तिः शब्दार्थ इति, तदप्यनैकान्तिकम् , जातावपि क चित्क्रियायोगदर्शनात् श्येनचितं चिन्वीतेति,

नन्वत्रापि व्यक्तेरेव कार्याङ्गता नामूर्त्ताया जातेः, मैवम्, न ह्यत्र श्येनः साधनत्वेन निर्दिश्यते पशुना यजेतेतिवत्, कर्मण्यग्न्याख्यायामिति त्वभियुक्तस्मरणाच्चयननिर्वर्त्यः श्येन इति शब्दार्थो ऽवगम्यते, न च श्येनव्यक्तिश्चयनेन निर्वर्तयितुं पार्यते, अग्न्याख्यायामिति स्मर्यते न हीष्टकानिचयेन पतत्री अभिनिर्वर्त्तते तदाकारस्त्वग्निरभिनिर्वर्त्यते इत्यत्र जातेः क्रियाङ्गत्वं न व्यक्तेः ।

ननु व्यक्त्या सादृश्यं सम्पादयिष्यते न शक्यते सम्पादयितुं व्यक्त्यन्तरवैसादृश्यस्यापि सम्भवाद्यो ह्येकया व्यक्त्या सदृशः सो ऽन्यविसदृशो भवति,

---

(१) वैशेषिकसूत्रम् अ० ८ आ-१ सू० ९ ।

यत्त्वमूर्त्तत्वाज्जातेः न क्रियाङ्गत्वमिति, नैष दोषः, अमूर्त्तानामपि गुणकर्मणां क्रियासाधनतयोपपत्तेः अरुणया क्रीणाति अभिक्रामन्जुहोतीति, व्यक्त्याक्षेपद्वारेण चालम्भनविशसनप्रोक्षणादिप्रयोगचोदनासु साधनत्वं जातेरुपपत्स्यते।

लक्षितव्यक्तिसाध्यं तु तत्साध्यं कार्यमिष्यते।
यथा भूतेन्द्रियोत्पाद्यमात्मकर्तृकमुच्यते॥

आत्मा तावत्सर्वकर्मस्वधिकृतः कर्त्ता च स चामूर्त्तत्वाद् देहेन्द्रियद्वारेण औदुम्बरीसंमार्जनाज्यावेक्षणादीनि कार्याणि निर्वर्त्तयन् कर्त्ता तेषु भवति, एवं जातिरपि व्यक्तिवर्त्मना तन्निर्वर्त्तयन्ती साधनतां लप्स्यते।

अतश्च जातिरेवाङ्गमिति मीमांसका जगुः।
तस्याश्चेदं क्रियाङ्गत्वमन्यद्वारकमात्मवत्॥

एवं षड् देया इत्यन्यं तद्वर्णमालभेतेति च तद्द्वारकमेव योज्यम्, एतेनोपचयापचयसंघाताद्यपि वक्तव्यम्, सम्बन्धग्रहणादिकार्यं च जातिपक्ष एव सूपपादम्, आनन्त्यव्यभिचारादिचोद्यानवकाशात्।

यत्पुनरभ्यधायि प्रत्यक्षविषये पदं वर्त्तते न च प्रत्यक्षस्य सामान्यमात्रं विषय इति परिहृतं तद्वार्तिककृता प्रत्यक्षस्य हि चित्रात्मकं वस्तु विषयः।

न च तत्तादृशं किंचिच्छब्दः शक्नोति भाषितुम्।
सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्त्तते इति(१)॥

न हि नानाधर्मनिचयरचितचित्राकारवस्तुसमर्पणनिपुणमेकं किमपि पदमुपपद्यते न च तत्र सम्बन्धग्रहणं सुकरमिति सामान्यांशनिष्ठमेव पदं युक्तं तस्माज्जातिरेव शब्दार्थ इति।

## जातिमात्रवाच्यत्वाक्षेपः—

अत्राभिधीयते, न जातिः पदस्यार्थो भवितुमर्हति पदं हि विभक्त्यन्तो वर्णसमुदायो न प्रातिपदिकमात्रम्, तत्र च प्रकृतिप्रत्ययावितरेतरान्वितमर्थमभिधत्त इति स्थितम्, द्वितीयादिश्च विभक्तिः प्रातिपदिकादुच्चरन्ती प्रातिपदिकार्थगतत्वेन स्वार्थमाचष्टे युगपच्च त्रितयं विभक्त्यर्थः कारकं लिङ्गं संख्या च न चैतत् त्रितयं प्रातिपदिकार्थे जातावन्वेति न जातिः कारकं न च जातेः स्त्रीपुंनपुंसकविभागः न चास्या द्वित्वादियोग इति।

ननु व्यक्तिलक्षणया सर्वमुपपत्स्यते इत्युक्तम्, न च युक्तमुक्तम्, सकृ-

---

(१) श्लोकवार्तिके आकृतिवार्तिके श्लो० ६३ अयमर्थः यद्येकमेव वस्त्वनेकाकारं तर्हि तादृशमेव शब्दोऽभिदधत् सामान्यमात्राभिधायी न स्यादत आह—न चेति। कीदृशं तु भाषतेऽत आह सामान्यांशानिति।

त्प्रयुक्तं पदमंशेन कं चिदर्थमभिदधाति ततो ऽर्थान्तरं लक्षयति तद्गतत्वेन पुनः लिङ्गसंख्याद्यभिधत्ते इति न प्रातीतिको ऽयं क्रमः।

साक्षात्तदन्वितत्वेन कथ्यमानं त्वसङ्गतम्।
तद्भवेदग्निना सिञ्चेदित्यादिविधिसन्निभम्॥
ननु पुंसीव सामान्ये कथं नैव भविष्यति।
व्यक्त्यन्तरितमित्येष युक्तो वैभक्तिको ऽन्वयः॥

प्रातिपदिकार्थसामान्यगतत्वेनैव विभक्त्या स्वार्थो ऽभिधीयते न लक्षितव्यक्तिवृत्तित्वेन यतो ऽभिधानवैषम्यं स्यात्स च विभक्त्यर्थो जातौ साक्षादसम्भवन्कद्यान्तरितो भविष्यति, नैतत्, आत्मनो ज्ञानप्रयत्नादियोगित्वेन कारकत्वोपपत्तेः जातेस्तु साक्षान्न मनागपि व्यापारलेशसंस्पर्श इति स्वतो दुर्लभं तस्याः कारकत्वम्, अतः कथं तत्र विभक्त्यर्थान्वयः।

यदन्वितं च संख्यादि तत्स्थत्वेन न कथ्यते।
कथ्यते यद्गतत्वेन न तत्तेन समन्वितम्॥
न च व्यवहितव्यक्तिप्रतीतिं मन्यते जनः।
ना ऽन्यथानुपपत्त्यापि क्रमसम्वेदनं क चित्॥
जनयन्तीं च पश्यामो व्यक्तिं जात्यनुरञ्जिताम्।
संख्यादियोगिनी चेति सा वै धत्ते पदार्थताम्॥
जातेः कार्यान्वयः श्येनचितमित्यध्यधायि यत्।
तत्र संस्थाननिर्देशान्न जातेः का चिदङ्गता॥

श्येनव्यक्त्या चेत्सादृश्यमिष्टकाकूटस्य नास्ति व्यक्त्यन्तरेण व्यभिचारात् नितराममूर्त्तया जात्या सादृश्यमाकाशेनेव न तस्यावकल्पते इति स्पर्धोदाहरणमेतत्।

## जातिविशिष्टवाच्यत्वोपपादनम्—

अन्येषु तु प्रयोगेषु गां देहीत्येवमादिषु।
तद्वतो ऽर्थक्रियायोगात्तस्यैवाहुः पदार्थताम्॥
पदं तद्वन्तमेवार्थमाञ्जस्येनाभिजल्पति।
न च व्यवहिता बुद्धिर्न च भारस्य गौरवम्॥
सामानाधिकरण्यादिव्यवहारो ऽपि मुख्यया।
वृत्त्योपपद्यमानः सन्नान्यथा योजयिष्यते॥

तस्मात्तद्वानेव पदार्थः,

ननु को ऽयं तद्वान्नाम तदस्यास्तीति तद्वानिति विशेष एव सामान्यवानुच्यते विशेषवाच्यत्वे चानन्त्यव्यभिचारौ तदवस्थौ सामान्यं तु शब्देनानुच्यमानं नोपलक्ष्यमाणं भवति उभयाभिधाने च शब्दस्यातिभार इत्युक्तम्,

उच्यते, नेदन्तानिर्दिश्यमानशाबलेयादिविशेषस्तद्वान् न च सर्वत्रैलोक्यवर्त्ती व्यक्तिव्रातस्तद्वान् किं तु सामान्याश्रयः कश्चिदनुल्लिखितशाबलेयादिविशेषस्तद्वानित्युच्यते, सामान्याश्रयत्वाच्च नानन्त्यव्यभिचारयोस्तत्रावसरः, न च विशेषणमनभिधाय विशेष्यमभिदधाति शब्द इत्यभ्युपगच्छामः येनैनमतिभारेण पीड्येमहि, सामान्याश्रयमात्रे सङ्केतग्रहणात् तावन्मात्रं वदतः शब्दस्य कतरो ऽतिभारः एवं तद्वतोर्नास्वातन्त्र्यत्वादित्यादि दूषणं परिहृतं भवति, किं च—

प्रत्यक्षं न हि निष्कृष्टजात्यंशपरिवेष्टितम् ।
तद्गोचरप्रवृत्तश्च शब्दस्तं कथयेत्कथम् ॥

तस्मात्प्रत्यक्षविषये प्रवर्त्तमानं तत्समानविषयमेव भवितुमर्हति पदं न सामान्यमात्रनिष्ठम् ।

युगपन्ननु संवित्तिर्विशेषणविशेष्ययोः ।
प्रत्यक्षे ऽपि न दृष्टैव न च युष्माभिरिष्यते ॥
कार्यकारणभावो हि तद्धियोर्भवतां मते ।
तस्माद्विशेषणे जातौ पूर्वमिन्द्रियजा मतिः ॥
पदादपि तदा यत्तु सम्बन्धज्ञप्त्यपेक्षिणः ।
तत्रैव बुद्धिरित्येव न व्यक्तेरपि वाच्यता ॥

उच्यते, प्रत्यक्षे तावद् द्वयोरपि विशेषणविशेष्ययोरिन्द्रियविषयत्वं सामान्येऽपि संयुक्तसमवायादिन्द्रियं प्रवर्त्तमानं विशेषणवद्विशेष्यमपि विषयीकरोति, न हि सामान्यं प्रत्यक्षं विशेषो ऽनुमेय इति व्यवहारः, एवं गुणमात्रग्राहिणीन्द्रिये गुणिनो ऽनुमेयत्वं स्यान्न चैवमस्ति, तस्माद्विशेष्यपर्यन्तं प्रत्यक्षं तथा पदमपि तत्तुल्यविषयं न तु सामान्यमात्रनिष्ठमिति युक्तम् ।

यत्तु "सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्त्तते" इति तत्केवलव्यक्त्यभिधाने सति आनन्त्यव्यभिचारभयादुच्यते तद्वदभिधाने तु तद्द्वयं नास्तीति न शुद्धजात्यभिधातृतया शब्दः संकोचनीयः, न तु सर्वात्मना प्रत्यक्षतुल्यविषयः शब्दः प्रतिपत्तिसाम्यप्रसङ्गात्, न च शब्दान्द्रियाच्च तुल्ये प्रतिपत्ती भवतः, तदुक्तम् "अन्यथैवाग्निसम्बन्धाद् दाहं दग्धो ऽभिमन्यते" इत्यादि ।

उच्यते, पूर्वमेवैतत्परिहृतं सकलविशेषग्रहणाग्रहणाभ्यां प्रतिपत्तिविशेषसिद्धेः धर्म्यभिप्रायेण च संप्लवस्योक्तत्वान्नैतावता सामान्यमात्रनिष्ठः शब्दो भवति ।

अपि च निष्कृष्टसामान्यांशवचनत्वे पदस्येष्यमाणे गोशब्दाद्गोत्वशब्दाच्च तुल्ये प्रतिपत्ती स्याताम्, गौः शुक्ल इतिवच्च गोत्वं शुक्लमिति बुद्धिः स्यात्, चातुर्वर्ण्यादिवच्च स्वार्थे एव गोशब्दाद्भावप्रत्ययस्त्वतलादिः स्यात् ।

अथ मन्येथाः आक्षिप्तव्यक्तिकां जातिं गोशब्दो वक्ति भावप्रत्ययान्तस्तु

निष्कृष्टस्वरूपमात्रनिष्ठामिति तदनुपपन्नम्, अनाक्षिप्तव्यक्तिकाया जातेः कदाचिदप्यदर्शनात्।

अथ गोशब्दश्रवणवेलायां व्यक्तिसंस्पर्शवती जातिरवगम्यते भावप्रत्ययान्ते तु गोशब्दे श्रुते तच्छून्या ऽसौ प्रतीयते इति, यद्येवमागतो ऽसि मदीयं पन्थानम् आश्रयवती चेज्जातिरुच्यते शब्देन जात्याश्रय उक्त एव भवति नान्यथा साश्रयवत्युक्ता स्यात्, तदाश्रयपरिहारेणाश्रयिसामान्यमात्रविवक्षायां त्वतलादयः प्रयुज्यन्ते, तथा चाहुः(१) "यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलादय" इति, गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः इति तद्वद्वाच्यत्वपक्षसाक्षीण्यक्षराणि, सामानाधिकरण्यं च तत्रैवोपपद्यते इत्युक्तमेतत्,

## व्यक्तिबोधे पदव्यापारसाधनम्—

तस्मात्—

यथा विध्यन्तपर्यन्तो वाक्यव्यापार इष्यते।
तथैव व्यक्तिपर्यन्तः पदव्यापार इष्यताम्॥

अनवरतव्यापारे शब्दे तदवगमात्।

येनान्विताभिधानं च पदानामभ्युपेयते।
सुतरां तेन वक्तव्या व्यक्त्यन्ता पदतो मतिः॥
न हि व्यक्त्यनपेक्षाणां जातीनामितरेतरम्।
अन्वयो ऽनन्वितानां च नाभिधानमिति स्थितिः॥
गङ्गायां घोष इत्यादौ यथा सामीप्यलक्षणा।
नैवं गौः शुक्ल इत्यादौ गम्यते व्यक्तिलक्षणा॥
प्रयोगप्रतिपत्तिभ्यां वृद्धेभ्यो ऽध्यवसीयते।
तस्माद् गवादिशब्दानां तद्वानर्थ इति स्थितम्॥

तदिदमुक्तं सूत्रकृता "व्यक्त्याकृतिजातयस्तु पदार्थ" इति, तुशब्दो विशेषणार्थः किं विशिष्यते गुणप्रधानभावस्य नियमेन शब्दार्थत्वम्, स्थिते ऽपि तद्वतो वाच्यत्वे क चित्प्रयोगे जातेः प्राधान्यं व्यक्तेरङ्गभावः यथा गौर्न पदा स्प्रष्टव्येति सर्वगवीषु प्रतिषेधो गम्यते, क चिद्व्यक्तेः प्राधान्यं जातेरङ्गभावः यथा गां मुञ्च गां बधानेति नियतां कां चिद्व्यक्तिमुद्दिश्य प्रयुज्यते, क चिदाकृतेः प्राधान्यं व्यक्तेरङ्गभावो जातिर्नास्त्येव यथा पिष्टकमय्यो गावः क्रियन्तामिति सन्निवेशचिकीर्षया प्रयाग इति सर्वगतत्वे ऽपि जातेर्न मृद्गवादौ वृत्तिरित्युक्तम्, तदेवं गवाश्वादिशब्दानां तावत्तद्वानर्थ इति सिद्धम्।

---

(१) महाभाष्ये अ० ५ पा० १ आ० २ सू० ११९।

येषामर्थेषु सामान्यं न सम्भवति तैः पुनः ।
उच्यते केवला व्यक्तिराकाशादिपदैरिव ॥

वाच्यार्थवैविध्यम्—

एवं डित्थादिशब्दानां संज्ञात्वविदितात्मनाम् ।
अभिधेयस्य सामान्यशून्यत्वाद् व्यक्तिवाचिता ॥

अत एव हि द्रव्यशब्द इत्युच्यते ।

ये पुनः कल्पितानेकभेदवृत्तिं प्रचक्षते ।
वाच्यं तत्रापि सामान्यमतीव ग्राहिकास्तु ते ॥
न हि डित्थत्वसामान्यं दृश्यते गगनत्ववत् ।
कल्पनायास्तु नो भूमिः का चिदस्ति विपश्चिताम् ॥

गुणशब्दास्तु के चित् स्वजात्यवच्छिन्नं गुणमभिधाय तावत्येव विरमन्ति के चिद्गुणमभिधाय द्रव्यमाक्षिपन्ति तत्सामानाधिकरण्यप्रयोगदर्शनात् ।

गुणैकनियतास्तावद्गन्धरूपरसादयः ।
गन्धत्वादिव्यवच्छिन्नगन्धादिगुणवाचिनः ॥
तेषां न द्रव्यपर्यन्ता वृत्तिः क चन दृश्यते ।
न गन्धः पद्म इत्यस्ति सामानाधिकरण्यधीः ।

न ह्येवं के चन वक्तारो भवन्ति ओदनं गन्धः आम्रं रस इति, गुणं शुक्लादिशब्दास्तु कथयन्तस्तदाश्रयं द्रव्यमप्याक्षिपन्त्येव शुक्ले शुक्ल इति दर्शनात्, शुक्लादयो ऽपि शब्दा गुणपदोपबन्धसङ्कोचितशक्तयो भावप्रत्ययान्तवद्गुणमात्राभिधाने एव पर्यवस्यन्ति शुक्लो गुणो ऽश्वे शौक्ल्यमश्वे इति सामानाधिकरण्यप्रयोगदर्शनात्,

क्रियाशब्दाश्च द्विविधा भवन्ति के चित्कर्त्तरि कर्मणि करणे वा प्रयुज्यन्ते के चिद्भावमात्रवचना एव, कर्त्रादिवाचिनस्तावन्निमित्तीकृत्य कां चन क्रियां तद्योगिनि द्रव्ये वर्त्तन्ते पाचकादयः ।

यत्रापि तत्क्रियायोगस्तदानीं नोपलभ्यते ।
तत्रापि योग्यतां दृष्ट्वा शब्दं तज्ज्ञाः प्रयुञ्जते ॥

न हि पाचको लावक इति प्रवृत्तक्रिय एवोच्यते अन्यदा ऽपि तथा तथा व्यवहारात् ।

अन्ये पूर्वापरीभूतस्वभावपरिहारतः ।
सिद्धरूपतया प्राहुः शब्दाः पाकादयः क्रियाम् ॥

तदुक्तम्, कृदभिहितो भावो द्रव्यवद्भवति क्रियावच्चेति, न चैकान्तेन परिहृतसाध्यमानावस्थैव तैः क्रियोच्यते यत आह—क्रियावच्चेति ।

अन्यत्प्रवृत्तौ शब्दस्य निमित्तमवगम्यते ।
अभिधेयं तु तस्यान्यदित्ययं प्रथमः क्रमः ॥

पाचकादिशब्दानां हि प्रवृत्तिनिमित्तं क्रिया अभिधेयास्तु कर्त्रादयः—

क्व चित्पुनर्यदेवास्य स्यात्प्रवृत्तिनिबन्धनम् ।
तस्यैव वाच्यता भावप्रत्ययान्तपदेष्विव ॥
इत्येवं लेशतस्तावन्नाम्नां वृत्तिरुदाहृता ।
आख्यातानां तु वाच्यो ऽर्थः पुरस्ताच्चर्चयिष्यते ॥
उपसर्गनिपातानां नाम्नामप्यविभागतः ।
प्रयोगप्रतिपत्तिभ्यामनेकार्थो ऽवगम्यते ॥

उपसर्गः प्राचुर्येण क्रियायोगे प्रवर्तते, "उपसर्गाः क्रियायोगे" इति स्मरणात्, के चित्तु नामभिरपि सम्बन्ध्यन्ते यथा प्रगतं वयो यस्य स प्रवया इति । अन्ये धातोर्विचित्रार्थतामापादयन्तस्तद्विशेषणतया सम्बध्यन्ते, यथोक्तम् ,

उपसर्गवशाद्धातुरर्थान्तरविलासकृत् ।
विहाराहारसंहारप्रहारपरिहारवत् ॥

ननु क्व चिदुपसर्गो धात्वर्थमेव बाधमानो दृश्यते यथा प्रस्थित इति गतिनिवृत्तिवाची धातुः प्रत्युत गतिवचनतां नीतः प्रशब्देन, न चेदृशं विशेषणं भवितुमर्हति ।

येन स्वार्थाविरोधेन विशेष उपजन्यते ।
विशेषणं तदेवेष्टं न तु यत्स्वार्थनाशनम् ॥ इति ।

नैष दोषः, अर्थान्तराभिधानसामर्थ्योपादनमेव धातोर्विदधदुपसर्गो विशेषणं भवितुमर्हति, अनेकार्थाभिधानशक्तिश्च धातुरुपसर्गेण नियते ऽर्थे ऽवस्थाप्यते इति तस्य तद्विशेषणता ।

उपसर्गाः किमर्थस्य वाचका द्योतका इति ।
प्रकृतानुपयोगित्वादिहैतन्न विचार्यते ॥
अन्वयव्यतिरेकाभ्यां तदर्थो ह्यवधार्यते ।
तदागमे तत्प्रतीतेस्तदभावे तदग्रहात् ॥

ते तु किं वाचकाः सर्वे तदवगतिमुपदधति किं वा द्योतका इति किमनेन, एवं समुच्चयादिवाचिनां चादिनिपातानां 'वृक्षं प्रति द्योतते' इति कर्मप्रवचनीयानामर्थः प्रयोगप्रतिपत्तिभ्यामवधारणीय इत्यलं प्रसङ्गेन ।

अयमस्य पदस्यार्थ इति के चित् स तेन वा ।
यो ऽर्थः प्रतीयते यस्मात्स तस्यार्थ इति स्मृतिः ॥
स्पष्टामपि तु ये बुद्धिं निरूपयितुमक्षमाः ।
तां दर्शयितुमस्माभिर्दिङ्मात्रमुपदर्शितम् ॥
इति प्रमाणत्वसमर्थनाय शब्दस्य किं चिद्वयमुक्तवन्तः ।
पदाभिधेयार्थनिरूपणं तु शास्त्रान्तरे विस्तरतः प्रणीतम् ॥

तत्खेदेन न नः प्रयोजनमतिद्राघीयसी सा हि भू-
रन्यामेव दिशं परीक्षितुमतो ऽस्माभिर्गृहीतः क्षणः ।
जात्याद्यर्थसमर्थनेन कथिता बाह्यार्थसंस्पर्शिता
शब्दानामियतैव नन्वसरे ऽमुष्मिन् कृतार्था वयम् ॥

## वाक्यार्थनिरूपणम्—

एवं पदार्थे निर्णीते वाक्यार्थश्चिन्त्यते ऽधुना ।
तत्र विप्रतिपत्तिश्च बहुरूपा विपश्चिताम् ॥

## वाक्यार्थे विप्रतिपत्तयः—

केचिदाचक्षते बाह्यस्य वाक्यार्थस्यासम्भवात् पदार्थसंसर्गनिर्भासं ज्ञानमेव वाक्यार्थ इति,

अन्ये वास्तवः पदार्थानां परस्परसंसर्गो बाह्य एव वाक्यार्थ इत्याहुः,

अन्यव्यवच्छेदो वाक्यार्थ इत्यपरे, शुक्लादिपदान्तरोच्चारणे कृष्णादिनिवृत्तेरवगमात्,

अपरे सङ्गिरन्ते संसर्गस्य दुरपह्नवत्वात्तस्य च गुणप्रधानभावगर्भत्वाद्गुणीभूतकारकनिकरनिर्वर्त्या प्रधानभूतक्रिया वाक्यार्थ इति,

अन्ये मन्यन्ते भाव्यनिष्ठः पुरुषव्यापारः करोत्यर्थो भावनाशब्दवाच्यो वाक्यार्थः, लिङादिशब्दव्यापारस्तु शब्दभावनाख्यः पुरुषार्थभावनाऽनुष्ठाने प्रवर्त्तकः स एव विधिरुच्यते,

अन्ये ब्रुवते द्वयाभिधाने लिङादेः प्रत्ययस्य भारगौरवाद्विधिरेव वाक्यार्थः स एवानुष्ठेयः प्रवर्त्तकश्चेति, तत्रापि द्वयी विमतिः कैश्चित्प्रेषणात्मकत्वं शब्दस्याभ्युपगतं लिङादिशब्दैस्तथा तदवगमात्कार्यान्तरानवगमाद्भावार्थमात्रकार्यत्वपक्षस्य चातिदौर्बल्याद्विधिरेवानुष्ठेय इत्यर्थात्तस्य कार्यत्वम्, अन्यैस्तु कार्यत्वेन नियोगप्रतीतेरर्थात्तस्य प्रेरकत्वमिति संश्रितम्, कार्यमवगतं स्वसिद्धये पुरुषं नियुङ्क्ते ममेदं कार्यमित्यवगते हि तत्सिद्धये पुरुषः प्रवर्त्तते इति,

अन्ये पुनः अभिनवं वाक्यार्थमुद्योगं नाम वर्णयांबभूवुरित्यनेकशाखा विप्रतिपत्तिः ।

## ज्ञानस्य वाक्यार्थत्वनिरूपणम्—

तदत्र किं तत्त्वमिति अत्रैके तावदाहुः, वाक्यार्थो नाम पारमार्थिको बहिर्नास्त्येव, स हि पदार्थेभ्यो व्यतिरिक्तो वा स्यादव्यतिरिक्तो वा, न व्यतिरिक्तः भेदानुपलम्भात्, गौः शुक्ला आनीयतामित्यत्र पदग्रामे जातिगुणक्रियादिपदार्थ एव वाक्यार्थः प्रत्येकं वा स्यात्सामस्त्येन वा, न प्रत्येकं तथा

ऽनवगमात्र हि गौरिति पदार्थ एव वाक्यार्थो भवति सामस्त्यं तु न तेषामस्ति तद्धि सत्तया भवेत्प्रतीत्या वा, सत्तया न सामस्त्यमशेषपदार्थराशेरस्तीति न नियतः कश्चन वाक्यर्थो ऽवधार्यते, प्रतीत्या तु सामस्त्यमघटमानमयुगपद्भावित्वेन ज्ञानानामेकपदार्थप्रतीतिसमये पदार्थान्तरप्रतीत्यसम्भवात्, पदार्थप्रतीत्युपायाश्च वर्णास्ते ऽपि न युगपद्भाविनः कुतः प्रतीतिकृतं सामस्त्यम् ,

अपि च पदार्थसमुदायः किमितरेतरसंस्पृष्टो वाक्यार्थः अन्यथा वा, न तावदन्यथा गौरश्वः पुरुषो हस्तीत्येवमादावदर्शनात् , संसर्गस्तु दुरुपपादः स ह्यपेक्षा गर्भो भवति न चार्थो ऽर्थान्तरमाकाङ्क्षति अचेतनत्वात्, बुद्धीनामपि क्षणिकत्वादन्योन्यं नाकाङ्क्षा न च तत्कृतः सम्बन्धः,

अत एव न संसर्गो वाक्यार्थः न ह्यसावर्थानां ज्ञानानां वा यथोक्तनीत्या ऽवकल्पते,

व्यवच्छेदो ऽप्येवमेव निराकार्यः, सो ऽपि हि न ज्ञानानामुपपद्यते, तदुक्तम्—

यदि ध्रियेत गोबुद्धिः शुक्लबुद्धिजनिक्षणे ।
ततो ऽन्येभ्यो निवर्तेत संसृज्येताथ वा तयेति(१) ॥

न चापेक्षायां सत्यामपि सम्बन्धः कश्चिदुपलभ्यते, यथोक्तम्—

अपेक्षणे ऽपि सम्बन्धो नैव कश्चित्प्रतीयते ।
कार्यकारणसंयोगसमवायादिलक्षणः ॥
एकार्थवृत्तिप्रायस्तु सम्बन्धो ऽतिप्रसज्यते (२) ।

अर्थानां तु क चिदपि सन्सम्बन्धः शब्दैरनभिधीयमानत्वादसत्कल्प एव, न चाभेदसंसर्गयोर्वाचकं किं चित्पदमस्ति असति च तद्वाचिनि पदे न तयोः पदार्थत्वम्, अपदार्थस्य च न वाक्यार्थत्वम् , श्रुते ऽपि तद्वाचिनि पदे सुतरामसङ्गतिः गौः शुक्ल आनीयतां संसर्ग इति को ऽर्थः, तस्माद् बाह्यस्य वाक्यार्थस्य सर्वप्रकारमसम्भवात्पदार्थसंसर्गनिर्भासं ज्ञानं वाक्यार्थो भवितुमर्हति, तेनैव च लोके व्यवहार इति ।

---

( १ ) श्लोकवार्तिके वाक्याधिकरणे श्लो० २० । गौः शुक्ल इत्यत्र गोशब्दजनिता बुद्धिः सर्वगवीषु शुक्लकृष्णादिषु प्रसृता यदि शुक्लशब्दजनिता शुक्लबुद्धिजननं यावत ध्रियेत स्थिता स्यात् ततस्तया संसृज्येत अन्याभ्यो वा कृष्णादिव्यक्तिबुद्धिभ्यो व्यवच्छिद्येत न तु सा ध्रियते क्षणिकत्वादित्यर्थः ।

( २ ) श्लोकवार्तिके वाक्याधिकरणे श्लो० १४ । उपलभ्यमानचौखम्बामुद्रितपुस्तके एकार्थेत्यस्य स्थाने 'एकार्थसमवायेऽपि सर्वेषां व्योम्नि तुल्यता' इति पाठः ।

## ज्ञानस्य वाक्यार्थत्वनिराकरणम्—

तदिदमनुपपन्नम्, बाह्यार्थस्यानन्तरमेव प्रसाधितत्वात्, न संसर्गनिर्भासं ज्ञानं वाक्यार्थो भवितुमर्हति स्थापयित्वा हि बाह्यमर्थं वाक्यार्थचिन्तामुपक्रान्तवन्तो वयमतः को ऽवसरो विज्ञानमात्रवाक्यार्थत्ववर्णनस्य, न च पदार्थव्यतिरिक्तो नास्ति वाक्यार्थः, इदं तावद्भवान्पृष्टो व्याचष्टां किं गौरिति पदाद्यादृशी प्रतिपत्तिस्तादृश्येव गौः शुक्ल आनीयतामिति वाक्यादुत भिन्ने एते प्रतिपत्ती इति, तत्र तुल्यत्वं तावत्प्रतिपत्त्योरनुभवविरुद्धम्, वैलक्षण्ये तु प्रतीत्योर्विषयवैलक्षण्यमपि बलादुपनतमसति विषयभेदे प्रतीतिभेदानुपपत्तेः, यश्च तदतिरिक्तो विषयः स वाक्यार्थः, एवं केवलगुणक्रियापदोच्चारणे ऽपि योजनीयम्, तदुक्तं "यत्राधिक्यं स वाक्यार्थ" इति, संसर्गो ऽपि पदार्थानां न न प्रतीयते, न हि गौरश्वः पुरुषो हस्तीत्यसंसृष्टपदार्थप्रतीतिवद् 'गौः शुक्ल आनीयताम्' इति प्रतीतिः, यथा च संसर्गः प्रतीयते यश्च प्रतीत्युपायस्तत्सर्वं विस्तरशो निर्णेष्यते, तस्माद् बाह्य एव वाक्यार्थः।

बाह्योपि भवन्न व्यवच्छेदो वाक्यार्थः विधिरूपत्वेनावगमात्संसर्गमन्तरेण चान्यव्यच्छेदस्यापि दुरुपपादत्वान्न हि शुक्लपदार्थेनासंसृष्टो गोपदार्थः कृष्णादिभ्यो व्यावृत्त इत्यवगम्यते।

गोशब्दात्सर्वगवेषु बुद्धिरुपसर्पन्ती पदजनिता शुक्लपदसन्निधानादन्यतः कृष्णादेरपसर्पतीति व्यवच्छेद्यो वाक्यार्थ इति चेन्मैवम्, तत्सम्बन्धावगमपूर्वकत्वात्तदितरव्यावृत्तेः, तत्सम्बन्धावबोधेन सिद्धे वाक्यस्यार्थवत्त्वे पाश्चात्यः कृष्णादिव्यवच्छेदावगमो यदि भवति भवतु कामं न त्वसौ वाक्यार्थ इति।

## प्राधान्यात् क्रियाया वाक्यार्थत्वनिरूपणम्—

तदेवं विधिरूपे बाह्ये च शब्दार्थे ऽवस्थिते सति क्रियामेव के चिद्वाक्यार्थं वर्णयन्ति, अयं तेषामाशयः—

पदार्थाः किल वाक्यार्थभावमायान्ति संहताः।
अपेक्षाऽनुगुणान्योन्यव्यतिषङ्गविशेषतः॥

न च गुणप्रधानभावमन्तरेण संसर्गः पदार्थानामवकल्पते न चाख्यातरहितं वाक्यं किं चित्प्रयोगयोग्यम्, अनुच्चारिते तस्मिन्नाकाङ्क्षाया अनिवृत्तेः, श्रोत्राकाङ्क्षानिवृत्तये च वाक्यानां लोके प्रयोगः, लोकवच्च वेदादप्यर्थो ऽवसीयते, अख्याताच्च पूर्वापरीभूतः साध्यरूपो ऽर्थो ऽवगम्यते न सिद्धरूपः सिद्धसाध्यसमुच्चारणे कस्य किंतन्त्रतेति चिन्तायां साध्यसिद्धये सिद्धमुपात्तमिति प्रतीयते।

साध्यं च साध्यमानत्वादप्रधानमवगम्यते ।
तस्मात्तदेव वाक्यार्थः क्रियातो नापरं च तत् ॥

क्रिया हि प्रतीयमाना स्वनिष्पत्तये साधनान्याक्षिपति तैश्च कैश्चित्संबध्यते तानि च कानि चित्पदान्तरोपात्तानि भवन्ति कानि चिद्वाक्यान्तरोपात्तानि कानि चित्प्रकरणान्तरपाठलभ्यानि कानि चिदारादुपकारकाणि कानि चित्सन्निपत्योपकारकाणि कानि चिदन्तिकोपनिपतितान्यपि योग्यताविरहात्परिहरति कानि चिदतिदूरवर्त्तीन्यपि योग्यानि स्वसम्पत्त्यर्थमाहरति इत्येवं दृष्टादृष्टोपकारकारककलापसम्पद्यमानस्वरूपा क्रियैव वाक्यार्थः ।

यजेत दद्याज्जुहुयादधीयीतेति चोदितः ।
क्रियां साध्यतया वेत्ति तां च लोको ऽनुतिष्ठति ॥

अधिकारिपदमपि क्रियापेक्षितकर्तृसमर्पणेन तदुपयोगितामेवावलम्बते अस्यां क्रियायामेष कर्त्ता ऽनेनेयं क्रिया सम्पद्यते इति, तत्र च कर्त्ता क्रियासु स्वप्राधान्यमुज्झति न हि क्रिया कर्त्रर्था ऽपि तु कर्ता क्रियार्थः, स हि तां निर्वर्तयन्नुपलभ्यते, शब्दो ऽपि तथैवोपदिशति एष इदं कुर्यादिति, किमर्थं पुनरसौ क्रियामनुतिष्ठतीति चेच्छब्दप्रामाण्यादेवेति ब्रूमः, शब्देन हि चोदितस्त्वयेदं कर्त्तव्यमिति स चेन्नियुक्तो नानुतिष्ठेच् चोदनामतिक्रामेच्छास्त्रप्रत्ययाच्च क्रियामनुतिष्ठति विरतफलाभिलाषः कर्मसंस्कारादेव परिपक्वकषायः स्तोकस्तोकप्रपञ्चविलापनद्वारेणोत्तमाधिकारमारूढस्तत एव ज्ञातास्वादस्तमेव परमपुरुषार्थं प्रतिपादयतीति दीर्घा सा कथा तिष्ठतु किमनया, सर्वथा क्रियाप्राधान्यात्सैव वाक्यार्थ इति, तदुक्तम् "द्रव्यगुणसंस्कारेषु बादरिः(१)" एतदुक्तं भवति द्रव्यादीनामेव क्रियां प्रति शेषत्वमवगम्यते न हि क्रियाया अन्यशेषत्वमिति ।

**क्रियापेक्षया फलस्य प्राधान्येन फलस्य वाक्यार्थत्वनिरूपणम्—**

अत्रोच्यते, कुत इदं क्रियायाः प्राधान्यमुपेयते वस्तुवृत्तेन वा शब्दप्रत्ययमहिम्ना वा—

फलस्य वस्तुतस्तावत्प्रधान्यमवगम्यते ।
न सचेताः क्रियां कां चिदनुतिष्ठति निष्फलाम् ॥
वेदाद् गुरुनियोगाद्वा शासनाद्वा महीभुजः ।
न वैफल्यमपश्यन्तः क्रियां विदधते जनाः
जडो माणवको ऽप्येष चपेटापातहानये ।
मोदकाद्याप्तये वापि करोति गुरुशासनम् ॥

अत्रोच्यते, न वस्तुतः प्राधान्यमिहाश्रीयते अपि तु शब्दतः शब्दप्रमाण-

(१) जैमिनिसूत्रम् । अ. ३ पा. १ सू. ३ ।

का वयं यच्छब्द आह तदेवास्माकं प्रमाणम् , तद्यथा राजपुरुष इति वस्तुवृत्ते राजा जगतामीशिता प्रधानम् , पुरुषस्तपस्वी तदिच्छाऽनुवर्त्तनेन जीवति, शब्दस्तु पुरुषप्राधान्यमाचष्टे उत्तरपदार्थप्रधानत्वात्तत्पुरुषस्येति, एवमिहापि यजेत दद्याज्जुहुयादिति क्रियां प्राधान्येनोपदिशति शब्दःस्वर्गकाम इत्यपि क्रियां प्रति कर्तृरूपदेशो वस्तुवृत्तेन तु कर्मणि क्रियमाणे कर्मस्वाभाव्यं फलं चेद्भवति भवतु तत् , पुरुषो ऽपि प्रयततां नाम फलेन न तु शब्दः फलोपदेशनिष्ठः आह च 'तस्मिंस्तु कृते स्वयमेव तद्भवति' इति, स्वयमेवेति को ऽर्थः न शब्दः फलपारतन्त्र्यं क्रियायाः प्रतिपादयतीति ।

तदेतदयुक्तम् एवं वर्ण्यमाने स्वर्गकामो यजेतेति स्वर्गकामपदस्यान्वयो दुरुपपादः,

ननु कर्तृपदमेतत्कर्ता च क्रियार्थो न कर्त्रर्था क्रियेत्युक्तम् , न कर्तृपदं स्वर्गकाम इति किं त्वधिकारिपदमेतन्न हि जात्यैव कश्चित्स्वर्गकामो नाम कुत्र चित्पुरुषो ऽवगम्यते यो ह्यत्र कर्त्तृत्वेन नियोज्येत, स्वर्गे कामो यस्यासौ स्वर्गकामः स्वर्गं वा कामयते स्वर्गकामः उभयथा ऽपि स्वर्गकामना-विशिष्टः पुरुष एव तस्मात्पदादवगम्यते,

तदत्र काम्यमानः स्वर्गः कथं क्रियया सम्बध्येत दृष्टेनादृष्टेन वोपकारेण ।

## स्वर्गस्य क्रियायां न दृष्टोपकारकत्वम्—

यदि हि चन्दनं स्वर्गः षोडशवर्षाः अङ्गनाः स्वर्ग इति चन्दनाङ्गनादि द्रव्यसामानाधिकरण्यप्रयोगाद् द्रव्यशब्दः स्वर्गशब्दः तदा "द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्ध"(१) इति दध्यादिवत्साधनत्वेन स्वर्ग उपकरोति क्रियां कामना ऽपि द्रव्याहरणाङ्गत्वादुपकारिणी यत्तया द्रव्यमानेतुं यतते इति दृष्टोपकारित्वम् ,

तच्चैतदसमञ्जसम् , स्वर्गशब्दस्य द्रव्यवाचित्वाभावात्प्रीतिवचनो ह्येष स्वर्गशब्दो न द्रव्यवचनः तदेव चन्दनं शीतातुरेण न स्वर्ग इति ग्रीष्मोपहतेन च स्वर्ग इति व्यपदिश्यते, सैवाङ्गना सुरतार्थिना स्वर्ग इति विरतायां सुरततृषि न स्वर्ग इत्युच्यते तदेवमेष स्वर्गशब्दः प्रीतिं न व्यभिचरति द्रव्यं तु व्यभिचरत्येवमद्रव्यत्वात्स्वर्गस्य न क्रियाङ्गत्वम् , तथा ऽपि निरतिशयसुखप्रतीत्यन्यथानुपपत्तितः परिकल्पितः कनकगिरिशिखरादिदेशः स्वर्गः सुतरां तस्य न क्रियासाधनत्वमवकल्पते दध्यादिवदुपादातुमशक्यत्वात्,

## स्वर्गस्याक्रियायां नादृष्टोपकारकत्वम्—

यदप्यदृष्टेनैव द्वारेण समुद्रं मनो ध्यायेदितिवत्स्वर्गकामना तत्रोपकारिणी-

(१) जैमिनिसूत्रम् अ. ६ पा. १ सू. १ ।

ति तदपि क्लिष्टकल्पनामात्रम् , प्रीतिर्हि निरतिशया स्वर्गः प्रीतेश्च नान्यार्थत्वं युक्तं प्रीत्यर्थमन्यन्नान्यार्था प्रीतिः, तस्मान्न यागाय स्वर्गोऽपि तु स्वर्गाय यागः,

इत्थं च क्रियासाधनानुपदेशान्न कर्तृसमर्पणेन स्वर्गकामपदं समन्वेति, कथं तर्ह्यस्यान्वयः अधिकारिवाचित्वेन ब्रूमः,

को ऽयमधिकारी नाम, कर्मणः स्वामीश्वरवचनो ह्यधिकृतशब्दः, ननु कर्तैव कर्मणः स्वामी नान्यः, नैवम् , स्वामी सन्कर्ता न कर्ता सन्स्वामीति, ननु क्रियाकारकसम्बन्धव्यतिरिक्तः कोऽन्यः कर्मणः पुरुषस्य च सम्बन्धः, उच्यते, ममेदं कर्त्तव्यमहमत्र स्वामीति स्वस्वामिभावमवमत्य पाश्चात्यः क्रियाकारकसम्बन्धो ऽवगम्यते,

ननु त्वया क्रियाकारकसम्बन्धो नापन्हूयते जातिवादिनेव व्यक्तिप्रतीतिः स तु पाश्चात्य इत्यत्र किं प्रमाणम् , उक्तमत्र "अनुपादेयविशेषणं विशिष्टस्य पुंसो निर्देशात्" इति, कारकत्वानुगुणविशेषणयोगिनो ह्यस्य कर्तृतया योग्यः सम्बन्धः तद्विपर्यये त्वधिकारित्वेनेति, तस्मादधिकृतस्य कर्तृत्वं न कर्तुरधिकारः इत्थं च स्वर्गकामस्याधिकृतत्वं निर्वहति, यदि हि तत्कर्म स्वर्गार्थं स्यात्स्वर्गो मे भोग्यो भवेत् कथमहं स्वर्गं प्राप्नुयामित्येवं साध्यत्वेन स्वर्गमिच्छन्स्वर्गकाम इत्युच्यते, यदि न स्वर्गसाधनं तत्कर्म तद्विरुद्धमेवेदमापतति स्वर्गं कामयते यागं करोतीति हि अन्यदिच्छति अन्यत्करोतीति स्यात् , अतः कर्मणः काम्यमानसाधनतामप्रतिपद्यमानः स्वर्गकामस्तत्र नैवाधिक्रियते न चानधिक्रियमाणस्तत्र सम्बध्यते तदेवमधिकृतत्वेन स्वर्गकामस्य कर्मणि सम्बन्धात्स्वर्गयागयोश्च साध्यसाधनभावावगममन्तरेण तस्याधिकारनिर्वाहासम्भवादवश्यं क्रियायाः साधनत्वं स्वर्गस्य च साध्यत्वमभ्युपगन्तव्यमतश्च क्रियायाः फलं प्रति गुणभावान्न प्राधान्यमप्राधान्याच्च न वाक्यार्थत्वम् , तदुक्तम्(१) "कर्माण्यपि जैमिनिः फलार्थत्वात्" इति,

का चेयं क्रिया वाक्यार्थ इत्युच्यते य एष यागादिर्भावार्थो धातुवाच्य उत प्रत्ययार्थः कश्चित्तदतिरिक्त इति, तत्र भावार्थस्य काम्यमानसाधनत्वादप्राधान्यमुक्तमेव, प्रत्ययार्थो ऽपि काम्यमानभावार्थगतसाध्यसाधनभावापरित्यागेनैव प्रतीयमानो वाक्यार्थतामेति नान्यथेति, स चायं परेषामपि पक्षः तस्मान्न क्रियामात्रपर्यवसायी वाक्यार्थ इति सिद्धम् ,

## फलापेक्षया पुरुषस्य प्राधान्यात्तस्य वाक्यार्थत्वाशङ्कनम्-

किमिदानीं फलस्यैव वाक्यार्थत्वं (क्रियायाः) कथमुत्सृष्टम् , अप्राधान्यादिति चेत् फले समानं फलमपि पुरुषार्थत्वादप्रधानम् न हि स्वर्गः स्वतन्त्र एव सत्तां

(१) जैमिनिसूत्रम् अ. ३ पा. १ सू. ४ ।

लभतामिति यतते पुरुषः किं तु स्वोपभोग्यतयैव सर्वमभिलषतीति अतस्त- स्यापि तदर्थत्वान्न प्राधान्यम्, आह च(१) "फलं च पुरुषार्थत्वात्" इति,

हन्त तर्हि पुरुष एव वाक्यार्थो भवतु स ह्यनन्यनिष्ठः स्वतन्त्रत्वात, उच्यते, पुरुषो ऽप्यौदुम्बरीसंमार्जनादिषु विनियुज्यते एव यजमानसंमिता औ- दुम्बरी भवतीति तस्यापि तदर्थत्वमुक्तं च(२) "पुरुषश्च कर्मार्थत्वात्" इति,

## क्रियाफलपुरुषाणां वाक्यार्थत्वनिराकरणम्–

यद्येवं संकटे पतिताः स्मः न विद्मः किं विदध्महे क्रिया हि फलार्था फलं च पुरुषार्थं पुरुषः क्रियार्थ इति परिवर्तमाने चक्रे कस्य प्राधान्यं शिष्मः कस्य वाक्यार्थत्वम्,

उच्यते, पुरुषस्तावन्न वाक्यार्थः आख्यातवाच्यत्वे एव तस्य विवदन्ते का कथा वाक्यार्थत्वस्य, ननु कर्त्तरि लकार इति स्मरणात्कथं नाख्यातवाच्यः कर्त्ता, को ऽयं लकारो नाम, स हि वर्त्तमाने लडिति विधाय कर्त्तरि शप् युष्मदि मध्यमः अस्मद्युत्तमः शेषे प्रथमः तिप्तस्झीति बहुषु बहुवचनं द्व्येक- योर्द्विवचनैकवचने इति वाक्यान्तरे विभज्य विवृतः, तदेतानि कारकसंख्या- विभक्तिविधायीनि सूत्राण्येकवाक्यतया व्याख्येयानि एकार्थविषयत्वात्, एको हि पचतीत्यादिशब्दस्तैर्व्याक्रियते तदेवमेष वाक्यार्थो भवति, कर्तुरेकत्वे एक- वचनं तिप् कर्तृद्वित्वे द्विवचनं तस् कर्तृबहुत्वे बहुवचनं झि इति, सेयं कर्तृसं- ख्या ऽऽख्यातवाच्या भवति न कर्तेति कुतस्तस्य वाक्यार्थत्वमलं चानया शा- स्त्रान्तरगर्भया द्राघीयस्या कथया पुरुषस्तावन्न वाक्यार्थः, फलमपि न वाक्यार्थः, सिद्धासिद्धविकल्पानुपपत्तेः सिद्धस्य तावत्फलस्याभिधानमेव नास्ति काम्यमा- नत्वेन निर्देशात्।

## भावनाया वाक्यार्थत्वनिरूपणम्–

साध्यमानत्वपक्षे तु साक्षात्तत्सिद्ध्यवेदनात्।
व्यापार एष तन्निष्ठस्तर्हि वाक्यार्थ उच्यताम्॥
अत एव हि वाक्यार्थं भावनां प्रतिजानते।
यथोचितफलाढ्यां च त्रयसम्बन्धबन्धुराम्॥

## भावनास्वरूपोपादनम्––

केयं भावना नाम, भाव्यनिष्ठो भावकव्यापारो भावना, भाव्यं हि स्वर्गादि

(१) जैमिनिसूत्रम् अ. ३ पा. १ सू. ५।
(२) जैमिनिसूत्रम् अ. ३ पा. १ सू. ६।

फलं साध्यमानत्वात्साध्यत्वं चास्य भवनक्रियाकर्तृत्वात् भवनक्रियायां च कर्तृत्वमुत्पत्तिधर्मकस्य वस्तुनो दृष्टम्, न नित्यं भूतस्य नापि नित्यमभूतस्य यथाऽऽह—

नित्यं न भवनं यस्य यस्य वा नित्यभूतता।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव(१)॥

स्वर्गादिश्च काम्यरूपो ऽर्थः खतत्पुष्पाभ्यां विलक्षण इति भाव्यो भवति, तन्निष्ठस्तदुत्पादकश्च पुरुषव्यापारो यस्स भावना सा ण्यन्तेन भवतिनोच्यते, प्रकृत्यर्थस्य भवतेः कर्त्ता यः स्वर्गादिस्स एव ण्यन्तस्य तस्य कर्मतां प्रतिपद्यते, कर्त्ता त्वस्य प्रयोजकः पुरुषः, णेश्चार्थः णिज्वाच्यः प्रयोजकव्यापारः, पुरुषो हि भवन्तं स्वर्गादिमर्थं स्वव्यापारेण भावयति सम्पादयति स तत्संपादको व्यापारो भावनेत्युच्यते,

ननु व्यापारः क्रियैव न तदतिरिक्तस्य व्यापारस्यासम्भवात्क्रियाव्यापारपक्षश्च प्रतिक्षिप्तः, उच्यते, न क्रियामात्रं भावना ऽपि तु परिदृश्यमानपूर्वापरीभूतयज्यादिभावस्वरूपातिरिक्तः पुरुषव्यापारः प्रत्ययात्प्रतीयमानो भावना, यथाऽऽह—

न सा केन चिदुत्पाद्या जनिका सा न कस्य चित्।
केवलं जननी ह्येषा जन्यस्य जनकस्य चेति॥

क्रियाकारकादिविलक्षणैव सा शब्दात्प्रतीयते इत्यर्थः, ननु च यजेतेत्यत्र प्रकृत्यर्थो यागादिक्रिया प्रत्ययार्थस्तु प्रेरणारूपो विधिः कर्तृसंख्यादिश्च न तु धात्वभिधीयमानव्यापारव्यतिरिक्तो भावनाख्यः प्रत्ययात्पुरुषव्यापारः प्रतीयते न हि भावनावाचिनीं कांचिद्विभक्तिं स्मरति पाणिनिः लिङादिमिव विध्यादौ तस्मान्न भावना वाक्यार्थः,

उच्यते भावना ऽपि प्रतीयते एवाख्यातादि नैपुण्येन शाब्दी प्रतीतिरवमृष्यते।

आस्तां विधिपदं तावद्वर्त्तमानापदेशिनः।
शब्दाद् यजत इत्यादेर्भावना न न गम्यते॥

पचति पठति गच्छतीति अतो यथा पाकादिर्धात्वर्थः प्रतीयते तथा सर्वानुगतः कर्तृव्यापारो ऽपि पाकाद्युपजनापाये ऽपि व्यापारप्रतीतेरनपायात्, यथा द्यौपगवः कापटवः औपमन्यव इत्युपगुप्रभृतीनामुद्धारं च निक्षेपं च प्रत्ययार्थो ऽनुवर्त्तते तद्धितान्तेषु तथा ऽऽख्यातेष्वपि सो ऽनुवर्त्तमानो दृश्यते,

अपि च पचतीत्याख्यातपदस्य यदार्थो व्याचिख्यासितो भवति तदा पाकं

---

(१) तन्त्रवार्तिके अ० २ पा० सू० १। अयमर्थः य एव हि प्रवृत्तभवनः सम्भावितभवनो वाऽन्येन प्रयुज्यते स एव क्रियमाणत्वेनावधार्यते यश्चासम्भावितभवनो नित्यो वा यथा खपुष्पमाकाशं वा न तं कश्चित्कुर्वन्नुपलभ्यते इति।

करोतीति पाकशब्देन द्वितीयान्तेन साध्यं धात्वर्थं व्याचष्टे कर्तृव्यापारात्मकं प्रत्ययार्थं करोतीति पदेन,

किं च किं करोति देवदत्त इति पृष्टाः सन्तो द्वये वक्तारो भवन्ति करोति पाकमिति पचतीति वा तदिदमुभयरूपमप्युत्तरमेकार्थमन्यथा न तेन प्रष्टा प्रत्याय्येत, तस्मात्पाकं करोतीति पदद्वयस्य यो ऽर्थः स एवार्थ एकस्य पचतीति पदस्य, अत्रापि पचत्यदर्थादन्यः करोत्यर्थः प्रतीयते एव यो ऽसावन्यः करोत्यर्थः स भावना,

आह न कर्तृसंख्यादिव्यतिरेकेण प्रत्ययाद्धात्वर्थातिरिक्तं व्यापारं प्रतिपद्यन्ते प्रतिपद्येरंश्चेत्करोतीत्यतो ऽपि शब्दात्प्रतिपद्येरन् न च करोतीत्यत्र प्रकृतिप्रत्ययवाच्ये क्रिये विभज्य दर्शयितुं शक्येते,

उच्यते, नेदं साधु बुध्यसे—

यथा पाकं करोतीति प्रतीतिर्नास्ति लौकिकी ।
प्रत्ययार्थः करोत्यर्थे पचत्यादौ तु वर्त्तते ॥
कर्तृसंख्याप्रतीतौ च न विवादो ऽस्ति कस्य चित् ।
तावता निह्नवः कार्यो न तु व्यापारसंविदः ॥

करोतीत्यादिशब्दाभिधेयया ऽनया यथा न भवितव्यं तथा विशिष्टेभ्यः शब्देभ्यस्तत्प्रतीतिरिष्यते न सर्वेभ्यः, के पुनस्ते विशिष्टाः शब्दा ये भावनामभिदधति, उच्यते—

भावार्थाः कर्मशब्दा ये तेभ्यो गम्येत भावना ।
यजेतेत्येवमादिभ्यः स एवार्थो विधीयते ॥

भवन्ति के चिद्भावार्था ये न कर्मशब्दाः यथा भावो भवनं भूतिरिति, भवन्ति च के चित्कर्मशब्दा न भावार्थाः श्येनादयः कर्मनामधेयतया प्राक्समर्थिताः, ये तु भावार्थाः कर्मशब्दा यजते ददाति जुहोति इत्येवमादयस्तेभ्यो भावनाख्या क्रिया गम्यते तैरेव लिङादिविभक्त्यन्तैः सो ऽर्थो ऽभिधीयते यजेत दद्याज्जुहुयादिति, यद्यर्थः ण्यन्तेनावगम्यते भावयेदिति च करोतिशब्दादपि केवलात्कर्तृव्यापारो न नासावगम्यते, स च यागादिकर्मणा नानुरक्तेन प्रयोगयोग्यतां प्रतिपद्यते इति विशिष्टेभ्य एव यजत्यादिशब्देभ्यो भावनाख्यो ऽनुष्ठेयः पुरुषव्यापारः प्रतीयते इति सिद्धम् ।

क्रियाविशेष एवायं व्यापारो ज्ञातुरान्तरः ।
स्पन्दात्मकबहिर्भूतक्रियालक्षणविलक्षणः ॥

इत्येवं के चित् ।

पुरुषस्य प्रयत्नो वा भावनेत्यभिधीयते ।
औदासीन्यदशापायं पुमान्येन प्रपद्यते ॥

स यत्नो यागहोमादिक्रियानिर्वृत्तिकारणम् ।
तस्य तद्व्यतिरिक्तत्वं प्रायः सर्वो ऽनुमन्यते ॥
स चायमात्मधर्मो ऽपि न विभुत्वादिवन्मतः ।
साध्यरूपाभिसम्बन्धाद्धत्ते विषयतां विधेः ॥

इत्यपरे ।

अन्ये धात्वर्थसामान्यं भावनामभ्युपागमन् ।
यागदानाद्यनुस्यूतं रूपं गोत्वादिजातिवत् ॥

यथा हि शाबलेयादिष्वनुगतं गोरूपमवभासते व्यावृत्तं च शाबलेयादिरूपमेवमिहापि यागादिकर्मणामनुगतं च व्यापाररूपं प्रतिभासते परस्परविभक्तं च यागादिरूपं यत्तदनुगतं व्यापाररूपं सा भावना, यथा च शाबलेयाद्यननुरक्तं पृथक्त्वेन गोत्वं दर्शयितुमशक्यमेवमिहापि शुद्धं यज्याद्यननुरक्तं व्यापाररूपं दर्शयितुमशक्यम्, तदुपरक्तत्वेन तस्य सर्वदाऽवगमान्न चैतावता तस्य नास्तित्वं सुखदुःखाद्यवस्थानुगतस्येवात्मनः, तथा च किं करोतीत्यनवगतविशेषव्यापारसामान्यप्रश्ने सति पचति पठति इति तद्विशेषोत्तरवचनमनुगुणं भवतीति, तच्च सामान्यरूपमपि न गोत्वादिवत्क्रियात्ववद्वा सिद्धतया ऽवभासते येन विधेरविषयः स्यात्,

अपि च यजेत दद्याज्जुहुयादिति सर्वत्र पूर्वापरीभूतस्वभावं तद्व्यापारसामान्यमवगम्यते विधेश्च विषयतां प्रतिपद्यते तदिदं सकलधात्वर्थसाधारणं साध्यमानावस्थं व्यापारसामान्यं भावनेत्युच्यते, तस्मिंश्च पक्षे धातुवाच्यत्वमपि भावनाया वक्तुं शक्यते, पाकादिशब्देभ्यो धातौ सत्यपि तदप्रतीतेर्न धातुवाच्यत्वं भावनाया इति चेद् भवत्यादौ सत्यपि तर्हि प्रत्यये तदप्रतीतेः प्रत्ययवाच्यत्वमपि न स्यात्, तदलमनेन निर्धारणप्रयत्नेन सर्वथा धातोर्वा प्रत्ययाद्वा भावना ऽवगम्यते इति सिद्धम् ।

## भावनायास्त्र्यंशापेक्षित्वम्—

सा धातोः प्रत्ययाद्वा ऽपि भावना ऽवगता सती ।
अपेक्षतेंऽशत्रितयं किं केन कथमित्यदः ॥

भावयेदित्यवगते नूनमपेक्षात्रयं भवति किं भावयेत्केन भावयेत्कथं भावयेदिति, तत्र किमित्यपेक्षा स्वर्गकामपदेन पूर्यते किं भावयेत्स्वर्गमिति,

ननु स्वर्गकाम इति पुरुषनिर्देशो ऽयं न फलनिर्देशः, सत्यम्, स्वर्गपरस्त्वयं निर्देशः, उक्तं हि निरतिशयप्रीतिवचनः स्वर्गशब्दः प्रीतिश्च नान्यार्थेत्यप्युक्तम्, साध्यत्वेन च स्वर्गः काम्यते इति स एव हि किमित्यंशे निपतति स्वर्गं भाव-

येदिति, स्वर्गं कामयते इति च व्युत्पत्तौ विस्पष्टमेव तस्य साध्यत्वम्, बहुव्रीहावपि तस्यैव साध्यत्वं विधिवृत्तपर्यालोचनयाऽवधार्यते,

एवं स्वर्गं भावयेदित्यवगते केन भावयेदित्यपेक्षायां यागेनेति सम्बध्यते, ननु यागेनेति न श्रूयते किं तु यजेतेति तच्चाख्यातपदं प्रकृतिप्रत्ययात्मकसमुदायरूपम्, तत्र लिङः प्रत्ययार्थस्य भावना वाच्येत्युक्तम्, यज इति तु धातुमात्रमवशिष्टं तस्य कृदन्तस्य तृतीयान्तस्य यागेनेति यो ऽर्थः स कथमेकाकिना तेन प्रत्याय्येत, उच्यते भावना चेत्प्रत्ययार्थ इति सोढमायुष्मता यागेनेत्यभिसम्बन्धः सोढव्य एव यो हि तस्यां यथा सम्बन्द्धुं योग्यः तमसौ तथा प्रतीक्षते नान्यथेति करणाकाङ्क्षापरिपूरणे सम्बन्धयोग्यो यजिरिति तथैवैष भावनया ऽभिसम्बध्यते।

अप्रातिपदिकत्वाद्धि तृतीया तत्र मा स्म भूत्।
शब्दसामर्थ्यलभ्या तु नूनं करणता यजेः॥

कस्य पुनः शब्दस्य सामर्थ्यमेतद्भावनावाचिन इति ब्रूमः, तृतीययैव करणत्वमभिधानीयमिति नेयं राजाज्ञा ततस्तदवगतेस्तथा ऽभ्युपगम्यते एवमिहापि स्वर्गकामो यजेतेति तथा ऽवगतिर्भवन्ती किमिति न मृष्यते।

आख्यातात्साध्यता या च धात्वर्थस्यावगम्यते।
द्वितीया श्रूयते तत्र किं वा तदभिधायिनी॥

नन्वेवं तर्हि धात्वर्थस्य साध्यताऽवगतेः किमित्यंशे यजिना पतितव्यं किं भावयेद्यागमिति केनेत्यपेक्षिते वाक्यान्तरसमाहितं व्रीहिभिरित्यादि सम्बध्यताम्, न पुनर्यजिः साध्यरूपव्यापाराभिधायिप्रत्ययोपसर्जनीभूतकर्मतामतिप्रत्यासन्नामनारुह्य दूरवर्त्तिनीं करणतामधिरोढुमर्हति,

उच्यते स्यादेतदेवं यदि हि स्वर्गकाम इति न श्रूयेत तस्मिंस्तु श्रुते नैवं भवितुमर्हति, कुतः—

स्वर्गे साध्यत्वसम्बन्धादलब्ध्वा साध्यताऽन्वयम्।
यजिस्तदानुगुण्येन करणांशे च तिष्ठति॥

स्वर्गस्य हि काम्यमानत्वात्प्रीत्यात्मकत्वेन चानन्यार्थत्वात्साध्यतायां योग्यत्वात्किमित्यंशोपनिपाते सिद्धे तत्रालब्धनिवेशो यजिस्तदपेक्षितां करणतामेव योग्यत्वादवलम्बते।

सामानाधिकरण्यं च ज्योतिष्टोमादिभिः पदैः।
एवं सत्युपपद्येत करणत्वानुवादिभिः॥

कर्मनामधेयत्वं ज्योतिष्टोमादीनां शब्दानामुक्तम्,

ननु साध्यत्वपक्षसाक्षितामपि कर्मनामधेयानि भजन्ते अग्निहोत्रं जुहोतीति, नैष दोषः, साध्य एव भवन्भावार्थः साधनतामवलम्बते तत्रापि हि स्वर्गभावना

यामग्निहोत्राख्यो होमः करणमेवान्यथा स्वर्गकामपदानन्वयप्रसङ्गादित्युक्तम्, नामधेयपदं तु किंचित् कर्मतामनुवदति अग्निहोत्रमित्यादि किञ्चित्करणतां ज्योतिष्टोमेनेति, तस्माद्यजेः करणत्वेनैवान्वय इति सिद्धम्,

यत्तु प्रत्यासन्नत्वात्साध्यांशोपनिपाविततेत्युच्यते तदयुक्तम्, योग्यत्वाविरोधिनी प्रतिपत्तिः सम्बन्धकारणं न तद्विपरीता योग्यत्वं च स्वर्गस्यैव साध्यतायां यजेश्च करणतायामित्युक्तम्,

एवं यागेन भावयेदित्यवगते कथमित्यपेक्षायामितिकर्त्तव्यता तद्वाक्यपठिता वाक्यान्तरनिवेशिता वा सम्बध्यते, तद्वाक्योपात्ता तावद्यथा "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा पशुकामो ह्येतेन यजेते"ति, वाक्यान्तरोपात्ता "व्रीहीनवहन्ति" "तण्डुलान्पिनष्टि" "समिधो यजति" "तनूनपातं यजति" इति।

इतिकर्त्तव्यता हीष्टा दृष्टादृष्टप्रयोजना।
प्रायः सर्वत्र भावार्थे कथमंशोपपादिनी॥
दृष्टोपकारद्वारेण सम्बन्धे पेषणादिका।
इतिकर्त्तव्यता ज्ञेया सन्निपत्योपकारिणी॥
भावार्थमनुगृह्णाति या त्वदृष्टेन वर्त्मना।
समिदाद्यात्मिकामाहुस्तामारादुपकारिणीम्॥
एवमंशत्रयाश्लेषलब्धानुष्ठानयोग्यताम्।
भावनामीदृशीं प्राप्य वृत्तिर्विधिनिषेधयोः॥

दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्रानन्तरोक्तनीत्यैष वाक्यार्थो जातः दर्शपौर्णमासेन यागेन स्वर्गं भावयेदनयाऽग्न्यन्वाधानादिकयेतिकर्त्तव्यतयेति,

किमर्थं पुनर्विधिराश्रीयते वर्त्तमानापदेशिष्वप्याख्यातेषु भावना प्रतीयत इति दर्शितवान्भवानतः किं विधिना, तस्य ह्याश्रयणं स्वर्गयागयोः साध्यसाधनभावबोधनाय प्रवृत्तिनिवृत्तिसिद्धये वा, साध्यसाधनसम्बन्धस्तावदाकाङ्क्षासन्निधियोग्यतापर्यालोचनया वर्त्तमानापदेशिनो ऽप्याख्याताद्भावनावगमे सति भवत्येवान्तरेणापि विधिम्, प्रवृत्तिरपीच्छानिबन्धना स्वर्गस्य साध्यत्वे यागस्य च साधनत्वे ऽवधारिते यः स्वर्गमिच्छेत्स तत्सिद्धये प्रवर्त्तते एव यस्तु नेच्छेत्तस्य विधिरपि किं कुर्यात्, न ह्यप्रवर्त्तमानस्य पुंसो विधिर्निगडे पदं निदधाति रज्ज्वा वा बाहू बध्नाति निषेधाधिकारे ऽपि सुरापानब्राह्मणहननादेः प्रत्यवायसाधनत्वावधारणात्तत्परिजिहीर्षया पुरुषो निवर्त्ततेति प्रवृत्तिनिवृत्त्योर्न कारणं विधिरिति तदर्थमपि विधिपदाश्रयणमसांप्रतम्,

विधिस्वरूपनिरूपणम्--

कश्चायं विधिर्नामेत्येतदपि न विद्मः, ननु चाहुः—

विधेर्लक्षणमेतावदप्रवृत्तप्रवर्त्तनम् ।
अतिप्रसङ्गदोषेण नाज्ञातज्ञापनं विधिः ॥

बाढं श्रुतो ऽयं श्लोकः किं तु को ऽसावप्रवृत्तप्रवर्त्तक इति न जानीमः, प्रवर्तकस्वरूपे हि संशेरते प्रवादुका इति किं लिङादिः शब्द एव प्रवर्तकस्तद्व्यापारो वा तदर्थो विनियोगः फलं वा स्वर्गादिश्रेयः साधनत्वं वा रागादिर्वा प्रवर्तकस्वरूपाऽनवधारणाद्विधेरप्यनवधारणमिति, यत्तावदुक्तं किं विध्याश्रयणेनेति तत्रोच्यते—

यदयं साधनत्वेन यजेरभिहितो ऽन्वयः ।
स्वर्गस्य च फलत्वेन स एव महिमा विधेः ॥

विधिवचनमन्तरेण हि स्वर्गकामो यजेतेति पुरुषलक्षणार्थः स्वर्गकामशब्दः शुक्लो होतेतिवत्स्यात्, ततश्चैकपदोपादानलक्षणप्रत्यासत्तिसंबन्धनिसर्गघटितपूर्वापरीभूतस्वभावधात्वर्थसाध्यताऽतिक्रमेण दूरात्स्वर्गस्य साध्यत्वमन्यत्रोपसर्जनीभूतस्य कथं कल्पयितुं शक्यते, तस्मादेष विशिष्टः साध्यसाधनसम्बन्धो विधिप्रसादलभ्य एव भवति नान्यथेति विधिराश्रयणीयः ।

कथं पुनर्विधिरप्यमुं साध्यसाधनभावं बोधयति, इत्थं बोधयति स हि सप्रत्ययप्रवर्तकस्वभावः, न चापुरुषार्थरूपे व्यापारे पुरुषः प्रेर्यमाणो ऽपि सत्यप्रत्ययः प्रवर्तमाने ऽपि पुंसि प्रवर्तकत्वाख्यनिजस्वरूपसंकोचमाशङ्कमानो विधिः पुरुषार्थस्वभावं स्वर्गं साध्यतया व्यवस्थापयति यागं चास्य साधनतया इति एवं ह्यवबोधयतो ऽस्य प्रवर्तकत्वं निर्वहति ।

यत्तु दर्शिते स्वर्गादौ फले न प्रवर्तते चेत्पुरुषः किं विधिः कुर्यादिति तदप्ययुक्तम्, न हि वाय्वादिवत्पुरुषस्य प्रवर्तको विधिः वाय्वादिः खलु सप्रत्ययमपि तदितरमपि प्रवर्तयति विधिस्तु सप्रत्ययस्यैव प्रवर्तकः सप्रत्ययस्य चैतावत्प्रवर्तनं यत्प्रवर्तितो ऽहमिति ज्ञानजननं न फलमदर्शयता विधिना सप्रत्ययस्य ज्ञानं जनयितुं शक्यं फले तु दर्शिते सति तदस्य ज्ञानं जनितमेव अनेन जनिते ज्ञाने प्रमाणवृत्तेन प्रवर्त्तित एवासौ विधिना पुरुषः आलस्यादिना ऽनर्थित्वेन वा बहिः प्रवृत्तिपर्यन्ततया चेन्न प्रवर्त्तते मा प्रवर्तिष्ट विधिना तु स्वकर्त्तव्यं कृतं प्रवर्तितः अहमिति ज्ञानजननात्, अन्यो हि प्रवर्तनावगमो ऽन्यश्च बाह्यो व्यापारः ।

एवं विधिवशादेव साध्यसाधनभावधीः ।
सा हि प्रथमनिर्वृत्तप्रेरणाज्ञानपूर्विका ॥

यजेतेति प्रेरणा प्रतीयमाना साध्यसाधनसम्बन्धमनवबोधयन्ती विधौ न

निर्वहतीति तत्कृतस्तदवबोध उच्यते, निषेधे न हन्यादिति निषेध्यमानस्य भावार्थस्यानर्थतामनवबोधयन्विधिर्न रागतः प्रवर्तमानं पुमांसं निरोद्धुमुत्सहते इति विधेयवन्निषेध्ये ऽपि तस्यैव व्यापार इत्यवश्याश्रयणीयो विधिः,

यश्चैष पर्यनुयोगः किमर्थं विधिराश्रित इति स खलु सरलमतिकृत इव लक्ष्यते, न हि वयमद्य कृतं विधिमाश्रयेम जहीमो वा प्रतिपत्तारो हि वयं वेदस्य न कर्तारः, तत्र च सविधिकानि यजेत स्वर्गकाम इतिप्रभृतीनि वाक्यानि श्रूयन्ते तेषां मीमांस्यमानो ऽर्थ ईदृगवतिष्ठते स्वर्गः साध्यो यागः साधनमिति स चायं विधिसामर्थ्यलभ्य इति युक्तं विधेराश्रयणम् ।

## प्रवर्तकस्वरूपनिरूपणम्-

यत्तु प्रवर्त्तकस्वरूपानिश्चयाद्विधेरनिश्चय इति तत्राप्युच्यते, फलं तावन्न प्रवर्त्तकं सिद्धासिद्धविकल्पानुपपत्तेः, सिद्धस्य फलस्याप्रवर्त्तकत्वं सिद्धत्वादेव न हि यद्यस्यास्ति स तदर्थं यतते, नाप्यसिद्धस्य खरविषाणप्रख्यस्य फलस्य प्रवर्तकत्वं युक्तमदृष्टत्वात् ।

अथ कामनाविषयीकृतं फलं प्रवर्तकमिष्यते सेयं कामनैव प्रवर्त्तिकोक्ता भवति न फलम्, उपजातप्रवृद्धतररागस्यापि काम्यमानोपायपरिच्छेदमन्तरेण प्रवृत्त्यनुपपत्तेः, न हि स्वर्गकामः सांग्रहिणीमनुतिष्ठति तद्वरं श्रेयः साधनं प्रवर्तकम्, लोके ऽपि चैवमेव व्यवहारो दृश्यते हरीतक्यादीनामारोग्यसाधनतां वैद्याचार्यचोदनातोऽवगत्य तदुपायादावातुरो जनः प्रवर्त्तते तृप्तिसाधनतामोदनस्य मन्यमानः तद्भक्षणाय बुभुक्षितः प्रवर्त्तते इति श्रेयःसाधनत्वमेव प्रवर्त्तकम्,

एतदपि न चतुरस्रम्, श्रेयःसाधनत्वं ह्यनवगतमवगतं वा प्रवर्तकं भवेत्, नानवगतमव्युत्पन्नस्य प्रवृत्तेरदर्शनात्, यो हि हरीतकीनामारोग्यहेतुतां न कुतश्चिदधिगतवान्नासौ तदर्थ्यपि तामुपयुङ्क्ते तस्मात्तद्बोधहेतुः प्रवर्तकः स च दृष्टे विषयेऽन्वयव्यतिरेकादेरपि सम्भवति किं तेन, अदृष्टे तु विषये श्रेयःसाधनाधिगमः शब्दैकनिबन्धन इति तदधिगमोपायः शब्द एव प्रवर्तकः, अत एव शब्दो ऽपि न स्वरूपमात्रेण प्रवर्तको वाय्वादितुल्यत्वप्रसङ्गात्, यदि पवन इव पिशाच इव कुनृप इव शब्दः प्रवर्तको भवेद् अनवगतशब्दार्थसम्बन्धोऽपि श्रवणपरवशः प्रवर्त्तेत न चैवमस्ति, तस्मादर्थप्रतीतिमुपजनयतः शब्दस्य प्रवर्तकत्वम्, न च नामलिङादिरेव शब्दः प्रवर्तकाभिधानद्वारेण प्रवर्तको भवितुमर्हति, शब्दस्य च ज्ञापकत्वाच्चक्षुरादिकारकवैलक्षण्ये सत्यपि प्रतीतिजन्मनि करणत्वमपरिहार्यं करणं च कारकं कारकं च न निर्व्यापारं स्वकार्यनिर्वृत्तिक्षममिति व्यापारस्तस्यावश्यम्भावी, लिङादेः शब्दस्य न प्रतीतिजन्ममात्रे व्यापारः किं तु पुरुषप्रवृत्तावपि तथावगमात्, लिङर्थावगमे सति प्रवृत्तिर्दृश्यते इति तत्रापि लिङ्व्यापारः प्रभवति, स चायं लिङादिव्यापारः शब्दभावनानामधेयो विधिरित्युच्यते स एव च प्रवर्तकः

## भावनाद्वैविध्यम्—

इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते शब्दभावना ऽर्थभावना चेति,

तत्रार्थभावना तावद्धात्वर्थातिरिक्तप्रयोजकव्यापारात्मिका दर्शितैव, यो भवनक्रियाकर्तृविषयः प्रयोजकव्यापारः पुरुषस्थो यत्र भवनक्रियायाः कर्ता स्वर्गादिः कर्मतामापद्यते सो ऽर्थभावनाशब्देनोच्यते व्याख्यातश्चासौ,

यस्तु शब्दगतः प्रयोजकव्यापारः यत्र पुरुषप्रवृत्तिः साध्यतां प्रतिपद्यते सा शब्दभावना यथा ह्युक्तम् "अभिधाभावनामाहुरन्यामेव लिङादयः(१)" इति,

लिङन्तशब्दश्रवणे हि यथा यज्याद्यवच्छिन्नं स्वव्यापारं पुरुषो ऽधिगच्छति तथा तदनुष्ठाने प्रेरितो ऽहमित्यपि प्रतिपद्यते तेनानुष्ठेयार्थप्रतिपादने इव प्रेरणायामपि शब्दस्य सामर्थ्याद् भावनाद्वयप्रतिपादकं लिङादियुक्तं वाक्यमिष्यते,

ततः पुरुषव्यापारश्चार्थभावना शब्दव्यापारश्च शब्दभावना ऽवगम्यते, शब्दव्यापारात्मकत्वाच्च शब्दभावनाशब्देनाभिधीयते, अनवगता च सती न कार्याङ्गमिति शब्देन सा ऽभिधीयते ऽपि, तदुक्तम् "अभिधत्ते करोति च" इति ।

## शब्दभावनायास्त्र्यंशापेक्षित्वम्

ननु शब्दभावना ऽपि भावनाऽऽत्मकत्वादर्थभावनावदंशत्रयमपेक्षते एवेति तदस्या दर्शयितव्यम् , उच्यते भव्यांशे तावदस्याः पुरुषप्रवृत्तिरुपनिपततीति उक्तमेव पुरुषप्रेरणात्मको हि विधिः शब्दभावनेति तत्साध्या पुरुषप्रवृत्तिरेव तत्र

---

(१) तन्त्रवार्तिके अ० २ पा० १ सू० १ । 'अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः' इत्युत्तरार्द्धम् , अयमभिप्रायः लिङाद्युच्चारणात् प्रागसिद्धस्य विधेः अगृहीतसम्बन्धतया लिङ्पदवाच्यता न सम्भवतीति लिङाद्युच्चारणात्प्रागेव विधेः सिद्धिर्वक्तव्या ततश्च लिङो विधिपरत्वं न सम्भवतीतिशङ्कायां शब्दश्रवणानन्तरभावि प्रवृत्तिहेतु प्रेषणाध्येषणादिव्यापारानुवृत्तप्रवर्तनासामान्यं लिङभिधत्ते इति निर्विशेषं न सामान्यमिति न्यायेन तद्विशेषापेक्षायामपौरुषेये वेदे पुरुषधर्मस्य प्रेषणादेरसम्भवात्तद्व्यतिरिक्त एव विध्याख्यो विशेषः परिशेषाल्लक्षणया गम्यते इति सम्बन्धग्रहणानपेक्षत्वेन प्राक् सिद्ध्यनपेक्षणेनाविरुद्धा शब्दव्यापारता इत्युत्तरं सूचयितुमभिधाशब्दः । कारिकार्थस्तु अभिदधातीति अभिदधात्यनेनेति वा व्युत्पत्त्या अभिधा शब्दः तस्य व्यापारो भावना । अन्यामित्यस्य अपरामित्यर्थः तथा च अन्यशब्देन शब्दभावनायाः पाश्चात्यमभिदधताऽर्थभावनाविषयत्वेन तदपेक्षत्वसूचनात् विध्यभिधायित्वं नार्थभावनाभिधायित्वबाधकं किन्तु तत्साधकमिति सूचितम् अर्थ्यते इति अर्थः कर्तरि एरच् अर्थशब्देन अर्थिनः पुरुषस्याभिधानं भावना च पुरुषधर्मः धर्मधर्मिणोश्चात्यन्तभेदाभावात् तादात्म्यं विवक्षित्वा अर्थात्मा चासौ भावना चेति विग्रहः इति।

भव्यतां प्रतिपद्यते, करणांशे तु तस्या नियोज्यविषयसमर्पकपदव्यापारो निविशते यथा हि यज्यादिना स्वर्गादिर्भव्यः सम्पद्यते इत्यर्थभावनायामसौ तत्करणतामवलम्बते एवमिहापि नियोज्यपुरुषप्रवृत्तिविषयाद्यवगमात्संपद्यते इति तदभिधायकशब्दव्यापारस्तत्र करणतां प्रतिपद्यते, इतिकर्त्तव्यतांशे तु अर्थवादपदव्यापारोऽस्या अवतिष्ठते केवलं विधिपदश्रवणे हि सति न तथा प्रवर्त्तयितुमुत्सहन्ते श्रोतारो यथार्थवादजनितबहुप्रकारकर्मप्राशस्त्यज्ञानपरितोषितहृदयाः सन्त इत्यर्थवादाः प्रवृत्त्यतिशयहेतवः, तेन तद्व्यापार इतिकर्त्तव्यतांशमस्याः पूरयतीति, एवं नियोज्यव्यापारो भव्यो विषयादिसमर्पकपदव्यापारः करणम् अर्थवादव्यापार इतिकर्तव्यतेति सेयं त्र्यंशा शब्दभावना सैव च विधिः,

## विधिभावनयोः संबन्धनिरूपणम्

न च विधेर्वाक्यार्थानन्वयलक्षणो दोष आशङ्कनीयः, यत एकप्रत्ययोपादानलक्षणया प्रत्यासत्त्या तदन्वितावगमात्, आहुश्च—

विधिभावयेनास्त्वेकप्रत्ययग्राह्यताकृतः ।
धात्वर्थात्प्रथमं तावत्सम्बन्धोऽध्यवसीयते इति(१) ॥

विधिर्भावनायां पुरुषं नियुङ्क्ते, यथाऽऽह "स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते"(२) इति, तयोः कथमन्वयः स्यात् ।

ननु च त्वयैवोक्तं धात्वर्थात्पूर्वतरं तावद्भावनाया विधेश्च सम्बन्धोऽवगम्यते एकपदोपादानेऽपि .धात्वर्थस्तावत्प्रकृत्यंशाभिधेयः विधिभावने तु द्वे अपि प्रत्ययांशेनाभिधीयेते इति अतश्च स्वच्छैव भावना विधिना स्पृश्यते न विषयानुरक्ता, स्वच्छा न प्रयोगयोग्या भवति या च फलकरणेतिकर्तव्यतांशपरिपूर्तिप्रस्थिता प्रयोगयोग्या न तां विधिः स्पृष्टवान् अविधिस्पृष्टेषु च धात्वर्थकारकादिषु किमितिं स चेत् पुरुषः प्रवर्त्येतेति उच्यते यद्यपि विधिरनधिगतधात्वर्थानुरागतया स्वच्छामेव भावनामेकाभिधानत्वात्प्रथममाक्षिपति तथा हि तादृशि तस्यां सप्रत्ययप्रवर्तमानात्मनिजस्वरूपनिर्वहणमलभमानो न तावत्येव विरमति किं तु परिणीतबालकन्यको वर इव तावद्विलम्बमानः प्रसारितहस्त आस्ते यावत्सर्वाङ्गसुन्दरी प्रयागयोग्या भावना भवति, आह च(३)—

"यद्यप्यन्यैरसंस्पृष्टां विधिः स्पृशति भावनाम् ।
तथाप्यशक्तितो नासौ तन्मात्रे पर्यवस्यति ॥

(१) श्लोकवार्तिके वाक्याधिकरणे श्लो० ७९ ।

(२) तन्त्रवार्त्तिके अ. २ पा. २ सू. १ ।

(३) श्लोकवार्तिके वाक्याधिकरणे श्लो. २७३-२७६ । विधिः यद्यपि अन्यैरसंस्पृष्टां स्वच्छां भावनां स्पृशति तथापि केवलाया भावनाया विधातुमशक्यत्वान्न

अनुष्ठेये हि विषये विधिः पुंसां प्रवर्त्तकः ।
अंशत्रयेण चापूर्णां नानुतिष्ठति भावनाम् ॥
तस्मात्प्रक्रान्तरूपो ऽपि विधिस्तावत्प्रतीक्षते ।
यावद्योग्यत्वमापन्ना भावना ऽन्यानपेक्षिणी ॥" इति ।

सा हि वाक्यान्तरोपात्तमप्यपेक्षते प्रकरणान्तराधीतमपि वाञ्छति प्रकृतिवद्भावलभ्यमपि याचते अर्थसामर्थ्यगम्यमपि स्पृहयति इत्येकविध एष शब्दप्रमाणमहिमेति, स चायं व्युत्पादनक्रम ईदृशो व्याख्यातृभिरुपदिश्यते इत्थमस्य वाक्यार्थः पुनर्भावनात्मा ऽवगम्यमानः एकयैव बुद्‌ध्या ऽनेकजातिगुणद्रव्यक्रियाद्यङ्गकलापकल्माषिततनुरवगम्यते तादृश्यैकैवेयं वाक्याद्वाक्यार्थबुद्धिः ।
आह च—

"भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता(१) ॥
एकयैव च बुद्‌ध्या ऽऽसौ गृह्यते चित्ररूपया ।
पदार्थाहितसंस्कारचित्रपिण्डप्रसूतयेति ॥"

एक एवायमतिदीर्घः क्रमविकस्वरः सकलाङ्गपरिपूरितभावनातत्त्वविषयः प्रतिभासः, यथा हि स्थाल्यधिश्रयणात्प्रभृत्या निरकाङ्क्षौदननिष्पत्तेरेकैवेयं पाकक्रिया सलिलावसेकतण्डुलावपनदर्वीविघट्टनास्रावणाद्यनेकक्षणसमुदायस्व-

---

तन्मात्रे पर्यवस्यति । अशक्तिमेवाह—अनुष्ठेय इति । किं च योग्यतापि सम्बन्धकारणं न चांशत्रयापरिपूर्णा भावना चेतनप्रवर्तनात्मकविध्यन्वययोग्येति । तस्मादिति । अयम्भावः प्रत्यासन्नत्वाद्विधिभावनयोरन्वयेन भवितव्यमित्येव प्रथममवगम्यते इयं चावस्था विधि स्पर्श इति विधिप्रक्रम इति चोच्यते तथा भावनान्वयावगमेऽपि विधिरयोग्यत्वात्तावद्भावनां विधातुं न शक्नोति यावत्सांशत्रयपरिपूर्णा न भवति इति सर्वांशपरिपूर्णामंशान्तरानपेक्षिणीं भावनां विदधाति इति ।

(१) श्लोकवार्तिके वाक्याधिकरणे श्लो. ३३०-३३१ । भावना एव वाक्यार्थः ननु शुक्ला गौरित्यादौ आख्याताभावात् कथं भावना वाक्यार्थोऽत आह—सर्वत्रेति । तत्राव्याख्यातपदमध्याहार्यमिति भावः । ननु प्रत्ययमात्रस्यार्थो भावना सा कथमनेकपदार्थाङ्कितो वाक्यार्थः स्यादत आह—अनेकेति । पदार्थान्तरानुरक्तरूपेणैवासौ वाक्यार्थो न स्वरूपेण तादृशी चासौ वाक्येनैवावगम्यते इति युक्तमस्या वाक्यार्थत्वम् । ननु अगृहीतायास्तस्या न वाक्यार्थत्वसम्भव इति कया बुद्धया सा गृह्यते इत्यत आह—एकयेति । ननु तादृशी बुद्धिर्वाक्येन न जन्यते वाक्यस्यावाचकत्वादत आह—पदार्थेति । प्रत्येकं पदजनितपदार्थबुद्धिजन्यविचित्रसंस्कारसमूहादेव स्मृतिरूपा सा बुद्धिर्जन्यत इति । युगपत्सन्निहिताः सर्वे पदार्थाः सर्वविशेषणविशिष्टभावनाबुद्धिं जनयन्तीति यावत् ।

भावा तथा प्रथमपदज्ञानात्प्रभृति आ निराकाङ्क्षवाक्यार्थपरिच्छेदादेकैवेयं शाब्दी प्रमितिः आह च—

"पदात्प्रभृति या चैषा प्रज्ञा ज्ञातुर्विजृम्भते ।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति" ॥

इति कृतमतिविस्तरेण,

सोऽयं वाक्यार्थः–भावनानामधेयः कर्तृव्यापारः, स्वर्गयागादिरर्थः, यस्तु व्यापारः प्रेषणरूपो लिङादेर्वाच्यः कार्यो वा तं विधिं सङ्गिरन्ते ।

## शब्दभावनाया वाक्यार्थत्वम्—

तदेतदननुमन्यमाना अन्ये प्रचक्षते योसौ शब्दभावनाख्यः शब्दव्यापारः शब्दस्य कार्यो ऽभिधेयश्च तमभिदधतः कुर्वतो वा शब्दस्य व्यापारान्तरमस्ति न वा, यदि तावन्नास्ति तदेष व्यापारान्तरनिरपेक्षस्वव्यापारमिवार्थमपि वदतु विश्राम्यतु व्यापारकल्पना, अस्ति चेदेतदभिधाने व्यापारान्तरं तदा ऽनवस्थाप्रतीकारः कश्चिदन्वेष्यः न चासौ दूरादपि लभ्यते भूतपरिस्पन्दव्यतिरिक्तव्यापारनिरासश्च प्रमाणसामान्यलक्षणे विस्तरेण कृत इत्यसौ मार्ग इहाप्यनुसरणीयः,

यश्चासौ व्यापारः क्रियते चाभिधीयते च स किं पूर्वमभिधीयते ततः क्रियते पूर्वं वा क्रियते पश्चादभिधीयते युगपदेव वाऽस्य करणाभिधाने इति, न तावत्पूर्वमभिधीयते अनुत्पन्नस्याभिधानानुपपत्तेः न ह्यजाते पुत्रे नामधेयकरणम्, अर्थासंस्पर्शी च तथा सति शब्दः स्यात्, तत एव न युगपदुभयमनुत्पन्नत्वानपायात् प्रयत्नगौरवप्रसङ्गाच्च, नापि कृत्वा ऽभिधानं विरम्य व्यापारासंवेदनात्,

अपि चायं तपस्वी लिङादिः प्रत्ययः सत्यपि गोवृन्दारकत्वे कथममुमतिबृहन्तं भारं वक्ष्यति कर्तारं च तत्संख्यां चाख्यास्यति अर्थभावनामभिधास्यते शब्दभावनां च करिष्यति तां च वदिष्यतीति दुर्वहो ऽयं भारः, कश्चायं शब्दभावनानामधेयस्य विधेर्वाक्यार्थे भावनायामन्वय इति वक्तव्यम् ।

ननूक्त एवैकप्रत्ययाभिधेयत्वलक्षणः सम्बन्ध इति, न ब्रूम आभिधानिकः सम्बन्धो नोक्त इति किं तु पुरुषव्यापारात्मिकाया अर्थभावनायाः प्रधानत्वेन वाक्यार्थत्वात्तदपेक्ष्यमाणफलकरणेतिकर्त्तव्यतांशपूरणेन स्वर्गकामादिपदान्तराभिधेयो ऽर्थः समन्वेति गुणत्वेन शब्दव्यापारस्तु तदपेक्षितमन्यतममपि नांशं पूरयितुमलमिति तत्र न गुणतामवलम्बते, न च द्वयोः प्रधानयोर्घटः पट इतिवद्वा पचति पठतीतिवद्वा सम्बन्ध उपलभ्यते,

अथार्थभावना शब्दभावनाख्यस्य विधेर्विषयसमर्पणेन गुणतामवलम्बते विधिः तर्हि वाक्यार्थः न भावना तस्या अप्राधान्यात्, अतो भावनाद्वयं प्रत्ययार्थ इति न हृदयङ्गममेतत्,

एकाभिधानाभिधेयत्वं न भावनयोरन्योन्यसमन्वये कारणम्, अक्षाः पादा

माषा इत्यादावदर्शनात् , किं च कस्यानुरोधेन द्वे भावने प्रत्ययवाच्ये इष्येते, उच्यते लिङ्गादिशब्दश्रवणे सति कार्ये च प्रेरणायां च न द्विरुत्पद्यते मतिः,

यद्येवमेक एव तादृशो ऽसौ लिङर्थो भवतु तदेकत्वाच्च न परस्परसमन्वयः चिन्तयिष्यते, न च प्रत्यये ऽप्यतिभार आरोपयिष्यते ।

## नियोगस्य वाक्यार्थत्वम्–

नन्वेकस्यापि लिङर्थस्य यदि शब्दः कार्यत्वं प्रेरणां च ब्रवीति ततस्तदवस्थ एवातिभारः, कश्चासावेकः कार्यात्मा प्रेरणात्मा च तस्यार्थः, उच्यते यो लिङादेः प्रत्ययादवशिष्यते यमभिवदतो न तस्यातिभारो यत्र न तद्व्यतिरेकेण प्रमाणान्तरं क्रमते स नियोगो नाम वाक्यार्थः, तथा हि शब्दव्यवहारतः शब्दानामर्थे व्युत्पत्तिरित्यत्र तावदविवादः, एवं व्यवहारे च वाक्यार्थे वाक्यस्य व्युत्पत्तिर्वाक्येन सर्वत्र व्यवहारात् , तत्र यजेतेत्यादितिङन्तपदयुक्तेषु वाक्येषु पदान्तराणामर्थः तावदास्ताम्, आख्यातार्थे ऽह्यवगते तदानुगुण्येनासौ स्थास्यति, आख्यातस्य च यजेतेत्येवमादेरर्थः परीक्ष्यमाणः प्रेरणात्मक एवावतिष्ठते यतः पदान्तरसन्निधाने सत्यपि न प्रेरणाबुद्धिरुपजायते आख्यातपदश्रवणे सति सा जायते तस्मात्तस्यैव प्रेरणात्मको ऽर्थः, तत्रापि तु जुहोत्यादिधात्वन्तरोपजननापायपर्यालोचनया धातोस्तत्प्रतीतौ व्यभिचारात्प्रत्ययस्य चाव्यभिचारात्तस्यैव सो ऽर्थ इति शस्यते, कः पुनरसावर्थः यस्मिन्सति नियुक्तो ऽहमत्रेति प्रतिपद्यते पुरुषः सो ऽसावर्थ एव विधिरित्युच्यते, विधौ हि लिङादिप्रत्ययं स्मरति पाणिनिः न धात्वर्थे यागादौ न कर्त्तृव्यापारे भावनायां विधिश्च नाम प्रेरणात्मक एव, अत एव वर्तमानापदेशिकाख्यातजनितप्रतीतिविलक्षणेयं प्रतीतिर्यजेतेति, अत्र हि प्रैष्यप्रैषयोः सम्बन्धो ऽवगम्यते, किमन्यश्चात्र क्रियाकर्तृसम्बन्धो नावगम्यते, न ब्रूमः नावगम्यते इति किं तु प्रैष्यप्रैषलक्षणो ऽपि सम्बन्धः प्रथममवगम्यते, प्रेषितो हि क्रियां कर्तुमुद्यच्छतीति,

ननु क्रियासम्बन्धितयैवासौ प्रेष्यते यजतां भवानिति सत्यम् क्रियासम्बन्धितयैव प्रेष्यते प्रेष्यते तु सः प्रेष्यते चेदयमन्यस्तर्हि सम्बन्धः क्रियासम्बन्धात्तूभयसम्बन्धितामस्य राजगवीक्षीरवदवगमिष्यामः, यथा गौ राज्ञा च सम्बध्यते क्षीरेण च या राजसम्बन्धिनी सा क्षीरसम्बन्धिनी या क्षीरसम्बन्धिनी सा राजसम्बन्धिनी एवमिहापि पुरुषः प्रेषितेन च सम्भन्त्स्यते क्रियया च, यः प्रेष्यते स करोति अथ यः करोति प्रेष्यते स इति,

ननु नेदमुभयं भवति प्रैषो ऽपि क्रियैव प्रवर्त्तनं हि कुर्वन्प्रवर्तयतीत्युच्यते सो ऽयं क्रियासम्बन्ध एव भवति न ततो ऽन्यः प्रैष्यप्रैषसम्बन्ध इति, स्यादेतदेवं यदि वाय्वादिवत् प्रवर्तने कर्ता लिङर्थस्स्यात्प्रेरितो ऽहमत्रेति तु ज्ञानजन-

कत्वं विधेः प्रवर्तकत्वम् स एष प्रवर्तनं ज्ञापयति न करोतीत्यन्य एवायं क्रियाकर्तृसम्बन्धात्प्रैषप्रैष्यसम्बन्धः ।

ननु ज्ञानमपि क्रियैव तत्करणे च पुनरपि स एवायं क्रियाकर्तृसम्बन्धः, नैवम्, कारकज्ञापकयोर्भेदस्य सुप्रसिद्धत्वात, इह च योऽयं यागपुरुषयोः क्रियाकर्तृसम्बन्धः अतोऽन्यं प्रैषप्रैष्यसम्बन्धमुपदर्शयितुं प्रवृत्ताः स्मः स ततो विलक्षणः प्रदर्शित एव, वैलक्षण्येऽपि तस्य यथा कथं चित्तन्नाम क्रियमाणं न वारयामः, भवत्वयमन्यः प्रैषप्रैष्यसम्बन्धः स तु प्रथममवगम्यते इत्येष कुतो निश्चयः, उक्तमत्र प्रेषितोऽहमिति हि विदित्वा क्रियायां प्रवर्त्तते आचार्यचोदितः करोमीति हि दृश्यते यजेतेति श्रुते नियुक्तोऽहमिति प्रथममवगच्छति ततो यजते, तेनायमाद्यः सम्बन्धः पाश्चात्यस्तु क्रियाकर्तृसम्बन्धः, तद्योऽयं लिङर्थः प्रथममवगम्यते प्रैषो नाम सा प्रेरणा स नियोगः स वाक्यार्थः,

ननु विधाविव निमन्त्रणादिषु लिङ्लोटावपि स्मर्येते एव, सत्यम् ते तु प्रेरणाया एव औपाधिका अवान्तरभेदाः, समहीनज्यायोविषयप्रयोगोपाधिनिबन्धन एष प्रेरणाध्येषणादिभेदव्यवहारः, प्रेषणा तु सर्वानुस्यूता ऽवगम्यते तदुक्तम् "प्रवर्त्तकत्वं तु शब्दार्थः सर्वत्रापरित्यागात्" इति,

## णिजर्थलिङर्थप्रैषयोर्भिन्नत्वम्

स चायं लोडादीनामर्थः प्रैषो णिजर्थविलक्षणः प्रतीयते ।

ननु प्रयोजकव्यापारे णिज्विधीयते प्रयोजकव्यापारश्च प्रैषः प्रैषे च लोडादयो विधीयन्ते इति णिजर्थ एव लोडर्थः तथा च कुरु कुर्विति यो ब्रूते स कारयतीत्युच्यते, न प्रतीतिभेदात्, अन्या हि करोतु कुर्यादिति प्रतीतिरन्या च कारयतीति प्रतीतिः, प्रयोजकव्यापारो हि णिजर्थः ज्ञापकव्यापारस्तु लिङर्थः, प्रवृत्तक्रियाविषयश्च प्रयोजकव्यापारो णिजर्थः इह तु तद्विपरीतः, तत्र हि कार्यं पश्यतः प्रवर्तनमिह तु प्रवर्त्तितस्य कार्यदर्शनमिति महान्भेदः, तत्र यथा कुर्वन्तं कारयति तथैवेहापि प्रैषः प्रवर्तमानं प्रेरयति नाप्रवर्तमानं स्थावरमिति न हि वनस्पतिरुच्यते यजस्वेति, न स्थावरादेरयोग्यत्वात् ब्राह्मणादिस्तुः यः प्रेर्यते असावप्रवृत्तक्रिय एव, न हि यजमान एव यजेतेति चोद्यते किं तु अप्रवृत्तक्रिय एवेति सर्वथा णिजर्थाद्विलक्षणो लिङर्थः,

## शब्दैकगोचरे नियोगे व्युत्पत्तिग्रहोपायः—

आह भवत्वयं विलक्षणो ऽर्थः स तुप्रमाणान्तरानवगम्यश्चेत्कथं शब्दैकगोचरे तत्र सम्बन्धव्युत्पत्तिः, उच्यते शब्दैकगोचरस्तु नियोगो व्युत्पत्तिश्च तत्र सूपपादैव, यो हि यजेत दद्याज्जुहुयादिति लिङादिभ्यो विधिः प्रतीयते कथमसौ लिङादीनामगम्य इष्येत, व्युत्पत्तिश्चास्य व्यवहारादवकल्पते गच्छाधीष्वेति

शृण्वन्वृद्धः चेष्टमानो दृश्यते चेष्टा च स्वात्मनि प्रवर्त्तिका ऽवगमपूर्विका दृष्टा प्रत्यक्षदृष्टे चाम्रादौ सुखसाधनतया अन्वयव्यतिरेकाभ्यामवगते तदनुस्मरणात्प्रवर्तमानः कस्मिंश्चिदात्माकूते समुपजाते सति भौतिकं व्यापारमारभते, स चात्मधर्म आत्मेव स्वसंवेद्यः अहम्प्रत्ययगम्यो ह्यात्मा नासौ परस्मै दर्शयितुं शक्यते न च चर्चयितुं शक्यते एतावता नानुभूयते इति शक्यते वक्तुं परोऽपि ह्येनमहम्प्रत्ययेनानुभवत्येव, तथा ऽयमपि भौतिकव्यापारहेतुरात्माकूतविशेषो न प्रमाणान्तरवेद्यो भवति न च न वेद्यते तत्संवेदने सति चेष्टा यद्वन्तं दृष्ट्वा तस्यापि तादृक्प्रेरणाऽवगमोऽनुमीयते,

स च शब्दान्तरश्रवणे सत्यदृश्यमानो लिङादिश्रवणे च सति दृश्यमानस्तदर्थ एवेत्यन्वयव्यतिरेकाभ्यामवगम्यते इतीयतीयं व्युत्पत्तिः, तदेतदात्मप्रत्यक्षं लिङादिशब्दश्रवणे सति प्रेरणावगतिः भवति प्रथमश्रुताच लिङादेरसौ न भवति न च प्रमाणान्तरेण सोऽर्थो दर्शयितुं शक्यते कुर्यादित्यस्यार्थः कुर्यादित्यनेनैव प्रतिपाद्यते न प्रमाणान्तरेणेत्येवं व्युत्पत्तौ सम्भवन्त्यामपि यैरगृहीतसम्बन्ध एव लिङादिः स्वरूपसामर्थ्येनैव प्रेरक इष्यते तेऽत्यन्तभीरव इत्युपेक्षणीयाः ।

ननु यदि लिङादिव्यतिरेकेण नान्यतो नियोगो ऽवगम्यते कथमसौ नियोगशब्दात्प्रतीयते कथं वा नियोगशब्दस्य नाम्नोऽप्यर्थः प्रमाणान्तरागोचरः स्यात्, अयि साधो न नियोगो निपूर्वेण युजिना घञन्तेन बोधयितुं शक्यते व्यवहारमात्रमेतत्स्वरूपमाख्यातुमाश्रीयते यथा तु यजेतेत्येवमादिभ्यः शब्देभ्यः सोऽवगम्यते तथा नान्यत इत्यत एव न प्रमाणान्तरगोचरो धर्म इत्याहुः, लिङ्धर्मो हि नियोगो वाक्यार्थः स धर्म एव स च न प्रमाणान्तरगम्य इति, न च लिङर्थः प्रेरणाऽऽत्मको ऽयं व्यापारः कार्यमाचष्टे यो धर्मः स एव च वाक्यार्थो युक्तः, कार्येऽर्थे वेदस्य प्रामाण्यमिति हि मीमांसकाः,

## नियोगस्य शाब्दं प्रेरकत्वम्—

तस्मात्पुनरपि भाट्टपक्षवद् द्वयमापतति प्रेरकश्च विधिः कार्यरूपश्चानुष्ठेयोऽर्थ इति, सुखशयितो निरनुसन्धान इवायुष्मानेवं व्यवहरति न ह्यन्यः प्रेरको ऽन्यश्चानुष्ठेय इत्युक्तम्, नियोग एव प्रेरको नियोग एव चानुष्ठेयः, कथमस्य द्वैरूप्यमन्ये वदन्तीति चेद्, मैवम् प्रेरकत्वमेव शब्दार्थः आर्थं तु कार्यत्वम्, यतो विधिरनुष्ठेयतयाऽवगम्यते आचार्याज्ञां करोमि राजाज्ञां करोमीति, किमर्थं तर्हि विषयानुष्ठानमिति चेद न ह्याज्ञा घटादिवत्स्वरूपेण कर्तु शक्याऽपि तु विषयद्वारकं तत्सम्पादनं कमण्डलुं बिभृहीत्याचार्येणाज्ञप्तः कमण्डलुं भृत्वाऽऽचार्याज्ञां कृतां मन्यते कटकं गच्छेति राज्ञाऽऽज्ञप्तः कटकं गत्वा राजाज्ञां कृतां मन्यते सोऽयं नियोग एवानुष्ठेयः ।

ननु राजाज्ञया करोमीत्यपि व्यपदेशो दृश्यते स चानुष्ठेयमेवाज्ञां दर्शयति, नैवम् तत्राप्याज्ञैवानुष्ठेया प्रेषणाभिप्रायेण तृतीयानिर्देश इत्येवं केचित्।

## नियोगस्यार्थे प्रेरकत्वम् —

अन्ये तु शाब्दं कार्यत्वं नियोगस्य प्रेरकत्वं त्वर्थादित्याचक्षते, अनुष्ठेयता हि तस्य निजं रूपं स्वसिद्धये स तु नियोज्यं नियुञ्जानः प्रेरक इत्युच्यते, तदिदं कार्यत्वमपरित्यक्तप्रेरकभावमस्यावगम्यते प्रेरकत्वं चापरित्यक्तकार्यभावमित्यन्यतरदत्र शाब्दं रूपमिति न भाट्टैरिवास्माभिः प्रत्यये गुरुर्भार आरोपितः,

## फलानपेक्षं विधेः प्रवर्तकत्वम् —

स चायं नियोगः प्रतीयमानो यजेत स्वर्गकाम इत्यनुबन्धद्वयावच्छिन्नः प्रतीयते यज्यादिना ऽस्य विषयानुबन्धो धातुनोच्यते, स्वर्गकाम इत्यधिकारानुबन्धः पदान्तरेणार्प्यते, तत्र च स्वर्गकामस्यैवमधिकारो निर्वहति यदि भावार्थस्य स्वर्गं प्रति साधनत्वमवगम्यते एवं तर्हि स्वर्गकामेनैवासौ कृतो भवत्येवं स्वर्गकामपदान्वये प्राक्तन एव मार्गो ऽनुमन्तव्यः, न पुनः स्वर्गादिफलप्रदर्शनपूर्वकं विधेः प्रवर्त्तकत्वमस्वातन्त्र्यप्रसङ्गात्, न हीदृशं शास्त्रस्य दैन्यं यत्फलं विना पुंसः प्रवर्त्तयितुं न शक्नोति अन्यथा यावज्जीवं यजेतेत्यादावप्रवर्त्तकं शास्त्रं स्यात्, किं यावज्जीवमित्यादयश्चोदनाः फलशून्या एव, ओमित्युच्यते न हि विधिः फलमाकाङ्क्षत्यपि तु नियोज्यं विषयं कस्य नियोगः कुत्र नियोग इति ते एते उभे अपि आकाङ्क्षे परिपूर्णे तत्र जीवतो नियोगो यागे च नियोग इति अतः परं फलकल्पनं पुरुषबुद्धिप्रभवं भवति न शास्त्रीयम्, कामाधिकारे तु नियोज्यतैवान्यथा स्वर्गकामस्य नोपपद्यते इति स्वर्गस्य साध्यत्वमभ्युपगतं न पुनर्विधेः फलार्थत्वादत एव न तत्र वैधी प्रवृत्तिर्लिप्सयैव प्रवृत्तत्वात्, आह च तस्य लिप्सार्थलक्षणेति साध्यसाधनप्रतिपादनपर्यवसितो हि तत्र विधिव्यापारो न प्रयोगपर्यवसित इति,

अत एव श्येनादेरधर्मत्वात् तत्र ह्यभिचरन्निति शत्रा शत्रुं वैदिकेनोपायेन जिघांसुरधिकारी दर्शितः तस्य न तत्र शास्त्रं प्रवर्तकं जानात्येवासौ मयैतत्कर्त्तव्यमुपायं तु न वेदेत्येवमुपायमात्रमस्योपदिश्यते श्येनं कुर्विति न विधिः प्रभवति जिघांसयैव तत्र प्रवृत्तत्वात्, अतः श्येनादेरधर्मत्वात्तद्व्युदासार्थमर्थपदोपादानम्, चोदनालक्षणो ऽर्थो धर्म इति,

कामाधिकारेष्वितिकर्त्तव्यतांशे शास्त्रीया प्रवृत्तिः, यथोक्तं "क्रत्वर्थौ हि शास्त्रादवगम्यते" इति भावार्थमात्रस्य हि करणत्वमवगतमितिकर्त्तव्यतांशस्तु न करणत्वावगतिवेलायामुपनिपतित इति तत्र लिप्साया अभावाच्छास्त्रमेव

प्रवर्त्तकम्, अतएवाग्नीषोमीयहिंसाया नाधर्मत्वम्, न हिंस्यात्सर्वभूतानीति निषेधः सामान्यशास्त्रम्, सामान्यशास्त्रं च विशेषशास्त्रक्रोडीकृतविषयपरिहारेण प्रवर्त्तते इतिअग्नीषोमीयहिंसायाः शास्त्रीयत्वान्न निषेधविधिरनर्थतां बोधयेदिति,

ननु श्येनेऽपि शास्त्रीया प्रवृत्तिः प्रवर्तकत्वं हि विधेस्स्वरूपं प्रमाणान्तरविलक्षणम्, नान्वयव्यतिरेकवत्साध्यसाधनप्रतीतिमात्रपर्यन्तो हि विधिव्यापारो भवितुमर्हति इति सर्वत्र विधेः प्रयोक्तृत्वानपायाद् एवमेव चेयं प्रवृत्तिः श्येनेन यजेतेति, उच्यते प्रवर्त्तितो ऽहमिति ज्ञानजननं विधेः प्रेरकत्वं तत्सत्यं सर्वत्र तुल्यं करणे श्येन इतिकर्त्तव्यतायामग्नाषोमीये च, बाह्ये तु प्रवृत्तिलक्षणे भौतिके व्यापारे यत्र लिप्सादि प्रवर्तकान्तरमस्ति तत्र भवन्त्यपि विधेः प्रयोक्तृशक्तिरुदास्ते पशुपुरोडाशप्रयाजवत्, तत्रोदासीने विधौ निषेधशास्त्रमवतरति न हिंस्यादिति, यदि तु सर्वत्र प्रयोक्तृशक्तिरनुदासीना भवेत्तदा ज्योतिष्टोमान्न विशिष्यते श्येनं शास्त्रीयायां प्रवृत्तावग्नीषोमीयमिव निषेधशास्त्रस्यानवकाशात्, ज्योतिष्टोमे ऽनुल्लङ्घितनिषेधो ऽधिकारी स्वर्गस्यानिषिद्धत्वात् श्येने तु हिंसायाः प्रतिषिद्धत्वादुत्क्रान्तनिषेधो ऽधिकारीति चेत्, मैवम् अधिकारिदशायामपि भवन्मते विधेः प्रयोक्तृत्वानपायात्, न निषेधशास्त्रमवकाशं लभते इति श्येने ऽपि नावधीरितनिषेधो ऽधिकारी स्यात्।

ननु न विधिः फले प्रयोज्यं प्रेरयति फलं कुर्विति कर्मणि त्वेनं प्रवर्तयति यजस्वेति तेनाधिकारिदशायामप्रतिहतो निषेधशास्त्रावकाशः, आयुष्मन्नस्मत्पक्षमास्थितो ऽसि, फले चेन्न प्रवर्त्तयति विधिः पुरुषं फलार्थित्वादेवैनमुपाये प्रवर्तमानं तत्रापि न प्रेरयेत्, उपायानभिज्ञस्य तूपायमेव दर्शयेत् यावदप्राप्तं हि विधेः विषयः, तदुक्तम् जानात्येवासौ मयैतत्कर्तव्यमुपायं तु न वेदेति, प्रतीतिरपीयमीदृशी अभिचरन्यजेतेति, यदि त्वशास्त्रीयेोपायो न वैरिणं हन्तुमुपायः श्येनेन जहि श्येनस्तवोपाय इत्यर्थः तदलमतिप्रसङ्गेन कामाधिकारेषु तावन्न फलाकाङ्क्षो विधिः फलं त्वधिकारे हेतुरिति स्थितम्।

**प्रत्यवायानपेक्षं निषेधविधेर्निवर्तकत्वम्—**

प्रतिषेधाधिकारे ऽपि प्रत्यवायो न कल्पते।
निषेध्यविषयादेव लब्धत्वादधिकारिणः॥
तत्रासौ कल्प्यमानो ऽपि नरकादिफलोदयः।
अवैधत्वं प्रपद्येत न ह्याकाङ्क्षेदृशी विधेः॥
विधेरपेक्षे द्वे एव नियोज्यविषयौ प्रात।
तत्पूरणेन तृप्तस्तु न वाञ्छति ततो ऽधिकम्॥
नियोज्यस्तावदेतावान्क्रुद्धो ऽरिहननोद्यतः।
विषयस्तन्निवृत्तिश्च नियोगो यत्र गम्यते॥

## निषेधविधिविषयनिरूपणम्—

नन्वेतावन्न विबुध्यामहे निषेधविधेः को विषय इति, भावार्थाः कर्मशब्दा ये तेभ्यः क्रिया प्रतीयते इति(१) स्थिते नञर्थस्तावत्पूर्वापरीभूतत्वाभावान्न विधेविषयः, अनन्विताभिधानाच्च न हि नञो ऽनन्तरं लिङ्विभक्तिः श्रूयते ऽपि तु हन्तेः, हननमपि न विधेर्विषयः तस्य धर्मत्वप्रसङ्गात् , न प्रयोगस्य वैयर्थ्यप्रसक्तेर्हनने च पुरुषस्य स्वतः प्रवृत्तेर्नञ्विशिष्टो ऽपि न हन्त्यर्थो ऽस्य विषयः तयोर्विशेषणविशेष्यभावाभावात् ।

युक्तं दध्ना जुहोतीति होमे दध्यनुरक्तता ।
हन्तेः स्वरूपनाशात्तु न नञर्थानुरक्तता ॥

पुरुषप्रयत्नो ऽपि न केवलो विधेर्विषयः स्वतः सिद्धत्वान्नापि नञर्थानुरक्तो हन्तिवत्तत्रापि नञर्थस्य विशेषणत्वानुपपत्तेः,

अथायमब्राह्मणादिन्यायेन हन्तौ पर्युदस्ते भावार्थान्तरे नियोगः कल्प्यते, न हन्यादिति कोऽर्थः अन्यत्किमपि कुर्यादिति तर्हि किं तद्भावान्तरमिति न विचारयितुं शक्यते, यत्किं चिदिति चेन्न तस्य स्वतःसिद्धत्वेन विध्यानर्थक्यात् , अवश्यं जीवन्पुमान्किं चित्करोति पठति गच्छति भुङ्क्ते च,

अथ विषयांशं परिहृत्य प्रमाणांशे नञ् निविशते स हि प्रवर्तमानं पुमांसं रुणद्धि यद्धन्यात्तन्नेति,

तदप्यनुपपन्नम् अन्विताभिधानेन विधिविभक्तेर्हन्तिनावरुद्धत्वात् , प्रेरणाशक्तिस्वभावो विधिः स्थितः यस्तु निषेधात्मा नञ् पार्श्वे स्थितः तत्र विधिः संक्रामति, संक्रान्तावपि नञश्च विधेश्च सम्बन्धे सति विधेस्स्वरूपनाशोऽवगम्यते, स्वभावो ह्येष नञो यदयं येन येन सम्बध्यते तस्य तस्याभावं बोधयतीति, अतो विधिसम्बन्धे नञ इष्यमाणे एतावान्वाक्यार्थो ऽवतिष्ठते हननविधिर्नास्तीति, ततश्च हननस्य विधित्वं च स्यात् ,

अत्रोच्यते, दध्ना जुहोतीति होमस्य वचनान्तरचोदितत्वाद्विधिशक्तिरुपपदं संक्रामतीति यथावर्णितमेवमिहापि हनने स्वतः प्रवृत्तत्वेन विधिवैफल्यान्नञश्च श्रूयमाणस्यानर्थक्यप्रसङ्गाद् विधायिका शक्तिः नञर्थमेव स्पृशति इति किं नेष्यते ।

ननूक्तमत्र भावार्थः कर्मशब्द इति तत्र दध्यनुरक्तो होम एव विधीयते इति फलतो विधिविहितं भवति न प्रमाणतः इह तु नञस्तदुपमर्दस्वभावत्वान्न केन चित्संसर्गो दध्यादेरिव कल्पते, मैवम निवृत्तिमेव कुर्वन्नञ्विशेषणं विशेषणीभ-

(१) "भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते" जै० अ० २ पा० १ सू० १ ।

वति सेयं नञुपहिते हन्तौ श्रुते हननिवृत्तिर्गम्यते, यथा सिद्धरूपदध्यनुप्रवेशेऽपि न होमस्य साध्यमानावस्था निवर्त्तते तथा नञनुविद्धहन्त्यर्थावगतौ न पूर्वापरीभावबुद्धिर्निवर्त्तते, न ह्यत्राह्मणवन्न हन्यादिति सिद्धरूपबुद्धिः, सोऽयं हननिवृत्तिरूपः पूर्वापरीभूतोऽर्थो विधिविषयो भविष्यति, अथवा विभक्त्यर्थेन नञ्सम्पत्स्यति शुद्धस्य लिङादेरर्थः प्रवर्तकः नञुपहितस्य तस्यार्थो निवर्तक इति शब्दशक्तिरेवैषा कोऽत्र पर्यनुयोज्यते इति ।

यत्तु साक्षान्नञोऽनन्तरं विधिविभक्तिर्नोत्पद्यते तत्तस्याधातुत्वाद्धातोः परे तिङादयः प्रत्यया भवन्ति नान्यस्मादिति योग्यतया तु नञर्थेन सम्बन्धः, न च तत्रायमर्थोऽवतिष्ठते हननविधिर्नास्तीति किं तु नञुपहितो विधिरौदास्ये पुरुषं नियुङ्क्ते तदवच्छेदकश्च हन्तिरन्यथा सर्वक्रियौदासीन्यं प्रतीयेतेत्यलमतिविमर्देन निषेधविधेरपि सिद्धोऽनुबन्धद्वययोगः ।

एवं नियोगव्यापारे समाप्ते फलकल्पना ।
नृबुद्धिप्रभवैव स्यादतः सापेक्षता भवेत् ॥
कथं नरो निवर्तेत प्रत्यवायभयाद्विना ।
मा निवर्तिष्ट विधिना तावदुक्तं निवर्तनम् ॥
प्रवृद्धतररागान्धः प्रत्यवायेऽपि कल्पिते ।
न निवर्तेत इत्येवं किं विधेरप्रमाणता ॥
फलं भवतु मा वा भूत्पुरुषोऽपि प्रवर्तताम् ।
मा प्रवर्तिष्ट वा स्वे तु नास्त्यर्थे खण्डना विधेः ॥

प्रवर्त्तनावगमजनने हि विधिव्यापार इति असकृदुक्तम्, तत्र तस्य न किंचिद्वैकल्यम् ।

ननु विधेः फलापेक्षता नास्ति चेत्किं तर्हि अश्रूयमाणफलेषु विश्वजिदादिषु स्वर्गादिफलं कल्प्यते, उच्यते अश्रूयमाणत्वादधिकारानुबन्धस्य निरधिकारस्य च विधेर्विधित्वानिर्वाहादधिकारानुबन्धः कल्प्यते तत्र सर्वान्प्रति अविशिष्टत्वात्स्वर्गकामः चोदनाशेषभावेन नियोज्यः कल्प्यते, न चेयं पौरुषी कल्पना श्रुत्येकदेशः स इति हि तद्विदः, तदियमधिकारानुबन्धकल्पना न फलकल्पना इति सोऽयमनुबन्धद्वयावच्छिन्नो नियोगो वाक्यार्थः,

वाक्यार्थत्वं चास्य प्रधानत्वाद् अन्यो हि यज्यादिरर्थोऽवगम्यमानस्तदनुप्रवेशेन प्रतीयते गुणो भवति, नियोगस्तु स्वमहिमाक्षिप्तदृष्टोपकारानेकक्रियाकारककलापोपबृंहितस्वरूपः प्रतीयते इति प्राधान्यमवलम्बते, कार्यं चेत्प्रधानमुच्यते नियोग एव कार्यम्, फलं चेत्प्रधानमुच्यते तदपि नासिद्धम्, अपि तु साध्यं साध्यत्वं चास्य नियोगाधीनमिति नियोग एव प्रधानम्, पुरुषस्तु नियोज्यमानत्वादप्रधानमिति, एवं नियोग एव प्रधानत्वाद्वाक्यार्थः ।

## नियोगस्य चातुर्विध्यम्--

स च प्रतीतिभेदपर्यालोचनया चतुरवस्थ उच्यते उत्पत्तिविधिरग्निहोत्रं जुहोतीति अग्निहोत्राख्यकर्मस्वरूपोत्पादव्यतिरेकेणार्थान्तरानवगमात् ,

विनियोगविधिः दध्ना जुहोतीति पयसा जुहोतीति उत्पत्तिविधितः प्रतिपन्ने भावेऽर्थे तत्र दध्यादिगुणविनियोगाऽवगमात्,

अधिकारविधिः अग्निहोत्रं जुहुयात् स्वर्गकाम इति निर्ज्ञाते कर्मणि तत्राधिकृतस्य पुंसस्ततोऽवगमात्

प्रयोगविधिस्तु क्रमपर्यन्तं प्रयोगे पदार्थानामवगम इति अयं चाधिकारविधेरेव व्यापारविशेष इति तदेवास्योदाहरणम् अग्निहोत्रं जुहुयात्स्वर्गकाम इति,

क्वचिदेकस्मिन्नेव वाक्ये रूपचतुष्टयं विधेरवगम्यते न तत्र पृथगुदाहरणमपेद्यते यथा एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति,

अन्यान्यपि नियोगस्य रूपाणि व्यापारभेदादवगम्यन्ते, स हि भावार्थसिद्ध्यर्थं तत्समर्थमर्थमाक्षिपतीति तत्प्रयोजक उच्यते, यथा माणवकस्थस्याध्ययनस्याचार्यकरणविधिः,

## नियोगस्य रूपान्तराणि-

क्वचिदन्याक्षिप्ते वस्तुनि लब्धे सति तत्राप्रयोजको विधिर्भवति यथा क्रयनियुक्तयैकहायन्या लाभे सति न पादपांसुग्रहणार्थमन्यामेकहायनीमाक्षिपति विधिरिति, प्रकरणपरिपठितपदार्थपटलपरिग्रहश्च ग्राहक इति विधिरुच्यते,

क्वचित्प्रकरणपरिपठितस्यापि तेनागृहीतस्य द्वादशोपसदादेः प्रकरणादुत्कर्षदर्शनादत एव नियोगगर्भो विनियोग इत्याचक्षते,

क्वचिद्विनियोजकश्रुत्यादिप्रमाणविरहेऽपि पश्वेकत्वाद्युपादानं शेषीकुर्वन्नुपादायक इत्युच्यते पशुना यजेतेति विभक्त्या प्रातिपदिकार्थो विनियुक्तः तत्स्थमेकत्वम् उक्तमेव न विनियुक्तमेकेनेत्यश्रवणात् पशुरुपादीयमानो न सङ्ख्यारहित उपादातुं शक्यते श्रुतसङ्ख्यापरित्यागकारणाभावाच्चैकत्वविशिष्टः पशुरुपादीयते इत्युपादानशेषीकृतमेकत्वम् ,

वैकृतस्तु सौर्यादिविधिः प्राकृतमितिकर्त्तव्यताजातमाकर्षं श्चोदक इत्युच्यते ।

## नियोगस्य वाक्यार्थत्वोपसंहारः—

तदिदमेकस्यैव भगवतो लिङर्थस्य प्रयोक्तृशक्तिखचितात्मनः प्रचुरव्यापारवैचित्र्यमुपदर्शितमित्यलमनया महामतिमानसविलासवत्या मीमांसार्थकथया सोऽयमीदृशो नियोगो वाक्यार्थः ।

तस्य द्वादशलक्षण्यां तत्तद्रूपं प्रकाशितम् ।
तन्नेह लिख्यते ऽस्माभिर्ग्रन्थगौरवभीरुभिः ॥
दिङ्मात्रं त्वेतदाख्यायि नियोगस्य यथागमम् ।
अमुष्मिन्नपि वाक्यार्थे विवदन्ते मनीषिणः ॥

## फलज्ञानस्यैव प्रवर्तकत्वनिरूपणम् —

लिङादेरवगम्यमानः कार्यरूपः प्रेरणात्मा च वाक्यार्थो नियोग इत्युक्तम्, न चासावेवंरूपो ऽपि परिदृश्यमानभावनादिव्यतिरिक्तो ऽवगम्यते ।

क्रियैव तावत्कार्यात्मा प्रेरणात्मा फलार्थिता ।
प्रतीयते ततो ऽन्यस्तु नियोगो नोभयात्मकः ॥

नन्वन्य एव क्रियाकर्तृसम्बन्धात्प्रैष्यप्रैषसम्बन्धो दर्शितः, अयुक्तो ऽसौ ।

कुर्यादित्यादिशब्देभ्यः क्रियादिव्यतिरेकिणः ।
नार्थान्तरस्य संवित्तिः कस्य चित्प्रेरणात्मनः ॥

किमिदानीं करोतीति कुर्यादित्यादि च तुल्ये एते प्रतिपत्ती, अभिनवमिदं शब्दव्युत्पत्तिमत्त्वमायुष्मतः न ब्रूमो न भिन्ने एते प्रतिपत्ती इति करोतीति प्रवृत्तक्रिय उच्यते वर्तमानकालावच्छिन्नश्च किंत्वसौ प्रैषस्ततो ऽवगम्यमानो ऽपि प्रेरको न भवति न च कार्य इति ब्रूमः ।

ननु प्रेरकत्वेनैवावगम्यमानः कथं प्रेरको न भवेद् एतदेवास्य प्रैषत्वं यत्प्रेरकत्वम्, सत्यम् प्रेरकत्वेनैवासौ गम्यते न त्वसौ तथा भवति व्यवहारमात्रमेतद् राजाज्ञां करोमीति कार्यत्वमस्य क्रियामात्रं राजाज्ञां करोमीति ।

आज्ञा हि नाम नैवान्यसम्पाद्यत्वेन गम्यते ।
नानुष्ठातुरियं बुद्धिराज्ञा सम्पाद्यतामिति ॥
एवं हि यस्य कस्यापि प्रवर्तेत स आज्ञया ।
न चेह बालोन्मत्तादिवचनाद्यत्नवर्जितात् ॥
सत्यपि प्रेरणाज्ञाने प्रवर्तन्ते सचेतसः ।
भयं नाशङ्क्यते यस्मात्फलं वा ऽपि समीहितम् ॥
तथाविधस्य राज्ञो ऽपि नाज्ञानुष्ठीयते जनैः ।
वर्तमानापदेशे ऽपि फलं यत्रावगम्यते ॥
तत्र प्रवर्तते लोको लिङादिष्वश्रुतेष्वपि ।
भवत्यारोग्यसम्पत्तिर्भुञ्जानस्य हरीतकीम् ॥
तत्कामो भक्षयेच्चेति को विशेषः प्रवर्त्तने ।
अन्वयव्यतिरेकाभ्यां तदेवमनुमन्यते ॥
प्रेरकत्वं फलस्यैव न नियोगात्मनः पुनः ।

तत्रैतत्स्यात्, लोके भवतु फलार्थित्वात्प्रवर्तनमाराधयिष्यते प्रेरकाशयानुवर्तने वा तस्य पारम्पर्येण फलहेतुत्वात्, वेदे तु वक्तुरभावात्प्रेरणावगमादेव प्रवृत्तिरुन्मत्तवाक्यादपि लिङादियुक्तान्न प्रेरणावगमो नास्ति भवन्नपि फलादर्शनादुपेक्ष्यते उन्मत्त एवं प्रलपतीति, वेदे पुनर्यजेतेत्यत्र प्रेरणाऽवगमात्परित्यागकारणाभावात्तत एव प्रवर्तनम्, प्रवर्तनाऽभावे ऽपि न वेदस्याप्रामाण्यम्, प्रमाणव्यापारस्य तेन निर्वर्त्तितत्वादित्युक्तम्, उच्यते वेदे ऽपि वक्ता ऽस्ति तदाशयवशेन तत्रापि फलार्थिनां प्रवर्तनमिति सम्भवदपीदमुत्तरं नाचक्ष्महे कथान्तरप्रसङ्गात् किं त्विदं ब्रूमः, प्रेषणावगमादेव प्रवृत्तिसिद्धौ स्वर्गकामपदं बादरिवदन्यथा व्याख्यायताम्, अधिकारानुबन्धाभिधाने पुरुषविशेषणमात्रमेतद्भवतु किं स्वर्गसाध्यत्वकल्पनया, विशेषणत्वमेवान्यथा न निर्वहतीति चेद् आयातं तर्हि फलस्य साध्यत्वं तच्चेत्साध्यत्वेनावगम्यते तस्यैव सामर्थ्यसिद्धं लोकानुगुणमव्यभिचारि च प्रवर्तकत्वमुत्सृज्य न प्रेरणावगमस्य तद्वक्तुमर्हसीति।

नियोगादथ निष्पत्तिः फलस्येत्यभिधीयते।
फलं प्रत्यङ्गभूतत्वादवाक्यार्थत्वमापतेत्॥

ननु विध्यर्थो न भावार्थवत्फले करणं येनास्य तदङ्गत्वं स्यात्, आक्षेपकत्वात्तु तस्य फलार्थत्वमुच्यते प्रयोक्तृत्वं हि तस्य निजं रूपं यद्येवं भावार्थ एव साध्यो भवतु विध्यर्थस्य तु किमनुष्ठेयत्वमुच्यते, सो ऽपि भावार्थसिद्ध्या सम्पद्यते कृतो मया स्वामिनियोग इति व्यवहारादिति चेत्।

भावार्थो तर्हि निष्पत्तिर्नियोगस्य फलस्य च।
इत्येकत्र पदग्रामे वाक्यार्थद्वयमापतेत्॥
किं चान्विताभिधानेन विषयत्वावधारणात्।
नियोगस्यैव भावार्थनिष्पाद्यत्वं प्रतीयते॥
स तु भावार्थतः सिद्धो फलाय यदि कल्प्यते।
परार्थत्वादवाक्यार्थो भवेदित्युपवर्णितम्॥
भावार्थस्तु द्वयं कुर्याद्युगपद्वा क्रमेण वा।
युगपन्नास्य सामर्थ्यं समत्वं च द्वयोर्भवेत्॥

नियोगश्च शब्दैकगोचरत्वान्मा दर्शि फलं तु स्वर्गपश्वादि तेन सह निष्पाद्यमानं किमिति न गृह्यते, क्रमपक्षे पूर्वं वा नियोगः पश्चात्फलं पूर्वं वा फलं पश्चाद्वा नियोगः सिद्ध्येदिति, यदि पूर्वं नियोगः तदा नियोगस्यासिद्धेर्निर्विषयाया अनुपपत्तेः करणांशे ऽपि धीप्रवृत्तिः स्यात्।

यथा नियोगनिष्पत्तिः प्रयाजादिकृतेन तु।
तत्र प्रवृत्तिः शास्त्रीया भावार्थे ऽपि तथा भवेत्॥

इष्यते इति चेत्।

नन्वेवं तस्य लिप्सार्थलक्षणत्वमभ्यधायि यत् ।
श्येनादीनामधर्मत्वं वर्णितं तद्विरुध्यते ॥

अथ पूर्वं फलसिद्धिः ततो नियोगसिद्धिः तर्हि फलस्य तदानीं दर्शनं भवेत्सिद्धत्वात् ।

न च भावार्थवेलायां पुत्रपश्वादि दृश्यते ।
अदृश्यमानमप्येतत्सिद्धमित्यतिविस्मयः ॥

अतश्च यत्कैश्चिदुच्यते स्वर्गसिद्धिमवान्तरव्यापारीकृत्य नियोगमनेन भावार्थः सम्पादयतीति तदप्यपास्तम्, अवान्तरस्य व्यापारस्य ज्वलनादेरिव प्रधानव्यापारात्पूर्वं दर्शनप्रसङ्गादिति, अथोच्यते स्वर्गकामस्य स्वर्गं साधयितुमुद्यच्छतो यागेन योगः सम्पाद्यः श्रूयते स च चेत्सम्पन्नः शब्दवृत्तेन फलमपि सम्पन्नमेव, आनुभाविकी तु स्वर्गसिद्धिः कालान्तरे भविष्यतीति, एतदयुक्तम्, सिद्धिद्वयानुपलम्भान्न ह्येका शाब्दी सिद्धिरन्या चानुभाविकी नामेति कालान्तरे चानुभाविकी सिद्धिः कुतस्त्येति चिन्त्यम् ।

कालान्तरे च भावार्थः क्षणिकत्वान्न विद्यते ।
शक्त्यादिरूपं चापूर्वं न भवद्भिरुपेयते ॥

भवन्तो ह्यपूर्वशब्देन धर्मशब्देन च नियोगमेवापचरन्ति न च नियोगः शक्तिवदात्मसंस्कारवद्वा कालान्तरस्थायी भवति स हि प्रेरणात्मकः कार्यरूपो वा नोभयथाऽपि स्थैर्यमवलम्बते, तत्रैतत्स्याद् नियोगसिद्धिराक्षिप्तफलसिद्धिर्भवति विषयाद्यनुबन्धावच्छिन्नो ह्यसावेवानुष्ठेयः तत्र यथा तेन तेन कारकचक्रेण क्रियाकलापेन विना सम्पत्तिमलभमानः तत्तदाक्षिपति तथाऽधिकारानुबन्धवन्ध्योऽपि नासौ सम्पत्तिमधिगच्छतीति तमप्याक्षिपति, यश्चायमधिकारानुबन्धः स एवायं फलाक्षेपो न तु विधेः फलापेक्षितेत्युक्तम्, एतदयुक्तम् ।

यो हि येन विना कामं न सिद्ध्येत्स तमाक्षिपेत् ।
नियोज्यमात्राक्षेपे तु नियोगो न फलात्मकः ॥

नियोज्यश्चण्डालस्पर्शेनेव स्वर्गकामनोत्पादमात्रेण नियोज्यतां प्रतिपन्न इति कथं नियोज्याक्षेप एव फलाक्षेपः ।

ननु च स्वर्गकामोऽत्र नियोज्यो नान्यथा भवेत् ।
यदि स्वर्गस्य सम्पत्तिं नाधिगच्छेत्स्वकर्मणः ॥

नैतदेवम्–

नरेच्छामात्रमेवेदं न शब्दस्तिष्ठयति क्षमः ।
नियोज्यः स्वर्गकामो हि भवेज्जीवनवानिव ॥

ननु लोके काम्यमानस्य साध्यत्वं दृष्टं हरीतकीं भक्षयेदारोग्यकामस्तेन

वेदे ऽपि यजेत स्वर्गकाम इति स्वर्गस्य साध्यत्वमवभोत्स्यामहे, साधो लोके ऽपि कथमेतदवगतं नियोज्यसमर्पकपदवाच्यपर्यालोचनेन विधिवृत्तपरीक्षया वा।

पदार्थस्तावदेतानावेवक्षामो ह्यसाविति ।
इदं तु सिद्ध्यते तस्मादिति तस्य न गोचरः ॥
विधेरेष स्वभावश्चेदायुष्मन् साधु बुध्यसे ।
भाट्टैः किमपराद्धं ते नित्ये ऽपि फलवादिभिः ॥
अधिकार्यनुपादेयविशेषणविशेषितः ।
जीवन्वा स्वर्गकामो वा समानः काम्यनित्ययोः ॥
विधिवीर्यस्वभावस्तु कृमेरपि तथाविधः ।
सप्रत्ययप्रेरकतां विधिर्नोपैति निष्फलः ॥

ननु कामाधिकारे स्वर्गः श्रूयते नित्याधिकारे तु असौ न श्रूयते अश्रूयमाणः कस्यानुरोधेन कल्प्यते, विधेरेवेति ब्रूमः, स्वर्गेन श्रुतेनापि किं करिष्यति यद्यसौ विधिना नापेक्ष्यते घृतकुल्या अस्य भवन्तीत्यादिवदश्रुतो ऽपि चासौ विधिनाकृष्यते एव, तस्माद्विधिरत्र प्रमाणं न श्रवणाश्रवणे इति काम्यवन्नित्ये ऽपि फलमभ्युपगन्तव्यं न वा क चिदपीति ।

प्रतिषेधाधिकारे ऽपि विधिवृत्तपरीक्षया ।
एवं नरकपातादिफलयोगो न दुर्भणः ॥

येन हि दुर्विषहक्लेशद्वेषकलुषितमनसा ब्राह्मणहननं सुखसाधनमिति कर्त्तव्यमिति गृहीतं निरर्गलरागरसिकेन सुरापानं सुखसाधनमिति गृहीतं स ततो विधिना वार्यते यदि तदसुखसाधनमिति ज्ञाप्यते, तस्मान्नित्येषु प्रत्यवायपरिहार इव उपात्तदुरितक्षय एव वा प्रतिषिध्यमानेषु कर्मसु नरकपातः फलमित्यभ्युपगमनीयम्, इतरथा ह्यर्थानर्थविवेको न सिद्ध्यति ॥

एवं च ब्रह्महत्यादेरपि नैवास्त्यधर्मता ।
किं पुनः श्येनवज्रादेरित्यर्थग्रहणं वृथा ॥
करणांशे ऽपि लिप्सातः प्रवृत्तिर्यद्युपेयते ।
इतिकर्त्तव्यतांशे तु शास्त्राद्यदि तदप्यसत् ॥
न हि तत्करणं शुद्धं स्वफलायोपकल्पते ।
सेतिकर्त्तव्यताकं हि करणं करणं विदुः ॥

अवान्तरविभाग एवैष करणेतिकर्त्तव्यतालक्षणः सकलाङ्गोपबृंहितस्वरूपस्तु भावार्थः काम्यमानोपायतां प्रतिपद्यते नैकेनाप्यंशेन न्यूनः, अत एव काम्यानां कर्मणां सर्वाङ्गोपसंहारेण प्रयोगमिच्छन्ति, तस्मात्करणवदितिकर्त्तव्यतायामपि लिप्सात एव प्रवृत्तिः स्यात् ।

उभयत्रापि लिप्सातः सति चैवं प्रवर्तने ।
अग्नीषोमीयहिंसादेः श्येनादिवदधर्मता ॥

यदप्युक्तं कामाधिकारेषु काम्यमानभावार्थयोरुपायोपेयभावमात्रप्रतिपादनपर्यवसितो विधिव्यापार इति तदपि न सम्यक्, विधिपुरुषयोर्हि प्रेर्यप्रेरकलक्षणः संबन्धः तत्र यागादयो विषयत्वेन प्रतीयन्ते नेष्यमाणोपायत्वेन साध्यसाधनमात्रप्रतिपादनपर्यवसितव्यापारस्तु विधिर्विनियोगपर एव स्यात्, ततश्चाप्रवृत्तप्रवर्तकत्वं नाम निजं रूपं जह्यात् ।

विधेश्चतुरवस्थत्वं फलतः किल कथ्यते ।
प्रेरकत्वं च तद्रूपं सर्वावस्थानुगामि यत् ॥
कार्यात्मता ऽपि विध्यर्थे पेरणाज्ञप्तिपूर्विका ।
प्रेर्येणैव सता पुंसा तत्कार्यमवधार्यते ॥
लिङादिश्रुतितश्चादौ प्रेरणैव प्रतीयते ।
साध्यसाधनसंबन्धबुद्धिस्तद्बुद्धिपूर्विका ॥

नन्वेवं काम्येषु कर्मसु विधितः प्रवृत्ताविष्यमाणायामप्रवर्त्तमानः प्रत्यवेयाद्विध्यतिक्रमात्, नैवम्, स्वर्गं संसिषाधयिषोस्तत्राधिकारादन्यस्त्वनधिकृत एव क्षत्रियादिरिव वैश्यस्तोमे नासावकुर्वन् प्रत्यवायमर्हति, स्वर्गार्थी तु विधितः प्रवर्तते एव लिप्सया तु करणांशे प्रवृत्तिरिष्यमाणा क्रत्वर्थमितिकर्त्तव्यतांशमपि सैव स्पृशेत् क्रतूपकारकामो हि तत्र प्रवर्तते इत्येवं सर्वत्र विधिरुत्सीदेदेवेत्यलं प्रसङ्गेन ।

अपि च—

प्रमाणान्तरसम्पर्कविकले भवतः कथम् ।
नियोगात्मनि वाक्यार्थे व्युत्पत्तिर्व्यवहारतः ॥

ननूक्तमाकूतविशेषपूर्विकां चेष्टामात्मनिष्ठां दृष्ट्वा परत्रापि तथाऽनुमानमित्ययुक्तमिदम्, स्वात्मन्यपि प्रेरणावगमनिमित्ताभावान्न ह्यात्मसंविदिव स्वप्रकाशा प्रेरणा, संवित्स्वप्रकाशेति चेत् तदुत्पादे तर्हि निमित्तं मृग्यम्, न तावच्छब्दस्तदानीं व्युत्पत्त्यभावात् स्वात्मनि प्रेरणावगमपूर्विकां हि चेष्टामुपलब्धवतः ते परत्र चेष्टादर्शनात्तदनुमानं सेत्स्यति तन्निमित्तं लिङादिशब्द इति भोत्स्यते स पुनर्व्युत्पत्तिकाले स्वात्मन्येव प्रेरणावगमः चिन्त्यो वर्तते, प्रमाणान्तरात्तु तदवगम इति चेद् उत्तिष्ठासिद्धं शब्दैकगोचरत्वम्,

या चेयं पूर्वावधारितसुखसाधनभावे कपित्थादौ स्वात्मनि प्रवृत्तिरुपलब्धा तत्र प्रेरकत्वेन फलार्थिता निर्ज्ञाता नान्या काचित्प्रेरणा, तदुक्तं 'स्मरणादभिलाषेण व्यवहारः प्रवर्तते' इति, फलविषया हीच्छा तत्रस्वसंवेद्या ।

अतश्च प्रेरकाज्ञानं शब्दादपि परस्य यत् ।
कल्प्यते कल्प्यतां तत्र प्रेरिका सैव सुन्दरी ॥
चपेटापरिहाराय मोदकप्राप्तये ऽपि वा ।
प्रवर्तते वटुर्नासौ जुहुधीति नियोगतः ॥

## फलस्य प्रवर्त्तकत्वे पूर्वोदीरितदूषणजातस्य परिहरणम्—

कथं तर्ह्येवमाचष्टे आचार्यचोदितो ऽहं जुहोमीति, अस्त्वयं व्यपदेशः आचार्यचोदना तु न तत्र कारणम् अपि तु हिताहितप्राप्तिपरिहारार्थित्वमेवेत्यतः फलं प्रवर्तकं युक्तम् अनुभवसाक्षिकत्वात् ,

ये ऽप्याहुः प्रयोक्त्राशयस्य प्रवर्तकत्वं यतो ऽननुविधेयस्य वचनान्न प्रवर्तमानः कश्चिद् दृश्यते अनुविधेयस्य पुंसः किं चिदब्रुवतो ऽपि भ्रूभङ्गादिनाऽऽशयमवगम्य प्रवर्तते इति ।

एतदप्ययुक्तम्–यतः प्रयोक्त्राशयानुमानेन स्वार्थसम्भावनया लोकः प्रवर्तते न पुनः प्रयोक्तैव प्रीयतामिति तत्प्रीतिरपि स्वप्रीतिहेतुत्वेनार्थ्यते न तत्प्रीतित्वेन, बुद्धो ऽपि हि नाम सकलसत्त्वहितप्रतिपन्नः परार्थं स्वप्रयोजनायैव सम्पादयति परार्थसम्पादनद्वारकं तु तत् , तस्मात्स्वप्रीतिरेव प्रवर्तिका-प्रयोक्त्राशयस्य च प्रवर्तकत्वे वेदार्थप्रयोक्त्राशयानवधारणादप्रवृत्तिरेव प्राप्नोति-तस्मात्फलमेव प्रवर्तकम् ,

यत्पुनः फलस्य प्रेरकत्वे दूषणमभ्यधायि सिद्धासिद्धविकल्पानुपपत्तेरिति तदप्ययुक्तम् , इच्छाविषयीकृतस्य प्रवर्तकत्वाभ्युपगमात् , असिद्धे कथं नेति चेद् असिद्धत्वादेव, इदानीं च तदसिद्धं नैकान्तासिद्धस्वरूपमेव खपुष्पवत् ।

सुखे दुःखनिवृत्तौ वा पुंसां भवति कामना ।
न पुनर्व्योमपुष्पादि कश्चित्कामयते नरः ॥

ये ऽपि रागादेः प्रवर्तकत्वमभ्युपगतवन्तः तैरपि कामनाविषयीकृतं फलमेव प्रवर्तकमभ्युपगतम् , इच्छाविशेषा एव हि रागादयः,

यदपि श्रेयस्साधकं प्रवर्तकमुच्यते तदपि न चारु, सत्यामपि श्रेयः साधनतायामनर्थित्वेन प्रवृत्त्यभावात् ,

नन्वर्थिनो ऽपि नानियतविषया प्रवृत्तिः अपि तु निर्ज्ञातश्रेयःसाधनभावे ऽर्थे तस्मात्तत्साधनावगमः प्रवर्त्तकः, सत्यम् , द्वये सत्यपीच्छैव प्रवर्त्तिका वक्तुं युक्ता तस्यां प्रवृत्तिदर्शनात् , प्रवृत्तिर्हि नाम प्रयत्नः प्रयत्नश्चेच्छाकार्य इति काणादाः, विषयनियमे तु श्रेयस्साधनत्वं कारणं न प्रवृत्त्युत्पादे, किं च भावनावगतं श्रेयस्साधनत्वं प्रवर्तकमिष्यते तैस्तच्च न पृथगभिधातुं युक्तम् , भावनायाः त्र्यंशत्वेन तत्स्वरूपावगमसमये एतदंशयोः स्वर्गयागयोः साध्यसा-

घनभावावगतिसिद्धेः, न चांशद्वयावच्छिन्नस्य व्यापारस्य श्रेयसाधनत्वं रूपं वक्तुमुचितम् अनिष्पन्नस्य तस्य ताद्रूप्याभावान्न ह्यनिष्पन्ने गवि तदेकदेशे सास्नादौ गोत्वरूपं सामान्यं निविशते नचांशत्रयपूरणमन्तरेण भावनाख्यव्यापारनिष्पत्तिरिति।

यत्तु लिङादेः शब्दस्य तद्व्यापारस्य वा प्रेरकत्वमुच्यते तत्प्रागेव प्रतिक्षिप्तम्, विधिरपि स्वमहिम्ना न प्रेरकस्साध्यसाधनसम्बन्धावबोधपुरस्सरे तु तस्य प्रवर्तकत्वे फलस्यैव प्रवर्तकत्वमिदमनन्तरमभिहितं भवति।

यस्त्वाह प्रेरकत्वं चेत्फलं दर्शयतो विधेः।
प्रत्यक्षादिसमानत्वात्स्वातन्त्र्यं तस्य हीयते॥
स वाच्यः फलशून्यत्वे सुतरामस्वतन्त्रता।
यद्रिक्तमर्थं मूढो ऽपि न कश्चिदनुतिष्ठति॥

को हि नाम निष्फलमर्थं प्रेक्षावाननुतिष्ठेत्, ननु फले ऽपि दर्शिते केचित्तत्र न प्रवर्तन्ते एव, किं चातः कामं मा प्रवर्त्तिषत न हि कारको विधिरपि तु ज्ञापक इत्युक्तम्, ननु फलमप्रदर्शयन्नपि ज्ञापयेत् न ज्ञापयितुमुत्सहते प्रेक्षावान् हि ज्ञाप्यते न च फलं विना ऽसौ तथा ज्ञापितो भवति इत्यलं बहुभाषितया॥

फलस्यैवेष्यमाणस्य पश्यन्प्रेरकतामतः।
यमर्थमधिकृत्येति सूत्रं व्यधित सूत्रकृत्॥

## प्रकरणार्थोपसंहारः—

तस्मात्पुंसः प्रवृत्तौ प्रभवति न विधर्नापि शब्दो लिङादि-
र्व्यापारो ऽप्येतदीयो न हि पटुरभिधा भावनानामधेया।
न श्रेयस्साधनत्वं विधिविषयगतं नापि रागादिरेवं
तेनाख्यत्काम्यमानं फलममलमतिः प्रेरकं सूत्रकारः॥

## वाक्यार्थस्वरूपनिरूपणम्—

आह—

परपक्षं प्रतिक्षिप्य प्रेरकं कथितं फलम्।
एवं परमतद्विष्टैर्वाक्यार्थस्स्वयमुच्यताम्॥

उच्यते, यमर्थमधिकृत्य पुरुषः प्रवर्तते तत्प्रयोजन(१)मिति वदता सूत्रकृता फलं प्रवर्तकमिति प्रदर्शितम्, "प्रमाणेनायं खलु ज्ञाता ऽर्थमुपलभ्य तमीप्सति जिहासति वा तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरुच्यते सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्ध"(१) इति च ब्रुवाणो भाष्यकारो ऽपि फलेप्सां प्रवर्तिकां प्रादी-

(१) न्यायसूत्रम्। अ. १ आ. १ सू. २४।
(१) न्यायभाष्ये चतुर्थं वाक्यम्।

दृशादिति तदीयां सरणिमनुसरद्भिरस्माभिरपि तथैव तत्कथितम्,

वाक्यार्थस्तु न क चिदपि सूत्रकारभाष्यकाराभ्यां सूचित इति चेत् पृथक्प्रस्थाना इमा विद्याः, प्रमाणविद्या चेयमान्वीक्षिकी न वाक्यार्थविद्येति,

यद्येवं पदार्थो ऽपि कस्मादिह दर्शितः "व्यक्त्याकृतिजातयः पदार्थ" इति, स्थाने प्रश्नः स तु शब्दानामर्थास्पर्शितां वदन्तं रुदन्तं च शमयितुं शब्दप्रामाण्यसिद्धये सूत्रकृता यत्नः कृतः,

यद्येवं वाक्यार्थमपि बाह्यं वास्तवमन्तरेण शब्दप्रमाणता न प्रतिष्ठां लभते इति तत्रापि प्रयत्नः कर्त्तव्य एव, सत्यम्, पदार्थप्रतिपादनयत्नेनैव तु कृतेन तत्र यत्नं कृतं मन्यते सूत्रकारः, यदयं पृथक्पदार्थेभ्यो न वाक्यार्थमुपदिशति स्म, तस्मादयमस्याशयः, पदार्थ एव वाक्यार्थ इति, तत्किममुमेव पक्षमनुमोदामहे पदार्थ एव वाक्यार्थ इति, बाढं ब्रूमः, किं च नैकपदार्थो वाक्यार्थः, अनेकस्तु पदार्थो वाक्यार्थः।

नन्वनेको ऽपि भवन्पदार्थ एवासौ न च पदार्थो वाक्यार्थो भवितुमर्हति सामान्ये हि पदं वर्त्तते विशेषे वाक्यम् अन्यच्च सामान्यम् अन्यो विशेषः अन्यत्राप्युक्तम् 'यत्राधिक्यं स वाक्यार्थ' इति तस्मादन्यः पदार्थः अन्यश्च वाक्यार्थः,

उच्यते, यदेतदुक्तमस्माभिरनेकः पदार्थो वाक्यार्थो न पुनरेक इति तत्र गृहीतमायुष्मता एतदुक्तं भवति परस्परं संसृष्टपदार्थसमुदायो वाक्यार्थ इति, संसर्ग एवाधिक इति यत्राधिक्यमित्युच्यते, न चानाक्षिप्तविशेषत्वेन संसर्ग उपपद्यते इति विशेषो वाक्यार्थ इत्युच्यते संसर्गस्तु स्वरूपतो न वाक्यार्थोऽपदार्थत्वात्, गौः शुक्ल आनीयतामिति पदार्थग्रामे संसर्गवाचिनः पदस्याश्रवणात्, श्रवणे ऽपि सुतरामनन्वयात् गौः शुक्ल आनीयतां संसर्ग इति को ऽस्यार्थः, तस्मात्संसृष्टो वाक्यार्थो न संसर्गः, तदुक्तम् 'व्यतिषक्ततो ऽवगतेर्व्यतिषङ्गस्य' इति, न च तन्तुभिरिव पटो वीरणैरिव कटः तदतिरिक्तो ऽवयविस्थानीयः पदार्थनिर्वर्त्यमानो वाक्यार्थ उपलभ्यते, जातिगुणक्रियावगमे ऽपि अवयविबुद्धेरभावात्, न च पदार्थावयवी वाक्यार्थः, तेन पृथग् वाक्यार्थं नोपदिष्टवानाचार्यः,

ननु गुणप्रधानभावमन्तरेण न संसर्गो ऽवकल्पते न चैकस्मिन्वाक्ये बहूनि प्रधानानि भवन्ति प्राधान्यमेव हि तथा सति न स्यात्, गुणास्तु बहवो भवन्ति तदिदमनेकगुणोपरक्तमेकं किं चित्प्रधानं स वाक्यार्थ इति तद्विषयेयमेकस्वभावा बुद्धिः, सत्यम्, तथा ऽपि ते एव संसृष्टाः पदार्था अवभासन्ते न तद्रारब्धः कश्चिदेकः संसर्गसिद्धिकृतस्तु गुणप्रधानभावो ऽभ्युपेयते, स च गुणप्रधानभावो न नियतो येनैकमेवेदं प्रधानमिति व्यवस्थाप्येत, क्वचित्क्रिया प्रधानं कारकं गुणः व्रीहिभिर्यजेतेति, क चित्कारकं प्रधानं क्रिया गुणः द्रव्यस्य चिकीर्षितत्वेनावगमाद् व्रीहीन् प्रोक्षतीति।

सिद्धतन्त्रं क्वचित्साध्यं तत्तन्त्रमितरत्क्वचित् ।
शब्दप्रयोगतात्पर्यपर्यालोचनया भवेत् ॥

तस्माद्गुणप्रधानभावानियमादन्योन्यसंसृष्टः पदार्थसमुदायो वाक्यार्थ इति एतावदेव श्रेयः, संसर्गावगमे च सर्ववादिनामविवादः ।

वाक्यार्थं मन्वते ये ऽपि नियोगं भावनां क्रियाम् ।
तैरप्यन्योन्यसंसृष्टः पदार्थग्राम इष्यते ॥

ननु संसर्गवदन्यव्यवच्छेदो ऽपि गम्यते गौः शुक्ल आनीयतामिति श्रुते कृष्णादिभ्यो व्यवच्छिद्यते, अन्यापोहस्तु न पदार्थ इत्युक्तम्, तस्मान्न भेदो वाक्यार्थः,

ननु संसर्गो ऽपि न शब्दार्थः, सत्यम्, स हि शब्दस्याभिधेयो न भवति न तु ततो न प्रतीयते, अनभिधेयः कथं प्रतीयते इति चेद् एतदग्रे निर्णेष्यते, व्यवच्छेदे तु न सा गतिस्तस्मात्संसृष्टाः पदार्था वाक्यार्थ इति स्थितम्,

अथ वा गुणीभूतेतरपदार्थानुगृहीत एक एव प्रधानभूतः पदार्थो वाक्यार्थ इत्येकाकारप्रतीतिबलादुपेयताम्,

## फलस्य वाक्यार्थत्वस्थापनम्—

एकस्त्वयमसावर्थ इति न निर्णेतुं शक्यते, यदि त्ववश्यमेकस्य कस्य चिदभिषेककलशो दातव्यः तत्फलस्यैव दीयताम्, न हि निष्प्रयोजनम् किं चिद्वाक्यमुच्चार्यते ।

क्व चित्साक्षात्पदोपात्तं क्व चित्प्रकरणागतम् ।
क्व चिदालोचनालभ्यं फलं सर्वत्र गम्यते ॥

सकलेन च कारककलापेन क्रिया निर्वर्त्यते क्रियया च फलं न तु फलेनान्यत्किमपि निर्वर्त्यते इति प्रधानत्वात्फलमेव वाक्यार्थः,

ननु फलमपि पुरुषार्थमिति पुरुषः प्रधानं स्यात् नैतदेवम्, फलं सुखात्मकत्वात्पुरुषाश्रितं भवति सुखादीनामात्मगुणत्वान्न चैतावता पुरुषः प्रधानम्, सोऽपि हि फलार्थमेव यतते भावना तावत्फलनिष्ठ एव व्यापारः नियोगस्यापि फलं विना न प्रवर्त्तकत्वमित्युक्तम्, क्रियाया अपि केवलाया वाक्यार्थत्वमपास्तम् ।

तस्मात्फलस्य साध्यत्वात्सर्वत्र तदवर्जनात् ।
क्रियादीनां च तादर्थ्यात्तस्य वाक्यार्थतेष्यते ॥

ननुफलस्य स्वर्गादेः निसर्गतः सिद्धरूपत्वात्कारकैस्सह सम्बन्धो न प्राप्नोति सिद्धस्य च कः संबन्धः, क्रियागर्भ इति चेत्तर्हि फलमपि कारकाण्यपि क्रियया सम्बध्यन्ते को विशेषः, सत्यम्, परं तु कारकाणि साधनत्वेन फलं तु साध्यत्वेन क्रियया हि फलं साध्यते न फलेन क्रियेत्यतः फलस्यैव प्राधान्यमिति सिद्धम् ।

अन्योन्यसंगतिविशेषित एव यस्मा-
द्वाक्यार्थभावमुपयाति पदार्थपुञ्जः ।
एतच्च चेतसि निधाय ततो न भिन्नं
वाक्यार्थमभ्यधित कं चन सूत्रकारः ॥
प्राधान्ययोगादथ वा फलस्य
वाक्यार्थता तत्र सतां हि यत्नः ।
प्रयोजनं सूत्रकृता तदेव
प्रवर्तकत्वेन किलोपदिष्टम् ॥

## उद्योगस्य वाक्यार्थत्वनिराकरणम्—

अपरे पुनर्लिङादिशब्दश्रवणे सति समुपजायमानमात्मस्पन्दविशेषमुद्योगं नाम वाक्यार्थमाचक्षते तत्स्वरूपं तु वयं न जानीमः, को ऽयमात्मस्पन्दो नामेति, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा हि नवात्मनो गुणा विशेषगुणा भवन्ति नान्ये, तत्रायमात्मस्पन्दो बुद्धिर्वा स्यात्प्रयत्नो वा इच्छाद्वेषयोरन्यतरो वा, अन्ये तु विकल्पयितुमपि न युक्ताः, तत्र यदि बुद्धिरात्मस्पन्द उच्यते तर्हि प्रतिभावाक्यार्थ इत्युक्तं भवति न नूतनं किं चिदुत्प्रेक्षितमेतत्, अथ प्रयत्न आत्मस्पन्दः तर्हि भावनाया नामान्तरकरणमुद्योग इति, अथेच्छाद्वेषयोरन्यतरो ऽसौ तर्हि सुखेच्छा दुःखजिहासा वा वाक्यार्थ इत्ययपक्ष एवायं नापूर्वं किं चित्, अथापि भाट्टपरिकल्पितो व्यापार आत्मस्पन्दः सो ऽपि भावनैव नार्थान्तरम्, अथानुष्ठेयः प्रेरकः कश्चिदर्थ उद्योगः स तर्हि नियोग एव उपसर्गान्यत्वमिदं न वस्तु अन्यत् ।

तस्मादश्रुतपूर्वेण कृतमुद्योगपर्वणा ।
स भारतमनुष्याणां गोचरो न तु मादृशाम् ॥

## प्रतिभाया वाक्यार्थत्वनिराकरणम्—

अन्यैस्तु प्रतिभा वाक्यार्थ इष्यते तत्पक्षस्तु संसर्गनिर्भासज्ञाननिराकरणेन प्रागेव प्रतिक्षिप्तः ।

प्रतिभा खलु विज्ञानं तच्च शब्देन जन्यते ।
न तु शब्दस्य विषयो रूपधीरिव चक्षुषः ॥

बाह्यस्य विषयस्याभावात्सैव विषय इति चेन्न तस्य समर्थितत्वात्, यो ऽपि व्याघ्र आयात इत्युक्ते शूरकातरनराधिकरणनानाप्रकारकार्योत्पादः स बाह्ये ऽर्थे व्याघ्रागमनादौ प्रतिपन्ने वासनानुसारेण भवन्न प्रतिभामात्रहेतुको भवति, तस्य हि ज्ञायमानो ऽर्थः करणं न तज्ज्ञानमात्रम्, अर्थस्तदानीं नास्तीति चेद् विप्रलम्भकवाक्यमिदम् असत्यार्थं भविष्यति न त्वबाह्यविषयम् तत्, यथा ऽवस्थिते

वनितात्मनि बाह्ये ऽर्थे वासनानुसारेण कुणप इति कामिनीति भक्ष्यमिति प्रतिभा भवन्ति तथा शब्दार्थे ऽपि व्याघ्रागमने ऽवगते शूराणामुत्साहः कातराणां भयमित्यादि कार्यं भवति न त्वेतावता प्रतिभा शब्दार्थो भवितुमर्हति, तस्माद्वाक्यप्रयोजनत्वेन वा यदि प्रतिभा वाक्यार्थः कथ्यते कथ्यतां नाम न त्वसौ शब्दस्याभिधेया, अनभिधेया ऽपि संसर्गवद्वाक्यार्थ इति चेतत्राप्युक्तम्, संसृष्टा अर्था वाक्यार्थो न संसर्गः, एवमिहापि प्रतिभान्तो ऽर्थो वाक्यार्थो न प्रतिभेति, शब्दस्य च प्रत्यक्षवद्वर्त्तमानार्थनिष्ठत्वाभावाद् अनागताद्यर्थभिधायिनो ऽर्थासन्निधानेन प्रतिभापरत्वम् यदुच्यते तदप्ययुक्तम्, अनागतादिविषयत्वे ऽपि तस्यार्थविषयत्वं प्रसाधितमिति कृतं विस्तरेण ।

वाक्यार्थः परमार्थ एव तदयं नो कल्पनानिर्मितः
तद्वानप्युदितः पदस्य विषयस्तेनार्थसंस्पर्शिता ।
आप्रामाण्यमतश्च ग्राह्यविषयाभावेन यद्वर्ण्यते
तच्छब्दस्य निरस्तमित्यकलुषं प्रामाण्यमस्य स्थितम् ॥

इति न्यायमञ्जर्यां पञ्चममाह्निकम् ॥

---

पदस्वरूपनिरूपणोपक्रमः ।

ननु नाद्यापि शब्दस्य निरणायि प्रमाणता ।
बीजं पदार्थवाक्यार्थबुद्धेर्न हि निरूपितम् ॥

उच्यते, किमत्र निरूपणीयं यदनन्तरं यद्भवति तत्तस्य निमित्तम्, पदवाक्यश्रवणे च सति पदार्थवाक्यार्थसंप्रत्ययो भवति इति ते एव तत्र निमित्तम्।

किं पुनरिदं पदं नाम किं च वाक्यमिति, उक्तमत्र वर्णसमूहः पदं पदसमूहो वाक्यमिति,

नन्वेतदेव न क्षमन्ते न हि वर्णानां समूहः कश्चिदस्ति वास्तवः तेन कुतस्तत्समूहः पदं भविष्यति तदभावच्च नतरां पदसमूहो वाक्यमवकल्पते न च वर्णानां व्यस्तसमस्तविकल्पोपहतत्वेन वाचकत्वमुपपद्यते तस्मादन्य एव स्फोटात्मा शब्दो ऽर्थप्रतिपादक इति प्रतिजानते,

नन्वेवमस्तु स्फोटो ऽन्य एवार्थप्रतिपादको भवतु का क्षतिर्नैयायिकानाम्, कथं न क्षतिः आप्तप्रणीतत्वेन हि शब्दस्य प्रामाण्यं तैरुक्तम्, स्फोटस्य च नित्यत्वेन आप्तप्रणीतत्वमतश्च यस्यानित्यत्वं वर्णात्मनः शब्दस्य साधितं नासावर्थप्रतीतिहेतुरतो न प्रमाणम्, यश्चार्थप्रतीतिहेतुः स्फोटात्मा शब्दस्तस्य नानित्यत्वं न चाप्तप्रणीतत्वमित्यस्थाने नैयायिकाः क्लिश्रा भवेयुः,

तस्मादनित्यानां वर्णानामेव वाचकत्वं प्रतिष्ठापनीयं पराकरणीयश्च स्फोट इति, तदुच्यते, गकारादिवर्णावगमे सत्यर्थप्रतीतेर्भावात्तदभावे चाभावात्तेषामेवार्थप्रत्यायनसामर्थ्यम्, ते एव च श्रवणकरणैकावगमगोचरतया शब्दव्यपदेशभाज इति न प्रतीत्यनुपारूढः स्फोटो नाम शब्दः कश्चित्प्रत्यक्षानुमानातीतः परिकल्पनीयः,

## वर्णानामर्थबोधकत्वस्य निराकरणम्—

आह कथमेवं भविष्यति दूरापेता इमे मनोरथाः कुतो वर्णानामर्थप्रत्यायकत्वं ते हि वर्णा गकारादयो ऽर्थं प्रतिपादयन्तः समस्ताः प्रतिपादयेयुः व्यस्ता वा, न तावद्व्यस्ताः एकैकवर्णाकर्णने सत्यप्यर्थप्रतीतेरनुत्पादात्, सामस्त्यं वर्णानां नास्त्येव, तद्धि सत्तामात्रेण वा स्यात्प्रतीयमानत्वेन वा, नैयायिकपक्षे तावत्सत्तया यौगपद्यमविद्यमानम् आशुविनाशिनः शब्दस्य दर्शितत्वात्,

अथापि मीमांसकमतेन नित्यः शब्द इष्यते तत्रापि सत्तया यौगपद्यस्य सकलवर्णसाधारणत्वात्केन वर्णसमुदायेन को ऽर्थः प्रत्याय्येतेति नावधार्यते,

अथोच्यते न चक्षुरादीनामिव वर्णानां कारकत्वं येनागृहीतानामेव सतां यौगपद्यमात्रमर्थप्रत्ययनाङ्गं स्यात्, ज्ञापकत्वात्तेषां गृहीतानां सतां धूमादिवत्प्रत्यायकत्वमिति प्रतीतावेव सामस्त्यमुपयुज्यते इति ।

एतदप्यघटमानम्, प्रतीतिसामस्त्यं हि किमेकवक्तृप्रयुक्तानां वर्णानामुत नानापुरुषभाषितानाम्, तत्रानेकपुरुषभाषितानां कोलाहलस्वभावत्वेन स्वरूपभेद एव दुरवगम इति कस्य सामस्त्यमसामस्त्यं वा चिन्त्येत, सत्यपि वा तथाविधे सामस्त्ये नास्त्येवार्थप्रतीतिः, एकवक्तृप्रयुक्तानां तु प्रयत्नस्थानकरणक्रमापरित्यागादवश्यम्भावी क्रमः क्रमे च सत्येकैकवर्णकरणिकार्थप्रतीतिः प्राप्नोति न चासौ दृश्यते इति व्यस्तसमस्तविकल्पानुपपत्तेर्न वर्णा वाचकाः, वर्णविषया अपि बुद्धयस्तथैव विकल्पनीयाः, ता अपि न युगपत्सम्भवन्ति क्रमे च सत्येकैकवर्णबुद्धेरर्थसम्प्रत्ययः प्रसज्यते इति,

यदप्युच्यते पूर्वपूर्ववर्णजनितसंस्कारसहितो ऽन्त्यवर्णः प्रत्यायक इति तदप्ययुक्तम्, संस्कारो हि नाम यदनुभवजनितस्तद्विषयमेव स्मरणमुपजनयति न पुनरर्थान्तरविषयं ज्ञानमिति, स्मृतिद्वारेण तर्ह्यर्थप्रत्यायको ऽसौ भविष्यतीति चेद् एतदपि नास्ति, ज्ञानयौगपद्यप्रसङ्गादन्त्यवर्णज्ञानानन्तरं हि पूर्ववर्णस्मरणमिव समयस्मरणमपि तदैवापतति ततश्च ज्ञानयौगपद्यम्, न च क्रमोत्पादे किं चित्कारणमुत्पश्यामः, अथापि तेन क्रमेण भवेतां तथा ऽपि तदानीमन्त्यवर्णज्ञानमुपरतमिति कस्य साहायकं पूर्ववर्णस्मृतिर्विदधातीति, एतच्चानेकपूर्ववर्णविषयामेकां स्मृतिमभ्युपगम्योक्तं न पुनरेका सर्ववर्णगोचरा

स्मृतिः, कुतः—

भिन्नोपलम्भसंभूतवासनाभेदनिर्मिताः ।
भवेयुः स्मृतयो भिन्ना न त्वेका ऽनेकगोचरा ॥

अथ वदेत्संकलनाज्ञानमेकं सदसद्वर्णगोचरं भविष्यति तदुपारूढाश्च वर्णा अर्थं प्रत्याययिष्यन्तीति तदपि दुराशामात्रम्, तथाविधज्ञानोत्पत्तौ कारणाभावात् न चेन्द्रियमतीतवर्णग्रहणसमर्थं न संस्कारो वर्तमानग्राही भवति न च युगपदिन्द्रियं संस्कारश्चेमां बुद्धिं जनयतः संस्कारस्य सहचरदर्शनाद्याहितप्रबोधस्य सतः स्मरणमात्रजन्मनि निर्ज्ञातसामर्थ्यस्येन्द्रियेण व्यापाराभावात्, तस्मान्न वर्णा वाचकाः,

अतश्चैवं यदि ते वाचका भवेयुर्विपरीतक्रमप्रयुक्ता अप्यर्थं गमयेयुः, क्रमश्चेदपेक्ष्यते स व्यतिरिक्ताव्यतिरिक्ततया चिन्तनीयः, अव्यतिरेके ते एव ते वर्णा इति कथं न बोधकाः व्यतिरेके तु किमप्यधिकं वाचकमभ्युपगतं भवतीति मत्पक्षमाजिगमिषति भवान्,

ननु व्युत्पत्तिवशेन शब्दो ऽर्थप्रत्यायकतामुपयाति व्युत्पत्तौ च यावन्तो यत्क्रमका वर्णा यमर्थमभिवदन्तो दृष्टास्ते तावन्तस्तत्क्रमकास्तमर्थमभिवदिष्यन्तीति किं विकल्पमालया, तदुक्तम् (१)—

यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधका इति ॥

तदुच्यते, व्युत्पत्तिरेवेयं विचारणीया वर्त्तते परावगतिपूर्विका हि शब्दात्स्वयमवगतिः परावगतौ च के कियन्तः कथं कमर्थं प्रतिपादयन्तो ऽनेन दृष्टा येभ्यः तथैव तमर्थं प्रतीयादिति दुरधिगमा हि वर्णावर्तनी ।

यावन्तो यादृशा ये चेत्येवं तावत्प्रभाषसे ।
कियन्तः कीदृशाः के चेत्येवं यावन्न पृच्छ्यसे ॥

## अनुमानेन स्फोटस्य साधनम्—

तस्मात्सर्वप्रकारमवाचका वर्णाः, अस्ति चेयं शब्दादुच्चारितात्तदर्थावगतिर्न चेयमकरणिकैव भवितुमर्हति तदस्याः करणं स्फोट इति, कार्यानुमानमिदमस्तु परिशेषानुमानं वा अर्थापत्तिर्वा सर्वथा ऽर्थप्रतीतिलक्षणकार्यवशात्कल्प्यमानं तत्करणं स्फोट इत्युच्यते, स च निरवयवो नित्य एको निष्क्रमक इति न वर्णपक्षक्षपणदक्षदूषणपात्रतां प्रतिपद्यते, अतश्च स्फोटो ऽर्थप्रतिपादकः तत्र शब्दादिति प्रातिपदिकार्थो ऽप्युपपन्नः,

(१) श्लोकवर्तिके स्फोटवादे श्लो. ६९ । व्यवहारावगम्यं हि वाचकत्वं नास्मदिच्छाधीनमतो यथादर्शनं तदभ्युपगमान्न काचिदतिप्रसक्तिरस्तीति भावः ।

अथ वर्णाः शब्दशब्देनोच्यन्ते ते चार्थप्रतिपादकास्तथापि शब्दादित्येकत्वं विभक्त्यर्थो न संगच्छते शब्देभ्यः प्रतिपद्यामहे इति व्यवहारः स्यात्, स्फोटात्मनि तु शब्देऽर्थप्रतिपादके इष्यमाणे शब्दादिति प्रातिपदिकार्थो विभक्त्यर्थश्च द्वयमप्युपपन्नम्,

ननु न स्फोटः शब्दशब्देनोच्यते किं तु वर्णा एव श्रोत्रग्रहणे ह्यर्थे शब्दशब्दः प्रसिद्धः ते च श्रोत्रग्रहणा इति, नैतदेवं शब्दत्वस्यापि श्रोत्रग्रहणात्मनो निर्भररम्भाङ्काररवप्रभृतीनां च सत्यपि श्रोत्रग्रहणत्वे शब्दकार्यनिर्वर्त्तकत्वानुपपत्तेः, तस्माद्यतो ऽर्थप्रतिपत्तिस्स शब्दः अर्थप्रतिपत्तिश्च स्फोटादेव न वर्णेभ्य इति स्फोट एव शब्दः,

नन्वेवं सति धूमादीनामप्यर्थप्रतीतिहेतुत्वाच्छब्दत्वं प्राप्नोति, मैवं वादीः अथ गौरित्यत्र श्रोत्रजप्रतिभासे बहवो ऽर्थाः प्रतिभासन्ते तत्र कस्तेषां शब्द इत्युपक्रम्य यतो ऽर्थप्रतिपत्तिस्स शब्द इत्युपसंहृते कुतो धूमादीनां शब्दत्वशङ्कावकाशः,

ननु चेयमर्थप्रतीतिर्वर्णेषु भवत्सु भवन्ती तेष्वभवत्सु चाभवन्ती तानुत्सृज्य कथं स्फोटकार्यतामुपयायात्, उच्यते अनन्यथासिद्धं तद्भावभावित्वं तत्कार्यतामवगमयति नान्यथासिद्धम्, इदं त्वन्यथासिद्धम्, का पुनरन्यथासिद्धिः स्फोटव्यञ्जकत्वाद्वर्णानां तदानन्तर्यमर्थप्रतीतेरुपप्लवते वर्णाभिव्यक्तः स्फोटो ऽर्थप्रतिपत्तिमादधाति भ्राम्यति जनो वर्णैरियमर्थप्रतीतिरुत्पादितेति,

## वर्णानां स्फोटव्यञ्जकत्वम्—

ननु स्फोटव्यक्तावपीदानीं वर्णानां क गतास्ते व्यस्तसमस्तविकल्पाः, आह च भट्टः(१)—

> यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
> सो ऽपि पर्यनुयोगेन नैवानेन विमुच्यते इति ॥

भाष्यकृता ऽपि(२) "ननु संस्कारकल्पनायामदृष्टकल्पना"इत्याशङ्क्य प्रति-

---

(१) श्लोकवार्तिके स्फोटवादे श्लो० ९१ । यच्च वर्णानां प्रत्येकं न वाचकत्वमितरवर्णोच्चारणवैयर्थ्यापत्तेः न वा समस्तानां वर्णानामुच्चरितप्रध्वंसितया समुदायासम्भवात् इति वर्णानामर्थबोधकत्वे यद् दूषणं तत्स्फोटवादिमतेऽपि समानम्, तथाहि प्रत्येकं वर्णा न स्फोटव्यञ्जका इतरवर्णोच्चारणवैयर्थ्यात् न समुदिताः तेषा उच्चरितप्रध्वंसितया समुदायायोगादित्यर्थः ।

(२) शाबरभाष्ये अ० १ पा० १ सू० ५ । शब्दकल्पनायां वर्णातिरिक्तस्फोटरूपशब्दकल्पनायां सा स्फोटाभिव्यक्तये संस्कारकल्पना अतिरिक्तस्फोटरूपशब्दकल्पना चेत्यर्थः ।

विहितं "शब्दकल्पनायां सा च शब्दकल्पना च" इति,

नैष दोषः, न स्फोटव्यक्तौ विकल्पाः प्रभवन्ति, कुतः एके तावदाचक्षते प्रथमवर्णश्रवणवेलायां स्फोटो ऽभिव्यक्तो भवति न च द्वितीयादिवर्णवैफल्यं तद्‌वगतेरेवातिशयकरणाद्यथा रत्नपरीक्षकाणां प्रथमदर्शने रत्नरूपममलमप्रकाशमानमपि पुनः पुनः परीक्षमाणानां चरमे चेतसि चकास्ति निरवद्यं रत्नतत्त्वम्, एवमिहापि प्रथमवर्णश्रुत्या व्यक्ते ऽपि स्फोटे स्फुटतरप्रतीत्यै वर्णान्तराणि प्रयोद्यन्ते इति,

## ध्वनीनां स्फोटव्यञ्जकत्वम्–

अपरे तु वदन्ति ध्वनय एव स्फोटस्य च व्यञ्जकाः तैश्च मरुद्भिरनवयव एव एष स्फोटो ऽभिव्यज्यमानस्ताल्वादिस्थानकरणसंयोगोपाधिवशोपप्लवमाननानाकारगकारादिभागयोगीव प्रतिभासते, मरुतां चञ्चलत्वादुच्चारितप्रध्वंसिनस्ते तं काल्पनिकाकारमवभासयन्ते, दृष्टं चोपाधिवशादसत्यमपि रूपमवभासमानं यथा कृपाणमणिदर्पणादिव्यञ्जकभेदेन श्यामदीर्घादिरूपं वदनस्य, नादात्मको हि शब्दो वीणावेणुमृदङ्गपटहादिव्यञ्जकभेदेन नानात्वमुपगच्छन्दृश्यते तस्मान्न पारमार्थिका एव ते वर्णाः न च स्फोटस्य व्यञ्जका इति क्व समस्तव्यस्तविकल्पाः प्रभवेयुः,

उपाधिभेदेन प्रतिभासमाना असत्याकाराश्च ते ऽर्थप्रत्ययान्वयव्यतिरेकानुविधायिनो दृश्यन्ते तेन यदुच्यते शब्दकल्पनायां कल्पनाद्वैगुण्यमिति तत्रैकगुणा ऽपि कल्पना नास्ति का कथा द्वैगुण्यस्येति,

तस्मात्स्फोटात्मकादेव शब्दादर्थप्रत्ययो वर्णानुविधायित्वं तु तस्यान्यथासिद्धमिति सिद्धम्,

## स्फोटस्य प्रत्यक्षग्राह्यत्वम्–

अपि च तार्किकाणामनुमानप्रियत्वात्तत्परितोषायेदमनुमानमभ्यधायि न परमार्थतः परमार्थतस्तु श्रौत्रे प्रत्यये प्रतिभासमानः प्रत्यक्ष एव स्फोटः,

आह किमिदमपूर्वं तस्कराचरितं वर्तते वर्णाः प्रत्यक्षमुपलभ्यमाना अपि दुर्भगा न प्रत्यक्षाः स्फोटः पुनरनवभासमानो ऽपि सुभगः प्रत्यक्ष इति,

उच्यते न ब्रूमः वर्णा न प्रत्यक्षा इति ते पुनरसन्तो ऽपि उपाधिवशाद्वदनदैर्घ्यादिवदवभासन्ते, शब्दस्त्वेको निरवयवः प्रतीयते तथा च पदमिति वाक्यमित्येकाकारप्रतीतिरस्ति न च भिन्ना वर्णास्तस्यामालम्बनीभवन्ति न हि सामान्यप्रत्ययो व्यक्त्यालम्बनो ऽवयविप्रत्ययो वा ऽवयवालम्बनः न च सेनावनादिबुद्धिवदयथार्थो पदवाक्यबुद्धिः बाधकाभावात्, एकार्थप्रत्याय-

त्वोपाधिकृतेयमेकाकारा बुद्धिरिति चेदेकार्थप्रतीरिदानीं कुतस्त्या, पदवाक्य-प्रतीतिपूर्विका हि पदार्थवाक्यार्थप्रतीतिः पदार्थवाक्यार्थप्रतीत्याख्यकार्यैक्या-च्च पदवाक्यबुद्धिरेकाकारेति दुरुत्तरमितरेतराश्रयत्वम् , औपाधिक-त्वं च सामान्यावयविबुद्धेरपि सुवचम् , बाधसन्देहरहितप्रतीतिदार्ढ्याेत्तत्र परिहार इति चेत्तदितरत्रापि समानम् , तस्मात्पदबुद्धेः पदस्फोटो वाक्यबुद्धेश्च वाक्यस्फोटो विषय इति प्रत्यक्ष एव स्फोटः तत्र पदस्फोटात्पदार्थप्रतिपत्तिः वा-क्यफोटाच्च वाक्यार्थप्रतिपत्तिः,

## वाक्यस्फोटसाधनम्—

आह यदि निरवयवः स्फोटात्मा शब्दो भवति वाक्यमपि शब्द एव तस्य पदात्मकास्त्ववयवा मा भूवन् तस्य चेत्पदात्मानो ऽवयवा भवन्ति-पदस्यापि तर्हि वर्णात्मानो ऽवयवा भवन्तु,

उच्यते किं चिदुच्छ्वसितमेव मे हृदयम् , मन्ये भविष्यत्यायुष्मतो विवे-कालोको बोध्यमानो भोत्स्यसे किं चित् , ध्वन्युपाधिभेदप्रवृत्तवर्णभेदावभासवि-प्रलब्धबुद्धिं भवद्विधं बोधयितुं पदस्फोट एष निरवयवो ऽस्माभिर्दर्शितः, परमा-र्थतस्तु पदस्फोटो वाक्यावयवभूतो नास्त्येव निरवयवमेव वाक्यं निरवयवस्यैव वाक्यार्थस्य बोधकम् , यथा पदस्यावयवा न सन्ति तथा वाक्यस्यावयवाः पदा-नीति, तथा चाहुः"वाक्ये पदानामसत्त्वादसत्त्वं तदर्थे पदार्थानां निरवयवौ वाक्य-वाक्यार्थौ"इति, अवयवकल्पनायां हि यथा वाक्यस्यावयवाः पदानि पदानामव-यवा वर्णा एवं वर्णानामप्यवयवैर्भवितव्यं तदवयवानामप्यवयवान्तरैरित्यान-न्त्यात्का व्यवस्था स्यात् , वर्णान् प्राप्य तु यद्यवयवकल्पनातो विरन्तव्यं तद्वाक्ये एव विरम्यताम् , एकघटनाकारा हि वाक्यार्थबुद्धिस्तथाविधादेव वाक्यादुत्पत्तुम-र्हति, वृद्धव्यवहाराद्धि शब्दार्थे व्युत्पद्यन्ते व्यवहर्त्तारः तत्रास्य पदस्य प्रयोग एव न केवलस्य दृश्यते व्यवहारानङ्गत्वाद् वाक्यं तु प्रयोगार्हमिति तत्रैव व्युत्पत्तिः तत एवार्थसम्प्रत्ययः, अवयवप्रतिभासस्तु भ्रममात्रमर्थो ऽपि वाक्यस्यैक एव-नरसिंहाकारः, जात्यन्तरं हि नरसिंहो नाम तत्र न नरार्थो नापि सिंहार्थः,

एवंपदार्थेभ्यो ऽन्य एव वाक्यार्थः पानकादिवत् , यथा पानकं शर्करानाग-केशरमरिचादिभ्यो ऽर्थान्तरमेव यथा च सिन्दूरहरिताललाक्षादिभ्यो ऽर्थान्तर-मेव चित्रम् , यथा वा षड्जर्षभगान्धारधैवतादिभ्यो ऽर्थान्तरमेव ग्रामरागः तथा पदेभ्यो वाक्यं पदार्थेभ्यो वाक्यार्थः,

## वाक्यांशानामसत्यत्वम्—

कथं तर्हि तदंशावगम इति चेत् कल्पनामात्रं तत् नासौ परमार्थः, तच्छ-

ब्दानुगमे तदर्थानुगमदर्शनात्पारमार्थिकत्वं भागानामिति चेन्न, कूपसूपयूपानामेकाक्षराननुगमे ऽप्यर्थानुगमाभावात् , न च केवलानुगममात्रेण तत्कारणभावो वक्तुं शक्यो रेणुपटलानुगामितया करितुरगादिवत्पिपीलिकापङ्क्तेरपि दृश्यमानायास्तत्कारणत्वप्रसङ्गात् , तस्मात्प्रकृतिप्रत्ययांशवदसत्पदार्थपरिकल्पनं वाक्यार्थावगमोपायतया ऽऽश्रीयते न त्वर्थस्तदीयः तत्राश्वकर्णादिवदुपलभ्यते, असत्यमपि सत्योपायतां प्रतिपद्यमानं दृश्यते अलीका हि दंशादयः सत्यमरणकारणं भवन्ति लिप्यक्षराणि चासत्यान्येव सत्यार्थप्रतिपत्तिमादधति, स्वरूपसत्यानि तानीति चेन्न, रेखारूपतया तेषामर्थाप्रतिपादकत्वात् , गकारो ऽयमिति एवं गृह्यमाणा रेखा अर्थप्रत्ययहेतवस्ताः येन रूपेण सत्यास्तेन नार्थप्रतिपादिकाः येन चार्थप्रतिपादिकास्तेन न सत्या इति,

ननु प्रकृतिप्रत्ययाद्यंशा अपि परमार्थसन्त एव तथा प्रतिभासात्तदर्थप्रत्ययहेतुत्वाच्च,नैतदेवम् अन्वाख्यानभेदेन तेषां स्वरूपेणेयत्तानिश्चयानुपपत्तेः, भवतीत्यत्र भूशब्दः प्रकृतिः क चिदन्वाख्यायते कचिद्भवशब्दः प्रत्ययादेशागमगुणवृद्धिवर्णलोपाद्यन्याख्यानविसंवादात्कः पारमार्थिकः प्रकृतिप्रत्ययविभागः, कल्पनामात्रं त्वेतत् 'इयं प्रकृतिरेष प्रत्यय'इति,

एवं पदार्थानामपि वाक्यार्थपरिकल्पनयैवापोद्धारः तदुक्तम्—

पदं कैश्चिद् द्विधा भिन्नं चतुर्धा पञ्चधा ऽपि वा ।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवदिति(१) ॥

अपि च पारमार्थिकत्वे पदानां नियतमविसंवादि रूपं प्रतीयेत विसंवादि तु तत्, नामाख्यातसाधारणवर्णसन्निवेशदर्शनान्न नियतं तेषां रूपमतः काल्पनिकमेव तन्न वास्तवम्, न च निश्चेतुमपि तत्पार्यते "काले नदन्ति नागा" इत्यत्र हि कीदृशः पदविभागः अर्थद्वयोपपत्तेः, उभयत्र च वर्णतुल्यत्वात् किं कालेन कृष्णेन दन्तिना हस्तिना अगास्त्वम् इत्येवमेतानि पदानि व्यवस्थाप्यन्ताम् अथ काले समये नदन्ति शब्दायन्ते नागाः करिणः फणिनो वेति, तस्मादनियमान्न पदतदर्थविभागः पारमार्थिकः,

अथ प्रथमप्रतिपन्नवाक्यार्थानुसारेण पदतदर्थविभागो व्यवस्थाप्यते तर्हि किं तेन तदानीं व्यवस्थापितेन वाक्यार्थस्य प्रथममेव प्रतिपन्नत्वात्,

किं च दध्यत्र मध्वत्रेति दधिमधुपदयोरिकारोकारयोरदर्शने ऽपि तदर्थ-

---

(१) वाक्यपदीये तृतीयकाण्डे श्लो० १ वाक्येभ्योऽपोद्धृत्य कल्पनाबुद्ध्या पदं पृथक् निष्कृष्य कैश्चित्पदं नामाख्यातभेदेन द्विधा भिन्नं कैश्चित्तु नामाख्यातोपसर्गनिपातभेदेन चतुर्धा कैश्चित् नामाख्यातोपसर्गनिपातकर्मप्रवचनीयभेदेन पञ्चधा स्वीकृतम् ततश्चाखण्डवाक्यव्युत्पत्तिरित्यर्थः ।

संप्रत्ययो दृश्यते तस्मादपि न पारमार्थिकः पदवर्णविभागः, निरस्तावयवं वाक्यं तथाविधस्यैव वाक्यार्थस्य वाचकमिति सिद्धम् ,

स्फोटस्य ब्रह्मरूपत्वम्–

ननु यथा पदेषु वर्णा न सन्ति वाक्येषु पदानि न सन्ति तथा महावाक्येष्ववान्तरवाक्यान्यपि न स्युः ततः किं महावाक्यान्यपि प्रकरणापेक्षया न तात्त्विकानि स्युः ततः किं प्रकरणान्यपि शास्त्रापेक्षया न स्युः ततो ऽपि किम् एकमेवेदं शास्त्रतत्त्वम् अविभागमद्वयमापतति,

उच्यते यदि तत्त्वं पृच्छसि बुद्ध्यसे वा साधो शब्दब्रह्मेदमद्वयमनाद्यविद्यावासनोपप्लवमानभेदमर्थभावेन विवर्तते न तु वाचकाद्विभक्तं वाच्यमपि नाम किं चिदस्ति, तस्मात्काल्पनिक एव वाच्यवाचकविभागो ऽयमविद्यैव विद्योपाय इत्याश्रीयते, वाग्रूपता तत्त्वम् सर्वत्र प्रत्यये तदनपायात्, यथोक्तम् ,

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनीति(१) ॥

सा चेयं वाक् त्रैविध्येन व्यवस्थितैवावभासते वैखरी मध्यमा पश्यन्तीति, तत्रेयं स्थानकरणप्रयत्नक्रमव्यज्यमानगकारादिवर्णसमुदायत्मिका या वाक् सा वैखरीत्युच्यते, विखर इति देहेन्द्रियसंघात उच्यते तत्र भवा वैखरी तदुक्तम्—

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धनेति(२) ॥

या पुनरन्तः संकल्प्यमानक्रमवती श्रोत्रग्राह्यवर्णरूपा ऽभिव्यक्तिरहिता वाक्सा मध्यमोच्यते, तदुक्तम्—

केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥ इति(३) ।

या तु ग्राह्यभेदक्रमादिरहिता स्वप्रकाशसंविद्रूपा वाक्सा पश्यन्तीत्युच्यते, तदुक्तम्—

अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनीति(४) ॥

---

(१) वाक्यपदीये प्रथमकाण्डे श्लो० १२९ । अवबोधस्य ज्ञानस्य नित्या वाग्रूपता यदि उत्क्रामेत् अपगच्छेत् तदा प्रकाशः न प्रकाशेत सा वाग्रूपता हि यतः प्रत्यवमर्शिनी सविकल्पकरूपा ।

(२)(३)(४) भारतवचनत्वेनैते श्लोकाः वाक्यपदीयटीकायां पुञ्जराजकृतायां प्रथमकाण्डे १४४ श्लोके लिखिताः ।

तदलमतिप्रसक्तानुप्रसक्त्या द्राघीयसी चर्चेयम् प्रकृतान्तरायकरिणीति न प्रतन्यते इह त्वेतावतैव पुनः प्रयोजनम् वर्णपदपूर्वको व्यवहारो न भवतीति वाक्येन लोके व्यवहारात्तस्य चावयवावयविव्यवस्थानुपपत्तेर्निर्भागमेव तद्वाचकं निर्भागश्च तस्य वाच्यो ऽर्थ इति, अवान्तरवाक्यमपि प्रयोगयोग्यं व्यवहारकारणमिति तन्न निह्नूयते अविद्यावस्थेयं वर्तते तत्रेयं व्यवहारवर्तनी यथादृश्यमानैवास्तु विद्यायां सर्वमेवेदमसारमिति, पदेन वर्णेन वा व्यवहाराभावात्तस्य केवलस्याप्रयोगात्तत्स्वरूपमस्यामपि दशायां न वास्तवमिष्यते इति ।

तस्मादेकः क्रमविरहितः कल्पितासद्विभागो
वाक्यस्फोटो जनयति मतिं तादृशीं स्वाभिधेये ।
वर्णास्त्वेते प्रकृतिलघवः कल्पनैकप्रतिष्ठाः
तस्मिन्नर्थे विदधति धियं नेत्यलं तत्कथाभिः ॥

## स्फोटनिराकरणोपक्रमः–

अत्राभिधीयते, किमयमनुमानमहिम्ना स्फोटाऽभ्युपगमः प्रत्यक्षप्रतीतिबलवत्तया वा, न तावदनुमानतः स्फोटस्वरूपमुपपादयितुं पार्यते परिदृश्यमानविशिष्टानुपूर्वीकवर्णकलापकरणेनार्थप्रतीतेर्घटमानत्वात् ,

## वर्णानां वाचकत्वस्य समर्थनम्–

ननु व्यस्तसमस्तादिविकल्पैरुत्सादितं वर्णानां वाचकत्वम् , नैतद् दुर्विकल्पाहते व्यस्तानां तावद्वाचकत्वं नेष्यते वर्णानां समस्ता एव ते वाचकाः,

यत्तु तत्सामस्त्यं नास्ति क्रमभावित्वादिति तदसत् , क्रमभाविनापि समस्तानां कार्यकारिणामनेकशो दर्शनात् , यथा युगपद्भाविनः समास्त्रयो ग्रावाणः एकामुखां धारयन्तो दृश्यन्ते तथा क्रमभविनो ऽपि समस्ता ग्रासा एकां तृप्तिमुत्पादयन्तो दृश्यन्ते, एकस्मिन्नपि हि ग्रासे हीयमाने न भवति तादृशी तृप्तिः अतः समस्ता एव ते ग्रासाः तृप्तेः कारणम् , न च समस्ता अपि ते ग्रासाः युगपत्प्रयोक्तुं शक्याः तथैकानुवाकग्रहणे संस्थानां क्रमभाविनीनामपि सामस्त्ये सति सामर्थ्यमेकया संस्थया विना तदामुखीकरणासम्भवात् एवं तावल्लोके सामस्त्यं क्रमभाविनां दृष्टम् , वेदे ऽपि दर्शपूर्णमासाभ्यामितीतरेतरयोगशंसिना द्वन्द्वेन समर्पितसाहित्यानामाग्नेयादियागानां पक्षद्वये प्रयोज्यत्वेन चापरिहार्यक्रमाणामेकाधिकारसम्पादकत्वं दृष्टम् , तथा ऐन्द्रवायवं गृह्णाति आश्विनं गृह्णाति इति सोमग्रहणाभ्यासानां समस्तानां क्रमभाविनां चैकप्रधाननिर्वर्तकत्वं दृष्टमित्यतश्च नायं विरोधः सामस्त्यं च क्रमभावित्वं चेति, एवं क्रमवर्तिनो ऽपि वर्णा एवा-

र्थाभिधायिनो भविष्यन्ति,

## स्फोटे अनुमानगम्यताया निराकरणम्—

ननु ग्राससंस्थादीनां युक्तं समस्तानां क्रमभावित्वं यतः कार्यमपि तदीयं तृप्त्यादि क्रमेण निर्वर्त्यमानं दृश्यते, यद्येवमाग्नेयादिभ्यः तर्हि क्रमेण निर्वर्त्यमानं किं कार्यमुपलभ्यते अवान्तरापूर्वमिति ब्रूमः, शब्दप्रामाण्यात् परमापूर्वनिर्वृत्तिस्तु तेषां सामस्त्ये सति सेत्स्यतीत्युच्यते, अवान्तरापूर्वनिर्वृत्ताविदानीं क्रमभाविनामाग्नेयावयवभूतक्रियाक्षणानां किमवान्तरं कार्यं का वा तस्य निर्वृत्तिरुपलभ्यते न ह्यवान्तरापूर्वेण स्वर्गमात्रा काचिदभिनिर्वर्त्यते शास्त्रार्थस्य तदानीमनिष्पन्नत्वादतः किमवान्तरापूर्वेण कृतेनापि यत्किं चित्त्ववान्तरापूर्वप्रायं कार्यं वर्णेष्वपि न न दर्शयितुं शक्यते, किं तदिति चेत् स्वरूपग्रहणं संस्कारो वा भविष्यति, तयोः प्रधानकार्यावयवत्वं नास्तीति चेद् मा भूदवयवत्वं तदुपयोगिता तु विद्यते एव, अवयवावयविव्यवहारस्तु अवान्तरपरमापूर्वयोरपि दुरुपपादः, पदानां तु वाक्यार्थप्रतिपत्तिलक्षणप्रधानकार्यावयवभूतपदार्थज्ञानाख्यकार्यनिर्वर्तकत्वमतिस्पष्टमस्त्येवेति न तेष्वेष दोषः प्रादुःष्यात्, वर्णानामपि गमनक्रियालक्षणानामिव ग्रामप्राप्तौ ग्रासानामिव तृप्तौ संस्थानामिवामुखीकरणे यद्यपि क्रमोपचीयमानतत्कार्यमात्रासमुन्मेषो नास्ति तथापि तदौपयिकस्योपलब्धिसंस्कारादिकार्यस्य करणात्तत्कार्यावयवी तावत्कृतो भवतीति न समस्तानां क्रमकारित्वमपहीयते, तत्र पूर्वे वर्णा अतीता अप्युपकरिष्यन्ति चरमवर्णस्तु वर्तमान इतीदृश एवायं काल्पनिकः क्रियाक्षणसमूह इव वर्णसमूहो ऽर्थप्रत्यायकः,

अथ वा क्रमोपलब्धेष्वपि वर्णेषु मानसमनुव्यवसायरूपमखिलवर्णविषयं सङ्कलनाज्ञानं यदुपजायते तदर्थप्रत्यायनाङ्गं भविष्यति, दृश्यते च विनश्वरेष्वपि पदार्थान्तरेषु क्रमानुभूतेषु युगपदनुव्यवसायो मानसः 'शतमाम्राणि भक्षितवान्देवदत्त' इति, न चायं प्रत्ययो नास्ति सन्दिग्धो बाध्यते वा, अनभ्युपगम्यमाने चेदृशि समुच्चयज्ञाने तन्निबन्धना भूयांसो व्यवहारा उत्सीदेयुः, स चायं सङ्कलनाप्रत्ययः स्मर्यमाणानुभूयमानप्राक्तनान्त्यवर्णविषयतया सदसद्वर्णगोचरश्चित्ररूप उपेयते, यदि वा ऽन्त्यवर्णे ऽपि तिरोहिते भवन्नसद्वर्णगोचर एव न चित्राकारः सो ऽर्थप्रतीतिहेतुरेक एवेति निरवकाशा व्यस्तसमस्तविकल्पाः,

ननु सङ्कलनाप्रत्यये ऽपि यदि ते वर्णाः क्रमेणावभासन्ते तदसावपि पूर्वोत्पन्नैकैकवर्णबुद्धिनिर्विशेष एव स्यादिति तदुपारूढा अपि वर्णा नार्थप्रतीतिहेतवो भवेयुः यदि त्वेकसुमनस्स्तबकाकारावभासी स प्रत्ययः तदा तस्मिन्क्रमानवगमाद्विपरीतक्रमा अपि ते वर्णा अर्थप्रतीतिकारिणः स्युः,

उच्यते, विशिष्टानुपूर्वीकवर्णमालाऽनुभवसमनन्तरभावी हि सङ्कलनाप्रत्ययो ऽर्थप्रतीतेर्हेतुर्न स्तबकाकारपरिच्छेदमात्रं विपरीतक्रमाशङ्कनं च तदानीं कुतस्त्यम्, स्तबकावभासे तावत्क्रम एव नास्ति कस्य वैपरीत्यमवैपरीत्यं वा यदनन्तरजन्मा ऽयं समुच्चयप्रत्ययः ताश्च तद्विशिष्टक्रमावभासिन्य एव पूर्वभाविन्यो वर्णबुद्धय इति कुतो वैपरीत्यविकल्पः, तस्मात्प्रथमावगमनियतानुपूर्वीकास्ते तदनन्तरभाविसमस्तावभासिसङ्कलनाप्रत्ययोपारूढा वर्णा अर्थप्रतीतिकारिण इति न दोषः,

यथा(१) "पूर्ववर्णजनितसंस्कारसहितो ऽन्त्यवर्ण" इति तत्र भवता मीमांसाभाष्यकृता वर्णितं तथा वा वर्णानामर्थप्रत्यायकत्वमस्तु,

नन्वत्रोक्तं संस्कारस्यार्थप्रतीतिजनकत्वं न दृष्टपूर्वं स्मृतावेव तस्य व्यापार इति, किमियं राजाज्ञा स्मृतिरेव संस्कारेण कर्त्तव्येति नेयं राजाज्ञा नयाज्ञा त्वेषा न हि संस्कारो नाम स्वतन्त्रः को ऽपि धर्म्मी किं तु पटुवभ्यासादरप्रत्ययगृहीतेष्वर्थेषु यदात्मनः स्मरणकारणं स संस्कारः सा च स्मृत्यैव कार्येण कल्प्यमाना शक्तिः न च शक्तिरूपस्य संस्कारस्य शक्त्यन्तरमर्थप्रतीतिजन्मनि सम्भवति येनैव कार्येण सा कल्प्यते शक्तिस्तदपहाय किं कार्यान्तरं कुर्यात्, स्मरणहेतोश्च संस्कारस्य प्रसवकारणमनुभवः अनुभवहेतोस्त्वस्य नूतनचरितस्य संस्कारस्य जन्मनिमित्तमेव नोत्पश्यामः तस्मान्नासावर्थप्रतीतिहेतुर्भवति,

नैतत्सारं, वर्णानुभवसंस्कृतमतेः पुंसो ऽर्थप्रतीतिदर्शनान्न हि स्मरणशक्तिः संस्कारः किं त्वात्मगुणो वासनाख्यः स च स्मृतिमिवार्थप्रतीतिमपि जनयितुमुत्सहते सर्वत्र नो दर्शनं प्रमाणं स्मरणजननकौशलमपि तस्य तथा दर्शनादवगम्यते तदिदमनुभवजननमपि ततो दृश्यते एव वर्णाश्च तदनुभवाश्च व्यतीताः अन्यच्च शब्दतत्त्वं नानुभूयते इति वक्ष्यामः, अस्ति चार्थप्रतीतिर्नासौ निष्करणिका करणव्यतिरेकेण हि सा ऽनुद्भवन्ती करणमाक्षिपति यदस्याः करणं स संस्कार इति स्मृतिरिवार्थप्रतीतिरपि तत्कार्यत्वात्तदनुमापिका भवत्येव,

यत्तु कुतस्तादृशः संस्कार उदेति जडप्रश्नो ऽयम् अनुभवहेतुकस्य सुप्रसिद्धत्वात्, तथा चाह, "वस्तुधर्मो ह्येष यदनुभवः पटीयान्स्मृतिबीजमाधत्ते" इति,

ननु स्मृतिबीजमिति यदुच्यते तत्कथमनुभवबीजं स्यान्नैष नियमः स्मृतेरेव बीजमिति, अनुभवस्तावत्तथाविधमात्मधर्ममाधत्ते स कार्यभेदो ऽपि नोत्पत्तौ कारणान्तरं मृगयते कार्यभेदश्च तथा दर्शनादवगम्यते इत्युक्तम्,

अथ वा किमनेन निर्बन्धनेन साक्षादर्थप्रतीतिकारी संस्कारः स्मृतिद्वारेण

---

(१) शाबरभाष्ये अ० १ पा० १ सू० ५ ।

तां करिष्यति पूर्ववर्णेषु संस्कारात्स्मरणमन्त्यवर्णे श्रोत्रेन्द्रियादनुभव इत्येवं स्मर्यमाणानुभूयमानवर्णकरणको ऽर्थप्रत्ययः स्यात्को दोषः,

नन्वनुभवक्रमाहितसंस्कारसामर्थ्यमनुरुध्यमानाः स्मृतयो ऽपि क्रमेणोत्पत्तुमर्हन्ति न युगपदिति ततश्च प्राक्तन एव दोषः सामस्त्याभावादिति, नैष दोषः नानावर्णविषयैः क्रमभाविभिरनुभवैः क्रमोपचयात्मा पुटपाकैरिव कार्तस्वरस्यैक एवात्मनः संस्कारः तादृगुपाधीयते येन सर्वानेव पूर्वदृष्टान्वर्णानसौ सकृत्स्मरतीति, संस्कारात्संस्कारोत्पत्तिरलौकिकीति चेन्नालौकिकी स्वाध्यायाध्ययने सिद्धत्वात्, उच्चारणक्रियायाः क्षणिकत्वात्तदाहिते संस्कारान्तरकारिणि संस्कारे ऽनिष्यमाणे ऽन्त्यमुच्चारणं प्रथमोच्चारणान्न विशिष्येत ततः किं पुरुषायुषेणापि नानुवाक एव आमुखीक्रियेत,

नन्वयमीदृशः प्रकारः एकस्मरणसिद्धये कल्पनीयः अर्थप्रतीतिहेतुता वा संस्कारस्य कल्पनीयेति सर्वथेयमदृष्टकल्पना ऽतो न पश्यामहे तत्र कः संस्कारं प्रति पक्षपातः कश्च स्फोटं प्रति विद्वेषः यदेष कल्प्यते नैष इति, उक्तमत्र तेनैव सुगृहीतनाम्ना भाष्यकारेण "शब्दकल्पनायां सा च शब्दकल्पना च" इति,

ननु नास्ति कल्पनाद्वैगुण्यं संस्कारो हि यथाप्रसिद्धि स्थित एव का तत्कल्पना न हि वयं स्मरणैककारणत्वं संस्कारधर्ममतिलङ्घितवन्तो भवन्त इव, कथं न लङ्घितवन्तो भवन्तः सर्ववर्णविषयैकस्मरणकारिता भवद्भिरपि कल्पितैव यैव हि वर्तनी वर्णानामर्थप्रतीतौ सैव स्फोटव्यक्तावपि तां च कल्पयित्वा शब्दो ऽन्यः कल्पित एवमतश्च संस्कारोभयवादिविहितस्य स्मरणकारित्वमुल्लङ्घ्यार्थप्रत्ययकारित्वं केवलमस्माभिरभिहितम्, भवद्भिस्तु मूलत एवारभ्य नवं विश्वमुत्थापितमपूर्वस्य शब्दस्य तावदस्तित्वं पुनर्वर्णव्यतिरिक्तत्वं पुनरवयवराहित्यं कल्पितमिति कथं न कल्पनागुरुत्वम् तदुक्तम्—

सद्भावव्यतिरेकौ च तथा ऽवयववर्जनम् ।
तवाधिकं भवेत्तस्माद्यत्नो ऽस्मावर्थबुद्धिषु इति(१) ॥

यत्पुनरवादि प्रथमवर्णबुद्धिवेलायामिव व्यक्तं स्फोटतत्त्वमुत्तरोत्तरबुद्धिभिरतिशयिततरप्रत्ययतां नीयते रत्नतत्त्ववदिति, स एष विषम उपन्यासः रत्नस्य हि सावयवत्वात्प्रथमप्रत्ययाविषयीकृतसूक्ष्मतरावयवविशेषग्राहिणामुत्तरोत्तरप्रत्ययानामस्ति तत्रावकाशः, स्फोटस्तु वर्णस्वरूपवदनंश इति तत्स्वरूपसर्व-

---

(१) श्लोकवार्तिके स्फोटवादे श्लो. ९४ । तव स्फोटवादिनः स्फोटसद्भावः तस्य च वर्णेभ्यो व्यतिरेकः सावयवे पदे गम्यमाने तद्विपरीतं निरवयवत्वं च कल्पनीयम् तस्मादवश्याश्रयणीयः संस्कारादिकल्पनांशः अर्थबुद्धावेवाश्रयणीयो न स्फोटाभिव्यक्तावित्यर्थः ।

स्वमाद्येनैव वर्णेन व्यक्तं किमिदानीमन्ये वर्णाः करिष्यन्ति एकदेशव्यक्तिस्तु निरवयवस्य वर्णस्येव न सम्भवति, यथोक्तम्—

अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटमिति(१) ॥

यो ऽपि द्वितीयो दृष्टान्त उदाहारि यथा ऽनुवाकः श्लोको वा प्रथमसंस्थया गृहीतो ऽपि संस्थानान्तराभ्यासैः स्फुटतरपरिच्छिन्नो भवति तथा स्फोटो ऽपि प्रथमवर्णव्यक्तौ वर्णान्तरैरतिशयिताभिव्यक्तिर्भविष्यतीति, सो ऽपि न सदृशो दृष्टान्तः श्लोकानुवाकयोरनंशत्वानुपपत्तेः, केचिदवयवा वर्णात्मानः पदात्मानो वा प्रथमायां बुद्धावपरिस्फुरन्तः संस्थाभ्यासलब्धातिशयायां तस्यां प्रकटीभवन्ति, स्फोटस्त्वेकवर्ण इव निरंश इति तत्र को बुद्धेरतिशययोगः तस्मादयमपि न सङ्गतो दृष्टान्तः,

## स्फोटे ध्वनिव्यङ्ग्यताया निराकरणम्—

ये ऽपि च मन्वते ध्वनिव्यङ्ग्यत्वात् स्फोटस्य न तत्र वर्णविकल्पावसर इति ते ऽपि न सम्यग्दर्शिनः, पराणुभ्यः वर्णप्रतीतिध्वनिभ्यः शब्दप्रतीतेरनुत्पादात्, अतिद्रुतोच्चिचारयिषया ऽनुपलभ्यमानवर्णविभागाच्च शब्दादर्थप्रत्ययाभावात्,

अथ ध्वनयः शब्दव्यक्तिमादधानाः स्थानकरणानुरोधेनासत्यमेव वर्णभेदमुपदर्शयन्ति श्यामादिरूपमिव मुखस्य खड्गादय इत्युच्यते तदप्यसत्, असत्यत्वे निमित्ताभावात्प्रतीयन्ते हि निर्बाधया बुद्ध्या वर्णास्तदतिरिक्तस्तु शब्दो न प्रतीयते यश्च न प्रतीयते सो ऽस्ति ये च प्रतीयन्ते ते न सन्तीत्युच्यमाने शशो नास्ति विषाणमस्तीति स्यात्तस्मादयमपि न कल्पनागौरवपरिहारक्षमः पन्थाः, अतः सुष्ठूक्तं "शब्दकल्पनायां सा च शब्दकल्पना च"इति, तस्मात्स्फोटप्रतिपत्तौ यः क्रम आस्थेयः सो ऽर्थप्रतिपत्तावेवास्थीयतामिति किं तेन स्फोटेन,

अन्ये तु उपलब्ध्यनन्तरसत्ताकानां वर्णानामर्थप्रत्यायकत्वमाचक्षते तदिह नेष्यते, क्षणिकत्वाद्वर्णानाम्, उपलब्धेरूर्ध्वसत्तानुपपत्तेः, सर्वथा व्युत्पत्त्यनुसारेण वर्णानामर्थप्रत्यायकत्वं तद्यथा पुरा दृष्टं तथा ऽभ्युपगम्यते इति तदुक्तं "यावन्तो यादृशा" इति,

यत्त्वत्र प्रतीपमुक्तं कियन्तः कीदृशा इति तत्र प्रतीतयः प्रष्टव्या न तप-

---

(१) श्लोकवार्तिके स्फोटवादे श्लो. १० । अल्पीयसापि यत्नेन उच्चरितं शब्दं यदि मतिः सकलं वर्णं न गृह्णाति तदा वर्णानामवयवसिद्धिः स्यात् साकल्यवैकल्यग्रहणे हि अवयवसिद्धिः नैवमस्तीति भावः ।

स्विनो वयमिति यत्किंचिदेतत्,

यत्पुनरभ्यधायि क्रमव्यत्यासप्रयुक्ता अपि वर्णाः प्रत्यायका भवेयुः क्रम एव वा स्फोटः स्यादिति तदपि न पेशलम्, क्रमो हि नाम स कालभेदो न च काल एव स्फोटो भवितुमर्हति, क्रमो ऽपि च न स्वतन्त्रः प्रतिपादकः पदार्थान्तरवृत्तिर्वा किं तु वर्णाश्रित एव, तत्र चोक्तम्—

द्वये सत्यपि तेनात्र विज्ञेयो ऽर्थस्य वाचकः ।
वर्णाः किं नु क्रमोपेताः किं नु वर्णाश्रयः क्रमः ॥
क्रमः क्रमवतामङ्गमिति किं युक्तिसाध्यता ॥
धर्ममात्रमसौ तेषां न वस्त्वन्तरमिष्यते(१) ॥ इति ॥

तस्माद्ये यावत्क्रमका यमर्थं प्रत्याययन्तो दृष्टा वर्णास्ते तत्क्रमका वर्णास्तमर्थं प्रत्याययिष्यन्तीति न स्फोटादर्थावगतिरिति, तदेवं न कार्यानुमानमर्थापत्तिर्वा स्फोटसिद्धये प्रभवतीति सिद्धम्,

## स्फोटे प्रत्यक्षगम्यताया निराकरणम्—

यदप्यभाणि शब्दादर्थं प्रतिपद्यामहे इति व्यवहारः स्फोटपक्षसाधितामेवावलम्बते इति, तदप्यसारं वर्णानां वाचकत्वे यथोक्तनीत्या साधिते तत्पक्षे ऽपि तथा व्यवहारोपपत्तेः,

ननु कथमुपपत्तिः संस्कारस्तावन्न शब्दशब्देनोच्यते न हि तथा लोके प्रसिद्धिः संस्कारे च वाचके व्युत्पत्तिरपि दुरुपपादा परावगतिपूर्विका हि शब्दात्स्वावगतिर्न च परस्थः संस्करः परस्य प्रतीतिमुपजनयन् ग्रहीतुं शक्यः परोक्षत्वाद्वर्णेष्वपि शब्दशब्दो वर्तमानः प्रतिवर्णं वा वर्तेत वर्णसमुदाये वा प्रतिवर्णं वर्तमाने च शब्दे न शब्दादर्थप्रतिपत्तिः स्यात्, एकस्य वर्णस्य वाचकत्वायोगात् समुदाये तु न वर्त्तितुमर्हति शब्दशब्दो जातिशब्दत्वात्, द्विवचनबहुवचनान्तव्यक्तिशब्दप्रयोगे हि तत्सामानाधिकरण्येन न जातिशब्द एकवचनान्तः प्रयुज्यते न हि भवति देवदत्तयज्ञदत्तौ पुरुष इति धवखदिरपलाशा वृक्ष इति तथा गकारौकारविसर्जनीयाः शब्द इत्यपि,

ननु वनशब्दवत्तर्हि समुदायवाची भविष्यति शब्दशब्दो वनं वृक्षा न जातिशब्दवदिति चेन्न, तत्र समुदायव्यतिरेकनिर्देशदर्शनादाम्राणां वनं कपित्थानां वनमिति न चैवमिह व्यतिरेकनिर्देशो ऽस्ति गकारादीनां शब्द इति अदर्शनात्,

---

(१) श्लोकवार्तिके शब्दनित्यताधिकरणे २८९—२६६ । क्रमोपेता वर्णा वर्णक्रमो वा वाचक इति द्वये सत्यपि क्रमोपेता वर्णा एव वाचकः न तु वर्णक्रमः स हि वर्णानां धर्ममात्रं न वस्त्वन्तरं तस्मात्प्रतीयमाना क्रमोपेता वर्णा एव वाचक इति भावः ।

अथ ब्रूयादाम्रादयो वनमित्यभेदेनापि वनशब्दः प्रयुज्यते तथेहापि गकारादयः शब्द इति प्रयोक्ष्यते एतदपि नास्ति, वनादौ भेदव्यपदेशवशेन प्रतिव्यक्ति चाप्रयोगेण प्रसिद्धे समुदायशब्दत्वे समुदायिनोरभेदोपचारादाम्रादयो वनमिति युज्यते प्रयोक्तुमिह तु गकारादीनां शब्द इति न कदा चिदपि व्यतिरेकनिर्देशो दृश्यते इति समुदायशब्दत्वमघटमानं तत्सर्वथा वर्णशब्दवादिनामनुपपन्नो ऽयं व्यपदेशः शब्दादर्थं प्रतिपद्यामहे इति, उच्यते किमनेनोपपन्नेनानुपपन्नेन वा कृत्यम्, यद्ययमुपपद्यते ततः किम् अथापि नोपपद्यते ततो ऽपि किम्, न हि लोकव्यपदेशनिबन्धना वस्तुस्थितिर्भवति,

ननु शास्त्रकारा अप्येवं व्यवहरन्ति भावमाख्यातेनाचष्टे इति न शास्त्रकारव्यवहारादप्याप्रामाणिको ऽर्थः शक्यते ऽभ्युपगन्तुं कतरच्चेदं प्रमाणं लोकव्यपदेशो नाम, अनुमानं तावत्तावत्प्रतिक्षिप्तं प्रत्यक्षमपि प्रतिक्षेप्स्यते न चान्यत् स्फोटसिद्धौ प्रमाणं क्रमते तदस्थाने ऽयं लोकव्यपदेशनिरूपणेन स्फोटाटोपः, न चात्यन्तमसङ्गतो ऽयं वर्णपक्षे लौकिको व्यपदेशः पूर्ववर्णजनितसंस्कारसहिते तावदन्त्यवर्णे वाचके सुसङ्गत एवायं व्यपदेशः, तस्य शब्दत्वादेकत्वाच्च, सङ्कलनाप्रत्ययोपारूढवर्णवाचकत्वपक्षे ऽपि न दोषः न हि भेदशब्दसहित एष शब्दशब्दः प्रयुज्यते गकारादिभ्यः शब्दादर्थं प्रतिपद्यामहे केवलस्तु जातिशब्द एकवचनान्तो बहुष्वपि वर्णेषु न विरुद्धः, किं च स्फोटपक्षे सुतरामनुपपन्नो ऽयं व्यपदेशः शब्दादिति, प्रातिपदिकस्यार्थस्याभावान्न हि वर्णवत्स्फोटे शब्दशब्दत्वं प्रयुञ्जानो दृश्यते व्यवहर्तृजनः अर्थप्रतिपत्तिहेतुत्वं शब्दलक्षणमसाधु, धूमादिभिर्व्यभिचारात्,

अथापि प्रक्रमपर्यालोचनया श्रोत्रग्राह्यत्वविशिष्टप्रतिपत्तिहेतुत्वम् शब्दलक्षणमभिधीयते तदिदं स्फोटं प्रति न सिद्धं तस्य श्रोत्रप्रत्ययविषयत्वाभावात्, श्रोत्रग्राह्यत्वमेव च तदितरव्यवच्छेदक्षममिति तदेव युक्तं किमुभयोपादानेन श्रोत्रग्राह्यत्वं च वर्णेष्वेव नार्थान्तरस्येति वर्णा एव शब्दः तदुक्तम्—

परस्परानपेक्षाश्च श्रोत्रबुद्ध्या स्वरूपतः।
वर्णा एवावसीयन्ते न पूर्वापरवस्तुनी इति(१)॥

श्रोत्रग्राह्यत्वं शब्दलक्षणं सत्तादावप्यस्तीति चेन्न, श्रोत्रेणैवेत्यवधारणस्य विवक्षितत्वात्, श्रोत्रमनोभ्यां ग्रहणादसिद्धमवधारणमिति चेन्न समानजातीयव्यवच्छेदार्थत्वादवधारणस्य विवक्षितत्वात्, चक्षुरादीन्येव तेन व्यवच्छिद्यन्ते

(१) श्लोकवार्त्तिके स्फोटवादे श्लो० ९। "गकारौकारविसर्जनीयाः ते च श्रोत्रग्रहणा" इति भाष्ये गकारादीनामेव श्रौत्रत्ववचनात् पूर्वं—वर्णकारणीभूता अवयवाः अपरं गत्वमवयवी गोशब्दत्वं समुदायः स्फोटश्च नावगम्यन्ते किन्तु वर्णा एवावगम्यन्ते इत्यर्थः।

न मनः, तथापि शब्दत्वेन व्यभिचार इति चेन्न जातिमत्त्वे सतीति प्रक्रमलभ्यविशेषणापेक्षणात्, स्तनयित्नुनादप्रभृतिभिरपि न व्यभिचारस्तेषां शब्दत्वाभ्युपगमात् तदुक्तं भाष्यकृता(१) "द्विविधश्चायं शब्दो वर्णात्मा ध्वनिमात्रश्च"इति, अर्थप्रत्यायकत्वं तु न लक्षणमित्युक्तम् अगृहीतसंबन्धे वर्णात्मनि शब्दे तदभावेनाशब्दत्वप्रसङ्गात्, कालान्तरेण संबन्धबुद्धौ सत्यां च शब्दत्वमिति अव्यस्थितमिदं लक्षणम्,

यदपि शब्दस्वरूपनिरूपणप्रसङ्गेन तदभिधेयानां जातिगुणक्रियादीनां शब्दत्वाशङ्कनं तत्परिहरणं च तदपि किमाशयमिति न विद्मः, तेषामतिविभक्तरूपग्रहणादतः श्रोत्रग्राह्यस्य शब्दत्वात् स्फोटस्य च श्रोत्रग्राह्यत्वाभावाद् वर्णवादिनामेव शब्दादर्थं प्रतिपद्यामहे इत्यनुकूलो व्यपदेशो न स्फोटवादिनामिति स्थितम्,

कथं पुनः श्रोत्रग्रहणत्वं स्फोटस्य न मृष्यते यवता पदं वाक्यमिति श्रोत्रकरणकमेकाकारं ज्ञानं प्रत्यात्मवेदनीयमस्ति न चास्य वर्णा आलम्बनीभवेयुरित्युक्तम्, न युक्तमुक्तम् इह हि शाबलेयादौ प्रतिपिण्डं गौरिति बुद्धिरुपजायमाना सकलपिण्डसाधारणं रूपं विषयीकरोतीति गोत्वसामान्यं तदिष्यते, एवं यदि प्रतिवर्णं पदं पदमिति वाक्यं वाक्यमिति मतिरुपजायेत जातिवत्तर्हि पदं वाक्यं च सर्ववर्णवृत्ति किमपि रूपमभ्युपगच्छेम न त्वेवमस्ति प्रतीतिः,यथा च तन्त्वाद्यवयवपरिघट्टितपटादिकार्यविषयमाद्यनयनसन्निपातसमये एव भेदग्रहरहितमवयविज्ञानमुदेति तथा क्रमसमुच्चरदेकैकवर्णस्वरूपोपग्रहनिरपेक्षं यदि पदमिति वाक्यमिति ज्ञानं भवेत्तत्पटादिकमवयविनमिव पदं वाक्यमेकैकरूपमनुमन्येमहि न त्वेवमस्ति न हि तन्तुभिरिव पटो वर्णैः पदमारभ्यते,

यत्तु गौर्गौरित्येवं ज्ञानमभेदग्राहि दृश्यते तदेकाद्युपाधेः भिन्नाद्युपश्लेषे तु देवदत्त इत्यादौ नानाक्षरग्रहणमेव विलम्बितमनुभूयते न चैवं पटादिबुद्धिषु तदवयवाः कदा चिद्विच्छेदेनावभासन्ते तस्मान्नावयवीव जातिरिव वा पदं वाक्यमभिन्नमवभासते,

ननु च या ऽसौ शब्दशब्दाद् बुद्धिः सैवेयं स्फोटबुद्धिः, किमिदानीं यदेव शब्दत्वं सामान्यं स एव स्फोटः मैवं स्फोट एवासौ न शब्दत्वं सामान्यं तत्सामान्यं हि तदुच्यते यत्रैकव्यक्तिदर्शने व्यक्त्यन्तरानुसंधानं शाबलेयग्रहणे बाहुलेयस्येव इह तु न गकारग्रहणे औकारानुसंधानमिति नेदं सामान्यमेकरूपस्त्वयं प्रतिभासः शब्दतत्त्वविषय एव शब्दतत्त्वं च स्फोट इत्युच्यते,

आ ज्ञातममुनैव हि भयेन कैश्चित् स्फोटशङ्कितैः शब्दतत्त्वसामान्यम-

(१) न्यायभाष्ये अ१ २ आ० २ सू० ४० ।

पह्नुतमस्थाने एव त्वयं संत्रासः, न हि शब्दत्वं स्फोटः प्रतिवर्णं हि शब्दः शब्दः इति बुद्धिरस्ति न च वर्णः स्फोटः तदिदं शब्दत्वसामान्यमेव शब्दबुद्धेरालम्बनं न स्फोटः, सामान्यसिद्धौ तु व्यक्त्यन्तरानुसन्धानमकारणमिति प्रागेव निर्णीतं तस्मान्न शब्दबुद्धावपि स्फोटो ऽवभासते पदवाक्यबुद्धावित्येतच्च सत्यमाह यदियमेककार्यकारित्वनिबन्धना वनपृतनादिबुद्धिसमानयोगक्षेमैव पदवाक्यबुद्धिरिति, न च जात्यादिष्वसमाश्वासो वैलक्षण्यस्य दर्शितत्वात्,

यदप्येककार्यकारित्वनिबन्धनायामभेदबुद्धावितरेतराश्रयपरिचोदनमेकार्थप्रतीतिपूर्विका पदवाक्यबुद्धिः पदवाक्यबुद्धिपूर्विका चैकार्थप्रतीतिरिति तदपि न सम्यक्, स्मर्यमाणानुभूयमानवर्णजनितेयमर्थप्रतीतिरित्यवोचाम नाभिन्नपदपरिच्छेदपूर्विकेति कुत इतरेतराश्रयत्वम्, ब्रूयात्पदवाक्ययोरेकत्वमन्तरेण कथं पदवाक्यार्थप्रतीतिरेकरूपा भवेदिति सो ऽयमतीव मुग्धालापः, प्रतीतिभेदाभेदौ हि विषयभेदाभेदावनुरुध्येते नोपायभेदाभेदौ भिन्नैरपि लोचनालोकान्तःकरणप्रभृतिभिरुपायैरभिन्नार्थग्राहिणी बुद्धिरुपजन्यते एव, तदिह पदार्थबुद्धेरेकत्वात्पदार्थ एको भवतु यो ऽस्या विषयः न त्वेकं पदं यत्कारणमिति वाक्यार्थबुद्धेरप्येकत्वादेको वाक्यार्थो भवतु न त्वेकं वाक्यं वर्गीकरणकारणं क्रमभाविनां बहूनां वर्णानामेतद्भवति यदेकार्थप्रतिपादकत्वं न त्वभेदमेव पदवाक्ययोर्गमयतीति, विप्रलब्धा एव च वैयाकरणा पदवाक्ययोरप्यभेदं मन्यन्ते किल शाब्दादनन्यभूत एव शब्दार्थ इति स पुनरेषां व्यामोहः तद्भेदस्य दृढप्रमाणसिद्धत्वात्, शब्दाध्यासस्तु प्रतीतिविरुद्धत्वेन नेष्यते इत्यलं तत्कथया तस्मात्प्रत्यक्षगम्यो ऽपि न स्फोट इति सिद्धम्,

## शब्दनिरवयवत्वनिराकरणम्—

नन्वभिन्नत्वाद्वाक्यार्थबुद्धेर्विषयभेदाभेदानुवृत्तित्वाच्च बुद्धिभेदाभेदयोरभिन्नो वाक्यार्थः स्याद्बाढमभिन्नो न त्वनवयवः पटादेरभिन्नस्यापि सावयवत्वात्,

यत्तु निरवयवत्वमुच्यते तदतीव संवित्परामर्शकौशलशून्यव्याहृतम्।

अंशाः सन्ति न सन्तीति चिन्तात्यन्तमसङ्गता।
निरंशस्त्वस्ति नास्तीति युक्तं चिन्तयितुं सताम्॥

पदतदर्थभेदस्य प्रतिवाक्यं विस्पष्टमाभासमानत्वादनुपगृह्यमाणावयवविभागयोश्च वाक्यवाक्यार्थयोरनवभासमानत्वाद् अस्त्यवयवप्रतीतिः, सा तु भ्रान्तेति चेन्न, बाधकाभावाद् भ्रान्तेश्च बीजं किमपि वक्तव्यम्, सादृश्यमिति चेत्कस्य केनेति न विद्मः यदि हि क्वचिन्मुख्या अवयवाः प्रसिद्धा भवेयुः तस्मात्सादृश्यादितरत्र तदभावे ऽपि भ्रम इति गम्यते, न त्वेवमस्ति पूर्ववाक्यानामप्यभागत्वान्नरसिंहे ऽपि नरावयवाः सिंहावयवाश्च पृथक् पृथक् प्रत्यभिज्ञायन्ते

तद्वदिहाभ्युपगम्यमाने नूनं क्व चिद्वाक्ये सत्त्वमवयवानामेषितव्यम्, चित्रे ऽपि हरितालसिन्दूरादिरूपं पानके त्वगेलादिरसो ग्रामरागे ऽपि षड्जर्षभगान्धारादिस्वरजातं पृथगवगम्यमिति न ते निर्भागदृष्टान्ताः, चित्रादिबुद्धयस्तर्हि दृष्टान्ता इति चेत् बाढं वाक्यार्थबुद्धिरपि निर्भागेष्यते एवास्माभिः बुद्धीनां निरंशत्वेन सर्वासामनवयवत्वात्, बुद्धिविषयीकृतस्त्वर्थो दृष्टान्तदार्ष्टान्तिकयोः सावयव एव, तस्मान्न निर्भागौ वाक्यवाक्यार्थाविति युक्तम्,

यदप्यभ्यधायि वृद्धव्यवहारेण सम्बन्धबुद्धिर्वाक्यवाक्यार्थयोरेव न पदतदर्थयोः पदेन व्यवहाराभावादिति तदप्यसाधु वाक्यादपि व्युत्पत्तिर्भवन्ती पदार्थपर्यन्ता भवतीति, एवं हि पदतदर्थसंस्कृतमतेरभिनवविरचितादपि वाक्याद्वाक्यार्थप्रतीतिरुपपत्स्यते, तदावापोद्वापपरतन्त्रवैचित्र्येण वाक्यानामानन्त्यादशक्या प्रतिवाक्यं व्युत्पत्तिस्सापि नापेक्षिष्यते इतरथा हि सा ऽवश्यमपेक्ष्येत,

यत्तु केवलं पदं न प्रयुज्यते इति तदसत्यमिति तदप्यसत् महावाक्यस्थाने ऽवान्तरवाक्यं न प्रयुज्यते इति तदप्यसत्यं स्यात्, स्वार्थे तत्प्रयुज्यते इति चेत्पदमपि स्वार्थे क्व चित्प्रयुज्यते एव, यत्र पदानामर्थो ऽर्थप्रकरणादिना लभ्यते तत्र यावदप्राप्तं पदमेव केवलमुच्चारयन्ति, ग्रन्थग्रहणावसरेषु च स्वरूपावधारणमपि फलवत् वर्णानां मा वा फलवत्त्वं पदवर्णानां भूत्तथापि रथावयवानामिव रथकार्येष्वपर्याप्तशक्तीनामपि स्वरूपसत्त्वमनिवार्यम्, कार्यान्तराय रथाद्रथावयवाः प्रभवन्तीति चेत् पदवर्णा अपि कार्यान्तरे प्रभविष्यन्ति रथकार्यैकदेशमात्रां कामपि रथावयवाः कुर्वन्तीति, यदुच्यते पदान्यपि वाक्यकार्यैकदेशं कमपि कुर्वन्त्येव, वर्णा अपि केचिदर्थवन्तो भवन्त्येवेति तस्मान्नासन्तः पदवर्णाः,

यत्पुनरवादि वाक्यस्येव पदानि पदानामिव वर्णा वर्णानामप्यवयवान्तराणि स्युरिति तदिदमपूर्वं पाण्डित्यं न हि घटः सावयव इति परमाणुभिरपि सावयवैर्भवितव्यम्, उपलब्ध्यनुपलब्धी हि वस्तूनां व्यवस्थापिके यद्यथोपलभ्यते तत्तथा भवति यद्यथा नोपलभ्यते तत्तथा न भवति, वाक्यपदयोश्च भागा उपलभ्यन्ते न वर्णानां तथा ह्युक्तमेतत्—

अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटमिति(१) ॥

तस्माद्बालिशचोदितमिदं वर्णस्याप्यवयवा भवन्तु पदवाक्ययोरपि वा मा भूवन्निति, अतश्च सावयवौ वाक्यवाक्यार्थौ पदोपजननापायाभ्यां तदर्थोपजन-

(१) श्लोकवार्तिके स्फोटवादे श्लो० १० । यदि वर्णाः सावयवाः स्युस्तदा कस्य चिदवयवस्य कदाचिद्ग्रहणं स्यात्कदाचिन्न स्यान्नैवमस्ति अतो निरवयवास्ते इति भावः ।

नापायदर्शनादनयैव युक्त्या पदभागा अपि प्रकृतिप्रत्ययादयः तात्त्विका इत्यवगन्तव्यं न कल्पनामात्रप्रतिष्ठाः, वृत्तं वृत्तेनेत्यत्र प्रकृत्यर्थानुगमे प्रत्ययार्थो भिद्यते वृत्तं घटमिति प्रत्ययार्थानुगमे प्रकृत्यर्थो भिद्यते तत्र यो ऽर्थो यं शब्दमनुगच्छति स तस्यार्थ इत्यवसीयते तत्कथमसत्या भागाः,

यत्पुनः कूपसूपयूपादौ सत्यपि वर्णानुगमे ऽर्थानुगमो न दृश्यते तेन चाकारणमर्थप्रतीतेर्वर्णानुगम इत्युक्तम् तदयुक्तम् , यतो नान्वयव्यतिरेकाभ्यामनुत्पन्ना प्रतीतिरुत्पाद्यते येन कूपादौ तदुत्पादनमाशङ्क्येत सिद्धायां तु प्रतीतौ वाचकभागेयत्तानियमपरिच्छेदे ऽनयोर्व्यापारो न चैकत्र वर्णानुगमे ऽनुगमो दृष्ट इत्यन्यत्रादृश्यमानो ऽपि हठादापादयितुं युक्तः, रेणुपटलानुगतपिपीलिकापङ्क्तिद्वारकव्यभिचारोद्भावनमपि न पेशलम् , पांसुपटलविकलपिपीलिकापङ्क्तिदर्शनेन तस्याः तत्प्रतीतिकारित्वाभावनिश्चयात्, करिकरभतुरगप्रभृतीनां तु प्रत्येकं व्यभिचारे ऽपि बहुप्राणिरूपसामान्यानपायात्तत्कारणमेव धूलिपटलमवगम्यते,

यदप्यश्वकर्णादाववयवार्थलोपादन्यत्राप्येवमिति कथितं तदपि न चतुरश्रम्, अश्वकर्णशब्दो हि क्वचिदर्थप्रकरणवशान्न्यग्भवदवयवशक्तितया तिरस्कृतावयवार्थवस्त्वन्तरव्यक्तौ न सर्वात्मना ऽवयवार्थाभावो व्यस्तत्वेन सामस्त्येन वा पुनः प्रयोगान्तरे तदर्थसंप्रत्ययदर्शनादश्वमारोह कर्णे कुण्डलमिति व्यस्तयोः प्रयोगः तुरगश्रोत्रे तु प्रतिपिपादयिषिते ऽश्वकर्ण इति समस्तप्रयोगो ऽपि तदर्थापरित्यागी दृश्यते इति न सर्वात्मना निरर्थका भागाः,

यत्पुनरन्वाख्यानविसंवादात्प्रकृतिप्रत्ययविभागनियमो नावकल्पते इति एतदपि न युक्तम् , आप्ततरोक्तीनां प्रामाण्यात् त्रिमुनि व्याकरणमिति पाणिनिमतमेव हि प्रकृतिप्रत्ययविभागमवितथं प्रत्येष्यामः, कियत्यपि चांशे प्रायेण सर्वेषामन्वाख्यातृणामविवादः, विकरणादिविसंवादमात्रं त्वकिंचित्करमतः पारमार्थिकत्वात्प्रकृतिप्रत्ययांशयोः न कल्पनामात्रेण पृथक्करणम्,

यदप्यवर्णे वर्णसमान्यादपि भागज्ञानं दुर्घटं कालेनदन्तिनागा इति तदप्यसारम् , स्वरस्मरणादीनां पदभेदावगमोपायानां सम्भवात् , सराम इत्याख्यातस्यान्यत्स्वरादिरूपं नाम्नो ऽन्यत् , नामत्वे ऽपि स इति राम इति च द्वे पदे तयोरन्यद्रूपं सह रामेण वर्त्तत इत्येकपदे ऽप्यन्यद्रूपमभियोगविशेषवतां सर्वं सुभगमिति नाशक्यः पदविभागपरिच्छेदः,

यदपि दध्यत्र मध्वत्रेति तथाविधपदरूपादर्शने ऽपि तदर्थसंप्रत्यय इत्युक्तं सो ऽपि न दोषः, यतस्ते एवैते पदे इषद्विकृते तत्प्रत्यभिज्ञानाच्चेति केचित ,

अथवा इगन्तदधिमधुपदवद्यणन्तयोरपि विषयान्तरे साधुत्वात्तथैव तद्विधाद् व्युत्पत्तुर्यणन्ते अपि पदे अर्थप्रतिपादके भविष्यत इत्यलमेवंप्रायैः कदाशाव्याहृतैः,

अपि च पदानामसत्यत्वे किमर्थ एष तद्व्युत्पत्ताविपुलप्रयत्नो वृद्धैराधीयते, असत्यमपि सत्योपायतां प्रतिपद्यते इति चेददृष्टत्वादलीका हि दंशादयः सत्यमूर्छाहेतवो ये ऽचोदाहृतास्ते तथा न भवन्ति विषाशङ्काया अपि तत्कार्यहेतुत्वात्, शङ्का हि नाम बुद्धिः बुद्धिश्च न न कारणम् न चासती बुद्धिः,

यदपि लिप्यक्षराणामसत्यानां सत्यार्थप्रतिपादकत्वमुच्यते तदप्यनभिज्ञभाषितं रेखाः तावत्स्वरूपतः सत्यस्ताश्च खण्डिकोपाध्यायोपदेशसंस्कृतमतेर्वर्णानुमापिका भवन्ति तथा संबन्धग्रहणाद्रेखानुमितेभ्यश्च वर्णेभ्योऽर्थप्रतिपत्तिरिति नासत्यास्सत्योपायाः, अयं गकार इति तु सामानाधिकरण्यभ्रमो लिङ्गलिङ्गिनोरभेदोपचाराद् यथा प्रस्थमिताः सक्तवः प्रस्थशब्देनोच्यन्ते तथा रेखातो ऽपि गकारानुमानाद्रेखैव गकार इत्युच्यते, एवमनिष्यमाणे लिप्यनभिज्ञस्यापि ततो ऽर्थप्रतिपत्तिः स्याद्रेखाणामसत्यवर्णात्मनां विद्यमानत्वान्न चैवमस्ति, तस्माद्वर्णानुमानपुरस्सरैव रेखाभ्यो ऽर्थावगतिः अभ्यस्तत्वाद्विषयस्य सूक्ष्मत्वाच्च कालस्य क्रमो न लक्ष्यते न त्वन्यथा ततो ऽवगतिः, तस्मात्पारमार्थिकत्वात्पदतदर्थानां न निरवयवौ वाक्यवाक्यार्थाविति स्थितम्,

यत्पुनर्वाक्यभागपदवर्णापह्नववर्त्मना शब्दब्रह्माद्वयमुपदर्शयितुमुपक्रम्यते तत्र पुरस्तात्सविस्तरं समाधिमभिधास्यामः,

यत्पुनरवादि वाचस्त्रैविध्यं तदपि नानुमन्यन्ते एकैव वैखरी वाग्वागिति प्रसिद्धा हि।

अन्तःसंकल्पो वर्ण्यते मध्यमा वाक्
सेयं बुद्ध्यात्मा नैष वाचः प्रभेदः।
बुद्धिर्वाच्यं वाचकं चोल्लिखन्ती
रूपं नात्मीयं बोधभावं जहाति॥
पश्यन्तीति तु निर्विकल्पकमतेर्नामान्तरं कल्पितं
विज्ञानस्य हि न प्रकाशवपुषो वाग्रूपता शाश्वती।
जाते ऽस्मिन्विषयावभासिनि ततः स्याद्वा ऽवमर्शो गिरो
न स्याद्वापि न जातु वाग्विरहितो बोधो जडत्वं स्पृशेत्॥

## स्फोटनिराकरणोपसंहारः—

तदास्तामियं ब्रह्मचर्चा प्रकृतमनुसरामः—

इति विततया वर्णा एते धिया विषयीकृतां
दधति पदतां वाक्यत्वं वा त एव च वाचकाः।
न च तदपरः स्फोटः श्रोत्रे विभात्यवबोधने
न च विधिहतो वाच्ये बुद्धिं विधातुमसौ क्षमः॥

## पदार्थानां वाक्यार्थबोधे हेतुत्वम्—

एवं स्फोटे प्रतिहते वर्णेषु वाचकेषु स्थितेषु कश्चिदाह बाढं वर्णेभ्यः पदार्थप्रतीतिरस्तु वाक्यार्थप्रतीतौ न तेषां सामर्थ्यं कुतस्तर्हि वाक्यार्थावगतिः पदार्थेभ्य इत्याह, तथा च वर्णानां पदार्थप्रतिपत्तौ चरितार्थत्वान्न वाक्यार्थे ऽपि सामर्थ्यमपरिम्लानसामर्थ्यास्तु पदार्था आसते ते वाक्यार्थबुद्धेर्विधातारः अर्थापत्त्या हि वर्णानां कार्येषु शक्तयः कल्प्यन्ते तत्र पदार्थबुद्धेरन्यथाऽनुपपन्नत्वाद्यथोक्तनीत्या वर्णानां तत्प्रतिपादने शक्तिरवगम्यते वाक्यार्थप्रतीतिः पुनरन्यथाऽप्युपपद्यमाना न तत्र तेषां शक्तिमुपकल्पयितुमर्हति,

किं च किमेकमेव संस्कारमादधाना वर्णाः पदार्थं च वाक्यार्थं च बोधयन्ति भिन्नं वा तत्र च—

एकयैव हि संस्कृत्या कथं कार्यद्वयं भवेत् ।
न चैषां पूर्वसंस्काराादन्यो ऽस्तीति प्रतीयते ।।

वाक्यार्थप्रतीतेरन्यथा ऽपि भावान्न नानासंस्कारकल्पनाबीजमस्ति, अपि च पदेषु पूर्ववर्णेषु नातिदूरमतिक्रान्तेषु बुद्ध्योपसंहर्तुं शक्येषु घटमानमन्त्यवर्णवेलायामनुसन्धानं वाक्येषु पुनरतिचिरतरतिरोहिताक्षरपरम्परानुसन्धानमतिक्लिष्टमदृष्टपूर्वमिति दुर्घटमेतत्, व्यवहितपदोच्चारणे तु दृश्यते वाक्यार्थप्रतीतिर्यत्र पूर्ववर्णानुसन्धानगन्धो ऽपि नास्ति, तस्मान्न वर्णा वाक्यार्थबुद्धिहेतवः, अपि च पदार्थं वाक्यार्थं च प्रतिपादयन्तो वर्णा युगपत्प्रतिपादयेयुः क्रमेण वा तत्र सकृदुच्चारितानां युगपदुभयकरणमनुपपन्नम्, अशक्यत्वात्क्रमपक्षे ऽपि पूर्वं चेद् वाक्यार्थप्रतिपादनं तदयुक्तम्, अनवगतपदार्थस्य वाक्यार्थप्रत्ययादर्शनात्,

अथ पूर्वं पदार्थप्रतिपादनं ततो वाक्यार्थप्रत्यायनं हन्त तर्हि पदार्थप्रत्ययादेव वाक्यार्थबुद्धेः सिद्धत्वात्किमिति पुनर्व्यापारान्तरे श्रम आश्रीयते, तस्मात्पदार्थप्रतिपादनपर्यवसितसामर्थ्यानि पदानि पदार्थेभ्यस्तु वाक्यार्थप्रत्यय इति सिद्धम्,

अपि च अन्वयव्यतिरेकाभ्यामेवमवगम्यते 'यत्पदार्थपूर्वको वाक्यार्थ' इति यो हि मानसादपचाराच्छ्रुतेष्वपि पदेषु पदार्थान्नावगच्छति नावगच्छत्येव वाक्यार्थम्, यस्तु अश्रुतेष्वपि पदेषु प्रमाणान्तरतः पदार्थाञ्जानीयाज्जानातीवासौ वाक्यार्थम् ।

पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतो ऽश्वो धावतीति धीः ।।

दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क चिदिति(१)।

तदेषा वाक्यार्थबुद्धिः पदार्थप्रतीतिं न व्यभिचरति व्यभिचरति तु पदप्रतीतिमिति न तत्कार्या भवितुमर्हतीति,

यदप्युच्यते प्रत्येकं व्यभिचारात्समुदितानामसाधारण्यान्न पदार्थानां वाक्यार्थावगतिहेतुत्वमिति तदप्ययुक्तम् , प्रत्येकं तावद् गमकत्वं नेष्यते एव समुदितानां त्वसाधारण्यं भवदपि न नः क्षतिकरं न ह्येते लिङ्गवत्सम्बन्धग्रहणमपेक्षमाणा अवबोधका यदसाधारण्यन्नावकल्पेत किं त्वगृहीतसम्बन्धा अपि आकाङ्क्षासन्निधियोग्यतापर्यालोचनया परस्परं संसृज्यन्ते स एव वाक्यार्थः संसृष्टः पदार्थसमुदाय इतरविशिष्टो वेतर इति, नाप्यशाब्दत्वमित्थं वाक्यार्थप्रतीतेराशङ्कनीयम् शब्दावगतिमूलत्वेन तस्याः शाब्दत्वाच्छब्दात्पदार्थप्रतिपत्तौ वाक्यार्थप्रतिपत्तिरिति सर्वमनवद्यम् , तदुक्तं पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीमवगताः पदार्था एव वाक्यार्थमवगमयन्ति' इति(१)।

## पदार्थानां वाक्यार्थबोधहेतुत्वनिराकरणम्—

अत्राभिधीयते न पदार्थेभ्यो वाक्यार्थावगतिरपि तु वाक्यादेव, तथा चायं वाक्यार्थ इति प्रसिद्धो न पदार्थार्थः, यथा हि काल्पनिकवर्णसमूहात्मकं पदं पदार्थप्रतिपत्तिमादधाति तथा काल्पनिकपदसमूहात्मकं वाक्यं वाक्यार्थप्रतिपत्तिमाधास्यति,

ननु पदसमूहात्मकं वाक्यमन्यन्नास्ति किं तु पदान्येव वाक्यं पदानां च स्वार्थे चरितार्थत्वान्न वाक्यार्थसामर्थ्यमित्युक्तं, नैतद्युक्तम् पदार्थानामपि चरितार्थत्वात् , क तेषां चरितार्थत्वं स्वप्रतिपत्तौ,

ननु पदानि स्वप्रतिपत्तौ चरितार्थीभूय पदार्थप्रतिपत्तिमादधति पुनस्तान्येव कथं वाक्यार्थप्रतिपत्तिमाधास्यन्ति पदार्थास्तु स्वावगतेरूर्ध्वं न क चित्परत्र चरितार्था इति वाक्यार्थबुद्धेर्विधातारो भवन्तु नैतदेवम् , अन्त्यपदस्यान्यत्र चरितार्थत्वाभावात् , अन्त्यपदमेव पूर्वपदस्मरणोपकृतं वाक्यमुच्यते तदर्थश्च पूर्वपदार्थविशिष्टो वाक्यार्थ इत्येके, तस्माद्वाक्यादेव वाक्यार्थप्रत्ययः,

यत्तु किमेकसंस्कारस्मरणेन कार्यद्वयं पदानि विदधति विभिन्नसंस्कारेण वेति कार्यभेदात्कारणभेदानुमानमिति प्रसिद्ध एष पन्थाः एको ऽप्यतीन्द्रियः

---

( १ ) श्लोकवार्तिके वाक्याधिकरणे श्लो० ३५८ । श्वेतं कं चित्पदार्थं दूरादुपलभमानस्तस्मिन्नेव प्रदेशे हेषया अश्वजातिं खुरशब्देन च गतिमनुमाय तेषां गुणजातिक्रियाणामर्थान्तरान्वयमपेक्षमाणानां योग्यानां परस्परं 'श्वेतोऽश्वो धावति' इति संसर्गं बुध्यते इति प्रमाणान्तरोपस्थितैरपि पदार्थैः वाक्यविनिर्मुक्ता धीर्दृष्टा पदार्थैर्विना तु क्वचिन्न दृष्टेत्यर्थः ।

संस्कारः कार्यात्कल्प्यते बहवो ऽपि तत एव कल्पयिष्यन्ते कार्यस्य भिन्नत्वात्,

यदपि चिरतिरोहितवर्णप्रबन्धानुसन्धानं दुर्घटमिति कथितं तदपि न चारु, कया चित्कल्पनया वर्णानामिव पदबुद्धौ पदानामपि वाक्यबुद्धौ उपारोहसम्भवात्, एतच्चानन्तरं दर्शयिष्यते,

यदपि विकल्पितं युगपद्वा क्रमेण वा वर्णाः पदवाक्यार्थप्रत्यये व्याप्रियेरन्निति तत्राप्युच्यते यौगपद्यं तावदनभ्युपगमादेव प्रत्युक्तम्, क्रमो ऽप्येषामीदृशो यत्प्रथमं पदार्थमवगमयन्ति ततो वाक्यार्थम्, सो ऽयं हि पदार्थपूर्वक एव वाक्यार्थ उक्तो भवतीति चेन्नैवम्, पदार्थो हि नाम प्रमेयमेव न ते प्रमाणवर्गे निपतन्ति न च पदार्थवाक्यार्थयोरत्यन्तं भेदो येन तयोर्धूमाग्न्योरिव संबन्धग्रहणसापेक्षयोस्तदनेपक्षयोर्वा रूपदीपयोरिव प्रत्याय्यप्रत्यायकभावः न हि स्वशरीर एव गम्यगमकवाचोयुक्तिः प्रवर्त्तते, कथं स्वभावात्स्वभावहेतुवादिनो बौद्धस्य शिष्य इव निर्वृत्तः,

ननु सामान्ये हि पदं वर्त्तते विशेषे च वाक्यमन्यच्च सामान्यमन्ये च विशेषाः, यदुक्तम्, "सामान्यान्य न्यथासिद्धेर्विशेषं गमयन्ति हि" इति व्यतिरेक एव प्रत्याय्यप्रत्यायकयोः, उच्यते बाढमस्त्ययमियान् व्यतिरेकः किं तु विरतव्यापारे चक्षुषीव शब्दे धूमादिवत्प्रमेयात्पदार्थादग्नेरिव वाक्यार्थस्यावगमो नास्ति न हि पदार्थाः प्रमेयीभूतधूमवत्पुनः प्रमाणीभवितुमर्हन्ति किं तु पदान्येव तत्प्रतिपादनद्वारेण वाक्यार्थप्रतिपत्तौ पर्यवस्यन्ति कथमात्मीयमेव ग्रन्थं न बुध्यन्ते भवन्तः।

वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनमिति(१)॥

अवान्तरव्यापारो हि न कारकस्य प्रधाने व्यापारे कारकतां व्याहन्ति पदानां हि द्वयी शक्तिरभिधात्री तात्पर्यशक्तिश्च तत्राभिधात्री शक्तिरेषां पदार्थेषूपयुक्ता तात्पर्यशक्तिश्च वाक्यार्थे पर्यवस्यतीति,

यद्यपि पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि तथापि यदर्थपराणि तत्रानिवृत्तव्यापाराण्येवेति, एवं हि शाब्दता वाक्यार्थप्रत्ययस्य न हास्यते, सर्वात्मना तु विरतव्यापारे शब्दे सा ऽवश्यं हीयते शब्दावगतिमूलत्वात्तु शाब्दत्वे श्रौत्रत्वमपि स्यात्, श्रोत्रस्य पारम्पर्येण मूलत्वात्, शब्दे वितरव्यापारे कतमत्तत्प्रमाणं यस्य वाक्यार्थप्रतीतिः फलमिति न विद्मः, न प्रत्यक्षम् अतीन्द्रियत्वाद्वाक्यार्थस्य, नानुमानं 'न चानुमानमेषा धीः' इत्यादिना ग्रन्थविस्तरेण

(१) श्लोकवार्त्तिक वाक्याधिकरणे श्लो० ३४३। तेषां पदानां वाक्यार्थबोधाय प्रवृत्तौ सत्यां पदार्थप्रतिपादनं काष्ठानां पाके प्रवृत्तौ ज्वाला इव नान्तरीयकमित्यर्थः। पदानि पदार्थं प्रतिपाद्य वाक्यार्थबोधं जनयन्तीति भावः।

स्वयमेव निरस्तत्वाद्, न शब्दो निवृत्तव्यापारत्वात् "सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि" इति न्यायाद्, अर्थापत्तिरिति चेत् किमिदानीमर्थापत्तिगम्यो धर्मः न चैतद्युक्तमिष्टं वा तदिदं सप्तमं प्रमाणमवतरति पदार्थो नासेति तच्च नेष्टम् अतो न पदार्थनिमित्तको वाक्यार्थप्रत्ययः,

यदप्युक्तम् अन्वयव्यतिरेकाभ्यां पदार्थनिमित्तकत्वं वाक्यार्थस्यावगम्यते इति तत्र पदार्थसंसर्गस्वभावत्वाद्वाक्यार्थस्य सत्यं तत्पूर्वकत्वमिष्यते एव, वाक्यप्रतिपत्तेस्तु न तज्जन्यत्वं शब्दव्यापारानुपरमात् मानसे चापचारे सति पदानामपि ग्रहणं नास्त्येव यतः क्षणान्तरे समाहितचेतास्स वक्ति 'नाहमेतदश्रौषमन्यत्र मे मनो ऽभूत्पुनर्ब्रूहि' इति इतरथा हि पदानि स्मृत्वा तदर्थमेवावगच्छेन्न पुनः पृच्छेत्तस्मात्पदार्थानां ग्रहणमेव तत्र वाक्यर्थावगमे निमित्तम्,

यदपि पश्यतः श्वेतिमारूपमिति तदपि न किञ्चित्, किं प्रत्यक्षेण शुक्लो गौर्गच्छन्न दृश्यते स किं शुक्लो गौः गच्छतीति वाक्यास्यार्थो न भवति, प्रत्यक्षप्रतिभासात्तु प्रत्यक्षार्थ एवासौ न वाक्यार्थ इत्युच्यते, एवं श्वेतो ऽश्वो धावति इत्यानुमानिको ऽयं प्रत्ययः पर्वते ऽग्निरितिवद्वाक्यश्रवणात्तु विना न वाक्यार्थो भवतुमर्हतीत्यलं प्रसङ्गेन,

## वाक्याद्वाक्यार्थबोधोपसंहारः—

तस्माद्वर्णेभ्य एव कया चित्कल्पनया पदवाक्यभावामुपगतेभ्यः पदार्थवाक्यार्थसंप्रत्यय इति युक्तम्, तस्मात्पदार्थजन्या न भवति वाक्यर्थबुद्धिरिति सिद्धम, अनुपरतव्यापाराद्वाक्यादेवेयमुद्भवति,

## वर्णानां पदवाक्यभावोपगमप्रकारः—

आह कया पुनः कल्पनया पदवाक्यभावमुपगता वर्णाः पदार्थवाक्यार्थप्रतीतिमादध्युरिति,

तत्राचार्यास्तावदिमां कल्पनामदीदृशन् प्रथमं वर्णज्ञानं ततः संस्कारः ततो द्वितीयवर्णज्ञानं तेन प्रथमवर्णज्ञानजनितेन च संस्कारेण पटुतरः संस्कारः ततस्तृतीयवर्णज्ञानं तेन प्राक्तनेन संस्कारेण पटुतरः संस्कारः एवं यावदन्त्यवर्णज्ञानमन्त्यवर्णज्ञानानन्तरं तु ततः संस्कारात्सकलपूर्ववर्णविषयमेकस्मरणं तेनान्त्यवर्णज्ञानस्य विनश्यत्ता विनश्यदवस्थग्रहणस्मरणविषयीकृतो वर्णसमूहः पदमिति ज्ञायते ततः पदज्ञानात्संस्कारः ततस्तथैव वर्णक्रमेण द्वितीयपदज्ञानं तेन प्रथमपदज्ञानजन्मना च संस्कारेण पटुतरः संस्कारो जन्यते पुनस्तेनैव क्रमेण तृतीयपदज्ञानं तेन प्राक्तनेन च संस्कारेण पीवरतरस्संस्कारो जन्यते एवं यावदन्त्यपदज्ञानमन्तरेण स्थवीयसा संस्का-

रेण सर्वपदविषयमेकस्मरणमुपजन्यते संस्कारस्यैवैकत्वात्सो ऽयं स्मरणानुभवविषयीकृतवर्णसमूहपदसमूहो वाक्यमित्युच्यते ततो वाक्यार्थप्रतिपत्तिः संस्कारस्य च संस्कारान्तरकरणकौशलमवश्यमेषितव्यमन्यथा सर्वत्र क्रियाभ्यासो ऽनर्थकः स्यादिति,

## उक्तस्य वर्णानां पदवाक्योपगमप्रकारस्य खण्डनम् —

अत्र वदन्ति, नेयं प्रक्रिया साध्वी ज्ञानयौगपद्य प्रसङ्गात्, तथा हि चरमपदप्रतिभासानन्तरं यथा पूर्वपदस्मरणं तथा तदैव संकेतस्मरणेनापि भवितव्यमनवगतपदार्थस्य हि न वाक्यार्थप्रतीतिरस्मृतसंकेतस्य च न पदार्थप्रतीतिः, यत्राप्यभ्यस्ते विषये संकेतस्मृतिर्न संवेद्यते तत्राप्यविनाभावस्मृतिरिव बलादसौ कल्प्यते अनवगतपदपदार्थसंबन्धस्य नारिकेलद्वीपवासिन इवार्थप्रत्ययाभावात्, संबन्धानुभवस्य च पूर्ववृत्तत्वेनेदानीं स्मरणमुखेनोपकारित्वात्तस्मादन्त्यपदज्ञानानन्तरं पूर्वपदसमयस्मरणयोर्युगपदुत्पादाज् ज्ञानयौगपद्यम्,

अथ समयस्मरणानन्तरं पूर्वपदस्मरणमुपेयते तथा तत्स्मृतिकाले पदार्थज्ञानोपजनात्पुनरपि ज्ञानयौगपद्यं न च तदा पदार्थज्ञानं नोदेतीति शक्यते वक्तुमविकलतदुपजनकारणसामग्रीसन्निधानात्प्रतिनायकस्य च तदानीमभावात्, पदार्थज्ञानोत्तरकालं तर्हि पूर्वपदस्मरणमस्त्विति चेद् एवं तर्हि चरमपदज्ञानप्रत्यस्तमयादन्त्यपदरहितं वाक्यं स्यादन्त्यपदज्ञानस्य हि संकेतस्मृतिवेलायां विनश्यत्ता पदार्थज्ञानवेलायां विनाश एव,

यत्तु ब्रूयादसंवेद्यमानमपि तदानीमन्त्यपदमस्त्येवेति स्वस्ति तर्हि न्यायविस्तराय, अपि च तदानीमनुपलभ्यमानेनापि सता किमन्त्यपदेन क्रियते, पुनरवगमो ऽस्य भविष्यतीति चेत् स कुतस्त्यः, श्रोत्रस्य विरम्य व्यापारासंवेदनात्, मनसश्च स्वातन्त्र्येण बाह्ये विषये सामर्थ्यासंभवात्, सत्यपि पुनः तदवगमे ज्ञानयौगपद्यानपायात्,

अपि च पूर्वपदैरर्थशून्यतया शुष्कनीरसतनुभिरन्त्यपदानुभवसमनन्तरं स्मृतैरपि को गुणः, न हि तथाविधपदस्मरणमर्थप्रत्यायनाङ्गम्, अथ सार्थकानि प्राञ्चि पदानि स्मर्यन्ते तर्हि समयस्मरणपदार्थज्ञानादिकार्यसांकर्यकृतमनेकशाखं प्रतिपदं ज्ञानयौगपद्यमापद्यते इत्यसतीयं कल्पना,

## प्रकारान्तरेण वर्णानां पदवाक्यभावोपगमनिरूपणम्—

व्याख्यातारस्तु प्रक्रियान्तरमाचचक्षुः, वर्णानुगमरूपेण तावत्प्रथमपदज्ञानमुत्पद्यते ततः संकेतस्मरणं तेन विनश्यदवस्थेन पदज्ञानेन स्वविषयावच्छेदेन पदार्थज्ञानमाधीयते यत्र वाचकावच्छिन्नं वाच्यस्वरूपमवभास-

ते तथाविधपदार्थज्ञानात्संस्कारः ततस्तथैव क्रमेण द्वितीयपदज्ञानं तदनु समयस्मरणं तेन विनश्यदवस्थेन च द्वितीयपदज्ञानेन तथैव स्वावच्छेदेन स्वार्थज्ञानं तेन प्रथमपदार्थज्ञानाहितेन संस्कारेण च दृढतरः संस्कारः पुनर्वर्णक्रमेण तृतीयपदज्ञानं पुनः संकेतस्मरणं संकेतस्मृतिसहायेन तेन विनश्यदवस्थेन स्वार्थेनैव स्वावच्छिन्नं ज्ञानं तेन प्राच्येन च संस्कारेण दृढतरः संस्कारः एवं तावद्यावदन्त्यपदज्ञानात्स्वावच्छिन्नार्थप्रतीतिः ततः पूर्वोपचितान्महतः संस्काराद्विशिष्टसर्वविषयमेकस्मरणं यस्य स्वावच्छिन्नास्सर्वे पूर्वपदार्था विषयतां प्रतिपद्यन्ते तस्मिन्स्मरणे तथान्त्यपदार्थज्ञाने ऽवच्छेदकत्वेन प्रस्फुरत्पदसमूहो वाक्यमवच्छेद्यत्वेन प्रकाशमानो ऽर्थसमूहो वाक्यार्थः, एवं स्मर्यमाणानुभूयमानौ पदपदार्थसमूहौ वाक्यवाक्यार्थावुक्तौ भवतः ।

### उक्तस्य प्रकारान्तरस्य खण्डनम्—

एतदपि न विचारक्षमम् , अन्त्यपदार्थप्रतीतिसमये तदवच्छेदकतया प्रतिभासमानं पदं तत्प्रतीतौ तावत्कारणमिति नात्र विमतिः, स्वयं च प्रतिभासमानत्वात्कर्मापि भवत्येव, तस्य तदानीं कर्मत्वे कारणं चिन्त्यम् , न श्रोत्रं तावत्कारणम् अन्त्यपदप्रतीत्यनन्तरमेव तद्व्यापारस्य विरतत्वाद् विरम्य च पुनर्व्याप्रियमाणत्वानुपपत्तेः, मनस्तु बाह्ये विषये स्वातन्त्र्येण प्रवर्त्तितुमसमर्थम्, तत्प्रवृत्तौ सर्वाण्येव प्रथमपदात्प्रभृति पदानि मानसव्यवसायगोचरचारीणि भवन्तु किं स्मर्यमाणत्वमन्येषामुच्यते,

अथ तदन्त्यपदमर्थे इवात्मन्यपि तदवच्छेदकत्वप्रतिपत्तेः करणत्वं प्रतिपत्स्यत इति मन्यसे तदयुक्तम् , स्वप्रतीतौ तस्य कर्मत्वान्न चैकस्यामेव क्रियायां तदेव कर्म करणं च भवितुमर्हति, विस्तरतश्चायं वाचकावच्छिन्नवाच्यप्रतिभासः प्रत्यक्षलक्षणे प्रतिक्षिप्त इत्यलं पुनस्तद्विमर्देन ।

### प्रकारान्तरेण वाक्यस्य वाक्यार्थबोधकत्वोपपादनम्—

आह प्रथमं पदज्ञानं ततः संकेतस्मरणं ततः पदार्थज्ञानं पदार्थज्ञानात् पदज्ञानस्य विनश्यत्ता विनश्यदवस्थपदज्ञानमपेक्षमाणं श्रोत्रं प्रथमपदावच्छेदेन द्वितीयपदे ज्ञानमादधाति द्वितीयपदज्ञानानन्तरं पुनः संबन्धस्मरणं ततः पदार्थज्ञानं तेन द्वितीयपदज्ञानस्य विनश्यत्ता विनश्यदवस्थपदज्ञानसहायाच्छ्रोत्रात्तथैव तदवच्छेदेनोत्तरोत्तरपदज्ञानं तावद्यावदन्त्यपदज्ञानमिति , तज्ज्ञानानन्तरं च प्राक्तनप्रक्रियावन्नात्र पूर्वपदस्मरणमुपयुज्यते तत्फलस्य च विनाशदशापतितपदज्ञानकृतावच्छेदमहिम्नैव सिद्धत्वात् , तस्य

---

( १ ) शाबरभाष्ये अ० १ पा० १ सू० २६ । इयं टिप्पणी ३६७ पृष्ठस्था ।

हि फलमन्त्यपदावगमसमये सकलपूर्वपदोपस्थानं तच्च विनश्यदवस्थपूर्व-पूर्वपदज्ञानकृतोत्तरोत्तरपदानुरागबलादेव लब्धमिति किं तत्तत्स्मरणेन तदभावाच्च नात्र ज्ञानयौगपद्यादिचोद्यावसरः समस्ति, यथोपदर्शितान्त्यपदज्ञान-मेव च वाक्यार्थज्ञानमिति न चरितार्थत्वमत्रेत्येवं वाक्यादेव वाक्यार्थ-प्रत्ययः सेत्स्यति पदार्थेभ्य इति,

## पूर्वोक्तस्य प्रकारान्तरस्य खण्डनम्—

इयमपि न निरवद्या कल्पनेत्यपरे, प्रथमपदोपरागपूर्वकद्वितीयपदज्ञानो-पजननानुपपत्तेः, प्रथमपदज्ञानानन्तरं सम्बन्धस्मरणं तेनैव तस्य विनश्यत्ता प-दार्थप्रतिपत्तिकाले च पदज्ञानं विनष्टमेव विनश्यदवस्था बुद्धिर्बुद्ध्यन्तरविरो-धिनीति सामान्येन श्रवणात्,

अथ ब्रूयात्कार्यभूतया बुद्ध्या कारणभूता बुद्धिर्विरोध्येत न बुद्धिमात्रेण बुद्धिमात्रमिति एतदयुक्तम्, विशेषे प्रमाणाभावादभ्युपगम्यापि ब्रूमः कार्यकार-णभूतयोरेव बुद्ध्योर्भवतु वध्यविघातकभावः तथापि पदज्ञानं संस्कार इव समयस्मृतेः कारणमेव संस्कारेणेव तेनापि विना तदनुत्पादात्, संस्कारप्रबोधे तस्य व्यापार इति चेत् तेनापि द्वारेण यत्कारणं तत्कारणमेव, तदिह पदज्ञानं समयस्मरणं पदार्थज्ञानमिति त्रीणि ज्ञानानि युगपदवतिष्ठन्ते इति परः प्रमादः,

अपि च पदज्ञानमुपजायमानं वर्णक्रमेण जायते न सहसैव निरंशपद-वादस्य व्युदस्तत्वात्तत्र च द्वित्राणि त्रिचतुराणि पञ्चषाणि वाक्षराणि क्रमेण ग्रहीष्यन्ते तद्विषया हि क्रमभाविन्य उपजननापायधर्मिकाः बुद्धयः, अत्रान्तरे विनश्यदवस्थमन्त्यपदज्ञानमासिष्यते तदुपरागेण द्वितीयपदज्ञानमुपपत्स्यते इति दुराशैवेयम्,

अपि च व्यवहितोच्चारितेभ्यो ऽपि पदेभ्यो वाक्यार्थप्रत्ययो दृश्यते यत्रा-नेककार्यपर्यालोचनव्यग्रहृदयः स्वामी रे कन्दलकेत्युक्त्वा कार्यान्तरं संवि-धाय तुरगं वदति पुनः प्रयोजनान्तराय व्यवहृत्य कल्पितपर्याणमित्यपि वक्ति पुनरन्यत्किमपि कृत्वा ब्रवीत्यानयेति तत्र रे कन्दलक कल्पितपर्याणमश्वमानयेति वाक्यार्थावगमो भवति भवन्मते चासौ दुरुपपादः, पदानुरागस्य तत्रासम्भवा-त्सर्वपदस्मरणस्य चानभ्युपगमात्,

किं च न प्रवरमतानुसारिणामिव सम्बन्धविशेषबुद्धिषु विशेषणविशेष्ये द्वे वस्तुनी आलम्बनम् अपि तु विशेष्यमात्रमुपायभेदादेव प्रतीत्यतिशय इति त-स्मिँश्च सत्यपि पूर्वपदानुरागे तत्प्रतिभासाभावात् शुद्धमेव द्वितीयपदज्ञानं संप-न्नमिति किं तदनुरागेण, अतश्चेयमनुपपन्ना कल्पना यतो द्वितीयपदस्य स्वार्थे शुद्धमेव संकेतग्रहणं वृत्तं यदा क्वचित्प्रथमं प्रयुक्तमासीदधुना तु तत्पदं पदा-

न्तरोपरक्तं सञ्जातमिति तादृशस्यागृहीतसम्बन्धत्वादर्थप्रतिपत्तिहेतुत्वं न स्यादित्यास्तामपूर्वमिदं शङ्करस्वामिनः पाण्डित्यम्,

## स्वमतेन वाक्यार्थबोधोपपादनम्––

आह यदीमाः सर्वा एव तान्त्रिकरचिताः कल्पना न साधीयस्यश्चेदात्मीया का चन निर्दोषा साध्वी कल्पना निवेद्यताम्, उच्यते न वयमात्मीयामभिनवां कामपि कल्पनामुत्पादयितुं क्षमाः—

न हीयं कविभिः पूर्वैरदृष्टं सूक्ष्मदर्शिभिः।
शक्ता तृणमपि द्रष्टुं मतिर्मम तपस्विनी॥

कस्तर्हि विद्वन्मतितर्कणीयग्रन्थोपबन्धे तव दोहदो ऽयम्।
न दोहदः पर्यनुयोगभूमिः परोपदेशश्च न तस्य शान्तिः॥

राज्ञा तु गह्वरे ऽस्मिन्नशब्दके बन्धने विनिहितो ऽहम्।
ग्रन्थरचनाविनोदादिह हि मया वासरा गमिताः॥

तथापि वक्तव्यं कथं वर्णेभ्यो वाक्यार्थप्रतीतिरिति, उच्यते चिरातिक्रान्तत्वमचिरातिक्रान्तत्वं वा न स्मृतिकारणं संस्कारकरणकं हि स्मरणं भवति तच्च सद्यः प्रलीने चिरप्रलीने वा न विशिष्यते इत्येवं पूर्वेषां पदानां चिरतिरोहितानामपि व्यवहितोच्चारितानामपि संस्कारात्स्मरणं भविष्यति अन्त्यपदस्यानुभूयमानत्वोपगमे ज्ञानयौगपद्यादिप्रमादप्रसङ्ग इति वरमन्त्यपदमपि स्मर्यमाणमस्तु, स्मृत्यारूढान्येव सर्वपदानि वाक्यार्थमवगमयिष्यन्ति, तत्र चेयं कल्पना वर्णक्रमेण तावत्प्रथमपदज्ञानं ततः संकेतस्मरणं संस्कारश्च युगपद्भवतः, ज्ञानयोर्हि यौगपद्यं शास्त्रे प्रतिषिद्धं न संस्कारज्ञानयोः, ततः पदार्थज्ञानं तेनापि संस्कारः पुनर्वर्णक्रमेण द्वितीयपदज्ञानं ततः संकेतस्मरणं पूर्वसंस्कारसहितेन च तेन पटुतरः संस्कारः पुनः पूर्ववर्णक्रमेण तृतीयपदज्ञानं संकेतस्मरणं पूर्वसंस्कारापेक्षः पटुतरः संकार इत्येवं पदज्ञानजनिते पीवरे संस्कारे पदार्थज्ञानजनिते च तादृशि संस्कारे स्थिते ऽन्त्यपदार्थज्ञानानन्तरं पदसंस्कारात्सर्वपदविषयस्मृतिः पदार्थसंस्काराच्च पदार्थविषया स्मृतिरिति संस्कारक्रमात्क्रमेण द्वे स्मृती भवतः, तत्रैकस्यां स्मृतावुपारूढः पदसमूहो वाक्यमितरस्यामुपारूढः पदार्थसमूहो वाक्यार्थः,

ननु स्मृतेरप्रमाणत्वादप्रमाणमिदानीं वाक्यार्थप्रतिपत्तिः, नैवम् तथा सम्बन्धग्रहणाद्यत्र ह्यन्यथा सम्बन्धग्रहणमन्यथा च प्रतिपत्तिः तत्रायं दोषः, यथा धूमे गृहीतसम्बन्धे नीहाराद्दहनानुमितौ, इह तु क्रमवर्तिनां वर्णानामन्यथा प्रत्ययासम्भवाद्यथैव व्युत्पत्तिस्तथैव प्रतीतिरिति न किं चिदवद्यम्, अचिरनिर्वृत्तानुभवसमनन्तरभाविनी च स्मृतिरनुभवायते,

अथ वा कृतं स्मरणकल्पनयान्त्यपदार्थज्ञानानन्तरं सकलपदार्थविषयो मानसो ऽनुव्यवसायः शतादिप्रत्ययस्थानीयो भविष्यति, तदुपारूढानि पदानि वाक्यं तदुपारूढश्च पदार्थो वाक्यार्थः, तथाविधश्च मानसोऽनुव्यवसायः सकललोकसाक्षित्वादप्रत्याख्येयः,

नन्वन्त्यपदार्थज्ञानानन्तरं किं पूर्वपदतदर्थविषयेण स्मरणेनानुव्यवसायेन वा अन्त्यपदार्थश्चेज् ज्ञातः समाप्तं कर्त्तव्यं किमन्यदवशिष्टं यद् व्यवसायेन स्मरणेन वा करिष्यते, एकाकारो हि वाक्यार्थप्रत्ययः प्रत्यात्मवेदनीयो न शक्यो ऽपह्नोतुम् , न चासौ स्मर्यमाणादनुव्यवसायाद्वा विना सम्पद्यते इत्यस्ति तदुपयोग इत्थं स्मर्यमाणारूढं संकलनाज्ञानविषयीभूतं चेदं पदनिकुरुम्बं वाक्यं तथाविधश्चैष वाक्यार्थः ।

### संसर्गभासकनिरूपणोपक्रमः—

ननु मा भूत्पदस्फोटो वाक्यस्फोटश्च वाचकः ।
मा च भूतामिमौ वाक्यवाक्यार्थौ भागवर्जितौ ॥
भवन्तु भवदाख्याताः पदवाक्यादिकल्पनाः ।
पदार्थानां तु संसर्गे मार्गः कः इति कथ्यताम् ॥

असंसृष्टा हि गौरश्वः पुरुषो हस्तीति पदार्था न वाक्यार्थभावमधिरोहन्ति, अन्त्यपदार्थज्ञानान्तरभाविना हि स्मरणेन वा ऽनुव्यवसायेन वा विषयीक्रियमाणास्ते यथाऽवगता एव विषयीक्रियन्ते संसर्गावगमस्तु कुतस्त्य इति चिन्त्यम्,

### संसर्गभाने विप्रतिपत्तिः--

उच्यते अस्त्यत्र विवादः केचिदाचक्षते अन्विता एव पदार्थाः पदैरभिधीयन्ते अन्यथा पदानां वाक्यत्वायोगादिति,

अन्ये मन्यन्ते शुद्धानामेव पदार्थानां पदैरभिधानं ते तु तथाऽभिहिताः सन्तः परस्परमाकाङ्क्षासन्निधियोग्यत्वपर्यालोचनया संसर्गमधिगमयन्तीति,

तत्रेदं विचार्यम्, व्युत्पत्तिर्बलीयसी न शब्दोऽर्थमवगमयति व्युत्पत्तिमन्तरेण, व्युत्पत्तिश्च किं वाक्यस्य वाक्यार्थे पदस्य वा पदार्थे इति, यदि वाक्यस्य वाक्यार्थे व्युत्पत्तिः तदन्विताभिधानम्, पदस्य पदार्थे व्युत्पत्तावभिहितान्वय इति,

### अभिहितान्वयवादनिरूपणम्—

किं तावत्प्राप्तमभिहितान्वय इति पदार्थप्रतिपत्तिपूर्वकत्वाद्वाक्यार्थप्रतिपत्तेः, न ह्यनवगतपदार्थस्य वाक्यार्थसम्प्रत्ययो दृश्यते पदार्थप्रविभागाच्च गम्यते ऽस्य पदस्य जातिरर्थो ऽस्य द्रव्यमस्य गुणो ऽस्य क्रियेति स चैवमवकल्पते यदि

तावत्सो ऽर्थः पदैरभिधीयते, पदान्तरार्थोपरक्ते तु तस्मिन्नभिधीयमाने तदर्थेय त्तैव नावधार्यते कदम्बाकारार्थप्रतीतेः, आवापोद्वापाभ्यां तदवधारणमिति–

चेन्मैवम्, आवापोद्वापपरीक्षावसरेऽपि कदम्बप्रतीत्यनपायान्न ह्येकमेव किं चिद्वाक्यमन्विताभिधायिपदप्रथितम्, अन्यत्र तु शुद्ध एव पदानामर्थः किं तु सर्वत्र कदम्बकरूपादुपायात्कदम्बकरूपमुपेयं प्रतीयते इति दुरवगमः पदार्थविभागः, ततश्च पदार्थानामनपेक्षणे गामानयेति वाक्यादश्वबन्धननियोगः प्रतीयते, अपेक्ष्यते तु पदानामर्थः सो ऽपेक्ष्यमाण इयानिति नियतो ऽवधारयितव्यः, तदवधारणं शुद्धाभिधायिषु पदेष्ववकल्पते तस्मात्पदपदार्थयोरौत्पत्तिकः सम्बन्ध इष्यते, वृद्धव्यवहारेषु च वाक्यादपि भवन्ती व्युत्पत्तिः पदपर्यन्ता भवति इतरथा हि प्रतिवाक्यं व्युत्पत्तिरपेक्ष्यते सा चानन्त्याद् दुरुपपादेति शब्दव्यवहारोच्छेदः स्यात्, दृश्यते च पदार्थविदामभिनवकविश्लोकादपि वाक्यार्थप्रतीतिः सा पदतदर्थव्युत्पत्त्या ऽवकल्पते वाक्यवाक्यार्थयोस्तु व्युत्पत्तावपेक्ष्यमाणायां सा न स्यादेव, तस्मान्नान्विताभिधानम्,

अतश्चैवं पदान्तरोच्चारणवैफल्यप्रसङ्गादेकस्मादेव पदात्तदुपरञ्जकद्वितीयपदार्थावगतिः सिद्धैव तदपि पदमन्यानुरक्तस्वार्थवाचीत्यनेनैव न्यायेनैकमेव पदमखिलपदाभिधेयार्थवाचि सम्पन्नमिति तेनैव व्यवहारो ऽस्तु न चासौ सम्पद्यते गौरित्युक्ते सर्वगुणक्रियावगमान्न ज्ञायते किमुपादीयतामिति सर्वागमो ह्यनवगमनिर्विशेष एव व्यवहारानुपपत्तेः, न हि रसविदां पूर्णोऽप्यब्धिर्मरोरतिरिच्यते सलिलकार्यानिष्पत्तेः, नियतगुणक्रियानुरक्तस्वार्थप्रतिपादने तु गोशब्दस्य न हेतुमुत्पश्यामः,

पदान्तरसन्निधानं नियमहेतुरिति चेत् किं स्वरूपमात्रेणार्थप्रतिपादनेन वा स्वरूपमात्रेण जपमन्त्रपदानामिव सन्निधानं भवदप्यसन्निधानान्न विशिष्यते अगृहीतसम्बन्धस्य तत्कृतोपकारादर्शनाद्, अर्थप्रतिपादनेन तु पदान्तरं यदि नियमहेतुः सो ऽयभिहितानामर्थानामन्वय उक्तो भवति, तस्मात्स एव श्रेयान्पदेभ्यः प्रतिपन्नास्तावदर्था आकाङ्क्षासन्निधियोग्यत्ववशेन परस्परमभिसम्बध्यन्ते यो येनाकाङ्क्षितो यश्च सन्निहितो यश्च सम्बन्धुं योग्यः स तेन सम्बध्यते नातो ऽपरः, अत एवाङ्गुल्यग्रे हस्तियूथशतमास्ते इति नास्ति सम्बन्धः योग्यत्वाभावादन्विताभिधानवादिनां तु अन्वितस्यानभिधानात्तत्राप्यन्वयः प्राप्नोति स च नास्ति तस्मादभिहितानामेव पदार्थानामन्वय इति युक्तम्, तदुक्तं 'पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराण्यथेदानीमर्था अवगता वाक्यार्थं सम्पादयन्ति' इति,

## अभिहितान्वयवादखण्डनम्—

एवं प्राप्ते अभिधीयते न व्युत्पत्तिनिरपेक्षो दीप इव शब्दोऽर्थमवगमयतीति व्युत्पत्तिश्च वृद्धव्यवहाराद् वृद्धानां च व्यवहारो वाक्येन न पदेन केवलस्य पदस्याप्रयोगाद् ।

अर्थप्रकरणप्राप्तपदार्थान्तरवेदने।
पदं प्रयुज्यते यत्तद्वाक्यमेवोदितं भवेत् ॥
वक्ता वाक्यं प्रयुङ्क्ते च संसृष्टार्थविवक्षया।
तथैव बुद्धयते श्रोता तथैव च तटस्थितः ॥

सेयं वाक्यस्य वाक्यार्थे व्युत्पत्तिः, वाक्यं च किमुच्यते संहत्यार्थमभिदधति पदानि वाक्यम् एकार्थः पदसमूहो वाक्यमिति वाक्यविदः, तत्रायं पदसमूह एकार्थो भवति एवं न संहत्यार्थमभिदध्युः पदानि यद्येकस्यैव पदस्य व्यापारः, यथा हि बाह्यानि करणानि काष्ठादीनि पाके व्याप्रियन्ते यथा च शिबिकाया उद्यन्तारः सर्वे शिबिकामुद्यच्छन्ति यथा त्रयोऽपि ग्रावाण उखां बिभ्रति तथा सर्वाण्येव पदानि वाक्यार्थमवबोधयन्ति तदिदमन्विताभिधानमन्यानन्वितनिष्कृष्टस्वार्थपर्यवसायित्वे हि सति न सर्वेषां वाक्यार्थव्यापारः स्यात् ,

नन्वेवमेकैकस्य कृत्स्नकारित्वे सत्येकस्मादेव कृत्स्नसिद्धेः पदान्तरोच्चारणं व्यर्थमित्युक्तम्, नैतत् पदान्तरेण विनैवैकस्मात्कृत्स्नकारित्वसम्प्रत्ययभावात् , न तर्ह्येकं कृत्स्नकारीति चेन्मैवम् , एकैकस्य कृत्स्नफलपर्यन्तव्यापारपतितत्वादेकैकस्मिन्सतिकृत्स्नफलपर्यन्तो व्यापारो निवर्त्तते एकैकेन विना न निर्वर्त्तते इत्येवमेकैकं कृत्स्नकारि भवति,

नन्वेवं तर्हि समुदाय एव कर्त्ता भवतु किं समुदायिभिः ततश्च तदेवायातं निरवयवौ वाक्यवाक्यार्थाविति नैतद्युक्तम्, सङ्घातकार्यवत्स्वकार्यस्यापि दर्शनात् , अथ किं संघातकार्यं किं च स्वकार्यं वाक्यार्थप्रतिपत्तिः संघातकार्यम् स्वकार्यं तु पदार्थप्रतिपत्तिः यथा पाकः संघातकार्यं स्वकार्यं ज्वलनभरणादि काष्ठस्थाल्यादीनाम् ,

ननु यदि पदानां पदार्थप्रतिपादनं स्वकार्यं शुद्धस्तर्हि पदस्यार्थः, न शुद्धः पदार्थः संघातकार्ये एव प्रयोगात्तत्र प्रयुक्तानामप्येषां स्वकार्यं न नावगम्यते अत एव न निवरयवं वाक्यमिष्यते स्वकार्यप्रतिज्ञानात्संहतास्ते संघातकार्यं कुर्वन्तो दृश्यन्ते न संघात एव संहतेष्वपि कुर्वत्सु स्वकार्यं पृथक्पृथगुपलभ्यते यथा शकटाङ्गानामयमंशोऽनेन कृतोऽयमनेनेति न पृथक् प्रयुज्यमानानि शकटाङ्गानि मनागपि शकटकार्यं कुर्वन्तीत्येवं न केवलं पदं प्रयुज्यते प्रयुक्तमपि वा न तत्कार्याङ्गं पदान्तरेण तु सह व्यापारात्तदन्वि-

तार्थकार्येव पदमिति युक्तम्, तदिदमुक्तं 'संहत्यार्थमभिदधति पदानि वाक्यम् एकार्थः पदसमूहो वाक्यम्' इति, तदेवमवयवकार्योपलम्भान्न वैयाकरणवन्निमितान्यपि निह्नुमहे कृत्स्नफलसिद्ध्यवधि व्यापारपरिनिश्चयाच्च नान्यमीमांसकवच्छुद्धपदार्थाभिधानमुपमच्छामहे इति,

## अन्विताभिधाने आपादितदूषणानां परिहारः ।

यत्पुनरभ्यधायि प्रतिवाक्यं व्युत्पत्तिरपेक्षणीया अन्यथा नवकविश्लोकादर्थः, पदार्थविदा न प्रतीयेतेति तदिदं व्युत्पत्त्यनभिज्ञस्य चोद्यम्, न हीयं व्युत्पत्तिः गोशब्दस्य शुक्लान्वितोऽर्थः स हि व्यभिचरति कृष्णान्वितस्यापि तदर्थस्य दर्शनान्नापि सर्वान्वितस्तदर्थ आनन्त्येन दुरवगमत्वात्, किं त्वाकाङ्क्षितयोग्यसन्निहितार्थानुरक्तोऽस्यार्थ इति, एतां च व्युत्पत्तिं वाक्यान्येवावापोद्वापरचनावैचित्र्यभाञ्जि सञ्जनयन्ति पदार्थपर्यन्तापि भवन्ती व्युत्पत्तिरीदृशी दृश्यते न शुद्धपदार्थविषया पदेन व्यवहाराभावादित्युक्तम्, तथापि न न ज्ञायते इयान्पदस्यार्थ इति शकटाङ्गवदावापोद्वापाभ्यां तत्कार्यभेदस्य दर्शितत्वात्, तदित्थं न प्रतिवाक्यं व्युत्पत्तिरपेक्ष्यते सन्निहितयोग्याकाङ्क्षितार्थोपरक्तस्वार्थाभिधेयत्वेन हि क चिद्गृहीतः सम्बन्धः सर्वत्र गृहीतो भवति ततश्च नवकविश्लोकादप्यर्थप्रतिपत्तिरुत्पस्यते, पदपदार्थयोस्तु न व्युत्पत्तिरुपायाभावादित्युक्तम्,

यदपि पदान्तरोच्चारणमफलमिति तदपि परिहृतम्, पदान्तरसन्निधाने हि सर्वाणि पदानि कृत्स्नकारीणि भवन्तीत्युक्तत्वात्, किं पदान्तरसन्निधानेन क्रियते इति चेत्सर्वकारकेष्वपि तुल्योऽयमनुयोगः, संहत्य तु सर्वाणि कुर्वन्ति कारकाणीत्युच्यन्ते तथा पदान्यपि अर्थाभिधानेनापि चोपकुर्वत्सु पदेषु नाभिहितान्वयोऽनन्वितार्थे व्युत्पत्त्यभावादनुपगमे वा दुरुपपादः पदार्थानामन्वयः उपायाभावात्,

नन्वाकाङ्क्षासन्निधियोग्यत्वान्यभ्युपाय इत्युक्तं न युक्तमुक्तम्, कस्येयमाकाङ्क्षा शब्दस्यार्थस्य प्रमातुर्वा शब्दार्थयोस्तावदचेतनत्वान्नाकाङ्क्षायोगः फलत इयं तत्र तत्र वाचोयुक्तिः शब्दः शब्दान्तरमाकाङ्क्षत्यर्थो ऽर्थान्तरमिति, प्रमातुः पुनः स्वतन्त्रस्याकाङ्क्षा न प्रमाणं पुरुषेच्छया वस्तुस्थितेरघटमानत्वात्, शब्दाख्यं प्रमाणं पृष्ठभावेन तु पुरुषस्याकाङ्क्षा भवन्ती भवत्यर्थानाम् संसर्गहेतुरित्येवं शब्दस्यायमियानिषोरिव दीर्घदीर्घो व्यापारः उपरतव्यापारे तु शब्दे पुरुषाकाङ्क्षामात्रं न सम्बन्धकारणम् ।

अशाब्दत्वं च वाक्यार्थप्रतीतेरित्थमापतेत् ।<br>
व्यवधानमयुक्तं च साक्षाच्छाब्दत्वसंभवे ॥

### अन्विताभिधानवादोपसंहारः—

तस्मादन्विताभिधायीनि पदानीति स्थितम्, एष एव हि संसर्गपन्थाः।

व्यतिषक्तार्थबुद्ध्या हि व्यतिषङ्गो ऽवगम्यते ।
अपरं तु न संसर्गप्रतीतेरस्ति कारणम् ॥
न खल्वानय गां शुक्लां संसर्ग इति कथ्यते ।
व्यवहारे क्व चिद्वृद्धैः पदं संसर्गवाचकम् ॥
प्रयुज्यमानमप्येतद्बालिशेन हि केन चित् ।
अनन्वितार्थमेव स्याद्दशदाडिमवाक्यवत् ॥

तस्मादन्वितानामेवाभिधानं युक्तम्,

आह—

अङ्गुल्यग्रादिवाक्येषु कथं तव समन्वयः ।

उच्यते,

उक्तानामपि संसर्गे कथं तव समन्वयः ॥

आह,

नन्वत्र योग्यताभावादसंसर्ग उपेयते ।
आकाङ्क्षादित्रयाधीनः संसर्गो हि मयेष्यते ॥

उच्यते—

मयापि योग्यासन्नादिसंसृष्टस्वार्थवाचिता ।
पदानां दर्शिता सा च तेषु नास्तीत्यनन्वयः ॥

आह अन्विताभिधानवादी हि भवान् ततश्च—

भवतो ऽनभिधानं स्यादन्वयासंभवादिह ॥

अहं त्वभिहितान्वयवादी तेन

मम ह्यनन्वितत्वे ऽपि नाभिधानं विरुद्ध्यते ।

उच्यते—

कथं मीमांसकेनापि भवता सूक्ष्मदर्शिना ।
नाद्यापि शब्दव्यापारः सुस्पष्टमवधारितः ॥
प्रकाशकत्वं शब्दस्य व्यापारो हि निसर्गतः ।
पुंसस्तु गुणदोषाभ्यां तस्मिन्सदसदर्थता ॥
क्रियाकारकसंसर्गबुद्धिरन्या ऽपि शब्दजा ।
तादृश्येवायथार्था तु नरबुद्धिप्रमादतः ॥

तदुक्तम्—"प्रमाणान्तरदर्शनमत्र बाध्यते" इति ।

अत एव प्रमाणत्वं शब्दे निष्प्रतिमं स्वतः ।
शब्दे कर्मणि तत्रापि बाधकानुपसर्पणात् ॥

तत्राङ्गुल्यग्रवाक्ये ऽपि शाब्दो ऽस्त्येव समन्वयः ।
आधाराधेयक्रियानिर्देशस्यात्र प्रतीयमानत्वात् ।
वस्तुतो ऽसम्भवो यस्तु तुल्य एव स आवयोः ।
अयोग्यत्वेन संसर्गप्रतीत्यर्थनिवर्हणात् ॥

यदि तु शाब्दो ऽनन्वयो भवेत् कचटतपादिवर्णनिर्देशमात्रमिदं स्यात् दशदाडिमादिप्रवादवदत्रापि अन्विताभिधानं न विरुद्धं बाधकस्त्वन्यविषय एव न शब्दसंसर्गविषय इत्युक्तम्, अत एव स्वसामर्थ्यसिद्धनिर्विबन्धकव्यापारे शब्दे स्वतो वेदे प्रामाण्यमनाकुलं निर्वहत्यपौरुषेयतया विप्लवासम्भवात् स्वव्यापारस्य तत एव शुद्धत्वमित्यलमतिप्रसङ्गेन ।

इत्यन्विताभिधानेन वाक्यार्थज्ञानसम्भवात् ।
व्युत्पत्तिरहितः प्राज्ञैः प्रहेयो ऽभिहितान्वयः ॥

## अन्विताभिधानखण्डनम्—

तदेतदपि नानुमन्यन्ते, यदुक्तं वृद्धव्यवहाराद्व्युत्पत्तिरिति तत्सत्यम् वाक्येन व्यवहार इत्येतदपि सत्यम्, शिबिकोद्यच्छत्रवत्सर्वाणि पदानि कार्यं संहत्य व्याप्रियन्ते इत्येतदपि सत्यमेव, व्युत्पत्तिः चिन्त्यताम् किमेकघनाकारसंघातकार्यनिष्ठैव किं वा पदार्थपर्यन्तेति, पूर्वस्मिन् पक्षे प्रतिवाक्यं व्युत्पत्तिरपरिहार्या सा च बहुप्रमादेत्युक्तम्, पदार्थपर्यन्तायां व्युत्पत्तौ नूनं निर्धारणीयमियान्पदस्यार्थ इति, भवद्भिरपि शकटावयवदृष्टान्तवर्णनेन पदव्यापारनिर्धारणभङ्गीकृतमेव, इतरथा हि पदार्थनियमानपेक्षणे गामानयेति विवक्षावानश्वपदमपि निमित्ततयोपाददीत, न हि भवतामनपेक्षितपदार्थ एव वैयाकरणानामिव वाक्यार्थप्रत्ययः, तदसौ यावान् आवापोद्वापपर्यालोचनया गोपदस्यार्थो निर्धार्यते तावानेव सङ्घातकार्ये ऽपि व्याप्रियमाणस्य तस्यार्थः,

नन्वाकाङ्क्षितयोग्यसन्निहितार्थपरक्तो ऽस्यार्थ इत्युक्तम्, न सर्वदा संहतव्याप्रियमाणमेतत्पदं पश्यतः तवायं भ्रमः, अर्थः तावानस्य यावत्यभिधात्री शक्तिः, कियति च तस्याभिधात्री शक्तिः कियति तस्यानभिधात्रा शक्तिः, यावन्तमर्थमन्योन्यमाकाङ्क्षितैश्च योग्यैश्च सन्निहितैश्च संयुज्यमानं न मुञ्चति, कियन्तं च न मुञ्चति गोत्वमात्रं तद्वन्मात्रं वेत्यतस्तावत्येवाभिधात्री शक्तिरन्वयतिरेकाभ्यामस्य निर्धार्यते, अतः परमेकस्य पदस्याप्रयोगात्सर्वदा सङ्घातकार्यरहितकेवलस्वकार्यचातुर्यानवधारणात्प्रधानकार्ये तात्पर्यशक्तिरस्य व्याप्रियते नाभिधात्री, तां च पृथगविवेचयता भवता ऽन्विताभिधानमभ्युपगतं तच्च न युक्तं सर्वत्राभिधात्र्याः शक्तेरविशेषात्, पदार्थनियमानवधारणं पदान्तरोच्चारणवैफल्यमित्यादिदोषानपायात्, येनान्वितमर्थमभिदधा-

ति गोशब्दः तदनभिधाने तदन्वितानवगमाद्येन सह संसर्गः स न गृह्यते तत्संसृष्टश्च गृह्यते इति विप्रतिपिद्धं स्यात्, तदभिधाने वा तद्वत्सर्वाभिधानमित्येकमेव गोपदं सर्वार्थं भवेत्, तस्मान्न सर्वत्राभिधात्री शक्तिः पदस्योपपद्यते इति नान्विताभिधानम् ।

अन्विताभिधानपक्षे च कथमङ्गुल्यग्रवाक्ये ऽपि नान्वयस्स्यात् शाब्दो ऽस्त्येव समन्वय इति चेदर्थांशस्पर्शी शब्दः प्राप्नोति बहिरन्वयाभावात्, प्रकाशकत्वमात्रं व्यापार इति चेद् बाढम् तत्तु अनन्वितविषयं वेदितुं युक्तं न पुनरन्वितविषयमेवेति शक्यते नियन्तुम्, दशदाडिमादिवाक्यमनन्वितार्थप्रतिपादकमपि दृश्यते यतः, न तद्वाक्यमिति चेत् तदङ्गुल्यग्रवाक्यमपि वाक्यमेव, आधाराधेयक्रियासंसर्गप्रतीतिस्तु भ्रममात्रं तस्मादन्वितमर्थमभिदधति पदानीत्यसमीचीनम्,

तत्किं शलाकाकल्पाः परस्परमसंसृष्टा एव पदार्थाः पदैरुच्यन्ताम् एतदपि नास्ति तथाविधव्यवहाराभावात्, पश्चादन्वयस्य च दुरवगमत्वाद्विरम्य व्यापारस्य चासंवेदनात्तस्मात्पक्षद्वयमपि न क्षेमाय, तदुक्तम्—

मतद्वयमपीदं तु नास्मभ्यं रोचतेतराम् ।
कुतो ऽन्विताभिधानं वा कुतो वा ऽभिहितान्वयः ॥

## मतान्तरं तत्खण्डनं च--

अन्या तु वाचोयुक्तिः कैश्चित्कृता अन्वीयमानाभिधानमभिधीयमानान्वयश्चेति सा ऽपि न हृदयङ्गमा—

न हि द्वे अनुभूयेते क्रिये एते पृथक्स्थिते ।
अभिधानक्रिया चान्या वाच्यस्था चान्वयक्रिया ॥

ते हि क्रमेण वा स्यातां युगपद्वा क्रमपक्षे पूर्वमन्वयक्रिया चेत्तदिदमन्विताभिधानमेव नान्वीयमानाभिधानम्, पूर्वं चेदभिधानमभिहितान्वय एव नाभिधीयमानान्वयः युगपत्तु क्रियाद्वयसंवेदनं नास्ति अर्थगतायाः क्रियायाः शब्दप्रयोगकाले ऽनुपलम्भात् ।

अभिधानक्रियैवैका तदभिज्ञैः परीक्ष्यते ।
अन्वीयमानता ऽर्थानामभिधानाद्विना कुतः ॥

गौः शुक्ल इति जातिगुणयोरेकद्रव्यसमवेतयोरपि शब्दमन्तरेण कुतो ऽन्वयमवगच्छामः ।

उक्तेर्नूतनतैवेयं न पुनर्वस्तु नूतनम् ।
न चात्रापि निवर्त्तन्ते दोषाः पक्षद्वयस्पृशः ॥

## तात्पर्यशक्त्या ऽन्वितप्रतीतिः--

अन्ये मन्यन्ते सामान्येनान्विताभिधानं विशेषतश्चाभिहितान्वय इति,

गोशब्दो हि स्वार्थमनवगतविशेषगुणक्रियासामान्यान्वितमभिधत्ते तावत्यन्विताभिधानम्, शुक्लादिगुणविशेषसम्बन्धस्तु पदान्तरादवगम्यते सो ऽयं विशेषो ऽभिहितान्वय इत्येतदपि तादृगेव ।

दोषो ऽन्विताभिधाने यः सामान्ये ऽपि स तादृशः ।
दोषस्तुल्यो विशेषे ऽपि यश्चोक्तो ऽभिहितान्वये ॥

न चेदमपूर्ववस्तु वर्णितमभिहितान्वयवादिनो विशेषे एवाभिहितान्वय आश्रीयते इति प्राक्तन एवेष्टः पन्था वेदितव्यः, कथं तर्ह्ययमाभिधानिको व्यवहारः सङ्कुलमिवैनं पश्यामः सर्वत्र दोषसम्भवात् ।

उच्यते न कदा चिदत्र सङ्कुलता संहत्यकारीणि हि पदानीत्युक्तम्, समुदितैः पदैरेको वाक्यार्थः प्रत्याय्यते स च गुणभूतेतरपदार्थसंसृष्टः कश्चित्पदार्थ एवेति किमत्र सङ्कुलम् ।

ननु किमयमन्विताभिधानपक्षः पुनरुत्थापयितुमिष्टः, मैवम्, नेदमन्विताभिधानम्, कथं तर्हि संहत्यकारिता पदानाम्, उच्यते संहत्यकारिता ऽप्यस्ति न चान्विताभिधानम्, अन्वितमर्थं पदानि संहत्य सम्पादयन्ति न त्वन्वितमभिदधति, किमिदानीं कुर्वन्ति वाक्यार्थं पदानि घटमिव मृदादीनि, एतदपि नास्ति, ज्ञापकत्वात्तेषाम्, का तर्हीयं वाचोयुक्तिः संहत्यकारीणि पदानि न चान्वितमभिदधतीति, इयं वाचो युक्तिः पदान्यन्वितं प्रत्याययन्ति नान्वितमभिदधति, नाभिधात्री शक्तिरन्वितविषया किं त्वन्वयव्यतिरेकावगतनिष्कृष्टस्वार्थविषयैव, तात्पर्यशक्तिस्तु तेषामन्विताविगमपर्यन्ता सह व्यापाराद् व्यापारस्य च तदीयस्य निराकाङ्क्षप्रत्ययोत्पादनपर्यन्तत्वात् तथा हि—

अन्यथैव प्रवर्त्तन्ते प्रत्यक्षाद्युद्भवा धियः ।
अर्थं पूर्णमपूर्णं वा दर्शयन्त्यः पुरः स्थितम् ॥
अन्यथैव मतिः शब्दे विषयेषु विजृम्भते ।
प्रतिपत्तुरनाकाङ्क्षप्रत्ययोत्पादनावधिः ॥
अत एव पदं लोके केवलं न प्रयुज्यते ।
न हि तेन निराकाङ्क्षा श्रोतुराधीयते मतिः ॥

नन्वभिधानव्यतिरिक्तः को ऽन्यः शब्दस्य कृत्स्नफलपर्यन्तः प्रत्यायनात्मा व्यापारः, अस्ति कश्चिद्यः सर्वैरेव संसर्गवादिभिरप्रत्याख्येयः, न हि संसर्गो भिधीयते प्रतीयते च वाक्यात् ।

ननु संसृष्टाभिधाने सति संसर्गः प्रतीयते नान्यथा, नैतदेवं संहत्यकारित्वादेव संसर्गावगतिसिद्धेः, न हि संहत्यकरणमसंसृष्टं च कार्यं क चिद् दृश्यते, अपि च, प्रकृतिप्रत्ययौ परस्परापेक्षमर्थमभिदधाते न च प्रकृत्या प्रत्ययार्थो ऽभिधीयते नियोगस्य धातुवाच्यत्वान्न च प्रत्ययेन प्रकृत्यर्थो ऽभिधीयते

यागादेः लिङ्वाच्यत्वानुपपत्तेः न च तौ पृथक्पृथक् स्वकार्यं कुरुतः।

एवं पदान्यपि परस्परापेक्षीणि संहत्य कार्यं करिष्यन्ति न च परस्परमर्थमभिधास्यन्ति वाक्यान्यपि प्रकरणपतितान्येवमेव, तदुक्तम्—

प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम्।
पदं पदान्तरं तद्वद्वाक्यं वाक्यान्तरं तथेति॥

अयमेव च पक्षः श्रेयान् यत्संहत्यकारित्वं पदानामसंकीर्णार्थत्वं च—

निरपेक्षप्रयोगे ऽयः शलाकाकल्पना भवेत्।
तदन्विताभिधाने तु पदान्तरमनर्थकम्॥
संहत्यकारिपक्षे तु दोषो नैको ऽपि युज्यते।
तेनायमुपगन्तव्यो मार्गो हि हतकण्टकः॥
अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठता।
तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः॥
तेनान्विताभिधानं हि नास्माभिरिह मृष्यते।
अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते॥

संहत्यकारकत्वाच्च पदानां न स्वार्थाभिधित्सयैव समुच्चारणमपि तु प्रधानं कार्यमेव कर्तुम्, तदुक्तम्—

वाक्यार्थप्रत्यये तेषां प्रवृत्तौ नान्तरीयकम्।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनमिति(१)॥
सेयं व्युत्पत्तिमूला पदविसरसमुद्भिद्यमानाङ्कुरश्रीः
संस्कारोदारपत्रा कुसुमचयवती प्रोल्लसद्भिः पदार्थैः।
प्रज्ञावल्ली विशाला फलति फलमिदं स्वादुवाक्यार्थतत्त्वैः।
नैराकाङ्क्ष्यं लसद्भिर्हृदयमुपगते यान्ति यस्मिन् पुमांसः॥

आह च—

पदात्प्रभृति या चैषा प्रज्ञा ज्ञातुर्विजृम्भते।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति(२)॥
तस्मादनया नीत्या सम्प्रत्ययो भवति साधुः।
संसृष्टाश्च पदार्था वाक्यार्थ इति न्यवेदि प्राक्॥

## वेदार्थावधारणाक्षेपः—

यश्चैष लोकव्यवहारसिद्धिः प्रादर्शि वाक्यार्थमितावुपायः।
स एव वेदे ऽप्यवधारणीयः तत्रापि तान्येव पदानि ते ऽर्थाः॥

---

(१) श्लोकवार्तिके वाक्याधिकरणे श्लो० ३४३। ३६८ पृष्ठे व्याख्यतोऽयं श्लोकः।

(२) तन्त्रवार्तिके अ० १ पा० ३ सू० ३०।

आह लोके प्रमाणान्तरपरिच्छेद्यत्वाद्वाक्यार्थस्य तदवगमोपायत्वं शब्दानां योजयितुं शक्यते, वेदार्थस्तु अतीन्द्रियो न च रागादिदोषकलुषमनसामस्मदादीनामतीन्द्रियपदार्थदर्शनकौशलमस्ति, तददर्शिनां च तत्र वृद्धव्यवहाराद्व्युत्पत्तिरेव न सम्भवति, सो ऽहमद्य वेदार्थं बुभुत्समानो वेदविदं कञ्चिदाचार्यमभिगच्छेयं सो ऽप्यतीन्द्रियार्थदर्शी न भवतीति तस्यापि तथैव व्युत्पत्त्यभाव इति तेनाप्यन्यः कश्चिदभिगन्तव्यः, सो ऽप्यहमिव व्युत्पत्त्यभावादन्यमुपासीत सो ऽप्यन्यमित्यन्धपरम्परा प्राप्नोति, न च वेदे एव वृद्धिरादैजिति पाणिनिरिव मन्त्रिगुरुरिति ब्रुवन् पिङ्गल इव हस्तः करः पाणिरिति कथयन्नभिधानमालाकार इव स्वयमुपदिशत्येषो ऽस्य मामकस्य शब्दस्यार्थ इति तस्मात्सर्वथा दुरवगमो वेदार्थः, तदाह—

स्वयं रागादिमान्नार्थं वेत्ति चेत्तस्य नान्यतः ।
न वेदयति वेदो ऽपि वेदार्थस्य कुतो गतिरिति ॥

अथ निगमनिरुक्तव्याकरणवशेन तदर्थकल्पना क्रियते तर्हि नानामतित्वादुपदेश्यानामनेकार्थत्वाच्च नाम्नामुपसर्गनिपातानां च न नियतः कश्चिदर्थो व्यवस्थापयितुं शक्यते, अन्यथा तत्कल्पनासम्भवात् , आह च—

तेनाग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतौ ।
खादेच्छ्वमांसमित्येष नार्थ इत्यत्र का प्रमेति ॥

तदेतद् बधिरस्य रामायणं वर्णितमस्माभिः य एवमपि श्रुत्वा वेदार्थपरिगमाभ्युपायं मृगयते, अनेन हि पूर्वोक्तेन वाक्यार्थपरिगमोपायप्रकटनेन सर्वमपाकृतं भवति, उक्तं हि नाभिनवाः के चन वैदिकाः शब्दा रचनामात्रं वेदे भिद्यते न तु पदानि, सर्गात्प्रभृति च प्रवृत्तो ऽयं वेदविदां व्यवहारः ततश्च दीर्घप्रबन्धप्रवृत्तादद्यत्वे वयसि व्युत्पद्यामहे व्युत्पद्यमानाश्च तं तमर्थं प्रतिपद्यामहे,

किं च वेदार्थस्य परिज्ञानौपयिकानि व्याकरणमीमांसाशास्त्राणि क्व गतानि यदेषु जीवत्सु न वेदार्थो ऽवधार्यते, अपि च रे मूढ स्वयं रागादिमतः प्रत्यक्षमतीन्द्रिये ऽर्थे मा प्रवर्त्तिष्ट न तु रागादिमानग्निहोत्रं जुहुयात्स्वर्गकाम इति वाक्यादपि अग्निहोत्राख्यं कर्म स्वर्गसाधनमिति नावगच्छेत्, अतीन्द्रिये ऽर्थे नियता कुतो व्युत्पत्तिरिति चेद् उक्तमत्र वेदवत्तद्व्यवहारस्य तदर्थपरिगमोपायस्य सुचिरप्ररूढत्वात् , वेदश्चार्थश्च तदवगमश्च तदुपायश्च तदनुष्ठानं च नाद्यत्वे प्रवृत्तानि किं तु केषां चिन्मते अनादीन्येवास्मन्मते तु जगत्सर्गात्प्रभृति प्रवृत्तानि कस्तेष्वद्य पर्यनुयोगावसरः, सेयमनेन पापकारिणा खादेच्छ्वमांसमित्याद्यपभाषणेन केवलमवीचिकेसरकुटुम्बिनमात्मानं कर्तुं वेदनिन्दैव मन्दमतिना कृता न दूषणमभिनवं किं चिदुत्प्रेक्षितमिति,

अथापर आह किमेष तपस्वी पराणुद्यते किमनेनापराद्धं किमनेन विरुद्धम-

भिहितं, न हि लोकतो वेदार्थे व्युत्पत्तिरवकल्पते, कोऽयं लोको नाम किं यः कश्चित्प्राकृत उत वैयाकरणः संस्कृतमतिरिति, तत्र शाकटिकाः साधुशब्दप्रयोगानभिज्ञमनसो निसर्गत एवाक्षतकण्ठा वराकाः संस्कारबाह्यैर्गाव्यादिभिरेव शब्दैर्व्यवहरन्ति तैश्च व्यवहरन्तः कथमिव वैदिकेषु शब्देषु व्युत्पत्तिमवाप्नुयुः,

यद्यपि चास्ति एषि एमि इति कश्मीरेषु गच्छेति दार्वाभिसारेषु करोमीति मद्रेषु कतिपये साधुशब्दाः पामरैरपि प्रयुज्यन्ते तथा ऽप्यतीव प्रविरलसञ्चारो ऽसौ व्यवहार इत्यनुपादेय एव वैदिकशब्दव्युत्पत्तेः ।

अथ व्याकरणस्य वेदाङ्गत्वात्ततः साध्वसाधुशब्दप्रविभागमवगच्छन्तः साधुभिर्भाषितव्यमसाधुभिर्नेति विधिनिषेधनियमितमतयः साधुभिरेव शब्दैर्व्यवहरन्तो विद्वांसस्तनीयसैव क्लेशेन वैदिकेष्वपि शब्देषु व्युत्पत्तिमासादयेयुरिति कथ्यते ।

तदपि न चतुरश्रम् , इतरेतराश्रयप्रसङ्गात् , वेदे हि सिद्धप्रामाण्ये तदङ्गभूतव्याकरणाभ्याससमासादितसाध्वसाधुशब्दप्रविवेकवृद्धव्यवहारपरिचयपुरस्सरा वैदिकशब्देषु व्युत्पत्तिः तद्व्युत्पत्तौ च सत्यां बोधकत्वादप्रतिपादकत्वलक्षणमप्रामाण्यमपोज्झतो वेदस्य प्रामाण्यमिति ।

अथ वेदाङ्गमिदमिति श्रद्धामवधूय यदृच्छाधीतेनैव व्याकरणेन पूर्वोक्तकार्यसिद्धेर्नेतरेतराश्रयमिति वर्ण्यते किमिदानीं नाटकप्रकरणादिकाव्योपयोगिसंस्कृतभाषाविशेषपरिज्ञानायैव प्राकृतलक्षणवद्व्याकरणमध्येतव्यं तथा ऽभ्युपगमे वा ऽनङ्गत्वाविशेषात्प्राकृतलक्षणप्रसिद्धशब्दव्यवहारानुसारेण वैदिकशब्दव्युत्परापाद्यते इति सुतरां दुःस्थत्वम्,

अपि च सत्यपि व्याकरणाधिगमे श्रुते ऽपि साधुभिर्भाषितव्यमित्युपदेशे सत्यं वदत वेदार्थानुष्ठानपरायणो ऽपि कृतबुद्धिरपि निषिद्धाचरणपराङ्मुखो ऽपि श्रोत्रियो ऽपि श्रद्दधानो ऽपि यदि कश्चित्केवलैः साधुभिरेव शब्दैः व्यवहरन् दृष्टः एकाकी तैश्च नानार्थक्रियासाधनभूतभूरिव्यवहारं निर्वहन् तदनुचरः परिज्ञातो न भूयः केवलसाधुशब्दप्रयोगकुशलः कल्पनीयः कुतश्चासौ लभ्यते, तस्मान्न वृद्धव्यवहाराद्वेदार्थव्युत्पत्तिरुपपद्यते ।

## व्याकरणेन वेदार्थावधारणानुपपत्तिः--

अथ व्याकरणमेव वेदार्थव्युत्पत्तौ उपायतां प्रतिपत्स्यते इति मन्यसे तदपि कथमिति चिन्त्यम् , न हि विवरणकार इव पाणिनिर्वेदं व्याचष्टे व्याचक्षाणे ऽपि वा परिमितदर्शिन्यस्मादृशे द्वेषादिदोषकलुषितमनसि तस्मिन्नस्मदादीनां वेदार्थं बुभुत्समानानां कीदृशो विस्रम्भः किं यथैष व्याचष्टे तथैव वेदार्थो ऽन्यथा वेति, यदि तु साध्वसाधुशब्दविवेकद्वारेण व्याकरणं कारणं वेदार्थव्युत्पत्तेरित्यु-

च्यते तत्रापि स्वातन्त्र्येण वेदस्येव व्याकरणस्य शास्त्रत्वानुपपत्तेरङ्गसिद्धेश्च वैदिकविध्यपेक्षितार्थसम्पर्कित्वं नू तनमस्येषितव्यम्, साधुभिर्भाषितव्यमसाधुभिर्नेत्यनयोरेव विधिनिषेधयोरिति चेद्—

नन्वेतावेव विधिनिषेधौ तावद्विचारयामः किं प्रकरणे पठितौ किमनारभ्याधीतौ क्लृप्ताधिकारौ कल्प्याधिकारौ वेति ।

## साध्वसाधुशब्दविभागानुपपत्तिः--

आस्तां चेदं वितता खल्वियं चिन्ता; साध्वसाधुशब्दस्याप्रसिद्धत्वात्किंविषयाविमौ विधिनिषेधौ स्यातामितीदमेव चिन्त्यताम्, व्रीहिभिर्यजेत न कलञ्जं भक्षयेदिति व्रीहिकलञ्जस्य स्वरूपस्य लोकतो ऽवगतौ तद्विषयविधिनिषेधबोधो न दुर्घटः इह तु व्रीहय इव कलञ्जमिव न साध्वसाधुशब्दः प्रविवेकेन लोकतो ऽवगम्यते, कृतश्रमश्रवणयुगलकरणिकासु प्रमितिषु शब्दस्वरूपमेव केवलं विषयतामुपयाति न जातु तद्गतं साधुत्वमसाधुत्वं वा, न हि शब्दत्वादिजातिवदुदात्तादिधर्म्मवच्च साध्वसाधुतायां कस्य चिदपि श्रौत्रः प्रत्ययः प्रसरति, प्रत्यक्षप्रतिषेधे च सति तत्पूर्वकसम्बन्धग्रहणसम्भवादनुमानमपि निरवकाशमेव,

शब्दस्तु द्विविधः पुरुषप्रणीतो वैदिको वा, तत्र पुरुषप्रणीतः प्रत्यक्षानुमानविषयीकृतार्थप्रतिपादनप्रवण एव भवतिइति तदपाकरणादेव पराकृतः, वैदिकस्तु सम्प्रति चिन्त्यो वर्तते स हि सिद्धे साधुत्वे तद्विधौ सिद्धे चासाधुत्वे तन्निषेधे व्याप्रियते न पुनस्तत एव तत्सिद्धेर्युज्यते तथा ऽभ्युपगमे वा दुरुत्तरमितरेतराश्रयमवतरति विधिनिषेधसिद्धौ साध्वसाधुशब्दसिद्धिः साध्वसाधुशब्दसिद्धौ च विधिनिषेधसिद्धिरिति,

किं चेदं साधुत्वं नाम यदि वाचकत्वं गाव्यादयो ऽपि सुतरां वाचका इति ते ऽपि कथं न साधवः, अर्थावगतिसाधनाद्धि साधुत्वं तच्च यथा गाव्यादिषु झटित्येव भवति न तथा गवादिष्विति प्रथमं ते एवासाधवः, एवं च यदाहुः 'असाधुरनुमानेन वाचकः कैश्चिदिष्यते' इति

तदत्यन्तमसांप्रतम्, सोपानान्तरप्रतीतिप्रसक्तेर्विपर्ययस्य च लोके प्रसिद्धत्वात्, यस्तावदनधिगतव्याकरणसरणिः पामरादिः स गाव्यादिशब्दश्रवणे सति तावत्येव जातसन्तोषः तत एवार्थमवगच्छन् गवादिशब्दानुमामनधिरुह्यैव व्यवहरति हेमगिरिमुत्तरेण यादृंशि सादृशैरनुभूतानि तरुकुसुमफलानि तथाविधास्तस्य साधुशब्दा इति सर्वात्मना ऽनवधारितसम्बन्धः स कथमनुमातुं प्रभवेत्,

ये ऽपि व्याकरणार्णवकर्णधाराः चिराभ्यस्तसूक्तयः सूरयः तेऽपि गाव्यादिभिर्व्यवहरन्तो ऽनुमानक्रममनुहरन्त एव तेभ्यो ऽर्थं प्रतिपद्यन्ते इति प्रत्यात्मवेदनीयमेतत्तस्माद्वाचकत्वमेव साधुत्वं तच्च गवादिष्विव गाव्यादिषु दृश्यते

इति ते ऽपि साधवः स्युः, असाधुत्वमप्यवाचकत्वमुच्यते तच्च वायसवाशिता-दिषु व्यवस्थितं न वर्णात्मकेषु व्यक्तवागुच्चार्यमाणेषु शब्देष्विति न ते ऽसाधवः,

अथ ब्रूयान्नार्थप्रतीतिसाधनत्वमात्रं साधुत्वं धूमादिभिरतिव्याप्तेरपि तु विशिष्टक्रियाकारणत्वं वाचकत्वं तच्च गवादिष्वेवास्ति न गाव्यादिष्विति न ते साधव इति ।

एतदपि असमीक्षिताभिधानम्, अभिधानक्रियाकारणत्वं हि वाचकत्वमिति पूर्वमेव सुनिपुणमुपपादितम् एतच्च गवादिषु गाव्यादिषु समानमिति सर्वएव साधवः ।

अथ लक्षणानुगतत्वं तद्बाह्यत्वं च साधुत्वमसाधुत्वं च वर्ण्यते तदयुक्तं पारिभाषिकत्वमप्रसङ्गात् , न चान्यत्किमपि साध्वसाधुलक्षणमतिसूक्ष्मया ऽपि दृष्ट्या शक्यमुत्प्रेक्षितुमतो वाचकावाचकावेव साध्वसाधू इति स्थितम् , तेन तयोः प्रवर्तमानौ विधिनिषेधाविमौ व्यर्थौ भवेताम् , कथम्—

साधुभिर्भाषणं तावत्प्राप्तत्वान्न विधीयते ।
अवाचकनिषेधश्चाप्राप्तेरेव न कल्पते(१) ॥

न हि सलिलं पिबेदनलं न पिबेदिति विधिनिषेधौ संभवतः, सलिलपानस्य स्वतः प्राप्तत्वादप्राप्ते च शास्त्रस्यार्थवत्त्वात्, ज्वलनपानस्य च कस्यां चिदवस्था-यामप्राप्तेः प्रतिषेधानर्थक्यात् , प्राप्तिपूर्वका हि प्रतिषेधा भवन्ति न हि ग्रीष्मे ज्वालायोगोपनीततृड्विकारः करभो ऽपि यतेत इति, तत्रैतत्स्याद् गवादेर्गा-व्यादेश्च वाचकत्वाविशेषे साध्वसाधुशब्दोच्चारणकरणकपुण्यपातकप्राप्तिपरिहा-रप्रयोजननियमविधानाय शास्त्रसाफल्यं भविष्यति, तदुक्तम् "वाचकत्वाविशेषे ऽपि नियमः पुण्यपापयोः" इति ।

एतदपि दुर्घटम् , प्रविधेयांश्च निषेध्यांश्च शब्दानुपदर्श्य नियमो विधातव्यः एभिर्भाषितव्यमेभिर्नेति तत्र यद्युभये ते शब्दाः प्रतिव्यक्ति नामग्रहणपरिगण-नपुरःसरमुपदर्श्येरंस्तदयमर्थः कल्पशतजीविनो भगवतः परमेष्ठिनो ऽपि न विषयः प्रविततवदनसहस्रसंकुलमूर्तेरनन्तस्यापि न गोचरो वाचस्पतेर्न भूमिः सरस्वत्या अतिभारः तेषामानन्त्येन दर्शयितुमशक्यत्वात्,

अथ किं चिदुपलक्षणमवलम्ब्य तेषां वर्गीकरणमुपेयते हन्त तर्हि दृश्यतां न च तत्सम्भवति,

---

(१) तन्त्रवार्तिके अ० १ पा० ३ सू० २४ । पूनामुद्रिते तन्त्रवार्तिके "वाचकैर्भाषितव्यं हि प्राप्तत्वान्न विधीयत" इत्येवंविधः स च युक्तः स्पष्टार्थोऽयं श्लोकः ।

अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः।
न चावान्तरसामान्ये केचिद्वर्गद्वये स्थिते(१)॥
न हि साधुत्वसामान्यमेकेष्वेव व्यवस्थितम्।
इतरेषु त्वसाधुत्वसामान्यमुपलभ्यते॥

तदनुपलम्भादसंभवति वर्गीकरणकारणे कथमेष नियमो विधीयेतेति नावधारयामः,

किं च नियमार्थेऽपि शास्त्रे वक्तव्यं कीदृशो किं नियमार्थः साधुभिरेव भाषितव्यमुत भाषितव्यमेव साधुभिरित्युभयथा च प्रमादः, आह हि—

यदि साधुभिरेवेति नासाधोरप्रसङ्गतः।
नियतं भाषितव्यं चेन्मौने दोषः प्रसज्यते इति(२)॥

न वाचकत्वादन्यत्साधुत्वमित्युक्तमवाचकस्य प्रयोगप्रसङ्ग एव नास्तीति। अथ प्रमादाशक्तिजशब्दप्रयोगप्रतिषेधाय नियम आश्रीयते तत्रापि,

प्रमादाशक्तिजाः शब्दा यदि तावदवाचकाः।
तेषु प्रसङ्गो नास्तीति तन्निवृत्तिश्रमेण किम्॥
अथ वाचकता तेषामप्रमादोत्थशक्तिवत्।
न तर्हि प्रतिषेधः स्यादप्रमादोत्थशक्तिवत्॥

नन्वस्ति तावदपशब्दानामशक्यनिह्नवः परिदृश्यमानो लोकप्रयोग इति तन्निवृत्तिफल एष प्रयोगनियमः कथं न भवेत्, यद्येवमक्षिनिकोचहस्तसंज्ञादेरपि प्रचुरः प्रयोगो दृश्यते इति तद्व्युदासफलोऽप्येष नियमः स्यात्,

अपि च विधिफलः सर्वत्र विधिनियमो भवति ऋतावुपेयादित्यादि निषेधफला तु परिसंख्या पञ्च पञ्चनखा भक्ष्या इति तदयमपशब्दे प्रयोगप्रतिषेधफलश्च नियमश्चेति व्याहतमभिधीयते,

परिसंख्या तर्हि भविष्यतीति चेन्न, शब्दापशब्दयोर्युगपत्प्राप्त्यभावात्, "तत्र चान्यत्र च प्राप्तौ परिसंख्या ऽभिधीयते" इति न्यायात्

---

(१) तन्त्रवार्तिके अ० १ पा० ३ सू० २४। यथा व्रीहित्वकलञ्जत्वादिजात्याश्रय तत्र विधिप्रतिषेधावुपपद्येते न तथा गवादिनां गव्यादीनां च जातिरूपेण विधिप्रतिषेधौ सम्भवतः शब्दत्वजातेरुभयत्र समत्वात् साधुत्वासाधुत्वयोश्चा व्यवस्थितत्वादित्यर्थः।

(२) तन्त्रवार्तिके अ० १ पा० ३ सू० २४। कीदृशश्चात्र नियमः कल्प्यते किं साधुभिरेव भाषितव्यमुत साधुभिर्भाषितव्यमेवेति तत्र नाद्य इत्याह यदीति यदि ह्येकार्थाः साध्वसाधवो विकल्पेन प्राप्नुयुस्तदा साधुनियमावकाशः स्यान्न चैवं न द्वितीयः इत्याह नियतमिति। तथा च भाषणाभाव एव स्यादित्यर्थः।

यदपि पुण्यपापफलत्वं शब्दापशब्दप्रयोगस्येति गीयते तदपि न पेशलं परिदृश्यमानमविवादसिद्धार्थप्रत्ययजननमपहाय परोक्षस्यादृष्टस्य पुण्यपापात्मनः कल्पनाऽनुपपत्तेः,यश्चायं स्वर्गे लोके कामधुग्भवतीति साधुशब्दस्तुत्यर्थवादो यश्च स वाग्वज्रो यजमानं हिनस्तीत्यपशब्दे निन्दार्थवादः तत्र परार्थत्वस्य विस्पष्टदृष्टत्वादर्थवादमात्रपर्यवसितौ च "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इति(१) न्यायान्न फलार्थतेति, तदेवं साधुभिर्भाषितव्यमसाधुभिर्नेति विधिनिषेधयोरनारभ्याधीतयोः श्रूयमाणयोरपि दौस्स्थित्यात्तन्मूलतया लब्धप्रमाणभावा व्याकरणस्मृतिरङ्गतामेष्यति वेदस्येति दुराशैव, प्रकरणविशेषपाठे तु तयोस्तदुपयोगादेव न सार्वत्रिकी नियमार्थतेति सर्वथा न व्याकरणे तन्मूलत्वम्,

### व्याकरणस्य निष्प्रयोजनत्वम्—

आह तर्हि निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति विधेः शिक्षाकल्पसूत्रनिरुक्तच्छन्दोज्योतिः शास्त्रवद्व्याकरणमपि वेदाङ्गत्वादध्येतव्यमित्यवगम्यते, नैतदप्यस्ति शिक्षादीनामनितरेतरसाध्यासंकीर्णविविधविध्यपेक्षितवेदोपकारनिर्वर्तकत्वेन तदङ्गता सुसङ्गता, व्याकरणस्य तु सुदूरमपि धावनप्लवने विदधतः साधुशब्दप्रयोगनियमद्वारकमेव तदङ्गत्वं सम्भाव्यते न मार्गान्तरेण स च नियमो दुरुपपाद इति दर्शितम् , अतो नाङ्गान्तराणि स्पर्धितुमर्हति व्याकरणम् ,निष्कारणषडङ्गवेदाध्ययनविधौ च निष्कारणग्रहणं यथा प्रयोजनशैथिल्यं सूचयति न तथा प्रयोजनवत्ताम् , श्रुतिलिङ्गाद्यङ्गत्वप्रमाणापेक्षया षडङ्गता वर्णयिष्यते, एतेन "तस्माद् ब्राह्मणेन न म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्द" इति "एकः शब्दः सम्यक्प्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति "आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति "तस्मादशेषा व्याकृता वागुच्यते" इत्यादिवचनान्तरमूलताऽपि व्याकरणस्मृतेः प्रत्युक्ता,शिष्टप्रयोगमूला तर्हि व्याकरणस्मृतिरस्तु वैद्यकस्मृतिरिवान्वयव्यतिरेकमूलेति चेत् के शिष्टा इति पृष्टो वक्तुमर्हसि, किमभिमतगवादिसाधुशब्दव्यवहारिणो गाव्याद्यपशब्दवादिनो द्वये वा, आद्ये पक्षे दुरुत्तरमितरेतराश्रयत्वम् , शिष्टप्रयोगमूलं व्याकरणं व्याकरणविदश्च शिष्टा इति, न ह्यशिक्षितव्याकरणास्तत्संस्कृतगवादिशब्दप्रयोगकुशला भवन्ति, मध्यमपक्षे गाव्यादिव्यवहारिणः शाकटिकाः शिष्टाः तत्प्रयोगमूलं गवादिशब्दसंस्कारकारि व्याकरणमितिव्याहतमिव लक्ष्यते, तृतीये तु पक्षे गोगाव्यादिशब्दप्रयोगसांकर्यात्किंफलं व्याकरणं भवेत् , वैद्यकस्मृतेस्तु युक्तमन्वयव्यतिरेकमूलत्वं तथा दर्शनादिति, तदनया ऽपि दिशा न प्रयोजनवत्तामुपयाति व्याकरणम् , अतश्च निष्प्रयोजनं व्याकरणं तत्सूत्रकृता स्वयं प्रयोजनस्यानुक्तत्वात् ,

(१) जैमिनिसूत्रम् अ० ४ पा० ३ सू० १ ।

न ह्यथातो धर्मजिज्ञासा प्रमाणादिज्ञानात्साधर्म्यादिज्ञानाद्वा निःश्रेयसाधिगम इतिवत्तत्र सूत्रकारः प्रयोजनं प्रत्यपीपदत्, सुज्ञानत्वान्न प्रत्यपादयदिति चेत् किमुच्यते सुज्ञानत्वं यदद्यापि निपुणमन्वेषमाणा अपि न विद्मः यत्र चाद्यापि सर्वे विवदन्ते,

किं च धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः तेषामन्यतमः किल व्याकरणस्य प्रयोजनमाशङ्क्येत, तत्र न तावद्धर्मस्तस्य प्रयोजनं स हि यागदानहोमादिस्वभावः तज्जनितसंस्कारापूर्वरूपो वा वेदादेवागम्यते चोदनैव धर्मे प्रमाणमिति तद्विदः, चोदनामूलमन्वादिस्मृतिसदाचरणेतिहासगम्यो वा कामं भवतु, व्याकरणस्य तु स्वतस्तदुपदेशसामर्थ्यासंभवादङ्गस्वभावाख्यातत्वाच्च न तत्प्रयोजनता युक्ता, प्रयोगनियमद्वारकस्तु धर्मस्तस्य प्रयोजनतया निरस्त एव, अर्थप्रयोजनता वार्तादण्डनीत्योः प्रसिद्धा न व्याकरणस्य अधीतव्याकरणा अपि दरिद्राः प्रायशो दृश्यन्ते न तस्यार्थः प्रयोजनम्, कामस्तु वात्स्यायनप्रणीतकामशास्त्रप्रयोजनतामुपगतो न व्याकरणसाध्यतां स्पृशति, मोक्षे तु द्वारमात्मादिपरिज्ञानमाचक्षते क्लेशप्रहाणं चाध्यात्मविदः षत्वणत्वपरिज्ञानं पुनरपवर्गसाधनमिति न साधीयान् वादः, तदेवं धर्मादिचतुर्वर्गादेको ऽपि न व्याकरणसाध्य इति स्थितम् ।

अथोच्यते सकलपुरुषार्थसार्थसाधनोपदेशविधेर्वेदस्य व्याकरणमवलग्नकमङ्गमतस्तत्प्रयोजनेनैव प्रयोजनवदिति न पृथक् प्रयोजनान्तरमाकाङ्क्षतीति तदपि परिहृतम्,

यो हि साधुशब्दोपदेशदिशा तस्य तदङ्गता सा व्युदस्तैव न चाङ्गस्यापि सतस्तत्सेवाद्वारमपरमस्तीति, निष्प्रयोजनमेव चेदृशं न चानुपकारकमङ्गमपि भवितुमर्हति न हि तत्प्रधानेनाङ्गीक्रियते नियोगगर्भो हि विनियोग इति न्यायविदः,

यान्यपि रक्षादीनि प्रयोजनानि व्याकरणस्य व्याख्यातृभिरभिहितानि तेषामन्यतो ऽपि सिद्धेर्न व्याकरणशरणता युक्ता, रक्षा तावदध्येतृपरम्परात एव सिद्धा मनागपि स्वरतो वर्णतो वा प्रमाद्यन्तं किं चिदधीयानमन्ये ऽध्येतारो मा विनीनशः श्रुतिमित्थमुच्चारयेदित्याचक्षाणाः शिक्षयन्तीति रक्षितो भवति वेदः, ऊहस्तु त्रिविधो मन्त्रसामसंस्कारविषयः तत्र सामविषयो यौक्तिकशास्त्रादवगम्यते याज्ञिकप्रयोगवादाद्वा मन्त्रविषयो ऽप्येवम्, प्रोक्षणादिसंस्कारविषये तु तस्मिन्व्याकरणमपि किं कुर्याद्, आगमस्त्वनन्तरमेव परीक्षितः आगमगम्यं च प्रयोजनं भवति न चागमः प्रयोजनम्, लाघवं तु किमुच्यते बाल्यात्प्रभृतिषु बहुषु वहत्स्वपि वत्सरेषु यन्नाधिगन्तुं शक्यते व्याकरणं स चेल्लघुरुपायः को ऽन्यस्ततो गुरुर्भविष्यति, संदेहो ऽपि न कश्चिद्वेदार्थे व्याकरणेन पुराणुद्यते प्रतिवाक्यमुपप्लवमाननानाविधसंदेहसहस्रविस्रंस-

नफला मीमांसा दृश्यते न व्याकरणम् , तेन रक्षोहागमलध्वसंदेहाः प्रयोजनमिति यदुच्यते तन्न सुव्याहृतम् ,

यान्यपि प्रयोजनान्तराणि भूयांसि ते ऽसुरा हेलयो हेलय इत्युदाहरणदिशा दर्शितानि तान्यपि तुच्छत्वादानुषङ्गिकत्वाच्चोपेक्षणीयानि, तदुक्तम्—

अर्थवत्त्वं न चेज्जातं मुख्यैरपि प्रयोजनैः ।
तस्यानुषङ्गिकेष्वाशा कुशकाशावलम्बिनीति(१) ॥

## व्याकरणस्य शब्दादिसंस्कारकत्वानुपपत्तिः—

अथ कथ्यते किं प्रयोजनान्तरपर्येषणया शब्दसंस्कार एव व्याकरणस्य प्रयोजनमिति तदपि व्याख्येयं कः शब्दस्य संस्कारः तेन वा को ऽर्थ इति, न हि व्रीहीणामिव प्रोक्षणमाज्यस्येवावेक्षणमग्नीनामिवाधानं शब्दस्य कश्चन व्याकरणकारितः संस्कारः संभवति, नैयायिकादिपक्षे च क्षणिका वर्णास्तेषामुच्चारितनष्टानां कः संस्कारः शरादेरिव न वेगो नात्मन इव भावना न शाखादेरिव स्थितिस्थापक इति, वर्णानां नित्यत्वपक्षे ऽपि क्षणिकाभिव्यक्तित्वमपरिहार्यमतस्तेष्वपि कः संस्कारः, संस्कारश्च वर्णस्य वा पदस्य वाक्यस्य वेति विकल्प्यमानो न कस्य चिद्व्यवस्थापयितुं शक्यः, वैयाकरणानां तु निरवयववाक्यविदां पदवर्णयोः संस्कारः सुतरामनालम्बनः, अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिकमन्यान्येव पदानि संस्करिष्यन्ते इति चेन्न, असतां संस्कारस्यानुपपत्तेः, आह च—

वाक्येभ्य एव परिकल्पनया विभज्य
संस्कर्तुमिच्छति पदानि महामतिर्यः ।
उच्चित्य सौरभविभूषितदिंशि कस्मा-
दाकाशरूढकुसुमानि न संस्करोतीति ॥

न च शब्दसंस्कारकर्तव्यतोपदेशे कश्चिदनारभ्याधीतो वा प्रकरणपठितो वा विधिरुपलभ्यते यमनुरुध्यमानाः शब्दस्योपयुक्तस्य चात्वाले कृष्णविषाणां प्रास्यतीतिवदुपयोक्ष्यमाणस्य वा व्रीहीन्प्रोक्षतीतिवत्कं च न संस्कारमनुतिष्ठेम, स्वाध्यायो ऽध्येतव्य इति विधिरामुखीकरणेन माणवकस्य वा ग्रन्थस्य वा विधिः संस्कारमुपदिशतीति महती चर्चैषा तिष्ठतु, सर्वथा नायं व्याकरणनिर्वर्त्यः प्रत्ययागमवर्णलोपादेशादिद्वारकशब्दसंस्कारोपदेशशङ्कामपि च नयतीत्यास्तामेतत् , न च शब्दप्रयोगोपायस्थानकरणादेः कोष्ठ्यस्य मातरिश्वनो वा श्रोत्रेन्द्रियस्य वा तदुपलब्धिकरणस्य प्रयोक्तुरात्मनो वा मनसो वा बुद्धेर्वा कश्चिद्व्याकरणेन संस्कारक्लेशः शक्यक्रिय इति तत्कारके ऽपि संस्कारे ऽनुपाय

(१) तन्त्रवार्तिके अ० १ पा० ३ सू० १८ ।

एवं व्याकरणम्, न च स्थूलपृषतीत्यादिकतिपयशब्दव्युत्पादनमेव व्याकरणप्रयोजनतया वक्तव्यं तस्यापि कल्पसूत्राद्युपायान्तरलभ्यत्वात्,

यश्चाह "तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते" तस्य सोपहासमुत्तरं वार्त्तिकार एव दर्शितवान्(१)"तत्त्वावबोधः शब्दानां नास्ति श्रोत्रेन्द्रियादृते इति"

अपि च व्याकरणेन कृते ऽपि शब्दसंस्कारे तदुपदिष्टसंस्कारबहिष्कृतशब्दप्रयोगान् विदधतस्तत्र तत्र शिष्टाः पूर्वे ऽपि दृश्यन्ते, सूत्रकारस्तावज्जनिकर्तुःप्रकृतिः तत्प्रयोजको हेतुश्च तृजकाभ्यां कर्तरीति प्रतिषिद्धं षष्ठीसमासं जनिकर्तुरिति धातुनिर्देशैकविषयं जनिशब्दमर्थनिर्देशे ऽपि प्रयुक्तवान्वार्त्तिककारो ऽपि दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमिति तथैव प्रयुक्तवानान्यभाव्यं तु कालशब्दव्यवायादिति च तेन समाससंज्ञया गुणवचनसंज्ञाबाधितत्वादगुणवचनत्वाद् ब्राह्मणादिगणापठितत्वाद् गुणवचनब्राह्मणादिभ्य इत्यप्राप्तमेव ष्यञं कृतवान्, भाष्यकारोऽपि अविरविकन्यायेनेति द्वन्द्वगर्भे तत्पुरुषे प्रयुयुक्षिते सुपो धातुप्रातिपादकयोरिति प्राप्तमपि लोपं न कृतवानन्यथा कृत्वा चोद्यमन्यथा कृत्वा परिहार इति अत्र चान्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेदिति प्राप्तमपि णमुलमुपेक्ष्य क्त्वाप्रत्ययं प्रायुङ्क्त, तदिदं त्रिमुनि व्याकरणस्य त्रयो ऽपि च मुनयः स्खलन्तीति कमुपालभेमहि, मन्वादिग्रन्थेष्वपि कियन्तो ऽपशब्दाः गण्यन्ते ज्ञातारमन्तिमेत्युक्तेति मनुना अक्षिणी आज्येत्याश्वलायनेन मूर्धन्याभिजिघ्राणमिति गृह्यकारेण तदनन्तरं तुर्भ्यं च राघवस्येति वाल्मीकिना जन्मे जन्मे यदभ्यस्तमिति द्वैपायनेन प्रयुक्तम्, आह च "अन्तो नास्त्यपशब्दानामितिहासपुराणयोरिति(२)।

## साधुशब्दनिरूपणानुपपत्तिः—

अथ वा किमनेन पुराणपुरुषपरिवादेन सर्वथा ऽयं वस्तुसंक्षेपः क्षामो ऽपि कश्चिदुपयोगो न लोके वेदे वा व्याकरणस्य विद्यते इति, किं चान्यद् अथ शब्दानुशासनमित्युपक्रम्य केषां शब्दानामिति पृष्ट्वा लौकिकानां वैदिकानां चेति प्रतिज्ञाय न लौकिकाः सर्वे व्याकर्तुं पारिताः शब्दाः नापि वैदिकाः, तथा हि तेषां व्यक्रिया प्रतिपदं वा विधीयते लक्षणतो वा, प्रतिपदं तावदनुशासनमघटमानं स्याच्छब्दानां तथा चाहुः "बृहस्पतिरिन्द्राय दिव्यवर्षसहस्रं प्रतिपदोक्तानां शब्दानां पारायणं प्रोवाच न चान्तं जगाम"इति, नापि लक्षणतस्तत्संभवो न हि सकलसाधुशब्दवर्गानुगतमपशब्देभ्यश्च व्यावृत्तं गोत्वादिवदिह किंचिल्लक्षणमस्तीत्युक्तम्, तत्रैतत्स्यान्न जातिरूपमिह लक्षणमभिधित्सितमपि तु कथमनुशास-

(१) तन्त्रवार्तिके अ० १ पा० ३ सू० १८।

(२) तन्त्रवार्त्तिके अ० १ पा० ३ सू० १८।

नमिति प्रश्नपूर्वकमुक्तं प्रकृत्यादिविभागकल्पनया सामान्यविशेषवता लक्षणेनेति च, तथा हि कर्मण्यणिति सामान्यलक्षणं कर्मण्युपपदे धातुमात्रादण्प्रत्ययो भवतीति तेनानेन सामान्यविशेषवता लक्षणेन कुम्भकारो नगरकार इत्यादयो गोदः कम्बलद इत्यादयश्च भूयांसः शब्दा अक्लेशेनैव व्याकरिष्यन्ते इत्युच्यते प्रकृत्यादिविभागकल्पनयेत्यत्र यद्वक्तव्यं तत्प्रागेव सविस्तरमभिहितं सामान्यविशेषवता लक्षणेनेति तु संप्रति निरूप्यते, तदपि व्यवस्थितं लक्षणं न दृश्यते।

तथा हि धातोः पुरः प्रत्यया भवन्तीति लक्षणं कुर्वता वक्तव्यं कः पुनरयं धातुर्नामेति, ननु भूवादयो धातव इत्युक्तमेव तत्स्वरूपं के चन शब्दाः कयाचित्परिपाट्या पठितास्ते धातुसंज्ञया लक्ष्यन्ते तेभ्यः परे तिङः कृतश्च प्रत्यया भवन्तीति, सत्यमुक्तमेतत् किं त्वेवं पाठे कृते ऽपि न धातुस्वरूपनिर्णय उपवर्णितो भवति, तथा च गण्डतीत्यपि प्राप्नोति धातोस्तिङ्प्रत्ययविधानात्, घटचेष्टायामिति धातुरस्ति च घट इति प्रातिपदिकम् अम रोगे इति धातुरनुबन्धत्यागादमिति भवति अस्ति च द्वितीयाया विभक्तेरेकवचनमिति, भूशब्दो धातुः अस्ति भूप्रातिपदिकम् यती प्रयत्ने इति लुप्तानुबन्धो यदिति धातुः अस्ति च यदिति सर्वनामपाठप्रसिद्धरूपमत्राविशेषादधातोरपि घटभूयच्छब्दरूपात्परे तिङ्प्रत्यया भवेयुः, क्रियावचनो धातुरिति चेद् भवति तिष्ठतीत्यादीनामसाधुत्वं प्राप्नोति गमेश्चानर्थकः पाठः, उभयं तर्हि धातुलक्षणं पाठः क्रियावचनता चेति भवितुमर्हति तदपि हि व्यस्तं वा लक्षणं समस्तं वा व्यस्तपक्षे भवत्यादौ क्रियावचनत्वस्य द्वितीयस्य लक्षणस्य चाभावादधातुत्वमेव स्यादिति एवं धातोः प्रकृतेरनिर्णीतत्वात्कुतः परे तिङश्च कृतश्च प्रत्यया उत्पद्येरन्, समस्तपक्षे इत्यादिपतितम्(१) किं च के चन तिङ्प्रत्ययाः कालाद्युपाधयो न तद्वचनाः अनुक्तेषु च कालादिषु तत्पूर्वकं वर्तमाने लड् भविष्यति लिङ्भूते लङिति नियमरूपमशक्यम्, उच्यतां तर्हि तिङ्भिः कालादय इति चेन्न भाष्यविरोधादुक्तं हि भगवता भाष्यकारेण भूते धात्वर्थ इति न च धात्वर्थेनैव धात्वर्थो व्यवस्थापयितुं शक्यते लिङादयश्च सुतरामनधिगम्यमानविषयास्ते हि विध्यादावर्थे विधीयन्ते स च विधिरूपो ऽर्थः स्वरूपतश्चोपाधितश्च न शक्यो निर्णेतुमिति।

तथा कारकानुशासनमपि दुःस्थं ध्रुवमपाये ऽपादानमित्युच्यते तत्र ध्रुवस्य वृक्षादेवृक्षात्पतितो देवदत्त इति पतनक्रियायामवलग्नं कृशमपि न कारकत्वमुत्पश्यामः, क्रियायोगा हि कारकं सा च वृक्षे नोपलभ्यते इति सार्थाद्धी-

(१) अत्र ग्रन्थस्त्रुटित इति प्रतीयते।

नो रथात्पतित इति सार्थरथयोः क्रियोपलभ्यते न वृक्षवन्निश्चलत्वमिति चेत् सत्यं स्वरसप्रवृत्ता तयोरस्ति क्रिया हाने याने च पादपनिर्विशेषावेव सार्थरथौ॰ न च यदेकस्यां क्रियायां कारकं तत्सर्वासु क्रियासु कारकं भवत्यतिप्रसङ्गात् ।

कर्मणा यमभिप्रैति तत् संप्रदानमित्यत्र कर्मशब्दः क्रियावचनो वा स्यादी॰प्सिततमकारकवाची वा आद्ये पक्षे क्रियायाः सर्वकारकाण्यभिप्रेयन्ते इति संप्रदानतां प्रतिपद्येरन् , न चोपाध्यायस्य कं चिदभिप्रेयमाणस्य व्यापारमुत्पश्याम इत्यसावकारकमेव तत्र स्यात् , प्रतिग्रहस्तु क्रियान्तरमेव तत्र चोक्तम् क्रियया चाभिप्रेयमाणं फलं भवति, न द्वितीयः कारकसंबन्धित्वेन कारकस्य कारकत्वानुपपत्तेः क्रियासंबन्धितया हि कारकं कारकं भवति न कारकसंब॰न्धितया करोतीति कारकमिति व्युत्पत्तेः ।

साधकतमं करणमिति तमबर्थानवधारणादनुपपन्नमनेककारकसंदर्भसं॰निधाने कार्यमात्मानं लभते तेषामन्यतमव्यपगमे ऽपि न लभते इति ततः कि॰मिव कारकमतिशयशबलितवपुरिति कं तमबर्थं मङ्गलकलशेनाभिषिञ्चामः, प्राचुर्येण प्रधानं कार्यं प्रति व्यापारयोगित्वमित्यादि सर्वसाधारणं न काष्ठै॰कनिष्ठमिति काष्ठैः पचतीति कथं तेषामेव करणत्वम् ,

आधारो ऽधिकरणमिति यदुच्यते तत्र वक्तव्यं कस्याधार इति क्रियायाः कारकस्य वा यदि क्रियाधारत्वमधिकरणलक्षणमशेषकारकाणामधिकरणसंज्ञा प्रसज्येत क्रियायोगाविशेषादथ यत्र स्थाल्यादौ कर्मादि श्रितं तण्डुलादि तद॰धिकरणं समे देशे पचतीति न स्यादप्सु पचतीति स्यात् कटे स्थितो भुङ्क्ते इति चापभ्रंशो भवेत् , कर्तुर्हि तदधिकरणं न कर्मणः, कर्तृकर्मणोः क्रियाश्रययोर्धारणाधिकरणत्वे अधिकरणमिति चेदुभयाधारत्वं न कटस्य न स्थाल्या इति द्वयोरप्यधिकरणता हीयते एकैककारकाधारत्वे तु तल्लक्षणे परस्परापेक्षया पुन॰स्तत्स्वरूपसांकार्यं भवेत् , यदि तु सकलकारकाधारत्वमधिकरणलक्षणं स्था॰ल्यामोदनं पचतीति न स्यात्सकलकारकानधिकरणत्वात्स्थाल्या अधिकरणस्य चाकारकत्वप्रसक्तिः न ह्यधिकरणमधिकरणाश्रितं भवति मध्याह्ने स्नाति रात्रा॰वश्नाति पूर्वस्यां दिशि विहरतीति कालादीनामव्यापारत्वादकारकत्वमेव भवेत् तथा च सत्येते प्रयोगा असाधवः स्युः ।

कर्तुरीप्सिततमं कर्मेति साधकतमवदिहापि न वाचको ऽयमतिशयानः सर्वकारकाणां क्रियार्थितया कर्तुरीप्सिततमत्वादर्थं यदर्थं क्रिया तदर्थं कर्तुरीप्सितं तदर्थं त्वन्यदिति तत्र संप्रत्यय इत्युच्यते तर्हि तस्य कारकत्वमेव न युक्तम् , क्रियासम्पादकं हि कारकमुच्यते क्रियासम्पाद्यं तु फलं भवति न का॰रकं कारकं च क्रियया चाप्तुमिष्टतममिति च विप्रतिषिद्धम् ।

अथाभिधीयते क्रियोपयोगयोग्यतानिबन्धनो ऽयं कारकव्यपदेशः स च वि॰

चित्रक्रियोपयोगः अन्यथा करणस्यान्यथाधिकरणस्यान्यथा संप्रदानादेः, इह च क्रियासाध्यत्वे ऽप्योदनस्य तत्क्रिययोपयोगित्वमनिवार्यम् तमनुद्दिश्य क्रियायाः प्रवृत्त्यभावादितीत्थमनेन रूपेण तस्य क्रियासाधनत्वात्कारकत्वमिति, नैतदेवं साध्यैकस्वभावस्य सुखादेरपि कारकत्वप्रसङ्गात् , कारकत्वव्यपदेशो हि न पारिभाषिकः किं तु क्रियासम्बन्धनिबन्धनः क्रियासम्बन्धश्चेदृशो यदुपेयक्रियायाः उपायाः कारकमिति विपर्यये तु कीदृशः कारकभावः, अस्तु तर्हि तण्डुलान्पचतीति मा च भूदोदनं पचतीति ओदनस्य फलदशानुप्रवेशादिति, उक्तमत्र तण्डुलेष्वपि तमवर्थो न वाचकस्तेषामपि फलसाधनोपयोगाविशेषादिति, स्वतन्त्रः कर्तेति किमिदं स्वातन्त्र्यं यदिच्छातः प्रवर्तनमिति चेत्कुलं पचतीति चैतन्यशून्यतया कुलस्येच्छानुपलम्भादकर्तृत्वं भवेद्,

अथ यद्व्यापाराधीनः कारकान्तरव्यापारः स कर्तेत्युच्यते सर्वकारक निर्वर्त्यत्वात्क्रियायाः न विद्मः किं व्यापाराधीनः कस्य व्यापार इति समग्रकारकग्रामस्य परस्परापेक्षत्वात् ।

अथ यः कारकान्तराणि प्रयुङ्क्ते तैश्च न प्रयुज्यते स कर्तेति तर्हि पुनरचेतनानामकर्तृत्वप्रसङ्गदोषस्तदवस्थ एव, अथ धातुना ऽभिधीयमानव्यापारः कर्तेति तत्रापि न विद्मः कस्य धातुना ऽभिहितो व्यापारः सकलकारकवाचित्वात्पचेः, अन्यथा हि सकलव्यापारानभिधायिनि धातौ तदर्थसाधने सर्वेषां सङ्गतिरेव न स्यात् तथा च सति सर्वकारकाणि कर्तृत्वमेव स्पृशेयुः ।

अथ मतमगुणो धातुना ऽभिधीयमानव्यापारः कर्तेति तदप्ययुक्तमसकृदुच्चरितो धातुरनेकस्मिन्कारकचक्रे कस्य चिद्गुणत्वेन कस्य चित्प्राधान्येन व्यापारः कथमिव कथयितुं शक्यत इति, तत्प्रयोजको हेतुश्चेति प्रयोज्येनैव व्याख्यातम् , एवं कारके शासनस्याव्यवस्थानात्तदधीनप्रसक्तविभक्तिविधानमपि प्रत्युक्तम्, अपादाने पञ्चमी सप्तम्यधिकरणे इत्यादिविषयनिरूपणपूर्वकत्वात्त द्विधानस्येति ।

किं च यदपि तद्धितसमासानुशासनं तत्सामर्थ्यनियमपूर्वकं समर्थानां प्रथमाद्वा समर्थः पदविधिरिति परिभाषणात्तदत्रापि वक्तव्यम्, सामर्थ्यं नाम किमुच्यते इति, एकार्थान्वयित्वमिति चेत्कुतो ऽवगम्यते, तद्धितसमासप्रयोगप्रतिपत्तिभ्यामेवेति चेत्तर्हि तद्धितसमासप्रयोगप्रतिपत्त्योः सामर्थ्यावगमः सामर्थ्ये सति तयोः प्रवृत्तिरितीतरेतराश्रयत्वम् ,

अपि च सामर्थ्यमन्तरेणापि क्वचित्प्रयुञ्जते समासं अश्राद्धभोजी दधिघटो गोरथ इति, तथा सत्यपि सामर्थ्यतद्धितप्रयोगं परिदृश्यन्ते(१) अङ्गुल्या खनति

(१) न कुर्वते इत्यर्थकं किं चिल्लेखकप्रमादजमिदम् ।

वृक्षमूलादागते आङ्गुलिको वार्क्षमूलिक इति न त्वकारो भवन्तीति एतदप्यसमञ्जसमनुशासनम् ,

तथा अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति संज्ञालक्षणमतिव्यापकं वाक्यस्यापि प्रातिपदिकसंज्ञाप्रसङ्गात् ।

अथ कृत्तद्धितसमासाश्चेतिसूत्रान्तरे समासग्रहणं विशेषविधित्वेन वर्ण्यमानं तदितरवाक्यप्रतिषेधाय भवतीति ततो वाक्यनिवृत्तिः सेत्स्यति, यद्येवमधातुरप्रत्यय इति न वक्तव्यं धातुप्रत्ययोरपि तत एव प्रतिषेधसिद्धेः ।

अथैकार्थतया समानशीलस्य वाक्यस्यैव प्रतिषेधे प्रभवति समासग्रहणं न धातुप्रत्यययोरपि तदपि दुराशामात्रम् , वाक्यसमासयोरपि वावचनानर्थक्यकथनेन सार्थशक्त्यव्यवस्थापनादिति,

तदेवं प्रातिपदिकसंज्ञाविषयस्यानिश्चयात्तत्प्रकृतिकानां ङ्याप्प्रातिपदिकादित्यधिकृत्य स्वादिप्रत्ययानां विधानमनुपपन्नमित्यलं प्रसङ्गेन, सर्वथा दुर्व्यवस्थितं शब्दानुशासनम् ,

यश्च व्याख्यातॄणामुक्तानुक्तदुरुक्तनिरीक्षणप्रयत्नो यश्च वाचकमात्रावर्णाधिक्यमिषपुरःसरलक्षणपरिचोदनप्रकारो यच्चेदं व्याख्यातृवचनमिह न भवत्यनभिधानादिति यच्च व्याप्तिसिद्धौ सरलमुपायमपश्यतामाकृतिगुणवर्णनं यच्च पदे बहुलवचनं तत्सुतरामपरिशुद्धिमनुशासनस्य दर्शयतीति ।

अन्ये तु शोभेति चीर्णमिति न याति प्रतिभेत्तुमिति मातुरनुहरतीति फलिनबर्हिणौ घासीति कांदिशीक इति भ्राजिष्णुरिति गणेय इति वरेण्ड इति लक्ष्यसंग्रहबहिष्कृतस्मृतिसन्देहविपर्ययप्रतिपादकत्वलक्षणस्खलितं विप्लुतं पाणिनितन्त्रं मन्यमानाः तत्र महान्तमाक्षेपमतानिषुः स तु स्थूलोदरप्राय इतीह ग्रन्थगौरवभयान्न लिख्यते ।

ननु यदि लक्षणस्य प्रणेता पाणिनिः न सम्यग्दर्शयत्यत्र विवरणकाराश्च नातिनिपुणदृशः काममन्यः सूचीकृतबुद्धिर्भविष्यति वृत्तिकाराश्च प्रौढतरदृष्टयो भविष्यन्ति तेभ्यः शब्दलक्षणमविप्लुतमवभोत्स्यामह इति,

नैतदस्ति तेषामप्यभियुक्ततराः के चिदुत्प्रेक्षन्ते एव दोषं तेषामपरे तेषामप्यपरे, तदेवमनवस्थाप्रसङ्गान्नास्ति निर्मलमनुशासनमिति क्लेशायैव व्याकरणाध्ययनमहाव्रतग्रहणम् , तथा च बृहस्पतिः प्रतिपदमशक्यत्वाल्लक्षणस्यापि अव्यवस्थानात्तत्रापि स्खलितदर्शनादनवस्थाप्रसङ्गाच्च मरणान्तो व्याधिर्व्याकरणमित्यौशनसा इति। इहाप्युक्तम्—

दुष्टग्रहगृहीतो वा भीतो वा राजदण्डतः ।
पितृभ्याममभिशप्तो वा कुर्याद्व्याकरणे श्रमम् ॥

अन्यैरप्युक्तम्—

वृत्तिसूत्रं तिला माषाः कपत्री कोद्रवौदनः ।
अजडाय प्रदातव्यं जडीकरणमुत्तममिति ॥
एवं व्याकरणावगाहनकृतोद्योगोऽपि विद्वज्जनो
व्युत्पत्तिं लभते न वैदिकपदग्रामे मनुष्योक्तिवत् ।
अन्यत् किं चन तत्प्रतीतिशरणं नास्तीति च व्याकृतं
तस्मादप्रतिपत्तिमन्थरमुखो वेदः प्रमाणं कथम् ॥

## साधुशब्दानां वाचकत्वव्यवस्थापनम्—

अत्राभिधीयते, यत्तावदिदमवादि गवादिशब्दवदनादिप्रबन्धसिद्धमेव गाव्यादेरपि वाचकत्वमिति तत्रामुं पक्षं संशयदशामेव तावदारोपयामः, पूर्वपक्षिकोक्तयुक्तिसमुत्थापितस्थिरतरविपर्ययज्ञानसमनन्तरं सहसैव सम्यग्ज्ञानोत्पादनातिभराद्द्वारैकदेशावतरणन्यायेन संशयस्तावदुपपद्यते, ततः तर्कोत्परिशोधिते ऽध्वनि सुगमे सुखं विहरिष्यति सम्यङ्निर्णयोपायो न्याय इति तदुच्यते, यदि गाव्यादीनां गवादीनामिव शब्दानां प्रयोगे गतिरन्या न काचित्सम्भावनाभूमिमनपेति(?) तत्सत्यमादिसत्तायाः कल्पने कोऽवसरो यथा हि स्वाध्यायाध्ययनसमये यादृशमेव शब्दं यथोचितमात्रानुस्वारस्वरादिरूपसमुत्थितमुच्चारयत्याचार्यः तादृशमेव शिष्यः प्रत्युच्चारयति प्रमाद्यन्तं वा गुरुरेवैनमनुशास्ति आतदुच्चारणसामर्थ्योपजनं तावन्न मुञ्चति शिक्षयति सोऽपि शिष्टो यदा गुरुर्भविष्यति तदा स्वशिष्यं तथैव शिक्षयिष्यति आचार्यो यदा शैशवे शिष्य आसीत्तदान्येन गुरुणा शिक्षितोऽभूत् सोपि तदन्येन सोपि तदन्येनेत्येवमनादित्वं जैमिनीयपक्षे आसर्गात्प्रभृति प्रवृत्तत्वं नैयायिकपक्षे वेदाध्ययनस्य व्यवस्थितम् ,

इत्थमेव यदि गाव्यादीनां गवादिवत् प्रमादतः सुपरिरक्षितः प्रयोगस्तथैव तेभ्योऽर्थप्रतिपत्तिपूर्वको व्यवहारस्तदाऽनादिगवादिशब्दसमानविषया एव गाव्यादय इति तदा कस्य किं ब्रूमः, अस्ति त्वत्रान्यः प्रकारो न ह्येकान्तेन यादृगेव वक्त्रा शब्दः प्रयुज्यते तादृगेव श्रोत्रा प्रत्युच्चार्यते किं तु प्रमादालस्यादिविविधापराधविगुणकरणोच्चार्यमाणो ऽपभ्रंशतां स्पृशन् दृश्यते इत्यस्ति संशयावसरः, अपभ्रंशतयाऽपि ये स्थिताः स्थास्यन्त्यपि वा शाकटिकभाषाशब्दास्तानपि गोपालबालाबलासु प्रयुञ्जाना जरत्पामराः प्रयत्नेनापि न यथोच्चारितानेव तान्पठितुं शक्नुवन्तीति अशक्तिजशब्दबाहुल्यदर्शनात्संशयाना कुशाग्रेयबुद्धेरपि बुद्धिर्भवितुमर्हति किमेते गवादिशब्दा एवानादिसिद्धवाचकाः शक्तिभाजस्तेभ्योऽन्ये विगुणकरणप्रयोज्याः प्रमादप्रभवाः अपभ्रंशाः किं वा सर्वे एव तुल्यकक्षा इति, सर्वेषां तुल्यकक्षत्वे य एते अद्यत्वे ऽपि प्रमादजाः प्रमदादारका-

द्विवचनेष्वपभ्रष्टा अभ्यधिकतरामपभ्रंशदशां स्पृशन्तस्तेऽपि तामेव गवादिशब्दमधुरमधिरोहेयुः न चैवमस्त्विति शक्यमभ्यनुज्ञातुमिदानीमेव भ्रश्यतां तेषां प्रत्यक्षत उपलब्धेरिति, तस्मादवश्यं तावदद्यत्वे परिदृश्यमानापभ्रंशदशा दुर्बलबालाबलादिशब्दानां न गवादिशब्दान्स्पर्धितुमर्हति, ते चेन्न स्पर्धन्ते तदधुना गाव्यादयोऽपि प्रकारान्तरोपपत्तिसम्भावनाङ्कुरप्रभवाः सन्तो न गवादिशब्दसमानविधित्वमध्यवसातुं शक्नुयुरिति तर्कयामः, तदुक्तं भगवता जैमिनिना, "शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" इति(१) भाष्यकारेणापि व्याख्यातं "महता प्रयत्नेन शब्दमुच्चरन्ति वायुः नाभेरुत्थितः उरसि विस्तीर्णः कण्ठे विवर्त्तितो मूर्धानमाहत्य परावृत्तो वक्त्रे चरन्विविधान् शब्दानभिव्यनक्ति तत्रापराध्येताऽप्युच्चारयिता यथा शुष्के पतिष्यामीति कर्दमे पतति सकृदुपस्प्रक्ष्यामीति द्विरुपस्पृशति" इत्यादिना।

## अपभ्रंशानामनादित्वाभावप्रतिपादनम्—

आह तर्हि विशेषे प्रमाणं वक्तव्यं यदेते गाव्यादयः प्रमादाद्यपराधनिबन्धना एव न गवादिशब्दसमानविधय इत्युच्यते, भवतु नः समीहितं संशयदशां तावदानीतो ऽयमनादिगाव्यादिशब्दवाची महापुरुषः सम्बोध्यते भो महात्मन्नित्थं पूर्वोक्तनीत्या संशये सति चिन्त्यतां किमेते गाव्यादयो गवादिसमानयोगक्षेमा एव हस्तः करः पाणिरितिवद्भवन्तु किं वापराधसम्भावनया मार्गान्तरमालम्बन्तामिति, तत्रैकस्मिन्वाच्ये बहवस्तुल्यकक्ष्या वाचका इति नैष न्यायः, कथं प्रत्यर्थं शब्दनिवेशात्तेनैव सम्बन्धकरणसौकर्यादन्यसम्बन्धे यत्नगौरवप्रसङ्गात्प्रत्यर्थं शब्दनिवेशे हि सति परस्परमव्यभिचारिणौ शब्दार्थौ भवतः स शब्दस्तस्य वाचकः सोऽर्थस्तस्य वाच्य इति, अनेकशब्दवाच्यस्त्वेकोऽर्थस्तं वाचकं शब्दं न जह्यादपि तमन्तरेण शब्दाभिधेयतामपि यतः प्रतिपद्यते इति व्यभिचारः, अनेकार्थवाचिनि चैकस्मिन्वाचके इष्यमाणे शब्दोऽर्थं व्यभिचरेत्तस्यैवार्थान्तरस्यापि ततः प्रतिपत्तेरितीत्थमनियमो ऽयमपप्लवेत, हस्तः करः पाणिरित्यादावक्षाः पादा माषा इत्यादौ तु गतिरन्या नोपलभ्यते तेनानेकशब्दत्वमनेकार्थत्वं च दैवबलवत्तया ऽङ्गीकृतं प्रथमः पुनरेष ऋजुः पन्था यदेकस्य वाचकस्यैको वाच्योऽर्थ इति च, इह गत्यन्तरमतिस्पष्टमस्ति प्रमादप्रभवत्वं नाम तस्मिन्सति किमिति प्रथमप्राप्तो ऽयं प्रतिवाच्यं वाचकनियमक्रमो लङ्घ्यते, तेन प्रमादापराधनिबन्धना गाव्यादयो न गवादिसमानमहिमान इत्युक्तम्,

किं च वाचकशक्तिः नाम सूक्ष्मा परमर्थापत्तिमात्रशरणावगमा न तन्मन्दतायामन्यतः कुतश्चिदवगन्तुं पार्यते, सा चेयमन्यथा ऽप्युपपद्यमाना गवादिभ्यो ऽर्थ-

---

(१) जैमिनिसूत्रम्। अ० १ पा० ३ सू० २६ तत्रैव शाबरभाष्ये।

प्रत्ययादिव्यवहारे मन्दीभवति तेषु शक्तिकल्पनायामर्थापत्तिः एवं च गवादय एव वाचकशक्तेराश्रयो न गाव्यादयः, कथं तर्हि बहूनामधिगतव्याकरणतन्त्राणामेभिरच्छिन्नो व्यवहारः, यथैव म्लेच्छानां म्लेच्छभाषाभिरक्षिनिकोचहस्तसंज्ञादिव्यवहारिणां वा स्वैरुपायैः, किमक्षिनिकोचादीनामन्त्यजनपदवाचां नास्ति शक्तिः, ओमित्युच्यते, कथं तर्हि तेभ्यो ऽर्थप्रतिपत्तिर्नैसर्गिकी तेषां शक्तिर्नास्तीति ब्रूमः, तत्स्वरूपस्याव्यवस्थितत्वेन निसर्गसिद्धिकशक्तिपात्रताऽनुपपत्तेः प्रतिपत्तिस्तु स्वकृतसमयमात्रनिबन्धना तेभ्यः, नैयायिकानां क वा न समयः प्रतिपत्त्युपायः सत्यं स त्वीश्वरप्रणीतः प्रथमसर्गात्प्रभृति प्रवृत्तो मीमांसकाभ्युपगतनैसर्गिकशक्तिसोदर्य एव न मादृशरचितपरिमितविषयसमयसमानः स च गवादिशब्देष्वेव प्राप्तप्रतिष्ठो न गाव्यादिषु, ते तु वर्णसारूप्यच्छायया गवादिशब्दस्मृतिमादधानास्तदर्थप्रतिपत्तिहेतुतामुपगच्छन्तीति ।

नन्वनवधृतस्वरूपाणां कथं गवादिशब्दानां स्मरणं तदवधारणे वा को ऽभ्युपायः, अभियोगविशेष इति ब्रूमः, कः पुनरभियोगः को वा तस्य विशेषः व्याकरणाध्ययनमभियोगः तदभ्यासानुसारेण लक्ष्यनिरीक्षणं तस्य विशेषो व्याकरणेन च प्रतिपदमपर्यवसितार्यजनप्रयोज्यसाधुशब्दसार्थसंग्रहस्तद्विसदृशबर्बरपुरन्ध्रिप्रायप्राकृतगोचरापशब्दपरिहारप्रकारव्युत्पादनमुपगम्यते यदानन्त्यात्किल कल्पशतैरपि नावकल्पते किं तु व्यपनीतातिव्याप्त्यादिदोषोपनिपातः त्रिमुनिपरीक्षितलक्षणद्वारकस्तदुपदेशः श्रूयते, तेन च वेदेनेव धर्माऽधर्मयोर्ब्रह्मावतारेणेव सत्यानृतयोः नीतिशास्त्रेणेव हिताहितयोर्मन्वादिवचनेनेव भक्ष्याभक्ष्ययोर्दिव्येनेव शुद्ध्यशुद्ध्योः सिध्यत्येव साध्वसाधुशब्दयोरधिगम इति सर्वलोकसाक्षिकमेतत्कथमपनीयते, दृश्यते ह्यद्यत्वे ऽपि व्याकरणकोविदानामितरेषां च कृषीवलादीनामतिमहान्वचसि विशेष इत्येवं प्रमादादिमूलगाव्याद्यपशब्दप्रयोगसंभवादनेकशब्दगतवाचकशक्तिकल्पनागौरवप्रसङ्गादभियोगविशेषसाध्यमानसाध्वसाधुशब्दाधिगमसौकर्याच्च गवादीनामेव वाचकत्वं न गाव्यादीनामिति स्थिते पूर्वपक्षोपन्यस्तः समस्त एव परीवादः परिहृतो वेदितव्यः, तथा हि यत्तावदभ्यधायि साधुत्वनिश्चये प्रमाणं नास्तीति—

साधुत्वं नेन्द्रियग्राह्यं लिङ्गमस्य न विद्यते ।
शास्त्रस्य विषयो नैष प्रयोगो नास्त्यसंकर इति ॥

## साधुत्वस्य शास्त्रसहकृतप्रत्यक्षग्राह्यतानिरूपणम्—

तत्रायं प्रतिश्लोकः ।

साधुत्वमिन्द्रियग्राह्यं लिङ्गमप्यस्य विद्यते ।
शास्त्रस्य विषयो ऽप्येवं प्रयोगो ऽप्यस्त्यसंकर इति ॥

श्रौत्रे हि प्रत्यये ग्रस्तनिरस्तरोमशाम्बूकृतादिदोषरहितोदात्तादिधर्मसंबन्ध-

प्रसिद्धानुपूर्वीकवर्णगुणात्मकपदप्रतिभासस्तावदस्ति स च न संदिग्धो न बाधकविधूतधैर्यो नाशुद्धकरणजन्मा न कल्पनामात्रस्वरूप इति तत्र परिस्फुटक्रमवर्णात्मकपदग्रहणमेव साधुत्वग्रहणं तद्विपरीतयथानिर्दिष्टदोषकलुषितशब्दग्रहणमेव चासाधुत्वग्रहणमिति प्रत्यक्षगम्ये एव साधुत्वासाधुत्वे इति ।

ननु यदि श्रोत्रकरणकेनैव प्रत्ययेन साधुत्वासाधुत्वे प्रतिपत्तारः प्रतिपद्यन्ते व्याकरणाध्ययनवन्ध्यबुद्धयो ऽपि प्रतिपद्येरन् न च प्रतिपद्यन्ते तस्मान्न ते ते इन्द्रियविषये इति,

नैष दोषः, वैयाकरणोपदेशसाहायकोपकृतश्रोत्रेन्द्रियग्राह्यत्वाभ्युपगमात् यथाब्राह्मणत्वादिजातिरुपदेशसव्यपेक्षचक्षुरिन्द्रियग्राह्यापि न प्रत्यक्षगम्यतामपोज्झति, यथा ऽऽह न यद्गिरिश्रृङ्गमारुह्य गृह्यते तदप्रत्यक्षमिति, यथा वा सविकल्पकप्रत्यक्षप्रामाण्यसिद्धौ शब्दानुविद्धबोधे ऽपि प्रामाण्यमुपपादितमादौ किल संज्ञोपदेशिना पनसो ऽयमिति वृद्धवचसा चक्षुरिन्द्रियेण पनसज्ञानमुत्पद्यते सङ्केतकरणकाले तदुभयजमित्यव्यपदेशपदेन व्यपनीतं व्यवहारकाले पनसादिज्ञानमुपदेशस्मरणापेक्षचक्षुर्जनितमपि चाक्षुषमेवेति वर्णितमेवमिहापि व्याकरणकोविदोपदेशसचिवश्रवणेन्द्रियग्राह्ये अपि साधुत्वासाधुत्वे न प्रत्यक्षतामतिवर्तेते, यथा च ब्राह्मणत्वादिजातिप्रतीतौ कारणान्तरमुक्तं क चिदाचारतश्चापि सम्यग्राजाऽनुपालितादिति मन्वादिदर्शितानवद्यवर्त्मानुसरणनिपुणनरपतिपरिपाल्यमानवर्णाश्रमाणां शङ्कितकृतककपटार्यवेशदुष्टशूद्रव्यभिचारे देशे विशिष्टाचारगम्या ऽपि ब्राह्मणत्वादिजातिर्भवत्येवमिहापि विशिष्टशब्दश्रवणोत्तरकालप्रवृत्तव्यवहारावगतार्थप्रतिपत्तिसहितं शब्दानुशासनशास्त्रोपदिष्टप्रकृतिप्रत्ययविकरणवर्णलोपागमादेशादिलिङ्गमव्यभिचारि तत्स्वरूपावधारणे कारणं भविष्यति, तदेवंलक्षणकमर्थप्रत्यायकं च शब्दस्वरूपं तत्साधुतया ऽवधृतमिति व्याप्तिग्रहणोपपत्तेः, शास्त्रमपि श्रुतिस्मृतिरूपमधुशब्दप्रयोगोपनतक्रतूपकारकरणकस्वर्गादिफलसंयोगमुपदिशदपशब्दभाषणप्रभवप्रत्यवायप्रतिपादकं च वाग्योगविद् दुष्यति चापशब्दैरित्यादि साधुत्वेतरपरिच्छेदे प्रमाणत्वं प्रतिपद्यते एव ।

आह कलञ्जवत्तत्स्वरूपसिद्धौ सत्यां तद्विधिनिषेधयोः शास्त्रं क्रमते न तु तत्स्वरूपमेव विधत्ते स्वरूपस्य भावार्थत्वेन विधिविषयार्थत्वायोगादित्युक्तम्, सत्यमुक्तं किं तु श्रुतिस्मृतिशास्त्रयोर्धर्माधर्मोपदेशिनोर्यथोपवर्णितेनैव प्रकारेण साध्वसाधुविषयविधिनिषेधपरत्वं तत्स्वरूपप्रतिपत्तिकर्तव्यतापरं तु विध्यपेक्षितं प्रमाणीभवत्येव, यदि वा पाणिन्यादिष्टस्मृतिद्रढिम्ना मूलभूतमाचमनविधिवद्वैदिकमपि तथाविधविधिवाक्यं कल्पयितुं शक्यमिति शास्त्रस्यापि न विषयः साधुत्वम्, शब्दवित्प्रयोगश्च सङ्कररहित एव, तथा हि अन्या एव निरवद्यवर्णक्रमोदीरणोदारगम्भीरगतयः सूक्तयः सूरिजनस्यान्या एव दुःश्रवाः

कुत्सितसङ्कीर्णवर्णविभागविनिहितहृदयोद्वेगाः ग्राम्यगिरः इति प्रत्यक्षमुपलभ्यते, स चायमसङ्करः प्रयोगो व्याकरणसाहायकं प्रतिपद्यमानः साधुत्वावगमोपायतां भजत एवेति सर्वथा नाप्रमाणकः साध्वसाधुशब्दविभाग इति,

एवं च ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इत्याद्यागमवचनान्यपि तदुपयोगीनि व्याख्यातवाक्येन भवन्ति,

यत्पुनर्नियमशास्त्रे साधुभिर्भाषितव्यमसाधुभिर्नेत्यस्मिन्नपभाषितं तदपि न पेशलम्, न हि नीरपानोपदेशकृशानुपाननिषेध इवानवकाशमिदं शास्त्रमपशब्दानामेव नार्यजनवदनप्रतिष्ठानां यथातथार्थप्रतीत्युपायत्वदर्शनपूर्वकप्रयोगप्रसङ्गानपायेन प्राप्तौ सत्यां प्रतिषेधस्यावकाशसम्भवात्साधुभिरेव भाषणस्य भोजनप्राङ्मुखतादिवन्नियमादृष्टसाफल्यात्।

यदपि साध्वसाधुस्वरूपानवधारणात्प्रतिपदोपदेशाद्यशक्यत्वमाशङ्कितं तदपि प्रतिहतं यादृगिदं प्रत्यक्षानुमानगम्यं साध्वसाधुशब्दस्वरूपं व्याख्यातं तदवलम्बनपुरःसरनियमकरणस्य सुशकयत्वादत एव साधुत्वं नाम किमुच्यते इति यद्विकल्पितं तद्विहितमेव प्रतिभवति, यतो व्याकरणलक्षणानुगमविशेषितं वाचकत्वं साधुत्वमित्युक्तं तच्च स्ववर्गानुगामिगोत्वादिवत्सामान्यं वा भवतु पाचकत्वादिवदसत्यपि सामान्ये ऽवच्छेदकत्वं भवतु सर्वथा तत्कृतौ निर्वहति सर्वो व्यवहारः वर्गीकरणे हि तदेव कारणमिति।

अथ वा पुनरस्तु वाचकत्वमेव साधुत्वं तथापि तत्र नियमशास्त्रं साधुभिरेव भाषितव्यमिति प्रवर्तितुमर्हत्येव, यद्यप्यसाधोरवाचकत्वात्प्रयोगप्रसङ्गो नास्ति तथापि साधुस्मरणसरणिसमुपारूढवाचकत्वशङ्कोपप्लवमानप्रसङ्गनिवृत्तये नियमसाफल्यं भविष्यति, विधिफलत्वेन नियमस्य फलतः परिसंख्याकार्यमसाधुशब्दनिवृत्तिः स्थास्यतीति सो ऽपि न दोषः।

यदपि परार्थत्वात्फलश्रुतिमर्थवादीकुर्वता पुण्यपापफलत्वं दूषितं तदपि न सांप्रतम्, अर्थप्रतीतिपारार्थ्ये सत्यपि प्रयोगनियमापूर्वद्वारकपुण्यपापफलत्वसंभवात्, पर्णमय्यादिष्वपि तथा प्रसङ्ग इति चेद् भवतु को दोषः, नैयायिकैरेकाकारनिरवलम्बनार्थवादपदोपदेशानभ्युपगमात्, शब्दशक्तितात्पर्यालोचनमपि तैरन्यथा क्रियतइति प्राग्विचारितमिति तिष्ठत्वेषा कथा, तेन कामधुग्भवतीत्यादिवचनान्यपि व्याकरणाध्ययनफलप्रकटनपटूनि तथैव नेतव्यानि।

यदपि सूत्रकृता स्वयं प्रयोजनं किमिति न व्याहृतमिति व्याहृतं तदप्यदूषणमेव, व्याकरणं हि वेदाङ्गमिति प्रसिद्धमेतदा हि सर्वतः आ च कुमारीभ्य, वेदश्च यदि निष्प्रयोजनः स्वस्ति प्रजाभ्यः समाप्तानि दृष्टादृष्टफलानि सर्वकर्माणि जितं चातुर्वर्ण्यबाह्यैरन्त्यजनपदवासिभिः म्लेच्छैः, अथ सप्रयोजनो वेदः सोऽङ्गवत्त्वादङ्गैः सहैव सप्रयोजनतां भजते इति को ऽर्थः प्रयोजनान्तरचिन्तया, न

हि दर्शपूर्णमासप्रयोजनादन्यत्प्रयाजादिप्रयोजनमन्विष्यते इति मन्वानः स्वयं सूत्रकृत्प्रयोजनं नाख्यत्,

व्याख्यातारस्तु मुख्यानुषङ्गिकभेदभिन्नप्रयोजनप्रपञ्चं प्रयोजनातिशयव्युत्पादनद्वारकश्रोतृजनोत्साहपरिपोषसिद्धये दर्शितवन्त इति न कश्चिदुपलम्भः।

कथं पुनरङ्गता व्याकरणस्य कमुपकारमावहत इति, क एष पर्यनुयोगो वेदवेदाङ्गानामनादित्वादीश्वरप्रणीतत्वाद्वा पर्यनुयोजनानुपपत्तेः, संक्षेपविस्तरविवक्षया हि पाणिनिपिङ्गलपराशरप्रभृतयः तत्र तत्र कर्तारः प्रसिद्धिं गताः, परमार्थतस्तु वेद इव तदर्थोपि तदर्थावगमो ऽपि प्रायो हि सर्व एवानादयः प्रजापतिनिर्मिता वेत्येवमपर्यनुयोज्या एव, अत एव वेदैस्तदङ्गैश्च सह चतुर्दश विद्यास्थानानि गण्यन्ते—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्राणि विद्या ह्येताश्चतुर्दशेति॥

ये ऽपि शब्दसंस्कारादिविकल्पाः कृताः ते ऽपि बहुभाषित्वयोगमात्रनिर्मिता एव न वस्तुस्पृशः, के वा तद्विपरीताः कश्च तेषां संस्कार इति, न चैतावता शिष्टप्रयोगमूलमेव व्याकरणं ब्रूमो वेदवदनादित्वस्य दर्शितत्वादन्धपरम्पराप्रसदोषपरिजिहीर्षया तु शिष्टप्रयोगमूलत्वमभिधीयते वैदिकस्मृतेरिवान्वयव्यतिरेकमूलत्वम्, ये हि व्याकरणस्मृतौ साधव इत्यनुशास्यन्ते शब्दास्ते शिष्टैस्तथैव प्रयुज्यमाना दृश्यन्ते हरीतकीभक्षणादिवारोग्यम, न तु शिष्टेभ्यः शब्दसमाम्नायमधिगम्य पाणिनिर्ग्रन्थं कृतवान् न चान्वयव्यतिरेकाभ्यां द्रव्यशक्तीरवगत्य चरकं प्रणीतवानिति शिष्टानामनादित्वाभिधानात्, एतेनेतरेतराश्रयमपि प्रत्युक्तम्, न हि शिष्टेभ्यो व्याकरणस्य प्रभव इति।

यत्तु शिष्टानामपि प्रमादित्वमुपवर्णितं किल पुराणैर्मुनिभिरपि बहुभिरपशब्दाः प्रयुक्ता इति तत्राभियुक्तैः तदपनयनमार्गः प्रदर्शित एव स तु ग्रन्थविस्तरत्रासादिह न प्रतन्यते।

यदपि पाणिनितन्त्रे धातुप्रातिपदिककारकाद्यनुशासनविसंष्ठुलत्वमनेकशाखमाख्यापितं तदपि निपुणमतिभिः प्रतिसमाहितमेव, न च तेषामपि दोषोत्प्रेक्षणसंभवादनवस्था निपुणदर्शितमार्गे विप्लवकारिवैतण्डिकतस्करविकासानुपपत्तेः।

एतेन शोभाचीर्णवरेण्यगण्यभ्राजिष्णुकान्दिशीकादिशब्दासंग्रहस्मृतिसंदेहविपर्ययादिदूषणान्यपि कैश्चिदुत्प्रेक्षितानि प्रतिक्षिप्तानि मन्तव्यानि तानि च तैरेव समाहितानीति,

बार्हस्पत्यमपि सूत्रमसूत्रमेवेत्यलं स्वमनीषिकाकल्पितानल्पदुर्विकल्पाडम्बरोत्तम्भितालीकपाण्डित्यगर्वगलग्रहगद्गदगिरामुद्वेगकारिणानेन वस्तुविचारेण, सर्वथा प्रकृतिनिर्मलमत्युदारं व्याकरणाडम्बरमेवंप्रायैः परिवादपांसुपातैर्न मनागपि दूरीकर्तुं पार्यते इति सिद्धम्,

## व्याकरणस्यावश्याध्येयत्वनिरूपणम्—

तस्मात्पवित्रात्सर्वस्मात्पवित्रं जनबहुमतमधिगतचतुर्वर्गमग्राम्यमात्मानं कर्तुमध्येतव्यं व्याकरणम् , आह—

आपः पवित्रं परमं पृथिव्या अद्भ्यः पवित्रं परमं हि मन्त्राः ।
तेषां च सामग्र्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥

इहाप्युक्तम्—

रूपान्तरेण देवास्ते विहरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥

किं च—

वरं हि जातास्तिमयो गभीरे जलाशये पङ्किनि नित्यमूकाः ।
न मानवा व्याकरणप्रयोगबुद्धसंस्कारविहीनवाचः ॥

मनुना च पङ्क्तिपावनत्वेनाधिगतव्याकरणो मीमांसकश्च स्वस्मृतौ पठितौ "यश्च व्याकुरुते वाचं यश्च मीमांसते ऽध्वरम्" इति । पुष्पदन्तो ऽप्याह—

भ्रष्टः शापेन देव्याः शिवपुरवसतेर्वन्ध्यहं मन्दभाग्यो
भाव्यं वा जन्मना मे यदि मलकलिले मर्त्यलोके सशोके ।
स्निग्धाभिर्दुग्धधारामलमधुरसुधाबिन्दुनिष्यन्दिनीभिः
कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकर्णः ॥
एवं व्याकरणाभियोगसुलप्रौढोक्तिभिः पण्डितै-
रक्लेशेन विचित्रवैदिकपदव्युत्पत्तिरासाद्यते ।
अन्यैरप्युपबृंहिते दृढतरासङ्गैर्निरुक्तादिभि-
र्वेदे स्वार्थधियं वितन्वति कुतः प्रामाण्यभङ्गो भवेत् ॥

अङ्गभावनिरपेक्षयैव नः प्रत्ययो यदिह शब्दविद्यया ।
वैदिकार्थविषयो विधीयते तत् परास्तमितरेतराश्रयम् ॥
आदृतमस्खलितव्यवहारैर्भोगिमतं श्रुतसङ्गिभिरार्यैः ।
व्याकरणं कथमेतदनादि प्राकृतलक्षणतौल्यमुपेयात् ॥

## आगमप्रामाण्योपसंहारः—

एवं मृषात्वमुदगीयत येन येन च्छिद्रेण कल्पितपिशाचरवैरनार्यैः ।
तत्तत्समग्रमपसारितमित्यतश्च प्रामाण्यमप्रतिहतं स्थितमागमानाम् ॥
इति प्रमाणानि यथोपदेशमेतानि चत्वारि परीक्षितानि ।
प्रतन्वतां संव्यवहारमेभिः सिध्यन्तु सर्वे पुरुषार्थसार्थाः ॥

इति श्री भट्टजयन्तकृतौ न्यायमञ्जर्यां षष्ठमाह्निकम् ॥

**समाप्तं न्यायमञ्जर्याः प्रमाणप्रकरणम् ॥**

श्रीगणेशाय नमः ।

# श्रीवाचस्पतिमिश्रप्रणीतो न्यायसूत्रोद्धारः ।

श्रीवाचस्पतिमिश्रेण मिथिलेश्वरसूरिणा ।

लिख्यते मुनिमूर्धन्यश्रीगोतममतं महत् ॥ १ ॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥

दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः ॥ २ ॥

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च ॥५॥

प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ॥ ६ ॥

आप्तोपदेशः शब्दः ॥ ७ ॥

स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ॥ १० ॥

---

अत्र टिप्पण्यां येषां सूत्रत्वे प्रमाणमुपलब्धं तदभावे वा तयोरदर्शनं वा तदुपन्यस्यते—

१ तासां खल्वासां सद्विधानामिति भाष्येण सूत्रमवतार्य पठितमिति तात्पर्यटीका । २ तदनन्तरापायादिति विश्वनाथसंमतः पाठः । क्रमप्रतिपादनार्थं चेदं सूत्रमिति वार्तिकम् । ३ यथोद्दिष्टविभागद्वारेण सूत्रमिति वार्तिकम् । ४ इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि सूत्रमिति वार्तिकम् । इतः परं 'संस्कारोद्भवा प्रत्यभिज्ञा' इति सूत्रमिति राधामोहनः । ५ अनुमानविशेषणार्थं सूत्रमिति वार्तिकम् । ६ सूत्रार्थः पूर्ववदिति वार्तिकम् । ७ न शब्दमात्रमिति सूत्रार्थ इति वार्तिकम् । ८ इदं सूत्रं वङ्गाक्षरलिखितपुस्तके त्रुटितम् । स द्विविधो दृष्टादृष्टार्थत्वादिति सूत्रस्य तात्पर्यमाहेति तात्पर्यटीकायां दर्शनात्सूत्रमेवेदम् । ९ एतदर्थप्रकाशनायात्मादि सूत्रमिति वार्तिकम् । १० लिङ्गमितीति पाठो न समीचीनः

चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥
घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥
पृथिव्यापस्तेजोवायुराकाशमिति भूतानि ॥ १३ ॥
गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥
बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥
युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥
प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥ १७ ॥
प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥
पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥
प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥
बाधनालक्षणं दुःखम् ॥ २१ ॥
तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥

यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनम् ॥ २४ ॥

लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

---

इदं सूत्रमिति वार्तिकम् । ११ शरीरं लक्षयितुं सूत्रं चेष्टेत्यादीति ता० टी० । १२ लक्षणसूत्राणि समानासमानजातीयविशेषणार्थानि सर्वाणीति सूत्रार्थो द्रष्टव्य इति वार्तिकम् । १३ कानि पुनरिन्द्रियकारणानि इति प्रश्नस्योत्तररूपं पृथिव्यापस्तेजो वायुराकाशमिति भूतानीति भाष्यं न सूत्रं वार्तिके तात्पर्यटीकायां च सूत्रत्वानुक्तेः गन्धरसेत्यादेरेव वार्तिके सूत्रत्वोक्तेः विश्वनाथवृत्त्यनुसारेण च सूत्रत्वेन मुद्रितमिति केचित् । न्यायसूचीनिबन्धदर्शनात् सूत्रमेवेदमित्यन्ये । १४ एतत्सूत्रमिति वार्तिकम् ॥ १५ बुद्धेरवसरप्राप्ताया लक्षणापदेशद्वारेण सूत्रमिति वार्तिकम् । १६ यस्मादिन्द्रियार्थसन्निकर्षे सत्यपि युगपज्ज्ञानानि न भवन्ति अतो गम्यते अस्ति तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि यस्य सन्निधानासन्निधानानुविधानाज्ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति कुतः कारणवैकल्ये कार्यप्रतिबन्धादिति सूत्रार्थ इति वार्तिकम् । १७ तात्पर्यटीकापुस्तकेषु यत्र २ सूत्रं लिखितं तत्रैवाद्यन्ताक्षराणि दृश्यन्ते । अत्र प्रवृ-भः इति लेखदर्शनादितिशब्दः सूत्रानन्तर्गत एव भाष्यपुस्तकेषु तथा दर्शनान्निवेशितः । १८ दोषलक्षणं प्रव-षा इति तात्पर्यटीका । १९ प्रेत्यभावं लक्षयति पुन-व इति तात्पर्यटीका । २० प्रवृ-लम् इति० ता०टी० २१ दुःखलक्षणं बाध-खम् इति ता० टी० । अत्र इति शब्दः सूत्रानन्तर्गतः । २२ तद-र्ग इति ता० टी०। २३ समानानेकधर्मोपपत्तेरिति सूत्रमिति वार्तिकम् । २४ प्रयोजनलक्षणं यम-न·

तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥
सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥
सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥
समानतन्त्रासिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥
यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥
अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥३१॥
प्रतिज्ञाहेतूदाहरणोपनयननिगमनान्यवयवाः ॥ ३२ ॥
साध्यनिर्देशः प्रतिज्ञा ३३ ॥
उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥
तथा वैधर्म्यात् ॥ ३५ ॥
साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥
तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥
उदाहरणपेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥
हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥
अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥
विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥

इति गौतमसूत्रे प्रथमाध्यायस्य थमाह्निकम् ॥

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥

---

मिति ता० टी० । २५ लौकिकपरीक्षकाणामिति सूत्रमिति वार्तिकम् । २६ अस्यार्थस्य प्रदर्शनार्थं सूत्रम् तन्त्रा-न्त इति वार्तिकम् २७ पूर्वमुत्तरं वा सूत्रमनार्षं नानार्षमिति वार्त्तिकम् २८ सर्व-न्त इति ता० टी० । २९ समा-न्त इति ता० टी० । ३० यत्सि-न्त इति ता० टी० । ३१ । अभ्युपगमसिद्धान्तलक्षणसूत्रम्—अ-न्त इति ता० टी० । ३२ अवयवानां विभागोद्देशार्थं सूत्रमिति वार्तिकम् । ३३ साध्य-ज्ञा इति ता०टी० । ३४ प्रतिज्ञानान्तरं हेतुलक्षणाय सूत्रमिति न्यायतत्त्वालोके वाचस्पतिमिश्रः ३५ सूत्रान्तरमवतारयति किमेतावदिति तथा-त् इति ता० टी० । ३६ इदं सूत्रमिति वार्तिकम् । ३७ इदं सूत्रमिति वार्तिकम् । ३८ उदा-य इति ता० टी० । ३९ हेत्व-नमिति ता० टी० । ४० इदं सूत्रमिति वार्तिकम् । ४१ इदं सूत्रमिति वार्तिकम् ।

१ इदं सूत्रमिति वार्तिकम् । २ समानजातिभ्यां वादवितण्डाभ्यामसमानजाती-

स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ॥४॥

अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥

यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥

साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ८ ॥

कालात्ययापदिष्टः कालतीतः ॥ ९ ॥

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥

अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥१२॥

सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥

धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥

न तदर्थान्तरभावात् ॥ १६ ॥

अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

इति गौतमसूत्रे प्रथमाध्यायस्य द्वितीयमाह्निकम् ।

इति गौतमसूत्रे प्रथमोध्यायः ।

---

येभ्यः प्रमाणादिभ्यो व्यवच्छेदः सूत्रार्थ इति ता० टी० । ३ सप्र-डा इति ता० टी० । ४ विभागोद्देशपरं सूत्रं सव्य-सा इति ता० टी० । अनैकान्त इति वङ्गाक्षरसूत्रपुस्तकपाठः अनै--र इति ता० टी० ६ कोऽस्य सूत्रस्यार्थ इति वार्तिकम् । ७ प्रकरणसमलक्षणाय सूत्रम् इति ता० टी० । ८ । साध्य-म इति ता० टी० । ९ उद्देशक्रमसंगत्या बाधलक्षणाय सूत्रमिति तत्वालोके वाचस्पतिमिश्रः । १० वच-लमिति ता०टी० । ११ विभागसूत्रमवतारयति ता०टी० । १२ अवि-लमिति ता०टी० । १३ सम्भ-लमिति ता०टी० । १४ धर्म-लमिति ता०टी० । १५ इदं सूत्रमिति वार्तिकम् । १६ सिद्धान्तसूत्रं न त--त् इति ता० टी० । १७ कोऽस्य सूत्रस्यार्थ इति वार्तिकम् । १८ जातिलक्षणाय सूत्रमिति न्यायतत्त्वालोकः । १९ विप्र-सूत्रमिति ता० टी० । २० शास्त्रमवतारयितुं भाष्यकार आहेति ता० टी० ।

समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥१॥

विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥

विप्रतिपत्तौ च सम्प्रतिपत्तेः ॥ ३ ॥

अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥

तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥

यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥

यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥ ८ ॥

पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षसिद्धिः ॥ ९ ॥

पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥

युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृतित्वाभावो बुद्धीनाम् ॥११॥

त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥

सर्वप्रामाण्यप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥

तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥

त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥

प्रमेया च तुलाप्रमाण्यवत् ॥ १६ ॥

प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७ ॥

तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः ॥ १८ ॥

न प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः ॥ १९ ॥

---

१ समानानेकधर्माध्यवसायादित्येवमादि सूत्रमिति वार्तिकम् । २ अस्य सूत्रत्वे विश्वनाथपञ्चाननवृत्तिः तत्वालोकश्च प्रमाणम् । ३ अस्य सूत्रत्वे वार्तिकं प्रमाणम् । ४-५-६-७ ८-९-एषां सूत्रत्वे वार्तिकं मानम् । नवमसूत्रे प्रत्यक्षसिद्धिरित्यस्य स्थाने प्रत्यक्षोत्पत्तिरित्यन्यत्र पाठः । १० पश्चात्सिद्धाविति सूत्रमिति वार्तिकम् । ११ युगपत्सिद्धाविति सूत्रमिति वार्तिकम् । १२ अयमपि प्रतिषेधस्त्रिष्वपि कालेषु नोपपन्न इत्ययं सूत्रार्थ इति वार्तिकम् । १३ अस्य सूत्रत्वे न्यायसूचीनिबन्धःप्रमाणं १४ इदं सूत्रमिति परिशुद्धिः । १५ इदं सूत्रमिति वार्तिकम् । १६ अस्य चार्थस्य ज्ञापनार्थं सूत्रमिति वार्तिकम् । प्रमेयता चेति वृत्तिसंमतः पाठः । १७ पूर्वपक्षसूत्रमिति वृत्तिः प्रमाणनामितिभागो न्यायतत्वालोके न दृश्यते । १८ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । न्यायतत्वालोकः प्रमाणमित्यन्ये । तत्सिद्धिरित्यस्य-स्थाने प्रमेयसिद्धिरिति क्वचित्पाठः । १९ सिद्धान्तसूत्रमिति वृत्तिः एतदग्रे 'क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनैकान्तः' इति सूत्रमस्ति इति तात्पर्यटीकयावग-

प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २० ॥

नात्मनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २१ ॥

दिक्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥

ज्ञानलिङ्गत्वादात्मनो नानवरोधः ॥ २३ ॥

तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २४ ॥

प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥२५॥

सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् ॥ २६ ॥

तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २७ ॥

व्याहतत्वादहेतुः ॥ २८ ॥

नार्थविशेषप्राबल्यात् ॥ २९ ॥

प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ३० ॥

न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३१ ॥

नचैकदेशोपलब्धिरवयविसद्भावात् ॥ ३२ ॥

साध्यत्वादवयविनि संदेहः ॥ ३३ ॥

सर्वाग्रहणमवयव्यसिद्धेः ॥ ३४ ॥

धारणाकर्षणोपपत्तेश्च ॥ ३५ ॥

सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥ ३६ ॥

रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥

नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥

वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥

---

म्यते । नकाररहितः पाठस्तत्त्वालोके । २० प्रत्य–त् इति ता० टी० पूर्वपक्षसूत्रमिति परिशुद्धिः । २१ नात्म–त्तिः इति ता० टी० । २२ अस्य सूत्रत्वे प्रमाणं नोपलभ्यते इति केचित् त्त्वालोकः प्रमाणमित्यन्ये २३ ज्ञान–ध इति ता० टी० । २४ अस्य अनवरोध इति वर्तत इति भाष्येण सूत्रत्वं प्रतीयते । २५ सिद्धान्तसूत्रमिति वृत्तिः । २६ इदं सूत्रमिति वार्तिकम् । २७ तैश्चा–णामिति ता० टी० । २८ व्याह–तुरिति ता० टी० । २९ परिहारसूत्रं नार्थ–त् इति ता० टी० । ३० पूर्वपक्षसूत्रमिति परिशुद्धिः । ३१ तदेतत्सूत्रं वार्तिककारो व्याचष्टे इति ता०टी० । ३२ न चैकदेशोपलब्धिरितिभाष्यमनुभाष्य वार्तिककारो व्याचष्टे इति तात्पर्यटीकाया अवयविसद्भावादिति न्यायतत्त्वालोकस्य च दर्शनेन 'अवयविसद्भावाद्' इत्येतन्मात्रं सूत्रमवगम्यते । ३३ साध्यत्वादिति यथाश्रुतं सूत्रं गृहीत्वेति ता० टी० । ३४ संशयापाकरणार्थं सूत्रमिति वार्तिकम् । ३५ धार–पूचेति ता०टी० । ३६ आशङ्कात इतरसूत्रमिति ता०टी० । ३७इदं सूत्रमिति वार्तिकम् । ३८ इदं सूत्रमिति वार्तिकम् । ३९ वर्त्तमानकालप्रतिषेधार्थं सूत्रमिति वार्तिकम् ।

तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥
नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥ ४१ ॥
वर्त्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥
कृतताकर्त्तव्यतोपपत्तेस्तूभयथाग्रहणम् ॥ ४३ ॥
अत्यन्तप्रायैकदेशसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥४४॥
प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥
प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥
नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ॥ ४७ ॥
तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥
शब्दोनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥
उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥
संबन्धाच्च ॥ ५१ ॥
आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ॥ ५२ ॥
पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः ॥ ५३ ॥
शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥
सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥
जातिविशेषे चानियमात् ॥ ५६ ॥
तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥
न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥
अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५९ ॥
अनुवादोपपत्तेश्च ॥ ६० ॥
वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥
विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥
विधिर्विधायकः ॥ ६३ ॥
स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६४ ॥

---

४० एतदनुज्ञापनार्थं सूत्रमिति वार्तिकम् । ४१ नाति–द्धिःइति ता०टी० । ४२ इदं सूत्रमिति वार्तिकम् । ४३ । तस्मिन्क्रियमाणे कृतताकर्तव्यतोपपत्तेस्तूभयथाग्रहणम् इति भाष्यतात्पर्यटीकासंमतः पाठः ४४ अत्य–द्धिरिति ता० टी० । ४५ प्रसि–त्तिरिति ता० टी० । ४६ प्रत्य द्धेरिति ता० टी० । ४७–४८ अनयोः सूत्रत्वे तत्त्वालोकः प्रमाणम् । ४९ इदं सूत्रमिति वार्त्तिकम् । ५०–५१–५२–५३–५४ एषां सूत्रत्वे तत्त्वालोकः प्रमाणम् ५५ अत्र न सामयिकत्वादिति नकारसहितः पाठस्तत्त्वालोके । ५६ जाति–त् इति ता० टी० । ५७ तद–भ्य इति ता० टी० । ५८ सिद्धान्तसूत्रमिति वृत्तिः । ५९–६०–६१–६२–६३–६४ एषां सूत्रत्वे तत्त्वा-

विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥

नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६६ ॥

शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६७ ॥

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥

इति गौतमसूत्रे द्वितीयाध्यायस्याद्यमाह्निकम् ॥ १ ॥

---

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥

शब्द ऐतिह्यार्थान्तर्भावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥

अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥

अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥

प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥

तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥

नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥

लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः ॥ ८ ॥

असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥

तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

न लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च ॥ १३ ॥

---

लोकः न्यायसूचीनिबन्धश्च प्रमाणम् । ६५ विधि-द इति ता० टी० । ६६ कोऽस्य सूत्रस्यार्थ इति वार्त्तिकम् । ६७ शीघ्र-ष इति ता०टी० । ६८ अनन्तरसूत्रावतारणपरं भाष्यं किं पुनः प्रतिषेधेति ता० टी० ।

१ अस्माकं संशयादिति सूत्रार्थ इति ता० टी० । २ इदं सूत्रमिति वार्तिकम् । अस्य सूत्रत्वे तत्वालोकः प्रमाणम् । ४ सौत्रं दूषणमाहेति ता० टी० । भाष्ये नानैकान्तिकत्वमर्थापत्तेरित्यधिकं पूरणीयम् । ५ प्रति–त इति ता० टी० । ६ इदं सूत्रमिति वार्तिकम् । ७ नाभा–द्धेरिति ता० टी० । ८ तत्रानेकधाभिन्नप्रपञ्चस्योदाहरणार्थं सूत्रमिति वार्तिकम् । ९इदं सूत्रमिति वार्तिकम् । १० तदनुपलब्धेरर्थसिद्धिरलक्षितेष्वहेतुः एवं चं०पु० पाठः । इदं सूत्रमिति वार्तिकम् । ११ अस्य चार्थस्य ज्ञापनार्थं सूत्रमिति वार्तिकम् । १२ अस्य सूत्रत्वे प्रमाणं तत्वालोकः । १३ कृत-

न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥
तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः ॥ १५ ॥
सन्तानानुमानविशेषणात् ॥ १६ ॥
कारणद्रव्यस्य प्रदेशशब्देनाभिधानाद् नित्येष्वप्यव्यभिचारः ॥१७॥
प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १८ ॥
तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥
अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् २०
अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥
अस्पर्शत्वात् ॥ २२ ॥
न कर्मानित्यत्वात् ॥ २३ ॥
नाणुनित्यत्वात् ॥ २४ ॥
सम्प्रदानात् ॥ २५ ॥
तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥
अध्यापनादप्रतिषेधः ॥ २७ ॥
अभ्यासात् ॥ २८ ॥
नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ २९ ॥
अन्यदन्यस्मादनन्यत्वादन्यदित्यन्यताभावः ॥ ३० ॥
तदभावेनास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३१ ॥
विनाशकारणानुपलब्धेः ॥ ३२ ॥
अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३३ ॥
उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३४ ॥

---

कवदुपचारादित्यनेन सूत्रेणेति वार्तिकम् । १४ इदं सूत्रमिति वार्तिकम् । १५-१६-१७ तत्त्वभाक्तयोः, सन्तानानुमान, कारणद्रव्यस्येति सूत्रैरिति ता० टी० । 'नित्येष्वप्यव्यभिचार' इति भागो न सूत्रान्तर्गत इति बहवः । 'कारणद्रव्यस्य विशेषशब्देनाभिधानादिति राधामोहनः । १८ प्रागुच्चारणादनुपलम्भादिति क्वचित्पाठः । इदं सूत्रमिति वार्तिकम् । १९ तदनुपलब्धेरनुपलम्भादावरणोपपत्तिरिति तात्पर्यटीका । २० अनुपलम्भादित्यादि ता० टीका। २१ अनु-तुः इति ता० टी०। २२ अस्य सूत्रत्वे प्रमाणं न्यायतत्त्वालोकः । २३ न कर्मानित्यत्वादिति वार्तिकम् । २४ इ॰ न्यायतत्त्वालोके वार्तिके च न धृतम् न्यायसूचीनिबन्धे तु दृश्यते। २५ सम्प्रदानात् इति न्यायतत्त्वालोकः । २६ परिहारसूत्रमिति वार्तिकम् । २७ सिद्धान्तसूत्रमिति वृत्तिः। पूर्वपक्षसूत्रमिति न्यायतत्त्वालोकः। २८ इतः परम् 'उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेध' इति सूत्रं सिद्धान्तसूत्रत्वेनाधिकं न्यायतत्त्वालोके दृश्यते। पूर्वपक्षसूत्रमिति वृत्तिः। २९ नान्यत्वेऽप्यभ्यासस्योपपत्तिरिति पाठो न्यायतत्त्वालोके। ३० इदं सूत्रमिति न्यायतत्त्वालोकः। ३१ तद-द्धेः ता० टी। ३२-३३-३४ एषां सूत्रत्वे प्रमाणं न्यायतत्त्वालोकः वि-

पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३५ ॥
विनाशकारणानुलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ ३६ ॥
अस्पर्शत्वादप्रतिषेधः ॥ ३७ ॥
विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३८ ॥
विकारादेशोपदेशात्संशयः ॥ ३९ ॥
प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४० ॥
न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४१ ॥
नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४२ ॥
द्रव्यविकारे वैषम्यवद्वर्णविकारविकल्पः ॥ ४३ ॥
न विकारधर्मानुपपत्तेः ॥ ४४ ॥
विकारप्राप्तानामपुनरापत्तेः ॥ ४५ ॥
सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४६ ॥
नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥ ४७ ॥
नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः॥४८
अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ॥ ४९ ॥
विकारधर्मित्वे नित्यत्वाभावात्कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः॥५०
प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५१ ॥

---

नाशकारणानुपलब्धेश्चेति चकारयुक्तः पाठो न्यायसूचीनिबन्धे । ३५ उर १थं सूत्रमिति वार्तिकम् । ३६ इदं न्यायसूचीनिबन्धे दृश्यते न वार्तिकादौ । ३७ अस्य-ध इति ता० टी० । ३८ विभ-से इति सूत्रं व्याख्यायैव भाष्यवार्तिके व्याख्याते इति ता०टी० । ३९ इदं सूत्रमितिवार्तिकम् । ४० इदं सूत्रमिति वार्तिकम् । चकारसहितः पाठो बहुत्र । ४१ आक्षेपसूत्रं न्यून-तुः इति ता० टी० । ४२ अस्य सूत्रत्वे प्रमाणं न्यायतत्त्वालोकः इतः प्राक् 'द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः' इतिसूत्रमधिकं न्यायसूचीनिबन्धे ता० टीकायां च दृश्यते । परन्तु न्यायतत्त्वालोके वृत्तौ च न दृश्यते । ४३ आक्षेपसूत्रमिति ता० टी० 'द्रव्यविकारवैषम्यवद्वर्णविकारविकल्प' इति क्वचित्पाठः । ४४ प्रत्याख्यानसूत्रमिति ता० टी० । ४५ अस्य सूत्रत्वे न्यायतत्वालोकः प्रमाणम् । ४६ इदं सूत्रमिति ता० टी० एतदुत्तरं "तद्विकाराणां सुवर्णभावाव्यतिरेकात्' इत्येकं सूत्रं न्यायतत्वालोके दृश्यते । न तद्विकाराणामित्यादिर्नकारसहितः पाठ इति राधामोहनः । ४७-४८ अनयोः सूत्रत्वे न्यायतत्वालोकः प्रमाणम् । ४९ अत्र प्रमाणं न्यायतत्वालोकः । वर्णोपलब्धिवत्तदुपपत्तिरिति क्वचित्पाठः । ५० इति सूत्रमिति ता०टी० । ५१ न्यायसूचीनिबन्धतत्वालोकवार्तिकेषु

अनियमे नियमान्नानियमः ॥ ५२ ॥

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५३ ॥

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु वर्णविकारोपपत्तेर्वर्णविकारः ॥ ५४ ॥

ते विभक्त्यन्ताः पदम् ॥ ५५ ॥

तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात्संशयः ॥ ५६ ॥

या शब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः ॥ ५७ ॥

न तदनवस्थात् ॥ ५८ ॥

सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ५९ ॥

आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥ ६० ॥

व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६१ ॥

नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६२ ॥

व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६३ ॥

व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिः ॥ ६४ ॥

आकृतिर्जातिलिङ्गाख्या ॥ ६५ ॥

समानप्रसवात्मिका जातिः ॥ ६६ ॥

इति गौतमसूत्रे द्वितीयाध्यायस्य द्वितीयमाह्निकम्

इति गौतमसूत्रे द्वितीयोऽध्यायः ।

---

'प्रकृत्यनियमात्' इत्येतन्मात्रं सूत्रम् । ५२-५३-५४ इमानि सूत्राणीति वार्तिकम् । ५५ ते वि-दमिति ता० टी० । ५६ अस्य सूत्रत्वे वृत्तिकृतोपि संशयः । न्यायतत्वालोके न्यायसूचीनिबन्धे च तदर्थे इति पाठो नास्ति । तदर्थे इति भाष्यकृतः पूरणमिति वृत्तिः । ५७-५८ इमे सूत्रे इति वार्तिकम् । ५९ सहचरणादिति सूत्रमिति वार्तिकम् । ६०-६१ अनयोः सूत्रत्वे न्यायतत्वालोकः प्रमाणम् । ६२ अस्य सूत्रत्वे प्रमाणं न्यायतत्वालोकः चान्तः पाठः क्वचित् । ६३ पाशमर्षं सूत्रं व्यक्त्याकृतिजातयस्तु पदार्थ इति ता० टी० । ६४ व्यक्तिर्गुणविशेषाश्रयो मूर्तिरिति सूत्रमिति वार्तिकम् । ६५ आकृ-ख्या इति ता०टी० । ६६ समा-तिरिति ता०टी० ।

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥
न विषयव्यवस्थानात् ॥ २ ॥
तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥
शरीरदाहे पातकाभावात् ॥ ४ ॥
तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥
कार्याश्रयकर्तृवधात् ॥ ६ ॥
सव्यदृष्टस्येतरप्रत्यभिज्ञानात् ॥ ७ ॥
नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥
एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥
अवयवनाशेप्यवयव्युपलब्धेरहेतुः ॥ १० ॥
दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥
इन्द्रियान्तरविकारात् ॥ १२ ॥
न स्मृतेः स्मर्त्तव्यविषयत्वात् ॥ १३ ॥
तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥
अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥
नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १६ ॥
ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥
नियमश्च निरनुमानः ॥ १८ ॥
पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ॥ १९ ॥
पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विकारः ॥ २० ॥

---

१ इदं सूत्रमिति वार्तिकम् । २ न वि-त् इति ता० टी० । ३ तद्-ध इति ता० टी० । तद्व्यवस्थानादात्मसद्भावादप्रतिषेध इति सूत्रमिति वार्तिकम् । ४ इदं सूत्रमिति वार्तिकम् । ५ तद-त् इति ता० टी० । ६ न कार्याश्रयकर्तृवधादिति सूत्रमिति वार्तिकम् । ७ सव्येन चक्षुषा दृष्टमितरेण प्रत्यभिजानातीति सूत्रमिति वार्तिकम् । सव्य-त् इति ता० टी० । ८ नैक-त् इति ता० टी० । इदं सूत्रमिति वार्तिकम् । ९ एक-त्वमिति ता० टी० । १०.अस्य सूत्रत्वे मूलं न्यायतत्त्वालोकः न्यायसूचीनिबन्धश्च । ११ अस्य सूत्रत्वे वार्तिकं प्रमाणम् । १२ इन्द्रिया-त् इति ता० टी० प्रतिसन्धानं प्रकारान्तरेण सूचयतीति परिशुद्धिः । १३ अस्याक्षेप सूत्रमिति न स्मृ-त् ता०टी० । १४ तदा-ध इति ता०टी०। १५ वं-पु० पञ्चदशसूत्रं नास्ति । अस्य सूत्रत्वे वृत्तिकृतोपि संशयः । १६ इदं सूत्रमितिपरिशुद्धिः । न्यायतत्त्वालोकश्च । १७-१८ अनयोः सूत्रत्वे प्रमाणं न्यायतत्त्वालोकः । १९ अस्यार्थस्य ज्ञापनार्थं पूर्वाभ्यस्तेत्यादि सूत्रमिति वार्तिकम् । २० इदं सूत्रमिति वार्ति-

नोष्णशीतवर्षकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् । २१ ॥
प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥
अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥ २३ ॥
नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥
वीतरागजन्मादर्शनात् ॥ २५ ॥
सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥ २६ ॥
न संकल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥
पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥
श्रुतिप्रामाण्याच्च ॥ २९ ॥
कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात्संशयः ॥ ३० ॥
महदणुग्रहणात् ॥ ३१ ॥
रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥ ३२ ॥
तदनुपलब्धेरहेतुः ॥ ३३ ॥
नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३४ ॥
द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३५ ॥
अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ॥ ३६ ॥
कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३७ ॥
अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः ॥ ३८ ॥

---

कम् । तद्विकार इत्यस्य स्थाने तदुपपत्तेरिति न्यायसूत्रविवरणे पाठः । विकारे तद्विकार इति न्यायतत्वालोके पाठः । २१ नाकस्मिकः पद्मादिप्रबोधसंमीलन विकार इति सूत्रार्थ इति वार्तिकम् । २२-२३-२४-२५ इमानि सूत्राणीति वार्तिकम् । न्यायतत्वालोकश्च । २६ अनैकान्तिकपक्षे सूत्रमिति वार्तिकम् । २७अस्य सूत्रत्वे न्यायतत्वालोकोः न्यायसूचीनिबन्धश्च प्रमाणम् । २८ सिद्धान्तसूत्र-मिति वृत्तिः । इदं सूत्रमिति परिशुद्धिः । अस्याग्रे १ पार्थिवाप्यतैजसं तद्गुणोप-लब्धेः । २ निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् । ३ गन्धस्वेदपाकव्यूहावकाश-दानेभ्यः पञ्चभौतिकम् । इति सूत्रत्रयं वृत्तावस्ति तद्गौतमप्रणीतं न भवतीति भाष्या-लोचनाद् प्रतीयते । न्यायसूचीनिबन्धे न्यायतत्वालोके च दृश्यते । २९ अस्य सूत्रत्वे प्रमाणं न्यायतत्वालोकः । ३० संशयकारणप्रतिपादनार्थं सूत्रमिति वार्तिकम् । ३१अस्यसूत्रत्वे प्रमाणं न्यायतत्वालोकः । ३२ रश्म्य-णमिति ता० टी० । ३३ इदं सूत्रमिति वार्तिकम् । ३४ एवं तर्हीदं सूत्रं नोपलब्धेः कारणप्रतिपादकमिति वार्ति-कम् । ३५ शेषं भाष्ये इति वार्तिकस्वरसादस्य सूत्रत्वं सिद्धति उपलब्ध्यनियम इति क्वचित्पाठः । ३६ एवं च सूत्रमिति वार्तिकम् । ३७ शेषं भाष्य इति वार्तिं-कस्वरसादस्य सूत्रत्वं सिद्ध्यति । ३८ इदं सूत्रं न्यायसूचीनिबन्धे न्यायतत्वालोके

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ३९ ॥
न रात्रावप्यनुलब्धेः ॥ ४० ॥
बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥४१॥
अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥
नक्तंचरनयनरश्मिदर्शनाच्च ॥ ४३ ॥
अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥
कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥
अप्रतिघातात्सन्निकर्षोपपत्तिः ॥ ४६ ॥
आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४७ ॥
नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥
आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥४९॥
दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥
स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥
त्वगव्यतिरेकात् ॥ ५२ ॥
न युगपत्त्वाच्च संशयः ॥ ५३ ॥
विप्रतिषेधाच्च त्वगेका ॥ ५४ ॥
इन्द्रियार्थपञ्चत्वात् ॥ ५५ ॥
न तदर्थबहुत्वात् ॥ ५६ ॥
गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५७ ॥
विषयत्वाव्यतिरेकादेकत्वम् ॥ ५८ ॥

---

वृत्तौ च नास्ति । ३९ इदं सूत्रमिति न्यायतत्वालोकः । ४० इदं सूत्रमिति ता० टी० । ४१ इदं सूत्रमिति वार्तिकम् । ४२ अभि–त इति ता० टी० । ४३ नक्तंचररश्मिदर्शनाच्चेति दृष्टान्तसूत्रमिति वार्तिकम् । ४४ अस्य सूत्रत्वे न्याय॰ तत्वालोकः प्रमाणम् । ४५ अस्य सूत्रत्वे शेषं भाष्य इति वार्तिकस्वरसो मानम् । ४६ अस्य सूत्रत्वे न्यायतत्वालोकः प्रमाणम् । ४७ अस्य सूत्रत्वे शेषं भाष्य इति वार्तिकं मानम् 'अभिघातात्' इति पाठः क्वचित् । ४८ अस्य सूत्रत्वे न्यायतत्वालोकः प्रमाणं । ४९ अस्य सूत्रत्वे शेषं भाष्य इति वार्तिकं प्रमाणम् । ५० अस्य सूत्रत्वे न्यायतत्वालोकः प्रमाणम् । ५१ स्थाना–यः इति ता० टी० । ५२ त्वग–त इति ता० टी० त्वगव्यतिरेकादित्यस्य सूत्रतां सूचयतीति परिशुद्धिः । ५३ सौत्रं सिद्धान्तमाहेति ता० टी० । ५४ शेषं भाष्य इति वार्तिकस्वरसादस्य सूत्रत्वम् । ५५ इन्द्रियार्थपञ्चत्वादिति सूत्रमिति वार्तिकम् । ५६ पूर्वपक्षिणः सूत्रं न त–त् इति ता० टी० । ५७ अस्योद्धारकं सूत्रमिति वार्तिकम् । ५८ अस्य

न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ५९ ॥
भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६० ॥
गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्या ॥ ६१ ॥
अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ॥ ६२ ॥
न सर्वगुणानुपलब्धेः ॥ ६३ ॥
एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तराणां तदनुपलब्धिः ॥ ६४ ॥
संसर्गाच्चानेकगुणग्रहणम् ॥ ६५ ॥
विष्टं ह्यपरं परेण ॥ ६६ ॥
न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६७ ॥
पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ॥ ६८ ॥
तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६९ ॥
सगुणानामिन्द्रियभावात् ॥ ७० ॥
तेनैव तस्याग्रहणाच्च ॥ ७१ ॥
न शब्दगुणोपलब्धेः ॥ ७२ ॥
तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७३ ॥

इति श्रीगौतमसूत्रे तृतीयाध्यायस्याद्यमाह्निकम् ॥

---

कर्माकाशसाधर्म्यात्संशयः ॥ १ ॥
विषयप्रत्यभिज्ञानात् ॥ २ ॥
साध्यसमत्वादहेतुः ॥ ३ ॥
न युगपदग्रहणात् ॥ ४ ॥
अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥
क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥

---

सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणम् । ५९ इदं सूत्रमिति वार्तिकम् । ६० अस्य सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणं । ६१-६२ इमे सूत्रे इति वार्तिकम् । ६३ न स-ब्धेरिति ता० टी० । ६४ एकैकश्येनेति सौत्रो निर्देश इति वार्तिकम् । ६५अस्य सूत्रत्वे प्रमाणं नोपलभ्यते । ६६ विष्टं-ण इति ता०टी० । ६७अस्य सूत्रस्य विकल्पतोऽनेकः सूत्रार्थः कल्पित इति भाष्ये वर्णितम् इति वार्तिकम् । ६८ पूर्व-नम् इति ता० टी० । ६९ इदं सूत्रमिति वार्तिकम् । ७०-७१-७२ एषां सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणं । ७३ इदं सूत्रमिति वार्तिकम् ।

१ संशयप्रदर्शनाय सूत्रमिति वृत्तिः शेषं भाष्य इति वार्तिकम् । २-३ अनयोः सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणम् । ४-५ इमे सूत्रे इति वार्तिकम् । ६ वृत्ति-

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥
न गत्यभावात् ॥ ८ ॥
स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ॥ ९ ॥
स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ १० ॥
नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ ११ ॥
नोत्पत्तिविनाशकारणोपलब्धेः ॥ १२ ॥
क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः ॥ १३ ॥
लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १४ ॥
न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १५ ॥
व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तिरनुमानात् ॥ १६ ॥
क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १७ ॥
नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १८ ॥
युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ १९ ॥
तदात्मगुणत्वेऽपि तुल्यम् ॥ २० ॥
इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ॥ २१ ॥
नोत्पत्तिकारणानपदेशात् ॥ २२ ॥
विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २३ ॥
अनित्यत्वग्रहाद् बुद्धयन्तराद्विनाशः शब्दवत् ॥ २४ ॥
ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः २५
नान्तः शरीरवृत्तित्वान्मनसः ॥ २६ ॥

---

वृत्तिमतोर्नानात्वादिति सूत्रार्थ इति वार्तिकम् । ७ अस्य सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणम् । ८ इदं सूत्रमिति वार्तिकम् । ९ इदं सूत्रमिति वार्तिकम् तदन्यत्वाभिमान इत्यस्य स्थाने तदभिमान इति पाठो न्यायनिबन्धप्रकाशे । १० स्फटिके–तुरिति ता० टी० । ११ सिद्धान्तसूत्रं नय–ज्ञा इति ता० टी० लयहेत्व–इत्यादि पाठो न्यायसूत्रविवरणे । १२ उत्तरं सूत्रमवतारयतीति ता० टी० । १३–१४ १९ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । क्षीरविनाशकारणेति समस्तः पाठः क्वचित् । १६ शेषं भाष्ये इति वार्तिकस्वरसादस्य सूत्रत्वम् । १७ सिद्धान्तिनः सूत्रमिति वृत्तिः । १८ सिद्धान्तसूत्रमिति वृत्तिः । १९ युगपज् ज्ञेयानुपलब्धेश्च न मनस इति सूत्रमिति परिशुद्धिः । ज्ञेयस्थाने ज्ञानेति क्वचित्पाठः। २० तदात्मगुणत्वेऽपि तुल्यमिति सूत्रमेवेति परिशुद्धिः । २१ अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । २२ इदं सूत्रमितिवार्तिकम् । अनुपदेशादिति क्वचित्पाठः । २३ विना–ङ्ग इति ता०टी०। २४–२५–२६ एषां

साध्यत्वादहेतुः ॥ २७ ॥
स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २८ ॥
न तदाशुगतित्वान्मनसः ॥ २९ ॥
न स्मरणकालानियमात् ॥ ३० ॥
आत्मप्रेरणायदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ ३१ ॥
व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३२ ॥
प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणम् ॥ ३३ ॥
प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः ॥ ३४ ॥
ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३५ ॥
तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३६ ॥
परश्वादावारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥
कुम्भादिष्वनुपलब्धेरहेतुः ॥ ३८ ॥
नियमानियमौ तु तद्विशेषकौ ॥ ३९ ॥
यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ४० ॥
परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४१ ॥
स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥४२॥
प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४३ ॥
कर्मानवस्थायिग्रहणात् ॥ ४४ ॥
अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाद्यव्यक्तग्रहणवत् ॥४५॥
हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४६ ॥

---

सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । २७ साध्य-तुरिति ता० टी० । २८ स्मर-र-ध इति ता० टी० । २९ न त-स इति ता० टी० । ३० न स्मर-त् इति ता० टी० । ३१ आत्म-ष इति ता० टी० । ३२ व्यास-नम् इति ता० टी० । ३३-न्यायसूचीनिबन्धे वर्तते । ३४ इदं भाष्यं तात्पर्यटीकाकृता प्रातिभवदिति प्रतीकधारणात् वृत्तिकृताऽव्याख्यातत्वात् न्यायसूचीनिबन्धादावदर्शनाच्च । ३५ज्ञातुरेवेच्छादय इति सूत्रार्थ इति वार्तिकम् । ३६ इदं सूत्रमिति वार्तिकम् । ३७ अस्य सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणम् । परश्वादिष्वारम्भेति बहुत्र पाठः । ३८ अस्य सूत्रत्वे प्रमाणं नास्ति । ३९ अस्य सूत्रत्वे प्रमाणं न्यायनिबन्धप्रकाशः । ४० यथो-स इति ता०टी०।४१-४२ अनयोः सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः।४३ प्रणिधानादिति सूत्रमिति वार्तिकम्। ४४ कर्मानवस्थायिग्रहणादिति सूत्रमिति, वार्तिकम् । ४५-४६ अनयोः

ग्रहणे हेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पात् ॥ ४७ ॥
प्रदीपार्चिः सन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥ ४८ ॥
द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४९ ॥
यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ५० ॥
न पाकजगुणान्तरोत्पत्तेः ॥ ५१ ॥
प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५२ ॥
शरीरव्यापित्वात् ॥ ५३ ॥
केशनखादिष्वनुपलब्धेः ॥ ५४ ॥
त्वक् पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५५ ॥
शरीरगुणवैधर्म्यात् ॥ ५६ ॥
न रूपादीनामेतरेतरवैधर्म्यात् ॥ ५७ ॥
ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥५८॥
ज्ञानायौगपद्यादेकं मनः ॥ ५९ ॥
न युगपदनेकक्रियोपलब्धेः ॥ ६० ॥
अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥ ६१ ॥
यथोक्तहेतुत्वाच्चाणु ॥ ६२ ॥
पूर्वकृतफलानुबन्धात्तदुत्पतिः ॥ ६३ ॥
भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ॥ ६४ ॥
न साध्यसमत्वात् ॥ ६५ ॥
नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६६ ॥
तथाहारस्य ॥ ६७ ॥

---

सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणम् । ४७ इदमत्रैव दृश्यत न न्यायसूचीनिबन्धादौ ४८ न, प्रदीपार्चिष इति नकारसहितः पाठो न्यायसूचीनिबन्धे । ४९ इदं सूत्रमिति वार्तिकम् । ५० इदं सूत्रमिति वार्तिकम् । ५१ सिद्धान्तसूत्रमिति वृत्तौ न्यायसूचीनिबन्धे च । ५२ सिद्धान्तसूत्रमिति वृत्तिः । ५३ शरीरव्यापित्वादित्येतस्य सूत्रस्येति परिशुद्धिः । ५४ इदं सूत्रमिति वार्तिकम् न केशादिष्विति नञ्घटितः पाठोन्यायसूचीनिबन्धे । ५५ त्वक्पर्यन्तत्वाच्छरीरस्येति सूत्रव्याघातदिति परिशुद्धिः । ५६-५७ अनयोः सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ५८ उक्तः सूत्रार्थ इति वार्तिकम् । ५९ अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धो वृत्तिश्च । ६० शेषं भाष्ये इति वार्तिकस्वरसादस्य सूत्रत्वम् । ६१ अस्योत्तरद्वारकं सूत्रमिति वार्तिकम् । ६२ इदं सूत्रमिति परिशुद्धिः । ६३ अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ६४ इदं सूत्रमिति वार्तिकम् । ६५ अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः ६६-६७ पूर्वसूत्रप्रतीकेन पूरयतीति तात्पर्यटीकादर्शनादनयोः सूत्रत्वम् ।

प्राप्तौ चानियमात् ॥ ६८ ॥
शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ॥ ६९ ॥
एतेनानियमः प्रत्युक्तः ॥ ७० ॥
उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः ॥ ७१ ॥
तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ७२ ॥
न करणाकरणयोरारम्भदर्शनात् ॥ ७३ ॥
मनः कर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७४ ॥
नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७५ ॥
अणुश्यामतानित्यत्ववदेतत्स्यात् ॥ ७६ ॥
नाकृताभ्यागमप्रसङ्गात् ॥ ७७ ॥

इति गौतमसूत्रे तृतीयाध्यायस्य द्वितीयमाह्निकम्

॥ इति गौतमसूत्रे तृतीयोध्यायः ॥

---

प्रवृत्तिर्यथोक्ता ॥ १ ॥
तथा दोषाः ॥ २ ॥
तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥
नैकप्रत्यनीकभावात् ॥ ४ ॥
व्यभिचारादहेतुः ॥ ५ ॥
तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥
निमित्तनैमित्तकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥

---

६८ प्राप्तौ–तु इति ता०टी० । न्यायनिबन्धप्रकाशः । ६९ प्राप्तस्तर्हि इत्यधिकः पाठः वं० पु० अस्योत्तरद्वारकं सूत्रमिति वार्तिकम् । ७० इदं सूत्रमिति परिशुद्धिः । ७१ इदं न सूत्रं किन्तु भाष्यमिति बहवः । ७२–इदं सूत्रमिति ता. टी. । 'पुनस्तत्प्रसङ्गोऽपवर्गे' इत्येतावन्मात्रं सूत्रमिति–राधामोहनः । ७३ इदं न्यायसूचीनिबन्धे न दृश्यते । ७४ संयोगाद्यनुच्छेद इति न्यायसूचीनिबन्धपाठः । संयोगाव्युच्छेद इति पाठ इति राधामोहनः । ७५–७६ अनयोः सूत्रत्वे न्यायसूचीनिबन्धः प्रमाणम् । ७७ इदं सूत्रमिति वार्तिकम् ।

१ शङ्कानिराकरणाय सूत्रमित्याहेति ता० टी० । २ प्रवृत्तिदोषसूत्राभ्यामिति परिशुद्धिः । ३ सिद्धान्तसूत्रमिति वृत्तिः । ४–५–६ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ७ न्यायसूचीनिबन्धादौ प्राप्तस्तर्हीत्यंशो नास्ति अयमंशो भाष्यकृतः

न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥
नित्यनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥
आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥
व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥
न घटाद् घटानिष्पत्तेः ॥ १२ ॥
व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥
अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥
व्याघातादप्रयोगः ॥ १५ ॥
नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥
न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥
क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥
ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥
न पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥
तत्कारितत्वादहेतुः ॥ २१ ॥
अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥
अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥
निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥
सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥
नानित्यतानित्यत्वात् ॥ २६ ॥
तदनित्यत्वमग्नेर्दाह्यविनाश्यानुविनाशवत् ॥ २७ ॥
नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥ २८ ॥
सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥

---

पूरणमिति बहवः । ८-९-१० इमानि सूत्राणि न्यायसूचीनिबन्धे । ११ इदं सूत्रमिति वार्तिकम् । १२-१३-१४-१५-१६ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । १७ अत्रैवार्थे सूत्रं योजयतीति ता०टी० । १८ पूर्वं वीजविनाशः पश्चादङ्कुरोत्पत्तिरिति सूत्रार्थ इति वार्तिकम् । १९ सूत्रयति ईश्वर इतीति परिशुद्धिः । २० सिद्धान्तसूत्रमिति परिशुद्धिः २१ तत्र सूत्रं योजयति तत्कारितत्वादिति;परिशुद्धिः । २२ दृष्टान्तसूत्रमिति वार्तिकम् । २३-२४ नव्यास्तु सूत्रीद्वयमेवं व्याचक्षते इति वृत्तिः । २५ पूर्वपक्ष-सूत्रमिति वृत्तिः । सूत्रस्य दृष्टान्तार्थत्वादिति वार्तिकम् । २६ अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । २७ तदनित्यत्वमित्यादि सूत्रमिति परिशुद्धिः । २८-२९ अस्य

नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥
तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥
नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥
न व्यवस्थानुपपत्तेः ॥ ३३ ॥
सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥
नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥
लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥
सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥
न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥
नस्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥
व्याहतत्वादयुक्तम् ॥ ४० ॥
संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥
न कारणावयवभावात् ॥ ४२ ॥
निरवयवत्वादहेतुः ॥ ४३ ॥
सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥
न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥
कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥
प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥
नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥
उत्पादव्ययदर्शनात् ॥ ४९ ॥
बुद्धिसिद्धं तु तदसत् ॥ ५० ॥
आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥

---

सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ३०–३१–३२ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ३३ अस्य सूत्रत्वे प्रमाणं वार्तिकम् । नञ्रहितः पाठ इति राधामोहनः । ३४ पूर्वपक्षसूत्रमिति वृत्तिः न्यायसूचीनिबन्धेऽपीदम् । ३५–३६ अनयोः सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ३७–३८ किंपुनरनेन सूत्रेण क्रियते । पूर्वसूत्रविरोधश्चोद्यत इति वार्तिकादनयोः सूत्रत्वम् । ३९–४० अनयोः सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ४१ प्रतिषेधद्वारकं सूत्रमिति वार्तिकम् । ४२ एकान्तो ह्ययं सूत्रार्थ इति वार्तिकम् । ४३–४४ अनयोः सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ४५ न–सद्यः फलमिति फलघटितं सूत्रं न्यायसूचीनिबन्धे । ४६ कालान्तरेणानिष्पत्तिर्हेतुविनाशादिति पाठो न्यायसूचीनिबन्धे । ४७ इदं सूत्रमिति न्यायसूचीनिबन्धः । ४८ इदं सूत्रमिति परिशुद्धिः । ४९–५० उत्पादव्ययदर्शनाद्बुद्धिसिद्धं तु तदसदित्यनयोरपि सूत्रत्वं सिद्धं भवतीति परिशुद्धिः । ५१ अत्र न्यायसूचीनिबन्धः प्रमाणम् ।

प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥
न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥
तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥
विविधबाधनायोगाद् दुःखमेव जन्मोपपत्तिः ॥ ५५ ॥
न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥
बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥
दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥
ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥
प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥
समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥
पात्रचयानुपपत्तेश्च फलाभावः ॥ ६२ ॥
सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥
न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥
न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६५ ॥
प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥
अणुश्यामतानित्यत्ववद्वा ॥ ६७ ॥
न संकल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥

इतिश्रीगौतमसूत्रे चतुर्थाध्यायस्याद्यमाह्निकम् ।

---

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥
दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥
तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥
विद्याविद्याद्वैविध्यात्संशयः ॥ ४ ॥

---

५२ आश्रयव्यतिरेकोऽसिद्ध इति सूत्रार्थः इति वार्तिकम् । ५३–५४ सूत्रार्थकथनेनैव भाष्यवार्तिके व्याख्याते इति ता०टी० । ५५–५६–५७–५८ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ५९ अपवर्गः प्रत्याख्यायते ऽनेनेति सूत्रेणेति वार्तिकम् । ६० अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । गुणशब्देनार्थवाद इति पाठो न्यायसूत्रविवरणे । इतः परम् 'अन्यथ्र च अधिकाराच्च विधानं विद्यान्तरवत्' इति सूत्रमधिकं वार्तिके दृश्यते । ६१–६२ इमे सूत्रे इति परिशुद्धिः ॥ ६३–६४–६५–६६–६७–६८ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः ।

१ इदं सूत्रमिति ता० टी० । २ सूत्रं दोषनिमित्तमित्यादि ता० टी० । ३ सूत्रं तन्निमित्तमिति ता० टी० । ४ संशयप्रदर्शनाय सूत्रमिति वृत्तिः ।

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ६ ॥

कृत्स्नैकदेशवृत्तित्वादवयवानामवयव्यभावः ॥ ७ ॥

तेषु चावृत्तेरव्यव्यभावः ॥ ८ ॥

पृथक्चावयवेभ्योऽवृत्तेः ॥ ९ ॥

नचावयव्यवयवाः ॥ १० ॥

एकस्मिन्भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥

अवयवान्तराभावेप्यवृत्तेरहेतुः ॥ १२ ॥

केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ १३ ॥

स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥

अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ॥ १५ ॥

न प्रलयोऽणुसद्भावात् ॥ १६ ॥

परं वा त्रुटेः ॥ १७ ॥

आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १८ ॥

आकाशासर्वगतत्वं वा ॥ १९ ॥

अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥२०॥

शब्दसंयोगविभवाच्च सर्वगतम् ॥ २१ ॥

अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २२ ॥

मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥

संयोगोपपत्तेश्च ॥ २४ ॥

अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥

बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणेन पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ २६ ॥

---

५-६-७-८ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । इमानि भाष्यमिति वृत्तिकृतः । ९ पूर्वपक्षसूत्रमिति वृत्तिः । १०-११-१२ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । १३ इदं सूत्रमिति ता० टी० । १४ पु० । अस्य सूत्रत्वे प्रमाणं ता०टी० दोषान्तराभिधानाय सूत्रमिति वृत्तिः । १५-१६-१७ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । १८-१९ संयोगमात्रं चोत्तरसूत्रेणानूद्यत इति वार्तिकादस्योत्तरस्य च सूत्रत्वम् । २०-२१-२२ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । २३ अस्य सूत्रत्वे नन्विदं सूत्रं संस्थानवत्त्वादित्यनेनेव चरितार्थमित्युत्तरसूत्रस्थं वार्तिकं प्रमाणम् । २४ अस्य सूत्रत्वे संयोगित्वादिति सूत्रार्थ इति वार्तिकं प्रमाणम् । २५ अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । २६ वं० पुं० तदनुपलब्धिरिति नास्ति । पूर्वपक्षसूत्रमिति वृत्तिः ।

व्याहतत्वादहेतुः ॥ २७ ॥

तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥

प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥

प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ३१ ॥

मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३२ ॥

हेत्वभावादसिद्धिः ॥ ३३ ॥

स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानः ॥ ३५ ॥

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥

समाधिविशेषाभ्यासात् ॥ ३८ ॥

नार्थविशेषप्राबल्यात् ॥ ३९ ॥

क्षुदादिभिः प्रवर्त्तनाच्च ॥ ४० ॥

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ४१ ॥

अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥

अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥

न निष्पन्नावश्यंभावित्वात् ॥ ४४ ॥

तदभावश्चापवर्गे ॥ ४५ ॥

तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥

ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥

तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिरनासूयुभिरभ्युपेयात् ॥ ४८ ॥

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे वीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥

ताभ्यां विगृह्य कथनम् ॥ ५१ ॥

इति गौतमसूत्रे चतुर्थाध्याये द्वितीयमाह्निकम् ।

इति गौतमसूत्रे चतुर्थोऽध्यायः

---

२७-२८-२९-३०-३१-३२-३३ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ३४-३५-३६ ३७-३८ एषां सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ३९-४० ४१ सूत्राणि ता० टी० । ४२-४३ अनयोः सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ४४ इदं सूत्रमिति ता० टी० । ४५ अस्य सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ४६-४७-४८ अनयो सूत्रत्वे प्रमाणं न्यायसूचीनिबन्धः । ४९-५०-५१ एषां सूत्रत्वे ता० टीका प्रमाणम् ।

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वार्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥

गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥

किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥

दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥

प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तन्निवृत्तिः ॥ १० ॥

प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ॥ १४ ॥

---

१ साधर्म्यादिसूत्रमिति वार्तिकम् । जातिविशेषलक्षणावतारहेतुतया सङ्गतेन विभागसूत्रेण सह त्रिभिः सूत्रैः सत्प्रतिपक्षदेशनाभासप्रकरणम् लक्षणोत्तरसूत्रसपिण्डने त्रिभिः सूत्रैः साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिषट्कप्रकरणम् तथा द्विसूत्रकं प्राप्त्यप्राप्तियुगपद्ग्राहिविकल्पोपक्रमजातिद्वयप्रकरणम् तथा द्विद्विसूत्रकाण्येकैकजातिकानि द्वादश प्रकरणानि कथाभासरूपषट्पक्षीप्रकरणं चेति प्रथमाह्निके सप्तदशप्रकरणानि । अथ विभागसूत्रेण सह षड्भिः सूत्रैः प्रतिज्ञोपलक्षितोक्तमात्राश्रयनिग्रहस्थानचतुष्कप्रकरणं तथा द्विसूत्रकं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणं तथा त्रिसूत्रकं पुनरुक्तनिग्रहस्थानप्रकरणम् चतुःसूत्रमनुत्तरफलनिग्रहस्थानचतुष्कप्रकरणम् तथा त्रिसूत्रकं भ्रान्तोत्तरनिग्रहस्थानत्रिकप्रकरणं तथा द्विसूत्रकं प्रमाणान्तरोपनयनप्रयासोन्नाध्यनिग्रहस्थानद्विकप्रकरणमित्येवं द्वितीयाह्निके सप्तप्रकरणानीति परिशुद्धिदर्शनात् पञ्चमाध्यायसूत्रनिर्णयः । २-३-४-५-६-७ एषां सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधे वर्धमानः । ८ इदं सूत्रमिति ता० टी० । ९-१०-११-१२-१३-१४

साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥

उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥

प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः ॥ १७ ॥

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

न हेतुतः कार्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥

प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥

क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ॥ २४ ॥

उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥ २७ ॥

कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥

ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥

साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥

---

एषां सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः । १५ इदं सूत्रमिति ता० टी० । १६-१७-१८ एषां सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः । १९ वं० पु० प्रज्ञातस्येत्यधिकमस्ति । २२ अस्य प्रत्यादेशसूत्रमिति वार्तिकम् । २३ अस्य सूत्रत्वे प्रमाणम् । २४ वं० पु० क्वचिच्चोपपत्तेरिति नास्ति अस्य प्रत्यादेशसूत्रमिति ता० टी० । २५ अस्य सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधः । २६ विरोधः सूत्रार्थं इति वार्तिकम् । २७ अस्य सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधः । २८ वं० पु० रनुपलब्धिसमः इत्यत्र रप्रतिषेधः इत्येव पाठः । अस्य प्रत्याख्यानसूत्रमिति ता० टी० । २९-३० अनयोः सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधः । ३१ ममापि तु सर्वजनप्रत्यात्मवेदनीयेत्याह सूत्रकार इति ता० टी० । ३२ वं० पु०

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च ॥ ३३ ॥

दृष्टान्ते च साध्यसाधनभावेन प्रतिज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥

प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ३६

प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥

प्रतिषेधेपि समानो दोषः ॥ ३९ ॥

सर्वत्रैवम् ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ॥ ४३ ॥

॥ इति गौतमसूत्रे पञ्चमाध्यायस्याद्यमाह्निकम् ॥

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥

प्रतिज्ञार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥

---

च नास्ति । अस्य सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधः । ३३ अस्य प्रत्याख्यानसूत्रमिति ता० टी० । ३४-३९ अनयोः सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधः । ३६ अस्य प्रत्याख्यानसूत्रमिति ता० टी० । ३७ अस्य सूत्रत्वे प्रमाणमन्वीक्षानयतत्त्वबोधः । ३८ सूत्रं कार्यान्यत्वे इति ता० टी० । ३९ तदेतत्सूत्रावतारपरम्भाष्यमिति ता० टी० । ४० सर्वासु जातिष्वेवेयं युक्तिरिति सूत्रार्थं इति वार्तिकम् । ६ ह० पु० मिच्छतो इति अस्ति । एतदाह्निकसूत्राणां सूत्रत्वे वृत्तिवार्तिक-

प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥
वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥
परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥
पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥
अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥
हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥
हेतुदाहरणाधिकमधिकम् ॥ १३ ॥
शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥
अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १५ ॥
विज्ञातस्य परिषदा त्रिभिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् १६
अविज्ञातं चाज्ञानम् ॥ १७ ॥
उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥
कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ १९ ॥
स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसंगो मतानुज्ञा ॥ २० ॥
निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥
अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २२ ॥
सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥
हेत्वाभासाश्च यथोक्ताः ॥ २४ ॥

शिवेनोरसि विधृतौ पादौ नत्वापवर्गदौ ।
व्यलेखि न्यायसूत्राख्यं चैत्रे वस्वक्षिवासवे ॥

इति गौतमसूत्रे पञ्चमाध्यायस्य द्वितीयाह्निकम् ।

॥ इति गौतमसूत्रे पञ्चमोऽध्यायः ॥

इति न्यायसूत्राणि ।



---

तात्पर्यटीकासु न विशिष्य प्रमाणम् । अथापि निग्रहस्थानविभागतद्विशेषलक्षणपरत्वे-नैषां सूत्रत्वं निर्विवादम् ।

❀ समाप्तः ❀

-⁂-

# न्यायमञ्जर्यां परिगृहीतग्रन्थकारनामानि ।

# न्यायमञ्जर्यां परिगृहीतग्रन्थनामानि—

## न्यायमञ्जर्यामुपलब्धानां ग्रन्थान्तरवाक्यानां टिप्पण्याम-प्रदर्शिततत्तद्ग्रन्थस्थलानां तत्तत्स्थलविवरणम् ।

| पृ० | पं० | वाक्यानि |
|---|---|---|
| ३३ | १२ | अग्निराप्तोपदेशात् |
| | | न्यायभाष्ये अ० १ आ० १ सू० ३ |
| ८ | ३१ | अथ शब्दानुशासनम् |
| | | महाभाष्यस्य प्रथमं वाक्यम् । |
| २३० | ४ | अधर्मे धर्मरूपेवा |
| | | श्लो. वा. सू. ४ श्लो. १०५ |
| १०४ | ३१ | अप्रत्यक्षोपलम्भस्य (द्वि० भा०) |
| | | सर्वदर्शनसंग्रहे बौद्धदर्शने |
| ३७५ | २३ | असाधुरनुमानेन |
| | | वैयाकरणभूषणे कारिका शक्तिनिर्णये ३७ |
| ८९ | २६ | आत्मज्ञे चैतदस्तीति (द्वि०भा०) |
| | | श्लो. वा. सू. ५ श्लो. ११० |
| १४६ | १९ | आर्षं धर्मोपदेशं च (द्वि०भा०) |
| | | तन्त्रवार्तिके अ. १ पा. ३ सू. २ |
| २४१ | २० | इतिहासपुराणाभ्यां |
| | | ३ पृष्ठे टिप्पणी द्रष्टव्या |
| २३० | १४ | इदं पुण्यमिदं पापम् |
| ९९ | १ | ऋषिणामपि यज्ज्ञानं |
| | | वाक्यप० ब्र० का० ३० |
| | | श्लो. वा. सू. ५ श्लो. ३ |
| १८५ | २७ | कुलालवच्च नैतस्य |
| | | श्लो. वा. सू. ५ श्लो. ७९ |
| २९८ | ३० | कृदभिहितो भावो |
| | | महाभाष्ये अ. १ पा. १ आ. ४ सू. ६८ |
| १२३ | १८ | चोदना हि भूतं भवन्तम् |
| | | शाबरभाष्ये अ. १ पा. १ सू. १२ |
| २१२ | १७ | जातिमत्त्वैन्द्रियत्वादि |
| | | श्लो. वा. अनुमाने श्लो. २१ |
| १०७ | २ | नान्योऽनुभाव्यो बुद्धया (द्वि०भा०) |
| | | सर्वदर्शनसंग्रहे बौद्धदर्शने |
| ९८ | २२ | नित्यनैमित्तिके (द्वि०भा०) |
| | | श्लो. वा. सू. ५ श्लो. १०९ |
| ३१७ | ३ | पदात्प्रभृति या चैषा |
| | | ३१३ पृष्ठे टिप्पणी द्रष्टव्या |
| ३६५ | ३० | पदानि स्वं स्वं |
| | | शाबरभाष्ये अ. १ पा. १ सू. २५ |
| ३७२ | ४ | प्रकृतिप्रत्ययौ यद्वत् |
| | | श्लो. वा. वाक्याधिकरणे श्लो. २५९ |
| ११ | ११ | प्रदीपः सर्वविद्यानाम् |
| | | न्यायभाष्ये अ. १ आ. १ सू. १ |
| ६१ | ११ | प्राप्ते शरीरभेदे (द्वि०भा०) |
| | | सांख्यकारिका ६८ |
| ९३ | १३ | भूतं भाव्युपयोगं हि (द्वि०भा०) |
| | | तन्त्रवा. अ. २ पा. ३ सू. २ |
| २४६ | १८ | भ्रान्तेरनुभवाद्वापि |
| | | तन्त्रवा. अ. २ पा. २ सू. २ |
| २० | २८ | यत्रापि स्यात्परिच्छेदः |
| | | श्लो. वा. सू. २ श्लो. ७४ |
| १६ | १२ | यस्मिन्नेव हि सन्ताने (द्वि०भा०) |
| | | सर्वदर्शनसंग्रहे आर्हतदर्शने |
| २४६ | ७ | यदा यदा हि धर्मस्य |
| | | भगवद्गीता अ. ४ श्लो. ७ |
| ३९ | २२ | यावज्जीवेत् (द्वि०भा०) |
| | | सर्वदर्शनसंग्रहे चार्वाकदर्शने |
| १६ | १६ | वर्षातपाभ्यां किं व्योम्नः (द्वि.भा.) |
| | | सर्वदर्शनसंग्रहे बौद्धदर्शने |
| १९५ | २५ | विस्पष्टश्चाक्षपादोक्तो |
| | | श्लो. वा. सू. ५ श्लो. १५३ |
| ३९६ | २० | वाचकत्वाविशेषे वा |
| | | वैयाकरणभूषणका० शक्तिनि० ३७ |
| १०६ | १४ | सहोपलम्भनियमा० |
| | | सर्वदर्शनसंग्रहे बौद्धदर्शने |

अत्र वैयाकरणभूषणसारसर्वदर्शनसंग्रहयोः प्रदर्शनं तद्वाक्यानामन्यत्रादृष्टत्वात् कृतं न तु तयोरेतद्ग्रन्थात्प्राचीनत्वं साधयितुमिति ध्येयम् ।

## न्यायमञ्जर्यामुपलब्धानां ग्रन्थान्तरवचनाना-मनुपलब्धस्थलानां विवरणम्—

| पृ० | पं० | वाक्यानि |
|---|---|---|
| ६८ | १० | अङ्गुल्यग्रादिवाक्येषु |
| २८ | १२ | अधिगतमर्थं० |
| २७ | २० | अनलार्थ्यनलं पश्यन् |
| २९ | ५ | अन्यथैवाग्निसम्बन्धा० |
| २९ | २ | अन्यदेवेन्द्रियग्राह्य |
| ८६ | २३ | अर्थोपयोगेऽपि पुनः |
| ९२ | ३ | आपः पवित्रं |
| ९४ | २० | आहुर्विधातृ ( द्वि० भा० ) |
| २९९ | ११ | उपसर्गवशाद्धातु० |
| २७६ | ७ | एकप्रत्यवमर्शस्य |
| ९० | २६ | एकमेवेदृशं ( द्वि० भा० ) |
| ८७ | १५ | एकस्यार्थस्वभावस्य |
| ८७ | २५ | एष गुणी रूपादिभ्यो |
| ९७ | ११ | कामशोकामयोन्माद |
| १६७ | २८ | कार्यश्चेदवगम्येत |
| १६९ | २३ | कृतश्च शूलविध्वंसो |
| ४८ | १२ | जरावियोगमरण ( द्वि०भा० ) |
| २७ | १७ | तत्परिच्छिनत्ति |
| १०५ | १२ | तत्रानुभवमात्रेण ( द्वि०भा० ) |
| ५६ | २४ | तथापि नितरां ( द्वि०भा० ) |
| ७० | १८ | तदतद्रूपिणो भावाः |
| २९१ | ७ | तदयुक्तं प्रतिव्यक्ति |
| ८७ | २३ | तृष्णाखनिरगाधेयं ( द्वि०भा० ) |
| ३७३ | १६ | तेनाग्निहोत्रं जुहुयात् |
| ३८५ | ३१ | दुष्टग्रहगृहीतो वा |
| १०३ | ३ | द्वे ब्रह्मणी वेदितव्ये (द्वि०भा०) |
| ३ | १४ | धर्मे प्रमीयमाणे तु |
| ३०७ | १४ | न सा केनचिदुत्पाद्या |
| १७७ | ६ | किमीश्वरतयेश्वरो |
| २७७ | १५ | नानोपाध्युपकाराङ्ग |
| ३७३ | २० | नाभिनवाःकेचन |
| ११६ | २० | नासिद्धे भावधर्मोऽस्ति |

| पृ० | पं० | वाक्यानि |
|---|---|---|
| १७१ | ३० | पूर्वस्मिन्प्रत्यये प्राप्तप्रतिष्ठे |
| २१७ | ११ | प्रतिमन्वन्तरं चैषा |
| २१ | ३० | प्रमाणमविसंवादकत्वं |
| १०८ | ९ | प्रमाणस्यागौणत्वात् |
| ३६८ | ३० | प्रमाणान्तरदर्शन |
| १४६ | १० | प्रमाणान्तरदर्शनमत्र |
| ९० | ३ | प्रार्थ्यमानं फलं |
| १०५ | २४ | बाह्यसिद्धिः स्यात् ( द्वि०भा० ) |
| ८७ | २१ | भोगाभ्यासमनु० ( द्वि० भा० ) |
| ३७० | १४ | मतद्वयमपीदं तु |
| १११ | १५ | मम त्वदृष्टिमात्रेण |
| १४८ | २४ | मृद्दण्डचक्रसूत्रादि |
| ८६ | १९ | यः प्रागजनको बुद्धेः |
| १८४ | १० | यथा हि स्वप्नदृष्टोऽर्थः |
| १०६ | ३० | यदाभासं प्रमेयं |
| ३४ | २४ | रजतं गृह्यमाणं हि (द्वि० भा०) |
| ३९२ | ६ | रूपान्तरेण देवास्ते |
| ११५ | ३० | वर्तत एव ब्रूमः ( द्वि० भा० ) |
| ३८० | १८ | वाक्येभ्य एव परि |
| २५९ | ११ | विधिस्तुत्योः सदा वृत्तिः |
| ३१२ | २ | विधेर्लक्षणमेतावत् |
| ८६ | २८ | विशेषणं विशेष्यं च |
| ३८६ | २ | वृत्तिसूत्रं तिला माषाः |
| ८७ | ३ | सङ्केतस्मरणोपायं |
| २८ | ३० | समानविषयत्वे च |
| ८६ | १० | सर्वेषां सविपक्ष०( द्वि० भा० ) |
| ६६ | १९ | स व्यापार प्रतीतत्वात् |
| १९३ | २ | सारस्तु व्यवहाराणां (द्वि०भा०) |
| १७९ | १४ | सिद्धं यादृगधिष्ठातृ |
| ३३० | ३२ | स्मरणादभिलाषेण |
| ३७३ | ११ | स्वयं रागादिमान्नार्थं |

THE
KASHI SANSKRIT SERIES
( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )
NO. 106.
( Nyaya Section, No. 16. )

THE

# NYĀYA MAÑJARĪ

of

JAYANTA BHAṬṬA

*With Notes by*

PANDIT S'RI SŪRYA NÂRÂYAṆA S'UKLA
*Nyāya Vyākaraṇacharya*
Professor, Govt. Sanskrit College, Benares.

*Edited by*

PANDIT DHUNDHIRĀJA S'ĀSTRI
*Nyayopādhyāya Kāvyatirtha*
Principal N. V. Vidyalaya, Benares.

( **Part II** )

BENARES.
JAI KRISHNADAS-HARIDAS GUPTA
*The Chowkhamba Sanskrit Series Office.*
1934.

हरिदाससंस्कृतग्रन्थमालासमाख्य—
काशीसंस्कृतसीरिज़पुस्तकमालायाः
१०६
न्यायविभागे (१६) षोडशं पुष्पम् ।

* श्रीः *

# न्यायमञ्जरी ।

## गौतमसूत्रतात्पर्यविवृतिः ।

पदवाक्यप्रमाणपारावारपारीणश्रीजयन्तभट्टकृता ।

## तदुत्तरभागः ।

वाराणसेयराजकीयसंस्कृतपाठशालानव्यप्राच्यन्यायशास्त्राध्यापकेन
न्यायव्याकरणाचार्यसूर्यनारायणशर्मशुक्लेन विषमस्थल
विवरणपूर्वकं सम्पादितः काशीस्थ नित्यानन्द वेद-
विद्यालय प्रधानाध्यापकेन पण्डितढुण्ढिराज-
शास्त्रिणा संशोधितः ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।
१९४१

# भूमिका ।

## श्रीविश्वेश्वरः शरणम्

नाविदितमिदं तत्रभवतां भवतां दार्शनिकानां यद्वाराणसेयराजकीय संस्कृतमहाविद्यालयाध्यक्षैः प्राच्यप्रतीच्योभयदर्शननिष्णातैर्महामहोपाध्याय **श्रीगोपीनाथकविराज** एम. ए. महोदयैः प्राचीनन्यायशास्त्रि· परीक्षायां पाठ्यत्वेन पदवाक्यप्रमाणपारावारपारीण श्रीमद्भट्टजयन्तप्रणीत **न्यायमञ्जर्याः प्रमेयप्रकरणं** निर्धारितमिति विद्यार्थिनामनुरोधेन प्रमेयप्रकरणादिर्निग्रहस्थानप्रकरणान्तो द्वितीयो भागः प्रथमं प्रकाश्यते ।

इतः परं प्रमाणप्रकरणाभिधः प्रथमो भागोऽपि झटिति प्रकाशमेष्यति, तदानीमेव च ग्रन्थकर्तुः समयादिकं सविस्तरं निवेदयिष्यते, इदानीं तु अयं ग्रन्थकारः न्याये साहित्ये व्याकरणे मीमांसायां च महत्पाण्डित्यमासादितवानिति अनेन ग्रन्थेन समो न्यायदर्शने कोऽपि ग्रन्थो नास्तीति च निवेद्य विरमामि ।

अस्य द्वितीयभागस्य मुद्रणवेलायां श्रीमन्माध्वसम्प्रदायाचार्य दार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य तर्करत्नन्यायरत्नगोस्वामि**दामोदरशास्त्रि**महोदयैरन्तिमपूर्वरूपस्य ( प्रूफ ) दर्शनेनाहमनुगृहीत इति तेषामनुग्रहं शिरसा बिभर्मि ।

एवं मदन्तेवासिना व्याकरणाचार्य**ब्रह्मदत्तमिश्रेण** प्रूफदर्शने साहाय्यं कृतमिति एनं शुभाशिषाऽभिनन्दामि इति—

| | |
|---|---|
| १९९१ वि० भा० शु०<br>अनन्तचतुर्दशी | **सूर्यनारायणशर्म शुक्लः ।**<br>काशी । |

# न्यायमञ्जर्यां उत्तरार्द्धे प्रतिपादितानां विषयाणां सूचीपत्रम् ।

## २ प्रमेयप्रकरणे

# न्यायमञ्जर्या उत्तरभागस्य शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| मिथ्याज्ञाने | मिथ्याज्ञान- | २ | ९ |
| समर्थने | समर्पणे | २ | ८ |
| सामथ्य | सामर्थ्यं | २ | ८ |
| दुःखान्ते | दुःखान्तं | २ | २३ |
| ज्ञातृसमाना | ज्ञानसमाना | ३ | २९ |
| चतस्मिन् | चैतस्मिन् | ४ | ६ |
| आत्मवर्त्तिनो | आत्मनो | ४ | २६ |
| भिन्न | भिर्न | ९ | २९ |
| काऽत्र | कोऽत्र | १० | १ |
| नियमा | नियमो | १० | ३ |
| प्रमातृभेदा | प्रमातृभेद | १० | १४ |
| समथः | समर्थः | १३ | १९ |
| वृत्त | वृत्ति | १३ | २६ |
| नैवं | नैव | १४ | २८ |
| फलापभोगा | फलोपभोगो | १६ | १ |
| विकृत | विकृति | १६ | १४ |
| समथेन | समर्थेन | १७ | २१ |
| सामथ्य | सामर्थ्यं | १८ | ६ |
| भाविना | भाविनी | १९ | १३ |
| कम्भा | कुम्भा | २० | १९ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| समथ | समर्थं | २१ | १९ |
| तत्तत्क्षणा | तल्क्षणा | २२ | २६ |
| मेष | मेषा | २४ | ३ |
| पिनगम्यते | नाधिगच्छति | २४ | २६ |
| सुखमप्य | सुखं नैवा | २४ | २७ |
| निर्वत्य | निर्वर्त्यं | ५८ | १० |
| मागणा | मार्गणा | ७४ | २७ |
| माक्षः | मोक्षः | ८० | १४ |
| धर्म | धर्मि | १२९ | २८ |
| मितिउप | मितिरूप | १४१ | २६ |
| तस्याएवपुनर्वचनं- निगमनमसाधनाङ्ग- वचनत्वादपार्थकम् | अयं पाठो नास्ति | १४३ | ७ |
| लक्षणा | लक्षणीया | १४९ | १९ |
| नजाने | नजाने जाने | १४८ | २८ |
| साधारणाद् | साधारणवद् | १९९ | २० |
| रणाविरु | णविरु | १९६ | २० |
| वृत्तीति | वृत्ती इति | १६० | ३ |
| साधना | साधन | १८७ | ३१ |
| न्तरीकत्व | न्तरीयकत्व | १८८ | ७ |

## सूचना—

६४ पृष्ठानन्तरं ४१ पृष्ठादारभ्य ४८ पृष्ठपर्यन्तम् ६९-६६-इत्येवं क्रमेण ७२ पर्यन्तमङ्का बोध्याः ।

रेफपातो मात्रापातश्च बहुत्र जात इति सुधीभिः समीकृत्य पठनीयः ।

श्रीविश्वेश्वरः शरणम् ।

जयन्तभट्टकृत—

# न्यायमञ्जरी ।

## तत्र प्रमेयप्रकरणम् ।



### प्रमेयपरीक्षारम्भः ।

एवं प्रमाणपदार्थे परीक्षिते सति यदर्थं तत्परीक्षणं तत्प्रमेयमिदानीं दर्शयितुमाह—

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्य-**
**भावफलदुःखापवर्गास्तु प्रमेयम् ॥(१)**

प्रमाणवदिहाप्येतत्सूत्रं व्याख्यायि सूरिभिः ।
एवं विभागसामान्यलक्षणप्रतिपादकम् ॥
प्रमेयश्रुतिरात्मादिपदपर्यन्तवर्त्तिनी ।
तेषामेव प्रमेयत्वं नान्यस्येति नियच्छति ॥

यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्येवकारादिश्रुतिमन्तरेणापि शब्दसामर्थ्यात्त एव भोजनक्रियायोगिनोऽवगम्यन्ते नान्ये तथेहाप्यात्मादयः प्रमेयमित्युक्ते तथैव तदितरप्रमेयनिषेधोऽवधार्यते,

ननु कथं द्वादशविधमेव प्रमेयमुपपद्यते यावता समानतन्त्रे (२)पृथिव्यादीनि नव द्रव्याणि, रूपादयश्चतुर्विंशतिर्गुणाः, उत्क्षेपणादीनि पञ्च कर्माणि, परापरभेदेन द्विविधं सामान्यं, नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः, एकः समवाय, इति षट्पदार्थीमनुक्रम्य तदवान्तरविशेषैरानन्त्यं प्रमेयस्योपवर्णितमिति ?

उच्यते—किं पुनरिह प्रमेयं विवक्षितमिति तत्सामान्यलक्षणं तावत्परीक्ष्यताम् ? आह—सूक्तमिदं कस्यापि 'कर्णे पृष्टः कटिं चालयती'ति द्वादशविधत्वमाक्षिप्तं न प्रतिसमाधत्ते भवान् प्रमेयस्य सामान्यलक्षणं तु परीक्षत एव,

उच्यते—अलं केलिना, एतदेवात्र प्रतिसमाधानं भवति न हि प्रमाणविषयमात्रमिह प्रमेयमभिमतमेवंविधस्य प्रसिद्धत्वेन लक्षणानर्हत्वात् प्रमाण एव ज्ञाते सति तद्विषयोऽर्थः प्रमेयमिति ज्ञायत एव किं तेन लक्षितेन; तस्माद्विशिष्टमिह प्रमेयं लक्ष्यते,

---

(१) गौ० सू० अ० १ आ० १ सू० ९ ।  (२) कणाददर्शने ।

ज्ञातं सम्यगसम्यग्वा यन्मोक्षाय भवाय वा ।
तत्प्रमेयमिहाभीष्टं न प्रमाणार्थमात्रकम् ॥

तच्च द्वादशविधमेव भवति न न्यूनमधिकं वेति समाहित इत्थं भवति विभागाक्षेपः, कुतः पुनरेष प्रमेयविशेषो लभ्यते, निःश्रेयसार्थत्वाच्छास्त्रस्य, प्रमेयज्ञानस्य(१) प्रमाणज्ञानवदन्यज्ञानोपयोगितामन्तरेण स्वत एव मिथ्याज्ञाने निवृत्त्यादिक्रमेणापवर्गे हेतुत्वप्रतिज्ञानात् तथाविधस्य चापवर्गोपायत्वस्यात्मादिष्वेव भावात्,

भवत्वेवं, सूत्रस्य तु कथमीदृशप्रमेयविशेषसमर्थने सामर्थ्य-विशेषात्तुशब्दप्रयोगसामर्थ्याच्च ? सत्यमाकाशकालदिगादि प्रमाणविषयत्वात् प्रमेयं भवति तत्तु न सप्रयोजनम्, आत्मशरीरेन्द्रियार्थमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं निःश्रेयसहेतुत्वादित्याशयः, तदित्थमेष तुशब्दो निःश्रेयसाङ्गभूतप्रमेयान्तरपरिहारद्वारेण विशिष्टमात्मादि प्रमेयमिह सूचयति,

तद्द्वादशविधत्वेऽपि हेयोपादेयभेदतः ।
द्विधोच्यते मुमुक्षूणां तथैव ध्यानसिद्धये ॥
तत्र देहादिदुःखान्तं हेयमेव व्यवस्थितम् ।
उपादेयोऽपवर्गस्तु द्विधाऽवस्थितिरात्मनः ॥
सुखदुःखादिभोक्तृत्वस्वभावो हेय एव सः ।
उपादेयस्तु भोगादिव्यवहारपराङ्मुखः ॥

आत्मनो हि भोगाधिष्ठानं शरीरं, भोगसाधनानीन्द्रियाणि, भोक्तव्या इन्द्रियार्थाः, भोगो बुद्धिः, आन्तरं हि भोगकारणं मनः, प्रवृत्तिः पुण्यपापात्मिका, रागादयश्च दोषाः शरीरादिजन्महेतवः, एतत्कृतश्च शरीरादियोगाध्यासः प्रेत्यभावः, एतत्कृतमेव च संसारे सुखदुःखरूपं हि फलं, तच्च द्विविधमेव-विवेकवतः सर्वं दुःखमेवेति, एवं शरीरादिदुःखान्ते हेयतयैव भावनीयम्, एतदनुषक्तश्चात्माऽपि तथैव, एतद्वियुक्तस्त्वात्मैवापवर्ग उच्यते, स चोपादेयतया भावनीय इत्यत एवात्मपदसंगृहीतस्याप्यस्य पुनर्निर्देशः स हि परमः पुरुषार्थ इति, एवमिदं द्वादशभेदं प्रमेयं हेयोपादेयतया तत्त्वज्ञानेन भावयन्नभ्यासात्तद्विषयविपरीतग्रहात्मकं मिथ्याज्ञानं क्षिणोति,

तत्त्वज्ञानेन तेनास्य मिथ्याज्ञानेऽपबाधिते ।
रागद्वेषादयो दोषास्तन्मूलाः क्षयमाप्नुयुः ॥
क्षीणदोषस्य नोदेति प्रवृत्तिः पुण्यपापिका ।
तदभावान्न तत्कार्यं शरीराद्युपजायते ॥
अशरीरश्च नैवात्मा स्पृश्यते दुःखडम्बरैः ।

(१) 'प्रमेयस्य' इति ख० पु० पाठः ।

अशेषदुःखोपरमस्त्वपवर्गोऽभिधीयते ॥

तदित्थमेव द्वादशविधं प्रमेयमतिगहनसंसारमारवस्थल (१) प्रभवतीव्रसंतापनिर्वापणमहाह्रदतामुपयातीति तदेवादेशार्हमिति सिद्धम् ।

## शरीरात्मवादिचार्वाकमतम् ।

विरक्तसंकथास्तावदसंजातफलोचिताः ।
आत्मैव त्वस्ति नास्तीति कथं न परिचिन्त्यते ॥
तथा च लौकायतिकाः परलोकापवादिनः ।
चैतन्यखचितात्कायान्नात्माऽन्योऽस्तीति मन्वते ॥

न तावदात्मा प्रत्यक्षतो गृह्यते घटादिवद् बाह्येन्द्रियेण, सुखादिवन्मनसा परिच्छेतुमशक्यत्वाद्, अनुमानं तु न प्रमाणमेव चार्वाकाणां, न चात्मसिद्धौ किंचन लिङ्गमस्ति । ज्ञानादियोगस्तु भूतानामेव परिणामविशेषोपपादितशक्त्यतिशयजुषां भविष्यति, यथा गुडपिष्टादयः प्रागसतीमपि मदशक्तिमासादितसुराकारपरिणामाः प्रपद्यन्ते तथा मृदाद्यवस्थायामचेतानान्यपि भूतानि शरीराकारपरिणतानि चैतन्यं स्प्रदयन्ति । कालान्ते स्वव्याध्यादिना विशेषमवजहति तान्येव चैतन्यशून्यतामुपयास्यन्ति, चैतन्यत्वानपायाच्च तावन्तं कालं तान्येव स्मृत्यनुसंधानादिव्यवहारनिवहनिर्वाहणनिपुणतामनुभविष्यन्तीति किमनुमानक आत्मा स्याद्, आगमास्तु मनोरथाधिरूढप्रामाण्याः कथमात्मानमवबोधयितुं शक्यन्ते, अयमपि चागमोऽस्त्येव 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ती'ति तदात्मनो नित्यस्य परलोकिनोऽभावात्कृतमेताभिरपार्थकपरिश्रमकारिणीभिः परलोककथाभिः ।

## मीमांसकमतेनात्मप्रत्यक्षत्वनिरूपणम्—

तत्र प्रत्यक्षमात्मानमौपवर्षाः (२)प्रपेदिरे ।
अहंप्रत्ययगम्यत्वात्स्वयूथ्या (३)अपि के चन ॥

अस्त्ययमहंप्रत्ययः कश्चिच्छरीरसमानाधिकरणः स्थूलोऽहं कृशोऽहं, कश्चिज्ज्ञातृसमानाधिकरणो जानाम्यहं स्मराम्यहमिति, तत्र स्थूलादिसमानाधिकरणस्तावदास्तामहंप्रत्ययः,

ज्ञानेच्छासुखदुःखादिसामानाधिकरण्यभाक् ।
यस्त्वहंप्रत्ययस्तत्र नात्मनोऽन्यः प्रकाशते ॥

---

(१) मरोरिदंमारवं तच्च तत्स्थलं मारवस्थलं संसार एव मारवस्थलं संसारमारवस्थलं, संसार एव मरुदेश इति यावत् तत्राधिकः सूर्यकृतस्तापो भवतीति ।

(२) उपवर्षो मीमांसासूत्रवृत्तिकारः पाणिनिगुरोर्वर्षस्य कनिष्ठभ्राता, औपवर्षाः = मीमांसकाः । (३) नैयायिकैकदेशिनः ।

न हि ज्ञानसुखेच्छाऽऽदियोगः कर्मेन्द्रियादिषु ।
न च ज्ञानादिशून्येऽर्थे जानामीत्यादिसंविदः ॥
ज्ञानमात्रावभासोऽपि वारितः प्रत्यभिज्ञया ।
ज्ञात(१)वानहमेवादावहमेवाद्य वेद्मि च ॥
नोत्तरस्य न पूर्वस्य न ज्ञानक्षणयोर्द्वयोः ।
न संतानस्य चतस्मिन्प्रत्ययेऽस्त्यवभासनम् ॥
नोत्तरो ज्ञातवान्पूर्वं पूर्वो जानाति नाधुना ।
न द्वयोर्द्वयमप्यस्ति संतानस्तु न वास्तवः ॥

अवस्तुत्वाच्च नासौ पूर्वं किं चिज्ज्ञातवान्न चाद्य किं चिज्जानातीति, तस्मादहमेव ह्यो ज्ञातवानहमेवाद्य जानामीत्यस्मिन्प्रत्यये ह्यश्चाद्य चानुवर्त्तमानो ज्ञाता प्रतीयत इति गम्यते, न चासौ कायो;(२) बाल्याद्यवस्थाभेदेन नानात्वादचेतनत्वाच्च, एवं सप्रत्यभिज्ञाहंप्रत्ययग्राह्ये ज्ञातरि सिद्धे सोऽयं स्थूलादिसमानाधिकरणोऽहंप्रत्ययस्तदभेदोपचारेण शरीरे वर्तमानो मिथ्येति कल्पयिष्यते, न पुनरेतदनुरोधेन ज्ञानादिसमानाधिकरणाहंप्रत्ययस्य मिथ्यात्वकल्पनं युक्तमबाधितत्वाद्, न खल्वहं जानामीति प्रत्ययः केन चिदल्पीयसा दोषरेणुना धूसरीकर्त्तुं पार्यते तदस्यात्मैव मुख्यो विषयस्तदतिरिक्तं वस्तु भाक्तमिति; तस्मादहंप्रत्ययगम्यत्वादात्मा प्रत्यक्ष इति ।

## ज्ञानात्मवादिखण्डनम्—

अत्र वदन्ति--शब्दमात्रोच्चारणमेतदहं जानाम्यहमिच्छाम्यहं सुख्यहं दुःखीति न तु ज्ञानादिस्वरूपातिरिक्तस्तदाश्रयः कश्चिदेतासु बुद्धिषु परिस्फुरतीति, कथमेकस्यामेव संविदि कर्ता च कर्म चात्मा भवेत् ?

ग्राह्यग्राहकतैकस्य ज्ञानस्यापाकरिष्यते ।
त्वयाऽपि नेष्यते चेति तथा सत्यात्मनोऽपि सा ॥

यच्चावस्थाकृतं भेदमवलम्ब्य ग्राह्यग्राहकभावसमर्थनमेकस्यैवात्मनः कृतं किल द्रव्यादिस्वरूपमात्मनो ग्राह्यं ज्ञातृरूपं च ग्राहकमिति, तदनुपपन्नं, द्रव्यादिस्वरूपे ग्राह्ये न ज्ञातरि ग्राहकता साधिता स्याद्, आत्मवर्त्तिनोऽपि द्रव्यादिरूपस्य घटादितुल्यत्वाद्,

यदपि निपुणंमन्यैरुच्यते भवतु ज्ञातृतैव (३)ग्राहिका तथाऽपि विषयोपाधिकृतोऽस्त्येव भेदः, घटावच्छिन्ना हि ज्ञातृता ग्राह्या शुद्धैव तु ज्ञातृता ग्राहि-

(१) 'ज्ञातव्यमह' ख० पु० पाठः ।
(२) 'कायो' इत्यस्य स्थाने 'वयो इति । ख० पु० पाठः सचायुक्तः ।
(३) ज्ञातृतैव—ज्ञानमेव ग्राहकमित्यर्थः ।

केति, अन्यत्र तु शुद्धविषयग्रहणमेव भवति घटोऽयमिति—तदेतदपि सरलमतिप्रतारणमात्रम्, तथा हि घटोऽयमित्यत्र घटमात्रप्रवणैव बुद्धिः; इयांस्तु विशेषः पूर्वं केवलं घटग्रहणमधुना तु ज्ञानविशिष्टघटावमर्श इति ।

### अहंप्रत्ययस्य शरीरालम्बनत्वेनात्मनः परोक्षत्वम्—

ननु विभज्यमानायां प्रतीतौ घटोऽयमिति तावद्विषयग्रहणं, जानामीति ज्ञानग्रहणमपि भवतु नाम, अहमिति तु कस्य ग्रहणम्? न चैकस्यामेव प्रतीतावंशविभागेन प्रामाण्यमप्रामाण्यं वा वक्तुं युक्तम्—घटमिति जानामीति च प्रमाणमहमिति तु न प्रमाणमिति, तस्मादत्र ज्ञातुरवभासोऽभ्युपेयः, उक्तमत्र नैकस्यां प्रतीतावात्मनः कर्मता कर्तृता च स्यात्, यस्तूपाधिस्त्वनयोर्नेतुमुपक्रान्तः सोऽयं न घटते घटप्रवणत्वादहं जानामीतिप्रतीतेर्विभज्यमानत्वेऽपि घटमिति जानामीति चांशद्वयं विषयनिष्ठमेव जातम्—अहमिति त्वयमंशो यद्यात्मविषयो दृश्यते तर्हि स एव शुद्धोऽवशिष्यते ग्राह्यग्राहकश्चेति नावस्थाकृतस्तद्भेदः समर्थितः स्यात्, भेदाभावेन चैकस्यैव ग्राह्यग्राहकभावमुपाधि(१)मभिदधता विज्ञानवादवर्त्म संश्रितं स्यात्तस्मादहंप्रत्ययस्य ग्राहकाद्भिन्नं ग्राह्यमभिधित्सता शरीरमेव ग्राह्यमभ्युपगन्तव्यं ज्ञानसामानाधिकरण्यानुपपत्तेश्च वरमस्य नात्मालम्बनता, अत एव कृशश्यामसामानाधिकरण्यधीः शरीरालम्बनत्वस्य साक्षिणी न विरोत्स्यते,

ननु ममेदं शरीरमिति भेदप्रतिभासात्कथमहंप्रत्ययः शरीरालम्बनः स्यात्? भोः साधो! नैवंविधेषु प्रत्ययेषु विश्वास्यत्वमर्हसि ममात्मेत्यपि भेदप्रत्ययस्य दर्शनादवस्थाभेदादिना यथा तथा तत्समर्थनमास्थीयते तदिह शरीरालम्बनत्वेऽपि सैव सरणिरनुसरिष्यते; तस्मादहंप्रत्ययः शरीरालम्बन एवेति, स च ज्ञानादिसमानाधिकरणो मिथ्या स्थूलादिसमानाधिकरणस्तु सम्यगिति, ये तु मम शरीरं ममात्मेति च बुद्धी ते द्वे अपि मिथ्या ममप्रत्ययस्याहंप्रत्ययवदात्मानालम्बनत्वाच्छरीरे च भेदानुपपत्तेः,

मम पाणिर्भुजो वेति भिन्नत्वादुपपद्यते ।
शरीरं तु ममेत्येषा कल्पना राहुमूर्धवत् ॥

तस्मादहङ्कारममकारयोर्द्वयोरप्यविषयत्वादात्मा परोक्ष इति सिद्धम् ।

अपरे पुनराहुः—न ग्राह्यग्राहकरूपोभयसम्पत्तेरेकस्य कर्मत्वं कर्तृत्वं च युगपदात्मनो मन्यामहे किन्तु चितिशक्तिस्वभावमपरसाधनमपरोक्षमात्मतत्त्वं प्रचक्ष्महे न ह्यात्मा जन्येन(२) ज्ञानेन घटादिरिव प्रकाशतेऽपि तु स्वत एव प्रकाशते। चेत-

(१) 'अनुपाधिकम्' इति ख०पु०पा० । उपाधिकृतमिति तु युक्तः प्रतिभाति ।
(२) 'अन्यजन्येन' इति ख० पु० पाठः ।

नत्वमपि तस्य नैसर्गिकमेव न करणोपजनितचितियोगनिबन्धनम् , चिद्योगाद्धि चेतनत्वे घटादावपि तत्प्रसङ्गो न चास्ति नियमहेतुरनेककारकपरिघट्टिततनुरपि चितिरात्मानमेव ज्ञातारं करोति न कारकान्तरमिति, तस्मात्स्वत एव चित्स्वभावताऽस्य भद्रिका, तदिदमात्मप्रकाशनं संविद्वदवगन्तव्यम् , यदाहुः 'संवित्संवित्तयैव संवेद्या न वेद्यतये'ति । नास्याः कर्मभावो विद्यत इत्यर्थः एवमात्मा ग्राहकतयैव प्रकाशते न ग्राह्यतयैवेति तद्द्वैरूप्यस्य चोदनमनुपपन्नमिति,

एतदपि न चतुरश्रम्—अपरसाधनमिति कोऽर्थ उपायान्तरनिरपेक्षमेव प्रकाशमानमात्मतत्त्वमास्त इति, तदयुक्तमकरणिकायाः प्रतीतेरदृष्टत्वाद्, अपूर्वं च तत्किमपि यथाऽभ्युपगतं प्रमाणातिरिक्तमेव प्रमाणं स्याद्, न च नियमकारणमत्र पश्यामः तथा प्रकाशमानः स एवात्मा प्रकाशते न परात्मेति, प्रकाशमानत्वेनात्मनो नूनमनुभूयमानता वाच्याऽनुभूयमानता चानुभवकर्मत्वमितरथाऽस्याः प्रत्यक्षतैव न स्यात् ।

अथोच्यते—न प्रत्यक्ष आत्मा किं त्वपरोक्षइति नेदमर्थान्तरवचनं शिशव एवं प्रतार्यन्ते न प्रामाणिकाः, प्रत्यक्षश्च न भवत्यपरोक्षश्च भवतीति चित्रम् प्रत्यक्षज्ञानकर्मत्वमस्य नास्तीति चेत् , तर्ह्यपरोक्षत्वमपि मा भूत् । प्रकाशत्वादपरोक्षत्वमिति चेन्न, दीपादेः प्रकाशस्याप्यन्धादिभिरगृह्यमाणस्य प्रकाशमानत्वायोगात्तस्मात्प्रकाशते चिदात्मा नूनमनुभूयेतापीति बलात्कर्मत्वमपरिहार्यमतश्च तदवस्थैव द्वैरूप्यचोदना, प्रकाशज्ञानपक्षं च प्रतिक्षेप्स्यामः, स चात्मन्यपि तुल्यो न्यायः, कल्पनाद्वैरूप्यं च भवतामात्मा च स्वप्रकाशः संविच्च स्वप्रकाशेति, न च निपुणमतिरपि विवेकमीदृशमुपदर्शयितुं शक्नोति भवान् इयं स्वप्रकाशफलरूपा संविद्, अयं स्वप्रकाशो ज्ञातृरूप आत्मेति चित्रं चेदं यत्तयोर्द्वयोः प्रकाशयोरन्तराले तद्व्यापारः परोक्षज्ञानाख्यः संपन्न इति,

ननु घटमहं जानामीत्यत्र त्रयप्रतिभासो घटमिति विषयः प्रकाशते; अहमित्यात्मा; जानामीति संविदिति, उक्तमत्र घटं जानामीति ज्ञानविशेषणविषयप्रतिभासः, अहमिति तु शरीरे ज्ञातृत्वभ्रम एकस्यात्मनो ग्राह्यग्राहकत्वानुपपत्तेः–

यदपि स्वतश्चेतनस्वभावत्वमात्मनः कथ्यते तदपि न सोपपत्तिकम् ,

सचेतनश्चिता योगात्तद्योगेन विना जड़ः ।
नार्थावभासादन्यद्धि चैतन्यं नाम मन्महे ॥

यदि च स्वत एवार्थावभाससामर्थ्यपक्षे च सर्वस्य सर्वज्ञताऽऽपत्तिरतोऽवश्यं ज्ञानसमवायनिबन्धनमेवात्मनश्चेतयितृत्वं, न च घटादिभिरतिप्रसङ्ग आशङ्कनीयः, पदार्थस्वभावोपनतस्यैव क्रियावैचित्र्यस्य सर्वलोकप्रसिद्धत्वाच्चेतनादिक्रियाः कर्मसमवायिन्यो न भवन्ति गमनादिक्रियास्तु कर्तृसमवायिन्य एव न च वस्तुशक्तिरनुयोज्या भवति,

न जडत्वाविशेषेऽपि कर्मादौ समवैति चेत् ।
न द्रव्यत्वाविशेषेऽपि गन्धः स्पृशति पावकम् ॥

तस्मान्न प्रत्यक्ष आत्मा नापि स्वतश्चेतयितेति स्थितम् ।

## नैयायिकमतेनात्मनः प्रत्यक्षत्वोपपादनम्—

स्वयूथ्यास्तु के चिदाचक्षते—यदेकस्य कर्तृत्वकर्मत्वमनुपपन्नमित्यप्रत्यक्ष-आत्मेष्यते तदयमनुमानेनापि कथं ग्रहीष्यते ?

आत्मानमात्मनाऽऽत्मैव लिङ्गादनुमिनोति हि ।
तत्र नूनमुपेतव्या कर्तृता कर्मताऽस्य च ॥
तत्रानुमानज्ञानस्य यथाऽऽत्मा याति कर्मताम् ।
तथाऽहंप्रत्ययस्यैव प्रत्यक्षस्यापि गच्छतु ॥
देहादिव्यतिरिक्तश्च यथा लिङ्गेन गम्यते ।
तथाऽहंप्रत्ययेनापि गम्यतां तद्विलक्षणः ॥

न चात्मनः किं रूपं यत्प्रत्यक्षेण साक्षात्क्रियते ? यद्येवं सुखादेरपि किं रूपं-यन्मानसप्रत्यक्षसमधिगम्यमिष्यते ?

नन्वानन्दादिस्वभावरूपं प्रसिद्धमेव सुखादेः, तर्हि तदाधारत्वमात्मनोऽपि रूपमवगच्छतु भवान्,

सुखादि चेत्यमानं हि स्वतन्त्रं नानुभूयते ।
मतुबर्थानुवेधात्तु सिद्धं ग्रहणमात्मनः ॥
इदं सुखमिति ज्ञानं दृश्यते न घटादिवत् ।
अहं सुखीति तु ज्ञप्तिरात्मनोऽपि प्रकाशिका ॥

अपि च—

ज्ञातृज्ञानविशिष्टार्थग्रहणं किल भाष्यकृत् ।
स्वयं प्रादीदृशत्तच्च किं वा युक्तमुपेक्षितुम् ॥
विशेष्यबुद्धिमिच्छन्ति नागृहीतविशेषणाम् ।
पूर्वं चाननुभूतस्य स्मरणं नावकल्पते ॥
न चानुमानतः पूर्वं ज्ञात्वाऽऽत्मानं विशेषणम् ।
तद्विशिष्टार्थबुद्धिः स्यात् स्मरणानवधारणात् ॥

तस्मात्प्रत्यक्ष आत्मा ।

सामानाधिकरण्यं च स्मरणानुभवादिषु ।
अनुसन्धीयमानं यद् दृश्यते तत्कथं भवेत् ॥

## आत्मनोऽनुमानगम्यत्वनिरूपणम्-

पूर्वमहममुमर्थमनुभूतवानहमेवाद्य पुनरनुभवामीति तुल्यविषयतावत्तुल्यकर्तृकताऽपि तत्र प्रकाशते, इतरथा त्वनुमातुमप्यात्मा न शक्यते

ज्ञानेच्छासुखदुःखादि किलेदं लिङ्गमात्मनः ।
एकाश्रयतया ज्ञातमनुसंधातृबोधकम् ॥
तथात्वेन च तज्ज्ञानमाश्रयज्ञानपूर्वकम् ।
ज्ञाते तत्राफलं लिङ्गमज्ञाते तु न लिङ्गता ॥
तस्मात्प्रत्यक्ष एवात्मा वरमभ्युपगम्यताम् ।
वृद्धागमानुसारेण संविदालोकनेन च ॥
अथ वाऽभिनिवेशेन किमनेन प्रयोजनम् ।
अनुमेयत्वमेवास्तु लिङ्गेनेच्छाऽऽदिनाऽऽत्मनः ॥

तदाह सूत्रकारः–'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्'(१), इच्छा नाम तावदित्थमुपजायते यज्जातीयमर्थमित्थमुपयुञ्जानः पुरुषः पुरा सुखमनुभूतवान् पुनः कालान्तरे तज्जातीयमुपलभ्य सुखसाधनतामनुस्मृत्य तमादातुमिच्छति सेयमनेन क्रमेण समुपजायमानेच्छा पूर्वापरानुसंधानसमर्थमाश्रयमनुमापयति कार्यस्य निराधारस्यानुपपत्तेराश्रयमात्रप्रतीतौ चान्वयव्यतिरेकवानेव हेतुर्भवति, इच्छा धर्मिण्याश्रितेति साध्यो धर्मः कार्यत्वाद् घटादिवद् गुणत्वादिति वा हेतुर्वक्तव्यः, गुणत्वं चेच्छाऽऽदीनामचाक्षुषप्रत्यक्षत्वादिना रसादिवद्शितमाचार्यैः(२), एवमन्वयव्यतिरेकवताऽमुना हेतुनाऽधिष्ठानमात्रेऽनुमिते तदधिष्ठानत्वे च देहेन्द्रियादौ प्रसक्ते पूर्वानुभूतसुखसाधनत्वानुसंधानसव्यपेक्षतदुत्पादनपर्यालोचनया तत्कार्यसमानकर्तृकत्वावगमाच्छरीरादिविलक्षणाश्रया(३), शरीरादिषु बाधकोपपत्तौ सत्यां कार्यत्वादित्यत्र च साधर्म्यदृष्टान्तो न संभवतीति वैधर्म्यदृष्टान्तः–कार्यत्वे निर्विशेषणे य एव साधर्म्यदृष्टान्तो घटः स एव वैधर्म्यदृष्टान्तः सविशेषणे, यत्र विलक्षणाश्रितत्वं नास्ति तत्र सविशेषणं कार्यत्वमपि नास्ति यथा घटादाविति तु शक्यते वक्तुम्, तत्र कार्यमात्रयोगेऽपि सविशेषणानां कार्यत्वाभावाद्विलक्षणाश्रितत्वं नास्ति भूताश्रितत्वेन प्रत्यक्षमुपलभ्यमानत्वात् ।

ननु चान्वयदर्शनमन्तरेण केवलव्यतिरेकः प्रतीयमानः संदिग्धो भवति किं तत्साध्याभावकृतैव तस्य तस्माद्व्यावृत्तिरुत निमित्तान्तरकृतेति, संदिग्धव्यतिरेकस्य हेतोरगमकत्वं निश्चितव्यभिचारहेतुवदिति तार्किकाः,

उच्यते–स्यादेतदेवं यदि प्रथममनवगतान्वय एव केवलव्यतिरेकशरणो हेतुः प्रयुज्यते, यतस्त्वन्वयव्यतिरेकताऽवकाशं लभते घटो हि भूतलाश्रितत्वेन प्रत्यक्षमुपलभ्यते तदस्य विशेषणाश्रयविरहादेव सविशेषणहेतुशून्यता जाता निर्विशेषणावस्थायां तद्योगदर्शनादिति न संदिग्धो व्यतिरेकः, अथ वा शरीरत्वं सामान्यमिह वैधर्म्यदृष्टान्तीकर्तव्यं, तत्र हि सर्वात्मना कार्यत्वस्पर्शोऽपि नास्ति

(१) गौतमसूत्रम् अ० १ आ० १ सू० १०॥
(२) वल्लभाचार्यैः। (३) इच्छेति शेषः ।

न च तद्विलक्षणाश्रितं ; शरीराश्रितत्वस्य प्रत्यक्षत उपलम्भादिति, तदियमिच्छा प्रथमपदार्थदर्शनादिकार्यसमानकर्तृकतयाऽवगम्यमाना शरीरादिविलक्षणमाश्रयमवगमयति सविशेषणात्कार्यत्वादिति स्थितम्, यश्च स विलक्षण आश्रयस्तत्रात्मसंज्ञाऽऽगमिकी,

एवमेव द्वेषादेरात्मलिङ्गता वक्तव्या, यज्जातीयस्यार्थस्य सन्निधानाद् दुःखमनुभूतवान् पुरुषः तज्जातीयमर्थं पुनरुपलभमानो दुःखसाधनतामनुसंधाय तं द्वेष्टीति सोऽपि प्रतिसंधातारमेकमन्तरेण नोपपद्यते, आभ्यामिच्छाद्वेषाभ्यामनन्तरं प्रयत्नः समुत्पद्यते सोऽपि यथोक्तेन क्रमेणानुसंधानपूर्वक एव प्रयतमानस्य सुखदुःखे भवतः, ते अपि तथैव द्रष्टव्ये, ज्ञानं यद्यपि प्रथममनुसंधाननिरपेक्षमपि भवति तदपि च शक्यत एवात्मलिङ्गमभिधातुं तथाऽप्यनुसंधानपूर्वेच्छाऽऽदिकार्यप्रकरणान्निर्णयात्मकमिह ज्ञानमुदाहर्तव्यं, तत्र हि बुभुत्साविमर्शादिपूर्वकत्वमुपकल्प्यते तदेवमिच्छाऽऽदीन्यात्मलिङ्गानीति स्थितम्,

शास्त्रे चानेकहेतूक्तिर्न दोषाय कथास्विव ।
शिष्यः कश्चित्क्व चित्किंचिदनुस्मृत्याभिधास्यति ॥

इति कारुणिको मुनिरनेकमिह हेतुमार्गमुपदिष्टवान्,

नन्वत्र चोदितमनुसंधातारमन्तरेण तदेतदिच्छाऽऽदिकार्यं नावकल्पत इति कथं ज्ञायते ? एकत्र प्रमातरि तद्दर्शनादिति यदुच्यते तदिदमेकप्रमातृग्रहणादात्मप्रत्यक्षत्वमङ्गीकृतं स्यादिति व्यर्थमनुमानम्; अग्रहणे तु प्रमातुरेकस्य तत्पूर्वकेच्छाऽऽदेः प्रतिबन्धाग्रहणादशक्यमनुमानमिति, परिहृतमेतत् कार्यत्वेनैव लिङ्गत्वमिच्छाऽऽदेरुपवर्णितमस्माभिर्न स्मरणादिसमानाश्रयतयेति, किमर्थस्तर्हि प्रतिसंधानोपन्यासः ? शरीरादिषु तदाश्रयत्वप्रतिषेधार्थः, न त्वेवं व्याख्यातवन्तो वयमेकस्य प्रमातुरिच्छाऽऽदिकार्याश्रयत्वदर्शनादेकाश्रयत्वानुमानमिति तस्मान्न दोषः, शरीराश्रयत्वप्रतिषेधसाधनत्वेऽपि हेतोर्व्याप्तिग्रहणासम्भवाद्, ग्राहक(१)बुद्धिदर्शनस्मरणेच्छाऽऽदिकार्यजातमेकत्र प्रमातृनियततयाऽनवधारितम्, तत्कथमस्मदवस्थाऽऽदिभिन्नशरीराद्याश्रयत्वनिषेधस्य तत्पूर्वकस्य वाऽऽत्माश्रितत्वस्य सिद्धिः,

क एवमाह न गृहीतमेककर्तृकतया कार्यमिच्छाऽऽदीति, ? यदि गृहीतं तर्हि वक्तव्यं क गृहीतं केन वा प्रमाणेन गृहीतमिति ? स्वात्मन्येवेति चेत्सोऽयं प्रत्यक्ष आत्मा भवेद् एवमनभ्युपगमे न व्याप्तिग्रहणमिति,

उच्यते—न च प्रत्यक्ष आत्मा न च व्याप्तेरग्रहणं न चैव धर्म्यन्तरे व्याप्तिर्गृह्यते किं तु स्वसंतान एव तथाऽपि न सिद्ध्यति प्रमातृनियतानुमानं; कथमिव सिद्ध्यति संतानान्तरेषु प्रतिसंधानस्य दृष्टत्वात्,

(१) 'ग्राहक' इत्यस्य स्थाने 'यावद्' इति क० पु० पा० ।

किं च काऽत्र व्याप्तिग्रहणकालः प्रमातृवद्धि तद्भेदेन भवितव्यं, ततः किम् ? इदं ततो भवति कथं स्वसंतान एव व्याप्तिर्गृह्यतां कथं च तत्रैव प्रमातृनियमाऽनुमीयतामिति सेयमुभयतः पाशा रज्जुः; आत्मा वा प्रत्यक्षो व्याप्तिर्वा दुरवगमेति, नैतदेवं, यथा शाक्यपक्षे सत्त्वात्क्षणिकत्वानुमाने व्याप्तिग्रहणं तथेहापि भविष्यति, तत्र हि यैव क्रमयौगपद्यव्यावृत्त्या सत्त्वस्य नित्येभ्यो व्यावृत्तिः स एव क्षणिकैरन्वय इति धर्म्यन्तरनिरपेक्षतयैव साध्येऽपि धर्मिणि प्रतिबन्धग्रहणं चानुमानं च दर्शितं, तद्वदिहाप्येकप्रमातृपूर्वकत्वेन प्रतिसंधानस्य धर्म्यन्तरे यद्यपि ग्रहणं नास्ति तथाऽपि संतानान्तरभेदे यदस्य दर्शनं तदेवैककर्तृकत्वदर्शनमिति कोऽनयोर्हेतुत्वे विशेषः,

ननु तत्र (१)चित्येभ्यः क्रमयौगपद्यव्यावृत्त्या व्यावृत्तं सत्त्वं शक्यग्रहणमिह तु प्रमातृभेदेन प्रतिसंधानव्यावृत्तिर्दुरवगमा स्वसंतानेऽपि ज्ञानक्षणा भिन्ना एव प्रमातारः, न च तेभ्यो व्यावृत्तं प्रतिसंधानमिति, तिष्ठत्वन्वयो व्यतिरेकमुखेनापि कष्टमिदमनुमानं वर्तते स्वसंताने संतानान्तरवत्प्रमातृभेदाग्रहणात् तद्भेदग्रहे हि स्वसन्तानविवेको न स्यान्न चैवं प्रमातृभेदाग्रहणाभावात्पुनरप्यात्मा प्रत्यक्ष आयातः,

मैवम्—नात्मा प्रत्यक्षः प्रमातृभेदो हि स्वसंताने न गृह्यते, अन्यच्च भेदाग्रहणमन्यच्च तदैक्यग्रहणं भेदाग्रहवदेव च व्याप्तिसिद्धेर्न कष्टमनुमानम्,

ननु च स्वसन्ताने प्रमातृभेदाग्रहणं किं प्रमातुरेकत्वादुत ज्ञानानां कार्यकारणभावादिति न निश्चीयते ततश्च संदिग्धो व्यतिरेकः यथा ज्ञानानां कार्यकारणभावो नास्ति यथा च न तत्कृतोऽयं व्यवहारस्तथाऽनन्तरमेव वक्ष्यामः, तस्मादिच्छाऽऽदिकार्येण युक्तमेकप्रमात्रनुमानम्,

ननु चाश्रितमिच्छाऽऽदि देह एव भविष्यति ।
भूतानामेव चैतन्यमिति प्राह बृहस्पतिः ॥

उक्तं च मदशक्तिवद्विज्ञानमिति, उच्यते—शरीरं तावन्नेच्छाऽऽदेराश्रयः शैशवयौवनबार्धकादिदशाभेदेन भिन्नत्वात्,

तथा हि नान्यदृष्टोऽर्थः स्मर्तुमन्येन शक्यते ।
न चान्येन स्मृते तस्मिन्नन्यस्येच्छोपजायते ॥
तेनाद्यादर्थविज्ञानात्प्रभृतीच्छासमुद्भवात् ।
एकस्य कार्यचक्रस्य वक्तव्यः कश्चिदाश्रयः ॥

शरीरं च बाल्याद्यवस्थाभेदेन भिन्नमतस्तस्य नाश्रयो भवितुमर्हति सन्तानान्तरवद् यथा हि देवदत्तदृष्टेऽर्थे यज्ञदत्तस्य न स्मरणमेवं बालशरीराद्यनुभूते युवशरीरस्य तन्न स्यात्,

(१) 'चित्येभ्यः' इत्यत्र 'नित्येभ्यः' इति० क० पु० पा० ।

नन्ववस्थामात्रमेव भिन्नमवस्थातृशरीरस्वरूपमभिन्नमेव प्रत्यभिज्ञाप्रत्यय-प्रामाण्यादवगम्यते, न चेयं प्रत्यभिज्ञा लूनपुनर्जातनखादिप्रत्यभिज्ञावदन्यथा-सिद्धा विनाशस्यासम्भवात्, स्तम्बादौ हि क्षणभङ्गित्वप्रतिषेधः प्रत्यभिज्ञयैव करिष्यते सा चेहापि तादृश्येव, तदयुक्तम्-स्तम्बादौ नानात्वकारणाग्रहणाद् इह तु रूपपरिमाणपरिवेशाद्यन्यत्वदर्शनात्सादृश्यनिबन्धनेयं भ्रान्तिरेव प्रत्यभिज्ञा न खलु शिशुशरीरे तरुणशरीरे जरच्छरीरे च तुल्यमेव परिमाणाद्युपलभ्यते,

आहारपरिणामाच्च देहभेदोऽवगम्यते ।
पाकजोत्पत्तिमार्गेण न जीर्येतान्नमन्यथा ॥
न भवेत्परिपोषो हि दधिक्षीरादिभक्षणे ।
काञ्चनाद्युपयोगेन दृश्यते तस्य रक्तता ॥
क्षीणैरवयवैः कैश्चित्कैश्चित्त्वभिनवाद्गतैः ।
अभिन्न एवावयवी कथं भवितुमर्हति ॥

तथा च केचित्पच्यमानस्य घटादेरपि प्रागवस्थाविसदृशरूपादियोगिनः पाककारणभूतवेगवदग्निद्रव्यसंयोगपर्यालोचनयैव प्रलयोदयौ कल्पितवन्तः ।

## पीलुपाकवादिमतम्-

यद्यपि कन्दुकनिक्षिप्ता घटादयः तृणपर्णादिपिहितवपुषोऽपि तद्विवरप्रसृतेन नयनरश्मिना न विनष्टा इत्युपलभ्यन्ते, यद्यपि तत्संख्या तत्परिमाणं तत्सन्निवेश-स्तद्देशाश्च पक्वा अपि दृश्यन्ते यद्यपि ततो विभक्ता न विभाव्यन्ते; ततः तेषां-कर्त्रादिकारणकलापासंभवात्पुनर्घटनमघटमानमिव लक्ष्यते; तथाऽपि तेषामनु-मानेन विनाशः परिकल्प्यते, सर्वावयवेष्वन्तर्बहिश्च पाकपूर्वकपूर्वरूपादिविलक्ष-णगुणोपलब्धेरन्तः प्रवेशः कृशानोरनुमीयते, तेन वेगवता वह्निद्रव्येण नोदनाद-भिघाताद्वा नूनं घटाद्यारम्भकेष्ववयवेषु क्रिया जायते क्रियातो विभागः विभा-गाद् द्रव्यारम्भकसंयोगविनाशस्तद्विनाशाद् द्रव्यविनाश इति, अनुप्रवे-शपक्षेऽपि सूक्ष्मविवरपरिकल्पनादवश्यमवयवसंयोगविघटनं घटादेरिति विना-श एव, अपि च पाकानन्तरं कन्दुकादपकृष्यमाणाः पिठरादयः केचित्स्फुटि-ताः केचिद्वक्रतां गताः केचित्संनिवेशान्तरमेव प्रतिपन्ना दृश्यन्ते तस्मादपि प-श्यामो नश्यन्तीति, तत्संख्यत्वादिति सर्वमनैकान्तिकं सूच्यग्रविद्धकण्ठकोणैः कुम्भादिभिः, पूर्वोक्तनीत्या नष्टेषु घटादिकार्यद्रव्येषु परमाणव एव पच्यन्ते, प-क्वाश्च श्यामादिगुणानवजहतो रक्तादिगुणान्तरयोगमनुभवन्तः प्राणिगतसुख-दुःखोपभोगसाधनभूतादृष्टप्रेर्यमाणाः परस्परं संयुज्य द्व्यणुकादिप्रक्रमेण तादृ-शमेव घटादिकार्यमारभन्ते तत्रामुष्मिन्क्षणेऽमुष्य कार्यस्य प्रसवोऽमुष्य प्रलय-इति प्रक्रिया न लिख्यते ग्रन्थविस्तरभयादप्रयोजनत्वाच्चेति, एवं तपनातप-दृश्यमानेष्वाम्रादिफलेष्वेष एव न्यायः, शरीरेऽप्युदर्येण तेजसा पच्यमाने-

ष्वन्नपानादिषु रसमलधातुभावेन परिणाममुपगच्छत्सु प्रायेण प्रतिक्षणमुत्पाद-विनाशौ सम्भवत इति स्थैर्याभावात्कथमनुसन्धानादिकार्ययोगोऽस्येति ।

## पिठरपाकवादिमतम्—

अपरे–पुनः प्रत्यक्षबलवत्तया घटादेरविनाशमेव पच्यमानस्य मन्यन्ते सुषिरद्रव्यारम्भाच्चान्तर्बहिश्च पाकोऽप्युपपत्स्यते दृश्यते च पक्वेऽपि कलशे निषिक्तानामपां बहिः शीतस्पर्शग्रहणमतश्च पाककाले ज्वलदनलशिखाकलाऽनुप्रवेशकृतविनाशबलादपि शिशिरतरनीरकणनिकरानुप्रवेशकृतनाशप्रसङ्गः, न चेदृशी प्रमाणदृष्टिरतः प्रकृतिसुषिरतयैव कार्यद्रव्यस्य घटादेरारम्भादन्तरन्तस्तेजःकणानुप्रवेशकृतपाकोपपत्तेरलं विनाशकल्पनया पिठरपाकपक्ष एव पेशलः,

याद‍ृगेव हि निक्षिप्तो घटः पाकाय कन्दुके(१) ।
पाकेऽपि ताद‍ृगेवासावुद्गतो दृश्यते ततः ॥

क्वचित्तु संनिवेशान्तरदर्शनं काष्ठाद्यभिघातकृतमुपपत्स्यते पावकसंपर्कस्य तत्कारित्वे तु सर्वत्र तथाभावः स्यात्, तस्मादविनष्टा एव घटादयः पच्यन्ते सोऽयं तु घटादिन्यायः शरीरे नेष्यते,

न ह्यन्नपाकस्थैर्येऽपि तत्र कुम्भादिपाकवत् ।
चयापचययुक्तं हि शरीरमुपलभ्यते ॥

तस्मात्परिमाणादिभेददर्शनान्नैकं शरीरमिति ज्वालाऽऽदिप्रत्यभिज्ञावत्तत्प्रत्यभिज्ञेति स्थितम् ।

यदप्युच्यते–अवस्थानामेव नानात्वमवस्थाता पुनरेक एव देहाख्य इति तदप्ययुक्तम्, भेदाभेदविकल्पानुपपत्तेः, यदि शरीरादव्यतिरिक्ता एव तदवस्थाः तदाऽवस्थानामप्यन्योन्यं भेदो न स्याद्, अथ व्यतिरिक्ताः शरीरादवस्थाः तर्हि भेदेन तदुपग्रहो दर्शयितव्यः, न चासावस्ति गोत्वादावनुवृत्त्या बुद्धिरनन्यथासिद्धा सती न केन चित्प्रतिहन्यते, इह पुनरवस्थान्तरैकत्वग्राहिणी बुद्धिः पूर्वनीत्या प्रमाणबाधितत्वाद् भ्रान्तेति, तस्माच्छरीरस्य भिन्नत्वात्संतानान्तरवत् स्मृत्यनुसंधानादिकार्ययोगो दुर्घट इति न तस्येच्छाऽऽदिकार्याश्रयत्वम्, इतश्च न शरीरस्य ज्ञानादियोगः परिणामित्वात्क्षीरादिवत् रूपादिमत्त्वात्तद्वदेव, अनेकसमूहस्वभावत्वात् त्रिदण्डादिवत् सन्निवेशविशिष्टत्वाच्च बाह्यभूतवत्, चैतन्यशून्यं शरीरं शरीरत्वान्मृतशरीरवत्, न शरीरधर्मश्चैतन्यमयावद्द्रव्यभावित्वात्, न च कण्ड्वादिभिर्व्यभिचारः तदुपजनापाययोर्निमित्तान्तरजन्यत्वदर्शनादिह च तदभावाद्विशेषगुणत्वे सतीति वा विशेषणोपादानान्न व्यभिचारः, तद्विशेषगुणत्वे हि चैतन्यस्य रूपादिवत्तदवस्थानादविनाशप्रसङ्गः ।

---

( १ ) कन्दुकम्—'पजावा' इति प्रसिद्धः ।

यत्तु मदशक्तिवदित्युक्तम् तत्र मदशक्तेर्दृष्टत्वादभ्युपगमो न ज्ञानस्य तत्र दर्शनम् ।

भूतचैतन्यवादनिरासः-

ननु ज्ञानमपि तदन्वयव्यतिरेकानुविधायि प्रायेण दृश्यते भूतेष्वन्नपानाद्युपयोगपुष्टेषु पट्वी चेतना भवति तद्विपर्यये विपर्ययः, ब्राह्मीघृताद्युपयोगसंस्कृते च कुमारशरीरे पटुप्रज्ञता जायते, वर्षासु च स्वेदादिनाऽतिदवीयसैव कालेन दध्याद्यवयवा एव चलन्तः पूतनादिक्रिमिरूपा उपलभ्यन्ते, चैतन्यगुरुलाघवव्यवहारोऽपि भूतातिशयसदसत्त्वकृतो भविष्यतीति भूतचैतन्यवादपक्ष एव युक्तियुक्तो लक्ष्यते,

नैतच्चारु--चेष्टेन्द्रियार्थाश्रयः शरीरं(१) वक्ष्यते तत्र तदनुग्रहादिन्द्रियानुग्रहे सति पटुकरणत्वाद्विषयग्रहणपाटवं, न हि विषयग्रहणादन्यच्चैतन्यं नाम, एतेन ब्राह्मीघृतोपयोगोऽपि व्याख्यातः, व्यापकत्वादात्मनः सर्वत्र भावे सति भोगायतनत्वेन कदा चित्केषां चिद् भूतावयवानां समुपादानतः शुक्रशोणितादिवद्दध्यवयवान्विकृतानुपादास्यते तथा च स्वेदजादिभेदे बहुभेदो भूतसर्गः प्रवर्त्तते विचित्रकर्मपरिपाकापेक्षयेति यत्किंचिदेतत् , तस्मान्न सर्वथा भूतानां चैतन्यमिति सिद्धम् ।

इन्द्रियचैतन्यवादनिरासः-

नापीन्द्रियाणि यथोक्तस्य ज्ञानादेः कार्यस्याश्रयतां प्रतिपद्यन्ते दर्शनस्पर्शनाभ्यामेकार्थग्रहणाद्(२) यमर्थमद्राक्षं चक्षुषा तमेवैतर्हि स्पर्शनेन स्पृशामि यमस्प्राक्षं स्पर्शनेन तमधुना चक्षुषा पश्यामीति कतरदिन्द्रियमेवमनुसन्दधीत न चक्षु स्पर्शाविषयत्वात् , न त्वगिन्द्रियं रूपाविषयत्वात्तस्मादुभयविषयग्रहणसमर्थः कश्चिदनुसंधाताऽस्तीति स इन्द्रियव्यतिरिक्तो गम्यते,

अमुनैव प्रसङ्गेन रूपादिव्यतिरेकिणः ।
वक्तव्या गुणिनः सिद्धिरेतद्बुद्धिनिबन्धना ॥
रूपादिषु स्वतन्त्रेषु न ह्येष प्रत्ययो भवेत् ।
न रूपमस्य विषयो न स्पर्शो न च तद् द्वयम् ॥

अतश्च न गुणव्यतिरिक्तो गुणी भेदेनाग्रहणादित्यसिद्धः परोक्तो हेतुः भेदग्रहणस्य दर्शितत्वात् , वृत्तविकल्पादीनां तु प्रतिसमाधानं सामान्यसमर्थनावसरे कथितमवयविसिद्धौ वक्ष्यते चेत्यलमवान्तरचिन्तया, इतश्च नेन्द्रियाणां चैतन्यं करणत्वाद्वास्यादिवत् , भौतिकानि चेन्द्रियाणि वर्णयिष्यामः, तेन य एष भूतचैतन्यनिराकरणे न्यायो वर्णितः स तेष्वपि योजनीयोऽतश्चैवमिन्द्रियान्तरविकारात् ,(३)

---

(१) गौतमसूत्र अ० १ आ० १ सू० ११ ।

(२) गौ० सू० अ० ३ आ० १ सू० १ (३) गौ० सू० अ० ३ आ० १ सू० १२

आम्रे हि चक्षुषा दृष्टे रसनिष्यन्दसुन्दरे ।
रसनस्य विकारः स्यान्नु दन्तोदकविप्लवः ॥
बहूनामिन्द्रियाणां च भिन्नाभिप्रायता भवेत् ।
तेनैकत्रैव सन्ताने नानाचेतनता भवेत् ॥

अतितुच्छश्चायमिन्द्रियचैतन्यपक्ष इति किमत्र बहु लिख्यते ।

## मनश्चैतन्यवादनिरासः–

ननु मनस्तर्हीच्छाऽऽदेरधिष्ठानं भविष्यति तद्धि नित्यमेकं सर्वविषयमभौतिकमिति न प्राक्तनदोषैः स्पृश्यते ? उच्यते–मनसोऽपि तदाश्रयत्वमनुपपन्नं, कुतो ? ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् मनसो हीच्छाऽऽद्याश्रयत्वे ज्ञानादौ कर्तृत्वात्तस्यापि बाह्यगन्धादिविषयज्ञानायौगपद्यानुपपत्तेस्तद्ग्रहणे घ्राणाद्यधिष्ठानपटुना केन चिदान्तरसुखदुःखादिविषयग्राहिणा स्मृत्यादिक्रियाकारिणा च करणेन भवितव्यमिति तत्रात्मसंज्ञा भवेदात्मनि च कर्तरि मनः संज्ञेति,

न चास्य बाह्यकरणैः सिध्यन्ति सकलाः क्रियाः ।
न च स्मृतिसुखेच्छाऽऽदौ (१)शक्ताः स्युश्चक्षुरादयः ॥

## चैतन्याश्रयतयाऽऽत्मनः साधनम्–

तेनेच्छासुखकृतिदुःखवेदनानामाधारो न खलु मनो न चेन्द्रियाणि ।
देहोऽपि व्रजति न तत्समाश्रयत्वं तेनान्यं पुरुषमतः प्रकल्पयामः ॥
दिक्प्रदर्शनमिदं कृतमिच्छाद्वेषयत्नसुखदुःखमतीनाम् ।
लिङ्गताकथनमात्मनि तत्र त्वस्ति हेतुनिवहो बहुरन्यः ॥
कर्तृप्रयोज्यता खलु दृष्टा दात्रादिकरणजातस्य ।
त्वक्श्रोत्राद्यपि करणं तथैव कर्त्रा प्रयुज्येत ॥
हिताहितप्राप्तिविमर्शयोग्या चेष्टा च दृष्टा नियता शरीरे ।
तच्चेतनाधिष्ठिततामुष्य गन्त्रीरथादेरिव कल्पयामः ॥
प्राणादिमारुतानामन्तश्चलतां चलाचलगतीनाम् ।
सहजनिजकर्मविकृतौ कारणमनुमीयते किञ्चित् ॥
इदं च देहादितरत्र दुर्लभं निरीक्ष्य वृद्धिक्षतभग्नरोहणम् ।
ध्रुवं ग्रहस्येव गतिः प्रकल्पते निजाश्रमक्षेमपरायणो नरः ॥
युक्तं च नैवं मनसा ह्यनधिष्ठितानां स्वार्थप्रमाकरणकौशलमिन्द्रियाणाम् ।
स्यात्कश्चिदिष्टविषयानुगुणप्रयत्नो यत्प्रेरितं सदधितिष्ठति तानि चेतः ॥
ज्ञानप्रयत्नादिमतोऽथ कस्य दृष्टान्तता स्यात्करणादिलिङ्गे ।
कार्ये च नः पर्यनुयोग एव सामान्यमात्रस्य तथापि सिद्धेः ॥

---

(१) 'शक्तानिचक्षुरादीनि' ख० पु० पा० ।

प्रत्यक्षादिप्रमाणैर्यो व्यवहारः स चात्मना ।
विना नित्येन नेत्येवं ततस्तस्य प्रकल्पनम् ॥
यत्प्रत्यक्षं प्रत्यभिज्ञास्वभावं ज्ञात्रन्यश्चेत्तस्य न ह्यात्मलाभः ।
ग्राह्यस्यैक्यं यद्वदर्थस्य तस्मात्सिद्ध्यत्येवं ग्राहकस्यापि पुंसः ॥
अविनाभावग्रहणं लिङ्गज्ञानं तदन्वयस्मरणम् ।
लिङ्गिप्रमितिरितीदं न बोद्धृभेदेऽनुमानं स्यात् ॥
ज्ञाते वनेचरमुखादतिदेशवाक्ये दृष्टे मृगे विपिनवर्त्तिनि गोसदृक्षे ।
तत्संज्ञतामितिफलं लभते प्रमातृभेदे न चेद् मुपमानमितिप्रतिष्ठम् ॥
वर्णानां श्रवणं क्रमेण समयस्मृत्या पदार्थग्रह-
स्तत्संस्कारजमन्त्यवर्णकलनाकाले तदालोचनम् ।
आकाङ्क्षादिनिबन्धनान्वयकृतं वाक्यार्थसम्पिण्डनं-
ज्ञात्रैकेन विनाऽतिदुर्घटमतो नित्यात्मसिद्धिर्ध्रुवम् ॥
मयेदं पूर्वेद्युर्विहितमिदमन्येद्युरपरं विधातव्यं चेति श्रुतिकृषिवणिज्यादिषु जनाः ।
यदेवं चेष्टन्ते निपुणमनुसन्धाय तदमी ध्रुवं सर्वावस्थानुगतमवगच्छन्ति पुरुषम् ॥
इत्यादि लक्षणमवादि तदेतदिच्छाद्वेषप्रयत्नसुखदुःखसमाश्रयत्वम् ।
तत्सङ्गिनं तदिह हेयतया व्यवस्येत्तद्विप्रयुक्तमधिगम्यतया मुमुक्षुः ॥

### विज्ञानात्मवादिनः पूर्वपक्षः—

अथो तथागताः प्राहुः किं पुंसा कल्पितेन वा ।
ज्ञानमात्रेण पूर्वोक्तो व्यवहारोऽवकल्पते ॥
ज्ञानं किमात्मवन्नित्यं सौगतैरुपगम्यते ।
प्राग्दर्शितानुसन्धानस्मरणादिक्रियाक्षमम् ॥
ज्ञानं बौद्धगृहे तावत्कुतो नित्यं भविष्यति ।
अन्येऽपि सर्वे संस्काराः क्षणिका इति गृह्यताम् ॥
क्षणिकं चेष्यते कार्यं न क्वचित्किञ्चिदाश्रितम् ।
स्वतन्त्रं ज्ञानमेवातो नान्यस्तेनाऽनुमीयते ॥
ज्ञानस्यैव प्रभेदोऽयमिच्छाद्वेषसुखादिकः ।
न वस्त्वन्तरमित्येवं न ततोऽप्यन्यकल्पनम् ॥
गुणत्वमपि नास्त्यस्य यतोऽधिष्ठानकल्पना ।
न गुणव्यतिरिक्तश्च गुणी नामास्ति कश्चन ॥
निराश्रयेषु विज्ञानस्कन्धेषु क्षणभङ्गिषु ।
कथं स्मृत्यादि कार्यं वा परलोकोऽपि वा कथम् ॥

सत्यपि वा परलोके कथमकृताभ्यागमकृतविप्रणाशौ पराक्रियेते, येन हि

ज्ञानेन चैत्यवन्दनादि कर्म कृतं तस्य विनाशान्न तत्फलापभोगो, यस्य च फलोपभोगः तेन न तत्कर्म कृतमिति, नैष दोषः—कार्यकारणभावस्य नियामकत्वादनादिप्रबन्धप्रवृत्तो हि ज्ञानानां हेतुफलभावप्रवाहः, एष एव च सन्तान इत्युच्यते, तत्कृतश्चायमनुसंधानादिकार्यनियमः, सन्तानानादित्वादविच्छेदाच्च परलोकोऽपि न क्लिष्टकल्पनः, यद्यपि च सन्तत्यन्तरपतितज्ञानजन्यमपि सन्तत्यन्तरे ज्ञानं दृश्यते तथाऽपि न तादृशः कार्यकारणभावेन सन्तानव्यवहारः प्रतिसन्धानादिकार्यनिर्वाहो वा किन्तूपादानरूपतद्विशेषणनिबन्धन एवैष निर्वहति नियमः, तस्मिन्नेव सति स्वरूपसन्तानविभागोऽवकल्पते,

स्मृतिवत्परिहर्त्तव्यौ कृतनाशाकृतागमौ ।
तत्सन्तानोपसंक्रान्त्या कुसुमे बीजरागवत् ॥

आह च—

यस्मिन्नेव च सन्तान आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥

नित्यस्त्वात्माऽभ्युपगम्यमानो यदि सुखादिजन्मना विकृतमनुभवति तदयं नित्य एव धर्मादिवदुक्तः स्यात्, निर्विकारत्वे तु सताऽसता वा सुखदुःखादिना कर्मफलेन कस्तस्य विशेष इति कर्मवैफल्यमेव, तदुक्तम्—

वर्षातपाभ्यां किं व्योम्नः चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः ॥ इति ।

तस्मादुत्सृज्यतामेष मूर्धाभिषिक्तो प्रथमो मोहः आत्मग्रहो नाम, तन्निवृत्त्या चात्मीयग्रहोऽपि विरंस्यति अहमेव न किं ममेति, तदिदमहंकारममकारग्रन्थिप्रहाणेन नैरात्म्यदर्शनमेव निर्वाणद्वारमालम्ब्यताम्, तस्य स मार्गः क्षणिकपदार्थनिश्चयः, क्षणिकेषु हि सर्वभावेषु निराश्रयेषु ज्ञानस्याप्याश्रयविरहात्कुतस्त्यमात्मकल्पनमिति ।

## सर्वभावानां क्षणिकत्वम्—

कथं पुनरेष सकलप्रमाऽतीतः क्षणिकपदार्थवादः शक्यते शाक्यैरभ्युपगन्तुम्?

न खलु क्षणभङ्गित्वे भावानामक्षजा मतिः ।
न भूमिरनुमानस्य विकल्पनियतस्थितेः ॥
स्मरणप्रत्यभिज्ञाने प्रत्युत स्थैर्यसाधके ।
एवं च वञ्चनामात्रमाशुनाशित्वदेशना ॥

उच्यते—प्रत्यक्षगम्यं क्षणिकत्वं भवति न भवत्येष करिष्यते विचारः, अनुमानं तु संप्रत्येवमभिधीयते—सत्त्वात्क्षणिकाः पदार्था इति, सत्त्वं तावदर्थक्रियाकारित्वमुच्यते, यथाऽर्थमर्थक्रियासमर्थं यत्तदेव परमार्थसदिति, सत्प्रत्य-

यगम्यत्वे हि सत्त्वे (१)केशोण्ड्रकादेरपि सत्त्वप्रसङ्गः, सत्तासंबन्धे सत्त्वे सामान्यादीनां तदसंबन्धादसत्त्वं स्याद् , अर्थक्रियासामर्थ्यसत्त्वानुवर्त्ती च लौकिको व्यवहारः सत्यपि पुत्रे तत्कार्यादर्शनादपुत्रा वयमिति व्यपदिशन्ति लौकिकाः, पुत्रादन्यस्मिन्नपि तत्कार्यकारिणि सति सपुत्रा वयमिति च ब्रुवते, तस्मादर्थक्रियाकारित्वमेव सत्त्वम् , भवत्वेवं-तस्य तु कुत्र कथं वा क्षणिकत्वेन व्याप्तिग्रहणम् ? कुत्रेति यत्पृच्छसि यत्र रोचते महाभागाय घटे पटे वा गृह्यतां व्याप्तिः, किं साध्यधर्मिण्येव व्याप्तिग्रहणमुपपद्यते ? धीमन् ! कोऽत्र प्रमादः, न हि दैवनिर्मितः कश्चित्साध्यधर्मी नाम, ग्रहीतुं शक्यते चेद्व्याप्तिः यत्र तत्र सा गृह्यतामिति, तदुच्यते-भावानां हि सत्त्वं क्षण (क्रम)यौगपद्याभ्यां व्याप्तम्,

नित्येषु च पदार्थेषु व्यापकानुपलम्भनात् ।
तद्व्याप्तमपि सत्त्वं हि बलात्तेभ्यो निवर्त्तते ॥
न च राशिस्तृतीयोऽस्ति तेन गत्यन्तरक्षयात् ।
क्षणिकानेव तान्भावान् सत्त्वं समवलम्बते ॥
तच्च स्वग्राहकाद्बोधादसन्दिग्धं प्रतीयते ।
ज्ञानोत्पत्त्यैव तद्धेतोरसामर्थ्ये पराकृते ॥
असमर्थात्समुत्पादो दृश्यते न हि कस्य चित् ।
शक्ताशक्तप्रसक्तत्वे तत्र बोधोऽस्ति संशयः ॥
अत एव च तज्ज्ञानं प्रमाणं जगदुः स्वतः ।
स्वरूपे शक्तिजत्वे तु संशयादेरसंभवात् ॥

किमिदं रजतमुत शुक्तिकेति विशेषांशे संशेरतां नाम प्रमातारः, न तु सामर्थ्यं प्रति दोला का चित्संभवति, किमिदं ज्ञानं समथन जनितमुत तदितरेणेत्यसमर्थस्य जनकत्वानुपपत्तेः, व्यापकानुपलम्भस्यापि व्याप्तिग्राहिणः स्वतः प्रामाण्यम् , संशयविपर्ययोस्तत्राप्यभावात् ,

कथं पुनर्नित्येषु पदार्थेषु सत्त्वव्यापकयोः क्रमयौगपद्ययोरनुपलम्भः ? उच्यते-नित्यो हि भावः क्रमेण वा कार्यं कुर्याद्यौगपद्येन वा, परस्परविरहस्थितात्मनां तृतीयप्रकारानुपपत्तेः,

न तावत्क्रमेण, स हि समर्थो वा ऽसमर्थो वा ? समर्थश्चेत्क्रमेण कथं समर्थस्य क्षेपा(२)योगाद् , असमर्थस्त्वसमर्थत्वादेव न करोति किं चिदिति तस्यापि किं क्रमे-

( १ ) चिरकालाध्ययनखिन्नस्योत्थितस्य नीललोहितादिगुणविशिष्टः कश्चिन्नयनस्याग्रे परिस्फुरति, अथ वा करसंमृदितलोचनरश्मिषु येयं केशपिण्डावस्था स केशोण्ड्रकः, केशसमूहो वा केशोण्ड्रकः, स च मिथ्यैव तस्यापि सत्त्वं स्यादिति भावः ।

( २ ) क्षेपो विलम्बः ।

ण ? सहकार्यपेक्षया करोतीति चेद् न—असमर्थस्य सहकारिणा ऽपि सामर्थ्याधानानुपपत्तेः, समर्थस्य स्वत एव सामर्थ्ये सति सहकारित्ववैयर्थ्यात् , सहकारिसन्निधानेऽपि चास्य स्वरूपेण वा कर्तृत्वं स्यात्पररूपेण वा ? स्वरूपस्य च प्रागपि भावात्तस्य च कारकत्वात् किं सहकारिणा, पररूपेण कर्तृत्वे पूर्वरूपपरित्यागात्तद्रूपान्तरापत्तेश्च क्षणिकत्वमुपपद्यते, एवं सहकार्यपि समर्थासमर्थतया विकल्पनीयः, स्वतोऽपि सामर्थ्ये किं परोपकरणदैन्येन, असमर्थस्य तु सचिवः किमागत्यापि सर्वत्र कार्ये साचिव्यमुपगच्छेत् ?

किंचित्करश्चेद्वक्तव्यं किं करोतीति, उपकारमिति चेत्स उपक्रियमाणाद्भिन्नोऽभिन्नो वा ? अभिन्नश्चेत्स एव कृतः स्यात् , भेदे तस्य किमायातं यदसौ न पूर्ववदास्ते, कार्यादपि भेदाभेदाभ्यां चिन्त्य उपकारः, न कार्याद्भिन्नोऽनुपलम्भाद् द्वयकारणभावाच्च, कार्यादव्यतिरिक्ते तूपकारे सहकारिणा क्रियमाणे कार्यमेव तेन कृतं स्यादिति मूलकारणानर्थक्यम् ,

ननु चैक एव भावः कारकः स एव हि समर्थस्तदितरपदार्थसन्निधानं तु स्वहेतुवशादुपनतमिति नोपालम्भमर्हति,

नैतद्युक्तमेकस्य कदा चिदपि कारकत्वानुपलब्धेस्तत्सामर्थ्यस्य दुरधिगमत्वात् , एवं ह्यसौ समर्थ उच्यते यद्येकः कदा चित्कार्यमुत्पादयन्दृश्येत न तु विस्मृत्यापि दृश्यते,

अथ कार्यस्यायं स्वभावो यदेकस्मान्नोत्पद्यते कारणं तु शक्तमेवेति ?

तदप्ययुक्तम्—कार्यस्वभावपराधीनत्वेन कारणस्य सामर्थ्यविरहप्रङ्गात् , एवं ह्यसौ समर्थः कथ्येत यदि कार्यस्वभावमनादृत्य स्वतन्त्र एक एव प्रसह्य कार्यं जनयेन्न चैवं दृश्यत इति यत्किंचिदेतत् ,

अथ समर्थमेव कारणं तस्य त्वयं स्वभावो यत्सहसैव कार्यं न करोति कतिपयक्षणव्यवधाने तु करोतीति,

यद्येवं न कदाचित्कार्योत्पादः स्यात् , कार्योत्पादसमयेऽपि कतिपयक्षणव्यवहितकार्यजननस्वभावानपायात् , पुनः कतिपयक्षणाद्यवेक्षणं स्यात् , तेष्वपि कतिपयेषु क्षणेष्वतिक्रान्तेषु स एवास्य स्वभावस्तदवस्थ इति पुनरप्येवं भवेदिति कदा नाम कार्यं जनयेत् ? तदेवमादिदोषोपहतत्वान्न क्रमेण भावानामर्थक्रियासामर्थ्यम् ,

नापि युगपद् , लोके तथा व्यवहारादर्शनात् , युगपत्कृतकस्यापि स्थिरस्य पुनरकरणे हेत्वभावः, पुनश्च कुर्वन्नपि भावः कार्यं न तदेव कुर्यात् , कृतस्य करणायोगात् , कार्यान्तरकरणे तु स एवायं पुनः क्रमपक्ष आपतेदित्येवं क्रमयौगपद्ये नित्येभ्यः पदार्थेभ्यः निवर्तेते , ते च निवर्तमाने सत्त्वस्य व्यापके इति सत्त्वं तेभ्य आदायैव निवर्त्तेते , तेभ्यः प्रच्युतं सत्त्वं गत्यन्तरविरहात्क्षणिकेष्वेव

निविशते(१), अतो यद्यपि कार्ये हेतौ धूमाग्न्योरिव स्वभावहेतावपि वा क चिद् वृक्षत्वशिंशपात्वयोरिव पूर्वमिह साध्यसाधनधर्मयोर्ग्रहणं धर्म्यन्तरे न वृत्तं तथाऽपि साध्यधर्मिण्येव व्याप्तिग्रहणमुपपत्स्यते विपक्षव्यावृत्तेः सुपरिनिश्चितत्वात्, यैव च विपक्षाद्व्यावृत्तिः स एव चास्य हेतोः स्वसाध्येनान्वयः, न ह्येवं संभवति नित्येभ्यश्च व्यावृत्तं सत्त्वं क्षणिकेषु च न निष्ठमिति, तृतीयराश्यभावान्निराश्रयत्वानुपपत्तेश्च, तदेवं क चिद्धर्मिणि व्याप्तौ गृहीतायां यदि स एव कदा चित्परं प्रति दृष्टान्तीक्रियते तदैवं नाम भवतु को दोष इति,

ननु व्यापकानुपलब्धेरनुमानमनुमानेन चानुमानस्य व्याप्तिग्रहणे ऽनवस्था?

नानवस्था, तावत्येव पर्यवसानात्, न हि व्यापकानुपलब्धेरनुमानान्तराद्व्याप्तिनिश्चयः, किं तु प्रत्यक्षविकल्पादेव, तदनया व्याप्तिनिश्चयात्सिद्धमेतद्यत्सत्तत्क्षणिकमिति,

अन्ये तु नीत्यन्तरेण व्याप्तिनिश्चयमाचक्षते—विरुद्धयोरेकपरिच्छेदेऽन्यतरनिवृत्तिरवश्यंभाविना विरुद्धत्वादेव, विरुद्धे च सत्त्वनित्यत्वे पूर्वोक्तयैव नीत्या, (२)सत्त्वं च विस्पष्टमुपलभ्यते भावानामिति तदुपलम्भान्नित्यत्वनिवृत्तिः, नित्यत्वनिवृत्तेरेव क्षणिकत्वनिश्चयः, प्रकारान्तराभावाद्,

ननु शीतोष्णयोः पृथगुपलम्भाद्विरोधनिश्चये युक्त एकग्रहणे द्वितीयव्युदासः, इह तु सत्त्वमेवोपलभ्यते न नित्यत्वमिति कथं तद्विरोधादितरव्यावृत्तिः?

नैष दोषः, पृथगुभयानुपलम्भेऽपि सत्त्वबुद्ध्यैव नित्यत्वनिराससिद्धेः, कथमन्यविषयबुद्धिरन्यमुदस्यति? उच्यते—

द्विचन्द्रदर्शनस्यैकशशभृद्बिम्बवेदिनी ।
धीरतद्विषयत्वेऽपि तद्व्यवच्छेदकारिणी ॥
सत्त्वं नानास्वभावत्वं स्थैर्यमेकस्वभावता ।
तयोर्विरोधो युक्त्याऽपि वक्तुं न हि न शक्यते ॥

तस्मात्सत्त्वप्रतीतेरेव नित्यत्वनिवृत्तिः, सैव च क्षणिकत्वव्याप्तिरिति सिद्धं सत्त्वात्क्षणिकत्वम् ।

अपि च सर्वदा कार्यानुत्पादात्कारकावस्था नूनमेकक्षणस्थायिनी भावा-

---

(१) निविशत इति—अयम्भावः सत्त्वमर्थक्रियाकारित्वं न तु सत्तायोगित्वम् सामान्यादौ सत्तायोगित्वाभावेनासत्त्वप्रसङ्गात, तच क्रमयौगपद्याभ्यां व्याप्तं ते च नित्येषु न सम्भवतः इतिसत्त्वव्यापकयोः क्रमयौगपद्ययोर्नित्येषु निवृत्त्या सत्त्वमपि निवर्तते इति क्षणिकेष्वेव सत्त्वं पर्यवस्यताति ।

(२) नीत्येति । सत्त्वव्यापकयोः क्रमयौगपद्ययोर्नित्ये निवृत्त्या सत्त्वस्यापि निवृत्तिरिति रीत्येत्यर्थः । तेन सत्त्वनित्ययोर्विरुद्धत्वमिति भावः ।

नामुपगन्तव्या व्यापारावेशवशेन वा श्रोत्रियादिपक्षे, सहकार्यादिसन्निधानापादनेन वा नैयायिकादिपक्षे, कारकत्वं नाम वस्तुनो रूपमेकक्षणवृत्त्येव कार्योत्पत्त्यैव तत्कल्पनात्, ततः पूर्वमुत्तरकालं वा कारकायोगात्, कारकत्वमेव च परमार्थसद्कारकस्य ज्ञानजनकत्वाभावादस्तित्वमपि दुर्वचमतश्च सर्ववादिभिरेव प्रायेण क्षणिकत्वमिदमभ्युपगतमिति यश एव केवलं सौगताः पीतवन्तः, तस्मात्सिद्धं यत्कारकं यच्च सत्तत्क्षणिकमिति,

अतश्च क्षणभङ्गिनो भावाः प्रलयं प्रति हेतुनिरपेक्षत्वात्, भावो हि स्वतो नश्वरात्मा भवेत्तद्विपरीतो वा—

विनश्वरस्वभावेऽस्मिन् कृतं प्रलयहेतुभिः ।
अनश्वरस्वभावेऽपि कृतं प्रलयहेतुभिः ॥

क तर्हि मुद्गरादीनां व्यापारः? विजातीयसन्ततिजन्मनीति ब्रूमः, अभावस्तु तज्जन्यो न संभवत्येव प्रमाणविरुद्धत्वात्, भावो हि स्वरूपेण न भवति न त्वभावोऽपि भवतीति, स्वरूपं भवनात्मकं चेत्सर्वदैव भवेदेव न न भवेत्, अभावात्मकं तु तदेव न भवेत्परापेक्षाया अभावात्, न हि मुद्गरादिकारणान्तरसापेक्षः कुम्भादेर्विनाशो भवितुमर्हत्युत्पत्ताविव नाशेऽपि समर्थासमर्थभिन्नाभिन्नोपकारिसहकार्यादिविकल्पकलापानपायात्,

अथ कतिपयक्षणव्यवहितविनाशस्वभावो भाव इष्यते तर्हि प्राक्तननयेन कदा चिदपि न विनश्येत्, विनाशसमयेऽपि तत्स्वभावानपायेन पुनः कतिपयक्षणापेक्षणप्रसङ्गात्, अपि च यदाऽपि तेन नष्टव्यं तदाऽप्यस्य न स्वरूपादतिरिक्तः कश्चन विनाशहेतुरवतरति, तच्च स्वरूपाद्यपेक्षणे तस्य तादृशमेवेति तदैव वा नश्येन्न कदा चिद्वा,

अथ मृत्योरपक्रान्तस्तस्य चेत्प्रथमः क्षणः ।
अविनाशिस्वभावत्वादास्तां युगशतान्यपि ॥

न चैवमभ्युपगम्यते, तस्मादात्मलाभाविनाभावो भावानां विनाश इति सिद्धः क्षणभङ्गः ।

## क्षणभङ्गे प्रत्यभिज्ञाया अबाधकत्वकथनम् ।

यदपि क्षणभङ्गसाधनस्य पदार्थस्थैर्यावसायि प्रत्यभिज्ञानमनुमानस्य बाधकमभिधीयते, तदपि न पेशलमशिथिलप्रतिबन्धहेतौ बाधकस्य निरवकाशत्वात्, उक्तं हि–'बाधाविनाभावयोर्विरोधान्नैकत्र समावेश' इति, अनुष्णस्तेजोऽवयवी कृतकत्वादित्यत्रापि प्रतिबन्धवैधुर्यमेव साध्यसिद्धिं विरुणद्धि नाध्यक्षबाध्यत्वम्, अथ वा किमनेन निर्बन्धनेन–

अग्निशैत्यानुमानादौ युक्तं प्रत्यक्षबाधनम् ।
तस्य ह्यनन्यथासिद्धेरिह त्वेवं न युज्यते ॥

प्रत्यभिज्ञायाः क्षणभङ्गपक्षेऽपि सदृशपरापरक्षणगणप्रसवप्रतारितमतीनामुपलभ्यमानत्वात्, एवं च सति—

यदि हि व्याप्तिशैथिल्यं सिद्धं किं प्रत्यभिज्ञया।
अथ न व्याप्तिशैथिल्यं सिद्धं किं प्रत्यभिज्ञया॥

न च प्रत्यभिज्ञैव व्याप्तिविप्लवकारणमितरेतराश्रयप्रसङ्गात्, व्याप्तिविप्लवेनानुमाने न्यग्भूते प्रत्यभिज्ञा प्रमाणं भवति तस्यां च प्रमाणीभूतायां व्याप्तिवैधुर्यादनुमानाप्रामाण्यम्, अनुमानप्रामाण्येऽपि समानो दोष इति चेन्न, तस्य प्रतिबन्धमहिम्नैव प्रामाण्यसिद्धेः, न हि तस्य प्रतिभिज्ञादौर्बल्यनिबन्धनं प्रामाण्यम्।

प्रत्यभिज्ञास्वरूपनिरूपणम्।

अपि च केयं प्रत्यभिज्ञा नामेति नैपुण्येन निरूपयितुमर्हन्त्यत्र भवन्तः, किं स एवायं कुम्भ इत्येकं ज्ञानमुत द्वे एते स्मृत्यनुभवज्ञाने? यद्येकं तदस्य कारणं वाच्यं यत उत्पद्यते? नेन्द्रियं स इत्यस्मिन्नंशे तस्यासामर्थ्यात्, न संस्कारस्तस्याप्ययमित्यंशे कौशलाभावात्,

उभाभ्यां न च सम्भूय तज्ज्ञानमुपजन्यते।
पृथक् पृथक् स्वकार्ये हि निर्ज्ञातं कौशलं तयोः॥

संस्कारस्य स्मृतिरेव कार्यमिन्द्रियस्यानुभव एव, संभूय न ताभ्यामेकं कार्यमारभ्यते, न हि मृत्पिण्डतन्तुनिर्वर्त्यमेकं घटपटरूपं कार्यमुपलब्धम्, न चेन्द्रियं केवलमीदृशि कार्ये समर्थ, यथासन्निहिताकारमात्रग्राह्यविचारकमिन्द्रियं प्रत्यभिज्ञानमातनोतीति विस्मयः! तस्माद् द्वे एते ज्ञाने, स इति स्मरणमयमित्यनुभवः,

स्मृतिः स्मर्तव्यविषया ग्रहणं ग्राह्यगोचरम्।
न तदैक्यपरामर्शि दृश्यते प्रत्ययान्तरम्॥
यथा निरन्तरोत्पन्ने घटज्ञानपटस्मृती।
न तुल्यविषये तद्वदेते अपि भविष्यतः॥
यद्वा भवतु नामेदमेकमेव हि वेदनम्।
तथाऽपि कीदृशं वस्तु स्पृशतीति परीक्ष्यताम्॥
अतीतकालयुक्तं चेत्स्मरणान्न विशिष्यते।
अनागतविशिष्टं चेत्सङ्कल्पप्रायमेव तत्॥
वर्तमानैकनिष्ठं चेत्स्थिरत्वं तर्हि सुस्थितम्।
कालत्रयपरीतं चेद्विरोधात्तत्तु दुर्लभम्॥
परस्परपरित्यागव्यवस्थितनिजात्मनाम्।
एकत्र न समावेशः कथं चिदुपपद्यते॥

यथा हि—

नीलाभावाविनाभूतलौहिताद्यपसारणम् ।
कुर्वता नीलबोधेन नीलं भवति निश्चितम् ॥

तद्वदिहापि—

तदभावाविनाभूतस्वस्वकालाद्यपोहनम् ।
वेदयन्वर्तमानार्थज्ञानं तद्ग्राहिता भवेत् ॥

एतेन पूर्वज्ञानविशिष्टार्थग्राहित्वं प्रत्यभिज्ञायाः प्रत्युक्तम्, पूर्वज्ञानस्येदानीमसत्त्वेन विशेषणत्वानुपपत्तेः, अगृहीतविशेषणायाश्च विशिष्टबुद्धेरभावाद्, अर्थोपजननापायरहितवस्तुस्वरूपग्राहिणी प्रत्यभिज्ञेत्युच्यते, तदप्ययुक्तम्, वर्तमानैकनिष्ठतायाः प्रदर्शितत्वात्, भावानां च विनाशजन्मनोर्वर्तमानो वा कालः स्यादन्यो वा ? तदन्यस्तावद् ग्रहीतुमशक्य इत्युक्तम्, वर्तमाने तु तदुत्पादविनाशकाले कथ्यमाने तद्ग्रहणात्तदविनाभूतौ भावानामुत्पादविनाशावपि गृहीतौ स्याताम्,

सेयं तपस्विनी स्थैर्यं प्रसाधयितुमागता ।
प्रत्यभिज्ञा विनाशित्वं प्रतिष्ठाप्य गमिष्यति(१) ॥

अपि च लूनपुनर्जातकेशनखादिषु सादृश्यदृश्यमानप्रत्यभिज्ञा स्तम्भादिष्वपि तद्वदेव न स्थिरतामुपपादयेत्, तत्र बाधकयोगादिति चेदिहाप्युक्त एव बाधकः परस्परविरोधिभूतादिकालसमावेशस्यैकत्र दुर्घटत्वादिति, तस्मात्प्रत्यभिज्ञाप्रत्ययस्य बाधकस्याभावात्सिद्धमानुमानिकं भावानां क्षणिकत्वम् ।

## क्षणिकत्वस्य प्रत्यक्षगम्यत्वम् ।

अपरे पुनः प्रत्यक्षगम्यमेव क्षणिकत्वमाचक्षते—

नातीतानागतौ कालौ विचारयति चाक्षुषम् ।
वर्तमानक्षणश्चैक इति तन्निष्ठमेव तत् ॥

यदि वर्त्तमानातिरिक्तग्राहि प्रत्यक्षमिष्यते तद्वक्तव्यं किं पूर्वं विज्ञानमनागतकालावच्छिन्नपदार्थग्रहणनिपुणम्, अथोत्तरज्ञानमतीतकालालिङ्गितभावाकलनकुशलमिति ? तत्राद्यज्ञानसमुपजननसमये तत्तत्क्षणातिरिक्तभाविकालासन्निधानान्न तेन तद्ग्रहणम्, अनागतग्रहणे वा कथमागामिजन्मग्रहणं न स्यादुत्तरज्ञानप्रसवसमयेऽपि भूतकालस्य भूतत्वादेव न सन्निधानमसन्निहितभूतकालग्रहणे वा पूर्वजन्मग्रहणप्रसङ्गः,

---

(१) अमुमर्थमेवाह शास्त्रदीपिकाकारः—

विवादाध्यासिता भावाः सत्त्वात्क्षणविनाशिनः ।
दीपवत्प्रत्यभिज्ञापि स्यात्प्रदीपवदेव नः ॥ इत्यनेन ।

अथ वर्तमानानुप्रवेशेन भूतभाविनोः कालयोर्ग्रहणं मन्यसे तत्र वर्तमानानुप्रवेशाद्वर्तमान एव गृहीतः स्यान्न भूतो भावी वा, अथ न कश्चिदेव कालः क चिद्गृह्यते, अर्थ एव प्रकाश्यः केवल इति,

तदयुक्तं, तदवच्छिन्नभावप्रतिभासस्य भवद्भिरेवाभ्युपगमात्,

ननु कोऽयं कालो नाम शाक्यानाम्? न कश्चिद्वास्तवः, किं काल्पनिक एव व्यवहारः—

सर्वथेन्द्रियजं ज्ञानं वर्तमानैकगोचरम् ।
पूर्वापरदशास्पर्शकौशलं नावलम्बते ॥
वर्त्तमानः कियान्काल एक एव क्षणस्ततः ।
पूर्वः क्षणोऽतीततां स्पृशत्युत्तरस्त्वनागतताम् ॥

ननु पचति पठतीति वर्तमनोऽपि वितत एव कालः प्रतीयते?

नैतत्सारम्—

न ह्यस्ति कालावयवी नानाक्षणगणात्मकः ।
वर्तमानक्षणो दीर्घ इति बालिशभाषितम् ॥

क्षणसमुदायात्मकत्वं तु नानारूपत्वमेव तस्य भवेत्, अतीतानागतक्षणात्पूर्वमूर्ध्वं वा तदस्तित्वान्नास्तित्वमपि न गृहीतमेवेति कथं क्षणिकत्वम्? क एवमाह न गृहीतं नास्तित्वमनुपलब्ध एव नास्तित्वव्यवहारात्, उपलम्भो हि भवेन्नासत्ताऽनुपलम्भाच्च नास्तित्वम्, दर्शनादर्शने एव सदसत्त्वयोर्लक्षणम्; तस्मात्क्षणान्तरं तदनुपलम्भाद् नास्तित्वमेवेत्येवं क्षणिकत्वग्राहि प्रत्यक्षमिति स्थितम्,

ननु च प्रत्यभिज्ञातो दीर्घकालत्वनिश्चयः ।
किमद्यापि न मुक्तोऽसि तत्प्रामाण्यकुतृष्णया ॥

परीक्षितं हि तस्याः स्वरूपं कार्यं कारणं च,

न शक्नोतीव सा स्थैर्यमुपपादयितुं निजम् ॥
न पूर्वा नोत्तरं ज्ञानं ग्राहि कालान्तरस्थितेः ।
तदिदं बोध्यमानोऽपि रागान्धो नावबुद्ध्यते ॥

पूर्वं हि ज्ञानं तत्कालमेव उत्तरमपि स्वकालमेव वस्तु गृह्णाति, मध्ये तु नास्त्येव ग्रहणमग्रहणमेव मध्यमाहुः,

नन्वविच्छिन्नदृष्टीनां न हि त्रुट्यदवस्थितिः ।
स्तम्भादिरवभातीति कथमेतस्य भङ्गिता ॥

नैतदेवम्, तत्राप्येकक्षणवृत्तित्वाज्ज्ञानस्य, क्षणान्तरे तु ज्ञानमेव नास्ति, कस्य विच्छिन्नसत्ता, कस्यात्रुटितसत्ता, कस्य वा बोधकम्?

नन्वस्त्येव क्षणान्तरे तु ज्ञानमविच्छिन्नत्वाद् दृष्टेरिति चेद्,

मैवम्–बुद्धेरदीर्घकालत्वाज्ज्ञानान्तरोत्पादन एवासावित्यवधारयत्वायुष्मान्,

तस्माद्यथैव सन्तानवृत्त्या ज्ञानक्षणोदयः।
तथैवोत्पाद्यतामेष स्तम्भक्षणपरम्परा॥

सोऽयमविच्छिन्नदृष्टीनामत्रुटितपदार्थसत्ताग्रहणाभिमान इत्थमुत्थितः,

स्थिरेणापि न बोधेन दीर्घग्राहस्थितिग्रहः।
न ह्यसन्निहितग्राहि प्रत्यक्षमिति वर्णितम्॥
तत्काले सन्निधिर्नास्ति क्षणयोर्भूतभाविनोः।
वर्तमानक्षणश्चैको न दीर्घत्वं प्रपद्यते॥
तेन बुद्धिस्थिरत्वेऽपि स्थैर्यमर्थस्य दुर्वचम्।
न त्वनन्तरया नीत्या तस्या अपि चिरं स्थितिः॥

साऽपि हि स्वसंवेद्यत्वादेकक्षणपरीतैव प्रकाशत इति तस्मात्क्षणिकग्राहि प्रत्यक्षमिति सिद्धम्।

## क्षणिकत्वेऽनुमानस्याबाधकत्वकथनम्।

ननु स्थैर्यं पदार्थानामनुमानात्प्रतीयते।
अन्वयव्यतिरेकाभ्यां मुद्गरादिर्विनाशकः॥
निश्चीयते घटादीनां तेन पूर्वं तदागमात्।
विनाशरहितत्वेन सिद्ध्यत्येषामवस्थितिः॥

नानुपलम्भव्यतिरिक्तस्य हेतुमतो विनाशस्यानुपपत्तेरुपलम्भ एवास्तित्वभावानामनुपलम्भाच्च नास्तित्वं, न च घटानुपलब्धिर्मुद्गरादिकार्या, ततः प्रागपि भावात्,

ननु दृशानुपलब्धेरसत्त्वनिश्चयः स च कपालकाल एव घटस्यावकल्पते मध्ये तु दर्शनमन्यथाऽपि स्यादिति नादर्शनमात्रमेव नास्तित्वं? मैवम्–त्वदभिमतोऽपि मध्ये ऽपि दृश्यस्यैव घटस्यानुपलम्भनम्, तद्वा कपालकाले ऽपि सर्वेषामिति का प्रमा? यदहं न वेद्मि, तत्परोऽपि नैवं वेत्ति चेत्तर्हि मध्येऽपि घटं सर्व एव न पश्येयुरिति नास्त्येवासौ, कपालीभूतघटवत्, अपि च–

यदि यत्त्वं न जानासि तदन्योऽपि न गम्यते।
स्वजायाजघनस्पर्शसुखमप्यधिगच्छतु॥

तदलं ते परगृहवृत्तान्तचिन्तया, यत्पश्यसि तदस्तीति जानीहि यन्न पश्यसि तन्नास्तीति विद्धि, एवमनुलम्भ एव भावानां विनाश इति न तस्य मुद्गरादिकार्यत्वमतोऽनुमानमपि न स्थैर्यसाधकम्, तस्माद्यथोक्तक्रमेण प्रत्यक्षमेव क्षणिकपदार्थपरिच्छेत्रिति स्थितम्,

स्मरणप्रत्यभिज्ञानस्वकर्मफलभोक्तृता।
क्षणिकत्वेऽपि कथितः कार्यकारणभावतः॥

तदेवमुपपन्नेयं गृह्यतां क्षणभङ्गिता ।
त्यज्यतां दीर्घसंसारकारिणः स्थिरताग्रहः(१) ॥

## क्षणभङ्गनिरासः ।

अत्राभिधीयते नैव (२)प्रमाणद्वयमप्यदः ।
भावानां क्षणभङ्गित्वमुपपादयितुं क्षमम् ॥
अर्थक्रियासमर्थत्वं सत्त्वं यत्तावदुच्यते ।
तदसत्कूटहेमादि(३)व्यभिचारावधारणात् ॥
किं त्वबाधितसद्बुद्धिगम्यता सत्त्वमिष्यते ।
सदसद्व्यपदेशस्तु (४)पुत्रादावौपचारिकः ॥

---

( १ ) अयन्तावदत्र क्षणभङ्गवादिमतनिष्कर्षः ।

अर्थक्रियाकारित्वं सत्त्वं तच्च क्रमाक्रमाभ्यां व्याप्तम् क्रमाक्रमौ च क्षणिकत्वे एव सम्भवतः न तु स्थायित्वे ।

तथाहि—स्थायी पदार्थः सर्वाः क्रिया युगपत्कर्तुं न प्रभवति तथा सति द्वितीयक्षणे कृत्याभावात् अर्थक्रियाकारित्वाभावादसल्लक्षणापत्तेः; नापि क्रमः सम्भवति स्थायी भावो हि सर्वार्थक्रियासमर्थः किमिति कांचिदेवारभते नान्यां समर्थस्य विलम्बे कारणाभावात् । नच सहकार्यपेक्षया विलम्बत इति वाच्यम् , अकिञ्चित्कराश्चेत्सहकारिणस्तदाऽनपेक्ष्याः, किञ्चित्कराश्चेत्तदा तैरेव क्रियते ते एव कारणं तदनन्तरं कार्यनिष्पत्तेः, तस्मात् नाक्षणिकस्य सत्ता सम्भवतीति सन्मात्रानुबन्धित्वं क्षणिकत्वस्य,

किञ्च यद्येषामवश्यंभावि न तत्र हेत्वन्तरापेक्षा कृतकानां च भावानामवश्यंभावी विनाशः तेन सिद्धं घटादीनां क्षणिकत्वम् , तथाहि—ध्रुवभावित्वं हि हेत्वन्तरानपेक्षित्वव्याप्तमग्न्युष्णत्वादिषूपलब्धमिति प्रकृते विनाशस्य ध्रुवभाविता सापेक्षत्वं प्रतिक्षिपति निरपेक्षश्च विनाशः स्वाभाविको जन्मान्तरमेव भवतीति सिद्धः क्षणभङ्गः ।

किञ्च प्रयत्नरक्षितानामपि घटादीनां मुसलादिप्रहारमन्तरैव कियतापि कालेन अवयवविश्लेषवशेन विनाश उपलभ्यते स चायमुत्पत्तिप्रभृति किञ्चित्किञ्चिदन्यथात्वमन्तरेण नोपपद्यते, अभिनवपुराणावस्थयोश्च घटयोः प्रत्यक्षेणैवान्यथात्वमुपलभ्यते न चैकस्य घटस्य ननारूपत्वं सम्भवति नानात्वैकत्वयोर्विरोधात् तस्मात्प्रतिक्षणमन्यत्वं घटादेरिति क्षणिकत्वसिद्धिरित्यलम् ।

( २ ) प्रमाणद्वयं—प्रत्यक्षमनुमानं चेत्यर्थः ।

( ३ ) कूटहेम—कृत्रिमहेम ।

( ४ ) ननु अर्थक्रियासामर्थ्यमेव सत्त्वमत एव सत्यपि पुत्रे तत्कार्यादर्शनादपुत्रा वयमिति व्यपदिशन्ति लौकिकाः पुत्रादन्यस्मिन् पुत्रकार्यकारिणि सपुत्रा वयमिति च ब्रुवते तस्मादबाधितसद्बुद्धिविषयत्वं न सत्त्वमित्यत आह—पुत्रादाविति । औपचा-

एवं च बाधकाभावपर्येषण(१)परायणम् ।
न सत्त्वग्राहकं ज्ञा(मा)नं स्वतः प्रामाण्यमर्हति ॥
सत्त्वे च संशयोऽप्यस्ति सकलप्राणिसाक्षिकः ।
उपलब्धिव्यवस्थात(२) इत्येवं वर्णयिष्यते ॥
अर्थक्रियासमर्थस्य त्वदुक्तं सत्त्वमस्तु वा ।
तदपि व्याप्तिशून्यत्वान्न हेतुर्गन्धवत्त्ववत् ॥
क्षणिकस्यापि भावस्य सत्त्वं नास्त्येव, सोऽपि हि ।
क्रमेण युगपद्वाऽपि न कार्यकरणे क्षमः ॥
क्षणिकस्य क्रमः कीदृग्युगपत्करणेषु नः ।
एकवस्तुक्रमस्यापि रूपभेदः प्रसज्यते ॥
कार्याण्येकेन रूपेण भिन्नानि जनयेत्कथम् ।
रूपभेदविरोधात्तु वस्तुनो नास्तिता भवेत् ॥
स्थिते च वस्तुसद्भावे क्षणिकत्वं परीक्ष्यते ।
तदसत्त्वे तु तच्चिन्ता व्योम्नि(३) रोमन्थकेलिवत् ॥
ज्ञाने क्षणिकचिन्ता चेत्किं तस्यापि पराकृतौ ।
वदन्त्येतानि शास्त्राणि ज्ञेयाभावे च तत्कुतः ॥

अपि च–क्षणिकत्वपक्षे किमेकस्मादेकोत्पादः उत बहुभ्य एकोत्पत्तिरथैकस्मादनेकनिष्पत्तिराहो बहुभ्यो बहुसंभव इति परीक्षणीयम् , न तावदेकस्मादेकोत्पत्तिरलौकिकत्वात्, एकस्मादप्यग्नेर्भस्मधूमेन्धनविकाराद्यनेककार्योत्पाददर्शनात् कार्यसिद्धये च सर्वसहकारिसन्निधापनप्रयत्नदर्शनात् 'नैकं किंचिदेकंजनकम्' इति ग्रन्थविरोधाच्च, एतेन तृतीयः पक्षो निरस्त एकस्मादनेकनिष्पत्तिरिति, एकश्च नैकं जनयत्क्रमेण जनयेद्युगपद्वा ? न क्रमेण स्थैर्यप्रसङ्गात, न युगपददृष्टत्वात्, एकस्य चानेककार्यकरणशक्तियोगे तद्भेदान्नानात्वप्रसङ्गः,

विरुद्धधर्मयोगेऽपि यदि चैकत्वमिष्यते ।
अनेकक्षणयोगेऽपि भाव एकोऽभ्युपेयताम् ॥

अथ बहुभ्य एकोत्पादनमिति पक्ष आश्रीयते, तद्वक्तव्यं किमेतदेकं कार्यं कैर्वा बहुभिरुत्पाद्यते इति ? न ह्यस्माकमिव भवतामनेकावयवनिवहनिर्मितमवयविस्वरूपं कार्यमस्ति, संचितैः संचिता एव जन्यन्त इत्यभ्युपगमाद्, यदि

---

रिक एव सपुत्रा वयमपुत्रा वयमिति व्यवहारो न मुख्यः अबाधितसद्बुद्धिविषयत्वरूपसत्त्वस्य बाधितसद्बुद्धिविषयत्वरूपासत्त्वस्य चाभावादिति भावः ।

(१) उपलब्धीति । समानानेकधर्मोपपत्तेरिति सूत्रे इत्यर्थः ।

(२) पर्येषणम्–अन्वेषणम् ।

(३) रोमन्थकेलिः— चर्वितचर्वणम् । व्योम्नश्चवर्णासम्भवादित्यर्थः ।

चानेककार्यमेकमुच्यते तदस्य कारणभेदोपनतस्वभावनानात्वयोगादेकत्वमेव तावद्विरुध्यते, अन्यथात्वे हि न कारणाधीनं भावानां रूपमित्याकस्मिकत्वप्रसङ्गः, कारणभेदोपपादितनानात्वस्यापि यदि वैकत्वं तदस्य नानाकालयोगिनोऽप्येकत्वं स्यात्, असत्त्वं भिन्नस्वभावस्य वस्तुन इति पूर्ववद्वक्तव्यम्, लोचनालोकमनस्कारादिकारणभेदात्, कार्यमप्येकरूपं ज्ञानमिति चेन्न, तस्य भवन्मते विषयाकारग्राहकत्वस्वसंवेदनरूपभेदान्निराकारज्ञानवादिनो हि बौद्धस्य प्रतिकर्मव्यवस्थानमिष्यते जनकस्य कर्मणः प्रतिभासे स्थैर्यप्रसङ्गादेकसामग्र्यधीनत्वपक्षस्यासंभवात्, संभवेऽपि ग्राह्यनियमनिमित्तत्वाभावादिति।

अथोच्यते–किमनभ्युपगतपक्षोपमर्दनेन बहुभ्यो बहुसंभव इत्येष एव नः पक्षः, सन्तानवृत्त्या वर्तमानपूर्वसामग्रीसारूप्यमुत्तरसामग्रीमारभते विजातीयकरणानुप्रवेशे तु विरूपम्–इति,

अथ केयं सामग्री नाम ? न समग्रेभ्यो भिन्ना पृथगनुपलम्भादव्यतिरेके तु समग्र एव सामग्री, तत्र पूर्वसमुदायेनोत्तरसमुदायारम्भे तदन्तर्गतं समुदायिनमेकमेव एक उत्पादयेदेकं वा संभूयेति, तत्राद्ये पक्षे सैवेयमेकस्मादेकोत्पत्तिरुक्ता स्यात्सा च प्रतिषिद्धा,

अथैकैकफलसमुदायिनिष्पत्तौ सर्वसमुदायिनं व्यापारयेत्, क्रमेण वा यौगपद्येन वा ? तत्र क्रमपक्षे क्षणिकत्वहानिः, ये हि तत्र पञ्चदश समुदायिनः क्षणं तत्र वर्तन्ते ते तत एकं तमुत्पाद्य पुनरपरमारभेरन् पुनरन्यमिति तावत्कालप्रतीक्षणादक्षणिकत्वम्,

अथ युगपदेव सर्वनिष्पत्तौ सर्वे व्याप्रियन्ते, तर्हि(१)निकुरुम्बरूपादेव कारणादुत्पन्नमिति कारणविवेकनियमाभावाद्रूपरसादिप्रविभागो न स्यात्, इदं रूपमेष रस इति कथं निश्चीयते, चित्रमुत्पादितमिति सर्वं रूपं स्यात्सर्वो रसो, यद्वा न रूपं न रसोऽन्यदेव किंचिद्वस्त्वन्तरं स्यात्,

अथोच्यते–यद्यपि रूपरसादिसामग्री तत्सामग्र्या एव जनिका तथाऽपि कचित्किंचिदुपादानकारणमिति तत्सहकारिकारणं, तत्र रूपक्षणनिष्पत्तौ रूपस्योपादानकारणत्वादितरेषां च सहकारिकारणत्वान्न पदार्थसंकर–इति, एतदयुक्तं सर्वथा कारणत्वानपायात्, अपि च येन रूपेण रूपस्य रूपं प्रत्युपादानकारणता तेनैव यदि रसं प्रति सहकारिकारणता तदा पुनरपि रूपरसयोरविशेषः,

अथान्येन रूपेण रूपस्य रूपोपादानताऽन्येन च रससहकारितेति, तर्हि स्वभावभेदान्नानात्वं, नानात्वे त्वस्थैर्यमसत्त्वं वेत्युक्तम्,

अथ नास्त्येतयोः किंचिद्विरुद्धत्वं स्वभावयोः ।
कथं बौद्धगृहे जातस्त्वमेवमतिभाषसे ॥

---

( १ ) निकुरुम्बरूपात्–समुदायरूपात् ।

भावानां परस्परपरिहारव्यवस्थितरूपत्वमस्त्येवैषां लाक्षणिको विरोधः,

अपि च क्षणिकत्वे पदार्थानामिदमत्रोपादानकारणमिदं सहकारिकारण-मिति विशेषोऽपि दुरवगमः, तथा हि किमिदमुपादानं नाम ? किं स्वसंतान-विनाशेन बीजादिवत्कार्यजननमुपादानमुत स्वविशेषसमर्पणेनोत्पादकमिति, यदि पूर्वः पक्षः, परलोकचर्चा चार्वाकवदुपेक्षिता स्यात् ज्ञानसन्तानविनाशेन ज्ञानान्तरारम्भप्रसङ्गात् , स्वविशेषार्पणपक्षेऽपि सर्वविशेषार्पणं स्यात्कतिपयवि-शेषार्पणं वा, सर्वविशेषार्पणे निर्विकल्पकस्य नोपादानकारणं स्यात् ,

लिङ्गदर्शनजन्या च प्रतिबन्धस्मृतिः(१) कथम् ।
कथं वा रसविज्ञानं रूपज्ञानादनन्तरम् ॥

सन्तानभूयस्त्वाद्भविष्यतीति चेन्नैकप्रमात्रधीनप्रतिसन्धानोपनिबन्धनव्यव-हारप्रतिबन्धविप्लवप्रसङ्गात्, नित्यमेकमात्मानमन्तरेण सन्तानैकतायामपि ताव-दसौ व्यवहारो नावकल्पते किमुतैकत्रैव देवदत्ते सन्तानभूयस्त्वे सतीति, कति पयविशेषार्पणेन तु यद्युपादानता, तदानीं रूपमपि ज्ञानोपादानकारणतां प्रतिपद्य-ते तस्मान्नोपादानं नाम किंचित्, तन्निरासे च तद्वैलक्षण्यलक्ष्यमाणस्वरूपस्य सहकारिणोऽपि व्युदासो वेदितव्यः, अपि च—

प्रतिक्षिपसि तत्पक्षे सर्वथा सहकारिणम् ।
भिन्नाभिन्नोपकारादिविकल्पास्त्वत्प्रकल्पिताः ॥
सहकारिप्रतिक्षेपकारिणः क्वाधुना गताः ।
आं ज्ञातं युक्तिशक्त्यैव युष्माभिरुपकल्पितः ।
दोषो न बाधते युष्मान् मन्त्रोत्थापितसर्पवत् ॥

अथ वा तिष्ठतु तावदुपादानसहकारिकारणभाव एव(२)भदन्तसिद्धान्ते दुरु-पपादः, परोत्पत्तावव्याप्रियमाणमेव यदि कारणमुच्यते सर्वं सर्वस्य कारणं स्यात्,

न चालब्धात्मनस्तस्य व्यापारः परजन्मनि ।
लब्धात्मनस्तु व्यापारे स्थितिः सिद्धा क्षणान्तरे ॥

अथ ब्रूयादिदं प्रतीत्येदं प्रतीयते इतीदंप्रत्ययतामात्रमेव कार्यकारणभाव इति, तथाऽपि लब्धात्मनः क्षणस्य प्रतीतिरिति द्वितीयक्षणावस्थानमपरिहार्यमेव,

न चानन्तर्यमात्रेण कार्यकारणताग्रहः ।
अहेतुफलभावेऽपि तथाऽऽनन्तर्यदर्शनात् ॥
व्यापारस्तु परोत्पत्तौ नास्त्येव क्षणभङ्गिनः ।
न वर्तमानकालस्य न भूतस्य न भाविनः ॥

अथ मन्येथा—यथा तुलान्तयोर्नामोन्नामौ भवत एवं पूर्वोत्तरयोः क्षणयोर्ना-

---

( १ ) प्रतिबन्धस्मृतिः—व्याप्तिस्मृतिः ।

( २ ) भदन्तसिद्धान्ते—बौद्धसिद्धान्ते ।

शोत्पादावित्येवं पूर्वक्षणविनाशेनोत्तरक्षणनिर्वृत्तेरियतैव कार्यकारणभावमश्नुवीयाताम्–इति,

तदप्यमनोरमम्–न ह्ययमायुष्मतामस्त्यवधृतस्तुलान्तदृष्टान्तः—

तत्रान्यदेव हेमादि नामोन्नामनिबन्धनम् ।
तन्नामो न तु नामैव तेन वा स विधीयते ॥

इहापि न पूर्वेण क्षणेन नापि तद्विशेषेणोत्तरः क्षण उत्पद्यते, न च हेमस्थानीयमिहान्यदस्तीत्यनुत्पत्तिरेवावशिष्यते,

सर्वथा परनिष्पत्तौ निर्व्यापारं न कारणम् ।
सव्यापारस्य कर्तृत्वे क्षणिकत्वं तु दुर्घटम् ॥
इत्थं च सत्त्वं व्यावृत्तं क्षणिकेभ्यो विशेषतः ।
तेनासाधारणत्वेन यायात्संशयहेतुताम् ॥

## क्षणिकत्वहेतोर्विरुद्धत्वम्

अथ वा लब्धात्मनः पदार्थस्य परोत्पत्तौ व्याप्रियमाणत्वेन कारणत्वावधारणाद् द्वित्रिक्षणस्थायित्वमवश्यमनन्तरनीत्या भवेदिति प्रत्युत सत्त्वादक्षणिकत्वसिद्धेर्विरुद्धोऽयं हेतुः, अतश्चवं नित्यानामेवार्थक्रियाकारित्वोपपत्तेः, समवाय्यसमवायिनिमित्तभेदेन त्रिविधा कारणसामग्री परस्परसंसर्गमागत्य यथासन्निधानं काय प्रसूत इति कृतं क्रमयौगपद्यविकल्पैस्तावकैः यदेवाविकलसामग्री तदैव कार्योत्पत्तिः,

अत एव च कार्याणां युगपन्न समुद्भवः ।
न चापि कृत्वा करणं सामग्री हि न सर्वदा ॥
प्राणिकर्मविपाकोऽपि सामग्र्यन्तर्गतो नवः ।
सर्वत्र सुखदुःखादिहेतुस्त्वत्रोपपाद्यते ॥

न च समग्रव्यतिरेकाव्यतिरेकविकल्पोऽस्मत्पक्षे सामग्रीं बाधते समग्रधर्मत्वात्सामग्र्याः समग्रापेक्षया च सामग्र्येव तमबर्थातिशययोगात्कारणमिति(१) प्रमाणसामान्यलक्षणे निर्णीतम्,

---

(१) ननु प्रमीयते येन तत्प्रमाणमिति करणसाधनोऽयं प्रमाणशब्दः । करणं च साधकतमं तमबर्थश्चातिशयः । स चापेक्षिकः साधकान्तरसम्भवे तदितरापेक्षयाऽतिशययोगात्किंचित्साधकतममुच्यते । सामग्र्याश्चैकत्वात् तदतिरिक्तसाधकान्तरानुपलम्भात् किमपेक्षमस्या अतिशयं ब्रवीषि, अत्रोच्यते–यत एव साधकतमं करणं करणसंनिधानश्च प्रमाणशब्दः तत एव सामग्र्याः प्रमाणत्वं युक्तम् । तद्व्यतिरेकेण कारकान्तरे क्वचिदपि तमबर्थसंस्पर्शानुपपत्तेः । फलोत्पादाविनाभाविस्वभावत्वमतिशयः, स च सामग्र्यन्तर्गतस्य न कस्यचिदेकस्य कारणस्य कथयितुं पार्यते सामग्र्यास्तु सोऽतिशयः सुवच इति ग्रन्थेनेति शेषः ।

समर्थत्वासमर्थत्वविकल्पेऽपि प्रसङ्गतः ।
सामग्र्या एव सामर्थ्यं ततः कार्यस्य दर्शनात् ।

तदन्तर्गतस्य तु कारकजातस्य शकटाद्यङ्गस्येव सामर्थ्यं यावत्तावदभ्युपगतमेव तदपेक्षस्य सामग्र्याः साधकतमत्वस्य निर्वहणं न हि भवति कृष्णाच्छुक्ल इति, अविकल्पं तु सामग्र्या एव सामर्थ्यं यदनन्तरं कार्यनिष्पत्तिरिति कार्यनिष्पत्तिदर्शनादेवावगम्यते,

यदप्येकक्षणस्थायि कारकं स्यादित्युद्घोषितं परैः, तदप्यसत्, कार्यनिष्पत्तिपर्यन्तत्वादवस्थानस्य एकेन क्षणेन तेषामेककार्यनिष्पत्तेरघटमानत्वात्, कार्यसंपत्तेरूर्ध्वं तु सामग्री विप्लवते न सामग्र्याणि तेषामेकैकशः क्वचित्क्वचिदुपलम्भाच्चक्रसूत्रदण्डादीनाम्, इत्थं स्थिराणामेव पदार्थानामर्थक्रियासामर्थ्यं समर्थितमिति न ततः क्षणभङ्गसिद्धिः,

एवं च सत्त्वनित्यत्वयोर्विरोधात्सत्त्वप्रतीत्यैव एकचन्द्रबुद्धिवत्तदितरनिराकरणमित्यादि यत्प्रलपितं तत्प्रतिक्षिप्तं भवति,

यदप्यभाणि नाशं प्रत्यनपेक्षत्वात्क्षणिकाः पदार्था इति, तदपि यत्किंचिद्दण्डादिव्यापारान्वयव्यतिरेकानुविधायिनस्तत्कार्यस्य घटाद्यभावस्य विस्तरतः प्रमाणचिन्ताऽवसरे प्रसाधितत्वात्, प्रध्वंसाभावश्च विनाश इत्युच्यते,

नश्वरानश्वरादिविकल्पास्तु न साधवः ।
सामग्र्यधीनः प्रध्वंसो भावानामात्मलाभवत् ॥

मुद्गरादिसामग्र्या घटस्य किं क्रियते ? मृत्पिण्डदण्डसामग्र्या किमस्य क्रियते ? आत्मलाभ इति चेदनयाऽप्यात्महानं करिष्यते,

ननु नश्वरत्वे तत्कारणमफलमनश्वरत्वे त्वशक्तमिति, उत्पत्तावपि तुल्योऽयं प्रलापः, भवनस्वभावश्चेद् घटः स्वत एव भवति किं दण्डादिसामग्र्या अभवनस्वभावस्तु कर्तुमशक्यः खरविषाणवदिति, कारकव्यापारकार्यत्वदर्शनादपर्यनुयोग एष इति चेद्विनाशेऽपि समः समाधिः, उत्पत्तिवद्विनाशस्यापि कारकान्वयव्यतिरेकानुविधायित्वम्,

तस्मादुत्पन्नमात्रस्य विनाशो नास्ति वस्तुनः ।
आविनाशकसद्भावादवस्थानमिति स्थितम् ॥

ननु सापेक्षाणां भावानां नावश्यंभाविता भवेदिति घटस्य विनाशहेतुर्नोपनिपतेदपि कदा चिदित्येवमसौ किं नित्य एव भवत्विति, अहो महान्प्रमाद उत्पन्नाः प्रजाः पतितो महान् वज्राशनिर्दुष्प्रतरोऽयं दोष उत्थितः यदिह घटो नित्यो भवेत्तदिह कालाग्निरुद्र इव त्रिभुवनमपि भस्मीकुर्यात्, अपि च रे मूढ ! सावयवस्याश्रितस्य कार्यस्य च नूनमवयवविभागादाश्रयविनाशाद्वा यदा कदा चिद्भवितव्यमेव विनाशेनेति कस्तन्नित्यत्वशङ्काऽवसरः, तथा हि न रामाभिषेक-

कलशमद्य यावदनुवर्तमानमीश्वरवेश्मस्वपि पश्यति लोक इत्यवश्यंभावी तस्य विनाशे हेतुः, तस्मात्सहेतुको विनाश इति न स्वत एव नश्वरो भावः ।

अपि च प्रत्यभिज्ञा स्वतेजोविभवविधूतबौद्धसिद्धान्तध्वान्तसिद्धनिर्भङ्गुरमेव भावनिवहमनिशमुपदर्शयन्ती दिनेशदीधितिदशशतविभागवती सर्वतो जाज्वलीतीति कस्तस्यां सत्यां क्षणभङ्गिनो भावानभिदध्यात् , यत् किंचन तस्य समभाषितं तत्सर्वमसमञ्जसम् ,

यत्तावदिदं कल्पितं स एवायमिति किमेकं विज्ञानमुत द्वे इति, तत्रोच्यते सामानाधिकरण्येन नैकविषयावद्योतनप्रवणैकप्रतीतिसंवेदनात्केयं द्वित्वाशङ्का योऽयंसमः यःसमोऽयमित्येकत्वावमर्शिनी, स्वतस्तु याऽनेकप्रतीतिरनुभूयते घटोऽयं पटोयमिति तत्र निरन्तरोत्पन्नघटज्ञानपटस्मरणवद्भिन्नविषयं बुद्धिद्वयमिति, यत्तु किमेकप्रतीतिजन्मनि कारणमिति,

कार्यं चेदवगम्येत किं कारणपरीक्षया ।
कार्यं चेन्नावगम्येत किं कारणपरीक्षया ॥

न च कार्यमकारणं भवितुमर्हति कार्यत्वस्यानुपपत्तेरिति भवितव्यमेव तत्र कारणेन, अस्ति च संस्कारसहितमिन्द्रियमस्याः प्रतीतेः करणं पृथक्कार्यताऽपि तयोर्दर्शनादेव, अभ्युपगतमिदं तु दृष्टत्वाद् दुरपलपम् , क चित्तु केवलेन्द्रियव्यापारकार्यदर्शनान्न सर्वस्य तथाविधस्यैव तस्य कार्यकारित्वं सहकार्यपेक्षणेन कार्यान्तरजननात् ।

## प्रत्यभिज्ञायां भूतकालस्य विषयत्वम् ।

यत्तूक्तं कीदृशोऽर्थः प्रत्यभिज्ञायामवभातीति, तत्रैते वादिनः शतकृत्वो दत्तोत्तरा अपि यत्पुनरस्माननुयुञ्जते तेन बलवदुद्विग्नाः स्मः, उक्तमत्र प्रमितयः प्रष्टव्या न तु वादिन इति, अतीतकालविशिष्टो वर्तमानकालावच्छिन्नश्चार्थ एतस्यामवभासते,

ननु पूर्वापरौ कालौ परस्परविरोधिनौ ।
नैकत्र विशतस्तेन तद्भेदाद्वस्तु भिद्यते ॥

नैतदेवम् , केयूरकिरीटकटककुण्डलादिभेदेऽपि देवदत्तस्याभेदात् , अवयव्यस्ति नास्तीति परीक्षणं वादान्तरगमनम् , अपवर्गाह्निके च विस्तरेणावयवी साधयिष्यत इत्यास्तामेतत् , कुण्डलादीनामविरोधादिति चेन्न, लाक्षणिकविरोधाभ्युपगमात्परस्परव्यवहारव्यवस्थितात्मानो हि सर्वे भावा इति वदद्भिर्भवद्भिरभ्युपेत एषां विरोधः ।

ननु केयूरादीनां विरोधेऽपि तदवस्थानादेकदेवदत्तसम्बन्धित्वमभ्युपपद्येतापि भूतवर्त्तमानयोस्तु युगपदसन्निधानात्तद्विशिष्टता स्तम्भादेरुच्यते प्रतीयते च द्वौ कालौ न च सन्निहिताविति चित्रम् , किं भूतोऽपि काल इदानीमस्ति ? नैवम्

नासावस्तीत्युच्यते अपि त्वासीदस्तीत्युच्यमानं वर्त्तमान एव न भूतः, हन्त तर्हि भूतो भूतत्वादेव नेदानीमस्तीति कथं प्रतिभासते, भूतत्वेनैवेति ब्रूमः, भूतः कालो भूततया गृह्यते वर्तमानो वर्तमानतयैवार्थस्तूभयानुगत एक एव तथा ग्रहणात्,

ननु भूतकालस्येदानीमभावात्तद्विषयं ज्ञानमनर्थजं स्यान्न धर्मिणस्तदवच्छिन्नस्य ज्ञानजनकस्य भावात्, भूतः कथमवच्छेदक इति चेत्तथा प्रतिभासात्, प्रतीतिमवमृषतु भवान्स एवायमिति यः पूर्वमासीत्स इदानीमप्यस्तीति सोऽयमतीतकालविशिष्टोऽर्थ एतस्यां बुद्धाववभासते,

नन्वसता भूतकालेन विशेषितमर्थं कथमिन्द्रियजप्रतीतिरालम्बनीकुर्य्यात्, उच्यते--

अन्त्यसंख्येयसंवित्तिकाले प्रागवलोकिताः।
यथा शतादिज्ञानानि जनयन्ति घटादयः॥
अतीतकालसंसर्गो भवन्नेव विशेषणम।
स्तम्भादिप्रत्यभिज्ञायाः कारणत्वं प्रपत्स्यते॥

संख्येयाः घटादयः सन्त्यतीतकालो नास्ति इति चेत्कपित्थेषु भक्ष्यमाणेषु किं वक्ष्यति देवानांप्रियः, शतं कपित्थानां भक्षितवान्वाहीक इति प्रतीतिदर्शनात्, न च(१)नवनवतावनुपयुक्तेषु कपित्थेष्वत्रैव शततमे शतमिति भवति यथा तत्रातिक्रान्तान्यपि नवनवतिः कपित्थानि शतप्रतीतिहेतुतामुपयान्ति प्रतिभासोपारूढत्वादेवमतीतकालयोगोऽपि प्रतिभासमानः प्रत्यभिज्ञामाधास्यतीति,

विकल्पमात्रं शतप्रत्यय इति चेद् भो महात्मन् किं वा न विकल्पमात्रम्, किन्तु जीवन्त्यमी सविकल्पकप्रामाण्यवादिनः,

यश्च सामान्यसंसिद्धौ प्रकारः प्राक् प्रदर्शितः।
योऽयः स एव द्वित्वादिसंख्यासद्भावसिद्धये॥

इत्यलं कथाक्षेपेण।

नन्वतिक्रान्तग्राहि च प्रत्यभिज्ञाविज्ञानमिन्द्रियार्थसन्निकर्षजं चेति नः कौतुकमिदं, कियत्कौतुकमर्थस्तावदस्य पुरोऽवस्थितोऽस्त्येव जनकः स्तम्भादिः, नन्वस्ति स तु वर्तमानकाल एव, न केवलं, वर्तमानकालयोगिनाऽर्थेन तत्प्रत्ययजननात्तस्य वर्तमान इवातीतोऽपि कालोऽवच्छेदकतां प्रतिपद्यते स च तदवच्छिन्नोऽर्थ इदं ज्ञानमादधातीत्यर्थजमेतदिन्द्रियजमपि भवति तद्भावाभावानुविधानात्,

---

(१) नवेति। यदा नवतिः कपित्था भुक्ता एकोऽवशिष्ट इति अवशिष्टमेकमादाय शतमितिव्यवहारो भवितुं नार्हति इति अतीतानपि कपित्थानादाय शतमिति व्यवहारः तथा अतीतकालयोगोऽपि प्रत्यभिज्ञामाधास्यतीति भावः।

नन्वतीतेऽर्थे कथमिन्द्रियं प्रवर्त्तते ? कस्यैष पर्यनुयोगः ? नेन्द्रियस्याचेतनत्वात् पुरुषस्त्वविस्फारिताक्षो नेदृशीं प्रतिपत्तिं लभते विस्फारिताक्षस्तु लभते इति सोऽपि नानुयोज्यः,

नन्वतीतग्राहित्वाद्वरमप्रामाण्यं कल्पयितुं युक्तमस्या बुद्धेरिन्द्रियस्यातीतेऽपि सामर्थ्यमदृष्टमिति, अप्रामाण्यं नाम बाधकात्प्रत्ययात्कल्प्यते न चासावस्ति प्रत्यभिज्ञायाम् अनुमानं तु तावकं प्रतिक्षिप्तम्,

ननु कारणदोषादवकल्पते एवाप्रामाण्यम्, आयुष्मन्! सोऽप्युच्यताम्, उक्त एवेन्द्रियस्यातीतविषयग्रहणे सामर्थ्यविरहः, वत्स! सम्यगुक्तवानसि नायमिन्द्रियस्य तिमिरादिरिव दोषः, अतीते काले स्वतन्त्रे तस्य सामर्थ्यं न तद्ग्राह्यवर्तमानवस्तुविशेषणीभूते, संस्कारसचिवस्य चास्य सामर्थ्यं न केवलस्येत्युक्तम्, तस्मादतिक्रान्तकालविशेषितपूर्ववर्त्तिस्तम्भादिपदार्थविषयमिन्द्रियादिसन्निकर्षोत्पन्नमेवेदं प्रत्यभिज्ञाज्ञानमिति सिद्धम्,

अथ वा पूर्वाभिज्ञानविशिष्टग्राह्यमाणमिष्यतां प्रत्यभिज्ञानं गन्धवत्कुन्दबुद्धिवद्, यथा हि लोचनगोचरेऽपि कुन्दकुसुमे तदविषयगन्धविशेषिते बाह्येन्द्रियद्वारकग्रहणमघटमानमिति मानसमेव सुरभि कुसुममिति ज्ञानम् एवं पूर्वज्ञानविशेषितस्य स्तम्भादेर्विशेषणमतीतक्षणविषय इति मानसी प्रत्यभिज्ञा पूर्वप्रवृत्तबाह्येन्द्रियोपजनितज्ञानविशिष्टबाह्यविषयग्राहिणि चान्तःकरणेऽभ्युपगम्यमाने सति नान्धाद्यभावप्रसङ्ग इति बहुशः कथितम्,

ननु कुन्दादेर्विशेषणं वर्त्तमानमस्ति सौरभम् इह त्वतीतं पूर्वविज्ञानमिति कथं विशेषणमत्र, किं तेन सता करिष्यसि शतादिबुद्धिष्वतिक्रान्तस्यापि कपित्थादेः कारणत्वदर्शनादिति तदेवमन्तःकरणजन्मनाऽपि प्रत्यभिज्ञानेन स्थैर्यमवस्थाप्यत एव भावानाम्,

### क्षणभङ्गनिरासः ।

या तु मुण्डितकेशादिप्रत्यभिज्ञानतुल्यता।
स्तम्भादिप्रत्यभिज्ञायाः कथ्यते सा(१)ऽप्यसङ्गता ॥

तत्रान्तराले मुण्डितशिरोदर्शनमेव बाधकमिह तु न किंचिदस्ति, अत एव शब्दे सदैव स्फुरन्त्या विनाशबुद्ध्या वैधुर्यमुपनीता प्रत्यभिज्ञा तु न तामवस्थापयितुं समर्थेत्युक्तम्, ज्वालादावपि तैलवर्त्तिक्षयानुमानबाधितत्वाद् भ्रान्ता प्रत्यभिज्ञा न तु तथा स्तम्भादावनुमानमपि बाधकमस्ति, सत्त्वानुमानं

---

(१) पूर्वं मुण्डितेषु पश्चादुत्पन्नेषु केशेषु त एवामी केशा इति प्रत्यभिज्ञा यथैकत्वस्य स्थिरत्वस्य वा न साधिका तद्वत्स्तम्भादिप्रत्यभिज्ञाऽपि इति तौल्यं खण्डयति–सापीति ।

तु निरस्तमेव, यद्यपि च नैष नियमः प्रत्यक्षानुमानयोर्विरोधे प्रत्यक्षं बलीय इति त्वरिततरपरिभ्रमितचक्रीभवदलातग्राहिणः प्रत्यक्षस्यानुमानबाधितत्वदर्शनादिति, तथा प्रकृतं क्षणिकत्वानुमानमन्यथासिद्धमनन्यथासिद्धं तु प्रत्यक्षमिति प्रत्यक्षमेव क्षणिकत्वानुमानस्य बाधकं, न चेतरेतराश्रयत्वमनुमानमिथ्यात्वनिबन्धनं प्रत्यभिज्ञाप्रत्यक्षप्रामाण्यानभ्युपगमात्, स्वहेतुबलवत्तयैव प्रत्यभिज्ञा प्रत्यक्षं न तस्येदं दैन्यं यदनुमानमिथ्यात्वे सति तत्प्रमाणीभविष्यतीति,

आस्तां वा प्रत्यभिज्ञानं य एष प्रथमक्षणः ।
स्तम्भादिबोधस्तेनापि बाध्यते क्षणभङ्गिता ॥

तुल्यसामग्र्यधीनत्वनिराकृतत्वात्साकारस्य निराकरिष्यमाणत्वादन्वयव्यतिरेकोपकृतमानसप्रत्यक्षनिश्चितजनकस्य चार्थस्यावभास्यत्वनिश्चयादुत्पन्नोऽर्थो ज्ञानं जनयति जातेन च ज्ञानेन गृह्यत इति बलाद् द्वित्रिक्षणावस्थायित्वमस्योपलभ्यत इति कुतः क्षणिकत्वम् ?

यदि लब्धस्वरूपोऽपि न नष्टः प्रथमे क्षणे ।
हेत्वन्तराद्विनाशोऽस्य न स्वरूपनिबन्धः ॥
विचित्रा च पदार्थानां प्रतीतिरिह दृश्यते ।
चिरन्तनमतिः काचित्काचित्तत्कालजातधीः ॥
सलिलाहरणव्यग्रकुम्भावगतिरन्यथा ।
तदैव कन्दुकाकृष्टकुम्भावगतिरन्यथा ॥
एतेन (१)रविगुप्तो ऽपि परिम्लानमुखीकृतः।
क्षणिकत्वक्षमादित्वसमुत्प्रेक्षणपण्डितः ॥

तथा हि वर्तमानवस्तुविग्रहग्राहि विज्ञानमनन्तरोक्तनयेन जनकार्थप्रतिभासनाद् द्वित्रिक्षणस्थायितामर्थस्य गमयतीत्युक्तम्, आद्यं च किंचिद्विज्ञानमनागतकालस्पर्शि भवति, यथाऽऽह भट्टः–'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते' इति, उत्तरमपि प्रत्यभिज्ञानं प्रतीतकालावच्छिन्नमर्थमवद्योतयतीति दर्शितम्,

न चातीतानागतजन्मग्रहणमाशङ्कनीयमिति कारणसामर्थ्यनियमान्न ह्यतीतानागतजन्मग्रहणमशक्यक्रियमिति यावदपि दृश्यमानं ग्रहणं तदप्यपन्होतुं युक्तम्, न चैतावताऽतीतानागतकालावच्छिन्नवर्तमानवस्तुग्रहणमात्रेण सामान्यतो दृष्टेनादृष्टमप्यतीतानागतज्ञानं कल्प्यम्, यथादर्शनं हि वस्तूनि व्यवस्थाप्यन्ते न किंचिद् दृष्ट्वाऽन्यदपि कल्प्यते दृष्टमपि वा निन्हूयत इति,

(१) रविगुप्तो नाम कश्चित् क्षणिकवादी ।

## प्रत्यक्षस्य स्थिरवस्तुग्राहकत्वम् ।

अपि च निमेषदृष्टेरत्रुटितसत्ताकस्तम्भादिपदार्थग्राहि प्रत्यक्षमुत्पद्यते तत्कथं-क्षणिकग्राहि कथ्यते,

यच्च तत्र विकल्पितमतीतानागतक्षणयोरसन्निहितत्वेन प्रत्यक्षग्राह्यताऽनुपपत्तेर्वर्त्तमानक्षणस्य चातिसूक्ष्मत्वात्तत्कालग्राहिणा प्रत्यक्षेण क्षणिकत्वं गृहीतं भवतीति, तदनुपपन्नम्, मा नाम भूदतीतानागतकालग्रहणं वर्तमान एव तत्रानिमेषदर्शनस्य कियान्काल इति चिन्त्यताम्, निमेषकृतस्यापि दर्शनविच्छेदस्यानवकाशाद्यावद्धि दर्शनं न विच्छिन्नं तावान्वर्तमानः काल इति तद्ग्रहणे स्थैर्यं गृहीतं भवति न क्षणिकत्वम्,

ननु तावानसौ कालः स क्षणसमुदायो भवति न क्षणः क्षणश्चैक एव वर्तमानो भवति न ततः पूर्वापरौ क्षणावतीतानागतौ भवतः तयोश्च न ग्रहणमित्युक्तम्, सिद्धे क्षणिकत्व एवं शक्यते वक्तुं न तु तत्साधनावसरे, कालो ह्येको नित्यो विभुरिति साधितोऽनुमानपरीक्षायाम्, न तु क्षणसमुदायात्मा कालः कालस्य तु भेदाः क्रियोपजनविनाशाद्युपनिबन्धनाः कल्प्यन्त इत्यपि तत्रैव परीक्षितम्, तदयमनिमेषदृष्टेर्दर्शनविच्छेदानुपग्रहात्तावानेकः स वर्त्तमान एव भवतु,

ननु कालो नाम न कश्चित्पारमार्थिकः पदार्थ एव परिदृश्यमानो वर्त्तमानादिव्यवहारहेतुः स च न चिरमनुभूयत इति क्षणिक उच्यते, भिक्षो ! अलमवान्तरगमनेन मा भूत्कालः पदार्थस्त्वनिमेषदृष्टिना दृष्टृ्यविच्छेदादविच्छिन्नसत्ताक एव दृश्यत इति न क्षणिकग्राहि प्रत्यक्षम्,

ननु भवद्भिरपि न स्थिरं ज्ञानमिष्यते क्षीणे च ज्ञाने सोऽर्थो द्वितीयक्षणे केन गृह्यते ज्ञानान्तरेण तु गृह्यमाणः स एवेत्यत्र को निश्चयः, अनिमेषदृष्टेर्ज्ञानं न क्षीयत एवेत्येके,

अथ वा किं न एतेन न हि विषयप्रतिभासकाले ज्ञानमवभासत इत्यसकृदुक्तं, वक्ष्यते च तत्र तत्कीदृशमिति कुतो वयं विद्मः, अर्थस्त्वविच्छिन्नसत्ताक एव गृह्यते ज्ञानं तु वर्त्तमानकालमप्यतीतानागतकालग्राहि भवति स्मरणमिव (१)प्रातिभमिव भूतभविष्यद्वृष्ट्यनुमानमिव,

---

(१) प्रातिभम्–कन्यका ब्रवीति श्वो मे भ्राता आगन्तेति हृदयं मे कथयतीति ज्ञानम् । तथाच प्रशस्तपादभाष्यम् 'आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेषु चात्ममनसोः संयोगाद्धर्मविशेषाच्च यत्प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्येत तदार्षमित्याचक्षते । तत्तु प्रस्तारेण देवर्षीणाम् कदाचिदेव लौकिकानाम् यथा कन्यका ब्रवीति श्वो मे भ्राता आगन्तेति हृदयं मे कथयतीति' इति ।

नन्विन्द्रियव्यापारो न क्षणान्तरस्थायीति तस्मिन्नसति कुतोऽस्य विततकालग्रहणम्, तदलं भवतु श्रान्तोऽसि मज्जस्वैवं ब्रुवाणः निमेषकृतोऽपि विच्छेदोऽस्य नास्ति अथ च न स्थिर इन्द्रियव्यापार इति साहसिकतामात्रम्, सन्निकर्षश्चास्य विषयग्रहणे व्यापारः स च स्थिर एव तस्माद्विततकालस्य वस्तुनः प्रत्यक्षेण ग्रहणमिति स्थितम्, एवं च स्थिते न स्वरूपमात्रमेव भावानां विनाशकारणं कारणानां च नित्यत्वमेव दण्डादीनामिति सिद्धम्,

यत्पुनरभाणि दर्शनादर्शने एव सत्त्वासत्त्वे भावानामिति तदपि व्यामूढभाषितम्, दर्शनादर्शनाभ्यामेव भावाभावयोः (१)परिच्छेदः न पुनर्दर्शनादर्शने एव भावाभावावभावश्च विस्तरतः प्राक् साधितः स च सहेतुक इति न स्वत एव विशरारवो(२)भावाः, एवं तु निष्प्रमाणे पदार्थस्थैर्यपक्षे ज्ञानं तु जनकस्य नियतस्य वस्तुनो दर्शनम् दर्शनविषयीकृतस्य प्रवृत्तिः प्रवृत्तिविषयीकृतस्य प्राप्तिरिति व्यवहारो न स्यादर्थक्षणनानात्वात्, बाध्यबाधकभावश्च क्वचिज्ज्ञानानां दृष्टः स च न स्यात्पूर्वावगतरजतादिविषयभावग्राहिणो ज्ञानस्य (३)गृहीतमुद्गरदलितघटाभावज्ञानवद्बाधकत्वानुपपत्तेः, पूर्वदृष्टस्य स्मरणं स्मृतस्य कस्यचित्प्रत्यभिज्ञानं प्रत्यभिज्ञातस्य गृहादेरर्धकृतस्य समापनमित्यादयश्च व्यवहारा विप्रलुप्येरन्।

## क्षणभङ्गभङ्गोपसंहारः।

अथ सन्तानमाश्रित्य क्रियते तत्समर्थनम्।
न तस्य भिन्नाभिन्नत्वविकल्पानुपपत्तितः॥
अभेदपक्षे क्षणवद्व्यवहारो न सिध्यति।
व्यतिरेके तु चिन्त्योऽसौ वास्तवोऽवास्तवोऽपि वा॥
अवास्तवत्वे पूर्वोक्तं कार्यं विघटते पुनः।
वास्तवत्वे स्थिरो वा स्यात्क्षणिको वेति चिन्त्यताम्॥
सन्तानिनिर्विशेषः स्यात्सन्तानः क्षणभङ्गुरः।
न सिध्येत्पुनरप्येष व्यवहारः पुरोदितः॥
अथापि नित्यं परमार्थसन्तं सन्ताननामानमुपैषि भावम्।
उत्तिष्ठ भिक्षो! फलितास्तवाशाः सोऽयं समाप्तः क्षणभङ्गवादः॥
तदेवं सति सन्तानच्छद्मनो विनिवारणात्।
लोकयात्रा स्थिरैरेव पदार्थैरुपपद्यताम्॥

---

(१) परिच्छेदः—निश्चयः। (२) विशरारवो—नश्वराः।

(३) पूर्वं गृहीतः पश्चाद् मुद्गरेण दलितो यो घटस्तदभावज्ञानस्य न पूर्वज्ञानबाधकत्वम्। पूर्वकालैकेति समासः।

एवमनन्तरनिगदितदूषणनिकुरुम्ब(१)विनिहतप्रसरम् ।
नाध्यक्षं क्षणिकत्वे न चानुमानप्रमाणं तत् ॥
क्षणभङ्गे निरस्ते च कार्यमाधारवद् ध्रुवम् ।
अतो ज्ञानादिकार्येण युक्तमाश्रयकल्पनम् ॥
सुखादेरपि कार्यस्य विज्ञानाद्व्यतिरिक्तता ।
प्रागुक्तेति तदप्यन्यद्भवत्यस्यानुमापकम् ॥
किं च नाङ्गीकरोषि त्वमात्मानं पारलौकिकम् ।
उपैषि परलोकं च किमिदं ते बकव्रतम् ॥
कर्म सन्तानिनाऽन्येन यत्कृतं चैत्यवन्दनम् ।
ततोऽद्य फलमन्येन भुज्यतेऽकृतकर्मणा ॥
न वा निर्वृतिरप्येति चैत्यवन्दनकर्मणा ।
ज्ञानक्षणेन नैकेन किंचित्कर्म समाप्यते ॥
कार्यकारणभावश्च यस्त्वदुक्तः स दूषितः ॥
कार्यकारणभावे हिं न ह्यन्तत्वं निवर्तते ।
अनैकान्तिकता चास्य सन्तानान्तरबुद्धिभिः ।
उपादानत्वरूपोऽपि विशेषः प्राङ् निराकृतः ॥
कार्पासरागसंक्रान्तिदृष्टान्तो यश्च वर्णितः ।
सोऽप्ययुक्तः स्वरूपेण तत्र तस्यैव दर्शनात् ॥
य एव रागः कार्पासे बीजे समुपकल्पितः ।
स एव दृश्यते पुष्पे न तु तस्मात्फलान्तरम् ॥
एवं कर्मानुवृत्तिः स्यात्फलभोगस्तु दुर्घटः ।
कर्मानुवृत्तिरप्येषा न चैकस्यास्ति कस्य चित् ॥
कार्यकारणयोर्भेदात्कार्पासकुसुमादिवत् ।
अन्यत्रैव हि कर्म स्यादन्यत्रैव च तत्फलम् ॥
न च सन्तानभोगाय कश्चित्कर्मानुतिष्ठति ।
फलमस्मान्ममैव स्यादिति सर्वः प्रवर्तते ॥
सर्वथा शाक्यभिक्षूणां परलोको विसंष्ठुलः ।
न तत्प्रसाधने तेषां का चिद्गमनिका ऽस्ति वा ॥
गर्भादौ प्रथमं ज्ञानं विज्ञानान्तरपूर्वकम् ।
ज्ञानत्वादित्ययं हेतुरप्रयोजक इष्यते ॥
मूर्छाद्यनन्तरोद्भूतज्ञानैश्च व्यभिचार्य्ययम् ।
मूर्छितस्यापि विज्ञानमस्तीत्येतत्तु कौतुकम् ॥

---

(१) दूषणनिकुरुम्बः–दूषणसमूहः ।

न ह्यर्थावगतेरन्यद्रूपं ज्ञानस्य किं चन ।
मूर्छादिषु कुतस्तत्स्यात्कुतो वा कललादिषु ॥
कललादिदशायां वा यदि विज्ञानमिष्यते ।
मातापितृस्थयोरस्ति शुक्रशोणितयोरपि ॥
ततश्चैकत्र संताने चैतन्यद्वयमापतेत् ।
चेतनानां बहुत्वं वा दम्पत्योर्बहुपुत्रयोः ॥
न चैष नियमो लोके सदृशात्सदृशोद्भवः ।
वृश्चिकादेः समुत्पादो गोमयादपि दृश्यते ॥
शरीरान्तरसंचारचातुर्यं च धियां कथम् ।
ज्वालादिवन्न मूर्तत्वं न च व्यापकताऽऽत्मवत् ॥
आतिवाहिकदेहेन नीयन्ते चेद्भवान्तरम् ।
नन्वातिवाहिकेऽप्यासां कथं संचारसंभवः ॥
आस्तामिवैष वा जीवद्देहेऽपि पथि गच्छताम् ।
प्रदेशान्तरसंचारो ज्ञानानां भवतः कथम् ॥
न ह्येषां भूतधर्मत्वं न स्वतो गतिशक्तिता ।
न च जात्यादिवद् वृत्तिर्न च व्यापकताऽऽत्मवत ॥
एवं यदैव निष्क्रान्तो विहारकुहराद्भवान ।
तदा कष्टी भवद्देहो ज्ञानसंक्रान्तिसंभवात् ॥
तदयं संक्षेपार्थस्त्यक्तव्यो वा निरस्य कुरुकुर्वीम् ।
सुरगुरुवत्परलोके(१) नित्यो वाऽऽत्माऽभ्युपेतव्यः ॥

यत्त्वस्य चमगगनोपमतां विकल्प्य नाशित्वमुक्तमथ वा विफलत्वमेव ।
तन्नैव साधु सुखदुःखदशोपभोगयोगेऽपि नाशमधिगच्छति नायमात्मा ॥
विकृतिश्च तस्य सुखदुःखजन्मना न हि तादृशी भवति लुप्यते यया ।
सहकारिकारणवशात्तु जायते तदमुष्य येन समुपैति भोक्तृताम् ॥
अथ वापजनव्ययस्वभावस्स्वदशाभेदसमन्वये हि पुंसः ।
फणिनः किल कुण्डलाद्यवस्थानुगतस्येव न भिन्नतेति के चित् ॥

अवस्था एवैताः प्रसभविलयातङ्कविधुराः
अवस्थाता त्वेकः स्फुरति निरपायस्थिरवपुः ।
असत्यस्मिन्पूर्वावगतिविषयानुस्मृतिभुवां
न सिद्धिः कार्याणामिति निपुणमावेदितमिदम् ॥
ननु विमृशति भोगे कर्म नित्योऽपि नात्मा

(१) परलोक इति । तथाच धर्मसंग्रहे नागार्जुनः-संजीवः कालसूत्रः संघातो रौरवो महारवस्तपनः प्रतापनोऽवीचिश्चेति, अष्टावष्णनरकाः' इति । नास्तिकत्वं तु वेदनिन्दकत्वेन 'नास्तिको वेदनिन्दक' इतिमनूक्तेः ।

न हि नरकनिमग्नो मन्यते कश्चिदेवम् ।
किल यदहमकार्षं प्राग्भवे कर्म पापं
फलमुपनतमस्माद् भुज्यते तन्मयेति ॥

कार्योपभोगसमये किमनेन कृत्यं नास्य प्रवृत्तिरधुना न निवृत्तिरस्मात् ।
यस्तु प्रवृत्तिजननौपयिकोऽपमर्शः शास्त्रादसौ भवति शास्त्रविदामवश्यम् ॥

विमर्शोऽयं पश्चादपि भवति दृष्टे तु विषये
मया यूना यत्तत्किमपि सदसद्वा कृतमभूत् ।
ततो वृद्धोऽद्याहं फलमनुभवामीति तदयं
पुमानस्ति स्थायी सुकृतफलभोगादिनिपुणः ॥

नास्त्यात्मा फलभोगमात्रमथ च स्वर्गाय चैत्यार्चनं
संस्काराः क्षणिका युगस्थितिभृतश्चैते विहाराः कृताः ।
सर्वं शून्यमिदं वसूनि गुरवे देहीति चादिश्यते
बौद्धानां चरितं किमन्यदियती दम्भस्य भूमिः परा ॥

## चार्वाकमतेन पूर्वपक्षः ।

अत्र सुशिक्षिताश्चार्वाका आहुः--यावच्छरीरमवस्थितमेकं प्रमातृतत्त्वमनुसंधानादिव्यवहारसमर्थमस्तु नाम कस्तत्र कलहायते शरीरादूर्ध्वं तु तदस्तीति किमत्र प्रमाणम् , न च पूर्वशरीरमपहाय शरीरान्तरं संक्रामति प्रमाता, यदि ह्येवं भवेत्तदिह शरीरे शैशवदशानुभूतपदार्थस्मरणवदतीतजन्मानुभूतपदार्थस्मरणमपि तस्य भवेन्न हि तस्य नित्यत्वाविशेषे च शरीरभेदाविशेषे च स्मरणविशेषे कारणमुत्पश्यामो यदिह जन्मन्येवानुभूतं स्मरति नान्यजन्मानुभूतमिति, तस्मादूर्ध्वं देहान्नास्त्येव प्रमातेति नित्यात्मवादमूलपरलोककथाकुरुकुर्वीमपास्य यथासुखमास्यताम् , यथाऽऽह—

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य शान्तस्य पुनरागमनं कुत इति ॥

## चार्वाकमतनिरासः ।

अत्रोच्यते—न खलु निपुणमिव सुशिक्षितमायुष्मता चार्वाकाचार्यचातुर्यम् , यावच्छरीरमेकमनुयायि प्रमातृतत्त्वमस्तीति यदुक्तवानसि तन्न विस्मर्तुमर्हसि, न चास्तित्वाविनाभावी भावानां विनाशः स्वाभाविकः किन्तु हेत्वन्तरनिमित्तक इति सौगतैः सह कलहमतिमात्रमधुनैव कृत्वा समर्थितोऽयमर्थः, न च विनाशहेतुः प्रमातरि चिरमपि विचार्यमाणः कश्चित्कुतश्चिदवाप्यते, न चानुपलभ्यमानोऽप्यसौ कल्पयितुं पार्यते, न ह्यात्मा पटादिरिव सावयव उपलभ्यते यदवयवविभागादिना नङ्क्ष्यतीति गम्यते, उत्पत्तिर्नात्मनो दृष्टा यत-

स्तदविनाभाविनो निरवयवस्यापि कर्मादेरिव विनाशः प्रतीयेत, न चैष कस्यचिदात्मा गुणो येनाश्रयविनाशाद्वा विरोधिगुणान्तरप्रादुर्भावाद्वा प्रध्वंसमासादयेत्, न चैवं शक्यते वक्तुं किं विनाशहेत्वनुमानेन प्रत्यक्ष एवास्य विनाशो दृश्यत इति, यतो न शरीरवदसौ दह्यमानः शकुनिभिरवलुप्यमानो वा कदाचिदुपलब्ध इति, तस्माद्विनाशादर्शनाद्विनाशहेत्वनुमानासंभवाच्च अस्ति चेदात्मा नित्य एवेत्यवधार्यताम्, तस्माद् भूतचैतन्यमेव चिरंतरचार्वकाचार्यवत्परलोकापलापपरितोषालम्बितयत्किञ्चनकारित्वसुलभसुखासिकासक्तहृदयैर्वरमाश्रितमाशरीरमवस्थिते तु प्रमातृतत्त्वे सति न फलन्त्येते परलोकापलापमनोरथाः, भूतचैतन्यपक्षोऽपि च पुरा पराकृत एव तस्मादस्ति नित्यः परलोके प्रमातेति, नित्यत्वे सति पूर्वदेहसंबन्धो भविष्यद्देहान्तरसंबन्धश्चास्य न दुरुपपादः, शरीरान्तरसंचारस्तस्य नास्तीति यदुक्तं तद्युक्तमेव व्यापिनः सर्वत्र विद्यमानस्यात्मनः कः संचारार्थः, व्यापित्व एव किं प्रमाणमिति चेत्सर्वत्र कार्योपलम्भः प्रमाणम्, यतो वाराणसीमपि गतस्य मे भवत्येव स्मरणेच्छाऽऽदिकार्ययोगः स चात्मैकप्रभवः आत्मनश्च शरीरस्येव न तत्र गमनममूर्तत्वान्न शरीरगुणवत्तदनाश्रितत्वान्न प्राणादिवदन्तःशरीरवर्तित्वाभावात्, अन्तःशरीरवृत्तित्वे हि द्वयी गतिरेकदेशवृत्तित्वं सर्वशरीरमापूर्य वा तत्र सर्वशरीरापूरकत्वे शरीरपरिमाणानुविधायित्वाद् बालशरीरयुवस्थविरशरीरवत्पूर्वनीत्या परिमाणान्यत्वेन तदन्यत्वात्पुनरपि प्रतिसन्धानादिकार्यवैधुर्यप्रसङ्गः, करिमशकशरीरयोगे च कर्मपरिणामोपनते तस्य संकोचविकासौ प्राप्नुतः तौ च नित्यस्य विरुध्येते, एकदेशवृत्तित्वे तु तदनधिष्ठितानामवयवानामनात्मकत्वान्मृतशरीरावयववदयथेष्टविनियोज्यता कष्टीभावः स्यात्, प्रदीपवदेतद्देशवृत्तेरप्यात्मनः सकलशरीराधिष्ठातृत्वमिति चेत्, वर्तिप्रदेशोपचिततेजःपिण्डवदेकत्र शरीरावयवे सविशेषचैतन्यसंवित्तिः स्यात्, अस्त्येव हृदयदेशे तदतिशय इति चेन्न, अनुपलम्भात्, दहनहिमकृपाणादिस्पर्शे हि न हृदयस्य प्रदेशान्तरस्य, वा शरीरवेदनाविशेषं पश्यामः, तस्मान्न हृत्पुण्डरीके यावदवस्थानमात्मनः अत एवा'ङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यम' इति व्यासवचनमनेवंपरमवगन्तव्यम्, यदि तु मनोवदेकदेशवृत्तेरणुपरिमाणस्याशु संचरतः शरीराधिष्ठातृत्वमात्मनः कथ्यते, तथाऽपि सहसैव चिरप्रोषितगतागतदयितजनदर्शनोद्गतसकलशरीरव्यापिस्वेदरोमाञ्चादिदर्शनं विरुध्यते, न च द्वयोरणवोरात्ममनसोः कर्तृकरणव्यवस्थाऽपि निर्वहतीति, तस्मान्नाणुरात्मा न च शरीरपरिमाण इति व्यापक एवावशिष्यते, तदेवं वाराणस्यामप्ययमात्मा विद्यत एवेति तत्र तत्र तत्कार्यदर्शनमवकल्पते नान्येन गमनादिप्रकारेणेति ।

ननु सर्वत्र सुखदुःखज्ञानादिकार्यदर्शनात्सर्वप्राणिनामेक एवात्मा भवेत्,

न सुखदुःखव्यवस्थादर्शनाद्‌ बन्धमुक्तविभागोपपत्तेश्चात्मभेदस्य दर्शयिष्यमाणत्वात्‌, व्यापिनः कथं कर्तृत्वमिति चेत्‌, ज्ञानचिकीर्षाप्रयत्नसमवाय एवास्य कर्तृत्वं न व्यापारयोग इति निर्णीतमेतत्‌।

ननु व्यापिन्यात्मनि कथं शरीरबहिरण्वपि(१) कार्यं न दृश्यते कर्माक्षिप्तशरीरेन्द्रियादिसहकारिसन्निधाननिबन्धनो हि तत्कार्योत्पादः स कथं बहिर्भवेद्‌ इति।

तस्मादनन्तरोक्तेन प्रक्रमेणोपपाद्यते।

नित्यत्वाद्व्यापकत्वाच्च परलोकित्वमात्मनः॥

सूत्रकारस्तु पारलौकिकत्वसिद्धये हेत्वन्तराणि प्रत्यपादयत्‌, सद्यो जातस्य बालस्य वदनविकासरोदनाद्यनुमितो हर्षशोकादियोगस्तावदस्ति, युवशरीरादौ रोदनादि शोकादिकारणकमवगतमिदमाननविकासादि हर्षहेतुकमेवं शिशोरपि तन्निबन्धनस्तदुत्पादः, तौ च हर्षशोकौ सुखदुःखसाधनाधिगमतदनुस्मरणान्यतरकारणौ भवितुमर्हतस्तथा दृष्टत्वात्‌, इह चास्य न सुखदुःखसाधनपदार्थानुभवः तदानीमस्तीति तदनुस्मरणमेव हर्षशोकहेतुर्भवेत्‌, स्मरणमपि तदनुभवप्रभवमनुभवश्चेह जन्मनि सद्यो जातस्य न समस्तीति(२) जन्मान्तरानुभवसुखदुःखसाधनानुस्मरणनिमित्तक एवास्य हर्षशोकसमुत्पाद इति जन्मान्तरानुगमान्नित्य आत्मा,

नन्वभिनवजीवलोकावलोकाह्लादनिबन्धन एवास्य मुखविकासस्तथा योनिद्वारनिर्गमनोद्भूतनिरर्गलक्लेशपीडितस्य तस्य रोदनमिति न जन्मान्तरानुभूतस्मरणं कल्पयितुं युक्तमतिप्रसङ्गात्‌,

मैवं, सुखदुःखहेतुमीदृशमननुभवतोऽप्यकस्मादेव हर्षशोकदर्शनात्‌।

ननु कमलमुकुलविकासादिवत्स्वाभाविकमेव शिशोर्मुखविकाशादिकार्यं स्यात्‌, स्वाभाविकं नाम किमुच्यते किमहेतुकमविज्ञातहेतुकमनियतहेतुकं वा? न तावदहेतुकं कार्यं सम्भवति कार्यत्वहानिप्रसङ्गात्‌, नाप्यविज्ञातहेतुकं तद्भावयितुं युक्तं कार्यमुपलभ्यत इति तद्धेतुपरिज्ञाने यततां भवान्‌ किमुदास्ते न चासौ ज्ञातुमशक्यः कार्यस्यैव तत्र ज्ञापकत्वात्‌, नाप्यनियतहेतुकं कार्यं किंचिदस्ति कार्योत्पादननियमेनैव हेतुनियमसिद्धेरत एव तत्कार्यमुपपादयितुकामास्तन्नियतमेव कारणमुपाददते लौकिकाः,

यत्राप्यनियतो हेतुर्वृश्चिके गोमयादिकः।
अभियुक्तास्तदत्रापि विशेषं न न मन्वते॥

तदेवं कारणनियमोऽपि कार्यविशेषदर्शनाद्‌ दुरुपह्नव इति मुखविकासस्य हर्ष एव कारणमवगम्यते सहस्रकृत्वस्तथा दर्शनात्‌, अचेतनानां तु तामरसादी-

---

(१) अण्वपि–किञ्चिदपीत्यर्थः। (२) समस्ति–सम्भवतीत्यर्थः।

नां(१) विकासकारणं तरणिकिरणनिकरपरिष्वङ्गाद्युपलब्धम् इति तदपि न स्वाभाविकम्,

तस्मान्मुखविकासस्य हर्षो हर्षस्य च स्मृतिः ।
स्मृतेरनुभवो हेतुः स च जन्मान्तरे शिशोः ॥

ननु शिशोर्जन्मान्तरानुभूतस्मरणे सर्वदा सर्वस्मरणप्रसङ्गः, न यावत्कार्यं कारणकल्पनान्न सर्वदा सर्वस्मरणं संवेद्यते न च तत्कल्पनायां कारणमुपलभ्यते न चैकदर्शनात्सर्वं कल्प्यं दृष्टमपि वा निह्नोतव्यमिति परीक्षकाणामुचित एव पन्था इत्यसकृदुक्तम्,

अपि च पयस्तृप्तिहेतुत्वमनुस्मरन्बालकः स्तन्याभिलाषेण मातुः स्तनतटे दृष्टिं निदधाति न चाद्य तेन तस्य तत्साधनत्वमवगतमिति जन्मान्तरे सम्बन्धग्रहणमस्य वृत्तमिति मन्यामहे,

न चायस्कान्तदृष्टान्तसमाश्रयेण स्वाभाविकमेतद्बालकस्य कुचकलशनिमित्तोपसर्पणमिति वक्तुमुचितमनन्तरमेव निरस्तत्वात्,

ननु च गर्भशय्यांशायिनोऽप्यपरितोषदर्शनात्तत्साधनोपादाने तदनुस्मरणमेव प्राप्नोति यदि कार्यमवगम्यते तत्रापि तत्कारणं कल्प्यतां को दोषः, तत्र तु जनयित्रीजठरपतितान्नपानपरिपाकसंक्रान्त्या तत्परिपोषमायुर्वेदविदो वदन्तीति कथं तत्र स्मरणादि कल्पना, कल्पनायां वा प्रथमं निषेकानन्तरमेव कललादिशुक्रशोणितविकारसम्भवात्तद्दशास्वपि स्मरणकल्पनाप्रसङ्गः, न तावत्कल्पनायामपि काचिदस्माकं क्षतिः अयं तु स्तन्याभिलाषेण कुचक्षीरकलशावलोकनोपसर्पणादरो दारकस्य(२) तदनुस्मरणकृत एवेति सर्वथा जन्मान्तरसम्बन्धानुमानान्नित्य आत्मेति, अतश्चैवं 'वीतरागजन्मादर्शनात्' ( गो०३अ०१ आ०२३सू० ) रागादिवासनाभ्यासेन सुदृढप्ररूढेनानादिप्रबन्धप्रवृत्तेन परित्याज्यमानाः सरागा एव जन्तवो जायन्ते न खलु लोके कश्चन तादृशो दृश्यते प्राणी यो जातो वीतरागश्चेति स एष सरागो जायमानः पूर्वोपचितां रागादिवासनामनुसरतीति सिद्धो जन्मान्तरसम्बन्धः ।

## अदृष्टसाधनम् ।

तथा च केचिज्जायन्ते लोभमात्रपरायणाः ।
द्रव्यसंग्रहणैकाग्रमनसो मूषिकादयः ॥
मनोभवमयाः केचित्सन्ति पारावतादयः ।
कूजत्प्रियतमाचञ्चुचुम्बनासक्तचेतसः ॥
केचित्क्रोधप्रधानाश्च भवन्ति भुजगादयः ।

---

( १ ) तामरसादीनां–कमलानाम् । ( २ ) दारकस्य–बालकस्य ।

ज्वलद्विषानलज्वालाजालपल्लवितानना: ॥
जगतो यच्च वैचित्र्यं सुखदुःखादिभेदतः ।
कृषिसेवादिसाम्येऽपि विलक्षणफलोदयः ॥
अकस्मान्निधिलाभश्च विद्युत्पातश्च कस्य चित् ।
क चित्फलमयत्नेऽपि यत्नेऽप्यफलता क चित् ॥
तदेतद् दुर्घटं दृष्टात्कारणाद्व्यभिचारिणः ।
तेनादृष्टमुपेतव्यमस्य किं चन कारणम् ॥
अदृष्टो भूतधर्मस्तु जगद्वैचित्र्यकारणम् ।
यदि कश्चिदुपेयेत को दोषः कर्मकल्पने ॥
संज्ञामात्रे विवादश्च तथा सत्यावयोर्भवेत् ।
भूतवद्भूतधर्मस्य न चादृश्यत्वसम्भवः ॥
दृष्टश्च साध्वीसुतयोर्यमयोस्तुल्यजन्मनोः ।
विशेषो वीर्यविज्ञानसौभाग्यारोग्यसम्पदाम् ॥
स्वाभाविकत्वं कार्याणामधुनैव निराकृतम् ।
तस्मात्कर्मभ्य एवैष विचित्रजगदुद्भवः ॥
कर्मणां यदि वैचित्र्यं कर्मान्तरकृतं यदि ।
अनिष्टं तत्स्वतः सिद्धं जगत्येव तदिष्यताम् ॥
कर्मणां शास्त्रतो ज्ञाता विचित्रफलशक्तता ।
दृष्टार्थेषु च वाक्येषु दृष्टा प्रत्यक्षतोऽपि सा ॥
तस्माद् दृष्टस्य कार्यस्य युक्ता कारणकल्पना ।
कारणस्य त्वदृष्टत्वात्किं हेत्वन्तरचिन्तया ॥
हेत्वन्तरनिमित्तेऽपि कर्मवैचित्र्यकल्पने ।
संसारस्य त्वनादित्वान्नानवस्था भयावहा ॥
तथा च पुण्यः पुण्येन पापः पापेन कर्मणा ।
जायते जन्तुरित्येवं धर्मशास्त्रेषु पठ्यते ॥

तथा च गौतमः । पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति(१) ।

तस्मात्कुतर्कमूलेन दृष्टकार्योपघातिना ।
सर्वलोकविरुद्धेन चोद्येन (२)कृतमीदृशा ॥

---

(१) अत एव—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्वयोनिं वाऽथ य इह कपूयचरणा अभ्याशोह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' इति ( छा० ५-१०-७ ) 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' ( बृ० ३-२-१३ ) इति श्रुतिरपि ।

(२) कृतम्-व्यर्थम् ।

तस्मात्कल्प्यानि कर्माणि दृष्टकार्योपपत्तये ।
एवं च क्षणभङ्गित्वात्संस्कारद्वारिका स्थितिः ॥
स कर्मजन्यसंस्कारो धर्माधर्मगिरोच्यते ।

नित्यात्मसाधनम् ।

विना च नित्यमात्मानं क धर्माधर्मयोः स्थितिः ॥
नित्यस्तस्माद्भवति पुरुषः स्वप्रणीतानुगच्छ-
द्धर्माधर्मक्रमपरिणतानन्ततापोपभोगः ।
प्रामाण्यं च स्फुटमभिहितं पूर्वमेवागमानां-
तेभ्योऽप्यात्मा जननिधनातीततत्त्वः प्रसिद्धः ॥
[१]यद्विज्ञानघनादिवेदवचनं तत्पूर्वपक्षे स्थितं-
पौर्वापर्यविमर्शशून्यहृदयैः सोऽर्थो गृहीतस्तदा ।
मैत्रेय्या परिचोदितस्तु भगवान्यद्याज्ञवल्क्योऽब्रवी-
दात्मा नैव विनश्यतीति तदिदं सिद्धान्तसारं वचः ॥
तेनात्मनित्यत्वसमर्थनेन सुस्पष्टसिद्धः परलोकमार्गः ।
य एव देहान्तरसङ्गमोऽस्य तमेव तज्ज्ञाः परलोकमाहुः ॥
इति कवलने मांस्याकानां परस्वपरिग्रहे
कितवजनतागोष्ठ्यां वेश्यामुखाम्बुजचुम्बने ।
गतमतिरभूद् धूर्तो मत्वा भवान्तरनास्तितां
तदयमधुना तत्संसिद्धेरहो बत दूयते ॥
(२)तस्मान्नित्योऽयमात्मा न च कलुषफलस्तस्य नैसर्गिकोऽयं
रागद्वेषादियोगोऽपि तु सकलगुणापोढमेवास्य रूपम् ।

( १ ) बृहदारण्यके ( ४-अ ६ ब्रा० ) याज्ञवल्क्यस्य द्वे भार्ये मैत्रेयी कात्यायनी च तत्र मैत्रेयी 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे विब्रूहि' इति पृष्टवती ततः 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वाऽरेऽहमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमोति होवाच याज्ञवल्क्यः' इति एतन्मूलक एव देहात्मवादपक्षः स च पूर्वपक्षभूतः, सिद्धान्तस्तु सा होवाच मैत्रेय्यत्रैव माभगवान्मोहान्तमापीपद्मवा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति । तदेवाह—यद्विज्ञानघनादीति ।

( २ ) तस्मादिति । आत्मा नित्यः तस्य कलुषफलः दुःखादिफलः रागद्वेषादियोगः नैसर्गिकः स्वाभाविको न किन्तु अस्य आत्मनः सकलगुणापोढं सकगुणरहितमेव रूपमस्ति तेन अनादिप्रबन्धेन अनादिसंसारप्रवाहेण उपचितो जायमानः परिणमन् यः कर्मपाकः तेनोपचितं दुःखं त्यक्त्वा सर्वभयरहितं निःश्रेयसमाप्तुं यतेतेत्यर्थः ।

तेनानादिप्रबन्धोपचितपरिणमत्कर्मपाकोपनीतं
दुःखं संत्यज्य निःश्रेयसमखिलभयाऽतीतमाप्तुं यतेत ॥

इति श्रीजयन्तकृतौ न्यायमञ्जर्यां सप्तममाह्निकम् ॥

## शरीरनिरूपणम् ।

आत्मानन्तरं विभागसूत्रे शरीरनिर्देशात्तदनुक्रमेण तत्स्वरूपनिरूपणार्थमाह—

**चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥** (गौ० अ० १ आ० सू० ११)

शरीरस्य यल्लक्षणं येन च रूपेण भाव्यमानस्यापवर्गोपयोगिता तदुभयमपि प्रतिपाद्यते, तत्र शरीरत्वमेव तावत्प्रथमं शरीरस्य लक्षणं तेन हि समानासमानजातीयेभ्यस्तद् व्यवच्छिद्यते, तस्मिन्सत्यपि चेष्टेन्द्रियार्थाश्रयत्वं यदस्य लक्षणमुच्यते तत्तेन रूपेणात्मनो भोगायतनं शरीरमिति ज्ञापयितुम्, चेष्टेन्द्रियार्थाश्रयतया हि शरीरमात्मना भोगायतनं भवति मुमुक्षुणा च सुखदुःखोपभोगरहितात्मतत्त्वस्वभावनिःश्रेयसाधिगमविनिहितमनसा तथा भोगाधिष्ठानतया शरीरं भावयता तत्परिहरणे यत्नः कार्य इत्याचार्यश्चेष्टेन्द्रियार्थाश्रयत्वमस्य लक्षणमुक्तवान् ।

ननु चेष्टा क्रिया क्रियाश्रयत्वे च सत्यपि न वृक्षादीनां शरीरत्वमित्यतिव्यापकं लक्षणम्, नविशिष्टचेष्टाश्रयत्वस्य (१)विशिष्टप्रमेयलक्षणप्रक्रमतोऽवसीयमानत्वात, हिताहितप्राप्तिपरिहारयोग्यव्यापाराधिकरणं शरीरमुच्यते न चेष्टामात्रस्याधिष्ठानम्, रथादिनाऽपि नातिव्याप्तिर्यथोक्तप्रक्रमवशा(२)देवान्येन प्रेरणायामसत्यामिति विशेषलाभात्, आत्मप्रयत्नातिरिक्तप्रेरकनिरपेक्षहिताहितोपादानपरित्यागोपाधिकचेष्टाविशेषाश्रयः शरीरमित्यर्थः, ननु पाषाणान्तर्गतमण्डूकादिशरीरेषु तदाश्रयत्वादर्शनादव्याप्तिः, न योग्यतायास्तत्रापि भावात्, सत्यामपि क्रियायोग्यतायां सर्वतो निर्विवरनिचितदृषत्कर्परोपरुद्धावकाशतया चलितुमसौ न प्रभवति भेको वराकः, तथा च स्फुटिते तस्मिन्नेवाश्मनि तत्क्षणमेवासौ चलन् दृश्यते इति निबिडपाशसंयतशरीरवत्तदानीं चेष्टाया अदर्शनेऽपि नाव्याप्तिः ।

मुमुक्षुशरीरमेव लक्ष्यतामित्येके—तेन न मण्डूकशरीरादिभिरव्याप्तिरलक्षणीयत्वात्तेषामिति, तदयुक्तं नियतस्य मुमुक्षूणां शरीरस्याभावात्, तादृशि च

---

(१) विशिष्टचेष्टाश्रयत्वस्य—हिताहितप्राप्तिपरिहारयोग्यव्यापाराधिकरणत्वरूपस्य ।

(२) यथोक्तप्रक्रमवशात्–प्रकरणवशात् अन्येन प्रेरणायामसत्यां हिताहितप्राप्तिपरिहारयोग्यव्यापाराधिकरणत्वं शरीरलक्षणं पर्यवसन्नमित्यर्थः ।

भेकादिशरीराणि नितरां निर्वेदकारीणि भवन्ति, मुमुक्षुरपि च कर्मविपाकमनेकप्रकारमाकलयन्मण्डूकीभावमात्मनोऽपि न शङ्कते प्रत्यासन्नापवर्गपुरप्रवेशं विपश्चित्तममपश्चिमजन्मानं मुमुक्षुं प्रति लक्षणाद्युपदेश एव क्वोपयुज्यते इत्यतः पूर्वोक्त एवाव्याप्तिपरिहारः श्रेयान् ।

भवत्वेवं चेष्टाश्रयत्वं शरीरलक्षणम् इन्द्रियाश्रयत्वं तु कथम् ? भौतिकानि हीन्द्रियाणि स्वावयवसमाश्रितानि घ्राणनयनस्पर्शनरसनानि, श्रोत्रमनसी तु नित्यद्रव्यत्वादनाश्रिते एवेति कथमिन्द्रियाश्रयता शरीरस्येति,

उच्यते नात्राधाराधेयभाव आश्रयार्थः किन्तु तदनुग्राह्यत्वात्तदाश्रितानीन्द्रियाण्युच्यन्ते, देशकालदशानुकूलपथ्यभोजनाभ्यङ्गव्यायाममर्दनाभ्युपचारोपचितशरीरस्य हि पुंसः पटुतराणि स्वविषयपुरन्ध्रिग्रहणे भवन्तीन्द्रियाणि दीर्घाध्वलङ्घनकदशनशुष्कजरत्सचन्द्रसेवनादिक्लिष्टशरीरस्य हि पुंसो मन्दशक्तीनि भवन्तीति तदनुग्राहकत्वादिन्द्रियाणामाश्रयः शरीरम् ।

अर्थानां तु रूपरसगन्धादीनां केषांचिदाश्रयः शरीरं भवत्येव तत्समवायिनां न तु तावता किंचिद्भोगायतनत्वोपयोगि रूपमभिहितं भवति । लक्षणमपि तदतिव्यापकं रूपरसादिसमवायस्य वृक्षादावपि भावात्तस्मात्तदर्थाश्रयत्वमीदृशमत्र विवक्षितं यदेते वरवनितादिशरीरवर्तिनः, (१)प्रविकचमुचुकुन्दकुन्दकन्दलकमलादिबाह्यविषयसमवायिनश्च रूपरसादयोऽर्था रमणीयतामादधाना रागवृद्धिहेतवो भवन्ति भोक्तुरात्मनः शरीरे सति न शरीररहितस्येत्यर्थानां भोगसाधनभावादाश्रयः शरीरमतः सुष्ठूक्तं चेष्टेन्द्रियार्थाश्रयः शरीरमिति, तदित्थं भोगायतनत्वेन बन्धहेतुत्वाद्धेयमित्यर्थः ।

## शरीरपरीक्षा ।

तदिदानीमस्मदादिशरीरं किं पार्थिवमेव किं वा नानाभूतनिर्मितमिति परीक्ष्यते, ननु किमनया परीक्षया प्रयोजनम् ।

निःश्रेयसोपयोगो हि यः शरीरस्य दर्शितः ।
नानैकप्रकृतत्वे हि न स तस्य विशिष्यते ॥

मैवं वोचः—

प्रतिपन्नस्वरूपस्य चिन्त्याकारोपयोगिता ।
कार्यः कार्यार्थिनाऽप्यादौ यत्नस्तद्रूपनिर्णये ॥

तथा चेन्द्रियाणि भौतिकत्वाहङ्कारिकत्वविवेकेन परीक्षिष्यन्ते, अर्था अपि कति किंगुणा इति, बुद्धिरपि किं प्रधानस्य प्रथमो विकारो महच्छब्दवाच्य उतात्मन एव धर्मो ज्ञानाख्यः क्षणिक इत्येवं द्रष्टव्यम् ।

---

( १ ) प्रविकचमुचुकुन्द—विकसितपुष्पविशेषत्यर्थः ।

## शरीरपरीक्षार्थं विप्रतिपत्तयः ।

तत्र पार्थिवमेवास्मदादिशरीरमिति केचित्, साधारणो हि धरणिधर्मो गन्धस्तस्मिन्नुपलभ्यते इति ।

पृथिव्युदककारणमित्यन्ये, क्लेदस्यापि तस्मिन्दर्शनादसति हि सलिलसंसर्गे न पार्थिवाः क्लेदमनुभवन्तीति ।

क्षितिजलज्वलनजनितमित्यपरे, गन्धक्लेदवदूष्मणोऽपि तत्रोपलम्भादिति,

वसुमतीसलिलसितेतरसरणिसमीरणरचितमिति चान्ये, रचनाविशेषस्य पवनकार्यस्य तत्रावधारणादिति ।

अवनि(१)वनदहनपवनगगनविनिर्मितमिति चापरे, गन्धादिवदवकाशस्याप्याकाशकार्यस्य तत्र दर्शनात्सुषिरं हि शरीरमुपलभ्यते अवकाशे चाकाशैकदेशेऽप्यवच्छेदाभिप्रायेण श्रोत्रवद्भक्त्या तत्कार्यत्वव्यपदेश इति ।

## शरीरस्य पार्थिवत्वम् ।

तदत्र किं तत्त्वं पार्थिवमेवास्मदादिशरीरमिति विजातीयकार्यस्यावयविनोपपत्तेः, पार्थिवावयवसमवेतशरीरावयवग्राहिणश्चाभेदप्रत्ययस्य तृणपर्णपाषाणमूलकाद्यभेदप्रत्ययवदपवादासम्भवात् , न च वयमिह भूतान्तराणां कारणभावनिषेधं विद्मः केवलपार्थिवतया निर्विवादसिद्धेऽपि कुम्भादावम्भःप्रभृतीनां कारणत्वानपायात्तद्व्यतिरेकेण घटादेर्घटयितुमशक्यत्वात् , किन्तु घटइव शरीरेऽपि समवायिकारणतां पृथिव्यवयवानामेवाचक्ष्महे तदाश्रितत्वस्यास्य प्रत्यक्षेण ग्रहात्सहकारिकारणत्वानुप्रविष्टभूतान्तरसम्बन्धनिबन्धनस्ततः सिद्धः क्लेदोष्मव्यूहावकाशसम्प्रत्ययस्तत्पथागमपठितेषु वरुणलोकादौ केवलजलादिजन्येषु सहकारित्वानुप्रविष्टपार्थिवावयवावष्टम्भवशेन स्थैर्याद्युपलम्भ इति , तस्मादस्मदादिशरीरं पार्थिवम् ।

वेदे च(२) तथैव व्यवहारो दृश्यते अग्नीषोमीयादिपशोः प्रलयकाले यजमानस्य वा प्रेतस्य[३] पात्रचयनकर्मणि 'सूर्यं चक्षुर्गमयतादि'त्याद्युपक्रम्य 'पृथिवी ते शरीरमि'ति पठ्यते, तच्च प्रकृतिगामित्ववचनं यद्यतः प्रकृतेरुत्थितं तत्तस्यामेवास्य लीयतामित्यर्थः । तत्र यथा तैजसं चक्षुरिति सूर्याख्ये तेजसि उद्गमनमुपदिष्टमेवं पृथिव्यां शरीरस्येति तस्मात्पृथिव्यवयवैरयमस्मदादिदेहो निबद्ध इति नात्र सतां विवादः ।

---

(१) अवनिः पृथ्वी, वनं-जलं, दहनः-अग्निः ।

(२) वेदे च-वेदेपीत्यर्थः । (३) प्रेतस्य—मृतस्य ।

## इन्द्रियपरीक्षा ।

### घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ ( गौ० १ अ० १ आ० १२ सू० )

अत्रेन्द्रियाणां विषयोपलब्धिकारणत्वं सामान्यलक्षणं प्रसिद्धमेव विभागोऽपि पञ्चबाह्येन्द्रियाणां त्वेष सूत्रित एव स चानन्तरमेव, तीर्थान्तरकथितकर्मेन्द्रियनिषेधात्साधयिष्यते ।

विशेषलक्षणानि तु पञ्चानां पञ्च समाख्यानिर्वचनसामर्थ्यात्प्रमाणवदवगन्तव्यानि । जिघ्रत्यनेनेति घ्राणं घ्रेयं गृह्णातीति गन्धोपलब्धावसाधारणं करणं घ्राणं, चक्षुः ईक्षणं लोचनं तदुच्यते, स्पृशत्यनेन स्पर्शनं स्पर्शं गृह्णातीति स्पर्शोपलब्धावसाधारणं कारणं स्पर्शनं, स्पर्शनमिति वक्तव्ये त्वग्ग्रहणमुपचारान्मञ्चाः क्रोशन्तीति तदधिष्ठानत्वं दर्शयितुम्—यथा त्रिपुटिकाधिष्ठानं घ्राणं जिह्वाधिष्ठानं रसनं गोलकाधिष्ठानं चक्षुः तथा सकलत्वगधिष्ठानं स्पर्शनं शिरःप्रभृत्यापादाङ्गुष्ठं स्पर्शोपलम्भात् , त्वगिति च न बाह्यमेव चर्म केवलमुच्यते अपि तु सकलशरीरव्यापि तुहिनकणशिशिरसलिलपानसमयेऽन्तर्हृदयेऽपि शीतस्पर्शोपलम्भादिति, स्वावयवसमवायित्वे चेन्द्रियाणां त्रिपुटिकाद्याश्रयत्वमाश्रयमात्रापेक्षयोच्यते न समवायित्वादिति, शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति शब्दोपलब्धावसाधारणं करणं श्रोत्रम् , तच्चाकाशैकदेशत्वादनाश्रितमपि कर्णशष्कुल्यधिष्ठानमुच्यते,

तदेवं विशेषलक्षणानि पञ्च पञ्चानामुक्तानि, भवन्ति तानीमानीन्द्रियाणि स्वविषयग्रहणलक्षणान्यात्मनो भोगसाधनत्वात्संसारकारणानीति हेयतया भावयितव्यानि, तथा भाव्यमानानि निर्वेदोत्पादनादिद्वारेणापवर्गाय कल्पिष्यन्ते इति ।

भूतेभ्य इति किमर्थम् ? उक्तं हीन्द्रियाणां स्वविषयग्रहणं भूतप्रकृतित्वे सति निर्वहति नान्यथेति तत्तद्विनिश्चयार्थं यथाप्तोपदेशः शब्द इत्याप्तग्रहणम् । विषयोपलब्धिलक्षणत्वं हीन्द्रियाणां भूतप्रकृतित्वे सति निर्वहति नान्यथेति, तानि पुनरिन्द्रियकारणानि पृथिव्यप्तेजोवायुराकाशमिति भूतानि, भूतेभ्यः पञ्चभ्यो यथासङ्ख्यं घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पञ्चेन्द्रियाणि भवन्ति भूतप्रकृतित्वमिति भूतस्वभावत्वं व्याख्यावसानम् (दित्रादिभ्यो भूतेभ्यः सम्भवति तदवनतौ पञ्चस्वपि सम्भवति)(१) भूतकारणकत्वं त्वन्येषु चतुर्ष्वपि तथैव श्रोत्रे तु कथञ्चित्कर्णशष्कुल्यवच्छिन्ननभोभोगाभिप्रायेण व्यवहारतः समर्थनीयम्

(१) अयं पाठः कथञ्चिदपि न समन्वेतीति व्यर्थ एवेति बोध्यम् ।

एवं भौतिकानीन्द्रियाणि स्वं स्वं विषयमधिगन्तुमुत्सहन्त इति तल्लक्षणत्वमेषां सिध्यतीति अतो भूतेभ्य इत्युक्तम् ।

### साङ्ख्यमतेनेन्द्रियाणामाहङ्कारिकत्वम् ।

तत्रैतत्परीक्षणीयं वर्तते किं भौतिकानामिन्द्रियाणां स्वविषयग्रहणकरणत्वमुतान्यथेति, एवं हि साङ्ख्याः सम्प्रवदन्ते आहङ्कारिकाणीन्द्रियाण्यर्थं साधयितुमर्हन्ति नान्यथा, तथा हि कारकं कारकत्वादेव प्राप्यकारि भवति भौतिकानि चेन्द्रियाणि कथं प्राप्यकारीणि दूरवर्तिनि विषये भवेयुः आहङ्कारिकाणां तु तेषां व्यापकत्वाद्विषयाकारपरिणामात्मिका वृत्तिर्वृत्तिमतो नान्या सती सम्भवत्येवेति सुवचं प्राप्यकारित्वम्, अपि च महदणुग्रहणमाहङ्कारिकत्वे तेषां कल्पते न भौतिकत्वे, भौतिकत्वे हि यत्परिमाणं ग्रहणं तत्परिमाणं ग्राह्यं गृह्णीयादस्ति च गोलकादधिकपरिमाणस्य पटपिठरादेर्ग्रहणं हीनपरिमाणस्य च वटधानादेरतोऽपि न भौतिकानीन्द्रियाणि, भौतिकानामपि दीपादीनां परं प्रकाशयतां स्वात्मप्रकाशकत्वमपि दृष्टम्, एवमिन्द्रियाण्यपि पटादिरूपं प्रकाशयन्ति स्वरूपमपि च प्रकाशयन्तीत्यतोऽपि न भौतिकानि ।

### भौतिकत्वेपीन्द्रियाणां प्राप्यकारित्वम् ।

अत्राभिधीयते—यत्तावत्प्राप्यकारित्वं भौतिकत्वपक्षे नावकल्पते इति जल्पितवानसि तन्मन्ये त्वया गोलकमेव चक्षुरिति चेतसि गृहीतमन्यथा कथमित्थमकथयिष्यः, स चायमायुष्मतो महान् भ्रमः न खलु कृष्णसारं चक्षुस्तदधिकरणं तु तेजश्चक्षुस्तच्च वेगवद्द्रव्यत्वाद् दूरमपि प्रसरतीति कोऽस्य प्राप्यकारितायां प्रमादः ।

ननु च गोलके चिकित्सादिप्रयोगाद्गोलकगुणदोषानुवर्तित्वाच्च विषयोपलब्धेर्गोलकमेव चक्षुः स्याद् अनुपलभ्यमानं च तेजः कथमिन्द्रियमुच्यते, कथं च तेजसा वेगवताऽपि सहसैव विस्फारिते चक्षुषि योजनशतसहस्रव्यवहितसितकरतरणितारकादि ग्रहीतुं शक्येत, कथं वा तदल्पकं वराकं नायनं तेजः समन्ततः प्रसरता सकलभुवनप्रथितप्रभावेन महीयसापि मिहिरमहसा न प्रतिहतगति भवेदभ्यर्थमिति भास्करदर्शनमित्थं न सम्पद्येत, तेजःपक्षे च काचाभ्रकपटबालस्फटिकान्तरितपदार्थोपलब्धिः कथं समर्थ्येत तत्प्रतिबद्धं हि तेजः कथं प्रतिष्ठेतेति तद्वरं शक्तिविशेषयुक्तं गोलकमेव साधो ! चक्षुरभ्युपगच्छेति ।

उच्यते—न खलु भवदनुशासनेन युक्तिविरुद्धपक्षमभ्युपगच्छामः प्राप्यकारि हि कारकं दृष्टं कृष्णसारपक्षे च कुतः प्राप्यकारित्वम् ? शक्तिरपि कल्प्यमाना निराश्रया न परिकल्पनीयैवेति तदाश्रयचिन्तायां न गोलकमात्रमाश्रयोक्तेराश्रयो भवेत ।

ननु च प्राप्यकारित्वमेव चिन्त्यं वर्तते तद्धि रसनस्पर्शनयोः केवलमवलोक्यते लोके चक्षुःश्रोत्रे तु दूरदेशव्यवस्थितविषयग्राहिणी कथं प्राप्यकारिणी स्याताम् घ्राणे तु त्रिपुटिकानिकटनिहितपदार्थगन्धमपि गृह्णाति दूरतोऽपि च प्रचलदनिलबलवेल्लितफुल्लमल्लिकादिसौरभमुपलभते त्रिपुटिकोपकण्ठढौकितेनापि द्रव्येण न तस्य सन्निकर्ष इति तदप्यप्राप्यकार्येव, तस्माच्छक्तिविशेषणमधिष्ठानमेव तत्तदिन्द्रियमिति गृह्यताम् उत्सृज्यतां प्राप्यकारित्वपक्षः चक्षुषि च चन्द्रार्कग्रहादिग्राहिणि नतरां प्राप्यकारित्वमित्युक्तमेव।

अत्रोच्यते न प्राप्यकारित्वमुत्स्रष्टुं शक्नुमः कारकत्वमेव हि तथा सत्येषामुत्सृजेम, कारकं चाप्राप्यकारि चेति चित्रम्, अदृष्टमपि कारणमात्मनो व्यापकत्वात्तद्वृत्ति धर्मादिकं न प्राप्यकारि भवेत् किमुत दृष्टं चक्षुरादि कारकमिति, अप्राप्यकारित्वे च शक्तेरविशेषात्कुड्यादिव्यवहितमपि वस्तु चक्षुषा दृश्येत, तत्र कार्यानुपलम्भान्न शक्तिः कल्प्यते इति चेत्, किं शक्तिः कल्प्यतां किं तेज इति सम्प्रधारणायां(१) तेजसो द्रव्यत्वाद्व्यवधानाद्यनुगुणममूर्तायास्तु शक्तेर्व्यवधानमबाधकं भवेदिति तेज एवेन्द्रियं कल्पनीयं न शक्तिः, शक्तिमदधिष्ठानं वा, प्राप्यकारिता च श्रोत्रस्य तावद्देशसन्तानसदृशशब्दपरम्परारम्भणद्वारेण दर्शिता शब्दाधिकरणे, घ्राणस्यापि समीरणान्दोलितकुन्दलतादिप्रसृततत्परमाणुनिकराधिकरणगन्धग्रहणात्प्राप्यकारिता, न च परमाणूपसर्पणाद् द्रव्यपरिक्षयाद्याशङ्कनीयं भूयस्त्वात्परमाणूनाम्, अत एव(२) गन्धद्वारकतद्द्रव्यसम्पर्कदोषनिर्हरणाय प्रायश्चित्तमशुचिद्रव्यघ्राणे समामनन्ति, चक्षुषस्तेजःप्रसरणात्प्राप्यकारिता, अनुपलभ्यमानं तेज इति चेत्किं चन्द्रमसः परभाग उपलभ्यते पृथिव्याश्चाधोभागः, न खलु प्रत्यक्षैकशरणाः पदार्थाः अनुमानादिभिरेषामुपलम्भः सम्भवत्येव, उक्तं चानुमानं रूपोपलब्धिकार्येण तैजसमेव चक्षुरनुमीयते, तेजोद्रव्यं हि दीपादि रूपस्य प्रकाशकं दृष्टमिति।

प्रत्यक्षेण तु नायनं तेजः किमिति नोपलभ्यते इति? तदुच्यते विचित्रा हि द्रव्यगुणानामुद्भवाभिभवादिवशेन गतयो भवन्ति, तद्यथा सर्वतः प्रसरता धवलबहलेन शीतस्पर्शाश्रयेण द्रव्येण व्याप्तौ हेमन्तशिशिरौ ऋतू भवतः, निराधारस्य शीतस्पर्शगुणस्यानुपपत्तेः।

अथ सत्यपि तत्र सलिलद्रव्ये तद्गुणस्य शीतस्पर्शस्यैवोपलब्धिर्न शुक्लरूप-

---

(१) सम्प्रधारणायां–विचारणायाम्।

(२) अत एवेति। घ्राणेन गन्धग्रहणाय गन्धवद्द्रव्यस्य वायुनाऽऽनयनाङ्गीकारादशुचिद्रव्यस्पर्श इति तद्दोषनिर्हरणाय प्रायश्चित्तं धर्मशास्त्रविहितं सङ्गच्छत इति भावः।

स्येति । तेजोद्रव्येण च निरर्गलं(१) विजृम्भमाणेन भूयसा ग्रीष्मो भवति तत्र सत्यपि तेजोद्रव्ये तद्गुणस्योष्णस्पर्शस्यैव ग्रहणं न भास्वररूपस्येति, भास्वरं च कार्तस्वरादौ तैजसद्रव्ये रूपमुपलभ्यते नोष्णस्पर्शः, उदकान्तर्गते च तेजसि ज्वलनतप्ते जले ज्वलनगुण उष्णस्पर्शोऽनुभूयते न भास्वरं रूपमिति, एवमिह नयनरश्मौ तैजसे द्रव्ये द्वावपि रूपस्पर्शौ नोपलभ्येते इति कमुपालभेमहि, उक्तं च—(२)दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः प्रमाणस्य तत्त्वविषयत्वादिति [ गौ० ३-१-५३ ] । न च सर्वत्र नयनरश्मेरनुपलम्भः क्वचिद्धि वृषदंशप्रभृतीनां (३)नक्तञ्चराणां निशि निबिडतमतमःपङ्कपटलावलिप्ते वेश्मनि सञ्चरतां चाक्षुषं तेजो भास्वरं रूपं दूरमपि प्रसरदुपलभ्यत एव, अन्यत्र तु मध्यन्दिनोल्काप्रकाशवदग्रहणमस्मदादिनयनरश्मेः, अयं तु विशेषः उल्कारूपस्य दिवा दिवाकरकरविभवाभिभूतत्वादग्रहणं नयनरश्मिरूपस्य त्वनुद्भूतत्वादेवेति ।

यत्तु काचाभ्रपटलस्फटिकान्तरितपदार्थोपलम्भनं तत्र काचादीनां केषांचिदतिस्वच्छत्वात्केषांचिच्च ससुषिरत्वाच्चाक्षुषतेजःप्रसरनिरोधकौशलं नास्तीति प्राप्यकारित्वं चक्षुषस्तावता भवति ।

यत्तु कुतो नयनरश्मेरियती गतिर्गगनमाक्रम्य यन्नभस्तिमालिनं स्पृशति न प्रतिहन्यते च सावित्रेण वेगवता तेजसेति, उक्तमत्र दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिरिति, कार्यसत्तया हि तथाविधं कारणं कल्प्यते यद् दूरमपि प्रसरति प्रसरदपि परेण न च निरुध्यते, दृष्टश्चानिरोधो भर्जनकपालादौ तेजसः पच्यमानद्रव्यपाकसिद्धेः कलशे च निषिक्तानामपां बहिः शीतस्पर्शग्रहणादनिरोधः, एवं नयनरश्मेरपि भविष्यति, न तु गोलकस्यैव शक्तिकल्पना लघ्वीति वक्तव्यम्, प्राप्यकारित्वव्याघातादिति, अत एव सर्वेन्द्रियाणां प्राप्यकारित्वं पश्यद्भिः शास्त्रज्ञैरिन्द्रियार्थसन्निकर्षः षट्प्रकारो व्याख्यातः, प्राप्यकारिता च न गोलकस्योपपद्यते तदप्राप्तस्य पर्वतादेर्ग्रहणात्तत्प्राप्तस्य च प्रत्युताञ्जनशलाकादेरग्रहणादगोलकं चक्षुः,

चिकित्सादिप्रयोगस्तु गोलके यः प्रवर्त्तते ।
सोऽयमाधारसंस्कार आधेयस्योपकारकः ॥

---

( १ ) निरर्गलं-निष्प्रतिबन्धम् ।

( २ ) दृष्टानुमितानामिति । दृष्टानामनुमितानां वा पदार्थानाम् 'एवं भवत' इति नियोगः 'एवं मा भवत' इति प्रतिषेधो वा नोपपद्यते तथाभूतविषयकं हि प्रमाणमित्यर्थः ।

( ३ ) वृषदंशो-विडालः ।

अत एव गोलकगुणदोषानुवर्तित्वमपि विषयोपलब्धेर्घटमानमाधारद्वारकौ हि तदाधेयस्यैव तौ गुणदोषाविति, तस्मादप्राप्तविषयग्रहणानुपपत्तेर्गोलकचक्षुःपक्षो भिक्षुत्प्रेक्षितः(१) प्रेक्षावतां हृदयेषु न विश्राम्यतीति प्राप्यकारि तेज एव चक्षुरिति स्थितम्। इत्थं भौतिकेन्द्रियवादेऽपि प्राप्यकारित्वसिद्धेर्न कापिलकथितमाहङ्कारिकत्वमिन्द्रियाणामुपपद्यते।

## इन्द्रियाणामाहङ्कारिकत्वखण्डनम्।

ननु पक्षद्वयेऽपि प्राप्यकारित्वोपपत्तेः कोऽयं भौतिकत्वं प्रत्यभिनिवेशातिशयो भवतामिति, उच्यते—एकप्रकृतित्वे हीन्द्रियाणामेकमेव सर्वविषयप्रकाशनकुशलमिन्द्रियं भवेत्सर्वाणि वा सर्वविषयग्राहीणि भवेयुः कारकस्याविशेषात्, कारणनियमाधीनो हि कार्यनियमः अहङ्काराख्यं च कारणं, सकलविषयप्रकाशनशक्तियुक्ते तस्मिन् कथमन्द्रियान्तराणि विषयान्तरग्राहीणि ततो भवेयुः, भौतिकत्वे तु भूतानां भेदान्नियतगुणोत्कर्षयोगित्वान्नियतविषयग्राहीन्द्रियप्रकृतित्वं तथा च प्रदीपादितेजो रूपरसाद्यनेकविषयसन्निधानेऽपि रूपस्यैव प्रकाशीभवितुमर्हति एवमन्द्रियान्तरेष्वपि वक्तव्यम्, तदेष विषयनियमः प्रकृतिनियमकारित इन्द्रियाणामिति भौतिकानीन्द्रियाणि।

यत्त्वेवं तैजसेन चक्षुषा कथं पार्थिवस्य रूपस्य ग्रहणं पृथिव्या एव वा, आप्येन च रसनेन पार्थिवस्य रसस्य, वायवीयेन स्पर्शनेन्द्रियेण च पृथिव्यादिस्पर्शस्य तदिदं प्रकृतिनियमेऽपि कथं विषयसाङ्कर्यमिति? नैष दोषो रूपादिविषयविषयोऽपि ह्येषां नियमो न तदाश्रयविषयः, तैजसं हि प्रदीपादिद्रव्यं रूपमेव प्रकाशयद्दृश्यते न तेजोवृत्त्येव रूपम्, आप्यमपि द्रव्यं रसमेव व्यनक्ति न तु सलिलस्थमेवेति, घ्राणे तु न कश्चिद्दोषः तद्ग्राह्यस्य तस्य पृथिव्येकवृत्तित्वादिति, द्रव्यस्यापि दर्शनस्पर्शनग्राह्यत्वमविरुद्धमित्थं भौतिकत्वेऽपीति, यदुक्तं महदणुग्रहणाच्चाभौतिकानीन्द्रियाणीति, तन्न, दूरप्रसारित्वस्य दर्शितत्वात् ततश्च विततत्वाद्विततग्राहि भवत्येव, विततत्वेनापि नाहङ्कारिकत्वम्।

यत्पुनरभ्यधायि भौतिकत्वे परगुणवत्स्वगुणस्यापि प्रकाशकमिन्द्रियं स्यादिति, तदयुक्तं सगुणस्येन्द्रियस्येन्द्रियभावात्, इन्द्रियेण हि सता तेन विषयः परिच्छिद्यते सगुणस्य चास्येन्द्रियत्वं स्वगुणरहितं तदिन्द्रियमेव न स्यादनि-

(१) भिक्षूत्प्रेक्षितः—बौद्धकल्पितः। तेषामयमाशयः चक्षुर्हि विषयसन्निकर्षरहितमेव ग्राहकम्, यदि प्राप्यप्रकाशकारि स्यात् तदा रसनादिवदधिष्ठानसम्बद्धं गृह्णीयात् न चैवं गोलकासम्बद्धग्रहणात्, किञ्च यदि चक्षुः प्राप्य गृह्णीयात्तर्हि स्वतोऽधिकपरिमाणं न गृह्णीयात्, एवञ्च प्राप्यकारित्वानुरोधेन गोलकातिरिक्तञ्चक्षुः परैरङ्गीक्रियते तदेव नास्तीति गोलकमेव चक्षुरिति।

न्द्रियं च कथं ग्राहकमत इन्द्रियगुणानाम् अन्तःपतितत्वान्न प्रमेयत्वम्, तस्माद्भौतिकानीन्द्रियाणि स्वं स्वं विषयमुपलभन्त इति सिद्धम्।

प्रयोगस्तु—पार्थिवं घ्राणं द्रव्यत्वे सति रूपादिमध्ये गन्धस्यैव व्यञ्जकत्वाद् गन्धयुक्तद्रव्यवत्, तत्र व्यञ्जकत्वमात्रमनैकान्तिकमिति गन्धस्यैव विशेष्यते, सोऽयमसिद्धो हेतुर्भवेद् गन्धत्वस्यापि घ्राणव्यङ्ग्यत्वादिति रूपादिमध्य इत्युक्तम्, तथाऽपि सन्निकर्षेण व्यभिचार इति तद्व्युदासाय द्रव्यत्वे सतीति विशेषणम्, एवं रसनादिष्वपि प्रयोगा रचनीयाः, श्रोत्रं त्वाकाशैकदेश इति शब्दाधिकरणे निर्णीतम्, गन्धादिविषयोपलब्धिनिबन्धनसुखदुःखोपभोगहेतुभूतधर्माधर्मोपनिबद्धानां चेन्द्रियाणामिन्द्रियत्वमिति तद्वशाद्यथा यथा नियतविषयग्रहणकारणता घटते तथा कल्प्यते इति सर्वमनवद्यम्।

## एकेन्द्रियवादिमतम्।

आह भवन्तु भौतिकानीन्द्रियाणि पञ्चेति तु न युक्तमुक्तं त्वगेव ह्येकमिन्द्रियं भवितुमर्हति सर्वत्रानपायात्, करतलकपोलकण्ठादिवर्तिनापि त्वगिन्द्रियेण रूपोपलम्भप्रसङ्ग इति चेद्, नावयवविशेषशक्तिविशेषनियमात्, न हि पाणिना पादेन वोपस्थकार्यं कर्तुं शक्यते, अस्ति चावयवविशेषस्वभावविशेषवैचित्र्यम्,

तुषारकर्पूरापूर्णवारिण्युत्तरमानसे।
यथा च वृषणौ स्नातुः स्फुटतो न तथा स्फिचौ॥
छिन्नार्द्रतृणकाष्ठादिधूमेन कटुना यथा।
मूर्धाऽक्षिवेदनोदेति न तथाऽवयवान्तरे॥

तस्मादवयवविशेषव्यवस्थितनानाशक्तिखचितं त्वगेवैकमिन्द्रियमिति।

## एकेन्द्रियवादखण्डनम्।

उच्यते, कुतोऽयमपूर्व एव महाप्राज्ञो वादी सरलमतीनस्मान्वञ्चयितुमागतः योऽवयवविशेषं चाश्रयन्नप्येकमिन्द्रियं मन्यते शक्तिभेदादाश्रयभेदाच्च नानात्वमेवैतदिन्द्रियाणामित्यलं महात्मभिः सह कलहेन,

मनुष्यैः सह संवादो मादृशानां हि शोभते।
देवास्तु नररूपेण त इमे भान्ति वादिनः॥
ननु नानात्वपक्षेऽपि पञ्चत्वनियमः कथम्।
द्वे श्रोत्रे चक्षुषी द्वे, च कथं ते एकमिन्द्रियम्॥

आह च-सव्यदृष्टस्येतरेण(१) प्रत्यभिज्ञानाद् [गौ० ३।१।७] इति, चक्षु-

---

(१) सव्येति। सव्येन चक्षुषा दृष्टस्य इतरेण दक्षिणेन चक्षुषा प्रत्यभिज्ञानात्स्थिरात्मसिद्धिरित्यर्थः। एवञ्च चक्षुषो द्वित्वमिति भावः।

ष्ट्वजातेरेकत्वादिति चेत्तर्हीन्द्रियत्वजातेरेकत्वादेकमिन्द्रियं स्यात् , उच्यते चक्षुस्तावत्तेज इति निर्णीतम् , ततश्चैकमेव तदधिष्ठानमेकघ्राणवंशाव्यवहितमनेकमिवोपलभ्यते, भिन्नं वा तद्भवतु तेजस्तत्कार्यैक्यादाश्रयभेदेऽप्येकमेव, श्रोत्रमपि कर्णच्छिद्रद्वयानुस्यूतमेकमेव नभोदेशप्रायं वेदितव्यं कार्यैकत्वस्यापि भावात् ,

तेनाधिष्ठानभेदेऽपि कार्यैकत्वस्य दर्शनात् ।
तत्सामान्यस्य चैकत्वादेकत्वं श्रोत्रचक्षुषोः ॥

न चेन्द्रियजातेरैक्यादेकमिन्द्रियम् , कार्यस्योपलब्धिलक्षणस्य कारणस्य पृथिव्यादेर्विषयस्य गन्धादेरधिष्ठानस्य त्रिपुटकादेर्गतेश्च घ्राणत्वादेर्जातिशब्दवाच्यस्य योनेर्वा पृथिव्यादेः पञ्चविधत्वात्पञ्चैवेन्द्रियाणि कल्प्यन्ते, यथा परमाणुसामान्याविशेषेऽपि पृथिव्यादिचतुर्विधकार्यदर्शनाच्चतुर्विधाः परमाणवः कल्प्यन्त इति ।

## वागादीनामिन्द्रियत्वखण्डनम् ।

ननु तथाऽपि न पञ्चेन्द्रियाणि बुद्धीन्द्रियवत्कर्मेन्द्रियाणामपि पञ्चानामुपसंख्येयत्वात् , तदुक्तं वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः [ सां० का० २६ ] । तेषां च वचनादानविहरणोत्सर्गानन्दात्मकपञ्चविधकार्यसाधनादिन्द्रियत्वं तत्कार्यस्यानितरेतरसाध्यत्वादिति ।

अत्राहुः अत्यल्पमिदमुच्यते पञ्च कर्मेन्द्रियाणीति, अन्यान्यपि खलु न सन्ति कर्मेन्द्रियाणि ? तथा हि कण्ठोऽन्ननिगरेण स्तनकलशालिङ्गनादिना वक्षो भारवहनेन चांसद्वयमिन्द्रियमुच्यते न कथम् ? तत्कार्यस्य शरीरावयवान्तरेऽपि दर्शनादिति चेत्किं नु भवानन्नपानं पाणिपादेन निगिरति पायुना वा ? आदानमपि किमास्यादिना वा न कुर्वते तिर्यञ्चो मनुष्या अपि हि क्व चित्, असत्स्वपि भवत्कल्पितेषु कर्मेन्द्रियेषु तत्कार्यं यावत्तावदन्यथाऽपि दृश्यते न त्वेवं बुद्धीन्द्रियेषु,

भवत्युत्पाटिताक्षस्य न मनागपि रूपधीः ।
ईषद्विहारादानादि दृष्टं यन्त्राङ्घ्रिपाणिषु ॥

अपि च विहरणमपि न केवलं चरणयुगलकार्यम् अपि तु जानूरुजङ्घादिसहितपादसम्पाद्यमानमपि बाहुसहिताभ्यां पाणिभ्यामपि निर्वर्त्यते न केवलाभ्याम् , वागिन्द्रियं तु नाभेरूर्ध्वं सर्वमेव स्यादित्याहुः–'वायुर्नाभेरुत्थित उरसि विस्तीर्णः कण्ठे विवर्तितो मूर्धानमाहत्य परावृत्तो वक्त्रे चरन्विविधान् शब्दानभिव्यनक्ति' इति , अस्ति चेदृगनुभवो जल्पतां विशेषतस्त्वखण्डगेयं गायतामिति, एवं च कर्मेन्द्रियमयमेव विश्वमिति न च शरीरमिन्द्रियव्यतिरिक्तं किं चिद्भवेत् । अथ शरीरावयवेष्वेव भिन्नकार्यकारिषु कर्मेन्द्रियव्यवहारस्तर्हि कण्ठादिभिरतिप्रसङ्ग इत्युक्तम् , उपस्थेन्द्रियं च कथमेकं गण्यते तेनानन्दवन्मूत्रोत्सर्गस्यापि साध-

नात्, वागिन्द्रियं तु सुतरामहृदयङ्गमं संयोगविभागनिर्वर्त्यो हि बाह्यः शब्द उपलभ्यते तद्भेदाश्च विद्यन्ते यादृशो भेरीदण्डसंयोगजः शब्दो न तादृशः कूर्मीकोणसंयोगजः, एवं विचित्रस्थानकरणसंयोगाद्विचित्रो वर्णात्मकः शब्द उदेतीति न वागिन्द्रियं नाम किं चित्, लोकश्च वाक्शब्देन वर्णात्मकं शब्दमेव व्यपदिशति शब्दश्चेन्द्रियविषयो नेन्द्रियम्, तस्मादनेकविधसुखदुःखोपभोगाद्येपक्षमकर्मपरिणामनिर्मितमेतच्छरीरं तैस्तैरवयवैस्तं तं कर्मफलोपभोगमात्मनः सम्पादयतीत्यलमेवंविधेन्द्रियजल्पनाऽऽर्जवेन ।

## अन्तःकरणत्रैविध्यखण्डनम् ।

अन्तः करणस्यापि, (१)त्रैविध्यमनुपपन्नमेकेन मनसैव पर्याप्तेर्बुद्धिस्तु उपलब्धिस्वभावत्वात्करणकार्या न तु करणम्, अहङ्कारोऽपि ज्ञानविषय एव न करणम्, एतच्च सविस्तरं बुद्धिलक्षणे वक्ष्यामः, तस्मान्न त्रयोदशविधं(२)। करणमिति सिद्धम् ।

न्यूनाधिकत्वशमनादत इन्द्रियाणि
पञ्चैव बाह्यविषयाधिगमक्षमाणि ।
अन्तःसुखादिविषयग्रहणोपयोगि
षष्ठं मनस्तु कथयिष्यति सूत्रकारः ॥

तानि

पुंसो भवाब्धिपतितस्य विवेकरत्न-
मानन्ददायि न हरन्ति तथा विधेयम् ॥

## अर्थस्वरूपनिरूपणम् ।

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ।**

[ गौ० १।१।१३ ]

तदर्था इत्यत एवापकृष्य वा प्रक्रमाद्वा अर्था इति लक्ष्यपदं दर्शयितव्यम्, तदर्थ इति लक्षणम, तदिति प्रकृतेन्द्रियपरामर्शः, सामान्यलक्षणं तु पुनस्तदर्था इत्येव योजनीयम्, तदिति घ्राणादीनां विशेषसंख्यानिर्दिष्टानामवमर्शः, एवं च घ्राणस्य विषयो गन्धः रसनस्य विषयो रसः इत्यादि विशेषलक्षणमुक्तं भवति,

(१) त्रैविध्यम्—सांख्या हि मनोऽहङ्कारचित्तमिति भेदेनान्तःकरणं त्रिविधमित्याहुः ।

(२) त्रयोदशविधमिति । पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि त्रिविधमन्तःकरणमिति सङ्कलनया त्रयोदश करणानि ।

गन्धत्वादीनां तु घ्राणादिग्राह्यत्वादतिव्याप्तिरिति पृथिव्यादिगुणा इति विशेषणोपादानम् , ते चामी गन्धादय इन्द्रियार्था भोग्याः सन्तः सक्तिहेतवः संसारद्राघिमाणमावहन्तीति हेयतया भावयितव्याः ।

नन्वेवं गन्धादिगुणाधिकरणस्यावयविनः प्रथमस्य रागहेतोरसंग्रहः स्यात्, वक्ष्यति च 'तन्निमित्तं त्ववयव्यभिमान' [गो० अ० ४ आ०२ सू० ३] इति, संख्यापरिमाणादिगुणान्तराणामपि रागहेतुत्वमस्त्येव, यथा बर्हिकलापानुकारिपरिमृदितकुसुमदलपटलशबलविलासिनीकेशपाशवृत्ति रूपं हरति हृदयं यूनाम् तथा तद्गता बहुत्वसंख्याऽपि, उत्तप्तकनकशिलानिभनितम्बबिम्बरूपवत्तत्परिमाणमपि हरति च सरभसम् , अवयवसंयोगविभागाद्यपि तथा कन्दुकादिक्रीडासु किसलयितविसरसविलासविसरमधरपरिभ्रमणादि कन्दुकान्तम् , तथान्त्यजजात्यादिपरिहारेण स्वानुरूपजातियोगित्वमपीत्यादि सर्वं द्रव्यगुणकर्मादि सक्तिकारणमनुक्तं स्यात् ।

तत्र केचित्पृथिव्यादिगुणा इति द्वन्द्वसमासं व्याचक्षते पृथिव्यादीनि च गुणाश्चेति, पृथिव्यादिपदेन गुणाधिकरणमवयवि द्रव्यमुक्तमाश्रितत्वविशेषणत्वाभ्यां सर्वे गुणा इति, गुणग्रहणेन च संख्यापरिमाणादिवत्कर्मसामान्याद्यपि सर्वमुक्तमतो नासंग्रह इति ।

तदिदमनुपपन्नं गन्धादिग्रहणस्य हि तदानीमानर्थक्यं गुणाश्चेत्यनेनैव गतार्थत्वात् , विशेषख्यापनार्थं तदुपादानमिति चेत्तर्हि किं द्वन्द्वसमासवर्णनेन अयमेवास्तु समाधिः ।

यद्यपि द्रव्यकर्मसामान्यानाम् अन्येषां च संख्यापरिमाणादिगुणानामस्त्येव सक्तिहेतुता, तथापि प्राधान्येन गन्धादीनामेव सा, दृश्यते हि रूपादिनिरपेक्षस्य द्रव्यस्य संख्यादेः सामान्यस्य वा न सक्तिहेतुत्वं समस्तीति रूपादय एव मुख्यं रागकारणं तत्र झगिति बुद्धेः प्रसरकरणादुक्तं च—

तथापि नितरां रागवृद्ध्यै रूपादयो नृणाम् ।
त एव कविभिर्गीताः पञ्चेषोः पञ्च सायकाः ॥

तस्मात्पृथिव्यादीनां गुणा इति षष्ठीसमास एव श्रेयान् , गुणव्यतिरिक्तश्च गुणी पूर्वमेव समर्थितो यमहमद्राक्षं तं स्पृशामीति प्रत्ययप्रामाण्यात् ।

पृथिव्यादिगुणा इति यदुक्तं तदिदानीं विभज्य वर्ण्यते कस्य कति गुणा इति, तत्र—

गन्धादयो नियोक्तव्याश्चत्वारः पृथिवीगुणाः ।
अप्तेजोमरुतामेकं पूर्वपूर्वमपोह्य तु ॥

गन्धवर्जं रसरूपस्पर्शा अपां, रसवर्जं रूपस्पर्शौ तेजसः, रूपवर्जं स्पर्शाख्यः वायोरिति आकाशस्य तु गुणः शब्दः ।

ननु नायं गुणविनियोगः साधीयान्पृथिव्याश्चतुर्गुणत्वे पार्थिवेन घ्राणेन्द्रियेण चतुर्णामपि तद्गुणानां ग्रहणं स्यात्, एवमुत्तरेष्वपि वक्तव्यं तस्मादेकैकगुणत्वमेव भूतानामुच्यताम्, नैतदेवं गुणाः स्वेच्छया विप्रलभ्यन्ते, यथोपलभ्यन्ते तथा व्यवस्थाप्यन्ते, प्रतीतिप्रमाणका वयम्, तत्र पार्थिवे द्रव्ये चतुर्णामपि गुणानामुपलम्भः कथमेकगुणां पृथिवीं ब्रूमः, रूपैकगुणे च तेजसि पृथिव्युदकयोर्वायुवदरूपत्वादप्रत्यक्षत्वं स्यात्, तस्मात्त्रीणि रूपवन्ति द्रव्याणि।

यद्येवं सर्वेषां सर्वत्रोपलम्भात्सर्वाणि सर्वगुणानि भवन्तु भूतानि, पटपटायते पृथिवी छलच्छलायन्ते आपः धकधकायते तेजः कथकथायते वायुरिति सर्वेषां गुणः शब्दः स्यात्, उच्यते-न सर्वे गुणाः सर्वत्रोपलभ्यन्ते निर्गन्धानामपां सर्वत्र दर्शनात्, क्लिन्नरूपादौ तु पार्थिवावयवनिष्क्रान्त्या गन्धः पयस्युपलभ्यते।

एवं सुवर्णादौ तैजसे द्रव्ये संयुक्तसमवायाद्रसाद्युपलब्धिः, शब्दस्तु सर्वकालमाकाशवृत्तिरेव प्रतीयते, पृथिव्याद्यवयवसंयोगविभागप्रभवस्त्वसाविति तदाश्रितत्वभ्रममावहति न त्वाकाशाद्विना तस्य ग्रहणमिति आकाशं तत एव शब्द इत्येतच्च प्राङ् निर्णीतं गुणत्वम्।

यच्च पृथिव्याश्चतुर्गुणत्वे तद्गुणानां चतुर्णामपि पार्थिवघ्राणेन्द्रियग्राह्यत्वं स्यादिति, तन्न गुणोत्कर्षस्य नियामकत्वात्, सातिशयगन्धगुणाधिकरणै विजातीयद्रव्यावयवसंस्पर्शलेशरहितैः केवलपृथिव्यवयवैरदृष्टसहकारिभिर्घटितं घ्राणेन्द्रियमिति गन्धस्यैव ग्राहकम्, एतदेव च भूयस्त्वमाचक्षते यथाऽऽह कणव्रतः-[वै० ८।२५] 'भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञानप्रकृतिः', इहाप्यु(१)क्तम्-'तद्व्यवस्थानं तु भूयस्त्वादिति [गो० ३।१।७१]' दृश्यन्ते च केवलपृथिव्यवयवोपादानेष्वपि पदार्थेषु व्यवस्थितकार्यनियमाः शक्तयो यथा—

पार्थिवत्वाविशेषेऽपि विषं मरणकारणम्।
अगदद्रव्यमन्यत्तु जीविताय प्रकल्पते॥

तस्मादपर्यनुयोगोऽयं 'पार्थिवेन घ्राणेन गन्धवत्तद्रसादयोऽपि कथं न गृह्यन्ते' इति, सातिशयप्रकृतियोगेऽपि च न स्वगुणग्रहणनैपुणमिन्द्रियाणामितीन्द्रियचिन्तायां निर्णीतम्, श्रोत्रेणाकाशगुणस्य शब्दस्य ग्रहणमिति परिशेषानुमानप्रमाणकोऽयमर्थः शब्दपरीक्षायामेव परीक्षित इत्यलमतिप्रसङ्गेन।

इति निपुणधियामसम्मता सकलगुणैकगुणत्वकल्पना।
तदयमकलुषोऽभ्युपेयतां गुणविनियोगविधिर्यथोदितः॥

---

(१) इहापि—न्यायदर्शनेऽपि। तद्व्यवस्थानमिति। भूयस्त्वाज्जलाद्यविशिष्टपृथिव्यारब्धत्वात् तद्व्यवस्थानं घ्राणादीन्द्रियत्वव्यवस्थितिः।

तेऽमी हेयाः कृतकमधुरं रूपमादर्शयन्त-
स्तिक्ताहाराः परिणतिविपत्कारिणो हीन्द्रियार्थाः ।
त्यक्ताश्चैते व्यपगतमहामोहपङ्केन पुंसा
तीर्णश्चायं भवजलनिधिः क्लेशकल्लोलरौद्रः ॥

## बुद्धिलक्षणम् ।

### बुद्धिरुपलब्धिर्ज्ञानमित्यनार्थन्तरम् । १ । १ । १५ ॥

ननु पर्यायोच्चारणमेतन्न बुद्धेर्लक्षणमभिधीयते । न, पर्यायप्रयोगस्यैव लक्षणत्वात्, लक्षणं हि तदुच्यते येन समानेतरजातीयेभ्यो लक्ष्यं व्यवच्छिद्यते, व्यवच्छिद्यते च बुद्धिर्बुद्ध्यादिपर्यायवाच्यतयैव तेभ्य इति नाभिधानमालामात्रमिदम् ।

ननु सामयिकत्वाच्छब्दार्थप्रत्ययस्य समयस्य च पुरुषेच्छानिर्वर्त्यत्वात्कथमिदं व्यवस्थितं लक्षणं स्यात् । मैवम् सर्वजनीनस्य समयस्य विप्लावयितुमशक्यत्वात्तदुद्दिष्टस्य तद्वाच्यस्य लक्षणत्वात् ।

प्रकारान्तरेण लक्षणमस्याः किमिति नोक्तमिति चेत् । शिंशिपाचोद्य(१)मिदं तस्मिन्नप्युक्तेऽनुयुञ्जीत भवानित्थं किमिति नोक्तमिति, अस्ति च प्रयोजनं पर्यायद्वारकलक्षणोपवर्णनस्य यत्साङ्ख्यानां व्यामोहनिरसनम् ,एवं हि सांख्याः सङ्गिरन्ते–'बुद्धिरन्या ज्ञानमन्यदुपलब्धिरन्ये'ति तद्भ्रमापनयनायैवमुच्यते–- 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' एक एवार्थ इत्यर्थः, इत्थं च स्वरूपतो निर्ज्ञाता बुद्धिर्भोगस्वभावात्तत्साधनत्वाच्च संसारहेतुरिति हेयत्वेन भाव्यते ।

## सांख्यमतोपपादानम् ।

सुखादिबुद्धिर्भोगः तत्साधनबुद्धिस्तु भोगसाधनमिति कथं पारमर्षाः प्रवदन्ति 'बुद्धिरन्योपलब्धिरन्ये'ति, नित्यां हि बुद्धिं ते मन्वते, तत्किमात्मैवैतैः बुद्धिरिति गृहीतः ? नाचेतनाया भोग्यायाः प्रकृतेः प्रथमा विकृतिर्महच्छब्दवाच्या बुद्धिः पुरुषस्तु चेतनो भोक्ताऽन्य एव, ताविमौ प्रकृतिपुरुषौ विवेकेनापश्यतां संसारः प्रकृतिपुरुषविवेकज्ञानान्मोक्षः । का पुनः प्रकृतिर्नाम ? सत्त्वरजस्तमसां त्रयाणां गुणानां साम्यावस्था प्रकृतिः, प्रधानमव्यक्तं च तदुच्यते यत्साम्यावस्थागतं गुणत्रयमिति ।

ननु तत्सत्त्व किं प्रमाणम् ? अनुमानमित्याह, तथा हि–चराचरमिदं विश्वं सुखदुःखमोहाविनाभूतमुपलभ्यते न हि ब्रह्मादौ स्तम्बपर्यन्ते जगति तथाभूतं किमपि भूतमुपलभ्यते यत्सुखदुःखमोहैरविकृतम् , तत्र सुखस्वभावं सत्त्वं दुःखस्वभावं रजः मोहस्वभावं तमः, सर्वत्र प्रीत्यप्रीतिविषादादिदर्शनात्प्रकाशप्रवृत्तिनियमापगमाच्च सर्वं त्रिगुणात्मकम् , जगत्कार्यं च यत्परस्परान्वितरूपं

(१) कुत्सिताशङ्केत्यर्थः ।

तदेकरूपात्कारणादुत्पद्यमानं दृश्यते, मृदन्वितानि हि घटशरावोदञ्चनप्रभृतीनि कार्याण्येकस्मान्मृदात्मनः कारणादुद्भवन्ति, तदिदं विश्वं सुखदुःखमोहान्वितमिति तदात्मककारणकार्यं भवितुमर्हति, यत्सुखदुःखमोहात्मकं कारणं सा सत्त्वरजस्तमोरूपा प्रकृतिः, एवमन्वयपुरःसराः परिमाणादिहेतवोऽपि वक्तव्याः, इयत्तया वा चतुरश्रतादिना वा परिमाणेन तद्वतां कार्याणामेकप्रकृतित्वदर्शनात्, विषयवृत्तयश्चैते गुणाः कार्येषु दृश्यन्ते च-क्वचित्सत्त्वमधिकमूने रजस्तमसी क्वचिद्रजः प्रकृष्टमल्पे सत्त्वतमसी क्वचित्तमः प्रवृद्धं तुच्छे सत्त्वरजसी इति, तदेषां वैषम्यभेदोपदर्शितविश्वरूपकार्याणां क्वचित्साम्यावस्थया भाव्यं सा प्रकृतिरुच्यते, सेयमचेतना भोग्या प्रकृतिः तस्यास्तु भोक्ता चेतनः पुरुषः । पुरुष इदानीं किमनुमानकः? उक्तमेव-भोग्येन भोक्तुरनुमानं, न ह्यचेतनस्य भोग्यस्य भोक्तारमन्तरेण भोग्यतोपपद्यते दृष्टा च सेति भोक्ता कल्प्यते, स च चितिशक्तिस्वभावक एव सर्वप्रकारकर्तृत्वादिव्यवहारनिवहबहिष्कृतस्वरूपः, द्रष्टृत्वमेव पुरुषस्य स्वरूपमाहुः, न यथा भवन्तः एकमात्मानमध्यवसायादिधर्मयोगिनं मन्यन्ते तथाऽसौ भवितुमर्हत्यध्यवसायादेर्बुद्धिधर्मत्वात् ।

कर्त्तुं शक्नोति पुरुषस्तृणस्यापि न कुब्जताम् ।
अन्योपनीतमथ तु स पश्यत्येव केवलम् ॥

प्रकृतिरेवैनं भोगापवर्गाभ्यां संयुनक्ति, न च निर्विकारा सती भोगसम्पादनसमर्थाऽसौ भवतीति महदादिविकृतीः प्रतिपद्यते, पङ्ग्वन्धन्यायेन प्रकृतिपुरुषौ संयुज्येते-प्रकृतिरचेतना दृश्या भोग्या द्रष्टारं भोक्तारं पुरुषमपेक्षते, पुरुषोऽपि द्रष्टा भोक्ता दृश्यं भोग्यमपेक्षते इत्येवं तयोः पङ्ग्वन्धवत्संयोगो भवति दर्शनशक्त्या पङ्गोर्गमनशक्त्या चान्धस्यैकत्र मेलनात्कार्यसिद्धिरेवं प्रकृतिपुरुषसंयोगात्सर्गः प्रवर्तते, तदुक्तम्—

पुरुषस्य दर्शनार्थः कैवल्यार्थस्तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ [ सां० का० २१ ]

यच्चेत्थं प्रधानान्महत्तत्त्वमुत्पद्यते सा बुद्धिरध्यवसायात्मिका धर्मज्ञानवैराग्यैश्वर्यतद्विपर्ययरूपवृत्तियोगिनी महतत्त्वमेवोच्यते, बुद्धेरहङ्कार उदेति स चाभिमानस्वभावः, अहङ्कारात् घ्राणादीनि पञ्च बुद्धीन्द्रियाणि वागादीनि पञ्च कर्मेन्द्रियाणि सङ्कल्पकमेकादशं मनः गन्धादितन्मात्राणि च पञ्चेति षोडशको गणः प्रभवति, ततो गन्धादितन्मात्रपञ्चकात्पञ्च पृथिव्यादीनि महाभूतानि जायन्त इति, आह च—

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ [ सां० का० २२ ]

तानीमानि पञ्च पञ्चविंशतितत्त्वानि सञ्चक्षते, प्रधानं प्रकृतिरेव न विकृ-

तिः, महदहङ्कारतन्मात्राणि सप्त पूर्वापेक्षया विकृतयः उत्तरोत्तरकार्यापेक्षया प्रकृतयः, एकादशेन्द्रियाणि पञ्च भूतानि विकृतय एव, अप्रकृतिविकृतिरूपस्तु शुद्धः पुरुष इति, तदाह—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ [सा० का० ३]

एवं महदादिविकारवती प्रकृतिरात्मनो भोगं साधयति, कश्चास्य भोगः ? बुद्धिवृत्त्यनुपातित्वं–विषयाकारपरिणतेन्द्रियवृत्त्यनुरक्तां बुद्धिवृत्तिं ज्ञानात्मिकां पुरुषः पश्यति, दर्शनेऽपि न तस्य किंचिच्चान्यत्वं किन्तु तदेव दर्शनं यत्तत्र प्रतिबिम्बनमिति, इत्थं तयोर्बुद्धिपुंसोः संयोगे सति बुद्धिधर्मश्चेतयितृलक्षणो बुद्धावसन्नपि सन्निव लक्ष्यते, तदाह—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ [ सा० का० २० ]

अपवर्गाय कथमात्मनः प्रकृतिरवकल्पते ? स्वरूपं प्रकाशयतीत्याचक्षते, अनवधृतप्रकृतिस्वरूपः पुमान्प्रकृतिकृतमखिलमात्मकृतमिति मन्यमानस्तदुपार्जितं भुङ्क्ते, यदा तु पृथग्भूतामेनां मन्यते तदा भवत्वियमायासहेतुरेव ममेति बुद्ध्यमानस्तत्कृतमनुपभुञ्जानः स्वरूपनिष्ठ एवावतिष्ठते, प्रकृतिरपि भवतु दृष्टाऽहमनेन पृथङ् मामेष मन्यते इति न तदभिमुखीभवितुमुत्सहते, तदाह–

प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ [ सां० का० ६१ ]

परस्परं च भग्नरसयोः प्रकृतिपुरुषयोर्व्यापकत्वात्सत्यपि संयोगे सर्गो न प्रवर्तत एवेत्याह—

दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्येका ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ [सा० का० ६६]

अपरिम्लानकुतूहलो हि पुमान्वञ्चयितुं शक्यते न दृष्टं तत्त्वमिति मत्वा, सत्यामपि योग्यतायां निवर्तते प्रकृतिर्नटीव रङ्गभूमौ प्रदर्शितनिखिलनिजनृत्तवृत्तान्तनैपुणा तत इत्याह–'रङ्गस्य दर्शयित्वा निवर्तते प्रकृतिः' तदेवं प्रकृतिरेव संसारे प्रवर्तते प्रकृतिरेव मोक्षमनुभवतीत्याह—

तस्मान्न बध्यतेऽद्धा नापि मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाऽऽश्रया प्रकृतिः ॥ [सां० का० ६२]

किमर्थं पुनरसावेव विशेष्यते प्रकृतिरिति ? किं क्रियते स्वभाव एवैष दैवहतिकायास्तस्याः—

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ [ सां० का० ६० ]

अचेतनत्वादस्याः कथमेवंकारित्वमिति चेदुक्तमत्र—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ॥
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ [ सां.का. ५७ ]

ननूत्पन्नतत्त्वज्ञाने भोगानुकूलमहदादिकार्यारम्भपराङ्मुखत्वात्तस्याश्चैकत्वादेकस्मिंस्तत्त्वविदि मुक्ते सति सर्वे मुक्ताः स्युः । नैष दोषः, तत्त्वविदमेव पुमांसं प्रति तस्या औदासीन्यात्, अन्यसाधारणत्वेन तत्कार्यानपायात्, तथा च पतञ्जलिः–[ पा.२।२२ ] 'कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्'(१) नन्वेवं यदैव तत्त्वज्ञानमुत्पन्नं तदैव प्रकृत्युपार्जितकर्मफलोपभोगपरिहानितः पुंसः शरीरपातः स्यान्नेत्याह–'तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः, ततः संसारविरतौ सत्याम्—

प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ [ सां. का. ] इति ।

अहो नु खलु कपिलकविकथारसाक्षिप्तहृदयैरतिबहु प्रसक्तानुप्रसक्त्या लिखितमस्माभिस्तदियं प्रधानप्रकृतिः प्रथमा महच्छब्दवाच्या सा बुद्धिस्तत्त्वविदं प्रति नष्टाऽप्यन्यसाधारणत्वादनष्टैवेति नित्या, नित्यत्वाच्च प्रत्यभिज्ञानुसन्धानादिव्यवहारप्रबन्धनिर्वाहणक्षमा बुद्धिः, ज्ञानं तु तस्य वृत्तिः, उपलब्धिस्तु पुंसो वृत्तिमद्बुद्धिदर्शनमिति नैषां पर्यायशब्दत्वमिति ।

## सांख्यमतनिराकरणम्

अत्र प्रतिविधीयते—आत्मन्येव नित्ये व्यापिनि बोद्धरि ज्ञातर्यवसातरि धर्माधर्मादियोगिनि प्रत्यभिज्ञानादिकार्याणां कर्तरि सेयं बुद्धिरज्ञा सांख्यैः कल्पिता, चेतनत्वं ज्ञानादियोगिन्या अपि यत्त्वस्या नाभ्युपगतं सोऽयमतीव तपस्विनां भ्रमः, य एव बुध्यते जानात्यध्यवस्यति स एव पश्यति चेतयते च, न खल्वत्र वस्तुरूपभेदं पश्यामः, तत्र बुद्धिर्बुध्यते जानात्यध्यवस्यति पुरुषस्तु पश्यति चेतयते चेति वञ्चनायैवमुच्यते मुग्धतया वा ।

यच्चेदमुच्यते–'बुद्ध्याध्यवसितमथ पुरुषः पश्यती'ति, तद्व्याख्येयं किमिदं तस्य द्रष्टृत्वमिति ? प्रतिबिम्बनमिति चेत्किं स्वच्छे पुंसि वृत्तिमती बुद्धिः संक्रामत्युत वृत्तिमत्यां बुद्धौ प्रमातेति । तत्र चितिशक्तिरपरिणामिन्यपरप्रतिसंक्रमेति न बुद्धौ पुरुषस्य संक्रमणं, बुद्धौ तु पुंसि संक्रान्तायामपि पुंसः किं वृत्तं

---

(१) अत्र भाष्यम् 'कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि नाशं प्राप्तमपि अनष्टं तत् अन्यपुरुषसाधारणत्वात्' इति । 'कृतार्थमिति' बुद्ध्या कृतः समर्पितोऽर्थो यस्येति कृतार्थमेकं कञ्चिन्मुक्तपुरुषं प्रति गुणादिकं नष्टं प्रयोजनकरणात् राज्ञो राज्यवन्नष्टमपि सामान्यतो न नष्टं तस्मिन्कृतार्थे अन्यपुरुषे च तस्य साधारणत्वादित्यर्थः, इति योगवार्तिकम् ।

येन द्रष्टा, संबन्धः द्रष्टृत्वं स्वभाव एवास्येति चेत्किं बुद्धिप्रतिबिम्बनेन, विशिष्टविषयावच्छेद इति चेत्ततः पूर्वमनालम्बनं द्रष्टृत्वमघटमानमिति न नैसर्गिकं द्रष्टृरूपं पुंसः स्यात्, दर्शनशक्तिः स्वाभाविकीति चेन्न, तस्य भेदाभेदाभ्यां निरूपयितुमशक्यत्वात्, प्रतिबिम्बपक्षे च परस्परानुरागस्य तुल्यत्वादवियोगाच्च कथमिदं निर्धार्यताममी पुंधर्मा इति, न हि तयोः पार्थगर्थ्येन कदाचित्स्वरूपावधारणं वृत्तम्, अनवधारितकार्यभेदत्वाच्च नानात्वमपि तयोर्दुर्वचम्, चेतनाचेतनत्वाद्भोक्तृभोग्यत्वाच्च विस्पष्टं तयोर्नानात्वमिति चेन्न, ज्ञानादियोगित्वं च बुद्धेरचेतनत्वं चेति चित्रम्।

अपि च कल्पयित्वा भेदधर्मं बुद्धिधर्माः पुंसि पुंधर्माश्च बुद्धावारोपणीया इति किं भेदेन, भेदे च बुद्धेर्ज्ञानादियोगित्वे च चेतनत्वापत्तेरेकत्र कार्यकारणसंघाते चेतनद्वयमनिष्टं प्रसज्यते, नित्यमन्तःकरणमन्तरेण पुंस उपलब्धिर्न भवेदिति बुद्धेः कल्पना चेत्, अस्त्येव नित्यमन्तःकरणं मनः, तेन करणेन कर्तुरात्मनो विषयोपलब्धिक्रिया निर्वर्त्यते सैव च बुद्धिरित्याख्यायते न त्वन्या नित्या बुद्धिरस्तीति, किञ्च कस्य कृते परिदृश्यमानमात्मनो ज्ञानादिक्रियाकर्तृत्वमुत्सृज्य बुद्धेरदृश्यमानमुपेयते, को ऽत्राशयः।

ननु पुरुषस्य स्वातन्त्र्यात्मककर्तृत्वे सति स्वकृतकर्मफलोपभोगानन्त्यादनिर्मोक्षः स्यात्, न हि कर्मणां परिक्षयो जन्मकोटिशतैरपि शक्यक्रियो, यदा तु कर्तारमुदासीनं प्रकृतिर्बध्नाति तदा सैव ज्ञाता सती मोक्ष्यतीति न दूरं मोक्षवर्त्म भविष्यति। अहो बत निखिलमेव मौर्ख्यं सांख्यहृदयेष्वेव प्रतिष्ठितमिति कथमन्यो जन इदानीं मूर्खो भविष्यति, अचेतने हि निरङ्कुशे प्रधाने बन्धरि सुतरामनिर्मोक्षः स्यात्, तत्त्वविदमपि पुमांसं न बध्नाति प्रकृतिरिति कोऽस्या नियन्ता पङ्ग्वन्धन्यायेन संयोगस्य तदापि तुल्यत्वात्, निवृत्तकुतूहलः पुमानिति चेत्, प्रकृतिरनिर्मुक्तकौतुकाऽभिनववधूरिव स्थितैव।

अपि च रे मूढ! पूर्वमेव तपस्विना पुंसा किं कृतं यदसौ बद्धोऽभूत्, द्रष्टृत्वं तु तस्य रूपं तदविनाभूतं कैवल्यदशायामपि तन्न नश्यत्येवेति तदाऽपि तद्बन्धनाय कथं न प्रवर्तते निर्मर्यादा प्रकृतिः, दृष्टाऽस्मीति विरमतीति चेत्, मैवम्, न ह्यसावेकपत्नीव्रतदुर्ग्रहगृहीता, निःसंख्यपुरुषोपभोगसौभाग्या पण्यवनितेव नासौ नियमेन व्यवहर्तुमर्हतीत्यास्तामेतत्।

यच्च 'सत्त्वरजस्तमोभिस्त्रिभिर्गुणैस्समावस्थतया प्रधानशब्दव्यपदेशभाग्भिः महन्नाम्नी बुद्धिरुत्पद्यते' इत्यादि प्रक्रियाजालमालपितं तन्महान्धपरम्परान्यायप्रवृत्तगुरुपाठक्रमोपनतमेव न प्रमाणमूलम्, कार्याद्धि कारणमल्पपरिमाणमुपलभ्यते न तु विपर्ययः स्वावयवाश्रितस्य घटादेस्तथा दर्शनात्तदवयवानां तदपेक्षया ऽल्पत्वादन्यस्यास्यादो(?) महापरिमाणत्वमप्रयोजकम्।

अपि च बुद्धिर्नाम विषयोपलम्भः अहंकारोऽप्यहंप्रत्ययरूपोऽभिमानो बुद्धिविशेष एव तेन बाह्यानीन्द्रियाणि जन्यन्ते गन्धादयश्च गुणाः गुणैश्च पृथिव्यादीनि भूतानीति महाव्यामोहः, इदं च चित्रं-विषयजन्या हि सुखादयः प्रसिद्धास्ते च सुखादिजन्या विषयाः संवृत्ता इति, नन्वेयं विश्वामित्रस्येव सांख्यमुनेः सृष्टिः, न च प्रधानास्तित्वमपि प्रमाणवदन्वयादिहेतूनामसाधनत्वात्, चेतनानां हि संभवेदपि सुखदुःखमोहान्वितत्वमचेतनानि भूतानि सुखदुःखमोहवन्तीति सुभाषितम्, घटे पटे शकटे च सुख दुःखमोहाः सन्तीति कः प्रतिपद्यते, प्रकाशप्रवृत्तिनियमा अपि चेतनेष्वेव दृश्यन्ते नाचेतनेष्वित्यसिद्धत्वाद्धेतोर्न प्रधानसिद्धिः ।

अपि च सत्कार्यवादमूल एष तपस्विनां विभ्रमः सर्वं सर्वत्रास्तीति ततोऽन्वयसिद्धिं बुद्ध्यमानास्ते प्रधानसिद्धावध्यवसिताः, सत्कार्यवादश्च विचार्यमाणो न समस्त्येवेति कुतस्त्या हेतुसिद्धिः ।

## सत्कार्यवादनिरूपणम्

ननु सत्कार्यवादे कार्यकारणभावो भवति भावानां नान्यथा, तथा हि चतुष्टयी गतिरिह स्याद् घटादिकार्यं मृत्पिण्डादिना कारणेन क्रियमाणमपि क्रियते सद्वाऽसद्वा सदसद्वाऽनुभयं वेति, तत्रासतः करणे खरविषाणादेः करणं स्यादसत्त्वे हि घटस्य खरविषाणस्य च को विशेषः, घटस्यापि च प्राक्प्रध्वंसाभावदशयोरसत्त्वाविशेषात्प्रागभावदशायामिव प्रध्वंसावस्थायामपि करणं भवेत्, असत्करणे नियतोपादानग्रहणं न प्राप्नोति, तैलार्थी हि तिलसर्षपानुपादत्ते न सिकताः असत्त्वे च तैलस्य को विशेषः सर्षपाणां सिकताभ्यः, असति कार्ये निरालम्बनः कारकव्यापारो भवेन्न ह्यसौ मृत्पिण्डादिविषयो भवितुमर्हति कार्यं चासत्, अपि चाविद्यमाने कारणव्यतिरिक्ते च कार्ये जन्ये कारणस्य मृत्पिण्डादेर्घटादिकार्यं जनितवतः किमिति न स्वरूपमुपलभ्यते ।

अथ स्वविनाशेन कारणं कार्यस्य जनकमिष्यते तदियमभावाद्भावोत्पत्तिर्भवेत्तस्यां च कुतोऽयं नियमो यदनन्तरवृत्त एव मृत्पिण्डाभावः कुम्भमभिनिर्वर्तयति न चिरातिक्रान्त इत्यतश्च परुन्मृत्पिण्डे नष्टे एव स कुम्भोत्पादः स्याद् ।

अथ स्वाव्यतिरिक्तमेव कारणेन कार्यं जन्यते ? तर्हि कारणस्य सत्त्वात्तदव्यतिरिक्तं वक्तुं युक्तं सदसतोर्विप्रतिषेधेनैकत्र समावेशायोगात्, रूपभेदादविरोध इति चेन्न, कार्यस्य विचार्यमाणस्यैकत्वात्, ततश्च तेनैव स्वेन कार्येण रूपेणासच्चेन्नासद्भवेदसच्च न सदिति, पररूपेण त्वसत्त्वं समस्तभावानामस्त्येव, अनुभयात्मकं तु नाम वस्तु नास्त्येवेति, तत्पारिशेष्यात्सदेव कार्यम्, किमिति च

नोपलभ्यते इति ? अनुमानेनापि यदुपलब्धं तत्किमनुपलब्धं भवति, प्रत्यक्षेण तु तदानीमनुपलम्भोऽनभिव्यक्तत्वादभिव्यक्तिसम्पादन एव च कारकप्रयत्नसाफल्यं, कार्यं तु सदेवेति ।

## सत्कार्यवादखण्डनम्

अत्राभिधीयते, केन रूपेण तदानीं कार्यं सदिति मन्यते यदि कारकव्यापाराभिनिर्वर्त्येन सलिलाहरणाद्यर्थक्रियासमर्थेन पृथुबुध्नोदराकारतारूपेण चक्रमूर्धनि घटोऽस्ति तदाऽभिव्यक्तेनापि रूपेण सत्त्वादत्यन्ताय कारकव्यापारवैफल्यमित्थमपि च कारकप्रवृत्तौ तद्व्यापारानुपरमप्रसङ्गः, किं हि तदोपलभ्य कारकाणि निवर्तेरन्कार्यस्य प्रागप्युपलब्धत्वात् ।

अथ मृत्पिण्डरूपेण तदानीं घटोऽस्तीति कथ्यते, तत्र न ह्यसौ तदानीं घटोऽस्ति मृत्पिण्ड एवासावदो न स्वरूपमुत्तरकालमपि निवर्तते घटस्तु ततो निवर्तते, यद्येवं यदैवासौ निवर्तते तदैवास्ति न ततः पूर्वमिति ।

अथ पूर्वं शक्त्यात्मना तस्यास्तित्वमिदानीमभिव्यक्त्यात्मना क्रियते इति, तदप्यनुपपन्नमभिव्यक्तिरपि तत्स्वरूपाद्भिन्ना ऽभिन्ना वा सत्यसती वेति विकल्प्यमाना न पूर्वोक्तं दोषमतिवर्तते ।

का चेयमभिव्यक्तिः ? किं कार्यात्मनाऽवस्थानमथ संस्थानविशेष उत प्रतीतिरिति, यदि कार्यात्मनाऽवस्थानं, तत्पूर्वं नाभूत्तदधुना भूतमित्यसत्कार्यम्, पूर्वमपि वा यदि तदासीत्तदा पुनः कारकवैफल्यम् , संस्थानमप्यवयवसन्निवेशविशेषः सन्नेव, ते अवयवास्तु सन्तीति कस्यात्र विवादः, न खलु परमाणवोऽस्माभिर्नाङ्गीकृताः, प्रतीतिस्तु घटस्य चक्षुरादिकारकसामग्र्यधीनत्वमृत्पिण्डदण्डचक्रादिकारकचक्रसाध्येति सा चक्रमूर्धनि घटस्य नास्त्येवेत्यसन् घटः ।

दर्शनादर्शनाधीने सदसत्त्वे हि वस्तुनः ।
दृश्यस्यादर्शनात्तेन चक्रे कुम्भस्य नास्तिता ॥

चक्रमूर्धवत्प्रध्वंसदशायामनुपलम्भाद् घटनास्तित्वमेवेत्यतश्च 'नासतो विद्यते भावो नाभावो विद्यते सत' इत्यप्रमाणकं पूर्वापरान्तयोर्भावस्वरूपादर्शनात् , शक्त्यात्मना ऽपि यदस्तित्वमस्योच्यते, तत्रापि चिन्त्यम्—केयं शक्तिर्नामेति ? यदि घटस्वरूपाद्भिन्नासौ, तर्हि पररूपेण घटोऽस्तीति स्वरूपेणैव घटास्तित्वमुक्तं भवेत्तच्च प्रत्यक्षविरोधान्निरस्तम् , असत्करणपक्षे च यच्चोदितं 'शशविषाणाद्यपि क्रियेते'ति, तन्न, वचनव्यक्त्यपरिज्ञानात्, यदसत्तत्क्रियते इति नेयं वचनव्यक्तिरपि तु यत्क्रियते तदसदिति ।

स्वरूपसहकार्यादिहेतवो यद्विधायिनः ।
दृश्यन्ते जन्यते तद्धि न व्योमकुसुमादिकम् ॥

प्रागभावदशायां च हेतुव्यापारदर्शनम् ।
न तु प्रध्वंसवेलायामतः कमनुयुञ्ज्महे ॥
उपादानं तु सर्वस्य यन्न सर्वत्र दृश्यते ।
तन्न कार्यस्य सद्भावादपि त्वेवं निरीक्षणात् ॥
अद्यत्वे व्यवहारोऽपि नैवापूर्वः प्रवर्त्यते ।
यथोपलब्धं वृद्धेभ्यस्स तथैवानुगम्यते ॥
तैलार्थी सिकताः कश्चिदाददानो न दृश्यते ।
अदृष्ट्वा चाद्य नान्योऽपि तदर्थी तासु धावति ॥
अन्वयव्यतिरेकौ च गृह्येते व्यवहारतः ।
अनादिश्चैष संसार इति कस्यानुयोज्यता ॥

अथ वा शक्तिनियमादेवोपादाननियम उपपत्स्यते,
शक्तिस्त्वनित्या सूक्ष्मा च नेह का चिदुपेयते ।
तदभ्युपगमे नित्यं कार्योत्पादप्रसक्तितः ॥

किन्तु योग्यतावच्छिन्नस्वरूपसहकारिसन्निधानमेव शक्तिः, सैवेयं द्विविधा शक्तिरुच्यते अवस्थिता ऽऽगन्तुका च, सत्त्वाद्यवच्छिन्नं स्वरूपम् अवस्थिता शक्तिः, आगन्तुका तु दण्डचक्रादिसंयोगरूपा, शक्तिद्वयकृता च कार्यनिष्पत्तिरसकृद् दृष्टेति तदर्थिभिस्तु तदुपादानम्, योग्यता ऽपि नार्थान्तरं किञ्चित्किन्तु वस्तुविशेष एवेत्येवं सद्विनियमादुपादाननियमसिद्धेर्न सत्कार्यम् । न च शक्तिरेव कार्यमिति वक्तव्यम्, कार्यस्वरूपस्य ततः पृथग्भूतस्य प्रतीत्या व्यवस्थापनात्, शक्तेश्च कार्यत्वे कार्यादेव कार्योत्पादोऽङ्गीकृतः स्यात्, न च घटाद् घट उत्पत्तुमर्हति । शक्तेश्च कार्यमुत्पद्यते इत्यभ्युपगतमतो ऽन्यत्कार्यमन्या च शक्तिरनुवाद्यवाचकयोर्व्यङ्ग्यव्यञ्जकयोश्च दीपघटयोरुभयाश्रिता शक्तिर्दृष्टेति कार्यकारणयोरपि सा कथमनुभयाधिष्ठाना भवितुमर्हति, सति च द्वितीये कार्याख्ये तदाश्रये कथमियमुभयाश्रिता स्यादिति, नैतदेवं यथादर्शनं शक्तेरभ्युपगमात्तचैकत्र दृष्टरूपमन्यत्रापि मृग्यते, वाच्यवाचकयोर्व्यङ्ग्यव्यञ्जकयोश्च द्वयोः पृथक्त्वेन दर्शनादुभयाश्रिता शक्तिरङ्गीकृतेति हेतुद्वयस्यानुपलम्भात्केवलकारणवृत्तिरेव शक्तिस्तत्कृतश्चोपादाननियमविचारो युक्तः ।

उत्पत्तौ खलु सिद्धायामुपादानं विचार्यते ।
सतस्तु सैव नास्तीति किमुपादानचिन्तया ॥

सत्कार्यवादे च सुतरामुपादाननियमो दुर्घटः, सर्वस्य सर्वत्र भावात्सिकतातिलसरस्तीरकेदारव्युप्तबीजजनिताङ्कुरादिकार्यक्रमोत्पाद्यमानतिलस्वरूपपर्यालोचनया तिलेष्विव सिकतास्वपि तैलसम्भवात्, सर्वस्य सर्वत्र चास्तित्वे नियतपदार्थप्रतिष्ठितहानोपादानादिव्यवहारः सकल एव विप्लवेत, अपि च प्रायश्चि-

त्तमेष तपस्वी तप्तकृच्छ्रमतिकष्टं कथं चरिष्यतीति महन् ! गतोऽसि कारुण्यम् , अन्नं च तावदश्नात्यन्ते च वर्चोऽस्तीति विड्भक्षणात्प्रायश्चित्तीयत एवायमित्यलं सत्कार्यवादप्रमादेन ।

यत्पुनरत्राभाणि--कारणानुपमर्देन कार्यानुत्पादादभावाद्भावोत्पत्तिर्भवेत्तत्र चानन्तरवृत्त्युत्पत्तिनियमो न स्यात्-इति, तदप्ययुक्तम् , मूर्तानां समानदेशत्वविरोधात्कार्यकारणयोरेकदेशत्वं नेष्यते नैतावता भावोत्पत्तिरभावाद्भवितुमर्हति , कारणपदेन तदुपादानदर्शनादत एवानन्तर्यनियमो ऽप्युपपन्नः, न च कार्यकारणयोरभेदात्सत्कार्यमिति वक्तव्यम् , तयोः प्रत्यक्षसिद्धभिन्नस्वरूपत्वात् ।

यत्तु निरालम्बना कारकप्रवृत्तिरिति चोदितं परिहृतं तद्भाष्यकारेण(१) 'बुद्धिसिद्धं तु तदसत् ( गौ० ३।१।५०।११ ) इति' वृद्धव्यवहारतः कार्यकारणभावमवगम्यामुष्मात्कारणादिदमीदृशं कार्यमुत्पद्यत इति बुद्धौ निर्धार्य कारकाणि कर्ता नियुङ्क्ते इति न निर्विषयः कारकव्यापारः, तदेवं सत्कार्यवादस्य निष्प्रमाणकत्वात्तन्मूलान्वयादिहेतुसिद्ध्यभावान्न प्रधानास्तित्वसिद्धिस्तदभावाच्च न तद्विकृतिर्नित्या बुद्धिरपि तु ज्ञानोपलब्धिरूपैवेति सम्यक्सूत्रितं 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमि'ति, इतश्चानित्या बुद्धिः जानामि ज्ञास्याम्यज्ञासिषमित्युपजननापायधर्मतया पाकादिवत्कालत्रयेऽपि प्रकाशमानत्वाज् ज्ञातृव्यतिरिक्तायाश्च बुद्धेरप्रतिभासनात् , अयं तु विशेषः-पाकादिक्रियाणामोदनादिफलावच्छेदद्वारकं कालवैतत्यमपि भवति, उपलब्धेस्तु वस्तुस्वरूपप्रकाशनमात्रपरिसमाप्तप्रयोजनायाः कालवैतत्यं नास्त्येवात एवानित्यत्वेऽप्युत्पन्नापवर्गिणीमेव बुद्धिमाचक्षते शब्दवन्न घटादिवत्कालान्तरस्थायिनीमिति, सा चेयं बुद्धिरात्मान्तःकरणशब्ददीपेन्द्रियार्थाद्यनेककारककलापकार्यापि सती न बाह्ये न बाह्यकर्मणि समवैति, न बाह्यकरणे चक्षुरादौ नान्तःकरणे मनसि किन्तु कर्तर्येव, कर्ताऽपि च नित्यो विभुरात्मा न भूतसङ्घातस्वभावः कार्यस्तस्या आश्रय इत्यात्मपरीक्षायां निर्णीतं गुणत्वमपि च तस्यास्तत्रैव दर्शितम् ।

नन्वेवं तर्हि न बुद्धेरनित्यत्वं विनाशकारणाभावाद्, द्विविधो हि गुणानां विनाशहेतुराश्रयविनाशो विरोधिगुणप्रादुर्भावो वा, नेहाश्रयविनाशो नित्यत्वादात्मनो, न च विरोधिनमस्याः कं चिद् गुणमुपलभामहे। न, शब्दवदाशुविनाशित्वात् , नित्याकाशगुणो ऽपि शब्दः शब्दान्तरमारभ्य यथा विनश्यति तथा बुद्धिर्बुद्ध्यन्तरमारभ्य विनश्यतीति तथा दर्शनात्कल्प्यते, यावांश्च कश्चन विनाशद-

( १ ) बुद्धिसिद्धमिति । तत्कार्यम् , असत्—प्रागभावप्रतियोगि, बुद्धिसिद्धम्—बुद्ध्या विषयीकृतम् , तथाहि इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रवर्तते न तु पटोऽस्तीति ज्ञात्वा तथासति सिद्धत्वेन ज्ञाते इच्छाभावात् प्रवृत्त्यनुपपत्तेरित्यर्थः ।

र्शनभेदोपलम्भादिः शब्दस्यानित्यतायां न्याय उक्तः स सर्वोपि बुद्धयां प्रयोजनीयः, अत एव न बुद्धीनामेकप्रमातृवृत्तीनां यौगपद्यं विद्यते शब्दानामिवैकवक्तृप्रयुक्तानाम्, विनश्यदविनश्यद्दशयोस्तु बुद्धयोराशुविनाशत्वेऽपि यौगपद्यमनुभवादुपेयत इत्यलमतिविस्तरेण, बुद्धेरनित्यतायां च प्रायेण सर्ववादिनामविवादः, अन्यथा कथमाह जैमिनिः 'सत्सम्प्रयोगे(१) पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमि'ति ।

अचिररुचिवत्तस्माद् बुद्धिर्निसर्गविनश्वरी
भवति जनकः स्वात्मा तस्याः स एव तदाश्रयः ।
भवमनुभवैस्तापैः पापा तमेव युनक्ति सा(२)
व्यसनजननीमेतामस्मात्त्यजेत् परमार्थवित् ॥

## मनसो लक्षणम् ।

**युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ [ गौ० १।१।१६। ]**

मनसो यदेव सत्त्वे प्रमाणं तद्गम्यत्वमेवास्य लक्षणं समानेतरजातीयव्यवच्छेदकारित्वात् ।

ननु मनस इन्द्रियत्वात्तद्वर्ग एव पठनं युक्तं किमर्थोऽयं पृथङ् निर्देशः, न धर्मभेदात्, भौतिकानीन्द्रियाणि नियतविषयाणि, सगुणानां(३) चैषामिन्द्रियभावो मनस्तु न भौतिकं न नियतविषयं न चास्य सगुणस्येन्द्रियभाव इति, तच्च न भौतिकमकार्यत्वादत एव न तद्गुणयोगि न च नियतविषयं सर्वविषयत्वं त्वस्य सकलबाह्येन्द्रियाणामधिष्ठानत्वात्तदधिगम्यसुखादिविषयग्राहित्वाच्च, बाह्येन्द्रियाणि हि मनोऽधिष्ठितानि स्वविषये प्रवर्त्तितुमुत्सहन्ते चक्षुरादीनि नान्यथा, कस्मादेवमिति चेद्युगपज्ज्ञानानुपपत्तेः, उत्तरकालं च बाह्येन्द्रियव्यापारविरहेऽपि तदर्थावमर्षात्(४) ।

---

(१) सदिति । सता विद्यमानेन वस्तुना इन्द्रियाणां सम्प्रयोगे सम्बन्धे सति यद् बुद्धिजन्म तत्प्रत्यक्षमित्यर्थः ।

(२) सा बुद्धिरेव भवमनुभवैः भवतापैश्चात्मानं युनक्ति अतो व्यसनजननीं बुद्धिं परमार्थवित्त्यजेदित्यर्थः ।

(३) सगुणानामिति । विशेषगुणवतामित्यर्थः । तेन सङ्ख्यादिगुणस्य मनसि सत्त्वेऽपि न क्षतिः ।

(४) तदर्थावमर्षात्—तदर्थस्मरणात् । न च तदानीं स्मरणं बाह्येन्द्रियजन्यं भवितुमर्हति बाह्येन्द्रियाणां विरमात्, नान्यकरणकमतः स्मरणान्यथानुपपत्त्या मनः कल्प्यते इति भावः ।

अस्त्वेकेन्द्रियगम्येषु क्वचिज्जातिगुणादिषु ।
विज्ञानयौगपद्यं यन्मनसस्तत्र साधनम् ॥

तत्र विषयादिदोषेण दूरत्वादिना जात्यादेर्युगपद् ग्रहीतुमशक्यत्वात्,

यत्तु नानेन्द्रियग्राह्येषु युगपत्सन्निहितेष्वपि गन्धरसरूपादिषु विषयेषु तद्ग्रहणेषु च स्वकार्यानुमितसन्निधानेषु सत्स्वपि यदसंनिधानात् तेषु करणेषु युगपदुपलब्धयो न भवन्ति ततोऽवसीयते नूनं कारणान्तरधर्मेषु करणेषु युगपदुपलब्धयो न भवन्ति (परीक्ष्यते) तच्च मन इत्याख्यायते ।

ननु च—

सुगन्धि शीतलां दीर्घामश्नन्तः पूपशष्कुलीम् ।
कपिलब्राह्मणास्सन्ति युगपत्पञ्चबुद्धयः ॥

अपि च अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्यरण्यजान् शब्दान् बिभ्यद्व्यालिङ्गानि बुभुत्सत इति क्रमाग्रहणाद्युगपदेता बुद्धयोऽस्य भवन्तीति, नाशूत्पत्तेः सूच्यग्रभिद्यमानकोकनददलकदम्बकवदतिसूक्ष्मत्वात्कालस्य क्रमस्तत्र न विभाव्यते भवितव्यं तु तेनेति, यदि कारणान्तरनिरपेक्षचक्षुरादिकरणसाध्या एव रूपादिविषयोपलब्धयस्तदुत्तरकालमुपहतकरणानामपि कथं स्मरणादिरूपस्तदवमर्शः, अतो नूनं नयनादिवत्करणान्तरं तद्ग्राहि विद्यते ।

अव्यापकं च तत्, व्यापित्वे हि बुद्धीनां यौगपद्यं न निवर्त्तेत, अपि चायं व्यवहार उक्तेऽपि क्वचिद्वचसि कश्चिदाह--नाहमेतदश्रौषमन्यत्र मे मनोऽभूत्-इति, तस्मान्न व्यापकं मनः ।

प्रतिशरीरमेकं च तत्, अनेकत्वे पुनरपि ज्ञानयौगपद्यानपायात् ।

क्रियावच्च तन्निष्क्रियेणेन्द्रियाणामधिष्ठातुमशक्यत्वात् ।

मूर्तं च तत् अमूर्तस्य क्रियानुपपत्तेः, मूर्तत्वे सति नित्यं च निरवयवत्वादनाश्रितत्वाच्च, मूर्तत्वं त्वनित्यतायामप्रयोजकमिति वक्ष्यामः ।

निरवयवं च तत् अवयवकल्पनायां प्रमाणाभावात् ।

वेगवच्च तत् आशुसंचारादाशुसञ्चारमन्तरेणोपलब्धिदैर्घ्यस्य दृष्टस्यानुपपत्तेः ।

इन्द्रियसंयोगि च तद् द्रव्यत्वाद्, द्रव्यं च तद् वेगादिगुणयोगात्क्रियावत्त्वेतनाश्रितत्वाच्च ।

अचेतनं च तत् करणत्वादितरेषां ह्येकत्र शरीरे चेतनद्वयसमावेशाद्व्यवहारः स्यादिति, तस्मादेवंरूपं मनः ।

सांख्योक्तं तु तस्य रूपमयुक्तमिति तत्प्रक्रियानिषेधादेव व्याख्यातम् ।

अन्यान्यपि स्मृत्यनुमानागमसंशयप्रतिभास्वप्नोहज्ञानानि अनन्तरसुखदुःखेच्छाद्वेषादिविषयग्राहीणि च ज्ञानानि मनसो लिङ्गानि सन्त्येव, तेषां बाह्ये-

न्द्रियव्यापारसाध्यत्वासम्भवात्करणरहितायाश्च क्रियाभिनिर्वृत्तेरदर्शनादिति, स्मृतिस्तावन्मनोजन्यैवानुमानागमज्ञानं तु परोक्षार्थविषयत्वान्मानसं, संशयोऽपि मानसः कश्चिद्दृश्यते, प्रतिभा सा मानसी दर्शितैव-'श्वो मे भ्राता ऽऽगन्ते' ति, स्वप्नज्ञानमवरतेन्द्रियग्रामस्य भवत्कथं न मानसम्, तर्कोऽपि संशयवत्कचिद्विषये मानसो भवत्येव, सुखादीनां तु ज्ञप्तिवदुत्पत्तिरपि मनोनिबन्धनैव, कार्याणामात्मगुणानामुत्पत्तौ प्रत्यासन्नकारणान्तरसम्भवेऽप्यात्ममनःसंयोगस्यावधृतसामर्थ्यस्यासमवायिकारणत्वादतश्च विषयानुभवजन्ये ऽपि सुखादौ मनस्संयोगः कारणम्, सुखादीनां च बोधस्वरूपत्वं संवेद्यत्वं च निरस्तम्, अतस्तदुपलब्धौ मनस एव कारणता।

तदिदं मनः पूर्वकृतशुभाशुभकर्मसंस्कारवताऽऽत्मना तद्वशादेव शरीरदेशे संयोगं प्रतिपद्यते तत्रैव च जीवनव्यवहारः, विपच्यमानकर्माशयसहित आत्ममनःसंयोगो जीवनमिति हि वदन्ति, संयुक्तमात्मना मनस्तेषु तेषूपपत्तिस्थानेषु नानाविधभोगसाधनतया संसारकारणं भवति, नित्यत्वादात्ममनसोस्संयोग इति न हि प्रथमो नाम कश्चित्कालः समस्ति आदिसर्गस्यापि पूर्वसर्गसापेक्षत्वात् ईश्वरोपि कर्मापेक्ष एव विचित्रस्य जगतः स्रष्टेति निर्णीतमेतदिति कृतं विस्तरेण

विदधत्सुखादिभोगं वहच्च तरलेन्द्रियाश्वसारथिताम्।
बन्धनिमित्तं मन इति मनस्विना यत्नतो हेयम्॥

## प्रवृत्तिलक्षणम्।

## प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः [गो० १।१।१७]

वागिति वर्णात्मकशब्दकारणसंयोगाद्युच्यते नेन्द्रियमिति व्याख्यातम्, बुद्धिरिति मन इहोच्यते नोपलब्धिः, शरीरं प्रसिद्धं तेषामारम्भो व्यापारस्सैवारम्भ इति सर्वथा तदीयक्रिया प्रवृत्तिरित्युच्यते।

### प्रवृत्तिभेदाः।

सा च द्विविधा पुण्या पापिका च, तत्र पापिका-वाचा चतुर्विधा, मनसा त्रिविधा, शरीरेण त्रिविधैवेति दशविधा, वाचा प्रवृत्तिः तत्रानृतपरुषसूचनासम्बद्धवचनरूपा चतुर्विधा, परद्रोहपरद्रव्याभिलाषानास्तिक्यानुध्यानरूपा त्रिविधा मनसः प्रवृत्तिः, हिंसास्तेयप्रतिषिद्धाचरणरूपा त्रिविधा शरीरेणः प्रवृत्तिः, मैथुनकरणमेवं प्रकारसुखाद्युपलक्षणं सेयं दशविधा प्रवृत्तिरनवरतमभिज्वलतो निरतिशयदुःखवेदनादायिनो नरकानलस्येन्धनम्, पुण्या ऽपि सत्यप्रियहितवचनस्वाध्यायाध्ययनरूपा चतुर्विधा वाचा प्रवृत्तिर्जपयज्ञ हि स्वाध्यायपाठ उपांशुना ऽन्तः। संकल्पेन वा, अस्पृहानुकम्पापरलोकश्रद्धात्मिका त्रिविधा मनसा प्रवृत्तिः, दान-

परित्राणपरिचरणरूपा त्रिविधा शरीरेण प्रवृत्तिरितीयमपि दशविधैव, एषा च स्वर्गसदनद्वारसोपानकल्पा, सेयमुभयतो विंशतिभेदा: प्रवृत्ति: संक्षेपतो द्विधैव विधिनिषेधात्मकतदवगमोपायभेदात्।

विधिनिषेधकारण एव हि सदसत्कर्मावगमः, तत्र विहितानुष्ठानं स्वर्गाय निषिद्धाचरणं नरकायेत्येवं सुखदु:खोपभोगस्थानशरीरेन्द्रियाद्यनभिसम्बन्धनिबन्धनमेषा प्रवृत्तिर्भवन्ती संसारस्य परमं कारणं भवति, यो ह्ययं देवमनुष्यतिर्यग्भूमिषु शरीरसर्गो यश्च प्रतिविषयं बुद्धिसर्गो यश्चात्मना सह मनसः संसर्गः स सर्वः प्रवृत्तेरेव परिणामविभवः, प्रवृत्तेश्च सर्वस्याः क्रियात्वात्क्षणिकत्वेऽपि तदुपहितो धर्माधर्मशब्दवाच्य आत्मसंस्कारः कर्मफलोपभोगपर्यन्तस्थितिरस्त्येव, न च फलमदत्त्वा धर्माधर्मौ क्षीयेते अन्त्यसुखदु:खसंविद्विरोधिनौ हि धर्माधर्मावुदाहरन्ति, न च जगति तथाविधं किमपि कार्यमस्ति वस्तु यन्न धर्माधर्माभ्यामाक्षिप्तसम्भवमिति तदुच्छेदे मुमुक्षुणा यत्न आस्थेयः।

इति वितनुतः पुण्यापुण्यप्रवृत्तिसमुद्भवौ
निगमवदिमौ धर्माधर्मौ रुचं भवबन्धने।
यदि निरवधेर्दु:खस्यान्तं चिकीर्षसि सर्वथा
परिहर मनोवाक्कायानां प्रवृत्तिमनर्गलाम्॥

## दोषलक्षणम्।

## प्रवर्तनालक्षणा दोषाः॥ (गौ० १।१।१८)

प्रवर्तना प्रवृत्तिः सा लक्षणमेषामिति प्रवर्तनालक्षणा दोषाः, दोषप्रयुक्तो हि पुरुषः पुण्ये कर्मणि पापे वा प्रवर्तते।

ननु च प्रत्यात्मवेदनीयदोषाणां स्वरूपमपरोक्षमेतत्किमेतेषां लक्षणतो रूपं निरूप्यते, सत्यं, प्रत्यात्मवेदनीयत्वेऽपि यदेषां प्रवर्तनालक्षणत्वमुपदिश्यते तदनेन रूपेण संसारकारणत्वज्ञापनार्थं,धर्माधर्मविहितो हि शरीरादि दु:खाधिष्ठानसम्बन्धः, तद्बीजस्य च कर्मणः कारणं दोषाः कर्मणि पुमांसं प्रवर्तयन्तीति प्रवर्तनालक्षणा इत्युक्ताः, परसन्तानवर्तिनां दोषाणामप्रत्यक्षत्वात्तत्प्रतीतये प्रवर्तनालक्षणत्वकथनमिति त्वपव्याख्यानमल्पप्रयोजनत्वादिति।

## दोषभेदाः।

तेषां दोषाणां त्रयो राशयो भवन्ति रागो द्वेषो मोह इति, तत्रानुकूलेष्वर्थेष्वभिलाषलक्षणो रागः प्रतिकूलेष्वसहलक्षणो द्वेषः वस्तुपरमार्थापरिच्छेदलक्षणो मिथ्यावसायो मोहः।

ननु चेर्ष्यासूयालोभमानमदमत्सरादिदोषान्तरसम्भवात्कथं त्रय एव दोषाः, न ईर्ष्यादीनां यथानिर्दिष्टेष्वेवान्तर्भावात्, कामो मत्सरः स्पृहा तृष्णा लोभ इति

पञ्चप्रकारो रागपक्षः, स्त्रीसंभोगेच्छा कामः, यदन्यस्मै निवेद्यमानमपि वस्तु धनवन्न क्षीयते तदपरित्यागेच्छा मत्सरः, अनात्मीयवस्त्वादित्सा स्पृहा, पुनर्भवप्रतिसन्धानहेतुभूतेच्छा तृष्णा, निषिद्धद्रव्यग्रहणेच्छा लोभ इत्यभिलाषप्रकारभेदाद्रागपक्ष एवायम्, द्वेषपक्षोऽपि पञ्चविधः, क्रोधेर्ष्यासूयाद्रोहोऽमर्ष इति, अक्षिभ्रूविकारहेतुः प्रज्वलनात्मकः क्रोधः, साधारणेऽपि वस्तुनि परस्य दर्शनाद्यसहनमीर्ष्या, परगुणेष्वक्षमाऽसूया, परापकारो द्रोहः, अदर्शितमुखादिविकारः परं प्रति मन्युरमर्ष इत्यसहनप्रकारभेदादेव द्वेषपक्षः, मोहपक्षस्तु चतुर्विधो मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति, अतस्मिंस्तदिति ज्ञानं मिथ्याज्ञानम्, किं स्विदिति विमर्शो विचिकित्सा, असद्गुणाध्यारोपेण स्वोत्कर्षबुद्धिर्मानः, कियदेतदित्यवज्ञया कर्तव्याकरणं प्रमादः, स एव मद इत्याख्यायते, सोऽयं तत्त्वापरिज्ञानप्रकारभेदान्मोहपक्षः, एवं त्रय एवैते दोषाः, शोकहर्षौ तु सुखदुःखे उच्येते न दोषान्तरम्, तेषां तु मोहः पापतमः इतरयोस्तु तदधीनात्मलाभत्वात्, मूढस्य हि रागद्वेषौ भवतो मिथ्यासङ्कल्पादुत्पद्यमानयोरनुभवात्कुसङ्कल्पश्च मिथ्याज्ञानप्रवृत्तिरेव, मिथ्याज्ञानस्यैव भगवतः सर्वमिदं विलसितं योऽयमनेकप्रकारः संसारदुःखभारः, यद्येवं न तर्हि मोहस्य दोषत्वं दोषकारणत्वादिति न लक्षणानपायात्, सत्यपि दोषान्तरहेतुत्वे स्वयमपि पुरुषप्रवृत्तिप्रयोजकत्वलक्षणयोगाद्रागवद् दोषत्वं न मोहो विजहाति।

## दोषशमनोपायः।

त इमे दोषाः संसारहेतव इति यत्नतः शमनीयाः, कथं पुनरमी शमयितुं शक्याः? उक्तमत्र नाकस्मिकाः न नित्याः नाज्ञातशमनोपाया न चाशक्यप्रतिक्रिया इति, विस्तरतश्चैतदपवर्गाह्निके परीक्षिष्यते, मिथ्याज्ञाननिमित्ताः खल्वेते दोषास्तस्मिन्सम्यग्ज्ञानप्रभावनिहते हेतोरभावान्न भवन्त्येवेति।

नन्वेवं प्रसवविनाशकारणयोरेकत्वादेक एव दोषो भवेदिति त्रित्वं नोपपद्यते, न, अनुभवसिद्धभेदत्वात्, अनुभूयते हि रागद्वेषमोहानामितरेतरविभक्तं स्वरूपम्, कारणैकत्वं तु न प्रयोजकमेकस्मादेव ज्वलनसंयोगादुत्पद्यमानानां विनश्यतां च पार्थिवपदार्थवृत्तीनां गन्धरसरूपस्पर्शानां नानात्वदर्शनात्, अतः सूक्तं दोषाणां त्रैराश्यमिति।

संसारकाराभवनप्रवेशमार्गास्त एते त्रय एव दोषाः।
एषां प्रहाणोद्यममादधानो न जन्ममृत्यू पुनरभ्युपैति॥

## प्रेत्यभावलक्षणम्।

### पुनरुत्पत्तिः प्रेत्यभावः (गौ० १।१।१९)

कस्येयं पुनरुत्पत्तिरुच्यते आत्मनः शरीरस्य वा, तत्रात्मनो नित्यत्वादुत्प-

त्तिरेव नास्ति का कथा पुनःशब्दार्थस्य, शरीरस्य तूत्पत्तिरस्ति न तु पौनःपुन्येन, न हि मृतं शरीरं तदेव पुनरुत्पद्यते, तस्मात्पुनरुत्पत्तिः प्रेत्यभाव इत्यवाचकं सूत्रम्, उच्यते, पुनःशब्दार्थस्य यत्नत उपदिष्टस्य परिहर्तुमशक्यत्वादात्मनश्च स्थायित्वेन क्रियाभ्यावृत्तिसम्भवात्तस्यैव पुनः पुनरुत्पत्तिं ब्रूमः, उत्पत्तिवन्मरणमपि, सोऽयमात्मन एव मृत्वा पुनर्जन्म प्रेत्यभाव इति ।

ननु जन्ममरणे उभे अपि नित्यत्वादात्मनो न संस्त इत्युक्तम्, सत्यं शरीरादिसंयोगवियोगयास्तु तथाऽभिधानान्न दोषः, मरणमात्मनो भोगायतनदेहेन्द्रियादिवियोग उच्यते जन्म तु तत्सम्बन्धः, ते च ते विपच्यमानकर्माशयानुसारेण देहेन्द्रियादित्यागोपादाने एव मरणजन्मनी क्रियाभ्यावृत्त्या भवन्ती प्रेत्यभाव इत्युच्यते, स एव च संसारः, तदित्थमनुध्यायतः कस्य सचेतसो निर्वेदो नोदीयात्, तदुक्तम्—

जरावियोगमरणव्याधयस्तावदासताम् ।
जन्मैव किं न धीरस्य भूयो भूयस्त्रपाकरम् ॥

अथ यैरुत्पद्यमानैर्देहेन्द्रियादिभिरात्मनः सम्बन्धस्तेषां कथमुत्पत्तिरित्युक्तं सूत्रकृता, व्यक्ताद्व्यक्तानामुत्पत्तिः प्रत्यक्षप्रामाण्यादिति, (गो० ५।१।११) व्यक्तादिति कपिलाभ्युपगतत्रिगुणात्मकाव्यक्तरूपकारणनिषेधेन परमाणूनां शरीरादौ कार्ये कारणत्वमाह ।

## परमाणुसाधनम् ।

तथा हि पार्थिवमाप्यं तैजसं वायवीयमिति चतुर्विधं कार्यं स्वावयवाश्रितमुपलभ्यते, तत्र यथा घटः सावयवः कपालेष्वाश्रित एवं कपालान्यपि सावयवत्वात्तदवयवेषु तदवयवा अपि तदवयवान्तरेष्वित्येवं तावद्यावत्परमाणवो निरवयवा इति, यत्र यावतः कार्यजातस्य स्वावयवाश्रितस्य प्रत्यक्षेण ग्रहणं तत्र तदेव प्रमाणम्, तदपि हि कार्यं स्वावयवत्वात्परिदृश्यमानकार्यवत्, निरवयवे तु तस्य परमाणुत्वमेव परमाणुषु च सावयवत्वस्य च हेतोरसिद्धत्वान्नावयवान्तरकल्पना, तेषां हि सावयवत्वे तदवयवाः परमाणवोऽनुमीयन्ते लोष्टस्य प्रविभज्यमानस्य भागास्तद्भागानां च भागान्तराणीत्येवं तावद्यावदशक्यभङ्गत्वमदर्शनविषयत्वं च भवति, तद्यत्तयोः परमवयवविभागो न सम्भवति ते परमाणव उच्यन्ते तेष्वपि हि विभज्यमानेष तदवयवाः परमाणवो भवेयुर्न ते तदेवमुत्पत्तिविनाशक्रमस्येदृशो दर्शनात्सन्ति परमाणवः ।

अत्र हि त्रयी गतिरस्य घटादेः कार्यस्य निरवयवत्वमेव वा ऽवयवानन्त्यं वा परमाण्वन्तता वा, तत्र निरवयवत्वमनुपपन्नमवयवानां पटे तन्तूनां घटे च कपालानां प्रत्यक्षमुपलम्भात्, अनन्तावयवयोगित्वमपि न युक्तं मेरुसर्ष-

पयोरनन्तावयवयोगित्वाविशेषेण तुल्यपरिमाणत्वप्रसङ्गात्, तस्मात्परमाणवन्ततैव युक्तिमती ।

## ईश्वरसाधनम् ।

त इमे परिमाणवश्चेतनेच्छाप्रेरणमन्तरेण विशिष्टक्रमकमितरेतरसंघटनमलभमानाः कार्यसिद्धये न पर्याप्नुयुरचेतनत्वादिति चेतन एषामधिष्ठाता सकलभुवननिर्माणमतिरीश्वरोऽभ्युपगतस्तत्सिद्धये च सकलकुतर्कतिमिरतिरस्कारपूर्वकं पूर्वमेव निरवद्यमनुमानमुपपादितम्, ईश्वरोऽपि नानेकात्मवृत्तिविपाकोन्मुखधर्माधर्मसंस्कारवैचित्र्यमननुरुध्यमानो विचित्रस्य जगतो जन्म निर्मातुमर्हतीत्येतदपि दर्शितम् ।

## द्व्यणुकादिक्रमेण कार्यारम्भनिरूपणम् ।

न च सकृदेव सतो निर्वर्त्यमानकार्यपरिमाणानुगुणसंख्याः परमाणव एकत्र संयोज्य कार्यमारभन्ते किन्तु द्व्यणुकादिक्रमेण, सकृदारम्भे हि कुम्भे भज्यमाने कपालशर्कराकणचूर्णादिक्रममपहाय प्रथममेव परमाणवन्तता भवेत्सर्वसंयोगस्य सर्वविभागेन सहसैव विनाशादतश्च कर्परादिक्रमदर्शनं विरुध्येत अविनष्टेऽपि घटादौ तन्त्वाद्यवयवाश्रितत्वस्य ग्रहीतुमशक्यत्वात्, परमाणूनां घटस्य च मध्ये कार्यान्तरानारम्भादिति, तस्माद् द्व्यणुकादिप्रक्रमेण परमाणवः कार्यमारभन्ते ।

ननु द्वावेव परमाणू प्रथमं संघटेते इत्यत्र का युक्तिरुच्यते, बहुत्वसंख्याया महत्त्वपरिमाणकारणत्वदर्शनात्त्रिषु परमाणुषु प्रथमं मिलत्सु तत्कार्यं बहुत्वसंख्यया महत्त्वारम्भात्तत्प्रत्यक्षं प्रसज्येत, न च तत्प्रत्यक्षमतिसूक्ष्मत्वादतो द्वाभ्यां परमाणुभ्यां द्व्यणुकमादावुत्पद्यते, तच्च परमाणुवदप्रत्यक्षमेव महत्त्वानुत्पादात्, द्व्यणुकद्वयेन तु कार्यारम्भ इष्यमाणे तदविशेषप्रसङ्गाद् द्व्यणुक इव तत्रापि महत्त्वोत्पत्तौ कारणाभावात्, अतस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमारभ्यते, तत्र च बहुत्वसंख्यया महत्त्वमारप्स्यते प्रत्यक्षं च तद्भविष्यति, ततः परं तु क्रमसामान्ये प्रमाणमस्ति लोष्टादिभक्तेः सावयवखण्डावयवनिदर्शनम्, क्रमविशेषे तु प्रमाणं नास्तीत्थमारम्भ इति, यत्र वा दर्शनमस्ति तत्र तदस्तु, क्रमविशेषप्रमाणमारभ्यारम्भकत्वं तु नेष्यते मूर्तानां समानदेशत्वविरोधात्, न हि परमाणवः प्रथमं कार्यमारभ्य तदनु त एवोत्तरोत्तरकालं कार्याण्यारभन्ते किन्तु यत्परमाणुनिर्वृत्तं काय द्व्यणुकं तत्कार्यान्तरस्यारम्भकं तदप्यन्यस्य कार्यस्येत्येवं तावद्यावत्परिपूर्णावयविनिष्पत्तिः, इत्थं च तन्तुभिः पटः क्रियते न तन्त्ववयवैरंशुभिरितरथा ह्युत्तरोत्तरकार्यारम्भेऽपि पूर्वपूर्वकारणानपायान्मूर्तानामेकदेशत्वं स्याद् न च तद् दृश्यते इति यथोक्त एव क्रमः श्रेयान्, तदेवमनेकात्मसमवेतधर्माधर्मसं-

स्कारपरिपाकानुरूपप्रसरदीश्वरेच्छाप्रेर्यमाणपरमाणुक्रियानुपूर्वीनिर्वर्त्यमानद्व्यणुकादिकार्यक्रमेण शरीराद्यवयविनिर्वृत्तिरिति स्थितम् ।

एतद्विपरीतानि तु मतान्तराणि प्रमाणविरुद्धानि, तथा हि नित्यमेव शरीरादि अनुत्पत्तिधर्मकमिति प्रत्यक्षविरुद्धम्, पृथिव्यादेरप्यवयवसन्निवेशविशिष्टतया कार्यत्वादितीश्वरसिद्धौ निर्णीतम्, आकस्मिकत्वमपि शरीरादेः कार्यस्य न युक्तम्, कारणनियमोपलम्भादनिमित्तायाश्च भावोत्पत्तेरनुत्पत्तेः, अभावादपि भावोत्पत्तिस्तादृगेवेति, गुणात्मकप्रधानविकारमहदहंकारादिकारणकत्वमपि कार्यस्य पृथिव्यादेः प्रागेव प्रपञ्चतः प्रतिषिद्धम्, अनारब्धावयविरूपकार्याः परमाणव एवैते सञ्चयविशिष्टाः सन्तो लोकयात्रां वहन्तीत्येतदपि न समीचीनं सञ्चयस्य भेदाभेदविकल्पाभ्यामनुपपद्यमानत्वात्परमाणूनां चातिसौक्ष्म्यादप्रत्यक्षत्वात्, पौद्गलिककार्यपक्षेऽपि पर्यायान्तरेण परमाणूनां कथनमप्रमाणकत्वं वा, (अप्रामाणिकम् (?)) शब्दविवर्तत्वं तदनुगमाग्रहणादनुपपन्नम्, परमात्मोपादानत्वमपि न सम्भवति तस्यैव निष्प्रमाणकत्वात्, न च न कदाचिदनीदृशं जगदिति पादप्रसारिकामात्रं कर्तुमुचितं सर्गप्रबन्धप्रलयप्रबन्धस्य समर्थितत्वादिति।

अतश्च पक्षान्तरदुर्बलत्वाद्यथोदितः सिध्यति भूतवर्गः ।
तं यस्तु पश्यन्नपि निह्नुवीत तस्मै नमः पण्डितशेखराय ॥
अनादौ संसारे स्थितमिदमहो मूढमनसां
जनित्वा जन्तूनां मरणमथ मृत्वाऽपि जननम् ।
इयं सा दुःखानां सरणिरिति सञ्चिन्त्य कृतिना
विधातव्यं चेतो जननमरणोच्छेदिनि पदे ॥

## फललक्षणम् ।

**प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ (गौ० १।१।२०)**

प्रवृत्तिर्दोषाश्च व्याख्याताः, तज्जनितोऽर्थः फलमित्युच्यते, अर्थग्रहणं गौणमुख्यभेदप्रदर्शनार्थम्, सुखदुःखे मुख्यं फलं तत्साधनं तु शरीरेन्द्रियविषयादि गौणम्, सब हीदं प्रवृत्तिदोषाक्षिप्तं फलमित्युक्तम्, तदिदमनादिना प्रबन्धेन प्रवर्तमानं फलं पुनरुपयुज्यते पुनस्त्यज्यत इति महतः खेदस्य हेतुरिति भाव्यमानं निर्वेदवैराग्यादिमार्गणापवर्गोपयोगितां प्रतिपद्यते ।

आत्तमात्तं विजहतस्त्यक्तं त्यक्तं च गृह्णतः ।
पुंसः फलपटीयन्त्रमहो कष्टः परिश्रमः ॥

तत्पुनः फलं कर्मणा किं सद्य एव सम्पद्यते कालान्तरेण वा ? उच्यते—द्विविधं कर्म विहितं निषिद्धं च, तत्र विधिफलानां कालनियमो नास्ति, क्रियाफलं

दोग्धि पचतीति समनन्तरमुत्पद्यमानं दृश्यते, विधिफलानां तु नैष नियम इति शब्दपरीक्षायां चित्राक्षेपपरिहारावसरे निरूपितमेतत्, विधिफलमपि च किंचन चोदनावचनपर्यालोचनया सद्य इति निश्चीयते वृष्टिरिव कारीर्याः, किञ्चिदैहिकफलमपि कर्म वस्तुबलात्कालान्तरापेक्षं भवति पुत्रेष्ट्यादि, न हि सहसैव निधिलाभवत्पुत्रलाभः सम्भवति गर्भसम्भवहेतुभूतभार्यापरीरम्भादिक्रमापेक्षत्वात्, ज्योतिष्टोमादि तु स्वर्गफलं कर्मफलस्वरूपमहिम्नैव पारलौकिकफलमवतिष्ठते स्वर्गो हि निरतिशया प्रीतिस्तदन्यथानुपपत्तिपरिकल्पितः कनकगिरिशिखरादिर्वा देशः उभयथाऽपि नैतद्देहोपभोग्यतां प्रतिपद्यते, अनियतफलं तु चित्रादि कैश्चिदुक्तं तच्च युक्तमयुक्तं वेति तत्रैव परीक्षितम्, निषिद्धस्य तु कर्मणः सर्वस्यैव प्रायेण परलोक एव फलं, परदाराभिमर्षणादौ हि क्रियाफलं सुरतसुखादि सद्यः फलं, निषेधविधिफलं तु नरकपतनं पारलौकिकं स्वर्गवन्नरकस्यापि निरतिशयदुःखात्मनस्तदन्यथाऽनुपपत्तिकल्पितदेश(स्वभाव)स्य वा एतच्छरीरानुपभोगयोग्यत्वात्, तीव्रसंयोगनिर्वृत्तकर्म विहितमितरद्वा प्रत्यासन्नविपाकमिहैव भवति नन्दीश्वरनहुषयोरिवेत्यागमविदः, चौरब्रह्मघ्नादयश्च केचित्प्रत्यासन्नप्रत्यवायाः प्रायेण दृश्यन्ते एवेत्येवमेष विचित्रः कर्मणां विपाकः ।

यदपि चोच्यते—कर्मकाले फलं नास्ति फलकाले कर्म नास्ति कालान्तरे च फलस्यान्यत्प्रत्यक्षं कारणमुपलभ्यते सेवादिकम्–इति, तदपि पूर्वं परिहृतम्, कर्मणां विनाशेऽपि तज्जनितस्यात्मसंस्कारस्य धर्माधर्मशब्दवाच्यस्य भावात्, दृष्टस्य च सेवादेः कारणस्य व्यभिचाराददृष्टकल्पनाया अवश्यंभावित्वात्। 'धर्मादेरात्मनि फलसमवायात्फलस्य च पुत्रपश्वादेरन्यसमवेतत्वाद्भिन्नाधिकरणत्वं कर्मफलयोरि'त्यपि न चोद्यम्, मुख्यस्य सुखदुःखात्मनः फलस्य भिन्नाश्रयत्वानुपपत्तेः, सुखदुःखे ह्यात्मनि वर्तेते धर्माधर्मौ च तत्स्थावेवेति ।

दुष्टेनैव सुखस्य कारणमतस्तद्धेतुरागेण किं
दुःखस्यापि न तन्निबन्धनमिति द्वेषस्तदर्थेषु कः ।
तस्मात्कर्मनिमित्तकं फलमिति ध्यायन्न कुर्यात्कृती
सङ्गं कर्मणि येन दुस्तरमसौ संसारमापद्यते ॥

## दुःखलक्षणम् ।

### बाधनालक्षणं दुःखम् ॥ ( गौ० १।१।२१ )

बाधना पीडनं सन्तापनं सा लक्षणमस्येति बाधनालक्षणं दुःखम्, तत्र मुख्ये दुःखे लक्ष्ये लक्षणशब्दो यथाश्रुत एव बाधनयैव हि दुःखस्वरूपं लक्ष्यते बाधयति पीडयतीति, गौणे तु दुःखे शरीरादौ लक्ष्ये बाधनानुषक्तमिति व्याख्येयम् ।

ननु च पूर्वसूत्राख्यातेन फलग्रहणेनैव दुःखस्योपदिष्टत्वात्किमर्थं पुनरुपदेशः? सुखप्रत्याख्यानार्थ इति चेन्न, पूर्वापरविरोधात्सकलप्राणभृदनुभवसाक्षिकत्वेन च सुखस्य प्रत्याख्यातुमशक्यत्वात्, तत्प्रत्याख्याने च विवक्षिते किमर्थं प्रमेयसूत्रे फलोपादानम्, फले खलु सुखदुःखे इति व्याख्यातं ततश्च सुखप्रत्याख्याने दुःखमेवावशिष्यते तच्चानेन दुःखशब्देनैव निर्दिष्टमिति किं फलग्रहणेन। उच्यते—न सुखलेशस्य संसारे जन्तुभिरन्तरान्तराऽनुभूयमानस्य प्रत्याख्यानाय दुःखग्रहणं सर्वत्र तथात्वभावनोपदेशार्थं सन्नपि सुखलवो दुःखमेवेति भावयितव्यः तत्साधनमपि सर्वं दुःखमेवेति मन्तव्यम्।

न तद्व्यवसितं पुंसां तत्कर्म न तद्वचः।
न तद्भोग्यं समस्तीह यन्न दुःखाय जायते॥

तदित्थं दुःखमुत्कृष्टं तिरश्चां, मध्यमं मनुष्याणां, हीनं देवानां, हीनतरं वीतरागाणामित्यागमविदः, वीतरागाणां दुःखतानवं युक्तितोऽप्यवगम्यते दुःखस्य रागनिबन्धनत्वात्।

तत्त्वतश्चिन्त्यमानं हि सर्वं दुःखं विवेकिनः।
विषसम्पृक्तमधुवत्सव दुःखीभवत्यदः॥
सुखाधिगमलोभेन यतमानो हि पूरुषः।
सहस्रशाखमाप्नोति दुःखमेव तदर्जने॥
एवं सर्वमिदं दुःखमिति भावयतोऽनिशम्।
सर्वोपपत्तिस्थानेषु निर्वेदोऽस्य प्रवर्त्तते॥
निर्विण्णस्य च वैराग्यं विरक्तस्य च देहिनः।
क्लेशकर्मप्रहाणादिद्वारो निःश्रेयसोदयः॥

नन्वेवं तर्हि फलग्रहणं न कर्तव्यं दुःखपदेनैव गतार्थत्वादित्युक्तम्, मैवं तस्यान्यप्रयोजनत्वात्, प्रवृत्तिदोषजनितत्वेन हि फलमनुचिन्तितवतस्तत्कारणयोरनुकूलप्रतिकूलयोरस्य रागद्वेषौ मा भूताम्, अभ्यावृत्त्या च ससाधनस्य फलस्य हानोपादानस्रोतसोह्यमानस्तत्रात्यन्ताय निर्विद्यतामिति फलग्रहणम्, तदेवमन्यथा फलस्य निःश्रेयसोपयोगित्वमन्यथा तु फलत्वे सत्यपि दुःखस्येति।

दीर्घस्य दुःखस्य निमित्तभूतं सुखं च दुःखात्मकमेव सर्वम्।
मुमुक्षुणा हेयतया विचिन्त्यं देहादिदुःखान्तमिदं प्रमेयम्॥
इति निपुणमतिर्यो दुःखमेवेति सर्वं
परिहरति शरीरे क्लेशकर्मादिजातम्।
अजमजरमतत्त्वं चिन्तयन्नात्मतत्त्वं
गतभयमपवर्गं शाश्वतं सोऽभ्युपैति॥

इति श्रीभट्टजयन्तस्य कृतौ श्रीन्यायमञ्जर्यामष्टममाह्निकम्॥

## तार्किकाभिमतापवर्गनिरूपणम् ।

एवं शरीरादौ दुःखपर्यन्ते हेये प्रमेये निर्णीते यदर्थमेतदुपदेशो यत्परमुपादेयं प्रमेयं यदर्थः शास्त्रारम्भस्तमपवर्गं लक्षयितुमाह—

**तदत्यन्तविमोक्षोऽपवर्गः ॥ ( गो० १।१।२२ )**

तदिति प्रक्रान्तस्य दुःखस्यावमर्शः, न च मुख्यमेव दुःखं बाधनास्वभावमवमृश्यते किन्तु तत्साधनं तदनुषक्तं च सर्वमेव, तेन दुःखेन वियोगोऽपवर्गः, अस्ति प्रलयवेलायामात्मनो दुःखवियोगः स त्वपवर्गो न भवति सर्गसमये पुनरक्षीणकर्माशयानुरूपशरीरादिसम्बन्धे सति दुःखसम्भवादतस्तद्व्यावृत्त्यर्थमत्यन्तग्रहणम्, आत्यन्तिकी दुःखव्यावृत्तिरपवर्गो न सावधिका, द्विविधदुःखावमर्शिना सर्वनाम्ना सर्वेषामात्मगुणानां दुःखवदवमर्शादत्यन्तग्रहणेन च सर्वात्मना तद्वियोगाभिधानान्नवानामात्मगुणानां बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां निर्मूलोच्छेदोऽपवर्ग इत्युक्तं भवति ।

यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः ।
तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते ॥
धर्माधर्मनिमित्तो हि सम्भवः सुखदुःखयोः ।
मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः ॥
तदुच्छेदे तु तत्कार्यशरीराद्यनुपप्लवात् ।
नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते ॥
इच्छाद्वेषप्रयत्नादि भोगायतनबन्धनम् ।
उच्छिन्नभोगायतनो नात्मा तैरपि युज्यते ॥
प्राणस्य क्षुत्पिपासे द्वे लोभमोहौ च चेतसः ।
शीतातपौ शरीरस्य षडूर्मिरहितः शिवः ॥

तदेवं नवानामात्मगुणानां निर्मूलोच्छेदोऽपवर्ग इति यदुच्यते तदेवेदमुक्तं भवति तदत्यन्तवियोगोऽपवर्ग इति ।

ननु तस्यामवस्थायां कीदृगात्माऽवशिष्यते ।
स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ॥
ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः ।
संसारबन्धनाधीनदुःखक्लेशाद्यदूषितम् ॥

## वेदान्त्यभिमतापवर्गस्वरूपनिरूपणम् ।

तत्र वेदान्तवादिन आहुः—नायमीदृशो मोक्षः प्रेक्षावतां प्रयत्नभूमिर्भवितुम-

इति, को हि नाम शिलाशकलकल्प(१)मपगतसकलसुखसंवेदनसम्पदमात्मान-मुपपादयितुं यतेत, सोपाधिसावधिकपरिमितानन्दनिःष्पन्दात्स्वर्गादप्यधिकम-नवधिकनिरतिशयनैसर्गिकानन्दसुन्दरमपरिम्लानतत्सम्वेदनसामर्थ्यं चतुर्थं पुरुषार्थमाचक्षते विचक्षणाः, यदि तु जडः पाषाणनिर्विशेष एव तस्यामवस्थाया-मात्मा भवेत्तत्कृतमपवर्गेण संसार एव वरमवस्था( नं ? ) यत्र तावदन्तरान्त-राऽपि दुःखकलुषितमपि स्वल्पमपिः सुखमुपभुज्यते, चिन्त्यतां तावदिदं किमल्प-सुखानुभवो भद्रक उत सर्वसुखोच्छेद एव, तस्मान्नित्यसुखमात्मनो महत्त्ववद-स्तीत्यागमप्रामाण्यादुपगम्यताम् , तच्च संसारदशायामविद्यावरणवशेन नानुभू-यते तत्त्वज्ञानाभ्यासभावनाभिभूतनिरन्तराविद्यावरणस्त्वात्मा तस्यामवस्थायां तदनुभवतीति ।

## वेदान्त्यभिमतमोक्षस्वरूपखण्डनम् ।

तदिदमनुपपन्नम् , आत्मनो नित्यसुखसत्तायां प्रमाणाभावात् , प्रत्यक्षं तावदस्मदादीनामन्येषां वा केषां चिदस्मिन्नर्थे न प्रभवतीति केयं कथा, अनु-मानमपि न सम्भवति लिङ्गलेशानवलोकनादिति ।

ननूक्तमेवानुमानमपवर्गाय यः प्रेक्षावतां प्रयत्नः सुखसिद्ध्यै हि बुद्धिमन्तो यतन्ते नाश्मकल्पमात्मानं कर्तुमिति तदयमिष्टाधिगमार्थो मुमुक्षोः प्रयत्नः प्रे-क्षापूर्वकारिप्रयत्नत्वात् कृष्यादिप्रयत्नवदिति ।

नानिष्टोपरमार्थत्वादनिष्टस्यापि शान्तये ।
सन्तः प्रयतमाना हि दृश्यन्ते व्याधिखेदिताः ॥

अतिदुर्वहश्चायं संसारदुःखभार इति तदुपशमाय व्यवस्यन्तः सन्तो न निष्प्रयोजनप्रयत्ना भवन्तीत्यनैकान्तिको हेतुः ।

अथागमादवगम्यते विभुत्वेनेव नित्येन सुखेनाविनाकृत आत्मेति, तथा च पठ्यते विज्ञानमानन्दं ब्रह्मेति, स्यादेतदेवं यद्येतदेव केवलमागमवचन-मश्रोष्यत वचनान्तरमपि तु श्रूयते 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपह-तिरस्ति अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत' इति ।

ननु भवत्पठितमागमवचनमन्यथा ऽपि व्याख्यातुं शक्यते सशरीरस्येति प्रक्रमात्सांसारिके सुखदुःखे अनुकूलेतरविषयोपलम्भसम्भवे तदानीमशरीर-मात्मानं न स्पृशत इत्यर्थः, हन्त तर्हि वदधीतमपि वेदवचनमानन्दं ब्रह्मेति संसारदुःखपरिहारक्रमे प्रकरणादेव तद्दुःखापायविषयं व्याख्यास्यते न

(१) शिलाशकलकल्पम्—शिलाखण्डादीपदूनं, शिलाखण्डसदृशं निःसुखं निर्दुःखं चेति यावत् ।

खलु व्याख्यानस्य भगवतः काचिदभूमिरस्ति दृष्टाश्च दुःखोपशमे सुखशब्दप्रयोगाः ।

चिरज्वरशिरोर्त्त्यादिव्याधिदुःखेन खेदिताः ।
सुखिनो वयमद्येति तदपाये (१)प्रयुञ्जते ॥

यदि चानन्दमिति वचनान्नित्यं सुखमात्मन इष्यते, तर्हि ब्रह्मेति वचनाद् व्यापकत्वमिव विज्ञानमिति वचनाज् ज्ञानमपि नित्यमस्याभ्युपगन्तव्यमतश्च सुखवज् ज्ञानस्यापि नित्यत्वात्संसारेऽपि नित्यसुखोपलब्धिः स्यात्ततश्च धर्माधर्मफलाभ्यां सुखदुःखाभ्यामस्य नित्यस्य सुखस्य साहचर्यमनुभूयेत ।

अपि च—

सुखवज् ज्ञानवच्चास्य कामं देहेन्द्रियाद्यपि ।
नित्यं प्रकल्प्यतामित्थं मोक्षो रम्यतरो भवेत् ॥

अथ कार्यं सुखज्ञानं हेतुरस्य चिन्तनीयो यत उत्पद्यते इति वाच्यम्, योगसमाधिज इति चेत्तस्य कार्यत्वात्स्वकार्यसुखसंवेदनावसानत्वान्न शाश्वतिकत्वं स्यात्, अप्रक्षयश्च धर्मस्य निरनुमानको न हि योगसमाधिजो धर्मो न क्षीयते इत्यत्र किंचिदनुमानमस्ति, विपर्यये तु प्रसिद्धमेवानुमानं सर्वस्य कृतकस्यानित्यत्वदर्शनादिति, क्षीणे त्वधर्मे तत्कार्यज्ञानाभावात्सदपि सुखमनुपलभ्यमानमसतो न विशिष्यते, स्वप्रकाशं तत्सुखमिति चेत्संसारे ऽपि तदुपलब्धिप्रसङ्गः, शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेन्न, शरीरादीनामुपभोगार्थत्वाद्भोगप्रतिबन्धं विदधतीति न साध्वी कल्पना, अविद्यावरणात्संसारे स्वप्रकाशसुखानुपलम्भ इति चेन्न, प्रकाशस्य तुच्छेनावरीतुमशक्यत्वात्, नहि प्रकाशरूपं पारमार्थिकमात्मनः सुखं तद्विपरीततुच्छस्वभावेयमविरलगवलमलीमसं बलाहकव्यूहपिहितरविबिम्बं तदपि न रजनीसदृशं दिनमिति सहसा मोहमहिमा,

मेघा अपि रवेरन्ये स्वरूपेण च वास्तवाः ।
तत्त्वान्यत्वाद्यचिन्त्या तु नाविद्यावरणक्षमा ॥

तस्मान्न नित्यानन्दत्वमात्मनः सुवचनम् ।

अपि च मोक्षे नित्यसुखस्वभावे तद्रागेण प्रयतमानो मुमुक्षुर्न मोक्षमधिगच्छेत्, न हि रागिणां मोक्षोऽस्तीति मोक्षविदः, दुःखनिवृत्त्यात्मके ऽपि मोक्षे दुःखद्वेषात्प्रयतमानस्य समानो दोष इति चेन्न, मुमुक्षोर्द्वेषाभावात् । रागद्वेषौ हि संसारकारणमिति च जानाति मुमुक्षुः द्वेष्टि च दुःखमिति कथमिदं सङ्गच्छते । सुखेऽप्यस्य रागो नास्त्येवेति चेन्न, स्वर्गनिर्विशेषेऽपवर्गे स्वर्गवद्रागस्य सम्भाव्यमानत्वात्, दुःखेन तु निर्विण्णस्य मुमुक्षोर्वैराग्यं जा-

(१) तदपाये—दुःखापाये ।

यते न दुःखविषयो द्वेषः विरक्तस्य चास्य मोक्षं प्रति यत्नो भवति न दुःखं द्विषत इति समानो न्यायः ।

यत्तूक्तं—निरानन्दो मोक्षः प्रेक्षावतां प्रयत्नविषयो न भवती-ति, तदपि न साम्प्रतम्, प्रयोजनानुसारेण प्रमाणव्यवस्थाऽनुपपत्तेः, न हि प्रयोजनानुवर्ति प्रमाणं भवितुमर्हति, यदि निरानन्दो मोक्षः प्रेक्षावतां न रुचितः कामं मा भून्न त्वप्रमाणकमानन्दं तत्र कल्पयितुं शक्नुमः, न च सर्वात्मना साधूनामनभिमत एव तथाविधो मोक्षः, न च तदवाप्तये न प्रयतन्ते, ते ह्येवं विवेचयन्ति दुःखसंस्पर्शे शाश्वतिकसुखसम्भोगासम्भवाद् दुःखस्य चावश्यहातव्यत्वाद्विवेकहानस्य चाशक्यत्वाद्विषमधुनी इहैकत्र पात्रे पतिते उभे अपि सुखदुःखे त्यज्येतामिति, अतश्च संसारान्मोक्षः श्रेयान्यत्रायमियानतिदुःखप्रबन्धोऽवलुप्यते वरमियतः कादाचित्की सुखकणिका त्यक्ता न तस्याः कृते दुःखभार इयानूढ इति, तस्मान्न सुखोपभोगात्मको मोक्ष इति ।

## सुखसत्तासमर्थनम् ।

अन्यस्त्वाह—तिष्ठतु तावन्मोक्षः संसारेऽपि न सुखं नाम किं चिदस्तीति सर्व एवायं दुःखाभावमात्रे सुखव्यवहारः, तथा हि—

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि
क्षुधार्तः सञ्छालीन्कवलयति सम्पाकवलितान् ।
प्रदीप्ते रागाग्नौ घननिबिडमाश्लिष्यति वधूं
प्रतीकारे व्याधेः सुखमिति विपर्यस्यति जनः ॥ (-इति ?)

उच्यते—तदिदमतीव कृतकवैराग्यप्रकटनकौरुकुचीकूर्चकौशलमानन्दात्मनः प्रतिप्राणिसंवेद्यस्य निह्नोतुमशक्यत्वादनिवृत्तेऽपि दुःखे क्वचित्सुखसम्वेदनान्न दुःखाभावः सुखं निरभिलाषस्याप्यतर्कितोपनतसुखसाधनविषयसम्पर्के सति सुखसम्वेदनदर्शनादभिलाषात्मकदुःखाभावः सुखमित्यपि न मनोज्ञम्, यस्तु दुःखाभावे क्वचित्सुखमित्यपि व्यपदेशः प्रशान्तरोगाणामिव पूर्वदर्शितः स भाक्त इति न तावता स्वसम्वेदनसाक्षिकसुखापह्नवः कर्तुमुचितः, मोक्षे तु नित्यसुखमसंभवत्प्रमाणं नाभ्युपगम्यते ।

अपिच मोक्षे सुखमस्ति न वेति विचार एष न प्रामाणिकजनोचितः, स्वरूपेण व्यवस्थानमात्मनो मोक्ष इति मोक्षविदः, तत्रात्मस्वरूपमेव कीदृगिति चिन्त्यं न पृथङ् मोक्षस्वरूपम्, आत्मनश्च सुखदुःखबुद्ध्यादय आगन्तुका गुणा न महत्त्ववत्सांसिद्धिका इति निर्णीतमेतदात्मलक्षणे सुखादिकार्येण चात्मनोऽनुमानादिति, अत एव कपिलकथितचितिशक्तिस्वभावत्वमपि न युक्तमात्मनः ।

सचेतनश्चिता योगात्तदभावादचेतनः ।
चितिर्नामार्थविज्ञानं कादाचित्कं तु तस्य तत् ॥
नार्थसंवेदनादन्यच्चैतन्यं नाम विद्यते ।
तच्च सामग्र्यधीनत्वात्कथं मोक्षे भविष्यति ॥
जाग्रतः स्वप्नवृत्तेर्वा सुषुप्तस्यापि वा ऽऽत्मनः ।
ज्ञानमुत्पद्यते ऽन्या तु चतुर्थी नास्ति तद्दशा ॥
जाग्रद्दशायां स्वप्ने च बुद्धेः प्रत्यात्मवेद्यता ।
सुखं सुप्तो ऽहमद्येति पश्चात्प्रत्यवमर्शनात् ॥
तदा त्वचेत्यमाना ऽपि सुषुप्ते धीः प्रकल्प्यते ।
तुर्यावस्था तु संवित्तिशून्यस्य स्थितिरात्मनः ॥
तुर्यावस्थातिगं रूपं यदाहुः के चिदात्मनः ।
प्रमाणागोचरत्वेन कल्पनामात्रमेव तत् ॥
संवित्प्रसवसामर्थ्यं सामग्रीसन्निधानतः ।
यदि नामात्मनो ऽस्त्यस्य तावता न चिदात्मता ॥

यदि तु दर्शनशक्तियोग्यतामात्रमेव पुंसश्चैतन्यमुच्यते तर्हि तथाविधस्य तस्य कैवल्यस्यास्माकीनमोक्षसदृक्षत्वमेव योग्यतामात्रसंभवे ऽपि दृश्येन्द्रियसंयोगादेस्सामग्र्या वैकल्यावस्थायामात्मनो द्रष्टृत्वासंभवाद् दर्शनशून्यस्य चान्यस्य चैतन्यस्य निरस्तत्वादिति ।

निर्वाणादिपदाख्येयमपवर्गं तु सौगताः ।
सन्तत्युच्छेदमिच्छन्ति(१)स्वच्छां वा ज्ञानसन्ततिम्(२) ॥

एतद् द्वितयमप्युक्तं पूर्वमेव तद् ध्वस्तं च, ज्ञानसन्ततिर्नित्यश्चात्मा समर्थितः ।

सन्तत्युच्छेदपक्षस्तु नैयायिकमतादपि ।
शोच्यो यत्राश्मकल्पो ऽपि न कश्चिदवशिष्यते ॥
अर्हत्पक्षे ऽपि यद्रूपमन्यसापेक्षमात्मनः ।
न केवलस्य तद्रूपमित्यस्मन्मततुल्यता ॥
विकारित्वं तु जीवानामत्यन्तमसमञ्जसम् ।
शब्दपुद्गलवच्चैतत्प्रत्याख्येयमसम्भवात् ॥
तस्मान्न वेदान्तविदो विदन्ति मोक्षं न सांख्या न च सौगताद्याः ।
इत्यक्षपादाभिहितो ऽपवर्गः श्रेयांस्तदत्यन्तविमोक्ष एव ॥

---

(१) सन्तत्युच्छेदं—ज्ञानसन्तत्युच्छेदं निर्वाणपदाख्येयमपवर्गं योगाचाराः ।

(२) स्वच्छां ज्ञानसन्ततिं निर्वाणपदाख्येयमपवर्गं माध्यमिकाः । तदुक्तं षड्दर्शनसमुच्चये—मन्यन्ते वत मध्यमाः कृतधियः स्वच्छां परं संविदमिति ।

## मोक्षोपायनिरूपणम् ।

आह भवत्वयमीदृगपवर्गः स तु कथमधिगम्यते इत्युच्यताम् ? उक्तमेव भगवता सूत्रकारेण ।

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादिति(१) (गौ० अ० १ आ १ सू २)।**

दुःखोच्छेदस्तावदपवर्ग इति कथितम्, कार्यत्वाच्च दुःखस्य कारणोच्छेदात्तदुच्छेदः, कारणं चास्य जन्म जन्मनि हि सति दुःखं भवति, जायते इति जन्म देहेन्द्रियादिसंबन्ध आत्मनः, तदपि जन्मकारणोच्छेदादेवोच्छेद्यमतस्तत्कारणं प्रवृत्तिरुच्छेद्या, तस्या अपि उच्छेदो हेतूच्छेदादिति तद्धेतवो दोषा उच्छेद्याः, तेषां तु निमित्तं मिथ्याज्ञानं तस्मिन्ननुच्छिन्ने दोषा उच्छिन्ना भवन्तीति मिथ्याज्ञानमुच्छेतव्यम्, तदुच्छित्तये च तत्त्वज्ञानमुपायः, प्रसिद्धो ह्ययमर्थः समर्थितश्च पूर्वं विस्तरत'स्तत्त्वज्ञानं मिथ्याज्ञानस्य बाधकमि'ति, तस्मान्मिथ्याज्ञानदोषप्रवृत्तिजन्मदुःखनिवृत्तिक्रमेणापवर्ग इति ।

यद्यपि च मिथ्याज्ञानमपि जन्मकार्यमशरीरस्यात्मनो मिथ्याज्ञानानुपत्तेः, इतरेतरकार्यकारणभावेन बीजाङ्कुरवदनादिप्रबन्धप्रवृत्तेन प्रवर्तमाना मिथ्याज्ञानादयो भावाः संसार इत्युच्यते, तथा ऽपि तत्कारणोच्छेदचिन्तायां कुतः प्रभृति च्छेद उपक्रम्यतामिति विचार्यमाणे विशेषनियमाभावाद्यतः कुतश्चिदिति प्राप्ते मिथ्याज्ञानस्य प्रतिकूलमुच्छेदकारणं तत्त्वज्ञानमुपलब्धमिति विशेषे प्रमाणभावात्तदुच्छेद एवोपक्रम्यते, अत एव मिथ्याज्ञानमूलः संसार उच्यते तस्मिन्नुच्छिन्ने तदुच्छेदसम्भवान्न ततःप्रभृति संसारः प्रवृत्त(रप्रवृत्तिः?)इति निपुणमयेतिभिरपि निर्धारयितुं शक्यमनादित्वात्तस्येति, तदेवं तत्त्वज्ञानान्मिथ्याज्ञानापाये तत्कार्यदोषापायः दोषापाये प्रवृत्त्यपायः प्रवृत्त्यपाये जन्मापायः जन्मापाये दुःखापायः स एवापवर्ग इति, तदिदमुक्त'मुत्तरोत्तरापाये तदनन्तराभावादिति' ।

## मोक्षासम्भवपूर्वपक्षः ।

आह विदितो ऽयं सूत्रार्थः किन्त्वघटमानमनोरथविडम्बनामात्रमिदमलोकश्रद्दधानताप्रकटनं वा, दुरधिगमस्तु सङ्कटो मोक्षमार्गः ।

साध्यस्त्रिवर्ग एवैष धर्मकामार्थलक्षणः ।
चतुर्थः पुरुषार्थस्तु कथास्वेव विराजते ॥
यदा प्रियवियोगादि भवत्युद्वेगकारणम् ।
तदा मोक्षकथाः कामं क्रियन्तां शोकशान्तये ॥

---

(१) तदन्तराभावादपवर्ग इति सूत्रपाठान्तरम् ।

न तूद्यमसमये तदधिगमसमर्थामुपलभामहे सरणिमृणक्लेशप्रवृत्त्यनुबन्धस्य दुस्तरत्वात्, ऋणानुबन्धस्ता'वज्जायमानो ह वै ब्राह्मणस्त्रिभिऋर्णैऋर्णवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति' इदं हि वेदे पठ्यते, तत्र प्रथममृषीणामनृणः स्यामिति ब्रह्मचर्यमाचरति ततः पितॄणामनृणः स्यामिति कृतदारसङ्ग्रहः प्रजोत्पादनाय व्यवहरति तदनु गृहस्थ एवं दर्शपूर्णमासादिषु सहस्रसंवत्सरपर्यन्तेषु (१)कर्मस्वधिकृतः क्रतूननुतिष्ठतीति देवानामनृणः स्यामिति को ऽस्य मोक्षव्यवसायावसरः ।

ननु च 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति मन्वादिस्मरणादस्त्येव तदवसरः । न श्रुतिवाक्यविरोधात्, एवं हि श्रूयते 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपौर्णमासौ च जरया ह वा एव एतस्मान्मुच्यते मृत्युना वेति' न च कर्मप्रयोगाशक्त्या कर्मभ्यो विरन्तुं लभ्यते, स्वयमशक्तस्य बाह्यशक्त्युपदेशात्–'अन्तेवासी जुहुयाद् ब्रह्मणा हि स परिक्रीतः क्षीरहोता जुहुयाद् घृतेन हि स परिक्रीतः' अशक्तस्य च मोक्षोपायानुष्ठाने ऽप्यस्य कथं शक्तिः । क्लेशानुबन्धादपि अपवर्गाभावः

ये हि रागादयो दोषा आत्मनश्चिरसंभृताः ।
कस्तान्वञ्चयितुं शक्तः पुनरावृत्तिधर्मकान् ॥
कामं चिरं विजित्यापि क्रोधं वा लोभमेव वा ।
पुनर्गच्छन्वशं तेषां लोकः प्रायेण दृश्यते ॥

तथा हि—चिरमपि तपसि नियमितमतिरवजितविषमशरविकृतिरपि तनु(२)पवनापनीतवसनकामिनीस्तनजघनदर्शनादेव वशं विश्वामित्रः कुसुमधन्वनो गत इति श्रूयते किल ह्याख्यायिकया, अद्यत्वे ऽप्येवं शतशो दृश्यन्ते इति दुरुच्छेद्या दोषाः, 'वीतरागजन्मादर्शनादि'ति च विचारितमात्मपरीक्षायामवियुक्त एव दोषैर्जन्तुर्जायते इति, दोषविवृद्धिहेतवश्च रूपादयो विषयास्ते कथमिव स्वकर्मण्युदासते ।

ताम्बूलं कुसुमसुगन्धयस्समीरास्सौधेषु प्रतिफलिताः शशाङ्कभासः ।
वाचश्च प्रणयनवामृतद्रवार्द्रा दूतीनां दधति न कस्य रागवृद्धिम् ॥

अपि च—

मुग्धस्मितसुधाधौतमधुरालापशालिना ।
मुखेन पक्ष्मलाक्षीणां कस्य नाक्षिप्यते मनः ॥

इत्येवं निदानानुपशमादपि स्थित एव क्लेशानुबन्धः । प्रवृत्त्यनुबन्धः खल्वपि—

---

(१) संवत्सरशब्दोऽत्र दिनवाची 'नाहः संघस्ततोऽहः सु गौणी संवत्सराभिधा। तस्माद्विश्वसृजां सत्रं सहस्रदिनमिष्यते'इति न्यायमालादर्शनात् । (२) तनुः-मन्दः ।

रागादिप्रेर्यमाणो हि कर्माण्यारभते नरः ।
दीर्घदीर्घाः प्रतायन्ते यैर्धर्माधर्मवासनाः ॥
स प्रवृत्त्यनुबन्धश्च हेतुरन्यस्य जन्मनः ।
एकमेवेदृशं कर्म कर्तुमापतति क चित् ॥
जन्मायुतशतेनापि यत्फलं भुज्यते न वा ॥
क्लेशकर्मानुबन्धोत्थजन्मदुःखादिशृङ्खला ।
पुनरावर्तमानैषा केनोपायेन भज्यताम् ॥
विना फलोपभोगेन न हि नाशोऽस्ति कर्मणाम्।
तेषां ज्ञानाग्निना दाह इति श्रद्धाविजृम्भितम् ॥
कार्यकारणभावो हि शास्त्रादेवावधारितः ।
कर्मणां च फलानां च स कथं वा निवर्तताम् ॥
न चास्य ज्ञानसापेक्षं कर्मेष्टं बन्धकारणम् ।
येनात्मज्ञानयुक्तानां तदुदासीत तं (१)प्रति ॥

अज्ञाननैरपेक्ष्येण कर्मणां स्वभाव एवैष यत्फलाविनाभावित्वमिति ।

तस्मादित्थमृणक्लेशप्रवृत्त्यभ्यनुबन्धतः ।
न मोक्षसिद्धिरस्तीति तदर्थो विफलः श्रमः ॥
अशक्ये ऽर्थे वृथा ऽऽयासं परित्यज्य मनस्विभिः ।
मोक्षचर्चाः परित्यज्य स्वे गृहे सुखमास्यताम् ॥

## मोक्षोपायानुष्ठानसम्भवः ।

अत्राभिधीयते—यत्तावदुक्तमृणानुबन्धादिति, तदयुक्तम्, विधिपक्षश्रवणादौपचारिकमृणशब्दं जायमानशब्दं च प्रयुज्य कर्मस्तुतिरियं क्रियते 'जायमानो ह वै ब्राह्मण इति' न तद्व्यतिरिक्तपुरुषार्थविषयप्रयत्नप्रतिषेधो विधीयते, तथा हि ऋणशब्दो ऽयं विषयान्तरे मुख्यार्थः प्रसिद्धो यत्रोत्तमर्णः सलाभममुतः प्रतिग्रहीष्यामीति धनमधमर्णाय प्रयच्छत्यधमर्णोऽपि सलाभमस्मै प्रदास्यामीति मत्वा गृह्णाति, साऽयमृणशब्दस्य मुख्यो विषय इह नास्त्येव, जायमानो ऽपि मुख्य उत्पद्यमानो ऽपि मातुः कुक्षिकुहरान्निस्सरन्नभिधीयते न चासौ बालकः कर्मभिरभिसम्बध्यते, तस्माद् ब्रह्मचर्यमपत्योत्पादनमध्वरप्रयोग इति त्रयमिदमवश्यकर्तव्यमिति कर्मस्तुतिरियमौपचारिकपदप्रयोगाद्गम्यते, न चैतावता मोक्षव्यवसायावसरविरह इति परिशङ्कनीयमाश्रमान्तरस्य तदौपयिकस्य दर्शनात् ।

ननु मरणावधिदर्शपूर्णमासकर्मोपदेशात्कथमाश्रमान्तरग्रहणम्?, न जरामर्य-

(१) तं—बन्धम् ।

वादस्याप्यपरित्यागप्रतिपादनाय कर्मप्रसंशार्थत्वात्, 'ये चत्वारः पथयो देवयाना' इत्यादयो हि चतुर्थाश्रमशंसिनो भूयांसः सन्ति मन्त्रार्थवादाः, मन्त्रादिस्मृतिवचनानि चतुर्थाश्रमोपदेशीनि चतुर्थाश्रमोचितश्रौताचारादीतिकर्तव्यताविताननविधानपराणि च प्रबन्धेनैव दृश्यन्ते ।

एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ।
वने वसेत्तु नियतो भैक्षभुग्विजितेन्द्रियः ॥ (मनु अ० ६ श्लो०१)

इत्युपक्रम्य चतुर्थाश्रमोचितमोक्षोपायानुष्ठानोपदेशाय षष्ठोऽध्यायः समस्त एव मनुना ऽनुक्रान्तः, जाबालश्रुतौ च विधायकेनैव ब्राह्मणवाक्येन प्रतिपदमाश्रमचतुष्टयमुपदिष्टम्—'ब्रह्मचारी भूत्वा गृही भवेद् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदि'ति, अग्निसमारोपणविधानोपदेशश्च प्रत्यक्षश्रुतः कथमपन्हूयेत— 'आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद् गृहादि'ति, अपि च उपनिषदामध्ययनमसति मोक्षोपयोगसमर्थे चतुर्थाश्रमे निरर्थकमेव प्राप्नोति, क्रियाकाण्डानुष्ठाननिष्ठत्वे हि वेदस्य ज्ञानकाण्डोपदेशः किम्प्रयोजनः स्यात्, तदेवं वर्णवदाश्रमाणामपि चतुर्णां प्रत्यक्षोपदेशसिद्धत्वाच्चतुर्थाश्रमिणां च मोक्षाधिगमोपायतत्त्वज्ञानभावनाभ्यासावसरसम्भवात्सो ऽयं जरामर्यवादः प्रशंसामात्रपर एवावतिष्ठते, 'जरया ह वा एष एतस्मान्मुच्यते मृत्युना वे'ति च वचनाज्जरसा कर्मत्यागानुज्ञानात्स एव चतुर्थाश्रमावसर इति गम्यते, तदुक्तम्—

गृहस्थस्तु यदा पश्येद्वली पलितमात्मनः ।
अपत्यस्यैव चापत्यं तदा ऽरण्यं समाश्रयेत् ॥ (मनुअ०६ श्लो०२)

इतरथा हि मृत्युनैव च तस्मान्मुच्यते इत्यवदयत न त्वेवमब्रवीत्, तस्माद्वार्धकदशोचितं चतुर्थमाश्रममनुमन्यते, तिष्ठतु वा वार्धकदशा यतो ऽपि परिपक्वकषायस्याश्रमचतुष्टयक्रममनपेक्ष्यैव मोक्षाधिकार आख्यातः यथोक्तं 'ब्रह्मचर्यादेव प्रव्रजेदि'ति, अत एव द्विविधो ब्रह्मचारी भवत्युपकुर्वाणो नैष्ठिकश्च, तत्रोपकुर्वाणको यो ब्रह्मचर्यमनुभूय गृहस्थाश्रममनुभवति स चापरिपक्वकषायोऽनुपशान्तगार्हस्थ्यरागः, तमेव प्रतीदमुच्यते-'अनधीत्य द्विजो वेदाननुत्पाद्य च सन्ततिम् । अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः । (मनु० अ० ६श्लो३७) इति, यस्तु परिपक्वकषायः स नैष्ठिक एव ब्रह्मचारी भवति न गृहस्थाश्रमं प्रतिपद्यते, गृहस्थो ऽपि परिपक्वकषायो वानप्रस्थाश्रममुल्लङ्घ्य यतित्वे ऽधिक्रियते यथोक्तम्, 'गृहाद्वनाद्वा प्रव्रजेदि'ति ।

के चित्तु कर्मफलाभिसन्धिरहितस्य कर्तव्यमिति कर्म कुर्वतः क्षीणरागस्यात्मविदो गृहस्थस्यापि ( मोक्षः? ), यो ऽतिथिप्रियः श्राद्धकृद्वेदविद्याविद् गृहस्थो ऽपि विमुच्यते इति, तस्मादृणानुबन्धादपवर्गाभाव इत्ययुक्तम् ।

यत्तु क्लेशानुबन्धादिति तदप्यनध्यवसायमात्रम्, प्रतिपक्षभावनादिना

क्लेशोपशमस्य सुशकत्वात् । यद्येषां नित्यो हेतुर्भवेत्कार्यो वा, यद्यसौ न ज्ञायेत ज्ञातोऽपि वाऽनुष्ठातुमसौ न शक्येत तदा क एवैनमुच्छिन्द्यात्, किन्तु—

नाकस्मिका न नित्यास्ते न नित्याज्ञातहेतुकाः ।
नाज्ञातशमनोपाया न चाशक्यप्रतिक्रियाः ॥

न हि दोषाणामात्मस्वरूपवन्नित्यत्वमुपजननापायधर्मकत्वेन ग्रहणात्, मिथ्याज्ञानं च प्रसवकारणमेषामवधृतमिति नाकस्मिकत्वमविनाशिहेतुकत्वमज्ञातहेतुकत्वं वा। मिथ्याज्ञानस्य च सम्यग्ज्ञानं प्रतिपक्षः प्रतिपक्षभावनाभ्यासेन च समूलमुन्मूलयितुं शक्यन्ते दोषा इति नाज्ञातप्रतीकारत्वं तेषाम्, उक्तं च केन चित्—

सर्वेषां सविपक्षत्वान्निर्ह्रासातिशयाश्रिताः ।
सात्मीभावात्तदभ्यासाद्धीयेरन्नाश्रुना क चित् ॥ इति ।

## वैराग्यार्थं विषयेषु दोषभावना ।

विषयदोषादर्शनेन हि तेषु सक्तिलक्षणो रागः शाम्यति यदा ह्येवं चिन्तयति विवेकी—

असौ तरलताराक्षी पीनोत्तुङ्गघनस्तनी ।
विलुप्यमाना कान्तारे विहगैरद्य दृश्यते ॥
विभाति बहिरेवास्याः पद्मगन्धनिभं वपुः ।
अन्तर्मज्जास्थिविण्मूत्रमेदःक्रिमिकुलाकुलम् ॥
अस्थीनि पित्तमुच्चाराः क्लिन्नान्यन्त्राणि शोणितम् ।
इति चर्मपिनद्धं सत्कामिनीति विधीयते ॥
मेदोग्रन्थी स्तनौ नाम तौ स्वर्णकलशौ कथम् ।
विष्ठाद्दतौ नितम्बे च को ऽयं हेमशिलाभ्रमः ॥
मूत्रासृग्द्वारमशुचि च्छिद्रं क्लेदि जुगुप्सितम् ।
तदेव हि रतिस्थानमहो पुंसां विडम्बना ॥
प्रीतिर्यथा निजास्योत्थं लिहतः शोणितं शुनः ।
शुष्के ऽस्थनि तथा पुंसः स्वधातुस्पन्दिनः स्त्रियाम् ॥
व्यात्तानना विवृत्ताक्षी विवर्णा श्वासघुर्घुरा ।
कथमद्य न रागाय म्रियमाणा तपस्विनी ॥
अहो व्रणे वराको ऽयमकाले तृषितः फणी ।
प्रसारितमुखो ऽप्यास्ते शोणितं पातुमागतः ॥
किमनेनापराद्धं नः स्वभावो वस्तुनः स्वयम् ।
स्पृश्यमानो दहत्यग्निरिति को ऽस्मै प्रकुप्यति ॥

नानुकूलः प्रिये हेतुः प्रतिकूलो न विप्रिये ।
स्वकर्मफलमश्नामि कः सुहृत्कश्च मे रिपुः ॥

एवमहर्दिवं चिन्तयतां नितान्तं मनःसमचित्तता सर्वत्र समुद्भवतीति विलीयन्ते दोषग्रन्थयः ।

अत एवोपदिश्यन्ते मोक्षशास्त्रेष्वनेकशः ।
तस्य तस्योपघाताय तास्ताः प्रत्यूहभावनाः ॥

ननु च प्रतिपक्षभावने ऽपि न सर्वात्मना दोषपक्षः क्षयमुपयाति निम्बाद्युपयोगे इव क्रियमाणे कफधातुरिति, नतदेवं तत्र निम्बोपयोगवत्तदनुकूलस्यातपादेरुपयोगदर्शनात् ।

अपि च—

धर्मिलोपभयात्तत्र नेष्टः सर्वात्मना क्षयः ।
कफाधिक्यं तु हन्तव्यं धातुसाम्यस्य सिद्धये ॥
इह सर्वात्मनोच्छेद्याः क्लेशाः संसारकारिणः ।
छेदश्चैकान्ततस्तेषां प्रतिपक्षोपसेवनात् ॥

न च प्रतिपक्षभावनाभ्यासमेकमस्त्रमपास्य तदुपशमे निमित्तान्तरं किमपि क्रमते, न हि विषयाभिलाषस्तदुपभोगेन विरंस्यति, यथा ऽऽह—

न जातुः कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥
( मनु० अ० २श्लो ९३ )

अन्यत्राप्युक्तम्—मोक्षाभ्यासमनु विवर्धन्ते कौशलानि चेन्द्रियाणामि'ति, पाराशर्यो ऽपि—

तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥ इति ।

तस्मात्प्रतिपक्षभावनैव भगवती भीमकान्तिरन्तः करणकान्तारे निरन्तरमभिज्वलन्ती दावदहनदीधितिरिव दहति दोषविटपकानिति, तदेवं दोषानुबन्धविध्वंसोपायसम्भवान्न तत्कृतो मोक्षमार्गरोधो ऽभिधातव्यः, अत एव के चन चेतनस्य प्रकृत्या निर्मलत्वान्मलानामागन्तुकत्वान्मलनिबर्हणहेतोश्च यथोक्तस्य सम्भवात्तदावरणापाये सति स्वतः सकलपदार्थदर्शनसामर्थ्यस्वभावचित्तत्त्वावस्थानात्सर्वज्ञत्वसिद्धिमदूरवर्तिनीमेव मन्यन्ते ।

यदप्युच्यते—'क्लेशशून्यत्वमात्मनो न कदा चिदपि दृष्टमनुबन्धवृत्तित्वात् क्लेशानामि'ति, तदप्यसत्यम् , सुषुप्तावस्थायामस्पृष्टस्य दोषैरात्मनः प्रत्यहमुपलम्भात् , जाग्रतो ऽपि का चन तादृशी दशा दृश्यत एव यस्यामेवात्मस्वरूप एवात्मा निर्मलो ऽवतिष्ठते यथोक्तम्'—अहरहर्ब्रह्मलोकं यान्तीति' तदलमनेन

दोषानुबन्धकथानुबन्धेन ।

यदपि प्रवृत्त्यनुबन्धादिति, तदपि सूत्रकृता समाहितम्, न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्येति (गो० अ० ४ आ० १ सू० ६४)। दोषेषु बन्धहेतुषु विगलितेषु प्रवृत्तिरपि न देहेन्द्रियादिजन्मने प्रभवतीति।

ननु दोषक्षयात्मा भूदुत्तरः कर्मसंग्रहः ।
कथं फलमदत्वा तु प्राक्तनं कर्म शाम्यति ॥

अत्र केचिदाहुः-ददत्येव कर्माणि फलं दत्त्वा शाम्यन्ति तथापि न बन्धहेतवो भवन्ति, यतः शमसन्तोषादिजनितं योगिनः सुखमुपपाद्य धर्मो विनङ्क्ष्यति अधर्मश्च शीतातपक्लेशादिद्वारकं दुःखं दत्त्वेति ।

नन्वमुष्मात्कर्मण इदं फलं भवतीति कर्मफलानां कार्यकारणभावनियमात्कथमियता कर्मफलोपभोगो भवेदित्यन्यथा तदुपभोगमपरे वर्णयन्ति, योगी हि योगर्द्धिसिद्ध्या विहितनिखिलनिजधर्माधर्मकर्मा निर्माय तदुपभोगयोग्यानि तेषु तेषूपपत्तिस्थानेषु तानि तानि सेन्द्रियाणि शरीराणि रण्डान्तःकरणानि च मुक्तैरात्मभिरुपेक्षितानि गृहीत्वा सकलकर्मफलमनुभवति प्राप्तैश्वर्य इतीत्थमुपभोगेन कर्मणां क्षयः ।

अन्ये त्वाचक्षते-किमनेन भोगायासेन अदत्तफलान्येव कर्माणि योगिनो नङ्क्ष्यन्ति तत्त्वज्ञानस्यैव भगवतः इयान् प्रभावो यदस्मिन्नुत्पन्ने चिरसञ्चितान्यपि कर्माणि सहसैव प्रलयमुपयान्ति भोगादपि तेषां प्रक्षयः शास्त्रप्रामाण्यादेवावगतः तथा तत्प्रामाण्यादेव तत्त्वज्ञानादपि तत्प्रक्षयं प्रतिपत्स्यामहे, तथा चाह—

यथैधांसि समिद्धो ऽग्निर्भस्मसात्कुरुते ऽर्जुन! ।
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥ इति ।

(भ० गी० अ० ४ श्लो० ३७)

न चेदं श्रद्धामात्रं वेदविदामग्रण्या व्यासमुनिनैव समभिधानादवेदाथ हि नासावभिदधीतेति ।

तदन्ये न मन्यन्ते, न सर्वात्मना कर्मणां दाहः किन्तु स्वरूपेण सतामपि सहकारिवैकल्यात्स्वकार्यकरणोदासीनता तेषां भवति भृष्टानामिव बीजानामङ्कुरकरणकौशलहानिः, यतः सामग्री कार्यस्य जनिका न केवलं कारकमतो न कर्माण्येव केवलानि फलोपभोगयोग्यशरीरेन्द्रियादिजन्मनिमित्ततामुपयान्ति किन्तु मिथ्याज्ञानेन दोषैश्च सहितानि, तदुक्तम्—'अविद्यातृष्णे धर्माधर्मौ च जन्मकारणमिति' तत्त्वविदश्च तत्त्ववित्त्वादेव नाविद्या मिथ्याज्ञानात्मिका भवति, दोषाणां तु प्रशमे दर्शित एव क्रमः, तदभावे भवन्तावपि धर्माधर्मौ न बन्धाय कल्पेते न हि स्वकार्यमङ्कुरादि कुसूलवर्तीनि बीजानि जन-

यितुमुत्सहन्ते, भृष्टबीजानामपि स्वरूपशक्तिरपि तानवं गता तद्वत्कर्मणां स्वरूपशक्तिशैथिल्यं मा नाम भूत्तथापि कुसूलवर्तिबीजवत्सहकारिवैधुर्यात्कार्यानारम्भ इति, तदिदमुक्तम् 'न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्येति', ( गो० अ० ४ आ० १ सू० ६४ ) ।

ननु स्वरूपसत्तायां धर्माधर्मयोः कथमिदमुक्तं–'नवानामात्मगुणानां निर्मूलोच्छेदो ऽपवर्ग' इति, नैष दोषः–मनसंयोगवदकिञ्चित्करयोरवस्थानमप्युच्छेदान्न विशिष्यते , उक्तस्यात्मनो विभुत्वादपरिहार्यो मनसंयोगः, न च तदानीमसौ सन्नपि सुखदुःखज्ञानादिजन्मनि व्याप्रियते, एवं धर्माधर्मौ सन्तावपि फलमाक्षिपन्तौ किं करिष्यत इति फलत उच्छिन्नावेव भवतः, तस्मान्नवानात्मगुणानामुच्छेदोऽपवर्ग इत्यविरुद्धम् , एवं प्रवृत्त्यनुबन्धस्यापि बन्धहेतोरभावान्न दुर्गमो ऽपवर्गः ।

## ज्ञानकर्मसमुच्चयवादः ।

अपरे पुनराहुः–कर्मफलानां शास्त्रतः कार्यकारणभावनियमावगतेः शमसन्तोषशीतातपादिद्वारकसुखदुःखमात्रोपपादनेन कर्मपरिक्षयानुपपत्तेः योगद्धर्या च दीर्घकालावधिसुखदुःखोपभोगस्य सकृदेव सम्पादयितुमशक्यत्वाज्ज्ञानाग्निना च दाहे तत्कर्मोपदेशिवैदिकवचनसार्थानर्थक्यप्रसङ्गात् अदत्तफलस्य कर्मणो ऽनुपरमात् अवस्थानपक्षे चिरमप्युषित्वा कुसूलावस्थितबीजवत्कालान्तरेणापि तत्फलाक्षेपप्रसङ्गादवश्यं स्वफलोपभोगद्वारक एव कर्मक्षयो वाच्यः, न चानिर्मोक्ष आशङ्कनीयश्चिरादपि तत्सिद्धिसम्भवात् , तथा च मुमुक्षुर्नित्यनैमित्तिकं कर्मावश्यमनुतिष्ठेदननुतिष्ठन्प्रत्यवेयादिति तत्कुतोऽस्य बन्धः स्यात् , काम्यं निषिद्धं च कर्म स्वर्गनरककारि विस्पष्टमेव बन्धसाधनमिति तत्परिहरेदेवेत्येवं तावदुत्तरो ऽस्य न कर्मसञ्चयः प्रवर्तते, तदाह—

नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ इति ।

प्राक्तनस्य तु कर्मसञ्चयस्य भोगादेव क्षयः, आत्मविदश्च मुमुक्षोरयमनुष्ठानक्रमो भवति नेतरस्येति स एवेत्थमपवर्ज्येतेति, आह च—

आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ।
तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये ॥
उत्तरप्रचयासत्त्वाद्देहो नोत्पद्यते पुनः ।

ननु नित्यकर्मानुष्ठानपक्षे नास्त्येव मोक्षः, यान्येव हि नित्यानि दर्शपौर्णमासादिकर्माणि 'यावज्जीवं दर्शपौर्णमासाभ्यां यजेते'त्यादिचोदनोपदिष्टानि तान्येव फलवन्ति श्रूयन्ते इति काम्यान्यपि भवितुमर्हन्ति, 'दर्शपौर्णमासाभ्यां

स्वर्गकामो यजेत, अग्निहोत्रं जुहुयात्स्वर्गकाम' इति। न फलाभिसन्धानपूर्वकत्वेनाप्रयोगात् , यथा ऽऽह—

प्रार्थ्यमानं फलं ज्ञातं नानिच्छोऽस्तद्भविष्यति।

इति संयोगप्रवृत्तौ विशेषः, प्रयोगे ऽपि विशेषः काम्यं कर्म सर्वाङ्गोपसंहारेण प्रयुज्यमानं फलसाधनमिति, यथा शक्तिस्त(था त)त्तथा प्रयोक्तव्यमिति नित्यस्यकर्मणा ऽकरणात्प्रत्यवाय इति यथाशक्त्यपि तत्प्रयोक्तव्यमनुष्ठाता तु सर्वाण्यङ्गानि यद्यसावुपसंहर्तुं न शक्नुयान्मा प्रवर्त्तिष्ट न त्वप्रवर्तमानः प्रत्यवेयादिति, एवं तदेव दर्शपौर्णमासादिकर्म 'यावज्जीवमि'ति चोदनयोपदिष्टं नित्यं सत्तत्फलानभिसन्धानात्प्रयुक्तं न बन्धाय कल्पते, क सा स्वर्गसाधनशक्तिरस्य गतेति चेद्, न वयं कर्मणां शक्तिमशक्तिं वा प्रत्यक्षतः पश्यामः शास्त्रैकशरणास्तु श्रोत्रिया वयं चोदनैव धर्मे प्रमाणमिति नः कुलव्रतमेतत् , सा च चोदनैकत्र कामिनमधिकारिणमाश्रित्य प्रवृत्ता तदधिकारश्च फलनिर्वृत्तेर्विना न स्यादिति फलपर्यन्ततां प्रतिपद्यते, अन्यत्र तु यावत्पदोपबद्धजीवनपदार्थावच्छिन्नाधिकारिलाभेन प्रवर्तमाना न फलाय भवत्यक्रियमाणे तु शास्त्रार्थे प्रत्यवायाय प्रभवत्यधिकृतेन सता शास्त्रार्थस्त्यक्त इति, काम्ये त्वनुत्पन्नकामोऽधिकृत एव न भवति इति नाधिकृतेन सता विधिस्त्यक्त इति न प्रत्यवैतीति , उपक्रम्य त्वन्तराले त्यक्तुं न लभ्यत एव वीतायां फलेच्छायामवाप्ते वा फले तत्कर्मसमापनमवश्यकर्त्तव्यमेव तदित्यलं शास्त्रान्तरगर्भेण भूयसा कथाविस्तरेण, सर्वथा सुष्टक्तं नित्यनैमित्तिके कुर्यादिति, न खलु सुलभो ऽयं पुरुषार्थः किं न श्रुतमिदमायुष्मता व्यासवचनम्—

अनेकजन्मसंसिद्धस्ततो याति परां गतिम् (भग० अ० ६ श्लो० ४५) इति।

ज्ञानाग्निदाहवचनं (१)तु ज्ञानप्रशंसार्थमेव, सोऽयं ज्ञानकर्मसमुच्चयान्मोक्ष उच्यते।

## ज्ञानकर्मसमुच्चयवादनिरासः।

अत्राभिधीयते—न खलु फलोपभोगद्वारकः कर्मणां परिक्षयो जन्मशतैरपि शक्यक्रियः, उक्तं हि—

एकमेवेदृशं कर्म कर्तुमापतति क्वचित्।
जन्मायुतशतेनापि यत्फलं भुज्यते न वा॥
देहैस्तत्कर्मभोगार्थैः कर्मान्यच्च करिष्यते।
कर्मसाधनमित्येषा दुराशैव तपस्विनाम्॥

---

(१) ज्ञानाग्निदाहवचनं—ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन !, इत्येवंरूपम्।

तदीदृशमेनं मोक्षपथमुपदिशद्भिर्याज्ञिकैर्मोक्षोपेक्षणमनक्षरमुपदिष्टं भवतीति, तस्मात्पूर्वोक्तनीत्यैव कर्मणां बन्धहेतुत्वमपाकरणीयम् ।

ननु पक्षचतुष्टये ऽपि दोष उक्तः ? न चतुर्थपक्षस्य निरवद्यत्वात्सहकारिवैकल्यात्कुसूलावस्थितबीजवत्कर्मणामनारम्भकत्वे सति न कश्चिद्दोषः, एष एव च तेषां दाहो यत्कार्यानारम्भकत्वम् ।

नन्वविनष्टस्वरूपाणि कुसूलबीजवदेव कदा चिदारप्स्यन्ते कार्यं तस्माद्वरमुच्छिद्यन्तामेव ? किमिदानीं नित्यमात्मानमप्युच्छेत्तुं यतामहे स हि पुरा भोक्ताऽभूदिति मुक्तो ऽपि पुनर्भोक्तृतां प्रतिपद्येतेति वरमुच्छिद्यतामेव । सामग्र्यभावात्कथं भोक्तृतां गच्छेदिति चेत्कर्माण्यपि सहकार्यभावात्कथं कार्यमारभेरन् , न च कर्मणां बन्धकरणे रागादयो न सहकारिण इति वक्तुं शक्यं वीतरागस्य जन्मादर्शनादित्यसकृदुक्तत्वात् , तस्मादयमेव सूत्रकारोपदिष्टः पन्थाः पेशलो—'न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्ये'ति ।

यच्चेदमुच्यते—'ज्ञानकर्मसमुच्चयान्मोक्ष' इति, तत्रेदं वक्तव्यम्—कर्मणां कीदृशो मोक्षं प्रत्यङ्गभावः ? न हि कर्मसाध्यो मोक्षः स्वर्गादिवदनित्यत्वप्रसङ्गात् , अपि चात्मैव स्वरूपावस्थितो मोक्ष इत्युच्यते, न चात्मस्वरूपं कर्मसाध्यमनादिनिधनत्वेन सिद्धत्वात् ।

ननु नित्यकर्माननुष्ठाने प्रत्यवेयादिति तद्द्वारकबन्धपरिहारोपायत्वात्कर्मापि मोक्षाङ्गं स्यात् , न संन्यासविधानस्य प्रत्यक्षोपदेशादित्युक्तत्वात्, अपरिपक्वकषायाणां शनैः शनस्तत्परिपाकौपयिकत्वेन कर्मानुष्ठानं पारम्पर्येणापवर्गोपाय इति तु बाढमभ्युपगम्यते, यथा ऽऽह मनुः–'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरि'ति (अ० २ लो० ३८) । अध्यात्मविदश्च ज्ञानकाण्डौपयिकमेव क्रियाकाण्डमन्यत् , साक्षात्तु कर्मसाध्येऽपवर्गे स्वर्गवदपायित्वप्रसङ्गात्कृतकस्य सर्वस्यानित्यत्वात्तत्त्वज्ञानमेव मोक्षोपाय इत्युक्तम् ।

यदपि यमनियमादिषु साध्यभूतं तदपि तदङ्गतां गच्छन्न वार्यते, तत्कार्यत्वेऽपि यावद्गुणप्रध्वंसाभावस्वभावत्वान्मोक्षस्य न क्षयित्वं स्वर्गवद्दन्यस्तु न मोक्ष इत्युक्तम् ।

तत्पूर्वोक्तप्रक्रमेणापवर्गप्राप्तेस्तत्त्वज्ञानमेवाभ्युपायः ।
कर्म त्वङ्गं तत्र शौचादि किंचित्किञ्चित्तत्स्यादात्मसंस्कारपूर्वम् ॥

## आत्मतत्त्वज्ञाननिरूपणाय विप्रतिपत्तिप्रदर्शनम् ।

आह—'तत्त्वज्ञानमिदानीं चिन्त्यतां किं विषयं तदपवर्गाय कल्पते कुतो वा तस्य निः श्रेयससाधनत्वमवगतमि'ति ।

नन्वात्मज्ञानमपवर्गहेतुरिति बहुशः कथितमेवैतदिति कोऽयं प्रश्नः, न विप्रतिपत्तेः, विप्रवदन्ते ह्यत्र वादिनः एक एवायमविद्यापरिकल्पितजीवात्मविभागः परमात्मा तत्त्वज्ञानादविद्यापाये मोक्ष इति ब्रह्मवादिनः, शब्दाद्वैतनिश्चयादिति वैयाकरणाः, विज्ञानाद्वैतदर्शनादिति शाक्यभिक्षवः, प्रकृतिपुरुषविवेकविज्ञानादिति पारमर्षाः, ईश्वरप्रणिधानादिति चान्ये, तदेवं कस्मै तत्त्वज्ञानाय स्पृहयन्तु मुमुक्षव इति वाच्यम् ।

## स्वमतेनात्मतत्त्वज्ञाननिरूपणम् ।

उच्यते, भिन्नास्तावदात्मान इति गृह्यतामात्मज्ञानमेव च निःश्रेयसाङ्गमिति, यत्तु कुतस्तस्य निःश्रेयससाधनत्वमवगतमिति, अक्षपादवचनादिति ब्रूमः, अक्षपादस्तावदिदमुपदिष्टवान् आत्मज्ञानान्निःश्रेयसाधिगम इति, न च निष्प्रमाणकमर्थमेष ऋषिरुपदिशति इति भवितव्यमत्र प्रमाणेन, तत्तु वैदिकविधिवाक्य- 'मात्मा ज्ञातव्य' इति, स एष तावन्निरधिकारो विधिरधिकाररहितस्य च विधेः प्रयोगयोग्यत्वाभावादधिकारान्वेषणमुपक्रमणीयम् , परप्रकरणपरिपठनविरहाच्च नास्य सम्पदादिविधिवत्प्रधानाधिकारनिवेशित्वमतो विश्वजिदधिकरणन्यायेन स्वर्गकाममधिकारिणमिह यावदुपात्तमध्यवस्यामस्तावदेव च 'न पुनरावर्त्तते' इत्यर्थवादसमर्पितेयमपुनरावृत्तिरेव हृदयपथमवतरति रात्रिसत्र इव प्रतिष्ठेति तामेवास्य फलत्वेन प्रतिपद्यामहे ।

सा चेयं साध्यमानापि रूपादेव हि शाश्वती ।
चकास्त्यपुनरावृत्तिर्न स्वर्गवदपायिनी ॥

ननु दृष्टप्रयोजनालाभे सत्यदृष्टप्रयोजनपरिकल्पनावसरः इह च दृष्टमेव प्रयोजनमात्मज्ञानस्य कर्मप्रवृत्तिहेतुत्वमुपलभ्यते नित्येनात्मना विना भूतेष्वेव चेतनेषु श्मशानावधिषु बहुवित्तव्यायाससाध्यानि को नाम ज्योतिष्टोमादिकर्माण्यनुतिष्ठेदिति नित्य आत्मा परलोकी ज्ञातव्यः, एवं हि निर्विशङ्कः कर्मसु प्रवर्तेतेति, तदिदमनुपपन्नम् , अन्यत एव सिद्धत्वात्प्रत्यभिज्ञाप्रत्यक्षप्रत्ययेन जैमिनीयैरनुमानमहिम्ना च नैयायिकादिभिरात्मा नित्य इति निश्चित एव किमत्र विधिः करिष्यतीति, कर्त्तव्यताकलापोपदेशश्च तदानीमत्यन्तनिष्प्रयोजनः स्यात् , अमी च तथ्या नामातिमहान्तो वेदग्रन्था इयत्येव पर्यवसिता इति तदिदमुपनतं सेयं महतो वंशस्तम्बाल्लट्वा निष्क्रष्यते इति, तस्मादर्थवादसमर्पितमपुनरावृत्तिरूपमेव फलमात्मज्ञानविधिरवलम्बत इत्येवं केचित् ।

सूक्ष्मतरदर्शिनस्त्वाहुः–इयमपि महती दुर्गतिर्यदर्थवादमुखप्रेक्षित्वमस्योत्त-

माधिकारविधेर्विश्वजिति (१)रात्रिसत्रे (२)वा किमन्यत्क्रियतां न हि विधिस्वरूपपर्यालोचनातः कश्चिदधिकारी लभ्यते इति बलात्स्वर्गकामादिः कल्प्यते वा अर्थवादसमर्पितो वा ऽवलम्ब्यते, यत्र तु विधिस्वरूपमहिम्नैव तदुपलम्भः तत्र किं कल्पनया किमर्थवादवदनावलोकनदैन्येन वा, इह च स्वाध्यायो ऽध्येतव्य इति वदग्नीनादधीतेतिवद्वा कृत्येन द्वितीयया वेप्सिततमनिर्देशात्तन्निष्ठत्वमेवावतिष्ठते। तत्र यथा ऽग्न्यर्थतया ऽऽधानविधिरवगम्यमानो ऽग्नीनामनेकविधिपुरुषार्थौपयिककर्मकलापोपयोगात्तदर्जनेनैव कृतार्थत्वमुपगत इति न फलान्तरमपेक्षते यथा वा स्वाध्यायो ऽध्येतव्य इत्यक्षरग्रहणार्थत्वादस्य विधेरक्षरग्रहणस्य च फलवत्कर्मावबोधद्वारेण परमपुरुषार्थोपायत्वावधारणान्न तदतिरिक्तघृतमधुकुल्यादिफलान्तरापेक्षित्वं न चाध्ययनविध्यङ्गत्वं स्वमहिम्नैवेप्सिततमसंस्कारद्वारकाधिकारलाभात्, एवमिहाप्यपहतपाप्माद्यात्मस्वरूपपरिज्ञानमेव तस्य परपुरुषार्थतामवबोधयन्नास्य विधेरन्यप्रयोजनतामापादयति, कश्चित्किल संस्कारविधिः संस्क्रियमाणप्रयोजनापेक्षया परमुखप्रेक्षी भवति व्रीहीन्प्रोक्षतीतिवत्, कश्चित्तु संस्क्रियमाणप्रयोजनमलभमानस्तदीप्सिततमत्वानिर्वाहणात्संकारविधित्वमेव जहाति सक्तून् जुहोतीतिवत्, यथोक्तम्—

भूतभाव्युपयोगं हि द्रव्यसंस्कारमिष्यते ।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क चिद् ॥ इति ।

संस्कार्यमनर्घमिव रत्नमपर्युषितमिवामृतमनस्तमिव चन्द्रबिम्बमपरिम्लानमिव शतपत्रमस्ति कस्तर्हि प्रकरणपाठापेक्षायामर्थवादमुखप्रेक्षणे फलकल्पनायां वा ऽभिलाषः, अत एव न कामश्रुतप्रयुक्तत्वमाधानस्य न चाचार्यकर-

---

( १ ) विश्वजितीति । अयमाशयः—विश्वजिद्यागे प्रवृत्त्यर्थमिष्टसाधनताज्ञानमवश्यमपेक्षणीयमिष्टसाधनताज्ञानस्य प्रवृत्तिं प्रति कारणत्वात् तच्च इष्टं किमिति नियामकं नास्ति विश्वजिता यजेतेति श्रुतौ फलविशेषानिर्देशादिति किंचित्फलं स्वेच्छयाकल्पनीयमिति पूर्वपक्षे स विश्वजिद्यागफलं स्वर्गः स्यात् सर्वपुंसामिष्टत्वादिति, स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात् ( अ० ४ पा० ३ सू०० १९ ) इति सूत्रेण जैमिनिना सिद्धान्तितम् ।

( २ ) रात्रिसत्र इति । रात्रिसत्रवाच्यानां ज्योतिर्गौरित्यादिवाक्योत्पन्नकर्मणां फलजिज्ञासायाम् विश्वजिन्न्यायेनोत्पन्नाश्रुतस्वर्गादिफलकल्पने गौरवात् 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति अर्थवादश्रुता 'प्रतिष्ठैव फलमि'ति सिद्धान्तः तथा च न्यायमाला—

स्वर्गाय वा प्रतिष्ठायै रात्रिसत्रमिहादिमः ।
पूर्ववत्स्यात्प्रतिष्ठा च श्रुता तेनाऽश्रुताद्वरम् ॥

णविधिप्रयुक्तत्वमध्ययनस्येति, तस्मात्स्वाध्यायाध्ययनाग्न्याधानविधिसमानयोगक्षेमत्वादात्मज्ञानविधेस्तत एवात्मज्ञानमपवर्गार्थमवगम्यते, तथाविधस्वरूप आत्मैव परोपजनितधर्मरहितो ऽपवर्ग इत्युच्यते यतः तदिदमित्थमात्मज्ञानमेव निःश्रेयससाधनमनन्यलभ्यमिति तमेवोपदिष्टवानाचार्योऽक्षपादः । यत्तु विज्ञानसत्तात्मशब्दाद्यद्वैतदर्शनं तन्मिथ्याज्ञानमेवेति न निःश्रेयससाधनम् ।

## ब्रह्मवादिमतेन मोक्षोपायनिरूपणम् ।

ननु कथमद्वैतदर्शनं मिथ्या कथ्यते तत्प्रत्युत द्वैतदर्शनमविद्या मायापि मिथ्याज्ञानमिति युक्तम् , तथा हि प्रत्यक्षमेव तावन्निपुणं निरूपयतु भवान , तत्र हि यदन्यानपेक्षतया झगिति पदार्थस्वरूपमवभासते तत्पारमार्थिकमितरत्काल्पनिकमिति गम्यते , सद्रूपमेव च तत्राभिन्नमन्यनिरपेक्षमवभाति भेदस्त्वन्यापेक्षयेति नाक्षणविज्ञानविषयतामुपयाति, तत्र यथा मृद्रूपतातः प्रवृत्ति यावत्कुम्भावस्थेत्यस्मिन्नन्तराले आविर्भवतां च घटकपालशकलशर्कराकणादीनां रूपमपरमार्थसदेव व्यवहारपदवीमवतरति परमार्थतस्तु मृत्तिकैव, यथा ऽऽहुः मृत्तिकेत्येव सत्यमिति, एवं तदपि मृत्तिकारूपं सत्तापेक्षया न परमार्थं सदिति सत्तैव सर्वत्र परमार्था तदेव सल्लक्षणं ब्रह्मेत्याहुः, आगमश्च 'एकमेवाद्वितीयमि'त्यादिरभेदमेव दर्शयति 'नेह नानाऽस्ति किञ्चन मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यती'ति च, वेदस्य च सिद्धे ऽप्यर्थे प्रामाण्यमुपवर्णितमेव भवद्भिः, न च प्रत्यक्षविरुद्धत्वमभेदशंसिनो वक्तुं शक्यमागमस्य न ह्यन्यनिषेधे प्रत्यक्षं प्रभवति स्वरूपमात्रग्रहणपरिसमाप्तव्यापारत्वात्, पररूपमन्तरेण च भेदस्य दुरुपपादत्वाद्भेदे कुण्ठमेव प्रत्यक्षमिति कथमभेदग्राहिणमागमं विरुन्ध्यात्तदुक्तम्--

आहुर्विधातृ प्रत्यक्षं न निषेध्यं विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥

नन्वेकमेव ब्रह्म न द्वितीयं किंचिदस्ति तर्हि तद् ब्रह्म नित्यशुद्धबुद्धस्वभावत्वान्मुक्तमेवास्ते केन तद्बद्धमिति किमर्थो ऽयं मुमुक्षूणां प्रयत्नः कुतस्त्यो वा ऽयं विधिर्न जगदवभासकः ? अविद्योच्छेदार्थे मुमुक्षुप्रयत्न इति ब्रूमः, ततस्त्य एवायं विचित्रजगदवभासः ।

केयमविद्या नाम, ब्रह्मणो व्यतिरिक्ता चेद् नाद्वैतम् अव्यतिरेके तु ब्रह्मैव सा, ततो नान्येत्येषेति कथमुच्छेद्यते ? नैवं न वस्तुनीदृशि तार्किकचोद्यानि क्रमन्ते, अविद्या त्वियमवस्तुरूपा माया मिथ्यावभासस्वभावा ऽभिधीयते, तत्त्वाग्रहणमविद्या अग्रहणं च नाम कथं वस्तुधर्मं विकल्प्यते ।

ननु तत्त्वाग्रहणरूपापि कस्येयमविद्या न हि ब्रह्मणो नित्यप्रबुद्धस्वभावत्वादविद्या भवति अन्यस्तु नास्त्येव तदाश्रयो न च निरधिकरणमेव मिथ्याज्ञानं भवितुमर्हति ?

उच्यते--'जीवात्मनामविद्या न ब्रह्मणः ।

ननु के ते जीवात्मानस्ते ऽपि ब्रह्मणो ऽन्यानन्यतया चिन्त्या एव ? आः क्षुद्रतार्किक सर्वत्रानभिज्ञो ऽसि, ब्रह्मैव जीवात्मानो न ततो ऽन्ये न हि दहनपिण्डाच्छेदेनापि भ्रान्तः स्फुलिङ्गा अग्निस्वरूपा न भवन्ति, तत्किं ब्रह्मण एवाविद्या ? न च ब्रह्मणो ऽविद्या, यथा चैकमेव घटाद्यावरणोपहितभेदतया भिन्नमिव विभाति नभः पटाकाशं घटाकाशमिति तदावरणवशादेव च रजोधूमादिकलुषितमपि भवति तदावरणविरतौ तु गलितकालुष्यमले तत्रैव परमे व्योम्नि लीयते, तथैव चात्मानो ऽप्यविद्यापरिकल्पितभेदात्तत्कृतमनेकप्रकारकालुष्यमनुभवन्ति तदुपरमे च परब्रह्मणि लीयन्ते इति च ।

नन्वेवमप्यविद्यापरिकल्पित एष ब्रह्म जीवात्मविभागः, सा च जीवात्मनामविद्येत्युच्यते तदेतदितरेतराश्रयमापद्यते अविद्याकल्पनायां सत्यां जीवात्मानो जीवात्मसु च सत्स्वविद्येति ? भवत्वितरेतराश्रयत्वम् अविद्याप्रपञ्च एवायमशेषः, कस्यैष दोषः यदि चानादित्वमस्य परिहारो बीजाङ्कुरवद्भविष्यति, भवद्भिरपि चायमनादिरेव संसारो ऽभ्युपगतः अविद्यैव च संसार इत्युच्यते ।

नन्वनादेरविद्यायाः कथमुच्छेदः ? किमनादेरुच्छेदो न भवति भूमे रूपस्य, भवद्भिर्वा कथमनादिस्संसार उच्छेद्यते, ननूपाये सत्यनादिरप्युच्छेद्यते अद्वैतवादिनां तु कस्तदुच्छेदोपायः ? अविद्यैवेति ब्रूमः, श्रवणमननध्यानादिरप्यविद्यैव सा त्वभ्यस्यमाना सत्यविद्यान्तरमुत्सादयति स्वयप्युत्सीदति यथा पयः पयो जरयति स्वयं च जीर्यति विषं विषान्तरं शमयति स्वयं च शाम्यति यथा वा द्रव्यान्तररजःक्षिप्तं रजःकलुषितेऽम्भसि तच्चात्मानं संहृत्य स्वच्छमम्बु करोति तदेवमियमविद्यैवाविद्यान्तरमाच्छिन्दन्ती विद्योपायतां प्रतिपद्यते,

ननु स्वरूपेणासत्येवेयमविद्या कथं सत्यकार्यं कुर्यात्, उच्यते—

असत्यादपि सत्यार्थसम्पत्तिरुपपत्स्यते ।
मायासर्पादयो दृष्टाः सत्यप्रभयहेतवः ॥

रेखागकारादयश्चासत्याः सत्यार्थप्रतीत्युपाया दृश्यन्ते, स्वरूपेण सत्यास्ते इति चेत्किं तेन क्रियते, गकारादित्वेन हि ते प्रतिपादकास्तच्चैषामसत्यमिति ।

ननु ब्रह्मणो नित्यशुद्धत्वाज्जीवानां च ततो ऽन्यत्वात्कथं तेष्वविद्यावकाशं लभेत ? परिहृतमेतद् घटाकाशदृष्टान्तोपवर्णनेनैव, अपि च यथा विशुद्धमपि वदनबिम्बमम्बुमणिकृपाणदर्पणाद्युपाधिवशेन श्यामदीर्घस्थूलादिरूपमपारमार्थिकमेव दर्शयति तथा ब्रह्मणस्तदभावे ऽपि जीवेषु तदवकाश इति ।

ननु परमात्मनो नित्यत्वाज्जीवानामप्यन्योन्यमप्यनन्यत्वमित्येकस्मिन्बद्धे मुक्ते वा सर्वे बद्धाः मुक्ता वा स्युः ? अयि कुतर्ककलुषितमते ! कथं बोध्यमानो

ऽपि न बुध्यसे घटाकाशे ऽपि घटभङ्गात्स्वरमाकाराप्रतिष्ठे जाते पटाकाशो ऽपि तथा भवति, एकस्यापि जीवात्मन उपाधिभेदात्सुखदुःखानुभवभेदो दृश्यते पादे मे वेदना शिरसि मे सुखं न वेदनेति तीव्रतरतरणितापोपनतातनुक्लमस्य च यत्रैव शरीरावयवे शिशिरहरिचन्दनपङ्कस्थासकमुपरचयति परिम्लानस्तत्रैव तद्दुःखोपरमानुभवो नेतरत्रेत्येवमेकस्मिन्नपि परमात्मनि कल्पनामात्रप्रतिष्ठेष्वपि जीवात्मसु बद्धमुक्तव्यवस्था सिध्यतीत्येकात्मवाद एवायमागमानुगुण उपयुक्तो नानन्त्यमात्मनाम् ।

ब्रह्मदर्शनमेवातो निःश्रेयसनिबन्धनम् ।
भेददर्शनमूढानां संसारविरतिः कुतः ॥ इति ।

## ब्रह्मवादिमतखण्डनम् ।

अत्राभिधीयते, कपटनाटकरहस्यप्रक्रियाकूर्चोपरचने तदनुगुणदृष्टान्तपरम्परोपपादने च किमुच्यते परं कौशलं भवताम्, प्रमाणवृत्तनिरूपणे तु तपस्विन एव भवन्तः, तथा हि भेदस्य प्रमाणबाधितत्वात्किमयमभेदाभ्युपगमो भवतामुत स्विदभेदस्यैव प्रमाणसिद्धत्वादिति, द्वयमपि नास्ति प्रत्यक्षादीनि हि सर्वाण्येव भेदप्रतिष्ठानि प्रमाणानि, यत्तावद्भेदस्य परापेक्षत्वान्मृत्पिण्डात्प्रभृति घटकर्परचूर्णपर्यन्तकार्यपरम्परापरिच्छेदे तदनुगतमृद्रूपताग्रहणे च सति मृदस्तदभिन्नरूपत्वमवतार्यते नान्यथा, भिन्नवश्चाचक्षते चाक्षुषं व्यावृत्तस्वलक्षणग्राहि नाभेदविषयमभेदस्य परापेक्षत्वादिति, अयमस्मादन्य इतीयं परापेक्षा प्रतीतिरिति चेदयमस्मिन्ननुस्यूत इतीयमपि परापेक्षैव, तदत्र भवांश्च भिक्षुश्च द्वावपि दुर्ग्रहोपहतौ भेदाभेदग्रहणनिपुणमक्षजमिति परीक्षितमेतद्विस्तरतः सामान्यचिन्तायाम्, अङ्गुलिचतुष्टयं हि प्रतिभासमानमितरेतरविभक्तरूपमप्यनुगतरूपमपि प्रकाशते इत्युक्तम् ।

व्यावृत्तिरनुवृत्तिर्वा परापेक्षास्तु वस्तुषु ।
असङ्कीर्णस्वभावा हि भावा भान्त्यक्षबुद्धिषु ॥

यदप्युक्तम्––'आहुर्विधातृ प्रत्यक्षमि'ति तदप्यसाधु, विधातृ इति को ऽर्थः, इदमपि वस्तु स्वरूपं गृह्णाति नान्यरूपं निषेधति, प्रत्यक्षमिति चेन्मैवम् अन्यरूपनिषेधमन्तरेण तत्स्वरूपपरिच्छेदस्याप्यसम्पत्तेः, पीतादिव्यवच्छिन्नं हि नीलं नीलमिति गृहीतं भवति नेतरथा, तथा चाह—'तत्परिच्छिन्नं त्वन्यद्व्यवच्छिनत्ती'ति, भाववदभावमपि ग्रहीतुं प्रभवति प्रत्यक्षमिति च साधितमस्माभिरेवैतत्, तस्मादितरेतरविविक्तपदार्थस्वरूपग्राहित्वान्नाभेदविषयं प्रत्यक्षम्, शब्दानुमानयोस्तु सम्बन्धग्रहणाधीनस्वविषयव्यापारयोर्भेदमन्तरेण स्वरूपमेव नावकल्पते इति तावुभावपि भेदविषयावेव, विशेषविषयत्वाभावे ऽपि लिङ्गसामा-

न्यस्य तदितरविलक्षणस्य परिच्छेदादि, वाग्रूपस्य तु परस्परोपरक्तपदार्थपुञ्जस्व-भावः इतरपदार्थविशेषितान्यतमपदार्थरूपो वा वाक्यार्थो विषय इति पूर्वमेव निरूपितमतः सर्वथा न भेदस्य प्रमाणाबाधितत्वम्, नाप्यभेदग्राहि किञ्चन प्रमाणमस्ति यथोक्तेनैव न्यायेन, यस्त्वागमः पठितः—'एकमेवाद्वितीयं नेह नानास्ति किञ्चने'त्यादि, तस्यार्थवादत्वान्न यथाश्रुत एवार्थो ग्रहीतव्यः ।

ननु सिद्धेऽप्यर्थे वेदस्य प्रामाण्यमभ्युपगतमेव भवद्भिः, बाढमभ्युपगतं किन्तु धूम एवाग्नेर्दिवा ददृशे नार्चिरित्येवमादीनां प्रत्यक्षादिविरुद्धार्थाभिधायिनामर्थवादानां मुख्यां वृत्तिमपहाय गौण्यापि वृत्त्या व्याख्यानमाश्रितम्, एवमिदमपि वचनमितरप्रमाणाविरुद्धमर्थमभिदधदपरथा व्याख्यायते, ये तु प्रमाणान्तरविरुद्धार्थानुवादिनो न भवन्त्यर्थवादास्तेषामस्तु स्वरूपे प्रामाण्यं 'वायुर्वै क्षेपिष्ठा देवते'त्येवमादीनाम्, तस्मात्सुखदुःखाद्यवस्थाभेदेऽपि नावस्थातुरात्मनो भेदो देहेन्द्रियादिनानात्वे वा न तस्य नानात्वमित्येवं यथा कथं चिदयमर्थवादो योजनीयः, अभेदोपदेशी तु तत्परः शब्दो विधिरूप इह नास्त्येवमागमबलादपि नाद्वैतसिद्धिः ।

यत्पुनरविद्यादिभेदचोद्यमाशङ्क्याशङ्क्य परिहृतं तत्राशङ्का साधीयसी समाधानं तु न पेशलम्, तत्त्वान्यत्वाभ्यामनिर्वचनीयेयमविद्येति कोऽर्थः ?

अनादिना प्रबन्धेन प्रवृत्ताऽऽवरणक्षमा ।
यत्रोच्छेद्याऽप्यविद्येयमसती कथ्यते कथम् ॥

अस्तित्वे क एनामुच्छिन्द्यादिति चेत्, कातरसन्त्रासोऽयं सतामेव हि वृक्षादीनामुच्छेदो दृश्यते नासतां शशविषाणादीनाम्, तदियमुच्छेद्यत्वादविद्या नित्या मा भूत्सती तु भवत्येव ।

नित्यं न शक्यमुच्छेत्तुं सदनित्यं तु शक्यते ।
असत्त्वमन्यदन्या च पदार्थानामनित्यता ॥

न च तत्त्वाग्रहणमात्रमविद्या, संशयविपर्ययावप्यविद्यैव तौ च भावस्वभावत्वात्कथमसन्तौ भवेताम्, ग्रहणप्रागभावोऽपि नासन्निति शक्यते वक्तमभावस्याप्यस्तित्वसमर्थनादिति सर्वथा नासत्यविद्या ।

असत्त्वे च निषिद्धेऽस्यास्सत्त्वमेव बलाद्भवेत् ।
सदसद्व्यतिरिक्तो हि राशिरत्यन्तदुर्लभः ॥

सत्त्वे च द्वितीयाया अविद्याया भावान्नाद्वैतम् ।

यत्तु—ब्रह्मणः सततप्रबुद्धत्वादविद्याक्षेत्रता नेति जीवानामविद्यास्पदत्वमभिहितमविद्योपरमे ब्रह्मणि परमे त एव घटाकाशवल्लीयन्ते—इति ।

तदपि न चतुरस्रम्, आकाशावच्छेदहेतोर्घटमानत्वादविद्यायास्त्वसत्त्वात्तत्कृतः परमात्मनोऽवच्छेद इति विषमो दृष्टान्तः, अवच्छेदकत्वाभावाच्च जीव-

विभागकल्पनापि निरवकाशैव। यच्चेतरेतराश्रयत्वं परिहर्त्तुमनादित्वमात्रेदितमविद्यायास्तत्र बीजाङ्कुरवद्देहान्तरोपगतसंसारवच्च तस्याः सत्यत्वमेव स्यात्, अनादिप्रबन्धप्रवृत्तत्वे चास्याः प्रतिकूलहेत्वन्तरोपनिपातकृतमपाकरणमुचितम्, एकात्मवादिनां तु तदतिदुर्घटमित्यनिर्मोक्ष एव स्याद्, यथाह भट्टः—

स्वाभाविकीमविद्यां च नोच्छेतुं कश्चिदर्हति।
विलक्षणोपपाते हि नश्येत्स्वाभाविकं क्वचित्॥
न त्वेकात्माभ्युपाधीनां हेतुरस्ति विलक्षणः॥ इति।

यत्पुनरविद्यैव विद्योपाय इत्यत्र दृष्टान्तपरम्परोद्घाटनं कृतम्, तदपि क्लेशाय नार्थसिद्धये, सर्वत्रोपायस्य स्वरूपेण सत्त्वादसतः खपुष्पादेरुपायत्वाभावात्, रेखागकारादीनां तु वर्णरूपतया सत्त्वं यद्यपि नास्ति तथापि स्वरूपतो विद्यत एव।

ननु गकारो ऽयमिति गृह्यमाणः स रेखासन्निवेशो ऽर्थप्रत्यायको भवति न चासौ तेन रूपेणास्ति,

मैवम्, स्वरूपेणासतोऽर्थस्य रूपान्तरेणापि गृह्यमाणस्य कूटकार्षापणादेरिव व्यवहारहेतुता दृश्यते च युक्ता च, वस्तु स्वरूपत एव नास्ति तस्य स्वात्मना परात्मना वा व्यवहाराङ्गता समस्ति, रेखासन्निवेशश्च स्वरूपेण सन्निति वर्णात्मत्वेना सन्नपि तत्कार्याय पर्याप्नुयान्न त्वयमविद्यायां न्यायः स्वरूपासत्त्वात्तस्याः, सर्पादौ तु सर्पादिस्वरूपवत्तज्ज्ञानस्यापि तत्कार्यत्वमवगतमत एव शङ्काविषस्यापि स्वशास्त्रेषु चिकित्सामुपदिशन्ति, एवं नवगुहाकुहरादेष निःसृतः केसरी सरोषमित एवाभिवर्तत इत्यसत्येऽप्युक्ते यद्भीरूणां भयपलायनादि शूराणां च सोत्साहमायुधोद्यमनादि सत्यं कार्यमुपलभ्यते तत्र सिंहज्ञानस्य तत्कार्यत्वात्तस्य च स्वरूपसत्त्वान्नासत एवोपायत्वम्, एतेन प्रतिबिम्बदृष्टान्तो ऽपि प्रत्याख्यातः, खड्गादेर्मुखादिकालुष्यकल्पनाकारणस्य तत्र सद्भावादिह तदसद्भावादिति।

यदपि बद्धमुक्तव्यवस्थासिद्धये पादवेदनाद्युदाहृतम्, तदप्येवमपाकृतमवच्छेदकस्य पादादेस्तत्र तात्त्विकत्वात् इह तु भेदकल्पनाबीजमद्वैतवादिनो दुर्घटमिति बहुशः प्रदर्शितम्।

तदेवमत्र वस्तुसंक्षेपः—अविद्यायामसत्यां सर्व एवायं यथोदाहृतो व्यवहारप्रकारस्तत्कृत इति नावतिष्ठते सत्यां तु तस्यां नाद्वैतमिति, अत एवाह सूत्रकारः 'संख्यैकान्तासिद्धिः प्रमाणोपपत्त्यनुपपत्तिभ्याम्' (गौ० अ० ४ आ० १ सू० ४१) इति, यदि तावदद्वैतसिद्धौ प्रमाणमस्ति तर्हि तदेव द्वितीयमिति नाद्वैतम् अथ नास्ति प्रमाणं तथापि,न तरामद्वैतमप्रामाणिकायाः सिद्धेरभावादिति।

मन्त्रार्थवादोत्थविकल्पमूलमद्वैतवादं परिहृत्य तस्मात् ।
उपेयतामेष पदार्थभेदः प्रत्यक्षलिङ्गागमगम्यमानः ॥

## शब्दाद्वैतवादिवैयाकरणमतखण्डनम् ।

एतेन शब्दाद्वैतवादो ऽपि प्रत्युक्तः ।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्तते ऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति ।

( वाक्य० का० १ श्लो० १ )

उच्यते–तत्रानादिनिधनपदनिवेदिता पूर्वापरान्तरहिता वस्तुसत्ता नित्यत्वं ब्रह्मपदप्रतिपादितं च व्यापित्वमित्युभयमपि शब्दस्य प्रागेव निरस्तम् , निरवयवश्च स्फोटात्मा शब्दः प्रतिक्षिप्त एव, यत्तु नित्यं वा किंचिदुच्यते तच्छब्दतत्त्वमित्यत्र का युक्तिः, आह शब्दोपग्राह्यतया च शब्दतत्त्वम् . तथा हि सर्वः प्रत्यय उपजायमानो नानुल्लिखितशब्दक उपजायते तदुल्लेखविरहिणो ऽनासादितप्रकाशस्वभावस्य प्रत्ययस्यानुत्पन्ननिर्विशेषत्वात् , इदमीदृशमित्यादिपरामर्शमुषितवपुषि वेदने वेदनात्मकतैव न भवेत् , ये ऽपि वृद्धव्यवहारोपयोगिवैधुर्यानवाप्तशब्दार्थसम्बन्धविशेषव्युत्पत्तयो बालदारकप्रायाः प्रमातारस्तेपि नूनं यत्तत्सत्किमित्यादि शब्दजातमनुल्लिखन्तो न प्रतियन्ति किमपि प्रमेयमतः शब्दोन्मेषप्रभावप्राप्तप्रकाशस्वभावत्वात्सर्गप्रत्ययानाम ।

न सो ऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥ इति ।

( वाक्य० ब्र० १२ श्लोक ११४ )

एवमनभ्युपगमे तु सम्विदः प्रकाशशून्यतया ऽनधिगतविषयः सर्व एवान्धमूकप्रायो लोकः स्यात् । आह च—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ इति ॥

( वा० ब्र० श्लोक १२५ )

अतः क्रमेण तावदेवं बोध्यसे शब्दाख्यविशेषणानुवेधविशेषाननुभवात्सर्वं निर्विकल्पकमिन्द्रियजमविकल्पकं वा ज्ञानं शब्दविशिष्टमर्थमवद्योतयति गौः शुक्लो गच्छतीति जातिगुणक्रियावच्छिन्नविषयावभासिनि प्रत्यये शब्दविशिष्ट एवार्थः प्रस्फुरतीति बुद्ध्यस्व, एवं चेद्भूद्बुधमवतीर्णो ऽसि शब्दाख्यविशेषणानुरक्तस्य तस्य विशेष्यस्य स्वरूपं पृष्टः शब्देनैव दर्शयसि शब्दापरित्यागलब्धप्रकाशस्वरूपयैव वा ऽनुभूत्यानुभवसीति सो ऽपि विशेष्यः शब्दरूप एवेति जानीहि, तदेवं शब्द एवार्थोपारूढः पतिभातीति व्यवतिष्ठते, इत्थमियन्तमध्वानं चेत्पा-

प्तोऽसि तदधुना यदुपारूढः शब्दः प्रकाशते तस्य पृथक् प्रदर्शयितुमनुभवितुं चाशक्यत्वाच्छब्द एव तथा प्रतिभातीति शब्दविवर्त एवायमर्थो नान्यः कश्चिदिति प्रतिपत्तुमर्हसि, यथा चायमिन्द्रियजेषु प्रतिभासेषु प्रक्रमस्तथा शाब्देष्वपि प्रत्ययेषु शब्दविशिष्टो वार्थः प्रतिभाति शब्दो वार्थारूढः, शब्द एवार्थरूपेण विवर्तत इति गृह्यताम्, अतश्च शब्दब्रह्मेदमेकमविद्योपाधिदर्शितविचित्रभेदमविद्योपरमे यथावस्थितरूपं प्रकाशत इति युक्तम्।

तत्राभिधीयते—न खलु प्रकारत्रयमपीदमुपपद्यते पदपदार्थसम्बन्धव्युत्पत्तिविरहिणामनवाप्तशब्दयोजनावैरूप्यसारूप्यमात्रप्रतिशुद्धवस्तुग्रहणप्रवणेन्द्रियजप्रत्ययदर्शनात्, वृद्धव्यवहारपरिचयाधिगतशब्दार्थसम्बन्धसंस्थाधियामपि शब्दस्मरणसंस्कारप्रबोधहेतुभूतप्रथमोद्भूतविशुद्धवस्त्ववभासस्यापरिहार्यत्वात्, यत्र हि वस्तुनि निविशमानः शब्दः शब्दविद्व्यवहारेषु यो ऽवधृतस्तद्दर्शने तत्संस्कारप्रबोधात्स्मृतिपथमेति नान्यथेति, सामान्यशब्देष्वपि यत्तत्सत्किमित्यादिषु विशेषशब्देष्विव सैव वार्त्ता तेषामपि व्युत्पत्त्युपयोगविरहे विविधवनविहारिविहङ्गकूजितादिवार्थप्रतीतिहेतुत्वानुपपत्तेः, सविकल्पकदशायामपि न वाचकविशिष्टं वाच्यं मेचकगुणखचितमिव कुवलयमवलोकयति इति विस्तरतः प्रत्यक्षलक्षणे परीक्षितमेतत्। आह च—

न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते।
प्राक् शब्दाद्यादृशी बुद्धिः शब्दादपि हि तादृशी॥ इति।
(श्लोक० वा० प्र० १७२)

संज्ञित्वमात्रमधिकमधुना ध्वनिसन्निधाने बुद्धिमधिरोहति न तद्विशिष्टोऽर्थः, तस्य हि श्रोत्रेण नेत्रेणोभाभ्यां न केवलेन मनसा वा ग्रहणमुपपद्यते ऽतिप्रसङ्गात्।

## शब्दाध्यासवादखण्डनम्।

शब्दो ह्यनेकधर्मके धर्मिण्येकतरधर्मावधारणाभ्युपायो भवति न तत्रात्मानमारोपयति न हि दीपेन्द्रियप्रभृतयः प्रतीत्युपायास्तदुपेये रूपादावात्मानमारोपयन्त्यत एव तदुपायत्वभ्रमकृतस्तदभेदवादो ऽपि न युक्तः।

न ह्युपायादभिन्नत्वं तदुपेयस्य युज्यते।
रूपस्य न ह्यभिन्नत्वं दीपाद्वा चक्षुषो ऽपि वा॥

अपि च—यदि शब्दादभिन्नो ऽर्थः प्रतिभात्येव को ऽध्यासार्थः अध्यासभ्रमस्तु वैयाकरणानामेकाकारनिर्देशदोषनिर्मितो यथा गौरित्येव हि निर्देशो वाच्यतद्बुद्धिवाचिनाम्, कस्त्वया दृष्टो ऽर्थ इति पृष्टो गौरिति, कीदृशं ते ज्ञानमुत्पन्नं गौरिति, कीदृशं शब्दं प्रयुक्तवानसि गौरिति, तत एषा भ्रान्तिः, वस्तुतस्तु विविक्ता एवैते शब्दज्ञानार्थाः, तदुक्तम्—

गवि सास्नादिमद्रूपा गादिरूपा ऽभिधायके ।
निराकारोभयज्ञाने संवित्तिः परमार्थतः ॥ इति ।

( श्लोक० प्र० सू० श्लोक० ११८५ )

एवमिन्द्रियजेष्विव शाब्देष्वपि प्रत्ययेषु न शब्दः स्वरूपमध्यस्यतीति युक्तम्, यदि च शब्दः स्वरूपेणार्थं प्रतिपादयति तदा ऽक्षशब्दस्यैक्याद् देवनविभीतकरथाक्षेषु तुल्या प्रतीतिः स्यान्न चाक्षशब्दा भिन्ना इति वक्तव्यं रूपप्रत्यभिज्ञाऽनपायात्तदुच्चारणे चार्थत्रय्यां संशयदर्शनात्, भवतिशब्दयोश्च सुप्तिङन्तयोस्तुल्यरूपत्वादध्यासपक्षे तुल्यार्थप्रतीतिहेतुत्वं प्राप्नोति, तथा च सिद्धसाध्यबुद्धिः संवेद्यमाना ऽपि निन्हूयेत, एवमगादित्यश्व इत्यजापय इत्यादावपि द्रष्टव्यम् ।

शब्दस्य सिद्धरूपत्वात्तदध्यासेनार्थबुद्धाविष्यमाणायां 'यजेत दद्याज्जहुयादि'त्यादौ न क चित्साध्यबुद्धिर्भवेत्सिद्धाध्यासेन साध्यबुद्धेरननुरूपत्वात्, जातिगुणक्रियाशब्दाश्च 'गौः शुक्लो गच्छती'त्यादयः केन कारणेन नियतमध्यासमनुरुन्धत इति नावगच्छामः, शब्दस्यार्थानपेक्षनिसर्गशुद्धवैश्वरूप्यकल्पनाबीजाभावात्, प्रतिनियतशब्दवृत्तेश्च कस्य चिल्लक्षणो ऽनुपलक्षणात्, वृक्षपक्षशब्दयोश्च घटपटशब्दयोरिव स्वरूपभेदाविशेषादर्थानपेक्षित्वाच्च विशेषणविशेष्यभावसामानाधिकरण्ये शब्दाध्यासवादिनो न भवेताम्, न ह्येकत्र वस्तुनि वाच्ये क चिदनयाः शब्दयोर्वृत्तिः ।

एतेन नीलोत्पलमपि प्रत्याख्यातम्, तत्रैतत्स्यात्—न नीलगुणविशेषितमुत्पलं नाम किं चिदस्ति विशेष्यम् अपि तु तन्निरस्तावयवार्थमश्वकर्णादिवदर्थान्तरमेवेदं व्युत्पत्तिप्रकारमात्रं तु विशेषणविशेष्यभाववर्णनमिति, तदेतदसमीचीनम्—अनुभूयमानावयवार्थप्रतीतिनिह्नवनिमित्तानुपलम्भात्, अश्वकर्णादौ हि युक्तमर्थान्तरत्वं तत्र हि नाश्वार्थो न कर्णार्थः; निरवयवाक्यार्थवादश्च प्रागेव विस्तरेण निरस्त इत्यलं पुनरुक्तालापेन ।

अथ शब्दाद्वयाभ्यासनिबन्धनमेव सामानाधिकरण्यं वृक्षः वृक्ष इत्युच्यते, तदपि न चारु, वृक्षस्तरुरिति पर्याययोरपि तत्सम्भवे सति सामानाधिकरण्यप्रसङ्गात् ।

अपि च पर्यायेषु 'हस्तः करः पाणिरि'त्यादिषु शब्दरूपभेदाध्यासपक्षे ऽर्थबुद्धिभेदः प्राप्नोति न चासावस्तीति नाध्यासः ।

किं च सम्बन्धग्रहणनिरपेक्षो ऽपि शब्दः स्वसामर्थ्यमनुरुध्यमानः स्वाध्यासेन बुद्धिं विदध्यात् तदपेक्षायां कस्य केन संबन्ध इति न बुध्यामहे, शब्दादर्थस्य पृथग्व्यवस्थितात्मनस्तन्मते दुर्लभत्वात्, शब्दव्यतिरिक्तार्थोपगमे वा किमनेन शब्दाध्याससमर्थनाडम्बरेण विरम्यतामतो मृगतृष्णानुसरणरणरणकात् ।

अपि चाध्यासः क्व चित्सादृश्याद्भवति शुक्ताविव रजतस्य क्व चिदनुरागाद्भवति लाक्षाया इव स्फटिके शब्दार्थयोर्मूर्त्तामूर्त्ततयातिदूरभिन्नस्वरूपयोः सादृश्यं तावदनुपपन्नम्, अनुरागो ऽपि तत एव दुर्घटः पृथग्देशत्वाद्भिन्नेन्द्रियग्राह्यत्वाच्च।

प्रतिबिम्बवर्णनमपि न सुन्दरम्, दूरदेशत्वेन शब्दार्थयोः प्राप्तेरभावादप्राप्तयोश्च प्रतिबिम्बोदये द्वारकोद्याननिवासिवासुदेवसुन्दरीवदनतामरसानि सागरतरङ्गपवनपरिचयचलदलकलतिकालाञ्छितानि स्वच्छेषु ज्योत्स्नावदातद्युतिषु तुषारगिरिगह्वरगततुहिनशिलाकर्पूरदर्पणेषु प्रतिबिम्बितानि दृश्येरन्।

अथ सर्वगतत्वेन शब्दानामर्थदेशे प्राप्तिरभिधीयते, तर्हि सकलशब्दसार्थसाधारण्यादत्यन्तमध्याससांकर्यमनवधार्यमाणविशेषनियमकारणमापद्यत इत्यलमतिप्रसङ्गेन, सर्वथा न सम्बद्धः शब्दाध्यासवादः।

## शब्दविवर्तवादखण्डनम्।

विवर्तवादोपि न समञ्जसः, तथा हि विवर्ते क्षीरमिव दधिरूपेण परिणामित्वेन विकारितया वा क्षीरादेरिवानित्यप्रसङ्गात्, तथाभावे ऽपि च नाद्वैतसिद्धिर्दध्न इव क्षीरविकारस्य शब्दविकारस्यार्थस्य ततो ऽन्यत्वात्, अन्यत्वाच्च बाधकारणकालुष्याद्युपप्लवविरहितकिसलयप्रतीतिसमर्पितभेदत्वात्। अथार्थप्रतिभासमसत्यमपीन्द्रजालवदुपदर्शयति शब्द इत्ययं विवर्तार्थः, सो ऽपि न युक्तः, बाह्यस्य वस्तुनः पदाभिधेयस्य जातिव्यक्त्यादेर्वाक्यवाच्यस्यापि भावनादेः पूर्वप्रसाधितत्वात्, अवयव्यादेश्चादूर एवाग्रे समर्थितत्वात्, न चेन्द्रजालमायादिवदयथार्थतायामिह किमपि कारणमुत्पश्यामः।

अथार्थरूपेण शब्दः शुक्तिरिव रजताकारतया ऽवभासत इतीयं विवर्तवाचोयुक्तिः इयमपि न साधीयसी, शुक्तिका हि रजतवत्प्रकाशत इति शक्यं वक्तुं शुक्तेराकारसारूप्येण तथा ऽवभाससम्भवात्, इह तु शब्दार्थयोरत्यन्तविसदृशवपुषोराकारसमारोपकारणानवधारणात्कथमितररूपेणेतरस्यावभासः, शुक्तिकारजतादिप्रतीतिषु च बाधकवशात्तथात्वमवगतमिह तु धर्म(म)जहत्सत्यामसत्यां वा ऽर्थबुद्धिमादधाति शब्द इत्ययं विवर्तार्थः, एषो ऽपि सम्प्रत्येव प्रतिक्षिप्तः शब्दानुवेधविरहिणीनां प्राचुर्येण प्रतिपत्तीनां प्रदर्शितत्वात्, न चान्यः कश्चिद्विपश्चिच्चेतसि विपरिवर्तते विवर्तप्रकार इत्यवाचकमुच्यते विवर्तते ऽर्थभावेनेति।

अथ शब्दब्रह्मैव सृजति जगन्तीत्ययं विवर्तप्रकार उच्यते, सो ऽपि न सम्यग् अचेतनत्वेन शब्दस्येश्वरस्येव स्रष्टृत्वानुपपत्तेः, न च परमाणुवदस्य कारणत्वम्, अवयवसमवायित्वेन पृथिव्यादेः कार्यस्य ग्रहणात्।

अथ 'विज्ञानमानन्दं ब्रह्मे'त्यागमवचनमनुसरता विभुत्वमिव चेतनत्वमपि शब्दब्रह्मणो वर्ण्यते, तर्हीश्वरस्यैव शब्दब्रह्मेति नाम कृतं स्यात्, यदप्युच्यते—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ इति ।

तदपि ब्रह्मसुभिदमत्यन्तमलौकिकमेकतरस्य ब्रह्मणः काल्पनिकत्वादकाल्पनिकत्वे वा कथमद्वैतवादः, तस्मात्कृतमनेन शब्दब्रह्मणा स्वस्ति परस्मै ब्रह्मणे भूयात्, अविद्यामायाविनिर्मितविविधप्रथनकल्पश्च सत्ताद्वैतदूषणावसर एव निवारित इति शब्दाद्वैतमपि तद्वदसमञ्जसमसिद्धम् ।

एतेन परमात्मोपादानत्वमपि प्रत्युक्तम्, परमात्मनो निसर्गनिर्मलस्यैवम्प्रायकलुषविकारकारणत्वानुपपत्तेः, असत्यमेव विकारजातमविद्यातः परमात्मनि विभातीत्येतदपि दूषितमतः सर्वथा नाद्वैतपक्षः कश्चिदनवद्यः ।

अथ सर्वप्राणिनामेक एवात्मा नाना नात्मान इतीदृशमद्वैतमुच्यते, तदप्यप्रमाणकमेकस्मिन् सुखिनि न सर्वे सुखिनः एकस्मिन्दुःखिते वा न सर्वे दुःखिता इति व्यवस्थादर्शनात्, आत्मपरव्यवहारस्य च सर्वजनप्रतीतिसिद्धस्य दुरपह्नवत्वात्, अन्यदृष्टे च सुखसाधने वस्तुनि स्मरणानुसन्धानपूर्वकेच्छाद्वेषादिकार्यजातस्यान्यत्रानुपलम्भात्, एकस्मिंश्च वीतरागे मोक्षमासादितवति संसारिणामन्येषामानन्त्यदर्शनात्, अहम्प्रत्ययस्य प्रत्यगात्मवृत्तेः परत्रासम्भवात्, जगद्वैचित्र्यस्य च पुरुषभेदनियतधर्माधर्मनिबन्धनस्यान्यथाऽनुपपत्तेः, आत्मभेदस्य विस्पष्टसिद्धत्वात्, तप्तलोहस्फुलिङ्गकघटाकाशपादवेदनादिदृष्टान्तकदम्बस्य च निषेधः कृत एवेति एकात्मवादोऽपि न युक्तिमानित्यलं विस्तरेण।

शब्दस्यायं विवर्तः कथमखिलमिति प्रस्फुरत्तद्विविक्त-
स्वाकारोऽर्थप्रपञ्चः कथमिव विकृतिर्ब्रह्मणो वेदृशी स्यात् ।
तस्मान्नानात्मतत्त्वे परिचितसदसत्कर्मपाकानुसार-
प्रादुर्भूतेश्वरेच्छावशविचलदणुप्रोद्भवो भूतसर्गः ॥

## विज्ञानाद्वैतमतम् ।

एवं स्थितेषु सर्वेषु तूष्णीमद्वैतवादिषु ।
विज्ञानाद्वैतवादी तु पुनः प्रत्यवतिष्ठते ॥

सत्यमनुपजनमनपायमेकमपरिमितमद्वयं ब्रह्म न युक्तमदिति युक्त एव तदनभ्युपगमः, विज्ञानमेव तु क्षणिकमुपजनापायधर्मकमनादिसन्तानप्रबन्धप्रवृत्तमिदं तथा तथाऽवभातीति न ततोऽद्वितीयमर्थरूपं नाम किं चिदस्तीति पश्यामः ।

ननु प्रत्यक्षादिना प्रमाणेन परस्परविसदृशपदार्थरूपसंवेदनस्य दर्शितत्वा-

त्कथं विज्ञानस्यायमवभासः, अर्थाभावे तत्स्वरूपानुपपत्तेः, ग्राह्यग्रहणं हि विज्ञानं नाम भवति नाग्रहणमिति ।

उच्यते इदं तावत्परीक्ष्यतां यदेतत्प्रत्यक्षविज्ञानं नीलमिदं पीतमिदमुत्पद्यते तत्र किमेक आकारः प्रकाशते उत द्वितीयमिति, यदि द्वितीयमवभाति अयमर्थो नीलमिदं तज्ज्ञानमिति तत्किमत्र विचार्यते जितं भवद्भिर्जितस्य यदापद्यते तदस्मासु विधीयताम् ,

अथैक एवमाकारः प्रथते तर्ह्यस्ति विचारावसरः, कस्यायमाकारः किमर्थस्य किं ज्ञानस्येति, स चैवं विचार्यमाण आकारो यद्यर्थस्येति स्थास्यति तद्भवन्तो जेष्यन्ति ज्ञानाकारपक्षे तु वयं जेष्याम इति, किं तावदत्र युक्तम , ज्ञानस्यायमाकार इति, कुतः ? कल्पना भवति ह्यल्पीयसीति, अर्थाकारपक्षे ह्यर्थस्य ज डात्मनः प्रकाशायोगात्तस्य ग्राह्यत्वमन्यथा न स्यादिति ग्राहकान्तरपरिकल्पनावश्यम्भाविनीति कल्पनाद्वैगुण्यम् ।

अथार्थ एव ग्राह्यात्मा यः स एव ग्राहक इति कथ्यते, स तर्हि प्रकाश एवेति संज्ञायामेष विवादः स्यात् , बाह्यान्तरकृतो विशेष इति चेत , अहो विशेषज्ञो देवानांप्रियः, ग्राहकाद्विच्छिन्नता हि ग्राह्यस्य बाह्यता, न शरीरापेक्षिणी बाह्यता भवति, यदा च ग्राह्यादर्थादव्यतिरिक्त एव ग्राहक इष्यते, तदाऽस्य ततोऽविच्छिन्नतेत्यबाह्यत्वाज्ज्ञानमेव तदिति कथं न नाम्नि विवादः, उभयसिद्धत्वाज्ज्ञानस्य तस्यायमाकारो भवितुमर्हति ज्ञाने हि न केचन विवदन्ते अतस्तस्यैवायमाकार इति युक्तमनेककल्पनातो ह्येकार्थकल्पना ज्यायसीति, अतश्च ज्ञानस्यायमाकारः।

ज्ञानं हि प्रकाशकमप्रकाशस्यार्थस्य भवद्भिरभ्युपगम्यते ततश्चार्थात्प्रथमतरस्य ग्रहणेन भवितव्यमगृहीतस्य दीपादेः प्रकाशस्य प्रकाशकत्वादर्शनात्, उत्पन्नेष्वपि च घटादिष्वर्थेषु प्रकाशवैकल्याद्वा प्रतिबन्धवैधुर्याद्वा भवत्यग्रहणं ज्ञानस्य, उत्पन्नस्य सतो न कश्चिद्ग्रहणे प्रतिबन्धको, न च प्रकाशान्तरापेक्षणं स्वत एव दीपवत्प्रकाशस्वभावात् , अतो यदैव तस्योत्पादस्तदैव ग्रहणमवश्यं भवेत् , न चेत्कालान्तरेऽपि न स्यात किं हि तस्य कालान्तरे भविष्यति किं वा तदा नाभूद्येन तत्कालान्तरे ग्रहीष्यते तदा च न गृह्यते इति, ज्ञानान्तरेण कालान्तरे तद् ग्रहीष्यते इति चेत् , तदपि केन ग्रहीष्यते, अन्येनेति चेत्, तदप्यन्येनेति को ऽवधिः, श्रम इति चेत्कामं श्रान्तो विरंस्यति भवानर्थं तु न गृहीतवानेव, प्रकाशाग्रहणे तत्प्रकाश्यपरिच्छेदायोगादित्येवं न कदा चिदर्थग्रहणं स्यात् , तस्मादर्थग्रहणवादिनाऽपि पूर्वं ज्ञानग्रहणमवश्याश्रयणीयम् , यथोक्तम्–'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यती'ति ।

अतश्चैतदेवं ज्ञानपृष्ठेन चोत्तरकालमवमर्शदर्शनात् , ज्ञातो मयाऽयमर्थ इति हि प्रत्यवमृशन्तः प्रमातारः प्रथमं ज्ञानग्रहणमनुमोदन्ते, न ह्यगृहीतवि-

शेषणा विशेष्यबुद्धिर्भवति, तस्मादपि पूर्वज्ञानग्रहणमिति सिद्धम्, ज्ञानं च ग्राह्यमाणमाकाररहितं ग्रहीतुमशक्यमिति बलात्साकारमेव तद् ग्रहीतव्यम्, साकारे च ज्ञाने गृहीते सति द्वितीयकारणाभावात्कुतो ज्ञानातिरिक्तो बाह्योऽर्थः अतश्च साकारं ज्ञानमाकारवत्तामन्तरेणास्य प्रतिकर्मव्यवस्थानुपपत्तेः, कल्पयित्वाऽपि बाह्यमर्थमवश्यमाकारवत्ता विज्ञानस्य विषयनियमसिद्धये वक्तव्या नीलज्ञानं हीदमनेकसन्निधाने समुपजायमानं कथमखिलतदितरपदार्थपरिहारेण केवलनीलानुलग्नतामवलम्बेत बोधस्वभावतायाः सर्वान् प्रत्यविशिष्टत्वात्, प्रवृत्तिरपि प्रेक्षापूर्वकारिणां कथं तदेकविषयैव स्यात्, न च नीलजनितत्वेनार्थत एष तदधिगतिनियम इति कथयितुमुचितमालोकलोचनादिकारकान्तरजनितत्वस्यापि भावे तद्विषयत्वप्रसङ्गादतो नीलाकारतैव नीलविषयत्वव्यवस्थाहेतुर्न निमित्तान्तरम्, आह च—

तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः ।
भाव्यन्तेनात्मना येन प्रतिकर्म विभज्यते ॥

तत एवाकारग्रहणमेवातिशयमाश्रित्य तमबर्थसमर्थने सति साधकतमं ज्ञानमेव प्रमाणं भविष्यत्यपरथा कारकातिशयदर्शनाभावे तत्तत्साधकतमत्वस्य दुरुपपादत्वात्, साकारज्ञानसाक्षी च लौकिको ऽपि दृश्यते व्यवहारः, एवं च वक्तारो भवन्ति लौकिकाः 'नीलो ऽर्थो ऽयं यतो ऽत्र तदाकारं ज्ञानमुत्पन्नमिति' तेन प्रतिकर्मनियमान्यथाऽनुपपत्तेरवश्यं साकारमेव ज्ञानम् ।

इत्थं सत्यपि बाह्यार्थे ज्ञानस्याकारकल्पना ।
भवेदेवेति तत्रैव सन्तोष्य स्थीयतां वरम् ॥

ये तु ज्ञानस्य स्वतः स्वच्छस्वभावत्वेन नीलपीताद्यवभासः परोपाधिरेव भवितुमर्हति स्फटिकस्येव लाक्षादिना ऽरुणिमाद्यनुवेधः, अतः पृथगननुभूयमानोऽपि बाह्योऽर्थः साकारज्ञानावभासाऽन्यथाऽनुपपत्त्याऽनुमीयते, यथोक्तं— 'बाह्यसिद्धिः स्याद् व्यतिरेकत' इति ।

तदिदमनुपपन्नम्, अन्वयानुपलब्धेः ।

अर्थे ज्ञानं हि साकारं निराकारं तदत्यये ।
नित्यानुमेयबाह्यार्थवादी ज्ञानं क दृष्टवान् ॥

लाक्षास्फटिकादौ तु तथा युक्तं तदनुरक्तस्फटिकावलोकनाद्, इह पुनः—

अर्थेन रज्यमानं हि निराकारं निसर्गतः ।
ज्ञानं न खलु पश्यामो लाक्षया स्फटिकं यथा ॥

आकारद्वयप्रतीतिर्हि नास्तीत्युक्तमभ्युपगमे वा दुरुत्तरमनवस्थादूषणम्, अर्थाकारश्च प्रत्यक्षस्तत्कृतश्च ज्ञानाकारः प्रत्यक्ष इत्युच्यमानेऽर्थाकारस्तावत्साकारेण ज्ञानेन गृहीतः स इदानीं ज्ञानाकारोऽपि ग्राह्यत्वात्साकारज्ञानान्तरग्राह्य एव स्यादित्यनिष्टम् ।

अथ स्वप्रकाशं तत्साकारं ज्ञानमिष्यते तेन ज्ञानान्तरापेक्षणान्नानवस्थेति, तर्हि स्वप्रकाशसाकारज्ञानव्यतिरिक्तार्थाकारानवभासात्तदेवास्तु कुतो द्वितीय इदानीमर्थाकारः, न चान्यथाऽनुपपत्त्यापि तत्कल्पना युक्तिमती, न हि राजशासनमिदमर्थेनाकारवता भवितव्यमिति, ज्ञानमेव नीलाद्याकारं यदि भवेत्को दोषः स्यादिति, नीलाद्याकारयोगादर्थस्स इति चेत्संज्ञायां विवाद इत्युक्तम्, द्वितीयस्याभावात्, स्वच्छत्वाज्ज्ञानस्य कालुष्यमन्यकृतमिति चेदविद्यावासनाकृतं तद् भविष्यति, स्वतःस्वच्छमपि ज्ञानमनाद्यविद्यावासनाविभवेन तत्तदनेकाकारकालुष्यरूषितवपुरिव प्रकाशते, ज्ञानवासनाभेदसंतानयोश्च बीजाङ्कुरवदनादित्वान्नास्य पर्यनुयोगस्यावसरः 'कुतो वासना प्रवृत्ता' इति, तस्मादनादिवासनावैचित्र्यरचितज्ञानवैचित्र्योपपत्तेः कृतमनुमेयेनापि बाह्येनार्थेनेति ज्ञानस्यैवायमाकार इति सिद्धम्, अतश्च ज्ञानमर्थरहितमपि गन्धर्वनगरमायादिषु विस्पष्टमुपलभ्यते इत्यन्वयव्यतिरेकाभ्यामपि ज्ञानाकारत्वमवगच्छामः, यदि च ज्ञानादर्थः पृथगवस्थितात्मा भवेज्ज्ञानान्तरेणाप्यसावुपलभ्येत न चैवमस्ति, तस्मादभेद एव ज्ञानार्थयोः, तथा ऽऽह—'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति, न च ज्ञानार्थसंसर्गधर्म आकारो भवितुमर्हति यदि हि पृथगर्थमनाकारं पृथक् च ज्ञानमनाकारमुपलभ्य संसृष्टयोर्ज्ञानार्थयोराकारवत्तामुपलभेमहि तत इममाकारं संसर्गधर्मं प्रतिपद्येमहि, न त्वयमस्ति क्रमः अर्थरहितत्वे ऽपि च स्मरणस्वप्नादिज्ञानानामाकारवत्त्वमस्तीत्युक्तम्, अतः कथं संसर्गधर्म आकारः।

अपि च नक्षत्रं तारका तिष्य इति कथमेकस्मिन्नर्थे परस्परविरुद्धलिङ्गसमावेशः, परिव्राजककामुककौलेयकानां च कथमेक एव वनितारूपो ऽर्थः कुणप इति कामिनीति भक्ष्य इति च प्रतिभासत्रितयविषयतामनुभवेत्, दारा इति कथमेकैव स्त्रीव्यक्तिः पुंवचनबहुवचनविषयतां यायात्, षण्णगरीति च कथं बहूनामन्यलिङ्गानामेकता स्त्रीलिङ्गता च भवेत्, ह्रस्वदीर्घयोश्च कथं परस्परापेक्षग्रहणयोरर्थेनैकतर आकारः पारमार्थिकः स्यात्, ज्ञानानां तु भिन्नत्वाद्विचित्रवासनाभेदसहकारिरूपानुविधानेन जायमानानां न कश्चिदपि विरोधः, तस्माज्ज्ञानमेवेदं सर्वत्र तथा तथा प्रतिभाति न तद्व्यतिरिक्तो ऽर्थो नाम कश्चिदिति ज्ञान एव चैकत्रायं प्रमाणप्रमेयप्रमितिव्यवहारः परिसमाप्यते, तस्य हि विषयाकारता प्रमेयं ग्राहकाकारता प्रमाणं स्वसंवित्तिश्च फलमिति, यथोक्तम्—

यदाभासं प्रमेयं तत्प्रमाणफलते पुनः।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक् कृतम्॥ इति॥

तदिदमनाद्यविद्यावासनाविलासविपर्यासिततत्त्वदर्शनतया ज्ञानमेव ग्राह्यग्राहकसंवित्तिभेदवदिव लक्ष्यते, अविद्याविरतौ तु स्वच्छमेव तत्सम्पद्यते न

किञ्चिद्वेति, तदुक्तम्—

नान्यो ऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवो ऽपरः ।
ग्राह्यग्राहकवैधुर्यात्स्वयमेव प्रकाशते ॥
अविभागो ऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥
इत्यर्थरूपरहितं संविन्मात्रं किलेदमिति पश्यन् ।
परिहृत्य दुःखसंसृतिमभयं निर्वाणमाप्नोति ॥

## विज्ञानवादिमतखण्डनम् ।

अत्राभिधीयते, न खल्वेक एव बोधात्मा ग्राह्यग्राहकोभयस्वभावो भवितुमर्हति ग्राह्यग्राहकरूपयोरितरेतरविसदृशत्वेनैकत्र समावेशानुपपत्तेः, तथा हि नीलज्ञानं पीतज्ञानं शुक्लज्ञानमिति नीलपीताद्युपजनापायेऽप्यनुवर्तमानबोधरूपता नीलादिविलक्षणान्वयव्यतिरेकाभ्यामवधार्यते ।

अपि च ज्ञानमहंकारास्पदमानन्दादिस्वभावं स्वकर्मणि च सव्यापारमिव भवद्भिरभ्युपगतमर्थस्तु नैवमात्मक इति कथमनयोरभेदः, यद्यपि ज्ञानमिदमयमर्थ इत्येवमाकारद्वयप्रतिभासो नास्ति तथा ऽप्ययमेको ऽप्याकारः प्रतिभासमानः प्रकाश एव प्रतिभाति न प्रकाशकः, इदं नीलमिति ग्राहकाद्विच्छिन्न एव ग्राह्याकारोऽवभासते न त्वहं नीलमिति तदैक्येनावभासो ऽस्ति ,

अपि च प्रकाश्यस्य नीलादेः प्रकाशकबोधाधीनं युक्तं नाम ग्रहणं बोधस्य तु तद्ग्राहकस्य तदा किं कृतं ग्रहणमिति चिन्त्यम् , न बोधान्तरनिबन्धनमनवस्थाप्रसङ्गात् , नापि स्वप्रकाशं ज्ञानमहं नीलमित्यप्रतिभासात् ।

ननु नैव ग्राह्यग्राहकयोरन्यत्वमिति यो ऽयं ग्राह्यावभास इति भवता ऽभ्युपगतस्स एव ग्राहकावभासः , ग्राहकादन्यो हि ग्राह्यो जडात्मा भवेत् , ग्राहकस्तु प्रकाशस्वभावो ग्राहकत्वादेव द्वयप्रतिभासश्च नास्तीत्युक्तम् , ततोन्यतरस्य प्रकाशने जडप्रकाशयोः कतरस्यावभासितुं युक्तमिति चिन्तायां बलात्प्रकाश एव प्रकाशते न जडः , निराकारश्च न प्रकाशः प्रकाशत इति तस्मिन्साकारे प्रकाशमाने चतो जडात्मा तदतिरिक्तो ऽर्थः स्यात् ।

तदिदमपेशलम् , उपायेनोपेयनिह्नवस्याशक्यकरणीयत्वात् , रूपस्य हि प्रकाशकं चक्षुर्न चक्षुरेव प्रकाशतामित्युक्त्वा रूपमपह्नोतुं शक्यते, तदिदमर्थस्य मूर्तिद्रवत्वकाठिन्यादिधर्मविशेषितात्मनस्तद्विपरीतस्वच्छस्वभावं ज्ञानं प्रकाशकं स्वभावत्वात् , चक्षुर्जन्यो हि प्रकाशो नाम ज्ञानमुच्यते नचागृहीतः प्रकाशः प्रकाश्यं प्रकाशयतीति, चक्षुर्जन्यः प्रकाशो ज्ञानमुच्यते स तु प्रकाशो रूपादिविषयप्रकाशो न प्रकाशप्रकाशः , न हि चक्षुषः प्रकाशः प्रकाश्यते ऽपि तु रूपं प्रकाश्यते , तत्र यपद्रूमित्युच्यते स विषयो ग्राह्यः यत्तत्प्रकाशते इत्युच्यते स प्र-

काशो ज्ञानं ग्राहकं तदुत्पत्तिमात्रेण च रूपं प्रकाशितं भवतीति न प्रकाशो ग्रहणमपेक्षते,

ननूक्तमत्र नानुपलब्धायां बुद्धावर्थः प्रकाशते ऽ'प्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यती'ति, तदयुक्तम्, अप्रत्यक्षोपलम्भस्य च प्रत्युतार्थदृष्टिः सिद्ध्यति, उपलम्भोत्पाद एवार्थदृष्टिर्न पुनरुपलम्भदृष्टिः।

ननूपलब्धेरग्रहणे तदुत्पाद उत्पन्नोपलम्भस्याप्यर्थः प्रत्यक्षः स्यादिति सर्वसर्वज्ञत्वप्रसङ्गः, तदिदमतिसुभाषितम्, अर्थप्रकाशात्सैव खलूपलम्भः स कथमनुत्पन्नादुत्पन्नेन विशेष्यते, तस्मादर्थप्रत्यक्षीकरणात्मकत्वाज्ज्ञानस्य उत्पाद एवार्थप्रत्यक्षता न तद्ग्रहणमित्यगृहीतमेव ज्ञानमर्थप्रकाशकमिति युक्तम्।

यत्त्वरूपत्वाज्ज्ञानस्य पूर्वं ग्रहणमुच्यते, तच्चक्षुरादिभिरनैकान्तिकमित्युक्तम्।

गृहीतं यदि च ज्ञानं भवेदर्थप्रकाशकम्।
धूमवद्दीपवच्चेति वक्तव्यं यदि धूमवत्॥
भवेदर्थानुमेयत्वं यत्त्वयैव च दूषितम्।
आकारद्वयसंवित्तिविरहान्न च दीपवत्॥
घटं दीपं च पश्यामीत्यस्ति द्वितयवेदनम्।
न तु ज्ञानेन विज्ञेयं जानामीति द्वयग्रहः॥

यदपि प्रकाशत्वाज्ज्ञानस्य दीपवत्पूर्वग्रहणमुक्तम्, तदपि व्याख्येयम्, प्रकाशत्वादिति को ऽर्थः? प्रकाशयतीति प्रकाशत्वमिति, तच्चक्षुरादिभिरनैकान्तिकमुक्तमेव, अथ प्रकाशनं प्रकाशः, तर्हि प्रकाशत्वादित्यसिद्धो हेतुः, न ह्यर्थग्रहणकाले बुद्धेः प्रकाशनमस्ति, अथ प्रकाशशब्दो बोधपर्याय एव प्रकाशत्वाद् बोधरूपत्वादित्यर्थः, तदा साधनविकलो दृष्टान्तः प्रदीपस्य बोधरूपत्वाभावात्, अतश्च स्वसंवेदनपक्षो न युक्तियुक्तः स्वप्रकाशस्य कस्य चिदप्यदृष्टत्वात्,

ननु ज्ञानशब्ददीपास्त्रयः प्रकाशाः स्वपरप्रकाशा इत्याहुः, तदयुक्तं शब्ददीपयोः स्वग्रहणेऽर्थप्रकाशने च सामग्र्यन्तरसव्यपेक्षत्वात्, शब्दोऽर्थप्रकाशने समयग्रहणमपेक्षते, स्वप्रकाशने च श्रोत्रादि दीपो ऽपि चक्षुराद्यपेक्ष एव गृह्यते ग्राहयति चार्थम्, इयांस्तु विशेषो–घटादिग्रहणे आलोकसापेक्षं चक्षुः प्रवर्तते आलोकग्रहणे तु निरपेक्षमिति नैतावता दीपस्य स्वप्रकाशता स्यात्, इत्थं च मार्जारादिनक्तंचरचक्षुरपेक्षया सर्व एव घटादयः स्वप्रकाशाः स्युः, ज्ञानस्य तु परप्रकाशत्वमेव दृश्यते न स्वप्रकाशत्वमर्थप्रकाशकाले तदप्रकाशस्य दर्शितत्वात्।

मुधैव तस्माद्गणितास्त एते त्रयः प्रकाशाः स्वपरप्रकाशाः, आत्मप्रत्यक्षवादिनां त्ववस्थाभेदेन ग्राह्यग्राहकांशयोर्भेदो विद्यते एवेति सर्वथा न स्वप्रकाशं विज्ञानम्।

यदप्यभिहितमुत्पद्यमानमेव ज्ञानमनपेक्षत्वादप्रतिबन्धत्वाच्च तदैव गृ-

ह्यते नवा कदा चिदिति, तन्न साम्प्रतम् , तदानीं तद्ग्रहणसामग्र्यभावात् ,

न चाविबन्धमात्रेण प्रतीतिरवगम्यते ।
उपायविरहेणापि तदा ज्ञानस्य न ग्रहः ॥

न च जैमिनीया इव वयं ज्ञानं नित्यपरोक्षमाचक्ष्महे ज्ञातो मयाऽयमर्थ इति कालान्तरे तद्विशिष्टार्थग्रहणदर्शनात् ।

शुक्लः पट इति ज्ञाने यथासौ भाति तद्गुणः ।
तथा ज्ञातोऽर्थ इत्यत्र भात्यर्थो धीविशेषणः ॥
न विशेष्ये च संवित्तिरगृहीतविशेषणा ।
नानुसायधियं वेत्थं प्रतीयेत भ्रमाग्रहात् ॥

न च नित्यपरोक्षा बुद्धिरनुमातुमपि शक्यते इति च विचारितमेव, तदलमनया कथया किमिति शाक्यमुत्सृज्य श्रोत्रियमिदानीमभियुञ्ज्महे ।

अतश्च यदुक्तं ज्ञानपृष्ठावमर्शदर्शनाज्ज्ञानग्रहणपूर्वकमर्थग्रहणमिति तन्न सार्वत्रिकमपि तु क चिदेव ज्ञाननिष्ठार्थसंवेदनात्तथाऽभ्युपगम्यते, तस्मादर्थग्रहणात्पूर्वं ज्ञानस्यानवभासान्निराकारत्वावसायविरहाच्च ज्ञानस्यैवायमाकार इति कदाशाप्रलपितमेतदरुणाम्बराणाम् ।

यत्पुनरभ्यधायि 'ज्ञानाकारपक्षे कल्पना ऽल्पीयसी'ति, तत्र यथोक्तनीत्या प्रत्यक्षगम्ये बाह्ये ग्राह्येऽर्थाकारे कल्पनोक्तिः कीदृशी ? कीदृशं वा तदल्पत्वं महत्त्वमित्युभयसिद्धमपि यदवादि ज्ञानस्य, तत्र यदि प्रमाणायत्ता वस्तुस्थितिः अर्थो ऽप्यभयसिद्ध एव, इच्छाद्वेषनिबन्धनायां तु वस्तुस्थितौ ज्ञानमपि कथमुभयसिद्धं स्यादिति यत्किंचिदेतत् ।

यत्पुनरिदमभिहितमभ्युपगम्यापि बाह्यमर्थमप्रत्याख्येयः प्रतिकर्मव्यवस्थासिद्धये ज्ञानस्याकारयोग इति, तदपि न साम्प्रतम् , प्रतिकर्मव्यवस्थायाः प्रकारान्तरेणाप्युपपत्तेः ।

यदप्यनेकसन्निधाने नीलज्ञानमुपजायते यद्यपि बोधरूपत्वमशेषसाधारणं तथा ऽपि नीलेनैव कर्मकारकेण तदुपजनितमिति नीलनिष्ठमेवावतिष्ठते, चक्षुरादिना ऽपि तज्जनितमिति चेत्सत्यं जनितं न तु कर्मभूतेन तदुत्पाद्यते इति तदेकविषयमेव भवति, कुत एष नियम इति चेद्वस्तुस्वभावत एव, आकारपक्षे ऽपि समानो ऽयं पर्यनुयोगः ।

यदुच्यते किमिति नीलमेव कर्म कारकं किमिति वा कर्मविषयमेव ज्ञानमिति, तत्र वस्तुस्वभावैरुत्तरं वाच्यम् , आकारमपि च ज्ञानमुपाददानमर्थस्यैव कथमुपाददीत न कारकान्तरस्येत्यत्रापि वस्तुस्वभाव एव शरणमिति, अर्थस्य च ज्ञानजनकत्वमन्वयव्यतिरेकाभ्यामवगम्यते ।

यदा हि देवदत्तार्थी कश्चिद् व्रजति तद्गृहम् ।
तत्रासन्निहितं चैनं गत्वा ऽपि न स पश्यति ॥
क्षणान्तरे स आयान्तं देवदत्तं निरीक्षते ।
तत्र तत्सदसत्त्वेन तथात्वं वेत्ति तद्धियः ॥

अनागते देवदत्ते न देवदत्तज्ञानमुदपादि तस्मिन्नागते तदुत्पन्नमिति तद्भावभावित्वात्तज्जन्यं तदवसीयते, इत्थं च तज्जन्यत्वेन तत्र नियमसिद्धेरलमाकारकल्पनया, एतेन पुरुषप्रवृत्तिरपि नियतविषया व्याख्याता, साधकतमत्वं तु सामग्र्याः प्रमाणसामान्यलक्षणे निर्णीतमेव ।

यस्तु लौकिकव्यपदेश उदाहृतः, सो ऽपि व्यभिचरति नीलोऽयं यतस्तद्विषयं ज्ञानमुत्पन्नमित्यपि न तद् व्यपदिशन्ति लौकिकाः, तस्मा'दर्थे सत्यपि साकारं ज्ञानमेषितव्यम्' इति यदुक्तं तदनुपपन्नम् ।

यदप्यवर्णि सहोपलम्भनियमादभेदो नीलतद्धियोरिति, तदपि बालभाषितमिव नः प्रतिभाति अभेदे सहार्थानुपपत्तेः, अथैकोपलम्भनियमादिति हेत्वर्थो विवक्षितः, तदयमसिद्धो हेतुर्नीलादिग्राह्यग्रहणसमये तद्ग्राहकानुपलम्भात्, ग्राहकाकारानुवेधरहिततद्विच्छिन्नो बाह्यग्राह्यमात्रप्रतिभास एवायं नीलमिदमित्यादि दर्शितः, क्वचिच्च ग्राह्याकारानुपश्लिष्टकेवलग्राहकावमर्शनमपि दृश्यते न स्मरामि मया को ऽपि गृहीतोऽर्थस्तदेति हीति, तदेवमितरेतरविभक्तज्ञानार्थाकारसंवेदनात्कथमेकोपलम्भनियमादभेदो नीलतद्धियोरित्युच्यते, नीलतद्धियोरिति च वदता भवताऽप्येष भेद एव निर्दिश्यते, परमतानुवादमात्रमेतदिति चेन्नाभेदे पृथङ् निर्देशस्याप्यघटमानत्वात्, तस्मादपि न ज्ञानस्यायमाकारः ।

यदप्युक्तम् 'असत्यपि बाह्ये ऽर्थे स्वप्नगन्धर्वनगरमायादिषु ज्ञानस्याकारवत्ता दृश्यते इति तस्यैवायमाकारो युक्त' इति, तदपि दुराशामात्रं–सर्वत्र ज्ञानाद्विच्छिन्नस्य ग्राह्याकारस्य प्रतिभासनात्, तथा हि–भ्रमज्ञानेषु चतुष्टयी गतिरात्मख्यातिरसत्ख्यातिरख्यातिर्विपरीतख्यातिर्वा, तत्र रजतमिदमिति सामानाधिकरण्येनैकार्थप्रतिभासात्तन्मते च संवित्तेरपरोक्षत्वाद्रजताधिगमाभिधानेन तदर्थिनस्तत्र प्रवृत्तेर्बाधकप्रत्ययस्य तथाविधबोधनिषेधपरत्वेन प्रादुर्भावान्न तावदख्यातिरिति प्रागेव प्रसाधितमेतत्

## असत्ख्यातिनिरासः ।

असत्ख्यातिरपि नास्ति एकान्तासतः खपुष्पादेः प्रतिभासायोगात्, देशकालव्यवहितानुभूतपूर्वपदार्थविषय एव भ्रान्तो ऽपि प्रत्ययः प्राणभृतां भवति न त्वत्यन्तासदर्थविषयः, तथा हि द्विविधा भ्रान्तिर्बाह्येन्द्रियजा मानसी च, तत्र बाह्येन्द्रियजे भ्रमज्ञाने विषयदोषादिन्द्रियदोषाद्वा समुत्पद्यमाने न क

चिन्निरालम्बनता दृश्यते भास्वररूपसादृश्येन हि विषयदोषेण शुक्तिकारजतमिति परिस्फुरति, मरुस्थलपतितोत्फलितं सावित्रं तेजस्तरलतरङ्गसारूप्येण पय इति चकास्ति, इन्द्रियदोषादपि पित्तोपहतरसनस्य तिक्ततया शर्कराऽवभासते, तिमिरसीमन्तितनयनवृत्तेश्चन्द्रमण्डलमेकमपि द्विधा प्रतिभाति तिमिरकणनिकरविवरविरचितप्रसृताश्च नयनरश्मयः सूर्यांशुसंवलिताः सन्तः सूक्ष्मतया केशकूर्चकाकाराः प्रतिभान्तीति ।

अन्तःकरणदोषेण विभ्रमो यस्तु जायते ।
असत्यपि महेलादौ पुष्पेषु मुषितात्मनाम् ॥
सो ऽपि कश्चिद्विषयदोषह्वा भवति कुत्र चित् ।
कोमलानिलकल्लोलवेल्लिते बालपल्लवे ॥
अनपेक्षिततत्तुल्यपदार्थस्यैव या पुनः ।
मानसी मन्मथोन्मादमहिम्ना मानिनीमतिः ॥

तस्यामपि रागादिवासनावलोपप्लवमानसंवृत्याद्युपस्थापितदेशकालव्यवहितोपलब्धपूर्वपुरन्ध्रिरूपः समुल्लेखो न त्वेकान्तासतः खरविषाणादेरिव, प्रतिभानिद्रादिमनोदोषजन्मनि स्वप्ने ऽपि दृष्टपूर्वस्यैव तस्याकारस्योल्लेखः ।

ज्वलज्जलगलद्वह्निद्रवदद्र्यादिदर्शने ।
रूपमन्यस्थमन्यत्र वेत्ति न त्वसदेव तत् ॥
तदेवं भ्रान्तबोधेषु नास्त्यत्यन्तासतां प्रथा ।
देशकालान्यथात्वं तु केवलं भाति वस्तुनः ॥

ननु तत्रासतो ऽर्थस्य प्रतिभासे देशान्तरादिषु सत्त्वं क्वोपयुज्यते देशान्तरे दि सन्नसन्वा ? तत्र तावन्नास्त्येव सोर्थः, न च द्वयोरसत्त्वयोः कश्चिद्विशेषः देशकालावपि किं सन्तावसन्तौ वा प्रतिभासेते इति विकल्पनायां तथा तयोरपि तुल्यो दोषः ।

मैवम् भवतो ऽप्यसत्ख्यातिवादिनः किं सर्वत्रैव तदर्थासत्त्वं सम्मतमुत तद्देश एव, तत्रासन्निधानमात्रेण तावत्क इव तव स्वार्थः, सर्वत्रासतस्त्ववभासे कुतस्त्य एष नियमो यदसत्त्वाविशेषे ऽपि रजतादि संप्रति न खरविषाणादीति, अयं च द्वयोरसत्त्वयोर्विशेषः देशान्तरादिषु सतो ऽर्थस्य स्मरणाद्युपारोहेण प्रतिभासमानता दृश्यते न त्वेकान्तासत इति, एवं देशकालयोरपि सदसद्विकल्पचोद्यं परिहर्तव्यम्, अतश्च किं चिदपि नात्यन्तासदर्थग्राहि ज्ञानमस्तीति किं दृष्टान्तबलेन सर्वत्रार्थशून्यता कल्प्येत तस्मान्नासत्ख्यातिः ।

## आत्मख्यातिनिरासः ।

आत्मख्यातेस्तु निराकरणाय सो ऽयमियान्कलिर्वर्तते, तत्र च बहुशः कथितं ग्राहकाद्विच्छिन्नमेव ग्राह्यमवभासते नीलमिदमिति न तु तदभेदेन नील-

महमिति, भ्रान्तिज्ञानेषु तदर्थसन्निधानाद् भ्रान्तत्वमस्तु नात्मतत्त्वग्रहणमिति यच्चोद्यते, तदन्तर्ज्ञेयरूपं हि बहिर्वदवभासते इति सेयं विपरीतख्यातिरेवाङ्गीकृता स्यात्, तद्वरमेव तपस्विनी साधीयसी।

अथ कथ्यते ग्राहकात्सत्यं विच्छिन्नं ग्राह्यं तत्त्वज्ञानरूपमेवेति, तत्र विच्छिन्नमिति प्रियमावेदितं ज्ञानत्वे तु तस्य का युक्तिः, न च ज्ञानयोर्युगपदुत्पन्नयोर्वा क्रमभाविनोर्वा ग्राह्यग्राहकभाव उपपद्यते यौगपद्ये सव्येतरगोविषाणवद् ग्राह्यग्राहकनियमाभावात्, क्रमपक्षे ऽपि पूर्वमुत्तरस्य ग्राहकात्तदुत्पत्तिस्तद्ग्रहणकालप्रतीक्षणात् क्षणिकतां जह्यात्, उत्तरमपि यदि पूर्वस्य ग्राहकं तथा ऽपि सैव वार्ता, तावत्कालस्थितिमन्तरेण तद्ग्राह्यताऽनुपपत्तेः, न च ज्ञानत्वं नाम सामान्यं ग्राह्यग्राहकयोरनुगतं गोत्वमिव शाबलेयादौ भाति, अतो विच्छिन्नश्चेद् ग्राहकाद्ग्राह्यः सो ऽन्य एव भवेदिति न ज्ञानस्यायमाकारः,

यत्तु संसर्गधर्म आकारो न भवति इति भाषितं, तद्युक्तमेव,—

न कुण्डदधिवत्कश्चित्संसर्गो ऽस्त्यर्थबोधयोः।
तत्कृताकारवत्ता वा प्रागनाकारयोस्तयोः॥

तदेवं शाक्योक्तयुक्तिकौशलदौर्बल्यात्सर्वत्र विच्छेदप्रतिभासात्स्वच्छात्मनश्च ज्ञानस्य स्वतो विचित्रत्वानुपपत्तेः अर्थस्यैवायमाकार इति सिद्धम्।

यत्त्वाकारपक्षे चोदितमेकत्रार्थे नक्षत्रं तारका तिष्य इति परस्परविरुद्धाकारसमावेशो न युक्त इति, तत्रोच्यते—अनुपपन्नमिति नः क संप्रत्ययो यन्न प्रमाणेनावगतं विरुद्धमपि तद् बुद्ध्यामहे यदेकत्र निविशमानं न पश्यामः, तदिह यद्यबाधितेन ज्ञानेन विस्पष्टमाकारत्रयमेकत्र गृह्यते तत्कथमनुपपन्नं स्याद्विरुद्धमिति।

अथैकं सम्यक्प्रमाणपरिनिश्चितरूपमितरत्काल्पनिकमिति प्रतीयते तदेवमस्तु को दोषः, दृष्टश्च चित्रादावनेकबलसमावेशः, न चैकत्र विरोधमविरोधं वा दृष्ट्वा सर्वत्र तत्कल्पनमुचितमबाधितावगतिनिबन्धना हि वस्तुस्थितयो भवन्ति न कल्पनानिर्मिताः।

अपि वा वस्तुताद्रूप्यसदसत्तानपेक्षया।
शब्दप्रयोगसाधुत्वमन्वाख्यायेत केवलम्॥

दारा इति नैकस्याः स्त्रीव्यक्तेः पुंस्त्वं बहुत्वं वा विद्यते शब्दस्त्वेष तत्र प्रयुज्यमानः साधुर्भवति।

नार्थासंस्पर्शिता चास्य तावता व्यवतिष्ठते।
असौ तदात्मकं वस्तु तथा शक्नोति भाषितम्॥
परिव्राट्प्रभृतीनां च कुणपादिप्रतीतयः।
अर्थस्यानेकशक्तित्वान्नावहन्त्यर्थशून्यताम्॥

किं न भक्षयितुं शक्या नारी कौलेयकेन(१) सा ।
किं वा न शमयत्येषा कामिनो मदनज्वरम् ॥
शवाद्वा केन रूपेण सा विशिष्येत योगिनः ।
धीत्रयं तु न सर्वेषामभावात्सहकारिणः ॥

प्रतिप्राणिनियतानेकविधवासनासहकारिसापेक्षो हि तस्य ज्ञानस्यात्मलाभ इति न सर्वेषां सर्वसारूप्येण ज्ञानम् ।

यद्येवं वासनाभेद एव विविधप्रतिभोद्भवहेतुर्भवति किमर्थकल्पनया, अयि साधो किमद्यापि न परिहरसि सुचिरं गुणितां कल्पनावाचोयुक्तिं न ह्यर्थः कल्प्यतेऽपि तु प्रतिभासते एव, बहुरूपस्य तु वस्यैकतमरूपपरिच्छेदनियमे किमपि वासनादि कारणं कचित्कल्प्यते कस्तावताऽर्थनिह्नवस्यावकाशः ।

यच्चेत्थं—वासनाभेद एव ज्ञानवैचित्र्यकारणमितरेतरकार्यकारणभावप्रबन्धश्च बीजाङ्कुरवदनादिर्ज्ञानवासनयोः—इति, तदप्यघटमानम्, केयं वासना नाम? ज्ञानादव्यतिरिक्ता चेत्सा ऽपि स्वच्छरूपत्वान्न ज्ञानकालुष्यकारणं भवेत्, ज्ञानव्यतिरिक्ता चेद्वासना तद्वैचित्र्यहेतुश्च सोऽर्थ एव पर्यायान्तरेणोक्तः स्यात् ।

अपि च वासना विषयानुभवसमाहितः संस्कार इति लोके प्रसिद्धिः, संस्कारश्च यदनुभवघटितः तत्रैव क्वचिदवसरे स्मरणमनुभवति न पुनरसदेव वैचित्र्यमिदमीदृशमावहति ।

किञ्च भिक्षुपक्षे क्षणिकत्वेन ज्ञानानां ग्राह्यग्राहकभाव इव वास्यवासकभावेऽपि निराकर्त्तव्यः, स्थायिनो हि भावास्तिलादयः स्थायिभिरेव चम्पकादिभिर्वास्यन्ते न तूत्पद्य सपद्येव नश्यद्भिः ज्ञानैस्तादृश्येव ज्ञानानीति ।

निरन्वयविनाशाच्च न तदंशो ऽनुवर्तते ।
यतः कथंचिद्वास्येत पूर्वेण ज्ञानमुत्तरम् ॥

अपि चैकत्र देवदत्तसन्ताने वासना यतः सहस्राणि ज्ञानवैचित्र्यकारीणि भवेयुः, न हि गोवासनातो हस्तिज्ञानमुदेति ।

अनन्तत्वे ऽपि खल्वासामारम्भे नियमः कुतः ।
असमञ्जसकारित्वे व्यवहारस्य विप्लवः ॥
धूमज्ञानसमुत्पादे धूमवासनया कृते ।
कं तदा न जलज्ञानं जनयेज्जलवासना ॥

वासनाश्च स्वसदृशवासनासन्तानारम्भहेतव एव भवेयुः न पुनरनुभवज्ञानमाधातुमुद्यच्छेयुः, सदृशात्सदृशोत्पत्तिरिति हि भवतां दर्शनम् ।

अपि च न निराधारा वासना आसते न च भवत्पक्षे तदाधारः कश्चन सम्भवति भङ्गुरत्वेन ज्ञानस्य तदाश्रयत्वानुपपत्तेः, एकज्ञानाश्रितत्वे सर्वासां

(१) कौलेयकेन—शुना ।

वासनानां तद्विनाशे नाशः स्यात्, प्रतिवासनमाश्रयभेदे तदानन्त्यमनियमश्च शतशाखः, न चालयविज्ञानं नाम किंचिदस्ति, सत्यपि तस्मिन्नशेषवासनासहस्रसमाश्रये तत्क्षणिकत्वात्सकृदेव तथाविधवासनाकुमूलज्ञानविनाशः स्यात्, पुनरुत्पादे तथाविधमेव तज्ज्ञानमुत्पद्यते न तु गवाश्वादिक्रमनियमो भवेदिति सर्वथा सङ्कटो ऽयं पन्थाः. तस्मान्मृगतृष्णैषा तपस्विनां वासनात एव लोकयात्रासिद्धेः किं बाह्येन थेनेति ।

कृतमतिवाचालतया चिरमपि निपुणैर्निरूप्यमाणो ऽतः ।
अर्थस्यैव न बुद्धेः सिध्यति नीलादिराकारः ॥
एकश्च बोधः प्रमितिप्रमाणप्रमेयरूपाणि कथं बिभर्ति ।
भिन्नप्रमाणात्फलमभ्यधायि प्रत्यक्षचिन्तावसरे पुरस्तात् ॥

## बाह्यार्थशून्यत्वनिरासः ।

ये तु ब्रुवते–तिष्ठतु तावत्प्रमाणमात्रं प्रमेयमेव विकल्पयन्तो न बाह्यमर्थं कंचन निरपवादं प्रतिपद्यामहे, तथा हि–न तावदयमवयवी घटादिरवकल्पते अवयवव्यतिरेकेणावयविनो ऽनुपलम्भात, यो हि यस्माद्व्यतिरिक्तः स तदधिष्ठितदेशव्यतिरिक्तदेशाधिष्ठान उपलभ्यते घटादिव पटो, न चैवमवयवेभ्यः पृथग्देशा दृश्यते, न चावयवानुपलब्धाववयवीति कथमेतेभ्यो भिद्यते, अवयवग्रहणानुपपत्तेश्च,–न हि सर्वे तदवयवाः शक्यन्ते ग्रहीतुमर्वाग्भागवर्तिन एव गृह्येरन्न मध्यपरभागगता इति, ( यदा? ) बुद्ध्या विविनक्ति एष तन्तुरेष तन्तुरिति तदा प्राच्यादञ्चलात्प्रभृति प्रतीचीनमञ्चलं यावद्विविञ्चन्नसौ तन्तुसन्ततिमेव केवलामुपलभते न ततोऽतिरिक्तपटावयविनम्, वृत्त्यनुपपत्तेश्च,–नैकत्रावयवे कार्त्स्न्येनावयवी वर्तते, तेष्वपि कथं वर्तते अन्यैरेकदेशैस्तेष्वपि अन्यैरिति नास्त्यन्यः, असम्बद्धस्त्वेकदेशैरवयवेष्वस्तीति कथं तद्द्वारकैरपि सम्बध्येत, तस्मादुभयथापि नास्य वृत्तिरवयवेष्वस्तीति, धारणाकर्षणादि त्वनारब्धकार्ये काष्ठमूलककार्पासादावपि दृश्यते इत्यनैकान्तिकम्, एकाकारा तु प्रतीतिर्विकल्पमात्रम् एकदेशावस्थानादिनिमित्तमाश्रित्य करितुरगपदातिष्विव सेनेति धवखदिरपलाशादिष्विव वनमिति सञ्चितेष्ववयवेष्वेव घट इत्यादिप्रतीतिर्भविष्यतीत्येवमवयव्यवयवावयवपर्यालोचनयाऽणुसञ्चयमात्रमेवावशिष्यते नान्यत्, सञ्चयाऽपि च व्यतिरिक्ताव्यतिरिक्ततया चिन्त्यमानो नास्त्येवेत्यणव एवावशिष्यन्ते, परमाणवोऽपि 'षट्केन युगपद्योगात्परमाणोष्षडंशते'त्येवं विकल्प्यमाना विप्लवन्त एव, न च तैरतिसूक्ष्मैरेष व्यवहारोऽभिनिर्वर्त्यत इति, तस्माद् बाह्यस्य प्रमेयस्यैव निरूप्यमाणस्यानुपपत्तेर्विज्ञानमात्रमेवेदमित्यभ्युपगमनीयम्-( इति ? ) ।

तेप्येवं वदन्तः प्राक्तनेभ्योऽपि भिक्षुभ्यः कृपणतरा इव लक्ष्यन्ते, अपूर्व एव तर्कमार्गो यत्र प्रतीतिमुत्सृज्य तर्जनीविस्फोटनेन वस्तुव्यवस्थाः क्रियन्ते ।

दृढेन चेत्प्रमाणेन बाधादिरहितात्मना ।
गृहीत एवावयवी किमेभिर्बालवल्गितैः ॥
अथ नास्ति प्रमाणेन केनचित्तदुपग्रहः ।
एतदेवोच्यतां वृत्तिविकल्पैः किं प्रयोजनम् ॥

न च शक्नुमः पदे पदे वयमेभिरभिनवमल्पमपि किंचिदपश्यद्भिस्तदेव पुनः पुनः प्रकुर्वद्भिः शाक्यनर्तकैः सह कलहमतिमात्रं कर्तुम्, अविकल्पं प्रत्यक्षं प्रमाणमिति साधितम्, निर्विकल्पकेनापि शब्दोल्लेखमात्ररहितमविकल्पकग्राह्यमेव वस्तु गृह्यते इति दर्शितम्, एकाकारविषयव्यतिरेकेण च तद्बुद्धेरेककार्यत्वैकदेशव्यवस्थानाद्यन्यथासिद्धिनिबन्धनमपि न किंचिद्वक्तुं शक्यते इत्युपवर्णितम्, क्वचिद्वा पृतनादौ बाधकोपनिपातादेवावगतिमिथ्यात्वान्न सर्वत्र मिथ्यात्वकल्पना युक्तेत्यप्युक्तम्, किं वा तदस्ति यत्सामान्यसमर्थनावसरे न कथितम्, तस्मात्तयैव नीत्याऽवयव्यपि सिद्ध एव तद्ग्राहिणः प्रत्यक्षस्य निरपवादत्वात् ।

यत्तु देशभेदेनाग्रहणात्तद्ग्रहे तद्बुद्ध्यभावादिति, तत्रावयवाश्रितत्वमेव निमित्तं नासत्त्वम् ।

देशभेदेन हि ज्ञानं सत्त्वे तस्य कथं भवेत् ।
न हि कश्चित्स्वतन्त्रोऽसावपि त्ववयवाश्रितः ॥
यावतां ग्रहणे चास्मिन् बुद्धिर्भवति तावताम् ।
अपेक्षतेऽसौ ग्रहणं न सर्वेषामिति स्थितिः ॥
विविच्यमानेष्वंशेषु युक्तस्तदनुपग्रहः ।
तदावयविनाशो हि बुद्धौ विपरिवर्तते ॥

अवयवविभागो ह्यवयविनो विभागहेतुस्तस्मिन् बुद्ध्या समुल्लिख्यमानेऽवयवविनाशोऽपि नानुल्लिखितो भवेदिति कथमवयवी तदानीं गम्यते ।

वृत्तिश्चावयवेष्वस्य व्यासज्यैवेति गम्यते ।
न प्रत्यवयवं तस्य समाप्तिर्व्यक्तिजातिवत् ॥
व्यासज्य वर्तमानोऽपि न खल्ववयवान्तरैः ।
वर्तते तदसंवित्तेः किन्तु वर्तत एव सः ॥

तथा चाहुः—'वर्तत एव भ्रमः अनाश्रितस्यानुपलम्भात्' ।

वृत्तिरेवंविधाऽन्यत्र क दृष्टेति यदुच्यते ।
प्रत्यक्षदृष्ट एवार्थे दृष्टान्तान्वेषणेन किम् ॥

## बाह्यार्थसाधनम् ।

तस्मात्प्रत्यक्षत एवावयववृत्तेरवयविन उपलब्धेर्न तद्वृत्तौ विकल्पानामवसरः, स्रक्सूत्रादिवृत्तिरपि तथा दर्शनादभ्युपगता, तदियमवयविवृत्तिरपीदृशी दृश्यमाना किमिति निन्हूयते, न चावयविग्राहिणः प्रत्यक्षस्य कश्चिदपवादः समस्ति ।

अदुष्टकरणोद्भूतमनाविर्भूतबाधकम् ।
असन्दिग्धं च विज्ञानं कथं मिथ्येति कथ्यते ॥

न च सेनावनवदवयविग्रहणमभिधातुमुचितम् अबाधितत्वात्सेनादौ च बाधकसम्भवात्, अपि च गजवाजिपदातिपीलुपलाशशिंशपादिदर्शनस्य तत्र घटमानत्वात्तत्समवाये सेनावनादिप्रतीतिरुत्पद्येतापि इह तु किं समुदायविषयः पटप्रत्यय इति चिन्त्यम्, तन्तुसमुदायालम्बन इति चेत्, तन्तुप्रत्यय इदानीं किमालम्बनः, सो ऽपि स्वावयवालम्बन इत्येवमवयवावयवनिरूपणे परमाणवः पत्त्यश्वशमीशिंशपादिस्थानीया वक्तव्यास्तेषां च तद्ग्रहणमनुपपन्नमतीन्द्रियत्वादिति न तदालम्बनोऽवयविप्रत्ययः, तस्मादवयवी प्रत्यक्षग्राह्योऽस्तीति सिद्धम् । परमाणवो ऽपि कार्यानुमानपरिनिश्चितनित्यनिरवयवस्वरूपाः सन्तीति पूर्वमेव समर्थितम्, अतो न षट्कयोगादिना सावयवत्वमेषामुपपादयितुं पार्यते, मूर्तत्वमप्यनित्यतायामप्रयोजकमिति दर्शयिष्यतेऽतः प्रमेयपर्यालोचनवर्त्मनाऽपि शून्यवादसमर्थनं न सुशकम्, प्रमेयविचारो ऽपि निष्प्रमाणवृत्तमेव निरूप्यते, ततश्च प्रमाणचर्चातो बिभ्यद्भिः पलाय्य या प्रमेयकथावीथी तथागतैरवलम्बिता तस्यामपि सैव भीषणमुखी प्रमाणचर्चैवोपनता ।

सर्वतो विपदां मार्गमादेशयितुमुद्यते ।
विधौ विधुरतां याते प्रपलाय्य क्व गम्यते ॥
तस्मात्प्रमाणतोऽशक्ये शक्ये वा वस्तुनिर्णये ।
एवम्प्रायमयुक्तं यत्कुशकाशावलम्बनम् ॥
तेन निष्फलमुत्सृज्य शून्यवादबकव्रतम् ।
बाह्येनैवार्थजातेन व्यवहारो विधीयताम् ॥

अथास्थाशैथिल्यजननाय सर्वं शून्यं क्षणिकं सर्वं निरात्मकमित्युपदिश्यते, तर्हि किमनेन मृषोद्येन, सत्यप्यात्मनि सत्स्वपि स्थिरेषु पदार्थेषु विषयदोषदर्शनद्वारेण भवत्येव विवेकवतां वैराग्यमिति तदुपजननाय शून्यवादादिवर्णनं वक्रः पन्थाः, प्रत्युत प्राज्ञो मुमुक्षुः क्षणिकनैरात्म्यशून्यवादिवचनं युक्तिबाधितमवबुध्यमानो वञ्चनामयमिव तदुपदेशमाशङ्कते ।

स एष बुद्धिशून्यानां शून्यवादपरिग्रहः ।
प्रतारणपराणां वा न तु तत्त्वार्थदर्शिनाम् ॥
तस्मात्परीक्ष्यमाणोऽयं शब्दाद्यद्वैतपक्षवत् ।
विज्ञानाद्वैतपक्षोऽपि गन्धर्वनगरायते ॥

## अपवर्गनिरूपणोपसंहारः ।

तदेवमद्वैतदृशा न दृश्यते जनस्य निःश्रेयससम्पदागमः ।
अतो यथोक्तात्मसतत्त्वचिन्तया कृती व्यवस्येदपवर्गसिद्धये ॥
सांख्यैर्यस्त्वपवर्गसाधनविधावुक्तः प्रकृत्यात्मनो—
रन्यत्वाधिगमोऽभ्युपाय इति स प्रागेव निर्वासितः ।
अज्ञा शक्तिमती विकारबहुला बध्नात्यकिंचित्करं
भूयो न प्रकृतिः पुमांसमिति वा कस्तां नियन्तुं क्षमः ॥
पुंसा न किंचिदपि बन्धनिदानभूत-
मत्यल्पमात्रमपि कर्म कृतं कदाचित् ।
मथ्नाति तं प्रकृतिरेव निरङ्कुशैषा
मत्ता करेणुरिव पद्मवनानि भूयः ॥
कचनिलुञ्चनदिक्पटधारणक्षितिपराक्रमणक्रमपूर्वकम् ।
क्षपणकास्त्वपवर्गमुशन्त्यमी अतितरां परमार्थविदस्तु ते ॥
लोम्नां नित्यमसम्भवात् खलतयो मोक्षं क्षणात्प्राप्नुयु-
स्संसारोपरमो दिगम्बरतया सद्यस्तिरश्चां भवेत् ।
मुक्ताः स्युर्गिरिशृङ्गयायिन इमे शश्वत्तदारोहणा-
ज्जन्तूनामपवर्गवर्त्म निकटं केनेदृशं दर्शितम् ॥
तस्मादात्मज्ञानं सन्तो मोक्षप्राप्तौ हेतुं प्राहुः ।
तीर्थे तीर्थे तच्चाचार्यैस्तैस्तैरुक्तं संज्ञाभेदैः ॥
यदपीह केचिदविकल्पमीश्वरप्रणिधानमाहुरपवर्गसाधनम् ।
इदमात्मदर्शनमवादि तैरपि प्रथितो हि पुरुषविशेष ईश्वरः ॥
दृष्टा बाह्यान्तराणां गतिरियमियती नापवर्गस्य मार्गं
स्प्रष्टुं द्रष्टुं समर्थास्त इति चिरमिह श्वभ्र एव भ्रमन्ति ।
नेदीयानेष तस्माद्भवमरुपतितैरक्षपादोपदिष्टः
पन्थाः क्षेमाय मोक्षाधिगमसमुचितः क्षिप्रमालम्बनीयः ॥

इति प्रमेयप्रकरणम् ।

इति भट्टजयन्तकृतौ न्यायमञ्जर्यां नवममाह्निकम् ।

## संशयलक्षणम्

संशयादेः पदार्थगणस्य प्रमाणप्रमेयपदसंगृहीतस्यापि न्यायप्रवृत्तिप्रयोजनतया पृथग्व्युत्पादनीयत्वस्य प्रागेव समर्थितत्वात्प्रथमसूत्रे च प्रमेयानन्तरं संशयोद्देशादुद्देशानुक्रमेण तस्य लक्षणं प्रतिपादयितुमाह—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ ( गौ० अ० १ आ १ सू० २३ )**

ननु संशयस्य समानधर्मोपपत्त्यादिकारणभेदेन पञ्चविधत्वात्सामान्यलक्षणं विभागो विशेषलक्षणानि च वक्तव्यानि, तत्र सामान्यलक्षणे विभागे च सूत्रद्वयं विशेषलक्षणार्थं च पञ्चानां तत्प्रभेदानां सूत्रपञ्चकमित्येवं सप्त सूत्राणि प्रणेतुं युक्तानि एकं चेदं सूत्रं श्रूयते तत्कथमेतद्भविष्यति ?

उच्यते, सत्यमाह भवान् किन्त्वेकमेवेदं सूत्रमावृत्तिन्यायमाश्रित्य सप्तधा कल्पयिष्यते ।

## आचार्यव्याख्यानम् ।

तत्राचार्यास्तावदेवमाचक्षते समानधर्मोपपत्तेरुपलब्ध्यनुपलब्धिव्यवस्थातो विशेषापेक्षो विमर्शः संशयः इतीयत्सूत्रं सामान्यलक्षणप्रतिपादकम् , समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इयदस्य विशेषलक्षणप्रतिपादकमिति,

नन्वेतदेव सूत्रं सामान्यलक्षणार्थमियदेव चेदमन्यूनानतिरिक्तं विशेषलक्षणार्थमिति कथमेतत् ? उच्यते विशेषस्मरणकारणभूतसाधारणधर्मग्रहणाद्विशेषाग्रहणाद्विशेषस्मृतेश्च संशयो भवतीति प्रत्यात्मवेदनीयं तावदेतत् , तत्र विशेषापेक्ष इत्यनेन पदेन विशेषस्मरणमुपदिष्टमुपलब्ध्यनुपलब्ध्यव्यवस्थापदेन च विशेषाग्रहणमितीयता च द्वयोरपि समानविशेषसामान्यलक्षणयोः ( संग्रहः ? ) समानशब्दस्त्वाक्षिप्तसामान्यवचनः सत्सामान्यवचनमाह अनुगतसामान्यवचनस्तु विशेषलक्षणमिति,

कथं पुनरयमेवाक्षिप्तसामान्यवचनः कथं वाऽनुगतसामान्यवचन इति ? उच्यते संशयोत्पत्त्यैव सामानधर्ममात्रमाक्षिप्यते यद्गृह्यमाणं विशेषस्मरणबीजसंस्कारोद्बोधनिमित्ततां प्रतिपद्यते तद्व्यतिरेकेण संशयानुत्पादात् । तथा हि—विरुद्धविशेषावमर्शस्वभावस्तावत्संशयः, न च विरुद्धविशेषाणां पुरोऽवस्थिते धर्मिणि सन्निहितानामवमर्शनं विरुद्धतयैवैकत्र सन्निधानाभावादतः स्मृत्युपारूढानामवमर्शनं स्मृतिश्च नाकस्मादुद्भवतीति यत्सहचरितानां तेषां विशेषाणां पूर्वं पर्यायेण ग्रहणं वृत्तं तद्दर्शनसंस्कारप्रबोधद्वारेण स्मरणकारणमवश्यमेवाश्रयणीयम् , तच्चानुगतं वा भवतु व्यावृत्तं वि-

प्रतिपक्ष्यात्मकं वा आन्तरमुपलब्ध्यनुपलब्ध्यव्यवस्थारूपं वेत्येवमाक्षिप्तसामान्यवाचिनि समानशब्दे पञ्चसाधारणरूपावगमात्सामान्यलक्षणार्थता, यदा त्वनुगतमेव धर्ममारोहपरिणाहादिस्वभावमाचष्टे समानशब्दस्तदा विशेषलक्षणार्थ इति ।

तत्र चेत्थं सूत्रयोजना—समानो धर्मः परिणाहादिः तस्य गुणत्वेन प्रतिद्रव्यमन्यत्वे ऽपि तुल्यरूपावगतिविषयीकृतत्वात्समानत्वमुच्यते तद्योपलब्धिरुपपत्तिः, अथापि सत्तोपपत्तिशब्देनोच्यते साऽप्युपलब्ध्यधीनस्थितिरेव भवतीति सर्वथा समानधर्मोपलब्धेः संशय इत्युक्तं भवति ।

ननु समानधर्मोऽर्थान्तरं धर्मिणो न चाऽर्थान्तरे दृष्टेऽन्यत्र संशयो भवितुमर्हति, नार्थान्तरविशेषत्वात्, अर्थान्तरविशेषस्तु धर्म्येवोच्यते ऽर्थान्तरेण परिणाहादिना विशेष्यत इति तस्मिन्नेव साधारणधर्माध्यासितवपुषि धर्मिणि नयनपथवर्तिनि तद्गतविशेषावमर्शात्मा तत्रैव संशयो जायते योऽयमूर्ध्वत्वविशिष्टधर्मा दृश्यते स स्थाणुर्वा स्यात्पुरुषो वेति नार्थान्तरत्वदूषणम्, तथाऽपि वक्रकोटरकरचरणादिविशेषदर्शिनो न दृष्टः संशय इति कारणान्तरमुच्यते,–उपलब्ध्यनुपलब्ध्यव्यवस्थात इति, अनेन (कथं?) विशेषाग्रहणमुच्यते, इत्थमुच्यते–इदन्तया ऽनिदन्तया वा तत्रोपलब्धिर्न व्यवतिष्ठते अनुपलब्धिर्वेति, विशेषग्रहणे सति तद्व्यवस्थानं सम्भवति, स्थाणुरयं न पुरुष इति वक्रकोटरादिविशेषग्रहणे, शिरःपाण्यादिपरिच्छेदे तु पुरुषोऽयं न स्थाणुरिति, एवमनेन पदेन विशेषग्रहणमुक्तम्, तथाऽपि प्रेक्षारूढस्य साधारणधर्मदर्शिनो विशेषाननुपलभमानस्यापि न दृष्टः संशय इति कारणान्तरमुच्यते–विशेषापेक्ष इति, विशेषस्मृत्यपेक्ष इत्यर्थः।

ननु विशेषापेक्ष इति श्रूयते न विशेषस्मृत्यपेक्ष इति, सत्यमश्रूयमाणमपि तत्स्मरणं संशयप्रस्तावादवगम्यते, स्मर्यमाणत्वेन हि विशेषाणां संशयोत्पत्तावपेक्षा नानुभूयमानतया ऽनुभूयमानेषु हि तेषु संशयच्छेदो भवति न संशयः, अपेक्षाशब्दार्थनिरूपणादेव वा स्मृतिर्लभ्यते विशेषाणामपेक्षा आकाङ्क्षा ते चानुपलभ्यमानाः पूर्वानुभूताश्चाकाङ्क्ष्यन्ते इतीयं सा तेषां स्मृतिः, संप्रत्युपलभ्यमानेष्वेकान्ताननुभूतेषु वा तेष्वाकाङ्क्षानुपपत्तेः ।

ननु समानधर्मोपपत्तेर्विशेषस्मृतेश्चेति कारणद्वयमेवास्तु किं विशेषाग्रहणेन, अपि च—

विशेषस्मरणादेव नन्वाक्षिप्तस्तदग्रहः ।
ग्रहणं स्मरणं चैव भवेतां युगपत्कथम् ॥

किन्तु नातिदूरगतायां निजप्रमदायामनुरागवतः कामिनः समानधर्मदर्शने तद्गतविशेषादर्शने तदनुस्मरणे च सत्यपि न भवत्येव संशयोऽतः संशयोत्पत्त्यव्यभिचारे देशकालव्यवहितविशेषाग्रहणसिद्धये पदान्तरमुपादीयते देशा-

न्तरे कालान्तरे वा चिरदृष्टानां विशेषाणामिदानीमग्रहणं संशयकारणं न विशेषाग्रहणमात्रम्, एवममुना पदत्रयेण संशयलक्षणमिदमुक्तम् ॥

ननु च 'संभूय कारकैः कार्यमारभ्यते' इति न्यायात्समानधर्मोपलब्धिविशेषानुपलब्धितत्स्मृतिलक्षणकारणत्रयजन्ये संशये ज्ञानयौगपद्यमापद्यते, क्रमभावित्वे हि बुद्धीनां नैककार्योत्पत्तौ युगपद्व्यापारः समस्ति, विशेषाश्च बहवोऽपि सम्भवन्तीति तत्स्मरणान्यपि युगपद्भूयांसि भवेयुः ।

नैतदेवम्, समानधर्मग्रहणानन्तरं पूर्वोपजातविविधविशेषानुभवपरम्परोपचितपीवरसंस्कारजमेव तद्विषयं स्मरणं भविष्यति यथा वर्णानामर्थप्रतीतौ वर्णितम्, उपलब्ध्यनुपलब्ध्यव्यवस्थापदसूचिता च विशेषानुपलब्धिरेव न सा ज्ञानात्मिका किन्तु ज्ञानाऽनुत्पाद इति तत्तृतीयं कारणमपि भवन्न ज्ञानात्मकम्, ज्ञानात्मके कारणे समानधर्मग्रहणं विशेषस्मरणं च, तयोः प्रथमं समानधर्मग्रहणं विनश्यदवस्थं द्वितीयमविनश्यदवस्थं संशयमुपजनयतः, ईदृशोश्च ज्ञानयोर्यौगपद्यमविरुद्धमिति शास्त्रे स्थितम्, एवं समानधर्मग्रहणाद्विशेषाग्रहणाद्विशेषस्मृतेश्च संशय इति पदत्रयेण संशयलक्षणमनवद्यमुच्यते इति ।

## सूत्रस्य व्याख्यान्तरम् ।

तदेतदाचार्यव्याख्यानमरोचयन्तः परेऽपरथा व्याचक्षते–समान्यलक्षणं तावद्विमर्शपदेनैव प्रतिपाद्यते, न हिपर्यायोच्चारणमात्रमिदं विमर्शः संशय इति किन्तु संशय इति लक्ष्यपदं विमर्श इति लक्षणप्रवणपदम्, प्रमाणपदवच्च निर्वचनसव्यपेक्षमेतत्पदं लक्षणप्रतिपादनक्षमं भवति, विरुद्धार्थावमर्शो विमर्शः स्थाणुर्वा पुरुषो वेति, इयता च सजातीयसंशयपञ्चकानुगतं विजातीयेभ्यः प्रमाणादिभ्या व्यवच्छिन्नं सामान्यलक्षणमुक्तं भवति, संशयोत्पादककारणपरिगणनं पुनरिन्द्रियार्थसन्निकर्षोत्पन्नग्रहणवदिहापि नोपयुज्यते कारणान्तराणामप्यात्ममनःसन्निकर्षादीनामपरिहार्यत्वात्–(इति?)। अत्राप्यसाधारणकारणनिर्देशश्चिकीर्षितस्तेनापि कोऽर्थः? सामान्यलक्षणस्य प्रतिपिपादयिषितत्वात्तस्य च विमर्षपदादेव सिद्धत्वात्, उपलब्ध्यनुपलब्ध्यव्यवस्थापदप्रतिपाद्यमानविशेषाग्रहण वर्णनं चातीव क्लिष्टमिति पुनश्च विशेषलक्षणप्रसङ्गे यथाश्रुतमेव तद् व्याख्येयमित्यतिभारः, एवं विमर्शपदेन विजातीयव्यवच्छेदकारिणि सामान्यलक्षणे वर्णिते समानधर्मोपपत्तेरित्येकमेव पदं सजातीयसंशयान्तरव्यवच्छेदकारि विशेषलक्षणक्षमं भवतीति तत्रापि पदत्रययोजनं नोपयुज्यते इति, अत्र व्याख्यानद्वयेऽपि कतरत्साध्विति तद्विदः प्रमाणम् ।

अनेकधर्मोपपत्तेरित्यत्रापि त्रिपदपरिग्रहेणैव लक्षणमाचार्या वर्णयन्ति अनेकधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इत्यसाधारणधर्मग्रहणाद्विशेषाग्रहणाद्विशेषस्मृतेश्च संशय इत्यर्थः, एकैकपदोपादानफलं च

पूर्ववदत्रापि दर्शयितव्यम्, न चेन्द्रियमनःसंयोगादिकारणान्तरपरिगणनचोदनं युक्तम्, तेषां सर्वबुद्धिजन्मसु तुल्यत्वादिहासाधारणसंशयज्ञानकारणोपदेशप्रस्तावादिति।

अन्ये तु सामान्यलक्षणसमुत्पादिते विजातीयव्यवच्छेदे केवलसजातीयव्यवच्छिन्नलक्षणप्रतिपादननिपुणमनेकधर्मोपपत्तिरूपमेव पूर्ववद्वर्णयांचक्रुः।

"नन्वनेकधर्मशब्देन कथमसाधारणो धर्म उच्यते" समानजातीयमसमानजातीयमनेकं तस्मात्परावृत्तो धर्मोऽनेकधर्म इति, यद्वा किमनया क्लिष्टकल्पनया, अस्त्ययमेकशब्दः समानपर्यायस्तत्र स्पष्ट एव नञ्समासेनासमानधर्मोऽनेकधर्मः साधारणधर्म उच्यते एवेति।

"भवत्वेवमसाधारणधर्मस्य तु कथं संशयकारणत्वमिति चिन्त्यम्, विरुद्धविशेषानुस्मरणकारणकं हि संशयमाहुः, विशेषाणां च स्मरणहेतोः संस्कारस्य तद्बोधकं भवति येन सहैते पूर्वपर्यायेणोपलब्धाः, असाधारणधर्मस्य त्वसाधारणधर्मत्वादेव न केनचित्सह पूर्वं दर्शनमभवद्भावे त्वसाधारणधर्मतैव हीयेतेत्यतः कथमसौ तत्स्मृतिहेतुः, व्यावृत्ततयैव तु स्मृतिहेतुत्वेऽस्य त्रैलोक्यस्मरणनिमित्तता प्रसज्येत ततोऽपि व्यावृत्तत्वादि"ति।

नैष दोषः, प्रकारान्तरेणास्य स्मृतिहेतुत्वात्, इह हि केषुचित्केषुचिदसाधारणधर्मा धर्मान्तरसहचरिता भवन्ति, तद्यथा पृथ्वीत्वगन्धवत्त्वादयो धर्माः पृथिव्यामसाधारणास्सन्तः स्नेहवत्त्वादिधर्माश्च तथैवाप्सु द्रव्यत्वसहचारिणो दृष्टाः, रूपादिषु रूपत्वादिधर्मा गुणत्वसहचारिणः, उत्क्षेपणादिषु उत्क्षेपणत्वादिधर्माः कर्मत्वसहचारिणः, एवं प्रकृतेऽपि धर्मिणि कस्मिंश्चित्कश्चिदसाधारणो धर्म उपलभ्यमानः केनापि साधारणधर्मान्तरेण सहचरितो भवेदिति विशेषानुस्मृतिद्वारेण संशयसाधनम्।

"नन्वेवं तर्हि व्यावृत्तत्वादेव समानधर्मादेष संशयो नानेकधर्मादि"ति, मैवम्, अनेकधर्म एवासौ तेन वर्त्मना विशेषान्स्मारयन्संशयजन्मने कल्पते, सति हि तस्मिन्किमालम्बनं व्यावृत्तत्वं स्यादित्यलमतिसूक्ष्मेक्षिकया।

तस्योदाहरणं भाष्यकारेण दर्शितं शब्दे विभागजत्वम्, यथा हि पृथिव्यादौ पृथिवीत्वादिः व्यावृत्तो धर्मो द्रव्यत्वाद्यनुगतधर्मसहचारी दृष्ट एवं शब्दे विभागजत्वं धर्मः केन द्रव्यत्वादीनामन्यतमेन धर्मेण सहचरितः स्यादिति संशयः।

"ननु विभागजत्वमसाधारणं न भवत्येव शब्दधर्मो विभागेऽपि भावात्, तथा च प्रयोगः—गुणः शब्दो विभागजत्वाद्विभागजविभागवद्" इति।

तत्र केचिदाहुः, सत्यमस्ति विभागेऽपि विभागजत्वं, शब्दे तु विशेषो विवक्षितः, द्विविधो हि विभागजो विभागः—कारणविभागपूर्वकः कारणाकारणविभागपूर्वकश्च, कारणं समवायिकारणमत्राभिप्रेतम्, कारणविभागपूर्वकस्ता-

वत्तन्तुविभागात्तन्त्वाकाशविभागः, कारणाकारणविभागपूर्वकस्त्वङ्गुल्याकाशविभागाद्धस्ताकाशविभागो हस्ताकाशविभागादपि शरीराकाशविभाग इति, शब्दस्तु नियमेनैव कारणविभागपूर्वकविभागप्रभवः वंशदलविभागाद्दलाकाशविभागो दलाकाशविभागाच्च समवायिकारणाच्छब्दो निष्पद्यते इत्यनेन विशेषेणास्येदृशविभागजत्वस्यासाधारणत्वं शब्दधर्मस्योच्यते इति ।

## प्रासङ्गिकं विभागजविभागखण्डनम् ।

अन्ये तु विभागजं विभागममृष्यमाणा यथाश्रुतस्यैव शब्दे विभागजत्वस्यासाधारणधर्मतामाचक्षते ।

"ननु किमिति विभागजं ते विभागं न मृष्यन्ति ? अस्ति ह्ययं तत्सिद्धौ न्यायः–यदा ह्यवयवे कर्मोत्पन्नमवयवान्तराद्विभागं करोति न तदाकाशादिदेशाद्यदा त्वाकाशादिदेशान्न तदाऽवयवान्तरादिति स्थितिः, किंकृता पुनरियं स्थितिरिति चेत्, उच्यते–या ह्यवयवक्रिया नभोविभागकारिणी नासौ द्रव्यारम्भकसंयोगप्रतिपक्षभूतं विभागमारभमाणा दृश्यते दिनकरकिरणपरामर्शोपजनितकमलदलविकासकारिक्रियावत्, तदेव कथमिति चेत्, कमलस्य मुकुलविकासदशयोः प्रत्यभिज्ञायमानत्वेनाविनाशनिश्चयात्, इयन्तु पाट्यमानवंशदलक्रिया द्रव्यारम्भकसंयोगप्रतिद्वन्द्विभूतविभागारम्भिकोपलभ्यते इति नासौ नभसो विभागमारभेतेत्यत एषा स्थितिरस्तीति विभागजविभागकल्पना क्रियते, संयोगान्तं कर्मेति(च?) तावत्स्थितम्, अन्यथा हि तस्य कालान्तरस्थायित्वं नित्यद्रव्यसमवेतस्य च नित्यत्वं स्यात्, तस्मात्कर्मणोऽचिरजीवित्वात्तद्विनाशकेन संयोगेन भवितव्यम्, उत्तरश्च संयोगः पूर्वसंयोगोपरमे सति जायते नान्यथा, न च विभागव्यतिरिक्तः कश्चन संयोगस्य हन्ता समस्ति,

कर्म तूत्तरसंयोगजन्मनिर्ज्ञातकौशलम् ।
न हि प्राक्तनसंयोगविनाशाय प्रकल्पते ।।

तस्माद्विभागेनैव संयोगनाशकारिणा भाव्यम्, स च यदधिकरणो विभागस्तदधिकरणमेव संयोगमुपशमयति न त्वङ्गुलिविभागः कुण्डबदरसंयोगोपमर्दाय प्रभवतीत्यतो न वंशदलवृत्तिर्विभागो दलाकाशसंयोगमपहन्तुमलमिति नूनं दलाकाशसंयोगेन भवितव्यम्, तदिदानीं तस्योत्पत्तिकारणचिन्तायां क्रियाया वंशदलविभागमात्रोपजनने चरितार्थत्वात्तं निर्माय विभागान्तरनिर्माणे विरम्य व्यापारासंवेदनादवश्यं वंशदलविभाग एव प्रत्यासन्नतया दलाकाशविभागारम्भकोऽभ्युपगमनीयः, एवमनभ्युगमे कर्मनित्यत्वप्रसङ्गादि"ति ।

अत्र वदन्ति–न कर्मनित्यत्वमनभ्युपगम्यमानेऽपि विभागजे विभागे भविष्यत्युत्तरसंयोगस्य कर्मविनाशहेतोरस्तित्वात् । "पूर्वसंयोगानुपरमे कथं तदुत्पाद" इति चेद्, बाढमुपरत एव पूर्वसंयोगः, "कस्तस्योपरमहेतुरि"ति चेत्,

कर्म ह्युत्तरसंयोगनिमित्तं यदुपेयते ।
तदेव पूर्वसंयोगध्वंसकारि भविष्यति ॥
न च यज्जनने शक्तमशक्तं तद्विनाशने ।
हेतुर्दहनसंयोगः पाकजोत्पादनाशयोः ॥

यथा च विभागेऽधिकरणनियमो यदाधारो विभागस्तदाधारमेव संयोगं निरुणद्धि तथा कर्मण्यपि नियमः कर्मापि स्वाश्रयस्य यदन्यदिक्सम्बन्धनिबन्धनं तत्तद्विरुद्धदिग्वृत्तेः संयोगस्योपमर्दकमिति नातिप्रसङ्गः, एवं कर्माविष्टस्योत्तर-संयोगदर्शनमदूषणं दिगन्तसंयोगस्य तेनोपमर्दनात्, अपि च यदेव कर्म वंश-दलविभागकारि कथ्यते तदेव दलाकाशविभागकारि भविष्यति को दोषः ।

"ननु व्योमविभागकारिकर्म न द्रव्यारम्भकसंयोगप्रत्यनीकभूतविभागार-म्भकमम्भोरुहपल्लवकर्मवदि"त्युक्तम्, सत्युमुक्तम्, अयुक्तं तु शतपत्रपत्रकर्मणो ऽपि द्रव्यारम्भकसंयोगप्रतिकूलविभागारम्भकत्वात्तच्च कुड्मलकमलाद्विकचक कलस्यान्यत्वनिश्चयान्निश्चितम् ।

"ननु तदेवेदमरविन्दमिति सन्देहविपर्ययरहिततामरसप्रत्यभिज्ञादर्शनात्कथं सङ्कोचविकासदशामात्रभेदात्तदन्यत्वमि"ति, कृतमनया दुराशया शरीरेऽपि सुस्पष्टोपलभ्यमानशैशवयौवनवार्धकादिदशाभेदभिन्नस्वरूपे प्रत्यभिज्ञानदर्श-नात्, न च शरीरकुशेशयोर्विशेषलेशमपि पश्याम इति कुतस्तदेकत्वम्, भवतु वा पुण्डरीकस्याविनाशो निदर्शनमात्रमिदं तु वर्णितं न तु प्रतिबन्धः ( द्धः ? ) कश्चन हेतुरभ्यधायि, येन वंशदलकर्मणः कोकनदपल्लवकर्मसाम्यं कल्प्येत, क्रियात्वं त्वप्रयोजकमेव कर्मणां विचित्रकार्यहेतुत्वात्, यदि वा नान्यो वंशद-लविभागो नान्यश्च तत्कार्यो दलाकाशविभागः, किन्तु

एक एव विभागोऽयं भेदोऽस्याश्रयभेदतः ।
एकत्र देशेऽवस्थानाद्व्योम्नो वंशदलस्य च ॥
समानदेशे वृत्तित्वं मूर्तानां हि विरुद्ध्यते ।
व्योम्नः सर्वगतत्वात्तु विद्यते तत्र सन्निधिः ॥
एकदेशाश्रयत्वे तु यदेकस्माद्विभागकृत् ।
तदेवान्यत इत्यस्ति न विभागो विभागजः ॥

## प्रासाङ्गिको विभागगुणान्तरत्वनिरासः ।

अपरे पुनर्विभागजविभागपराकरणोपारूढरभसाः सङ्गिरन्ते—तिष्ठतु तावद् दूरत एव विभागजो विभागः, कर्मजोऽपि न विभागो नाम कश्चिदस्ति, संयोग विरोधिनि तस्मिन्नभ्युपगम्यमाने मुद्गरादिवत्पूर्वसिद्धताऽवश्यंभाविनी तत-श्च पूर्वसिद्धो विभागः संयोगमुन्मूलयतीति घटमुद्गरयोरिव संयोगविभा-

गयोरेकत्र युगदुपलब्धिर्भवेन्न चैवमस्ति, तस्मात्संयोगाभावविषय एव विभक्तप्रत्यय इति न विभागालम्बनतां प्रतिपद्यते, सत्यपि विभागे तस्मिन्क्षणे संयोगस्य विनाशान्न भवति विभक्तप्रतिभासः, क्षणान्तरे च संयोगविनाशे सति भवतीत्यन्वयव्यतिरेकाभ्यां संयोगाभावविषय एवावसीयते न प्रत्यक्षगम्यता विभागस्य, संयोगभङ्गलिङ्गेन च तत्परिकल्पनक्रियैव तं हिनस्तीति पुरस्तात्प्रतिपादितम्।

"कथं तर्हि विभागजत्वं शब्दस्य भाष्यकार उदाहृतवान्?" उच्यते त्रिविधं कारणं कार्योत्पत्तिं विधत्ते—समवायिकारणम् असमवायिकारणं निमित्तकारणं चेति, तत्र समवायिकारणं तदुच्यते यत्राश्रितं कार्यमुपलभ्यते यथा पटस्य तन्तवः, असमवायिकारणन्तु द्विविधं कार्यैकार्थसमवायलक्षणप्रत्यासत्त्या प्रत्यासन्नं कारणैकार्थसमवायलक्षणया वा, तत्र कार्यैकार्थसमवायेन प्रत्यासन्नं यथा पटस्य तन्तुसंयोगः, कारणैकार्थसमवायेन तु प्रत्यासन्नं यथा पटरूपस्य तन्तुरूपमिति, अवधृतसामर्थ्यं च तदसमवायिकारणमाश्रयणीयमतो बुद्धिजन्मनि सत्यप्येकार्थसमवाये नान्येषामात्मगुणानामिच्छादीनामसमवायिकारणत्वमपि त्ववधृतसामर्थ्यस्यात्ममनःसंयोगस्यैवेति, समवाय्यसमवायिव्यतिरिक्तं तु कार्योत्पत्तौ निर्ज्ञातसामर्थ्यं यत्कारणं तन्निमित्तकारणमुच्यते,—इत्येवं स्थिते शब्दस्य नित्यत्वे निरस्ते कार्यत्वे च साधिते तदुत्पत्तौ आकाशं समवायिकारणं निमित्तकारणानि तु भूयांसि सन्त्येवासमवायिकारणं तु चिन्त्यम्, तच्चाकाशाश्रितमवश्यमन्यथा प्रत्यासत्त्यभावात् तद्गुणान्तराणां च विभुत्वादीनामनवधृतशक्तित्वाद्वंशदलपाटनसमनन्तरं च शब्दोत्पाददर्शनादेवं मन्यामहे—

क्रिया यदैव संयोगं हन्ति वंशदलाश्रितम्।
तदैव गगने कञ्चित्करोत्यतिशयं ध्रुवम्॥
आकाशातिशयो यश्च क्रियाजः शब्दकारणम्।
असौ विभागनामेति शब्दे तज्जन्यतोच्यते॥

तदेवमेतद्यथागममाचार्यमतमभिहितमस्माभिः। एतच्च मतिमद्भिर्विचारणीयम्—किमाकाशातिशयमात्रमसमवायिकारणमुत यथा भेरीदण्डसंयोगकार्ये शब्दे भेरीगगनसंयोगस्यासमवायिकारणत्वमेवं वंशदलविभागकार्ये तस्मिन्दलगगनविभागस्येति, दलाकाशविभागोऽपि किं दलविभागज उत कर्मण एवेति, सर्वथा कश्चिदसाधारणो धर्मः संशयहेतुरुदाहर्तव्य इतीयता नः प्रयोजनम्।

विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिः, अस्त्यात्मेत्येके नास्त्यात्मेत्यपरे, सेयं विप्रतिपत्तिरुपलभ्यमाना विशेषस्मरणद्वारेण संशयमावहति, न चेह कश्चिदनुगतो व्यावृत्तो वा धर्मः संशयकारणमपि तु विप्रतिपत्तिरेवेति, अत्रापि त्रिरूपपरिग्रहेण लक्षणवर्णनमेकेनैव वा पदेनेति पूर्ववदाचार्यद्वयमतमनुसरणीयम्।

उपलब्ध्यव्यवस्थातः खल्वयं भवति संशयः, सच्चोदकमुपलभ्यते यथा ह्रदादिषु क्वचिदसच्च भास्करकरनिकरप्रतिफलतरलितासु मरुस्थलीषु, तदेवमुपलब्धेरव्यवस्थितत्वात् क्वचिदुपलभ्यमाने भवति संशयः–'किमिदं सदुपलभ्यते किमसदिति, अनुपलब्ध्यव्यवस्थातश्च भवति संशयः–'किंचिदसदेव नोपलभ्यते नभःकुसुमादि किंचित्सदपि नोपलभ्यते मृदन्तरितशङ्कुमूलकादितदन्यत्रानुपलभ्यमाने संशेते पुमान्किमिदमसदेव नोपलभ्येते उत सदिति' अव्यवस्थाशब्देनात्र पूर्वं पर्यायेण वृत्तसदसदाश्रितविशेषादर्शनं सूचितम्, इदानीं पुनरर्थक्रियासमर्थतादिविशेषदर्शनशून्यचेतसामुपलब्ध्यनुपलब्ध्यदर्शनमात्रोपपत्तेस्संशयो वर्ण्यते, न चैवं सति सर्वत्रानाश्वास इति शङ्कनीयम्, यथानुभवं संशयाभ्युपगमात्, सर्वत्र च तदुत्पादकविशेषाग्रहणतत्स्मरणादिकारणसान्निध्यासंभवादिति, अत्रापि पदत्रयेणैकेन वा पदेन लक्षणोपपादनं पूर्ववद् द्रष्टव्यम्। "ननु चोपलब्ध्यनुपलब्धी सदसतोः समान एव धर्म इति पूर्वेण गतार्थत्वम्" नैतत् पूर्वनिर्दिष्टस्योर्ध्वत्वादेर्धर्मस्य ज्ञेयस्थत्वादुपलब्ध्यनुपलब्ध्योश्च ज्ञातृस्थत्वात्, अत एव च मानसमिमं संशयमाचक्षते न बाह्यधर्मिसंबद्धसाधारणोर्ध्वतादिधर्माधिगमाधीनसंशयवद्बाह्येन्द्रियजम्। "ननु चोपलब्धित्वमनुपलब्धित्वं वाऽत्र संशयकारणं तद्धि न ज्ञातरि वर्तते किन्तु बुद्धाविति कथमयं विशेषः?" सत्यमेवं किन्तु समानधर्मोऽप्युपलब्धितादिको यदाश्रितो तद्धि बोद्धरि वर्तते अतो विशेषात्पृथगेव कथ्यते यथा ह्यसाधारणतासमाश्रयः, एवंप्रकारमेव च विशेषमाश्रित्य किञ्चित्पञ्चविधत्वं विपञ्च्यते, परमार्थतस्तु सर्वत्रानुगतसंबन्धो दुष्परिहरः विशेषस्मरणजन्यत्वात्संशयस्य विशेषाणां च येन सह पूर्वं दर्शनमभूत्तस्मिन्ननुपलभ्यमाने स्मरणासंभवात्, अतस्तस्यानेकविशेषानुगामित्वात्समानत्वात्समानत्वमपरिहार्यम्, अत एवाच्छिन्नसामान्यवाचिसमानशब्दं सामान्यलक्षणे व्याचख्युराचार्या इत्यलमतिविस्तरेण।

इति पञ्चविधः प्रपञ्चतो मुनिना दर्शित एष संशयः।
फलवद्व्यवहारहेतुतामनुमानाङ्गतया बिभर्ति यः॥
अनुमानिरपेक्ष एव वा किल दृष्टे विषयेऽर्थसंशयः।
वहति व्यवहारवर्त्तिनीमिति पूर्वं च विचारितं बुधैः॥

## इति(३) संशयपदार्थः।

## यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्॥
## ( गौ० अ० १ आ० १ सू० २४ )

'यमि'त्यत्र देशकालपुरुषदशाभेदभिन्नप्रयोजनविशेषव्याप्तये वीप्सा द्रष्ट

व्या। अर्थोऽर्थ्यमान उच्यते न वस्तुरूप एव अभावस्यापि प्रयोजनत्वसम्भवात्, अधिकारोऽर्थस्य व्यवसायः, यं यमर्थमाप्तव्यं हातव्यं वाधिकृत्य व्यवसाय प्रवर्तते तत्प्राप्तये परिहाराय वा चेष्टते पुरुषस्तत्प्रयोजनमिति, तच्च गौणमुख्यभेदेन द्विविधम्—मुख्यं सुखप्राप्तिर्दुःखपरिहारश्च, तत्साधनं गौणम्, सुखसाधनमपि चन्दनघनसारमहिलादि प्राप्तव्यत्वान्मुख्यत्वेन यदा विवक्षितं भवति तदा तदवाप्त्युपाये गौणता द्रष्टव्या।

तच्च प्रयोजनं देशकालपुरुषदशाभेदादव्यवस्थितम्, तद्यथा ग्रीष्मे मरुस्थले निशातमलातनिकरमिव किरति किरणमिषेण पूषणि तृषातुरस्य तुषारकणोत्करदन्तुरमम्बु परमं सुखसाधनं तदेव शिशिरे सकलजगत्कम्पकारिणि दारुणसमीरणशिथिलीकृतनीरेषु कश्मीरेषु श्लेष्मोपचयजनितजठरशिखिनः खेदाय जायते, तस्मादनियत एवायं सुखदुःखसाधनभावो भावानाम्, यद्यपि च यदेकदा सुखसाधनमिति विदितमुपयुक्तमतिक्रान्तं वस्तु तथापि तज्जातीयत्वलिङ्गावधृतसुखसाधनभावे भावान्तरेऽपि प्रवर्तन्त एव तदर्थिनः।

"ननु प्रयोजनस्य प्रवर्तकत्वमयुक्तं सदसद्विकल्पानुपपत्तेः—सत्त्वे कर्णनासादिवन्न तदर्था प्रवृत्तिरसत्त्वे तु खपुष्पादिवन्नतराम्"। नैष दोषः, ईप्साजिहासाविषयीकृतस्य प्रवर्तकत्वात्, न हि तत्खपुष्पादिवदसाध्यं नापि शिरःपाण्यादिवत्सिद्धमेव अपि तु साध्यत्वेन बुद्ध्युपारूढं तत्प्रवर्तकमिति युक्तम्, तदेव च वाक्यार्थ इति पूर्वमुक्तम्।

इत्थं प्रवर्तकत्वे प्रयोजनस्योपपादिते मुनिना।
भग्ना भवन्ति सर्वे प्रेरकपक्षाः पराभिहिताः॥
प्रयोजनमतोऽखिलैर्विधिवचोभिरादिश्यते
प्रयोजननिबन्धनास्तनुभृतामशेषाः क्रियाः।
क्रिमेरपि यथा तथा किमपि जीवितं बिभ्रतः
प्रयोजनबहिष्कृतं न खलु चेष्टितं दृश्यते॥
वैतण्डिकः प्रयतते निजपक्षसिद्ध्यै
तां चैष वेद परपक्षनिषेधलभ्याम्।
तस्मादियं स्वमतसाधनवर्जिताऽपि
युक्ता प्रयोजनवती भवितुं वितण्डा॥

## इति(४) प्रयोजनपदार्थः॥

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः॥**

**गौतमसूत्रम् अ० १ आ० १ सू० २५।**

लौकिकपरीक्षकौ वादिप्रतिवादिनौ दृष्टान्तप्रस्तावलक्षणाद्वेदितव्यौ न

तु मूर्खपण्डितौ प्रकृतासङ्गतेस्तयोश्च सङ्गत्यभावात्, तयोर्यस्मिन्नर्थे भावस्व भावेऽभावात्मके वा बुद्धिसाम्यं—प्रयोज्यप्रयोजकभावव्यवस्थितसाध्यसाधनधर्माधिकरणत्वे साध्यव्यावृत्तिपूर्वकसाधनधर्मव्यावृत्ततायां वा तुल्यरूपा बुद्धिः स दृष्टान्तः, तस्य तथाविधधर्माधारत्वं तद्रहितत्वं वा लक्ष्यमाणान्मन्तव्यं, यथा चानुमानलक्षणे 'तत्पूर्वकमि'ति प्रतिबन्धग्रहणोपायमात्रं प्रतिपादितं तत्स्वरूपं त्ववयवलक्षणे निर्णीत'मुदाहरणसाधर्म्यात्साध्यसाधनं हेतुस्तथा वैधर्म्यादि'ति, एवमिह वादिप्रतिवादिप्रसिद्धिमात्रं दृष्टान्तस्य दर्शितं, रूपं तु तस्य द्विविधमपि तत्रैव वक्ष्यते–'साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्, तद्विपर्ययाद्वा विपरीतमिति' अनित्यः शब्दः कृतकत्वाद् यत्कृतकं तदनित्यं दृष्टं यथा घट इति साधर्म्यदृष्टान्तः, यत्पुनरनित्यं न भवति तत्कृतकमपि न भवत्येव यथाऽऽकाश इति वैधर्म्यदृष्टान्तः, यथोक्तलक्षणवैकल्यात्तु दृष्टान्ताभासता इति ।

आभासभेदविभवात्कथयिष्यते तु तेषामुदाहरणलक्षणवाक्प्रसङ्गे ।
आभासता वचनदोषकृताऽपि काचिदस्तीति साऽवयवलक्षणएव वाच्या ॥
द्विविधोऽपि च दृष्टान्तः सुदृष्टिभिर्यत्नतोऽधिगन्तव्यः ।
स हि निश्चलः फलनिधेरनुमानमहातरोः स्कन्धः ॥

## इति (५)दृष्टान्तपदार्थः ॥

## तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥
### (गौ० अ० १ आ० १ सू० २६)

तन्त्र्यतेऽनेन पदार्थस्थितिरिति तन्त्रं प्रमाणमुच्यते, अधिकरणमाश्रयः, तन्त्रमधिकरणं यस्य स तन्त्राधिकरणः प्रमाणमूल इत्यर्थः, अभ्युपगमः स्वीकारः तस्य संस्थितिरित्थम्भावव्यवस्था धर्मनियमः, इदमिति सामान्यनिर्देश इत्थमिति विशेषः, एवं च तन्त्राधिकरणाभ्युपगमसंस्थितिः प्रमाणमूलाभ्युपगमव्यवस्था सिद्धान्त इत्युक्ते प्रमाणमूलाभ्युपगमविषयीकृतः सामान्यविशेषवानर्थः सिद्धान्त इति सामान्यलक्षणमुक्तं भवति । अन्ये तु व्याचक्षते—तन्त्रमितरेतरसंबद्धस्यार्थसमूहस्योपदेशः शास्त्रम्, अधिक्रियते इत्यधिकरणं पक्ष उच्यते, अभ्युपगमो यथोक्त एव, संस्थितिशब्दः प्रत्येकमभिसंबध्यते, तन्त्रसंस्थितिरधिकरणसंस्थितिरभ्युपगमसंस्थितिरित्यनेन तन्त्रनिर्देशसाम्यात्सर्वतन्त्रसिद्धान्तयोः सूचनमितराभ्यां पदाभ्यामुत्तरयोरधिकरणाभ्युपगमसिद्धान्तयोः–इति, एतत्त्वपव्याख्यानम्, न ह्येवं सिद्धान्तचतुष्टयानुगतं किंचित्सामान्यलक्षणमुक्तं भवति–न चेदं विभागार्थं विशेलक्षणार्थं वा सूत्रम्, तत्प्रतिपादनस्योत्तरसूत्रैः करिष्यमाणत्वादुक्तस्य च पुनर्वचने प्रयोज-

नाभावादतः पूर्वक्रमेणैव सिद्धान्तस्य सामान्यलक्षणवर्णनं श्रेयः। तस्य स्वकण्ठेन विभागमाह—

**स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ ( गौतमसूत्रम् अ० १ आ० १ सू० २७ )**

चतुष्प्रकारो हि सिद्धान्तः सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तः अभ्युपगमसिद्धान्तः। तत्र—

**सर्वतन्त्राविरुद्धः स्वतन्त्रेऽधिकृतोऽर्थः ( सर्वतन्त्रसिद्धान्तः १ ) ॥**
**( गौतमसूत्रम् अ० १ आ० १ सू० २८ )**

अत्र तन्त्रशब्देन शास्त्रमुच्यते, स्वशास्त्रे य उपदिष्टोऽर्थः सर्वशास्त्राविरुद्धश्च स सर्वतन्त्रसिद्धान्तः, यथा चाक्षुषं प्रमाणमिति, "नन्वत्रापि विवदन्ते ब्रह्मवादिनां हि सर्वैवेयमविद्या अविद्या च कथं प्रमाणमिति" न व्यवहारावस्थायां तैरपि तत्प्रामाण्याभ्युपगमात्, संख्यालक्षणविषयविप्रतिपत्तिस्तु प्रतिशास्त्रं भवतु, चाक्षुषं प्रमाणमितीयति सर्ववादिनामविवादः।

**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥**
**( गौतमसूत्रम् अ० १ आ० सू० २९ )**

तन्त्रेऽधिकृतोऽर्थ इति वर्तते, यथाऽस्माकमीश्वरेच्छाप्रेरितपरमाणुनिर्मितानि पृथिव्यादीनि समानतन्त्रे कणव्रतमते तथैव सिद्धानि परतन्त्रे च सांख्यादिशास्त्रे तथा नाभ्युपगम्यन्त इति, यथा वा गुणत्रयात्मिकायाः प्रकृतेर्महदहङ्कारादिक्रमेण भूतसर्ग इति सांख्यानां स्वतन्त्रसिद्धोऽर्थः समानतन्त्रेऽपि पातञ्जले योगशास्त्रे सिद्ध एव परतन्त्रे तु वैशेषिकादिमते न सिद्ध इति। "नन्वस्य कथं प्रमाणमूलता?" स्थाने प्रश्नः सत्यमेतत् आस्माकीने हि प्रतितन्त्रसिद्धान्ते प्रमाणमूलत्वं यथार्थमेव सांख्यसिद्धान्तस्तु प्रमाणमूलत्वाभावेऽपि परतन्त्रत्वख्यापनायोदाहृतः तदभिप्रायेण मूलता वक्तव्येति।

**यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥**
**( गौतमसूत्रम् अ० १ आ० १ सू० ३० )**

प्रक्रियते इति प्रकरणं पक्ष उच्यते, यस्यार्थस्य सिद्धौ सत्यां प्रकरणान्तरसिद्धिर्भवति सोऽधिकरणसिद्धान्तस्तदधिकरणानामर्थान्तराणां सिद्धेः।

"कः पुनर्यत्सिद्धाविति सर्वनाम्ना प्रत्यवमृश्यते पक्षो हेतुर्वा ? किं चातः, पक्षः कथं पक्षान्तरसिद्धये कल्पते, हेतुना हि पक्षसिद्धिः क्रियते पक्षेण,

हेतोस्त्वधिकरणसिद्धान्तत्वे कथं सिद्धान्ताश्रया न्यायप्रवृत्तिरिति तदुद्देशप्रयोजनं वर्णितम्, न्यायो हि हेतुरेव स एव चाधिकरणसिद्धान्तो न च हेतुर्हेत्वाश्रय" इति।

उच्यते-उभयथाऽप्यदोषः हेतुरपि कचित्पक्षीभवति, पक्षो हि हेतुर्भवत्येष तत्र तावदाञ्जस्येन हेत्वधीना पक्षसिद्धिरिति हेतुरेव सर्वनाम्नाऽवमृष्यते तत्सिद्धावन्यप्रकरणसिद्धेः स एवाधिकरणसिद्धान्तः।

"कथं तर्हि तदाश्रया न्यायप्रवृत्तिः ?" उच्यते-हेतुरपि तदन्यतराभिन्न इव साध्यमानत्वात्पक्षीभवन्न्यायान्तराश्रयतां प्रतिपत्स्यतेऽपि वा पक्ष एव सर्वनाम्नाऽवमृष्यमाणो भवत्वधिकरणसिद्धान्तः, स च स्पष्ट एव न्यायस्याश्रयः, स च सिद्ध्यै पक्षान्तराण्याक्षिपन्नेव सिद्ध्यतीत्यधिकरणसिद्धान्ततां भजते, तस्योदाहरणम्-'इन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादि'ति, अत्रेन्द्रियव्यतिरिक्ते ज्ञातरि सिद्ध्यति तदनुषङ्गोण्यर्थान्तराण्यपि सिध्यन्ति नानेन्द्रियाणि नियतविषयाणि गुणव्यतिरिक्तं द्रव्यमित्येवमादीनि॥

**अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः॥ (१।१।३१)**

अत्रापरीक्षिताभ्युपगमादिति यथाश्रुतपञ्चमीनिर्देशमनुरुध्यमानाः प्रमाणमूलाभ्युपगमविषयीकृतोऽर्थः सिद्धान्त इति च सामान्यलक्षणमनुसरन्तः केचिदेवं व्याचक्षते-धर्मिणः शब्दादेर्नित्यत्वविचारचर्चायामपरीक्षितस्यैवाकाशविशेषगुणत्वादिधर्मपरीक्षारहितस्यैवाभ्युपगमात् किं सिध्यति ? उच्यते-तद्विशेषपरीक्षणं तद्गतनित्यानित्यत्वपरीक्षणं हि सामान्येन धर्मिण्युपादीयमाने व्योमविशेषगुणत्वादिधर्मपरीक्षारहिते सत्युपपद्यते, यदि पुनराकाशविशेषगुणत्वविशिष्टः शब्दो धर्मित्वेनोपादीयते परं प्रत्यसिद्धविशेषणः पक्षो भवेदिति, एवमपि कृते यदि पुरो धर्मिणं विकल्पयेत्कीदृशस्य सतः शब्दस्य भवता नित्यत्वं साध्यते द्रव्यस्य गुणस्य वेति, स एवं विकल्पयन्नर्थान्तरगमनात्तावत्पराजित एव भवति, जितमप्येनं पुनर्जेतुं स्वबुद्ध्यतिशयचिख्यापविषया परबुद्ध्यवज्ञया च वादी ब्रवीति-'अस्तु द्रव्यं शब्द'-इति।

एतत्तु व्याख्यानं न बुद्ध्यामहे, एवं व्याचक्षाणानामेषामभ्युपगमसिद्धान्त इति को नु व्यवस्थित इति ? यदि तावदनित्यः शब्द इति, द्रव्यत्वगुणत्वादिविशेषरहितशब्दाख्यधर्मनिर्देशो यः प्रथममुपात्तः स एवाभ्युपगमसिद्धान्तस्तत्राभ्युपगमार्थः कीदृशः कश्च प्रतितन्त्रसिद्धान्तादस्य विशेषः ? अथास्तु द्रव्यं शब्दार्थ इति स्वबुद्ध्यतिशयाभिमानेन पश्चादभ्युपगम्यमानद्रव्यत्वविशिष्टशब्दनिर्देशोऽभ्युपगमसिद्धान्तस्तर्हि तत्र सूत्रमपरीक्षिताभ्युपगमादिति न योजितमन्यत्रैव तैः सूत्रार्थो नीत इति।

तस्मादेवं व्याख्यायते-अपरीक्षिताभ्युपगम एव स्वमतिकौशलेन क्रियमाणे-ऽभ्युपगमसिद्धान्तः अस्तु द्रव्यं शब्द इति, प्रमाणमूलाभ्युपगमविषयीकरणं तु सामान्यलक्षणे प्रौढवाद्यभिप्रायेण योज्यम्, द्रव्यत्वमपि प्रमाणमूलं शब्दस्य भवतु तथाऽपि तस्यानित्यत्वमिति किल निरवयवं द्रव्यमनित्यं नास्त्येव शब्दस्य तु तादृशस्याप्यनित्यत्वमहं साधयामीति, कथं तर्हि पञ्चमी? किं पञ्चम्या वस्तु तावदीदृशं यथा व्याख्यातमस्माभिः, पञ्चम्यपि चेत्थं योज्यते–किमर्थं पुनरयमपरीक्षित एव शब्दद्रव्यत्वाभ्युपगमः क्रियत इति पृच्छत उत्तरं पञ्चम्याभिधीयते यस्मादपरीक्षिताभ्युपगमात्तद्विशेषानित्यत्वपरीक्षणमवकल्पते तस्मादपरीक्षिताभ्युपगमोऽभ्युपगमसिद्धान्त इति, न तु तद्विशेषपरीक्षणमेव सामानाधिकरण्यनिर्देशादभ्युपगमसिद्धान्त इति मन्तव्यं परीक्षणस्य सिद्धान्ताश्रितत्वात्, तस्माद्विशेषपरीक्षणार्थोऽपरीक्षिताभ्युपगमः प्रौढवादिना क्रियमाणोऽभ्युपगमसिद्धान्त इति सूत्रार्थः, इत्थमेव च तत्र तत्र प्रावादुकानां व्यवहारः।

इमाश्च सिद्धान्तभिदाश्चतस्रो न्यायप्रवृत्तेः प्रथमं निमित्तम्।
प्रवर्तते नैव परीक्षकाणामनाश्रया न्यायकथा कदाचित्॥

इति (५) सिद्धान्तपदार्थः।

इह हि स्वयमवगतमर्थमनुमानेन परस्मै प्रतिपादयता साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तावान्प्रयोक्तव्यः, तमेव च परार्थमनुमानमाचक्षते नीतिविदः।

"ननु नैव परार्थमनुमानं नाम किंचिदस्ति वक्त्रपेक्षया श्रोत्रपेक्षया वा तदनुपपत्तेः,

वक्त्रान्वमायि स ह्यर्थो नेदानीमनुमीयते।
श्रोतुः स्वार्थानुमानं तद्वाक्यावगतिहेतुकम्॥
यथा प्रत्यक्षतो धूमं दृष्ट्वाऽग्निमधिगच्छति।
तथा तदीयाद्वचनादिति कस्य परार्थता॥
आगमस्त्वेष भिद्येत कश्चिदर्थोपदेशकः।
कश्चिच्चतत्प्रत्ययोपायन्यायमार्गोपदेशकः॥" इति।

सत्यम्, न परमार्थतः परार्थमनुमानमुपपद्यते किन्तु द्विविधः प्रतिपत्ता स्वयमवगतयथाप्रकृतलिङ्गव्याप्तिकस्तद्विपरीतश्च, तत्र स्वयमवधृतप्रतिबन्धं प्रति नोपदिश्यते एवमनुमानं स्वत एव तस्य प्रतीत्युत्पत्तेः, अनवधारितव्याप्तिकस्य तु व्याप्तिरेव व्युत्पाद्यत इति तं प्रति परार्थमनुमानं तदुपदेशकं वाक्यमेवाख्यायते, तथा हि–

वक्त्रा स्वप्रत्ययेनेदं न हि वाक्यं प्रयुज्यते।
परो मद्वचनादेव तमर्थं बुद्ध्यतामिति॥

किन्त्वेनमनुमानेन बोधयामीति मन्यते ।
सोऽपि तद्वचनान्नैव तमर्थमवबुध्यते ॥
किन्तु व्याप्तिमतो लिङ्गात्स्वयं तत्तु न पश्यति ।
तत्प्रतीत्यभ्युपायत्वात्परार्थमिदमुच्यते ॥

अतश्च श्रोतुः स्वार्थानुमानमेवेदं वक्ता तु तथा परं प्रतिपादयन्परार्थमनुमानं प्रयुङ्क्ते इत्युच्यते ।

न चानुवादमात्रं तद्वक्तुरित्युपपद्यते ।
यतो व्याप्रियते सम्यक्परस्य प्रतिपत्तये ॥

तेनानधिगतार्थोपदेशकत्वान्नानुवादमात्रं स्वागमापेक्षया त्वनुवादत्वे नेदानीमाप्तवचनमनुवादरूपं किंचिद्भवेत्सर्वस्य स्वोपलब्धिपूर्वकत्वादिति, तस्मात्परार्थानुमानवाक्योपपत्तेस्तदेकदेशा अवयवा युक्ता इति लक्ष्यन्ते—

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ (अ० १ आ० १ सू० ३२)**

एतच्च सूत्रमेकमेव सामान्यलक्षणमवयवानामभिधत्ते, विभागं च प्रमाणानामिव प्रत्यक्षानुमानोपमानशब्दाः साधनीयार्थप्रतिपत्तिपर्यन्तवचनकलापैकदेशत्वमवयवानां सामान्यलक्षणमाचष्टे । यद्यपि चैकवक्तृवचननिर्गतानां निसर्गभङ्गुराणामदीर्घायुषामपरिहार्यक्रमजन्मनां द्रुमाणामिव पारमार्थिकस्समूहो न समस्त्येव, तथाऽपि सिषाधयिषितार्थप्रतिपादनरूपैककार्योपयोगमूलीकृतात्मनां तेषां काल्पनिकः कलापः पूर्वमेव वाक्यकल्पनावसरे समर्थित इति तदङ्गा अपि संभवन्त्येव । न च पदानामेवानुमानवाक्यावयवत्वम्, अपि तु खण्डवाक्यानामेकेन पदेन प्रतिज्ञोदाहरणादीनामभिधातुमशक्यत्वात्, हेतुवचनं त्वेकमपि पदं क्वचिद्भवति कृतकत्वादिति, तदपि वा सविशेषणं प्रयुज्यमानं पदसमुदायेनैव प्रतिपाद्यते वस्तुत्वे सति कृतकत्वादिति, उदाहरणवचनमपि पटवदित्येवमालस्यादेव प्रयुज्यते तद्धि व्याप्तिदर्शनायैव वक्तव्यं यत्कृतकं तदनित्यं दृष्टं यथा घट इति, तस्मादवयवानामवयवत्वमेव लक्षणं न पदत्वम्, विभागो ऽपि प्रतिज्ञादिपदसन्निधाववयवश्रुतेरेवावगम्यते प्रतिज्ञादयः पञ्चावयवा न न्यूनातिरिक्ता इति । "नन्वत्र विवदन्ते केचिन्न्यूनतामवयवानामाचक्षते त्र्यवयवं द्व्यवयवं वा साधनवाक्यं वदन्तः, अन्ये तु जिज्ञासा संशयः प्रयोजनं संशयव्युदास इति पञ्चभिस्सह प्रतिज्ञादीन् दशावयवानाहुः" । उच्यते—न्यूनता यथाऽवसरं प्रतिसमाधास्यते, आधिक्यमप्ययुक्तं जिज्ञासादीनामशब्दस्वभावत्वेन वाक्यावयवत्वायोगात्, तथा ह्यप्रतीयमानेऽर्थे प्रतीतिप्रयोजनस्य प्रवर्तिका जिज्ञासा सा चेच्छास्वभावत्वादान्तरः प्रमातृधर्मो न वाक्यावयवः, अर्थक्रियासाधनेऽर्थे विमर्शः संशयः किमेवमयमथ वैवमिति ज्ञानात्मकत्वान्न वाक्यावयवः,

प्रमातुः प्रमाणानि प्रवर्तमानानि प्रमेयमर्पयितुं पारयन्तीति सम्भावना शक्यप्राप्तिः साऽपि तथैव न वाक्यावयवं स्पृशेत्, (तत्त्वावधारणफलात्मकं प्रयोजनमपि न वाक्यैकदेशः ?) संशयव्युदासस्तु प्रतिपक्षोपालम्भः, स च वचनस्वभावत्वेऽपि न साधनवाक्यावयवः किन्तु, वाक्यान्तरमेवेति न साधनवाक्यस्यावययवत्वं प्रतिपद्यते, तदिमे संशयादयः प्रवृत्तिहेतवो भव न्ति न वाक्यावयवा इति सूक्तं प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति। तेषाम्—

साध्यनिर्देशः प्रतिज्ञा ॥ ( १।१।३३ )

प्रतिज्ञेति लक्ष्यनिर्देशः, साध्यनिर्देश इति लक्षणम्, शुद्धस्य धर्मिणो धर्मस्य वा द्वयोर्वा स्वतन्त्रयोर्धर्मिविशिष्टस्य वा धर्मस्य साध्यत्वानुपपत्तेः धर्मविशिष्टो धर्मी साध्य इत्युमानलक्षणे निर्णीतमेतत्, तस्य निर्देशः परिग्रहवचनं प्रतिज्ञेति। "ननु सावधारणत्वाद्वाक्यानां किं साध्यनिर्देश एव प्रतिज्ञेत्यवधारणमुत प्रतिज्ञैव साध्यनिर्देश इति, यदि साध्यनिर्देश एव प्रतिज्ञेत्यवधार्यते तदा यत एवकारकरणं ततोऽन्यत्रावधारणमिति प्रतिज्ञा नियम्यते साध्यनिर्देशं मा त्याक्षीदिति, साध्यनिर्देशस्त्वनियमित इति प्रतिज्ञामपहायापि भवेदित्यतिव्यापकं लक्षणम्, अथ प्रतिज्ञैव साध्यनिर्देश इत्यवधार्यते ततः साध्यनिर्देशो नियम्यते प्रतिज्ञां मा त्याक्षीदिति प्रतिज्ञा त्वनियमितेति साध्यनिर्देशमपहायापि भवेदिति साध्यनिर्देशेन प्रतिज्ञाया अव्याप्तत्वादव्यापकं लक्षणमि"ति। तदेतदयुक्तम्—न हि सर्वं वाक्यं सावधारणं भवति यथैव पन्थाः स्रुघ्नं गच्छतीति न हि तत्रैष एवेति स्रुघ्नमेवेति वा गच्छत्येवेति वा नियन्तुं शक्यते इति। अथाप्यवधारणमवश्याश्रयणीयं तद्भवतु साध्यनिर्देश एव प्रतिज्ञेति, न चातिव्याप्तिः प्रतिज्ञामपहायान्यत्र साध्यनिर्देशस्यादर्शनात्, अनियमितोऽप्यसावन्यत्र न दृश्यत एवेति तस्मात्साध्यनिर्देश एव प्रतिज्ञेति स्थितम्, तद्यथा अनित्यः शब्द इति। "नन्वत्रापि किमनित्य एवेत्यवधारणमुत शब्द एवानित्य इति, तत्रानित्य एव शब्द इत्युक्ते तद्गतधर्मान्तरतिरस्कारात्कृतकत्वमपि तत्र न भवेदित्यसिद्धो हेतुः, शब्द एवानित्य इति त्ववधार्यमाणे घटादावनित्यत्वप्रतिषेधादन्वयशून्यता हेतोः स्यादिति"। नैष दोषः, निरवधारणस्यापि वचनप्रयोगस्य दर्शितत्वात्, अनित्य एव शब्द इत्यवधारणे वा नानित्यत्वव्यतिरिक्ततदविरुद्धकृतकत्वाद्यशेषधर्मान्तरनिषेधस्तत्र विधीयते किन्तु तद्विरुद्धनित्यत्वमात्रनिषेध एवानित्य एव शब्दो न नित्य इत्यर्थः, तदुक्तम्—

नियमस्तद्विरुद्धाच्च कल्प्यते नाविरोधिनः। इति।

तस्मान्न हेतोरसिद्धत्वम्। "ननु साधनवाक्ये प्रतिज्ञावचनमसमञ्जसमसाधनाङ्गवचनत्वात्, हेतुदृष्टान्तवचनाभ्यां हि साध्यसिद्धेस्ते एव वक्तव्यो-

न च स्वप्रतिपत्तावुपलब्धं सर्वमेव परस्मै आख्येयम्, आख्याने वा धर्मिमात्रमाख्यायताम्, स्वप्रतिपत्तौ हि पूर्वं पर्वतादेः शुद्धस्य धर्मिणो ग्रहणं न तु सिषाधयिषितहुतवहादिधर्मविशेषरूषितवपुषः, एवमभ्युपगमेऽनुमानवैफल्यप्रसङ्गादतः कथं प्रथममेव साध्यधर्माध्यासितस्वरूपधर्मिनिर्देशकरणम्, अपि च विवादादेव प्रतिज्ञार्थो लभ्यते इति किं स्वकण्ठोक्तेन तेन प्रयोजनम्।" उच्यते-स्वप्रत्तिपतिमनुसरता परस्य प्रतिपत्तिरुत्पादनीयेति स्वप्रतिपत्तौ प्रथममुपलब्धो धर्मी तावदाख्येय एवानुद्देश्यमाने हि धर्मिणि निरधिकरणो हेतुः क्व साध्यं साधयेत्, धर्म्यनवच्छिन्ने च धर्ममात्रेऽनुमानमनर्थकमविवादसिद्धत्वात्, अस्ति हि यत्र कचिदनित्यत्वमित्याश्रयासिद्धश्च धर्मिनिर्देशाद्विना हेतुर्भवेदित्यवश्यनिर्देश्यो धर्मः, यद्यपि च धर्मिमात्रदर्शनमेव प्रथममभूत्तथाऽपि किं साधयितुं हेतुः प्रयुक्तो भवेदित्युपप्लवशमनाय साध्यधर्मनिर्देशोऽपि कर्तव्यः, शब्दः कृतकत्वादिति हि प्रयुज्यमानं तदिदमन्धपदमिव साधनं भवेत्। "अथ व्याप्तिप्रदर्शननिपुणेन यत्कृतकं तदनित्यं दृष्टमिति दृष्टान्तवचसा, तस्मादनित्य इति निगमनवचनेन वा विरंस्यति स उपप्लव इति" तत्रापि श्रोतृबुभुत्सोपरमपरिश्रमफले साधनवाक्ये साधनाधिगमकाङ्क्षासमुत्पादनाय साध्यं निर्देष्टव्यं, न हि शब्द इत्येतावत्युक्ते तत्र साधनमाकाङ्क्षति कश्चिदिति साधनवचनावसरतत्प्रयोगसाफल्योत्पादनायैव नूनमनित्यः शब्द इति प्रतिज्ञावचनं प्रयोक्तव्यम्, यच्च विवादादेव प्रतिज्ञार्थस्य लब्धत्वमभिधीयते, तदभ्युपगमनमेव शब्दान्तरेण प्रतिज्ञायाः, यतो विरुद्धो वादो विवाद एक आह नित्यः शब्द इतरस्त्वनित्य इत्याह सोऽयं पक्षप्रतिपक्षपरिग्रहो विवादः प्रतिज्ञैव, स तु पक्षप्रतिपक्षपरिग्रहस्तदहरेव भवतु दिनान्तरे वेति किमनेन विशेषेण, तस्मादपरिहार्यं प्रतिज्ञावचनमिति सिद्धम्, प्रतिज्ञैव च पक्ष इत्युच्यते। तदेवंविधे पक्षलक्षणे प्रदर्शिते बलात्पक्षाभासाः प्रतिक्षिप्ता भवन्ति, तद्यथाऽनुष्णोऽग्निरिति प्रत्यक्षविरुद्धः पक्षः, न रूपग्राहि चक्षुरित्यनुमानविरुद्धः, शब्दविरुद्धस्तु बहुशाखः-ब्राह्मणेन सुरा पेयेत्यागमविरुद्धः, जनित्री मे वन्ध्या, पिता मे ब्रह्मचारीति धर्मधर्मिपदयोरेव विप्रतिषेधात्स्ववचनविरुद्धः, न चन्द्रः शशीति लोकप्रसिद्धिविरुद्धः, उपमानविरुद्धस्तु न गवयशब्दवाच्योऽयं गोसदृश इति, अप्रसिद्धविशेषणो नभःकुसुमकृतावतंसश्चैत्र इति, अप्रसिद्धविशेष्यः सुगन्धि गगनकमलमिति, अप्रसिद्धोभयः खपुष्पकृतशेखरो वन्ध्यासुत इति, यत्रापि विशेषणविशेष्ययोः प्रमाणान्तरतः स्वरूपं निश्चितमेव तन्निर्देशोऽपि पक्षाभास एव शीतं तुहिनमुष्णोऽग्निरिति साध्यत्वाभावेनानुमानप्रयोगावसरविरहादितीयमेव च सा सिद्धसाध्यतोच्यते इति, ये चैते प्रत्यक्षविरुद्धतादयः पक्षदोषाः, ये च वक्ष्यमाणाः साधनविकलत्वादयो दृष्टान्तदोषास्ते वस्तुस्थित्या सर्वे हेतुदोषा एव प्र-

पञ्चमात्रं तु पक्षदृष्टान्तदोषवर्णनम्, दृष्टान्तदुष्टतया च हेतोरेव लक्षणमन्वयव्यतिरेकयोरन्यतरद्धीयते इति सर्वे च ते हेतु दोषा एव।

अत एव च शास्त्रे ऽस्मिन्मुनिना तत्त्वदर्शिना।
पक्षाभासादयो नोक्ता हेत्वाभासास्तु दर्शिताः॥
कश्चिद्धेत्वनपेक्षोऽपि पक्षमात्रप्रतिष्ठितः।
बाधोऽनुमानरूपस्य स्ववाक्यादिकृतो यथा॥

एवंलक्षणको हेतुरिति तत्स्वरूपावधारणे सति तदभिधायकं वचनं सुखमेव लक्ष्यते इत्यर्थात्मकहेतुलक्षणं तावदुच्यते—

उदाहरणसाधर्म्यात्साध्यसाधनं हेतुरिति॥ ( १।१।३४ )

"नन्वर्थात्मको हेतुरनुमानं तच्च लक्षितमेव पूर्वं तत्पूर्वकं त्रिविधमनुमानमिति"। सत्यं तस्य तत्पूर्वकमिति सर्वनामपरामृष्टप्रत्यक्षमूलतोपवर्णनेन प्रतिबन्धपरिच्छेदोपायमात्रनिरूपणं कृतमिह तु प्रतिबन्धस्वरूपमपि प्रतिपाद्यते, तत्रार्थात्मके हेतौ लक्ष्ये पञ्चमीमपास्योदाहरणसाधर्म्ये साध्यसाधनं हेतुरिति सूत्रं पठन्ति, व्याचक्षते च-साधर्म्यं हेतुरित्युच्यमाने गन्धवत्त्वादेरसाधारणहेतोः साध्यधर्मिव्यक्तिभेदवृत्तित्वेन साधर्म्यरूपसंभवाद्विरुद्धस्य पक्षविपक्षवृत्तेस्तत्साधर्म्यस्वभावत्वाद्धेतुत्वं प्रसज्यत इति तन्निवृत्त्यर्थमुदाहरणग्रहणम्, उदाह्रियतेऽस्मिन्साध्यसाधनयोः प्रयोज्यप्रयोजकभाव इत्युदाहरणं दृष्टान्तः तेन साधर्म्यं, कस्येति ? प्रकृतत्वात्प्रत्यासत्तेश्च साध्यस्य धर्मिण इत्यवगम्यते, उदाहरणसाधर्म्यं साध्यदृष्टान्तधर्मिसाधारणो धर्मो हेतुरिति नासाधारणादौ तथात्वप्रसक्तिरिति, एवमपि प्रमेयत्वादेरनैकान्तिकहेतोस्तथा भागासिद्धस्यानित्यत्वसिद्धये चतुर्विधपरमाणुपक्षीकरणे गन्धवत्त्वादेः प्रकरणसमकालात्ययापदिष्टयोश्चोदाहरणसाधर्म्यसम्भवाद्धेतुत्वं भवेदिति तद्व्यवच्छेदाय साध्यसाधनग्रहणम्, साध्यदृष्टान्तधर्मिणोश्च समानो धर्मः साध्योऽप्यनित्यत्वादिः भवत्येवेति तस्यापि हेतुता मा प्रसाङ्क्षीदिति साध्यसाधनग्रहणम्, लिङ्गसामान्यलाभार्थं साध्यसाधनं यदुदाहरणसाधर्म्यं स हेतुरिति, साध्यसाधनपदेन च प्रतिबन्धो लक्ष्यते स च सव्यभिचारादिषु नास्तीति न ते हेतवः, प्रतिबन्धश्च पञ्चलक्षणक इत्येकैकलक्षणाभावकृतहेत्वाभासपञ्चकनिर्देशादेव सूचितवानाचार्यः। "नन्वेवं तर्हि साध्यसाधनग्रहणमेव हेतुलक्षणमस्तु तद्धि सकलहेत्वाभासव्युदाससमर्थमिति किमुदाहरणसाधर्म्यग्रहणेन ?" समानजातीयव्यवच्छेदार्थत्वात्, अहेतवो हि विजातीयास्तद्व्यवच्छेदः साध्यसाधनग्रहणात्समानजातीयस्य केवलव्यतिरेकिणो व्यवच्छेदायोदाहरणसाधर्म्यग्रहणमिति। "तत्किं केवलान्वयी हेतुरिति लक्ष्यत्वे न विवक्षितः ?" न तथाविधस्य हेतोरभावात् अन्वयव्यतिरे-

कलद्वयमत्रोदाहरणसाधर्म्यं वैधर्म्यसम्भवे तु सति साधर्म्यमप्यस्त्येवेति, न सावधारणं वा विशेषविधिरूपेणैवेदमुदाहरणसाधर्म्यग्रहणं केवलान्वयिलक्षणं वर्णनीयमिति । "ननु यदि द्विविधो हेतुरिष्यते तर्हि सामान्यलक्षणमादौ वक्तव्यं ततो विशेषलक्षणमिति"। उच्यते–साध्यसाधनग्रहणमेव प्रतिबन्धसूचकं सामान्यलक्षणं भविष्यति, उदाहरणसाधर्म्यग्रहणं त्वन्वयव्यतिरेकिणो लक्षणमुत्तरसूत्रं च केवलव्यतिरेकिणः, केवलान्वयी हेतुर्नास्त्येवेत्येवं पञ्चमीमुपेद्यार्थात्मकहेतुलक्षणमाचख्युः । अपि वा भवतु तत्रापि संशयव्यवच्छेदफलः पञ्चमीपाठः,कश्चिदेवमभिदधीत—साध्यसाधनमिति पर्यायपठनमात्रमेतन्न हेतुलक्षणम् , अपि च यत्रैव दृष्टान्तधर्मिणि हेतुधर्मप्रयुक्ततया साध्यधर्मोऽवधारितस्तत्रैव पुनरसावुपलभ्यमानस्तमुपस्थापयतु धर्म्यन्तरे तु तदुपलम्भाद्भवतु संशयः–'किं तत्साध्याविनाभूतमिह हेतोस्सत्त्वमुतान्यथे'ति, अस्येदमुत्तरमुच्यते उदाहरणसाधर्म्यादिति । अयमर्थः—देशकालव्यक्तिविशेषाणां व्यभिचारान्न तेषु प्रतिबन्धावधारणमपि तु सामान्यधर्मयोरेव,

व्यक्तिभेदाश्रयत्वे हि नैव व्याप्तिग्रहो भवेत् ।
दृष्टान्तेऽप्यभ्यनुज्ञैवं भवता दीयते कथम् ॥

तदभ्यनुज्ञानात्तु सामान्येन व्याप्तिग्रहणमङ्गीकृतमेव भवति । तस्मिंश्च सत्युदाहरणसाधर्म्यात्साध्यसाधनमेव भवति न संशयः संशयस्य विशेषग्रहणकारणकत्वादिह चोदाहरणसाधर्म्यपदोपात्तं लिङ्गसामान्यमेव विशेषो गृह्यते इति कुतः संशयः, साध्यसाधनपदमपि न पर्यायमात्रमपि तु पञ्चलक्षणकप्रतिबन्धसूचनेन हेतोः हेतुत्वसमर्थनार्थमेतत् , कस्माद्धेतुर्हेतुर्भवति साध्यसाधनत्वाद्गमकत्वादित्यर्थः, साध्यसाधनता चास्य पञ्चलक्षणकात्प्रतिबन्धाद्विना न निर्वहतीत्यसौ साध्यसाधनपदेन लक्ष्यते, सोऽपि च प्रयोज्यप्रयोजकभावगर्भस्साधनताङ्गतामेतीति तथाविध एव सूच्यते, अत एव चाप्रयोजक एवैकः परमार्थतो हेत्वाभास इति वक्ष्यते, तदिदमीदृशं साध्यसाधनत्वं हेतोः कुतो भवतीत्युदाहरणसाधर्म्यादिति संशयं व्यवच्छिन्दन्त्या पञ्चम्या कथ्यते, अतश्च यदुच्यते परैः 'साधर्म्यं यदि हेतुः स्यान्न वाक्यांशो न पञ्चमी'ति तदिदमनुपपन्नम् , पञ्चम्या अर्थात्मकत्वे हेतावनुपयोगात्तत्रापि वा तस्याः समर्थितत्वात् , वाक्यांशे लक्षणान्तरकरणात् तच्चेदमिदानीमुच्यते उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः, यद्यपि च ज्ञानस्याप्युदाहरणसाधर्म्यात्कर्मभूतात्करणात्मकत्वाद्वा भवत्यभिनिर्वृत्तिस्तथापि वाक्यावयवप्रकरणसामर्थ्याद् वचनमवसीयते । "यदि वाक्यावयवप्रकरणमिदं किमर्थं तर्ह्यर्थव्युत्पादनम्" उक्तमत्र तदौपयिकत्वाद् इति, "साध्यसाधनग्रहणं वचनलक्षणे किमर्थम् ? हेत्वाभासवचननिरसनमर्थात्मकहेतुलक्षणादेव हि सिद्धम्" न हेत्वाभासवचनव्यवच्छेदकं पक्षधर्मव-

चनं कृतकत्वादित्येवमादि प्रयोक्तव्यमपि तु हेतुविभक्त्यन्तं कृतकत्वादित्येवमादि प्रयोक्तव्यमिति कृतकत्वेनेति कृतकोऽयमस्मादिति वाऽभिधातव्यमेवं हि तत्साध्यसाधनं भवतीति ॥

तथा वैधर्म्यात् ॥ ( १।१।३५ )

उदाहरणग्रहणमनुवर्तते साध्यसाधनमिति च, एतच्च तथाशब्दोपादानसामर्थ्याद्गम्यते उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः, अत्राप्यर्थात्मकहेतुपूर्वकत्वाद्वचनस्यार्थात्मक एव हेतुः प्रथमं लक्ष्यते इति तल्लक्षणाय पूर्ववत्पञ्चमीपाठशून्यमेव सूत्रं वर्णयन्ति, वैधर्म्यं हेतुरित्युच्यमाने पक्षवैधर्म्यस्यापि विपक्षवृत्तेरशेषाश्वव्यक्तिपक्षीकरणे तुरगा इमे विषाणादित्येवमादेर्हेतुत्वं स्यादित्युदाहरणग्रहणम्, तथाऽप्यसाधारणादेरुदाहरणवैधर्म्यस्य हेतुता प्रसज्यते इति पूर्ववत्साध्यसाधनग्रहणं प्रतिबन्धसूचके सकलहेत्वाभासव्यवच्छेदके योजनीयम्, तस्मादेव सकलहेत्वाभासव्यवच्छेदसिद्धेरुदाहरणवैधर्म्यग्रहणं समानजातीयान्वयव्यतिरेकिहेतुव्यवच्छेदसिद्धये व्याख्येयम्।

"ननु च वैधर्म्यशब्दः केवलान्वयिनमेव हेतुमव्यतिरेकं व्यवच्छेत्तुमलं, तस्य वैधर्म्यशून्यत्वादन्वयव्यतिरेकिणोस्तु हेत्वोरुदाहरणसाधर्म्यस्यापि भावात्कथमनेन व्यावर्तनम्?"

उच्यते—

वैधर्म्यशब्दोपादानात्केवलान्वयिनो यथा।
निवृत्तिर्गम्यते तद्वदन्वयव्यतिरेकिणः॥
साध्यसाधनशब्दो हि प्रतिबन्धोपलक्षणः।
व्याख्यातः प्रतिबन्धश्च व्यतिरेकान्वयात्मकः॥
वैधर्म्यसाधनेऽप्यस्मिन् स एव यदि वर्ण्यते।
पूर्वत्र कथनाद्व्यर्थं वैधर्म्यग्रहणं भवेत्॥
केवलव्यतिरेकाख्यप्रतिबन्धाभिधित्सया।
वैधर्म्यवचनं तस्मात्सफलं व्यवतिष्ठते॥
अध्याहृतैवकारं वा तद्व्युदासाय पठ्यताम्।
विशेषविधिरूपेण व्याख्यानं वा विधीयताम्॥
केवलान्वयिहेतुश्च न कश्चिदुपलभ्यते।
तेन पूर्वोक्त एवास्य व्यवच्छेद्यो भविष्यति॥

"नन्वेवं तर्ह्यनेनैव न्यायेन पूर्वसूत्रं केवलान्वयिलक्षणार्थं स्यात्, यथेह वैधर्म्यग्रहणं साधर्म्यव्यवच्छेदकमेवं तत्र साधर्म्यग्रहणं वैधर्म्यव्यवच्छेदाय स्यादिति"। उक्तमत्र न केवलान्वयी नाम हेतुः संभवतीत्यलक्षणीय एवासौ, तदेवमन्वयव्यतिरेकवतो हेतोर्लक्षणाय पूर्वसूत्रमिदं तु केवलव्यतिरेकिलक्षणाये-

ति स्थितम् , अर्थात्मकहेतुलक्षणपक्षेऽपि पञ्चमीपाठः पूर्ववत्संशयपराकरण-फलत्वेन वर्णनीयः, वचनात्मकहेतुलक्षणेऽपि तथैव सूत्रं योज्यम् , यथोक्तवै-धर्म्यात्प्रवृत्तं वचनं साध्यसाधनं हेतविभक्त्यन्तं प्रयोक्तव्यमित्यर्थः ।

## केवलव्यतिरेक्याक्षेपः ।

तदेतदाक्षिपन्ति "लक्ष्ये सति लक्षणं वक्तव्यं भवति केवलव्यतिरेकी तु नाम न सम स्त्येव हेतुरिति कस्येदं लक्षणमुच्यते ? प्रतिबन्धेन हि हेतोर्गमक-त्वमुक्तं प्रतिबन्धश्च पञ्चलक्षणको व्याख्यातः, एकैकलक्षणविरहनिबन्धनाश्च पञ्च हेत्वाभासा भविष्यन्ति,तत्पक्षधर्मत्वविरहिण इवासिद्धस्य हेतोरन्वयशून्य-स्याऽपि (न)हेतुता युक्ता केवलव्यतिरेकमात्रशरणेन हेतुना साध्यसिद्धौ तथावि-धहेतुसुभिक्षसंभवाद्यस्मै रोचते स तत्सर्वं साधयेत् , असाधारणस्य वा किमि-ति (न?) हेतुत्वं, व्यतिरेकवतोऽपि संशयः–'साध्याभावकृता तस्माद्व्यावृत्तिरुत वाऽन्यथा', अन्वये हि क्वचिद्गृहीतेऽन्यत्र हेतुव्यावृत्तिरवगम्यमाना साध्यव्या-वृत्तिकृतैवेत्यवधार्यते नेतरथा, इत्थमेव संदिग्धव्यतिरेकता व्यावर्तते नान्यथेति,

संदिग्धव्यतिरेके च साध्यसाधनता कथम् ।
लक्ष्याभावादतश्चेदं कथ्यते तस्य लक्षणम् ॥

तस्मान्न साधनग्रहणेन हेतुद्वयसामान्यलक्षणमभिधायोदाहरणसाधर्म्यग्रह-णेनान्वयव्यतिरेकिणो लक्षणमुदाहरणवैधर्म्यग्रहणेन च केवलव्यतिरेकिणो वर्णनीयमपि तु सूत्रद्वयेनैतस्यैवाऽन्वयव्यतिरेकवतो हेतोर्लक्षणं व्याख्येयम् । अन्वयव्यतिरेकयोर्गमकाङ्गत्वादेकेनान्वयनिरूपणमपरेण च सूत्रेणाव्यतिरेक-व्युत्पादनम् , अत एव च भाष्यकारः 'किमेतावद्धेतुलक्षणं नेत्युच्यते तथा वैध-र्म्या'दित्येकवाक्यतयैव व्याख्यातवान् , उदाहरणमपि च सूत्रद्वये तुल्यमेवान्वय-व्यतिरेकिहेतोरुक्तवा'नुत्पत्तिधर्मकत्वादि"ति ।

## केवलव्यतिरेकिस्थापनम् ।

अत्र वदन्ति–यदि वयं यं कंचन शुष्कमेव केवलव्यतिरेकिणं हेतुमुपग-च्छेम तत एवमनुयुज्येमहि किन्त्वन्वयव्यतिरेकवानेव हेतुः क्वचित्साध्यवि-शेषे विशेषणविशेषवशात्केवलव्यतिरेकितामवलम्बत इति ब्रूमः, तद्यथेच्छा-दिगतं कार्यत्वमात्मसिद्धौ, तत्र हि कार्यत्वमाश्रितत्वमात्रेण व्याप्तमुपलब्धमन्व-यव्यतिरेकयुक्तमेव घटादेः कार्यस्याश्रितस्य दृष्टत्वात् , यत्र ह्याश्रितत्वं नास्ति तत्र कार्यत्वमपि नास्त्येव व्योमादौ, सोऽयमन्वव्यतिरेकवानेव हेतुर्यदा परिदृ-श्यमानशरीराद्याश्रयव्यतिरिक्ताश्रयाश्रितत्वे साध्ये देहादिषु बाधकोपपत्तौ सत्यां ( विलक्षण? )कार्यत्वादिति सविशेषणः प्रयुज्यते तदा केवलव्यतिरेकी सम्पद्यते, देहादिव्यतिरिक्तस्याश्रयस्यात्मनो नित्यपरोक्षत्वेनान्वयानुपलम्भा-

दिति, ईदृशस्य चान्वयमूलस्य तस्यां दशायां केवलव्यतिरेकितामुपगतस्य हेतुत्वानुपगमान्न पूर्वोक्तदोषावसरः, न हीदृशा हेतुना सर्वः सर्वं साधयितुमुत्सहते, न चासाधारणस्य हेतुत्वमित्थं स्थिते प्रसज्यते, पक्षलक्षणत्वमपि पूर्वाश्रयापेक्षमस्य भविष्यति, यच्च संदिग्धव्यतिरेकित्वमाशङ्कितं तद्व्यन्वयव्यतिरेकमूले केवलव्यतिरेकिणि निरवकाशं कार्यस्याश्रितस्योपलम्भादाश्रितत्वव्यावृत्त्या व्योमादौ च कार्यत्वव्यावृत्तिदर्शनादिदानीं घटादौ शरीरे वा सविशेषणकार्यत्वव्यावृत्तिर्दृश्यमाना विशिष्टाश्रयव्यावृत्तिगतैवावगम्यते इति न संदिग्धो व्यतिरेकः, एतच्चात्मसिद्धिप्रसङ्गे निर्णीतमिति निरपवादः केवलव्यतिरेकी हेतुरस्त्येव लक्ष्यते इति तल्लक्षणार्थमुत्तरसूत्रमन्वयव्यतिरेकिहेतुलक्षणार्थं च सूत्रं, केवलान्वयी हेतुर्नास्त्येव, सामान्यलक्षणं त्वनुमानलक्षणात्साध्यसाधनपदाद्वाऽवगन्तव्यम्, भाष्याक्षराणि तु कथमप्युपेक्षिष्यामहे । अथवा यथाकथंचिद्वा व्याख्यास्यामः, केवलव्यतिरेकिणं त्वीदृशमात्मादिप्रसाधने परममस्त्रमुपेक्षितुं न शक्नुम इत्ययथाभाष्यमपि व्याख्यानं श्रेयः ॥

**साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ( १।१।३६ )**

यथा 'तत्पूर्वकमनुमानमि'त्यत्र प्रतिबन्धग्रहणोपायमात्रं प्रतिपादितमिह तु प्रतिबन्धस्वरूपमुदाहरणसाधर्म्यवैधर्म्ययुक्तमेवं लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः इत्यत्र वादिप्रतिवादिप्रतिपन्नत्वं द्विविधस्यापि दृष्टान्तस्य सामान्यलक्षणमुक्तमिह तु प्रयोज्यप्रयोजकभावव्यवस्थितसाध्यसाधनधर्माधिकरणत्वमेकस्य द्वितीयस्य च तद्रहितत्वं लक्षणमुपपाद्यते । तत्र 'साध्यसाधर्म्यात्तद्धर्मभावी'ति साधर्म्यदृष्टान्तस्य लक्षणम्, वचनाधिकरणेऽप्यर्थात्मकदृष्टान्तचिन्तनं तदौपायिकत्वाद्धेतुवत्कर्त्तव्यम्, साध्यं धर्मविशिष्टो धर्मी तेन साधर्म्यं साधनधर्मो लिङ्गसामान्यं यत्तदुदाहरणसाधर्म्ये पूर्वमुक्तं तदेव द्विष्ठत्वादुभाभ्यां व्यपदिश्यते इतीह साध्यसाधर्म्यशब्देनोक्तम्, तस्मात्साध्यसाधर्म्याद्यस्तद्धर्मभावी तस्य साध्यस्य धर्मो नित्यत्वादिर्यस्मिन्भवति स तद्धर्मभावी, पञ्चम्या प्रयोजकत्वमुच्यते, हेतुधर्मप्रयुक्तः साध्यधर्मो यत्रास्ति स साध्यधर्मदृष्टान्त इत्यर्थः, स एव च वचसा कर्मतां प्रतिपद्यमान उदाहरणं भवतीत्यर्थवचनवाचिनोर्दृष्टान्तोदाहरणशब्दयोः सामानाधिकरण्यमविरुद्धम्, दृष्टान्त एकान्वयव्यापकेन वचनेनोद्यमान उदाहरणमित्युक्ते तदभिधायकं वचनमुदाहरणमुक्तं भवत्येव 'यद्यत्कृतकं तत्तदनित्यं दृष्टं यथा घट' इति ।

"नन्वेवं यत्र हेतुकृता साध्यधर्मसत्ता यथा जलधरोन्नमनवृष्ट्यादौ तादृश एव दृष्टान्त उपदिष्टो भवेन्न यत्र साध्यधर्मकृता हेतुसत्ता यथा धूमानुमान इति"।

अदर्शनज्ञो देवानांप्रियः, नात्रोत्पत्त्यपेक्षया प्रयोज्यप्रयोजकभावो विवक्षितः किन्तु ज्ञप्त्यभिप्रायेण, ज्ञप्तौ च धूमः एवाग्नेः प्रयोजकतां प्रतिपद्यते, न हि

धूमाग्न्योः कार्यकारणभावेन गम्यगमकभावः किन्तु नित्यसाहचर्येणैव नियमनाम्ना सम्बन्धेनेत्यसकृदुक्तम् ।

धूमः स्वरूपतो नाम जायतां जातवेदसः ।
नाग्निस्तमाक्षिपत्येनं स एव ह्यग्निमाक्षिपेत् ॥
प्रयोजकत्वमग्नेश्च पञ्चम्या यदि कथ्यते ।
यत्र तत्राग्निरित्येवं तन्निर्देशः प्रसज्यते ॥
यस्य प्रयोजकत्वं हि चिख्यापयिषितं भवेत् ।
यच्छब्देन च पूर्वत्र स हि निर्देशमर्हति ॥
भवेदेवं च हेतुत्वं धूमं प्रति विभावसोः ।
न च तद्युज्यते वक्तुमनैकान्तिकदोषतः ॥
प्रयोजकत्वमिच्छन्ति तस्मान्नोत्पत्त्यपेक्षया ।

अपि तु ज्ञप्त्यभिप्रायं हेतोरेवोचितं तत्, तस्माद्धेतुधर्मप्रयुक्तः साध्यधर्मो य उत्थाप्यते स साध्यधर्मदृष्टान्तस्तद्वचनमुदाहरणमिति सिद्धम् ॥

## तद्विपर्ययाद्वा विपरीतम् ॥ ( १।१।३७ )

दृष्टान्त उदाहरणमिति वर्तते, तदिति साध्यधर्मपरामर्शः, तच्च यद्यपि पूर्वसूत्रे लिङ्गसामान्यं तथाप्यत्र साध्यसाधर्म्यं द्रष्टव्यम्, तद्विपर्ययात्साध्याभावाद्विपरीतः अतद्धर्मभावी साधनरहितो यो दृष्टान्तः स वैधर्म्यदृष्टान्तः पूर्ववद्वचसः कर्मतामापद्यमानो वैधर्म्योदाहरणं भवति, विपरीतमित्युदाहरणापेक्षया नपुंसकलिङ्गनिर्देशः ।

"किमर्थं पुनः साध्याभावात्साधनाभावो वैधर्म्यदृष्टान्तः स वर्ण्यते न पुनः साधर्म्यदृष्टान्तस्थित्या साधनाभावादेव साध्याभाव इति" ।

उक्तमत्र—

व्याप्यव्यापकभावो यः साध्यसाधनधर्मयोः ।
स एव वैपरीत्येन मन्तव्यस्तदभावयोः ॥ इति ।

किं कारणम् ? साधनधर्मे हि धूमे साध्यधर्मेणाग्निना व्याप्तेनाग्निः तत्र निवेशमलभमानोऽनन्यत्रावकाशत्वाद् धूम एव निवेशितः, एवं साध्यधर्माभावेऽनग्नौ साधनधर्माभावेनाधूमेन व्याप्ते सति धूमस्तत्र लब्धावकाशोऽनन्यगतित्वादग्नावेव निविशत इति, यदि तु साधर्म्यदृष्टान्तवत्तथैव व्याप्यव्यापकभावः ख्याप्यते साधनाभावे साध्यं नास्तीति तदा धमाभावेनानग्निना व्याप्तेनाग्निस्तत्रालब्धनिवेशो धूममवलम्बेतेति स्यात्, न चैतन्निर्वहत्यधूमेऽपि वह्निदर्शनादित्येवं सपक्षैकदेशवृत्तेर्हेतुत्वमपि प्रसिद्धं हीयते व्याप्तिवैधुर्यादिति, अपि च धूमाभावेनाग्न्यभावे व्याप्ते कथ्यमाने सत्यधूमो नियमितो भवत्यनग्निं मा हासीदित्यग्निस्त्वनियमितः स्वातन्त्र्यादधूममपि स्पृशेदिति व्यभिचारादप्रतिबन्धो विप्लवे-

त, तदुक्तं–'यदा तु साध्याभावेन हेत्वभावो विरुध्यते साधनं ख्यापितं भवेत्, साध्यं पुनः स्वतन्त्रत्वाद्धेतुभावेऽपि सम्भवेत्' इति(?)। तस्माद्यत्रापि समव्याप्तिकौ साध्यसाधनधर्मौविति सपक्षैकदेशवृत्तित्वेनाहेतुत्वमाशङ्क्यते तत्रापि साधनधर्मस्य विपक्षाद्व्यावृत्तिमभिधित्सता साध्याभावे साधनाभावो दर्शयितव्यः, यत्रानित्यत्वं नास्ति तत्राकृतकत्वमपि नास्ति यथाऽऽकाश इति, यो ह्यविद्यमानविपक्षो हेतुः सोऽपि सुतरां ततो व्यावृत्तो भवति तदभावात्तत्रावृत्तेरिति, अतश्च सर्वपदार्थानित्यत्वं नास्ति, तत्र कार्यत्ववाद्येवमपि वैधर्म्यदृष्टान्तमप्रदर्शयन्न वार्यते–यत्र नित्यत्वं नास्ति तत्र कार्यत्वमपि नास्ति यथा शशविषाणादाविति, ते एते साधर्म्यवैधर्म्योदाहरणे अन्वयव्यतिरेकवति हेतावुभे अपि सम्भवन्ती विकल्पेन प्रयोक्तव्ये, एकेनैव व्याप्तेः प्रदर्शनात्किमन्येन कृत्यम्। केचित्तु व्याप्तिसौष्ठवप्रदर्शनाय द्वयोरपि प्रयोगमिच्छन्ति, भवतु मा वा भून्नेदं महद्भिर्मर्दस्थानम्। "ननु हेतूदाहरणाधिकमिति निग्रहस्थानमिदमादिष्टम्" समानजातीयाभिप्रायं तद्भविष्यति, साधर्म्यदृष्टान्तानेकत्वे वा तन्निग्रहस्थानमित्यास्तामेतत्, इत्थं साधर्म्यवैधर्म्यदृष्टान्तरूपे व्युत्पादिते बलात्तल्लक्षणरहिता दृष्टान्ताभासा भवन्ति, तत्र साध्यविकलः साधनविकल उभयविकल इति वस्तुदोषकृतास्त्रयः साधर्म्यदृष्टान्ताभासाः, अनन्वयो विपरीतान्वय इति द्वौ वचनदोषकृतौ, यथा नित्यः शब्द अमूर्तत्वादित्यत्र बुद्धिवदिति साध्यविकलो दृष्टान्तः, परमाणुवदिति साधनविकलः, घटवदित्युभयविकलः, व्योम्नि नित्यत्वान्मूर्तत्वं विद्यते इत्यनन्वयः, यदमूर्तं तन्नित्यमिति वक्तव्ये यन्नित्यं तदमूर्तमिति विपरीतान्वय इति। वैधर्म्यदृष्टान्ताभासा अपि पञ्चैव–साध्याव्यावृतः साधनाव्यावृतः उभयाव्यावृत्त इति वस्तुदोषास्त्रयः, अव्यतिरेको विपरीतव्यतिरेक इति वचनदोषौ द्वौ, यथा तत्रैव हेतौ यत्र नित्यत्वं नास्ति तत्र मूर्तत्वमपि नास्ति यथा परमाणुष्विति साध्याव्यावृत्तः, बुद्धाविति साधनाव्यावृतः, यथाऽऽकाश इत्युभयाव्यावृत्तः, नित्यत्वामूर्तत्वे घटे न विद्यते इत्यव्यतिरेकः, यत्र नित्यत्वमपि नास्ति तत्रामूर्तत्वमपि नास्ति इति वक्तव्ये यत्रामूर्तत्वं नास्ति तत्र नित्यत्वमपि नास्तीति विपरीतव्यतिरेक इति। एते च वस्तुवृत्तेन हेतुदोषा एव तदनुविधायित्वादत एव हेत्वाभासवत्सूत्रकृता नोपदिष्टाः अस्माभिस्तु शिष्यहिताय प्रदर्शिता एव ॥

### उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ( १।१।३९ )

उदाहरणमात्मलाभेऽपेक्षत इत्युदाहरणापेक्षः पक्षधर्मोपसंहार उपनयः, द्विविधश्चासौ तथेति न तथेति वा उदाहरणद्वैविध्यात्, तत्र साधर्म्योदाहरणापे-

दास्तथेत्युपनयो यत्कृतकं तदनित्यं दृष्टं यथाऽऽकाशः, न च न तथा कृतकः शब्द इति, अत्रापि निषेधद्वययोगाद्विधिरेव गम्यते ।

"ननु साध्यस्येत्यवाचकः सूत्रावयवः पक्षधर्मोपसंहारो ह्युपनयो न साध्योपसंहारः, साध्यो हि धर्मो धर्मी वा स्यान्न तयोरन्यतरस्याप्ययमुपसंहार इति" ।

उच्यते—साध्यो धर्म्येव न धर्म इह विवक्षितः, तत्रायं हेतोरुपसंहारस्तथा च कृतकः शब्द इति, सेयं साध्यस्येति सप्तम्यर्थे षष्ठी मन्तव्या साध्ये धर्मिणि हेतोरुपसंहार उपनय इति ।

"नन्वाधारविवक्षायामिह प्राप्नोति सप्तमी ।
सम्बन्धमात्रे वाच्ये वा कथमाधारतोच्यते ॥"
नैतत्सम्बन्धसामान्येऽप्युक्ते भवति धर्मिणा ।
योगो विशेषचिन्तायां तस्य त्वाधारता भवेत् ॥
विशेषेऽन्तर्निगूढे च प्रायः षष्ठी नियुज्यते ।
शेषो नामाविवक्षैव कारकाणामिति स्थितिः ॥
तथा च राज्ञः पुरुषो ब्राह्मणस्य कमण्डलुः ।
तरोः शाखेति सर्वत्र विशेषोऽन्तर्व्यवस्थितः ॥

अतश्च धर्माय जिज्ञाया धर्मजिज्ञासा सा हि तस्य ज्ञातुमिच्छेतिवत्सम्बन्धमात्रसमर्पिकाऽपि सेयं षष्ठी विशेषपर्यवसाना भविष्यतीति सूक्तं—'साध्यस्योपसंहार" इति,

## उपनयाङ्गीकारे आक्षेपः ।

"ननूपनयवचनमनर्थकं पक्षहेतुदृष्टान्तवचनैः किं न पर्याप्तं यदर्थमुपनयवचनमुच्चार्यते ? यदि धर्मिणि हेतोः सत्त्वसिद्धये तदभिधानं तदेष वृथैव श्रमः पक्षधर्मवचनेनैव कृतकत्वादित्येवमादिना सिद्धत्वात्, अथ साध्यदृष्टान्तधर्मिणोः साध्यापादनाय तदुच्चारणं तदपि न चतुरस्रमुदाहरणसाधर्म्यादित्यनेनैव गतार्थत्वात्, उदाहरणसाधर्म्यवचनं हि हेतुवचनमेव भवेत्, अथ स्वप्रतिपत्तौ तदर्थदर्शनात्परं प्रति तद्वचनं तत्रापि परामर्शज्ञाने विवदन्ते, अपि च स्वयं दधिभक्षणसमनन्तरं यदि कदाचिदनुमेयमिति उपजायते तत्किं परस्मै तदुपदिश्यताम्, योऽप्ययं प्रतिज्ञाहेतूदाहरणोपनयनिगमनप्रयोगक्रम आश्रीयते सोऽपि स्वप्रक्रियानुरागनिर्मित एव न वस्तुबलप्रवृत्तः, तथा हि यद्यत्कृतकं तत्तदनित्यं दृष्टं कृतकश्च शब्द इतीयतो वचनात्को नाम शब्दानित्यतां नावगच्छेत्, वामे चात्र सत्यव्रतधनः प्रमाणं डिण्डिकरागं परित्यज्याक्षिणी निमील्य चिन्तय तावत्किमियताऽर्थं बुद्ध्यसे न वा, तस्मात्स्वप्रक्रियापक्षपातमपास्य पञ्चावयवमेवं क्रमकं वाक्यं प्रयुङ्क्ष्वेति" ।

उपनयाक्षेपसमाधिः ।

अत्रोच्यते—इदं तावद्भवान्पृष्टो व्याचष्टां किं स्वप्रतिपत्तिमनुसरन्तः परप्रतिपादनाय वाक्यवचनां कुर्मः उत परहृदयानुवर्तनेनेति ? तत्र पराभिप्रायस्य वैचित्र्यात्परोक्षत्वाच्च दुरवगमत्वेन न विद्मः किं विदध्महे किं भ्रुवमुत्क्षिपामः किमङ्गुलिना परं पीडयामः उत हस्तसंज्ञया व्यवहरामः आहो हेतुमात्रमेव केवलं प्रयुञ्ज्महे किं वा त्र्यवयवं वाक्यमभिदध्मः उत पञ्चावयवादपि वाक्यादधिकमाख्यानकमस्मै वर्णयाम इत्येवमनवस्थितत्वात्पराभिप्रायस्य स्वप्रतिपत्तिमेवानुसरता परः प्रत्याय्यः, तत्र स्वप्रतिपत्तौ पर्वतादिधर्मी प्रथमं दृष्ट इति स प्रतिज्ञया कथ्यते, ततो धूमादिलिङ्गमुपलब्धमिति हेतुवचनेन तदावेद्यते, ततो यत्र धूमस्तत्राग्निर्यथा महानस इति व्याप्तिस्मरणमभवदिति दृष्टान्तवचसा तदभिधीयते, ततस्तथा चायं धूम इति परामर्शज्ञानमुदपादीति तदुपनयवचनेन प्रतिपाद्यते, ततस्तस्मादत्राग्निरित्यनुमेयज्ञानमुपजायते इति निगमनेन तदुच्यते, ततः परं प्रति पर्यवसानात्किमन्यदुपदिश्यतामिति, न च दधिभक्षणसदृशमतोऽन्यतममपि भवितुमर्हत्यनुमेयप्रतिपत्तावुपादेयत्वात्, येषामपि मते परामर्शज्ञानं नास्ति तैरप्युपनयवचनमवश्यमेवापरिहार्यमनुमेयप्रतिपत्तये, दृष्टान्ते दर्शितशक्तिरेव हेतुः प्रभवति नान्यथेत्यतो यद्यपि पक्षधर्मवचनेन हेतुसंबन्धमात्रमुपपादितं तथाप्यत्र नादृष्टान्तदर्शितशक्तिधर्मः स तस्मिन्धर्मिणि तथाविधो हेतुः स्यान्न वेत्यसिद्धाशङ्काशमनमुपनयवचनमन्तरेण न भवत्येवेत्यवश्यं प्रयोक्तव्यं तदिति । स्वप्रतीत्यनुसरणेन च वाक्यरचनायाः स्थितत्वात्क्रमोऽपि यथोक्त उपयुज्यते, अत एव च यत्कृतकं तदनित्यं दृष्टमित्यभिधानमनुपपन्नमनवगते धर्मिणि तद्वर्तिनि च हेतौ प्रथममेव व्याप्तिस्मरणासंभवेन तद्वचनायोगात्, तदिदमवयवविपर्यासवचनमप्राप्तकालनिग्रहस्थानमुपदेक्ष्यामः, अपि च 'यत्कृतकं तदनित्यं दृष्टं कृतकश्च शब्द इत्येतावदेव प्रयोक्तव्यमि'ति वदता भवता कृतकश्च शब्द इत्येतावदेव प्रयोक्तव्यमिति इतीदमुपनयवचनमनुज्ञातं कृतकत्वादिति पक्षधर्मवचनं तु निह्नुतम् , ''कृतकश्च शब्द इत्येतदेव हेतुवचनमिति चेत्''न प्रयोजकस्य पञ्चम्यादिनिर्देशार्हत्वादिति यत्किंचिदेतत् , यदप्युच्यते "विदुषां वाच्यो हेतुरेव केवल" इति, तदप्यचारु, विद्वद्भिर्विद्वत्त्वादेव हेतोरपि प्रज्ञानात्, अपूर्वा इमे विद्वांसो ये प्रतिज्ञावयवचतुष्टयस्यार्थं जानन्ति हेतुवचनस्य न विदन्तीति, तस्मात्पराशयस्य सर्वथा दुर्बोधत्वात्पूर्वोक्तेनैव क्रमेण स्वानुभवसाक्षिकेण वाक्यरचनां कृत्वा परः प्रत्याय्य इति ॥

हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ (१।१।३९)

हेतुधर्मिणि निर्ज्ञातशक्तिः साध्ये धर्मिण्यपदिश्यतेऽनेनेति हेत्वपदेश उप-

नयः, तस्माद्धेत्वपदेशात्प्रवृत्तं प्रतिज्ञायाः पुनर्वचनं निगमनं, निगम्यन्तेऽनेन पूर्वोक्ता अवयवा एकत्र साध्येऽर्थे समर्थ्यन्ते नियोज्यन्ते इति निगमनम्—तस्मात्कृतकत्वादनित्यः शब्द इति, तदिदं निगमनं साधर्म्यवैधर्म्यभेदेन हेतोर्दृष्टान्तस्य च तदपेक्षिणश्च तथा न तथेत्युपनयस्य द्वैविध्येऽपि प्रतिज्ञावचनवत्तुल्यमेव भवति ।

## प्रतिज्ञावयवाक्षेपः ।

"ननु प्रतिज्ञावचनमेव तावदसाधनाङ्गवचनत्वादपार्थकम्, तस्या एव तु पुनर्वचनं निगमनमसाधनाङ्गवचनत्वादपार्थकम्, तस्या एव तु पुनर्वचनं निगमनमधुना सफलं भविष्यतीति केयं कथा, प्रतिज्ञायाः पुनर्वचनमिति च न वाचको ग्रन्थः साध्यनिर्देशो हि प्रतिज्ञा सिद्धनिर्देशस्तु निगमनमिति, वाचके वा ग्रन्थे पौनरुक्त्यादेव निगमनस्य नैष्फल्यम्, स्वप्रतिपत्तौ च परामर्शज्ञानानन्तरं साध्यावगतिरेव भवन्ती दृश्यन्ते सा परस्याप्युपनयवचनश्रवणसमनन्तरमुपजायत एवेति किं तदुक्त्या प्रयोजनम्"।

## उक्ताक्षेपसमाधिः ।

उच्यते–प्रतिज्ञायास्तावत्साफल्यं समर्थितमेव तस्याश्चेदं पुनर्वचनं सिद्धसाध्यभेदे सत्यपि धर्मिधर्मनिर्देशमात्रमास्यादुच्यते, सिद्धसाध्यभेदादेव च न पौनरुक्त्यकृतमसाफल्यं स्वप्रतिपत्तिसमये च परामर्शज्ञानानन्तरं साध्यबुद्धिरुत्पन्ना सा परस्मै कथ्यमाना न निष्प्रयोजना भवति,

तस्माद्धेतोरिदं साध्यमहमज्ञासिषं यथा ।
तथा त्वमपि जानीहि मा स्म विघ्नोऽत्र ते भवेत् ॥

एवमुक्ते संशयानस्य संशय शाम्यति विपर्यस्तमतेश्च विपर्ययस्तदर्थश्च परार्थानुमानोपन्यासश्रमस्तदिदं विपरीतप्रसङ्गनिषेधार्थं निगमनमाहुः ।

ये तु यथाश्रुतसाध्यनिर्देशात्मकप्रतिज्ञापुनर्वचनसमर्थनलाभादपि प्रतिज्ञायाः सिद्धिमबुध्यमाना असाधारणशङ्काव्यवच्छेदाय निगमनवचनमिच्छन्ति, ते न सम्यगभ्ययुः, असाधारणाशङ्कायाः दृष्टान्तवचनेनैव निरस्तत्वात्, विशेषस्य हि हेतुत्वशङ्कायामसाधारणशङ्का स्याद्यत्कृतकं तदनित्यमिति दृष्टान्तवचसा सामान्यस्य हेतुत्वे कथिते कथमसाधारणत्वमाशङ्क्येत, यदि पुनरुपनयवचनेन साध्ये धर्मिणि हेतोरुपसंहारादसाधारणत्वमाशङ्क्येत तत्पुनर्दृष्टान्तधर्मिवृत्तित्वमस्य दर्शयितव्यम्, तस्मिन्दर्शिते पुनस्तद्वृत्तित्वाद्धर्मिण्यसिद्धत्वमाशङ्कनीयं पुनस्तद्व्यावृत्तये धर्मिणि हेतोरुपसंहारो विधेय इत्येवमसाधारणाशङ्काव्युदासाय प्रयोगः किन्तु पूर्वरीत्यैवेति, तस्माद्विवक्षितेऽर्थे यथोदिते क्रमनिवेशिनोऽवयवान् एकत्र संघटयितुं निगमनवचनं प्रयोक्तव्यम् ।

### अवयवेषु प्रमाणभिसंप्लवः ।

त इमे प्रतिज्ञादयो निगमनपर्यन्ताः पञ्चावयवा यथासम्भवमागमादिप्रमाणानुगृहीताः परस्परानुषक्ताश्च स्वार्थं साधयन्ति, तत्र मुख्यया वृत्त्या प्रतिपाद्येनानुमानेनैव सर्वेऽवयवा अनुगृह्यन्ते प्रपञ्चाय तु प्रमाणान्तरानुग्रह एषामुच्यते, प्रतिज्ञायास्तावदागमोऽनुग्राहक उपेयते उपदेशस्वभावत्वात्, अनित्यः शब्द इत्युक्त्वा त्वेवंविधे विषये ऋषिवदस्वतन्त्रत्वादनुमानमुपदिशन्ति, प्रतिज्ञावचनं तु तच्छायानुपातित्वाच्छब्दप्रामाण्यसिद्ध्यर्थे वा शास्त्रे तत्प्रतिज्ञायाः शब्दविषयत्वादागमानुगृहीतमुच्यते, हेतुवचनमनुमानेनानुगृह्यते, उदाहरणं तु प्रत्यक्षेण तन्मूलत्वाद्व्याप्तिपरिच्छेदस्य यथा गौस्तथा गवय इति च यथा घटस्तथा शब्द इत्यनया च्छाययोपमानकरणभूतवनेचरादिवचनसदृशत्वादुपमानमुपनयस्यानुग्राहकमभिधीयते, निगमनस्य तु सर्वावयवानामेकत्र नियोजनार्थत्वात्सर्वप्रमाणानुग्राह्यतैवेतरेतरानुषक्तत्वात्, प्रतिज्ञां विना निराश्रयो हेतुर्भवेदिति सा पूर्वं प्रयोक्तव्या अनित्यः शब्द इति, ततो हेतुं परो जिज्ञासत इति हेतुवचनमुच्चार्यते कृतकत्वादिति, हेतौ श्रुते क्वास्य व्याप्तिरवधृतेति दर्शयितुमुदाहरणमुच्यते यत् कृतकं तदनित्यं दृष्टं यथा घट इति, एवमुक्ते किमीदृशो निर्ज्ञातशक्तिरेष हेतुः साध्यधर्मिणि भवेन्न वेत्यसिद्धताशङ्कामपाकर्तुमुपनयः प्रसज्यते, ततोऽमुना क्रमेण तथापि साध्यप्रतीतिर्भवत्विति सर्वावयवानेकत्र साध्येऽर्थे समर्थयितुं निगमनमभिधीयते, अन्यतममवयवमन्तरेण सकलमिदमनुषक्तार्थवाक्यं स्यादिति पञ्चावयवमेव यथोपदृष्टक्रमकं वाक्यं प्रयोक्तव्यम् ।

इत्यारब्धोपकारास्तदनुगुणफलैरागमादिप्रमाणै-
रन्योन्यापेक्षिणोऽमी नियतमवयवाः साधयन्त्यर्थजातम् ।
यश्चैतेषां प्रमेये वचसि च चतुरस्तस्य जातिप्रयोग-
प्रायैः शक्यो न पक्षः दापयितुमिति हि व्याहरद्वृत्तिकारः ॥

इति भट्टजयन्तस्य कृत न्यायमञ्जर्यां दशममान्हिकम्

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ (१।१।४०)**

अविज्ञाततत्त्वेऽर्थे इति सामानाधिकरण्यनिर्देशादर्थ एवान्यपदार्थो न पुरुषः, पुरुषो हि षष्ठ्या निरदेक्ष्यत अविज्ञातं तत्त्वमस्येति, तत्त्वपदोपादानेन धर्मिणः सामान्यधर्ममात्रविशिष्टस्य विज्ञातत्वं सूचयति, कारणोपपत्तित इति संशयज्ञानोल्लिख्यमानपक्षद्वयान्यतरपक्षोत्थापनानुकूलकारणावलोकनं तत्त्वस्योत्थापकमाह, अत एवाविज्ञाततत्त्वेऽर्थे भवन्तावपि बुभुत्साविमर्शौ न तर्कतां प्राप्नुतः, तत्त्वज्ञानार्थमिति साक्षात्प्रमाणतामस्य निरस्यति, प्रमाणानुग्रहं तु विशेषपरिशोधनद्वारेण विदधत्तत्त्वज्ञानाय कल्पते, तर्क ऊह इति

पर्यायोपादानस्य प्रयोजनं वक्ष्यामः, तेनायं सूत्रार्थः—अविज्ञाततत्त्वे सामान्यतो ज्ञाते धर्मिण्येकपक्षानुकूलकारणदर्शनात्तस्मिन् सम्भावनाप्रत्ययो भवितव्यताबभासस्तदितरपक्षशैथिल्यापादने तद्ग्राहकप्रमाणमनुगृह्य तान्सुखं प्रवर्त्तयँस्तत्त्वज्ञानार्थमूहस्तर्क इति, यथा बाह्यकेलिप्रदेशादावूर्ध्वत्वविशिष्टधर्मिदर्शनात्पुरुषेणानेन भवितव्यमिति प्रत्ययः ।

"ननु तत्त्वज्ञानार्थमित्युक्ते सति सामर्थ्यादविज्ञाततत्त्वता लभ्यत एवेति किमर्थं स्वकण्ठेन पुनरनूद्यते ?"

बाढं किंतु कचिद्विषये ज्ञाततत्त्वेऽपि पूर्वतर्केणावमृष्टे सत्युत्तरकालं तर्कितो मयाऽयमर्थ इति स्मर्यमाणतर्कविशेषणतया गृह्यमाणो विशेषणीभूतस्तर्कस्तत्त्वज्ञानार्थो भवतीति तद्व्युदासाय पुनरविज्ञाततत्त्वग्रहणम्, मार्गशोधनद्वारेण तर्कस्य तत्त्वज्ञानार्थत्वमिह विवक्षितं तच्चाविज्ञाततत्त्वेऽर्थे सम्भवतीति ।

"ननु नैव संशयनिर्णयान्तरालवर्ती तर्कप्रत्ययः कश्चिदस्ति, तथा हि यदि तावदनवगतविशेषस्य भवत्यसौ प्रत्ययस्तर्हि संशय एव भवेदवगतविशेषस्य भवन्निर्णयतामेव स्पृशेत्, पुरुष एवेत्येवकारार्थाद्युन्मेषरहितोऽपि प्रत्ययो निर्णयो न न भवितुमर्हति, तुरगपरिसरणसमुचितदेशदर्शनमपि यदि स्थाणुपक्षे स्थगयितुमलमिति मन्यसे तत्करचरणादिनरविशेषदर्शनवत्तन्निर्णयकारणमेव स्यात्, अथ तस्यामपि तुरगविहरणभुवि निखनति कश्चन स्थाणुमिति शङ्कसे, यद्येवं स्थाणुपक्षानपायात्पुनः संशय एव स्यादिति न तृतीयः पक्षः समस्तीति लक्षणभावात्कस्येदं लक्षणमिति ?"

उच्यते—न खलु स्वमतिपरिकल्पितविकल्पवितानेन प्रत्यात्मवेदनीयाः प्रतीतयो वरीतुं शक्याः, तथा हि—स्थाणुर्वा पुरुषो वेति प्रतीतिरेका पुरुष एवायमित्यन्या पुरुषेणानेन भवितव्यमिति मध्यवर्तिनी तृतीया संभावनाप्रतीतिः स्वहृदयसाक्षिकैव,

> साम्येन हि समुल्लेखः संशये पक्षयोर्द्वयोः ।
> निर्णये त्वितरः पक्षः स्पृश्यते न मनागपि ॥
> तर्कस्त्वेकतरं पक्षं विभात्युत्थापयन्निव ।

ननु सम्भावनाबीजवाजिवाहनदर्शनाद्वाहकेलिप्रदेशविशेषदर्शनं हि पुंसि सम्भावनामात्रमुपजनयितुमलं न तु शिरःपाण्यादिविशेषदर्शनवत्सर्वात्मना स्थाणुपक्षापसरणेन पुरुषनिर्णयाय प्रभवत्यतोऽयमगृहीतविशेषस्यैव भवति प्रत्ययो न तु संशयः एकतरपक्षानुकूलकारणोपपत्त्या जायमानत्वात्, कथं पुनः पाणिपादादिपुरुषविशेषवदश्ववाहनदेशविशेषो विशेषकार्यं न कुर्यात् करेणैवास्थाणुपक्षोत्सारणान्निर्णय एवायमिति कस्यैष पर्यनुयोगः, यथा हि शिरःपाण्यादिदर्शने सति पुरुषनिर्णयो भवति न तथा तुरगवहनदर्शने सति, अननुयोज्याश्च

पदार्थो एवं भवतैवं मा भूतेति; यथा च देशान्तरे स्पर्धमान एव स्थाणुपक्ष आस्ते न तथा वाहकेलिभूमावपि तु शिथिलीभवति संभवत्प्रमादत्वाच्च न सर्वात्मना निवर्तते।

"ननु यदि न निवर्तते तर्हि स्पर्धतां मा वा स्पर्धिष्ट स्थितस्तावत्स्थाणुपक्ष इति संशय एवायमिति"

नैवम् स्थाणुपक्षः सर्वात्मना (न) निवर्तते नाप्यास्ते एवमेवायं त्रिशङ्कुरिवालम्बमानः प्रत्ययान्तरनिवृत्तये प्रभवतीति तथा प्रत्ययानुभवादेव परिकल्प्यते, वाहकेलिप्रदेशदर्शने हि यथा पुरुषविशेषाः स्मरणपथमवतरन्ति न तथा स्थाणुविशेषाः उभयविशेषस्मरणजन्मा च संशय इति सोऽयं वाहकेलिप्रदेशविशेषः शिथिलयति स्थाणुपक्षं न सर्वात्मनोच्छिनत्तीति तद्दर्शनात्कृतकतत्कारणप्रत्यय इति न तद्धृदयंगमं तेन क्रमेण निर्णय एवासौ तत्कारणतथात्वं न तर्क इति। अथ वा कार्योदाहरणत्वादस्य तत्रापि संशयनिर्णयान्तरालवर्ती तर्कप्रत्ययो द्रष्टव्यः स उदाहरणं भविष्यति।

"ऊह इति पर्यायाभिधाने किं प्रयोजनं" लक्षणप्रतिपादनमेव, तदेव हि तर्कस्य लक्षणं यदूहरूपत्वं इतरस्तु सूत्रे कारणविशेषाय फलनिर्देशः, कारणोपपत्तित इति कारणनिर्देशः, अविज्ञाततत्त्वेऽर्थे इति विषयनिर्देशः, तत्त्वज्ञानार्थ इति फलनिर्देशः।

अपि च तर्कशब्दं केचिदनुमाने प्रयुञ्जते, यथा स्मृतिकाराः पठन्ति—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥ इति॥

तदिहापि तर्कोऽनुमानं मा विज्ञायीत्यूहग्रहणम्, उहोऽत्र तर्क उच्यते नानुमानं तत्त्वज्ञानार्थताऽप्यस्य प्रमाणानुग्राहकत्वेन न साक्षात्, तथैव चार्थं साधयितुमेष वादे प्रयुज्यते हृदयशुद्धिप्रकाशनार्थम्।

कापिलास्तु बुद्धिधर्ममूहमाहुः, स तत्सिद्धान्तप्रसिद्धसत्त्वरजस्तमोरूपप्रकृतिप्रभवभुवनसर्गादिव्यवहारनिराकरणवर्त्मना पूर्वमेव निरस्तः।

जैमिनीयास्तु ब्रुवते–युक्त्या प्रयोगनिरूपणमूह इति, इह हि किंचिदुपदिष्टदृष्टादृष्टस्वभावसकलेतिकर्तव्यताकलापं कर्म भवति यथाऽऽग्नेयोऽष्टाकपाल इति दर्शपूर्णमासकाण्डे पठितम्, क्वचित्पुनः प्रधानकर्ममात्रमुपदिश्यते इतिकर्तव्यता तु काचन नाम्नायते, यथा—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इति, तत्र विचार्यते–किमितिकर्तव्यताविरहितयथाश्रुतप्रधानमात्रसंपादनेन तत्र शास्त्रार्थप्रयोगः परिसमाप्यते उत तदपि सेतिकर्तव्यताकं प्रधानमनुष्ठेयमिति, तत्रापूर्वप्रयुक्तत्वेन धर्माणां प्रतिकरणं भेदे स्थिते निरङ्गस्य प्रधानस्याननुष्ठेयत्वाद्विध्यन्ताधिकरणसिद्धान्तन्यायेन प्राकृतवद्वैकृतं कर्म कर्तव्य-

मिति सेतिकर्तव्यताकं तदनुष्ठीयते, एवं सामान्यातिदेशे स्थिते सति कस्य वैकृतस्य कर्मणः कुतः प्रकृतेर्धर्मा अधिगन्तव्या इति चिन्तायां द्रव्यदेवतादिचोदनासारूप्यपर्यालोचनोपनतहृदयसन्निधानप्राकृतकर्मविशेषसम्बन्धिन एव तत्र धर्मा भवितुमर्हन्तीति स्थापिते युगपदुपनिपतदनर्गलचोदकव्यापारोपनीतनिखिलाखण्डमण्डलविध्यन्तकाण्डाधिगम्यधर्मसंबन्धप्राप्तौ सत्यां ते धर्माः कथं प्रयोक्तव्या इति युक्त्या प्रयोगनिरूपणमूह उच्यते, येनेत्थं प्रयोक्तव्या इति धर्मा व्यवस्थाप्यन्ते, स च त्रिविधो मन्त्रसामसंस्कारविषयः, मन्त्रविषयस्तावद्यथाऽत्रैव सौर्ये चरौ प्रकृतिवद्भावेनाग्नेयादग्नये त्वा जुष्टं निर्वपामीति निर्वापमन्त्रः प्राप्तः कथं प्रयोक्तव्य इति विचारणायामुच्चारणमात्रेण मन्त्राणामनुपयोगात्प्रयोगसमवेतद्रव्यदेवतादिप्रकाशनद्वारेण तदुपयोगस्य व्यवस्थितत्वादिहाविकृत एवायमग्नये जुष्टमिति प्रयुज्यमानो मन्त्रः प्रयोगसमवायिनोऽर्थस्याप्रकाशनादसङ्गतो भवेत् सर्वात्मना चोत्सृज्यमानो मन्त्रो मन्त्रप्रकाशितकर्माननुष्ठानान्न प्रकृतिवत्कृतं भवेदित्यग्निपदोद्धारेण सूर्यपदप्रक्षेपेण मन्त्र ऊहेनेत्थं प्रयोक्तव्य इति गम्यते सूर्याय त्वा जुष्टं निर्वपामीति ।

"ननूहप्रवरनामधेयानाममन्त्रत्वादित्थमपि न मन्त्रेण स्मृतं कर्म कृतं स्यात्" नैतत्—एकदेशविकृतमनन्यवद्भवतीति न्यायात् । सामविषयस्तु गीतयः सामानीति स्थिते क्व चित्कर्मणि 'रथन्तरमुत्तरयोर्गायति, बृहदुत्तरयोर्गायती'ति श्रुतेः सा बृहद्रथन्तरगीतिर्यस्यामृचि योनिभूतायामुत्थिता ततोऽन्यस्यामपि प्रयुज्यते, तादृगक्षरापायेऽपि च सामगीतिर्ऋगन्तराक्षरेष्वपि प्रत्यभिज्ञायते रथन्तरमनेन श्लोकमिति व्यवहारदर्शनात् । संस्कारविषयः खल्वपि प्रकृतौ प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति संस्कारश्चोदितः क्वचिच्च विकृतौ श्रूयते-'नखनिर्भिन्नश्चरुर्भवती'ति, तत्रोलूखलमुसलयोः प्रकृतौ पुरोडाशापेक्षिततुषकणविप्रमोकपूर्वकतण्डुलीभावसम्पादनद्वारेणोपयोगाद्विकृतावपि तत्कार्यापन्नानां नखानां प्रोक्षणाख्यः संस्कारः क्रियते इति, सोऽयं त्रिविध ऊहः ।

केचित्तु पञ्चविधमूहमाचक्षते 'धर्मस्यार्थकृतत्वाद् द्रव्यगुणसंस्कारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायादि'ति(९।२।४७जै०) सूत्रमनुसरन्तः, एतत्तु प्रतत्यमानमतिप्रसङ्गमावहति त्रिविधमेव चोहं याज्ञिका अनुमन्यन्ते इति ।

अत्र वदन्ति—सोऽयमूहशब्दः श्रोत्रियैरनुमाने प्रयुक्तो यथा स्मृतिकारैस्तत्र तर्कशब्दो यस्तर्केणानुसन्धत्त इति, तथा हि वैकृतं कर्म धर्मि तत्समवेतार्थप्रकाशकमन्त्रप्रयोगनिर्वर्त्यमिति साध्यो धर्मः कर्मत्वात्प्राकृतकर्मवत् , मन्त्रो वा तत्समवेतप्रकाशकः प्रयोज्यो मन्त्रत्वात्प्राकृतमन्त्रवदिति । प्राकृतेषु च कर्मसु तथा तथा व्याप्तिग्रहणात्सर्वोऽयमनुमानमार्ग एव, नखाः प्रोक्षणीयाः प्रयोगोपयोगितण्डुलनिर्वर्तकत्वादुलूखलमुसलवदिति, सामसु तु स्पष्ट-

मेव वचनमस्ति रथन्तरमुत्तरयोर्गायतीति तदभावेऽपि मन्त्रसंस्कारसमानयोगक्षेमत्वमेव ।

अपि च शब्दपृष्ठस्थितन्याये सहस्रव्युत्पादनात्मके मीमांसाशास्त्रे तन्न्यायलभ्योऽर्थश्चोदनार्थ एवेति स्थापितम् , अतश्च यथोक्तोहलभ्यस्यार्थस्य चोदनार्थता मा निर्वर्तिष्टेति सोऽयमूहः शब्द एवान्तर्भावणीयः प्रमाणान्तरगोचरो वा धर्मः स्यात् , न्यायविशेषात्मकस्तूहो न।नुमानादर्थान्तरं स्यात् , अग्नय इत्यस्य स्थाने सूर्यायेतिपदस्य प्रयोग ऊहस्य फलं नोहः, इह तु पूर्वोक्तया नीत्या प्रमाणव्यतिरिक्त ऊह उपपादितः, श्रोत्रियास्तु तदनभिज्ञतया न्याये न्यायफले वोहशब्दमुपचरितवन्त इत्यलं शास्त्रान्तरोद्गारगहनाभिः कथाभिः ।

तदेष मीमांसककल्प्यमानो नोहः प्रमाणव्यतिरेकमेति ।
प्रमाणसन्देहदशान्तरालवर्ती तु तर्कः कथितोऽत्र शास्त्रे ॥

इति (८)तर्कपदार्थः ।

तर्कानन्तरं निर्णयो भवति पठितश्चेति स लक्ष्यते—

**विमृष्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ अ० १ आ० १ सू० ४१**

अवधारणमपि तथा स्यादित्यर्थग्रहणम् , इन्द्रियादिजनितमपि तदवधारणमस्त्येव न्यायोपरमहेतोस्तु निर्णयस्योद्देशात्स एवानुमानजन्यो लक्षणीय इहेति पक्षप्रतिपक्षाभ्यामित्युक्तम् ,

एकाधिकरणौ धर्मौ तुल्यकालौ विरोधिनौ ।
पृथक्परिग्रहौ पक्षप्रतिपक्षावुदाहृतौ ॥

"न हि ताभ्यां निर्णयः तयोरन्यतरविषयो हि भवति न तत्करणक एवेति" सत्यम् , इह तु पक्षप्रतिपक्षशब्दाभ्यां तद्विषयौ साधनतदुपालम्भौ लक्ष्येते, तौ च तस्मिन्करणमेव । "किमर्थं पुनर्लक्षणा ऽऽश्रीयते साधनोपलम्भाभ्यामेवेति कथं न सूत्रितम" एवमभिधीयमाने पुनस्तयोर्विषयो मृग्यः लक्षणाप्रयोगे तु सोऽप्यवगतो भवेत्, मुख्यमभिधाय तदितरो लक्ष्यते । "भवत्वेवं द्वाभ्यां कथं तु निर्णयः एकमेव हि साधनं निर्णयाय कल्पते" एवमेतत् , न द्वितीयमपि साधनं निर्णयनिमित्तमाचक्ष्महे किन्तु तदुपालम्भं साधनं च: साधनोपालम्भश्च साधनोपालम्भौ ताभ्यां निर्णयः ।

एतदुक्तं भवति—स्वपक्षं प्रमाता निर्णयतीति न खल्वेवं न जाने च दूषणमुत्प्रेक्षमाणः स्वपक्षे साधनमधिगच्छन्परपक्षसाधने च दूषणमुत्प्रेक्षमाणः प्रमाता निर्णयतीति किं तूपालम्भस्य क इव निर्णयजन्मनि व्यापारः स हि परपक्षसाधनमवच्छिन्द्या।दिति, अस्त्वेतत् तदुच्छेदद्वारेण अपि तु स्वपक्षसाधनमहिमानमाविष्कुर्वन्कल्पत एव निर्णयायेति युक्तो द्वयोरपि करणभावः ।

"नन्विदानीमर्थग्रहणमनर्थकमेवंविधसाधनाधीनजन्मा हि न निर्णयाभासः

सम्भवति, साधनोपालम्भलक्षणार्थावपि च पक्षप्रतिपक्षशब्दौ विषयमभिवदितुं ननु शक्नुत इत्युक्तमेवेति कोऽर्थोऽर्थग्रहणेन ?"

उच्यते–पक्षप्रतिपक्षयोस्तु द्वयोरन्यतरत्रार्थेऽवधारणं भवति नोभयत्र, स एव च परमार्थतोऽर्थ इतरस्तु भ्रान्तिकल्पित इति प्रदर्शनायार्थपदोपादानम्। लक्ष्यमाणसाधनोपालम्भनिष्ठत्वात्तु पक्षप्रतिपक्षशब्दयोर्विषयनिर्देशार्थमर्थपदमित्येके। "विमृश्येति किमर्थं" वस्तुस्वरूपकथनार्थमेव, अनुमानकरणको हि निर्णय इह लक्ष्यते इत्युक्तम्, अनुमानं च संशयविषये प्रवर्तते इति तर्कानन्तरमप्यनेनैवाशयेनास्योपादानम्, संशयादनन्तरं तर्कस्तर्कादूर्ध्वं च निर्णयो दृष्टः प्रवर्तमानोऽतस्स तत्पूर्वक उच्यते।

निर्णये तु समुत्पन्ने बुभुत्सा विनिवर्तते।
अत एव हि मन्यन्ते तदन्तं न्यायचिन्तनम्॥

"भवत्वेवमिदं तु चिन्त्यतां–क नियमः किं विमर्शे किं पक्षप्रतिपक्षयोः किं निर्णय इति, त्रये ऽपि च नोपपद्यते इति, न विमृष्यैव निर्णयः अविमृष्यापि भावात्, न पक्षप्रतिपक्षाभ्यामेवेन्द्रियादेरपि तदुत्पादात्, न निर्णय एव तर्कस्यापि क चिदनिवृत्ते." उक्तमत्रोद्देशसूत्रे तत्त्वज्ञानपदोपादानात्प्रमाणपदेन च तत्फलाक्षेपान्न निर्णयमात्रोद्दिष्टेन किमपि प्रयोजनं विशिष्टस्तु निर्णयो लक्षणत्वेन विवक्षितः।

परीक्षाविषयो यो हि निर्णयो न्यायनिर्मितः।
नियमत्रयमप्येतत्तस्मिन्न हि न युज्यते॥

न हि (न) विमृष्यैव भवन्ति विमर्शपूर्वकत्वात्परीक्षायाः, अनुमानं च सन्दिग्धे विषये प्रवर्तते इति प्रायेण तद्व्यवहारः।

यद्यपि कचिदसन्दिग्धेऽपि विषये दृष्टं प्रवर्तमानमनुमानमनलानर्थितायामतर्कितोपनतपर्वतनितम्बनिर्गतधूमदर्शनेन कृशानुकल्पनमिव, तथाऽपि वस्तुयोग्यतावशेन सन्दिग्धविषयमेवानुमानमिच्छन्ति न्यायविदः, प्रकृतश्च निर्णयः पक्षप्रतिपक्षाभ्यामेव निर्णय एवेति न शक्यते नियन्तुमन्यथा न्यायानुपरमादिति, शास्त्रे तु विनापि संशयादस्ति निर्णयः।

यद्यपि च तत्रापि सूत्रकृता सर्वपरीक्षाणां संशयपूर्वकत्वमुपदेशातिदेशाभ्यामभ्यधायि, तथापि नासौ शास्त्रीयो निर्णयः परीक्षाकार्यत्वात्, यस्तु शास्त्रत एव क चिद्विषयनिर्णयः स विमर्शवर्जमुत्पद्यते, वादे ऽपि विमर्शरहिते भवति निर्णयः, उभौ निश्चितौ वादं कुरुतः सन्दिग्धस्य तत्रानधिकारात्, "कथं तर्ह्येष प्रवादः संशयच्छेदो वादस्य फलमिति?" प्रथममुभयोरपि निश्चितयोर्वादप्रवृत्तावन्तराले बलादापतति युक्तिद्वयोपनिपातवतः संशय इति वस्तुनिर्णयावसानत्वाद्वादस्य संशयच्छेदफलत्वमाचक्षते।

यद्यप्यनिश्चितमतिः कुरुते न वादं श्रुत्वा तथापि परकीयनयप्रवेशम् ।
अन्तर्गतद्वयबलाबलचिन्तनेन संशय्य निर्णयति नूनमसौ स्वपक्षम् ॥

इति (९)निर्णयपदार्थः ।

न्यायपरीक्षा क्षारकवस्तुविचारयोग्यास्तिस्रः कथा वादिनो भवन्ति-'वादो जल्पो वितण्डे'ति, तत्र वादस्तावदुच्यते—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ अ. १ आ. २ सू. १ ।**

पक्षप्रतिपक्षौ व्याख्यातौ तयोः परिग्रहो ऽभ्युपगमो नियमः, एको वक्ति नित्यः शब्दः अपरस्त्वनित्यः शब्दः इत्याह–सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः, एतच्च रूपं कथात्रये ऽपि साधारणमिति विशेषमाह–प्रमाणतर्कसाधनोपालम्भ इति, प्रमाणैस्तर्केण च साधनं साधनोपालम्भश्चास्मिन्क्रियते इति प्रमाणतर्कसाधनोपालम्भः, न त्वीदृशी वितण्डा तस्याः प्रतिपक्षसाधनोपन्यासशून्यस्वभावत्वात् ।

"ननु प्रत्यक्षादेः प्रमाणस्य परप्रतीत्यनुपायत्वान्न तेन वादे साधनोपालम्भौ शक्यक्रियौ, तर्कस्य तु प्रतीतिसाधनत्वमपि तावन्न सम्भवति सम्भावनाप्रत्ययस्वभावत्वात्किमुत परप्रत्यायनाङ्गतेति नतरां तस्य साधनोपालम्भहेतुत्वम्" सत्यमेवमिह तु न प्रमाणशब्देन प्रत्यक्षादेरनुमानमपि तु प्रमाणमूला अवयवा उच्यन्ते तैश्च सिद्ध्युपालब्धी क्रियेते, एवं तर्कस्य तु स्वतः साधनोपालम्भकरणकौशलशून्यात्मनो ऽपि प्रमाणानुग्राहकत्वात्पारम्पर्येण तद्धेतोराशयशुद्धिप्रदर्शनार्थमुपादानम्,

"यद्येवं प्रमाणपदेनैव तन्मूलावयवप्रतिपादनात्पञ्चावयवोपपन्नग्रहणमतिरिच्यते"

तत्र केचिदाचक्षते—प्रमाणतर्कसाधनोपालम्भ इति वादलक्षणे छलजातिनिग्रहस्थानसाधनोपालम्भ इति च जल्पलक्षणे श्रवणाद्वादे सर्वात्मना छलादिनिषेधप्रसक्तौ कतिपयनिग्रहस्थानोद्भावनाभ्युज्ञानार्थं पञ्चावयवोपपन्नग्रहणम्, अनेन च 'हीनमन्यतमेनाप्यवयवेन न्यूनम् । हेतूदाहरणाधिकमधिकमि'ति न्यूनाधिकयोरुद्भावनमनुज्ञायते, सिद्धान्ताविरुद्धग्रहणेनापि 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध' इति विरुद्धाख्यहेत्वाभासोद्भावनमनुज्ञातमित्येवं वादे त्रीणि निग्रहस्थानान्युद्भावनीयानि ।

अन्ये वदन्ति–"विरुद्ध एव हेत्वाभासो वादे चोद्यते नानैकान्तिकादिरि"ति, कथमेतद् युज्यते 'निग्रहस्थानेभ्यः पृथगुपदिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्ती'ति भाष्यकारवचनात्प्रमाणपदेन च तन्मूलावयवाक्षेपात्प्रमाण-

भासमूलनिरासे सति सकलहेत्वाभासोद्भावनमपि तत्र सिद्धमिति। "सिद्धान्ताविरुद्धग्रहणेन सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गो ऽपसिद्धान्त इत्यपसिद्धान्ताख्यनिग्रहस्थानानि वादे उद्भाव्यन्त इति" तदनुपपन्नं न हि त्रीणि वा अष्टौ वा वादे निग्रहस्थानानि चोदनीयानीति चोदना वैदिकी राजशासनं वा वस्तुपरिशुद्धिसाधनं सर्वमेव तत्र प्रयोगार्हम्, अयं तु विशेषः—जल्पे कस्यांचिदवस्थायां बुद्धिपूर्वकमपि छलादिप्रयोगः क्रियते वादे तु वृथा तेषां प्रयोगः, भ्रान्त्या तु कथंचित्प्रयुक्तानामवश्यमुद्भावनमनुद्भावने वस्तुपरिशुद्धेरभावात्।

"कथं तर्हीदं पदद्वयं सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति" अपसिद्धान्तादिसम्यग्दूषणदिक्प्रदर्शनेनैवम्प्रकारवस्तुशुद्ध्यनुगुणनिग्रहस्थानजाताद्यनुज्ञानार्थमेवेत्यभियुक्ताः, अप्रतिभाविक्षेपादयो हि न वादे पराजयहेतवः क्षणान्तरेणाप्यागत्यानुस्मृत्य च साधनमुपालम्भं वा तत्र वदन्न पराजीयते, प्रतिज्ञाहान्यादि तु सम्यक्पराजयकारणमखिलमाभ्यां पदाभ्यामभ्यनुज्ञातमत्रेति।

"नन्विदानीं प्रमाणतर्कग्रहणमपार्थकं पञ्चावयवोपपन्नपदेनैव प्रमाणमूलावयवोपदेशाद्वस्तुपरिशुद्ध्यनुगुणनिग्रहस्थानाभ्यनुज्ञानाच्च किमिव नोक्तम्" न अभिप्राये नैर्मल्यनिवेदनद्वारकवादजल्पविवेकप्रतिपादनार्थत्वात्, स्वप्रतिपत्तिसाधनमपि प्रत्यक्षादि वादे प्रयोक्तुमुचितमाशयशुद्धिमुपदर्शयितुमत्र वस्तुनि मम प्रथमं तर्क इत्थं प्रवृत्त आसीत्ततः प्रमाणमिदं प्रवृत्तमित्येवमपि तत्र वक्तव्यमत एव चान्यतरपक्षनिर्णयावसान एव भवति वादः, न जल्पवदलीकदूषणाडम्बरविरचितपरपरिभवपर्यवसानोऽपीति तथा बुद्धिपूर्वमाभासानामप्रयोग इति निर्मत्सरकथात्वमस्योक्तमित्यकलुषाकूतकथनाय प्रमाणतर्कपदम्।

अपि च साधनोपालम्भव्यतिषङ्गप्रतिपादनमपि तस्य फलमुभावपि परस्परमनुबन्धेन धादिभ्यां परीक्ष्यमाणौ पक्षप्रतिपक्षौ वादतां प्रयोजयतो न तु स्वगृहे शास्त्रे वा विविच्यमानौ, प्रमाणैरेव जल्पे व्यवहार इति नियमशङ्कानिरसनमपि तत्पदोपादानप्रयोजनमुक्तमन्यैरिपि कृतमतिविस्तरेण सर्वथा वादलक्षणं सर्वं सुस्थम्।

वादं च निर्णयफलार्थिभिरेव शिष्यसब्रह्मचारिगुरुभिः सह वीतरागैः।
न ख्यातिलाभरभसप्रतिवर्धमानस्पर्धानुबन्धविधुरात्मभिरारभेत॥

इति (१०)वादपदार्थः॥

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः॥**

**गौतमसू. अ. १ आ. २ सू. २॥**

यथोक्तोपपन्नग्रहणेन सर्वातिदेशे वादजल्पयोरविशेष इति शङ्कमानाः केचन पक्षप्रतिपक्षपरिग्रहमात्रातिदेशमेव व्याचक्षते, इयतस्तु पूर्वसूत्रानुवृत्त्याऽपि सिद्धेर्मन्दफलमेव यथोक्तोपपन्नवचनं भवेदिति समस्तातिदेश एव वरम्, न च तत्रापि वादजल्पयोः साम्यं गम्यमानार्थम्, अतिदेशाच्छ्रौत एवार्थोऽतिदिश्यते न गम्यमानः तत्कृत एव च तयोर्भेदः, तथा च प्रमाणतर्कसाधनोपालम्भ इत्यत्र गम्यमानोऽर्थोऽभिप्रायनियमः स नातिदिश्यते, सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इत्यत्रापि बुद्धिपूर्वजात्यादिप्रयोगप्रतिषेधतदुद्भावननियमरूपो गम्यमानोऽर्थः सोऽपि नातिदिश्यत इति कुतस्तयोरविवेकः, अत एव च बुद्धिपूर्वकप्रयोगानुज्ञानाय छलजातिनिग्रहस्थानसाधनोपालम्भ इत्युक्तम्। "भवत्वेवं छलादीनां त्वसदुत्तरत्वात्कथमिव साधनोपालम्भहेतुत्वम्, परपक्षप्रतिक्षेपद्वारकमिति चेन्नासदुत्तरत्वेन 'प्रतिपक्षेऽपि तेषामसामर्थ्यादेवमपि च साधनग्रहणमनर्थकमेवेति" सत्यमेवं किन्तु कस्यांचिदवस्थायां स्वप्रतिपत्तिसाधनोपहिततत्त्वज्ञानरक्षायै तान्यपि व्याप्रियन्ते, यदा जानन्नपि परपक्षकृशिमानं स्वपक्षे द्रढिमानं च कचिदवसरे परप्रयुक्ते साधने दूषणं सपदि न पश्यति स्वपक्षसाधनं च झगिति न स्मरति तदा छलादिभिरप्युपक्रम्य परमभिभवत्यात्मानं च रक्षतीति।

"ननु यदि परश्छलादीनि जानीयात्तेषु चानुरूपमुत्तरमभिदधीत कथं जीयेत प्रत्युत जयत्येव" सत्यं तथाप्येकान्तपराजयाद्वरं सन्देह इति युक्तमेव तत्प्रयोगेण स्फुटाटोपकरणम्।

"नन्वीदृशि प्रयोजनानि जिगीषतो जनस्य जनपदसदसि भवन्ति तस्यापि न निपुणमतिसदसि मुमुक्षोस्तु दूरापेतैव कथेयमिति कथमिह मोक्षशास्त्रे जल्पाद्युपदेशः"

नैतदेवम्, मुमुक्षोरपि कचित्प्रसङ्गे तदुपयोगात्, यथोक्तं तत्त्वाध्यवसायसंरक्षणासीनमनेकशिष्यगणोपास्यमानं रहस्यतत्त्वमुपदिशन्तं शान्तमानसमाचार्यमनार्यः कश्चिद्विपश्चिदाभासः कुतश्चिदागत्य दुरधिगतकतिपयाक्षरपरिचयजनितगुरुतरगर्वगद्गदया गिरा भोस्तपस्विन्किमाख्यायते हूङ्कारमान्वीक्षिकी सरलमतिप्रियेयं विद्या क्व वेदाः क्व वेदप्रामाण्यं क्वात्मज्ञानं क्वापवर्ग इत्यादि मन्दं विहस्य सहस्यसहसादृष्टमेघ इव प्रकटितकाण्डदण्डकाशनितम्बवित्रासिताश्रममृगवर्गमुद्ग्राहयन्नाकुलयति, तदा जगज्जालमिन्द्रजालपण्डितविलसितमिति जानन्नप्याशाभ्यो यदि तदुपेक्षते न तिरस्करोति सद्यः सम्यक् साधनाप्रतिभासेऽपि यदि छलादिभिरेनं न शमयति तदा तस्मिन् गते तत उत्थाय शिष्यगणा ब्रूयुः कष्टमस्थाने क्लिष्टाः स्मः,

यो ऽसावस्माकमाचार्यः प्रख्यातो न्यायवित्तमः।
अद्य त्वागत्य सो ऽन्येन पण्डितेन पराजितः॥

तच्छ्रुत्वा जन इतरोऽपि सत्पथस्याशैथिल्यात्सपदि तमेव माऽनुयासीत् ।
तन्नूनं परिभवभूमिकामसह्यां नेतव्यः सदसि स वावदूकपाशः ॥
तद्विघातघटने निरर्गलं जल्पमन्त्रमुपदिष्टवान्मुनिः ।
आनुषङ्गिकमपि प्रयोजनं तस्य रागिजनतासु वर्णितम ॥

इति (११)जल्पपदार्थः ।

**स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ अ. १ आ. सू. ३ ।**

स एव यथोक्तलक्षणको जल्पो वितण्डा भवति, "को विशेष इति चेद्" आह-प्रतिपक्षस्थापनाहीन इति, उत्तरपक्षवादी वैतण्डिकः प्रथमवाद्यपसाध्यमानपक्षापेक्षया हस्तिप्रतिहस्तिन्यायेन प्रतिपक्ष इत्युच्यते तमसावभ्युपगच्छत्येव न तत्र साधनमुपदिशति परपक्षमेवाक्षिपन्नास्ते, "तर्हि साधनाद्विपक्षो ऽपि सोऽस्य नास्त्येवेति प्रतिपक्षहीनो वितण्डेत्युच्यतां किं स्थापनांग्रहणेन" नाभ्युपगममात्रेण तद्भावात्तमनभ्युपगम्य प्रलपतः कस्तस्य शृणुयात्, औपचारिको वा परमतपराकरणरूप एवास्य पक्षस्तस्मिन्हि सति स्वपक्षो हि तस्य सिध्येदिति, परमताक्षेपप्रवणप्रवृत्तश्च बलाद् द्वितीयपक्षवाद्येव वैतण्डिक इति, तदेवं पक्षो ऽस्यास्तीति साधनं तु नास्तीति सम्यक् सूत्रितं सप्रतिपक्षस्थापनाहीनो वितण्डेति ।

इत्युदाहृतमिदं कथात्रयं यत्परस्परविविक्तलक्षणम् ।
स्थूलमप्यनवलोक्य कथ्यते वाद एक इति शाक्यशिष्यकैः ॥

इति (१२)वितण्डापदार्थः ।

पक्षधर्मत्वादीनि पञ्च लक्षणानि हेतोरुक्तानि तेषामेकैकापायात्पञ्च हेत्वाभासा भवन्तीति तान् दर्शयितुमाह—

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः ॥**

**गौतमसूत्रम् अ. १ आ. २ सू. ४ ।**

अत्र हेत्वाभासश्रुतिरेव निर्वचनसहिता सामान्यलक्षणं बोधयत्यहेतवो हेतुवदाभासन्त इति हेत्वाभासाः, लक्षणैकदेशयोगाच्च हेतुवदाभासनमहेतोरप्युपपद्यते। सकललक्षणाऽपायेपि पञ्चमीनिर्देशादिभ्रमहेतुरित्येके, सव्यभिचारादिपदपर्यन्तवर्तिनी तु सैव श्रुतिर्विभागमवगमयति प्रमाणश्रुतिवदित्युक्तम्, पक्षधर्मादिलक्षणानां च क्रमनियमाभावात्साध्यसमविरुद्धसव्यभिचारातीतकालप्रकरणसमा हेत्वाभासा इति पाठो नाश्रितः ।

"ननु त्रय एव हेत्वाभासा इति शाक्याः" न प्रत्यक्षागमबाधितस्य सप्रतिपक्षस्य च हेतोः पूर्वप्रदर्शितत्वात् ।

"नन्वेकस्यैव रूपद्वयवैकल्यात्कथं न षष्ठादयस्तत्प्रभेदाः स्युः, यथा नित्यः शब्दश्चाक्षुषत्वादिति, एष हि पक्षे वृत्त्यभावादसिद्ध उच्यतामुत सामान्यादिर्विपक्षादप्रच्युतेः सव्यभिचार उत जात्यन्तरमेव ताभ्यामिति"

नैतदेवम्–एकैकरूपापायनिमित्तभेदपञ्चकप्रतिपादने कृते द्वित्रिरूपापायान्न रूपान्तरमवतरति किन्तु तेषामेव समावेशः स्यात्, अपि च प्रथमगृहीतान्यतमरूपवैकल्यलब्धके हेत्वाभासरूपेऽस्मिन्किं रूपान्तरनिरूपणेनेत्यास्तामेतत्।

"नन्वप्रयोजको नाम षष्ठो हेत्वाभासः समस्तीति न पुनरपि पञ्चत्वम्" न तस्यान्यथासिद्ध एवान्तर्भावं वक्ष्यामः, अवान्तरभेदविवक्षायां तु हेत्वाभासानामियत्तानिश्चयो न शक्यक्रियो न च सप्रयोजन इति पञ्चैव हेत्वाभासा इति सिद्धम्।

## सव्यभिचारलक्षणम्।

तेषां सव्यभिचारस्तावदुच्यते।

**अनैकान्तिकः सव्यभिचारः॥**

**गौ० अ० १ आ २ सू० ५।**

व्यभिचार एकत्र व्यवस्थाऽनियमः तेन सह वर्तते इति सव्यभिचारो विपक्षादप्रच्युत इत्यर्थः, एकस्मिन्नन्ते भवन्नैकान्तिकः तद्विपर्ययादनैकान्तिक इति स एवार्थः, एवमिह लक्ष्यलक्षणपदयोर्यथाकाममभ्युपगमो न प्रत्यक्षादिवद्व्यवस्थया, सव्यभिचारपदे लक्ष्याभिधायिनि लक्षणवचनमनैकान्तिकपदमनैकान्तिकपदे तु लक्ष्यवाचिनि सव्यभिचारिपदं लक्षणप्रतिपादकं प्रसिद्धाप्रसिद्धविभागापेक्षया पिककोकिलवद् द्रष्टव्यम्, पिकः कोकिल इत्युक्ते यस्य पिकशब्दार्थः प्रसिद्धः स ततः कोकिलशब्दार्थमवभोत्स्यते प्रसिद्धकोकिलशब्दार्थश्च पिकशब्दार्थमिति।

"आह भवत्वेवमिदं तु चिन्त्यताम् अनैकान्तिक इति किमयं पर्युदासः प्रसज्यप्रतिषेधो वा? किं चातः, पर्युदासपक्षे स्वपक्षनियतादैकान्तिकादन्यः स एवानैकान्तिक इति स एवैको हेत्वाभासः स्यादतश्च पञ्चसंख्या विप्रलुप्येतेति, प्रसज्यप्रतिषेधे त्वैकान्तिकाभावस्य निवृत्तिरूपस्य हेत्वाभासता भवेन्न लक्ष्यत्वेनाभिमतस्य विपक्षवृत्तेर्हेत्वन्तरस्य प्रमेयत्वादेरिति"

उच्यते–प्रश्न एवायमनुपपन्नः संशयानो हि परं पृच्छति संशयश्चोभयथा दर्शनाद्भवति न च नामपदसंबद्धस्य नञो द्वयी वृत्तिर्दृष्टा, अश्राद्धभोजीत्यादौ हि भुजिना नञ्संबध्यते श्राद्धं न भुङ्क्त इति न तु नाम्ना श्राद्धेनेति, आख्यातेनापि प्रयोज्यमानः क्वचित्प्रकरणसामर्थ्यानुरोधात्प्रत्ययार्थसंबन्धमवधूय धात्वर्थमेव केवलमालिङ्गन्पर्युदासवृत्तिर्भवति यथा नेक्षेतोद्यन्तमादित्यमिति, न तु ना-

म्ना संबध्यमानः क्वचिदपि पर्युदासवृत्तिमुल्लङ्घ्य प्रसज्यप्रतिषेधमात्रतामवलम्बमानो दृश्यते अब्राह्मणादौ सर्वत्र तदन्यावगतिदर्शनादिति कुतस्त्यः संशयः। अथ वा किमनयाऽवान्तरचिन्तया यथापृष्टं प्रकृत एवोत्तरमुच्यते एकस्मिन्ननित्यपक्षो वा नियत ऐकान्तिक एकपक्षवृत्तिरुच्यते ततोऽन्यः पक्षद्वयवृत्तिरनैकान्तिको भवत्येवं न सर्वे हेत्वाभासाः पक्षद्वयवृत्तय इति न संख्याहानिरतः पर्युदासपक्षे तावन्न दोष', प्रसज्यप्रतिषेधे ऽप्यैकान्तिको न भवति स एवाहेतुरिति न निवृत्तिमात्रपरत्वम् , अश्राद्धभोजीति कृता पुरुष उच्यते न श्राद्धभोजनाभावमात्रमेवमिहापि तद्धितेनैकान्तनियतताप्रतिषेधविशिष्टो हेतुरेवोच्यते नाभावमात्रमित्येवमुभयथापि न दोषः, तस्योदाहरणम्—अनित्यः शब्दः प्रमेयत्वादिति, एष हि नित्यानित्यपक्षयोरन्यतरस्मिन्नपि न नियत इति विपक्षवृत्तित्वादनैकान्तिकस्तदेवं व्यतिरेकाख्यहेतुलक्षणशून्यो ऽनैकान्तिक उक्तो भवति।

"ननु षट्प्रकाराः परैरनैकान्तिका इष्यन्ते सपक्षैकदेशवृत्तिर्विपक्षव्यापी विपक्षैकदेशवृत्तिः सपक्षव्यापी उभयपक्षैकदेशवृत्तिरुभयपक्षव्यापी, साधारणश्चतुष्प्रकारः असाधारणो विरुद्धव्यभिचारी चेति स कथमिह न निर्दिश्यते"।

उच्यते—सपक्षव्याप्त्यादिभेददर्शनं तावदप्रयोजनकमशक्यं च हेत्वाभासानामवान्तरभेदेनानन्त्यात्, विपक्षाद्यावृत्तिर्यस्य नास्ति स सव्यभिचार इत्यन्यतमहेतुरूपरहितत्वमनैकान्तिकलक्षणमिह विवक्षितम् , तच्चोक्तमेव किमवान्तरभेदपरिगणनेन, असाधारणविरुद्धाव्यभिचारिणौ तु न संभवत एव हेत्वाभासाविति न व्याख्यायेते।

"ननु साधारणादसाधारणस्यापि गन्धवत्त्वादेः संशयहेतुत्वदर्शनात्कथमसंभवः अनेकधर्मोपपत्तेश्च संशयो भवद्भिरपि व्याख्यायत एव"

नैतदेवम्, उभयविशेषसहचरितधर्मदर्शनं हि तदनुस्मरणप्रायं संशयमुपजनयति असाधारणस्तु असाधारणत्वादेव न तत्सहचरः कदाचिदुपलब्ध इति कथं संशयहेतुः। "कथं तर्ह्यनेकधर्मोपपत्तेरिति वर्णयिष्यते" वर्णितमेतद्वस्तुनो हि विशेषधर्मः कश्चिदसाधारणः केनापि धर्मान्तरेण सहचरितो दृष्टः सोऽयं शब्दे विभागजत्वाख्यो धर्मः केन (चित् ?) धर्मान्तरेण द्रव्यत्वेन गुणत्वेन वा सहचरितो भवेदितीत्थमनेकधर्मोपपत्तेः संशयोवर्णितः, तदिहापि गन्धवत्त्वमसाधारणमित्थमेव यदि संशयहेतुतया वर्ण्यते तर्हि साधारणाद्वस्तुधर्मत्वादेव संशयो भवेन्नासाधारणाद्गन्धवत्त्वात् , न हि तन्नित्यानित्ययोरन्यतरेणापि सहचरितमुपलब्धम् , वस्तुधर्मस्तु धर्मान्तरानुयायी दृश्यत इति वस्तुधर्मत्वमेव तत्कारणमतो नित्या भूर्गन्धवत्त्वादित्यसाधारणानैकान्तिको न वक्तव्यः, विरुद्धाव्यभिचार्यपि न वाच्य एव एकत्र धर्मिणि परस्परविरुद्धद्वयप्रयोजकहेतुद्वयोपनिपातस्यानुपपत्तेः।

"ननु प्रत्यक्षो वायुः स्पर्शवत्त्वाद् घटवद्, अप्रत्यक्षो वायुररूपत्वादाकाशवदित्यस्ति हेतुद्वयसन्निपातः, स एव च विरुद्धाव्यभिचार्युच्यत इति" अत्र तावदेतदेव वक्तव्यम्–को ऽयमपूर्वः प्रामाणिकव्यवहार ईदृशो यदनुमानेन प्रत्यक्षत्वमप्रत्यक्षत्वं वा साध्यत इति इन्द्रियजप्रमितिविषयो हि प्रत्यक्षोऽर्थो भवति स एष वायुर्यदीन्द्रियजे प्रत्यये प्रतिभात्येव किमनुमानेनेति, किं चानयोरन्यतरो हेतुरवश्यमप्रयोजको वस्तुनो द्वैरूप्यानुपपत्तेः, हेतौ च प्रयुक्ते तद्गुणदोषपरीक्षणमेव प्रतिवादी विधत्तां कोऽवसरः प्रतिहेतूपन्यासस्य।

"विडम्बनार्थस्तदुपन्यास इति चेन्न"

विडम्बनोपन्यासस्य जात्युत्तरप्रकारत्वात्, इह च हेत्वाभासा वास्तवा एवानुमानदोषाः प्रतिपाद्यन्ते, न च विरुद्धाव्यभिचारी नाम वास्तवो हेतुदोषः, एकत्र प्रयोजकविरुद्धहेतुद्वयसमावेशासंभवस्योक्तत्वात्।

"कथं तर्हि प्रकरणसम इति चेत्" तत्रैव विशेषं वक्ष्यामः।

"अथ हेतुप्रयोगरहितोभयवादिपरिगृहीतपक्षप्रतिपक्षोपन्यासमात्रं विरुद्धाव्यभिचारिणो रूपमुच्यते" सोऽयं विप्रतिपत्तेः संशयो भवति न हेत्वाभासादस्मादिति।

"अपि च संशयजननमनैकान्तिकलक्षणमुच्यते चेत्" काममसाधारणस्य विरुद्धाव्यभिचारिणो वा यथा तथा संशयहेतुतामधिरोप्य कथ्यतामनैकान्तिकता न तु संशयजनकत्वं तल्लक्षणमिन्द्रियादेरपि तज्जनकत्वेन तथाभावप्रसक्तेरपि तु पक्षद्वयवृत्तित्वमनैकान्तिकलक्षणम्, स तु पक्षद्वयवृत्तित्वात्संशयमपि जनयतीतिवस्तुस्वभावोऽयमतोऽसाधारणाविरुद्धाव्यभिचारिणोः कथंचित्संशयहेतुत्वेऽपि पक्षद्वयवृत्त्यभावान्नानैकान्तिकवर्गेऽन्तर्भावः।

"क्व तर्हि तावन्तर्भविष्यतः" जात्युत्तराणामानन्त्यात्तत्रेति वक्ष्यामः।

तस्मादसाधारणसंज्ञकस्य हेतोर्विरुद्धाव्यभिचारिणो वा।
विपक्षवृत्तित्वमतर्कयन्तो वदन्त्यनैकान्तिकतां नयज्ञाः॥

## विरुद्धलक्षणम्।

**सिद्धान्तमभ्युपेत्य तद्विरुद्धो विरुद्धः॥**
**गौ० अ० १ आ० २ सू० ६।**

सपक्षविपक्षयोर्वृत्त्यवृत्ती हेतौ लक्षणमुक्तम्, ते यस्य विपर्यस्ते दृश्येते यः सपक्षे न वर्तते विपक्षे च वर्तते स साध्यविपर्ययसाधनाद्विरुद्धो भवति सोऽयमुच्यते सिद्धान्तमभ्युपेत्येति। सिद्धान्तशब्दो यद्यपि धर्मविशिष्टे धर्मिणि व्याख्यातः अयमित्थमित्यभ्युपगमविषयीकृतोऽर्थः सिद्धान्त इति, तथापीह

तदेकदेशसाध्यधर्मविषयो लक्ष्यते, तं सिद्धान्तसाध्यधर्ममभ्युपगम्य यो विरुणद्धि व्याहन्ति तद्विपर्ययं साधयति स विरुद्ध इत्यर्थः ।

"ननु समानकर्तृकयोः क्त्वाप्रत्ययः स्मर्यते इह च हेतोरचेतनस्याभ्युपगमे कर्तृत्वासम्भवात्पुरुषस्तत्कर्ता भवेत् सिद्धान्तं च विरुणद्धि हेतुरिति भिन्नकर्तृकत्वमुच्यते" समानकर्तृकत्वसिद्धये हेतोरेवाभ्युपगमे कर्तृत्वमुपचाराद्वर्णयिष्यते हेतुबलात्पुरुषेणाभ्युपगमः क्रियमाणो हेतुनैव कृतो भवति, एवं च स एवाभ्युपगन्ता स एव विरुणद्धीति न भिन्नकर्तृकत्वम् ।

"ननूपचारपरिग्रहश्चेदभिमतस्तदत्र त्रितयं वक्तव्यम्– साध्येऽर्थे प्रमाणबाधो निमित्तं प्रयोजनं चेति" साध्येऽर्थे प्रमाणबाध उक्त एव हेतोरचेतनत्वम्, निमित्तमप्यस्ति हेतुसाधनको ह्युपगम इति, प्रयोजनं तु विशेषविरुद्धानां हेत्वाभासत्वनिवारणम्। सिद्धान्तशब्दस्य समुदायवाचिनो यदेकदेशेऽवस्थापनं तस्यापि विशेषविरुद्धव्यवच्छेद एव फलम्, विशेषविरुद्धानां हि हेत्वाभासत्वाभ्युपगमे सर्वानुमानोच्छेदप्रसङ्गः, न हि तथाविधो हेतुरिह जगति कश्चिदवाप्यते यः साध्यसिद्धयेऽभिधीयमानो धर्मस्य वा धर्मिणो वा विशेषं न कंचन बाधते, तथा हि अनित्यः शब्दः कृतकत्वादिति सकलतार्किकगृहप्रसिद्ध एव हेतुरनित्यतां साधयन्नपि यद्यत्कृतकं तत्तद्श्रावणं दृष्टं यो यः कृतकः स स व्योमविशेषगुणो न भवतीति धर्मिणो विशेषं बाधते एवेत्यहेतुः स्यात्, न चैवं युक्तमिति न विशेषविरुद्धो नाम हेत्वाभासोऽभ्युपगन्तव्यः किन्तु साध्यस्वरूपविपर्ययसाधन एवेति, अत एव यथा तीर्थान्तरे वर्ण्यते विरुद्धश्चतुष्प्रकारो धर्मस्वरूपविपरीतसाधनो धर्मिस्वरूपविपरीतसाधनो धर्मविशेषविपरीतसाधनो धर्मिविशेषविपरीतसाधन इति तथेह नेष्यतेऽतिप्रसङ्गस्य दर्शितत्वादिति, अस्योदाहरणं नित्यः शब्दः कृतकत्वादिति ।

"नन्वेकैकलक्षणापायात्पञ्च हेत्वाभासा इत्युक्तम् अस्य च हेतोरुभे लक्षणे न स्तः, यथा ह्यस्य सपक्षे वृत्तिर्नास्ति तथा विपक्षादपि व्यावृत्तिः, यदि हि सपक्षादिव विपक्षादपि व्यावृत्त एव भवेद् गन्धवत्त्ववदसाधारण एव स्यादिति" सत्यमेवं किन्तु विपक्षादव्यावृत्तिर्व्यभिचारं प्रति प्रयोजकतां प्रतिपद्यते प्रतिपक्षगामी हि व्यभिचरित इत्युच्यते, सपक्षे वृत्तिविच्छेदस्तु विपर्ययसिद्धौ प्रयोजक इति सत्यामपि विपक्षवृत्तौ सपक्षवृत्तिविच्छेदनिबन्धनमेवास्य विरुद्धत्वमुच्यते विपक्षादप्रच्युतः स्वसाध्यमेव न साधयेत्सपक्षे त्ववर्तमानोऽसौ विपरीतमपि साधयतीति तल्लक्षणापायकृतमेवास्य विरुद्धत्वमाचक्षते इत्यलं सूक्ष्मेक्षिकया, तदित्थमुक्तं सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति।

अन्ये त्वन्यथा व्याचक्षते–किल साध्यधर्मविपर्ययसाधकवदपसिद्धान्तप्रति-

ज्ञाविरोधादयोऽपि सिद्धान्तविरोधिनः संग्रहीतुं युक्ता एव, ते चैवं व्याख्यायमाने न संगृहीताः स्युः, क्त्वाप्रत्ययसिद्धान्तशब्दौ च न समन्वितौ स्याताम्, तस्मादभ्युपगतसिद्धान्तविरोधी विरुद्ध इति सूत्रार्थे वर्णिते अभ्युपगतं सिद्धान्तं यो विरुणद्धि स विरुद्धः, तत्कालोपात्तप्रतिज्ञाविषयीकृतं वाऽवसरान्तरव्यवस्थापितं वेत्येतत्संग्रहश्च कृतो भविष्यति, सिद्धान्तशब्दश्च न सङ्कोचितो भविष्यति, क्त्वाप्रत्ययस्त्वसङ्गतत्वादुपेक्ष्यते एव भिन्नकर्तृकत्वादानन्तर्यस्य गम्यमानस्य चानुपयुक्तत्वादिति, तथा च भाष्यकारेण पूर्वाभ्युपगतसिद्धान्तानुगुणमेवोदाहरणमुक्तं–सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधादपेतोऽप्यस्ति विनाशप्रतिषेधादिति, अत्र हि प्रतिषिद्धनित्यधर्मत्वादित्ययं हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यमुं सिद्धान्तं विरुणद्धयनेन वा विरुध्यते–इति ।

एतत्त्वहृदयङ्गममिव व्याख्यानम्, अपसिद्धान्तप्रतिज्ञाविरोधादेर्निग्रहस्थानसूत्रे हेत्वाभासेभ्यः पृथगुपदेशात्किमिह तत्संग्रहेण, प्रत्यत संग्रह एव दोषः, यो हि मीमांसकोऽहमित्यभ्युपगम्यानित्यः शब्दः कृतकत्वाद् घटवदिति ब्रूयान्न तस्यायं हेतुर्विरुद्धो भवेदपि त्वपसिद्धान्तान्निगृह्येत, तस्मात्साध्यविपर्ययसाधन एव विरुद्ध उच्यते न तु पूर्वाभ्युपगतस्वसिद्धान्तविरुद्धः, न च निरभिप्राय एव सूत्रकृता क्त्वानिर्देशः कृतः किन्तु ततः प्रतीयमानमान तर्यमप्यपेक्षमाणेन यो हि सिद्धान्तमभ्युपेत्य प्रतिज्ञाय तत्सिद्धयर्थतयोपादीयमानस्तमेव विरुणद्धि स विरुद्धो हेत्वाभास इति प्राक्तनमेव व्याख्यानमनवद्यम् ।

अतः प्रतिज्ञाविपरीतसाधनाद्विरुद्धतामेति न हेतुरन्यथा ।
विशेषबाधादिनिबन्धनं पुनर्बहुप्रकारत्वममुष्य नेष्यते ॥

## सत्प्रतिपक्षलक्षणम् ।

### यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥

### गौतमसूत्रम् अ० १ आ० २ सू० ७ ।

एकैकलक्षणापायनिमित्तहेत्वाभासपञ्चकप्रतिज्ञानादसत्प्रतिपक्षत्वलक्षणवैकल्यात्किल प्रकरणसमो नाम हेत्वाभासो वक्तव्यः, स च न सम्भवति सप्रतिपक्षस्य हेतोरभावादद्वयात्मकत्वाद्धि वस्तूनामेकत्र परस्परविरोधिधर्मद्वयप्रयोजकहेतुसमावेशो नास्तीत्यसकृदुक्तम्, अत एव विरुद्धाव्यभिचारी निरस्तः, अनुमानविरुद्धमनुमानं च नेष्यत एव, तत्कुतः सत्प्रतिपक्षो हेत्वाभासोऽतश्च लक्ष्याभावात्कस्येदं लक्षणमित्याशङ्कयाह-यस्मादित्यादि, विचार्यमाणौ प्रागुक्तलक्षणकौ पक्षप्रतिपक्षौ प्रकरणम्, तस्य चिन्ता संशयात्प्रभृत्या निर्णयाद्यद्यपि भवति तथापीह विमर्शात्मिकैव गृह्यते, सा यस्माद्भवति, कस्माच्च सा भवति ? विशेषानुपलम्भात्, स एव विशेषानुपलम्भो यदि निर्णयार्थमुपदिश्यते तत्प्रकर-

णमनतिवर्तमानत्वात्प्रकरणसमो भवति-नित्यः शब्दः अनित्यधर्मानुपलब्धेरा- काशवत्, अनित्यः शब्दो नित्यधर्मानुपलब्धेर्घटवदिति, सोऽयं सप्रतिपक्षो हेतुरिह लक्ष्यो विद्यते, न च द्व्यात्मकानि वस्तूनि, प्रमातारस्तु रूपमेषां नियतमवधारयितुमशक्नुवन्त एव भ्राम्यन्तीति, तथा ह्येको विशेषानुपलब्धेः पक्षधर्मान्वयव्यतिरेकावपश्यंस्ततस्तथेति साध्यं बुध्येत तथैव च परं प्रत्याययेदिति, इतरोऽपि द्वितीयविशेषानुपलब्धेः साधनतां बुद्ध्वा प्रत्यवस्थानं च करोतीति सप्रतिपक्षक एवैष प्रकरणसमो हेत्वाभासः, तथा च न तावदयं सम्यग् हेतुः प्रतिपक्षोपहतत्वेन स्वसाध्योपस्थानसामर्थ्यशून्यत्वात्, हेत्वाभासो ऽपि च भवन्न तावदसिद्धः साध्ये धर्मिणि शब्देऽनुपलभ्यमाननित्यधर्मत्वस्य हेतोः सद्भावात्, नापि विरुद्धः साध्यविपर्ययसाधननिमित्तभूतः सपक्षवृत्तिवियोगानुपपत्तेः, नाप्यनैकान्तिकः पक्षद्वयसाधारणत्वानवधारणात्, संशयजनकत्वं तु न तस्य लक्षणमित्युक्तमेव ।

"नन्वेकस्मिन्पक्षे नियत ऐकान्तिकस्तद्विपर्ययादनैकान्तिकः स चायं नित्यानित्यपक्षयोरन्यतरत्रापि न नियत इत्यनैकान्तिक एव स्यात्, अपि चाहु'—अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैरिति, (श्लो० वा० २ सू ५४ श्लो०)तत्र यथेन्द्रियादेरबोधकत्वाद्वा संशयविपर्ययस्वभावावभाससमुत्पादनादौरात्म्याद्वा भवत्यप्रामाण्यव्यवहार एवमनुमानमपि तथैव वर्त्मना प्रमाणाभासतामवलम्बते, तत्रासिद्धस्तावदलभमानो धर्मिणि वृत्तिं तत्र साध्यधर्मधियमाधातुमनधिकृत इत्यज्ञानफलत्वादप्रामाण्यमनुभवति, विरुद्धस्तु विपर्ययसाधन इति भवन्त एव प्रतिपन्ना,: संशयजनकस्त्वनैकान्तिको भवितुमर्हति न तु पारिभाषिकविपक्षवृत्तित्वमेव तस्य लक्षणमुचितमयमपि चान्यतरपक्षनियमविरहिततनुरिति किमिति न भवति विमर्शमुपदधदनैकान्तिक इति त्रय एव हेत्वाभासाः"

उच्यते-न फलनियमेन लक्षणनियमः कर्तुं शक्यते, यद्यपि द्विविधं त्रिविधं वा भवत्यप्रमाणफलं तथापि न त्रिलक्षणके लिङ्गेऽविनाभावः परिसमाप्यते ऽपि तु पञ्चलक्षणक इति प्रसाधितोऽयमर्थः, तद्वैकल्याच्च हेत्वाभासानामपि पञ्चत्वमेव, फलं तु द्विविधमस्तु त्रिविधं वा न ह्यप्रतिपत्तिजनकं किंचिल्लिङ्गमुपलभामहे, न चाप्रतिपत्तिः प्रयत्नजन्या प्रागभावस्य निसर्गसिद्धत्वादित्यलमवान्तरचिन्तनेन, न फलापेक्षो लिङ्गलक्षणनियमः तत्र यथा पक्षधर्मरहितत्वमसिद्धलक्षणमेष च हेतुः पक्षधर्मान्वयव्यतिरेकाणामन्यतमेनापि रूपेण न विकल इति कथमनैकान्तिकतां प्रतिपत्स्यते, व्यस्ततायां हि सर्वाण्येतानि सन्ति लक्षणानि समस्तं वस्तु नोपन्यस्तमेव हेतुत्वेन नित्यानित्यधर्मानुपलब्धेरिति ।

"ननु यद्यस्य पक्षधर्मान्वयव्यतिरेका निरवद्याः सन्ति कथं तर्हि न हेतु

रेवायम्, इतरस्यापि पक्षधर्मान्वयव्यतिरेकाणां निरपवादानां सम्भवात्सोऽपि न कथं हेतुरस्त्विति चेद्" न वस्तुनो द्वैरूप्यानुपपत्तेः, एवमिमौ हेतू पक्षद्वयेऽपि बुद्धिं जनयन्तौ संशयमावहतो नानैकान्तिकवद्विपक्षावृत्तित्वेनेति हेत्वाभासान्तरत्वम्, एवंविधस्य चास्य प्रकरणसमस्य विरुद्धाव्यभिचारीति नाम यदि क्रियते तदपि भवतु न पुनरनैकान्तिकप्रभेदतामवलम्बते तल्लक्षणासंस्पर्शादुभयप्रतीतिजनकौ हीमौ हेतू भवतो नोभयपक्षावृत्तीति, नाप्ययं कालात्ययापदिष्टः प्रत्यक्षागमयोरन्यतरस्यापि बाधकस्यानुपलम्भात्, अनुमानं तु नानुमानस्य बाधकं भवितुं क्षममित्युक्तम्, न चेतरेतरवाद्यपेक्षयाऽनयोरसिद्धत्वमभिधेयम्, संशयजनकत्वेऽनुभवसिद्धे सति विशेषानुपलब्धेरप्रत्याख्येयत्वात् ।

"ननु निश्चितस्य साधनप्रयोगाधिकारात्कथं चिन्तावान्साधनं प्रयुञ्जीत, निश्चितत्वं च तद्धर्मानुपलब्ध्योः परस्परमसिद्धत्वं स्थितमेव" नैतदेवम्, अन्यतरधर्मानुपलब्धेरेव पक्षधर्मान्वयव्यतिरेकान्पश्यन्नसौ निश्चितां प्राप्तो न द्वितीयधर्मानुपलब्धेरसिद्धतां बुध्यमानः, अत एवायं भ्रान्तिमूलहेत्वाभासः द्वितीयधर्मानुपलब्धिसिद्धत्वनिश्चये तु सम्यग् हेतुरेव स्यात्, तदसिद्धत्वानवधारणेऽप्यसौ स्वस्य हेतोस्त्रैरूप्यदर्शनान्निश्चितमतिर्भूत्वा साधनं प्रयुञ्जान इतरेण तथैव निश्चितमतिना प्रतिप्रयोगे कृते तस्यापि त्रैरूप्यमुपलभमानः संशयमधिगच्छतीत्यलं प्रसङ्गेन, तदेवमसिद्धादिलक्षणवैपरीत्यात्प्रतीत्यनुगुणः प्रकरणसमो नामाऽसिद्धो हेत्वाभासः ।

अपरे पुनरुदाहरणान्तरमस्य व्याहरन्ति–नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वाद् आकाशवत्, अनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् घटवदिति ।

"ननु पक्षसपक्षयोरन्यतरः पक्षो वा स्यात्सपक्षो वा स्यान्न तृतीयो न हि मित्रावरुणयोरन्यतरः सोमो भवितुमर्हति तत्र पक्षेऽन्यतरशब्दवाच्येऽनन्वयो न हि शब्दाख्यः पक्षो धर्मी धर्म्यन्तरे वर्तते, सपक्षे त्वन्यतराभिधेये पक्षधर्मता नास्ति न ह्याकाशादिः सपक्षः शब्दाख्ये धर्मिणि वर्तते"

उच्यते–न पक्षत्वादिति हेतुः प्रयुक्तः सपक्षत्वादिति वा येनैवं स्यात् किंतु पक्षसपक्षयोरन्यतरत्वादिति, ततश्च द्वयोरपि किमपि साधारणरूपं न हि वरुणो यष्टव्य इति यादृशी बुद्धिस्तादृश्येव मित्रावरुणयोरन्यतरो यष्टव्य इति, विशेषनिष्ठतायां तु बलादापाद्यमानायां सकलानुमानोच्छेदः, न चान्यतरत्वं शब्दमात्रारोपितरूपमवास्तवमिति वदितुमुचितमर्थासंस्पर्शितायाः प्रतिक्षिप्तत्वात् ।

"अन्यतरत्वादित्यसिद्धो हेतुरिति चेत्किल पक्ष एवायं न पक्षसपक्षयोरन्यतर" इति ।

तदयुक्तम्, यत एवायं पक्षस्तत एव पक्षसपक्षयोरन्यतरो न ह्यपक्षः पक्षस-

पक्षयोरन्यतरः स्यान्न ह्यवरुणो मित्रावरुणयोरन्यतर इत्युक्तमेव, पक्षोऽपि च भवन्नेष न पक्षत्वादित्यनेन रूपेण हेतूक्रियते किन्त्वन्यतरत्वादितीत्थं च हेतूकरणे नैष दोष इति ।

## सत्प्रतिपक्षस्योदाहरणान्तरम् ।

अपरमुदाहरणं सन्सर्वज्ञ इतरतद्विपरीतविनिर्मुक्तत्वाद् घटवद् असन्सर्वज्ञ इतरतद्विपरीतविनिर्मुक्तत्वात्खरविषाणवदित्यत्राप्याक्षेपप्रतिसमाधानप्रकारः पूर्ववदनुसरणीयो धर्म्यसिद्धता च यत्नतः परिचिन्तनीया ।

## सत्प्रतिपक्षोदाहरणान्तरदूषणम् ।

एवं जातीयकं तूदाहरणं नानुमोदन्ते मतिमन्तः यत्र हि हेतुना स्वयमर्थं सम्यगसम्यग्वा ऽनुमाय प्रमाता परप्रत्यायनाय तं हेतुं प्रयुञ्जीत स प्रयुज्यमानो वस्तुबलप्रवृत्ततया हेतूभवति हेत्वाभासीभवति वा तथा ह्यारोहपरिणाहवति पुरो ऽवस्थिते धर्मिणि स्थाणुगतविशेषानुपलम्भादेकस्य पुरुष इति भवति प्रतीतिरितरस्य तु पुरुषगतविशेषानुपलब्धेः स्थाणुरिति भवति मतिः, एवं यदा ऽसावेकः पुरुषत्वसिद्धये परं प्रति स्थाणुधर्माग्रहणं हेतुत्वेन ब्रूयादितरो ऽपि पुरुषधर्माग्रहणेन स्थाणुतां प्रतिष्ठापयन्प्रत्यवतिष्ठते तदा स्वप्रतीत्यनुसरणपुरःसरसाधनाभिधानाद् भ्रान्तिसंभवाच्च युक्तं तथाविधोदाहरणाकीर्तनम्, एवं नित्यः शब्दोऽनित्यधर्मानुपलब्धेराकाशवत् अनित्यः शब्दो नित्यधर्मानुपलब्धेर्घटवदित्यपि द्रष्टव्यम, यस्तु न वस्तुमूलः केवलोत्प्रेक्षामात्रावलम्बनः स्वप्रतीतिषु न दृष्टपूर्वः किं तदुपन्यासेन, एतेन सद्वितीयप्रयोगा अपि प्रत्युक्ताः, यथा क चित्साधनप्रयोगे कृते सति तत्रैवं परः प्रत्यवतिष्ठते यथा प्रस्तुतसाध्यधर्माधिकरणत्वशून्यधर्मिघटान्यतरसद्वितीयो घटः अनुत्पन्नत्वात्कुड्यवदिति, यथा प्रस्तुतेन सिषाधयिषितेन धर्मेण शून्यो यः प्रकृतो धर्मी घटश्च तयोरन्यतरेण न सद्वितीयो ऽयं घटरूपो धर्मी तत्र हेतुरनुत्पन्नत्वं तस्य कुड्यादौ व्याप्तिरिति, सत्यं वदत यद्यस्ति लोके क्वचिदीदृशः प्रतीतिक्रमः घटश्च धर्मो धर्मिघटयोरन्यतरेण सद्वितीय इत्यत्रान्यतरशब्दः सामान्यवचनो ऽपि धर्मिणि व्याख्येयो न हि घट एव घटेन सद्वितीयो भवितुमर्हतीत्यलमलीककल्पनाकौशलप्रख्यापनेन ।

सम्यग्वा यदि वा ऽन्यथा विदधते ये हेतवः संविदं
दृष्टाः स्वात्मनि ते प्रयोक्तुमुचिताः कामं परज्ञप्तये ।
ये तु स्वप्रतिपत्तिमेव न तथा कर्तुं क्षमाः कल्पना-
सामर्थ्योत्थितवस्तुशून्यघटनाः किं तत्प्रयोगे फलम् ॥

ये तु सूक्ष्मोत्प्रेक्षणाक्षमप्रज्ञातिशयाभिधानदुर्विदग्धास्तथाविधानपि प्रयुञ्जते।

कृतकवचनाचातुर्यं तैः प्रदर्शितमात्मनो
भवति न पुनः शुद्धिः का चित्प्रमेयदिशः कृता ।
क चिदवसरे त्वेवंप्राया: परभ्रमकारिणः
किल सफलतां दध्युर्जल्पे यथा कथितं पुरा ॥
तत्र त्वेतान्कथयति परः प्राज्ञमानी यदा वा
तस्याख्येयो निपुणमतिना पूर्वनीत्या समाधिः ।
द्राघीयस्या तदलमनया तार्किकंमन्यगोष्ठ्या
हेत्वाभासः प्रकरणसमस्त्वेष निर्णीत एव ॥

## असिद्धलक्षणम् ।

**साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥**

**गौ. सू. अ. १ आ. २ सू ८ ।**

अन्यतरवादिप्रसिद्धमन्यतरं प्रति यत्साधयितुमुपादीयते तत्साध्यम् तद्विशिष्टो हेतुः साध्यसमः, कथं साध्येन तुल्यता हेतोरिति चेदाह साध्यत्वादिति, यथा साध्यमसिद्धत्वात्साध्यं तथा तत्सिद्ध्यर्थमुपात्तो हेतुरपि यो ऽसिद्धत्वात्साध्यः स साध्याविशिष्टत्वात्साध्यसम इत्युच्यते,

एतच्चान्यतरासिद्धस्यैव लक्षणम् यथा मीमांसकं प्रत्यनित्यः शब्दः कृतकत्वाद् घटवदिति, न चाक्षुषत्वादेरुभयासिद्धस्य, न हि तस्य साध्यत्वं सम्भवतीत्यर्थः,

सकलासिद्धभेदसंग्रहाय साध्यत्वादित्येतत्पदरहितं साध्याविशिष्ट इत्येवासिद्धलक्षणमुपवर्णनीयम् , साध्यस्य च रूपद्वयस्यासिद्धत्वं साध्यत्वं च तत्रासिद्धत्वमेव, तदविशिष्टत्वकारणमिहाश्रीयते सर्वासिद्धभेदसाधारणं न तु साध्यत्वमन्यतरासिद्धैकलग्नमिति, एवं चासिद्धत्वमेवासिद्धस्य लक्षणमुक्तं भवति, पक्षधर्मत्वं यस्य नास्ति साध्ये धर्मिणि यो न वर्तते हेतुः सोऽसिद्ध इति,

तस्य तु भूयांसो भेदा भवन्ति—हेतुस्वरूपे तावदन्यतरस्य वादिनो द्वयोर्वा अज्ञानं संदेहो विपर्यय इति, तथा तदाश्रये अपि धर्मिण्येकस्य वा द्वयोर्वा तथैवाज्ञानसंदेहविपर्यया इति, भूयसि च पक्षीकृते ऽर्थे तदेकदेशे क चिद्वृत्तिः तदितरत्रावृत्तिरिति, एकदेशवृत्तावपि द्वयोरेकस्य वा तथैवाज्ञानसंशयविपर्यया इति, एवंप्रकारभेदोदाहरणवर्णनमल्पप्रयोजनमिति न प्रस्तूयते,

"अन्यतरासिद्धेर्न विवदन्ते प्रमाणस्यापक्षपातित्वाद्यदि तावत्कृतकत्वं शब्दे प्रमाणतो निर्णीतं तर्हि मीमांसकस्यापि तार्किकस्येव तत्सिद्धमेव, अथ तत्र कृतकत्वनिश्चयनिपुणं नास्त्येव प्रमाणं तदा तार्किकोऽपि तूष्णीमास्तां द्वयोरप्यसौ चाक्षुषत्वादिवन्न सिद्ध्येद् हेतुः , वाङ्मात्रेण त्वसिद्धिक-

थनमसांप्रतमतिप्रसङ्गादेव"

सत्यमेवं न सर्वदाऽन्यतरासिद्धस्य हेत्वाभासत्वमभिदध्महे किं तु कं चित्कालमिति यदैकेन वादिना हेतौ प्रयुक्ते द्वितीयो वदति सम्प्रति न सिद्ध एष इति तदा हेतोः प्रयोगाद्वादिना तत्साधनमभिधेयमनभिधानात्स पराजीयते साधने तु तेनोक्ते तदसिद्धतोद्भावनवादी पराजीयते इति यावत्तत्सिद्धौ नोपन्यस्तं साधनं तावदेवासावन्यतरसिद्धचनन्तरं तु सम्यग् हेतुरुभयासिद्धो वा भविष्यतीति,

व्यधिकरणासिद्धस्तु यथोक्तभेदान्तर्गत एव, यथा नित्यः शब्दः काकस्य कार्ष्ण्यादिति,

क चित्पुनश्च व्यधिकरणासिद्धोऽपि भवति गमक इत्येके, तद्यथा बहलबहलः प्रचलजलधरश्यामलवपुरम्बरतलमाक्रामन्धूमप्रबन्धः क्षोणीध्रकन्दरादिविशेषधर्मत्वानवधारणेऽपि तत्र गमयितुमलमनलमिति, यथा वाऽग्निमानेष देशो धूमोपलब्धेरिति प्रयुज्यते तदोपलब्धेरात्मधर्मतया वैयधिकरण्येऽपि गमकताऽस्तीति ।

## अन्यथासिद्धनिरूपणम् ।

अन्ये त्वन्यथासिद्धत्वं नाम तद्भेदमुदाहरन्ति यस्य हेतोर्धर्मिणि वृत्तिर्भवन्त्यपि साध्यधर्मप्रयुक्ता भवति न सोऽन्यथासिद्धो यथा नित्या मनःपरमाणवो मूर्तत्वाद् घटवदिति—

"ननु कथमयमन्यथासिद्ध उच्यते किमिति सम्यग् हेतुरेव न भवति किं परमाणुषु मूर्तत्वं न वर्तते किं घटादावनित्यतया व्याप्तं न दृश्यते किमाकाशादेः खपुष्पादेर्वा विपक्षान्न प्रच्यवते किं प्रत्यक्षेणागमेन वा बाध्यते किं प्रतिपक्षेण प्रतिबाध्यते येनाभासतां प्रतिभजते" न प्रतिबन्धाभावात् ।

"ननु पञ्चानां प्रतिबन्धलक्षणानां कतमदस्य श्लथीभूतम्" नान्यतमस्यापि शैथिल्यं ब्रूमः, "तत्किं पञ्चस्वपि लक्षणेषु प्रतिबन्धः समाप्यते तानि चासां सन्त्येव न चैष प्रतिबन्ध इति कैतवम्"

उच्यते प्रयोज्यप्रयोजकभावेन साध्यसाधनधर्मयोर्धूमाग्निवत्प्रतिबन्धोऽवधार्यते स चात्र प्रयोज्यप्रयोजकभावो नास्तीत्यत एवायमन्यथासिद्धोऽप्रयोजक इति कथ्यते,

"कथं पुनरस्याप्रयोजकत्वमवगतम्" उच्यते मूर्तत्वं हि सर्वगतेतरद्रव्यपरिमाणविशेषादिधर्मो वस्तुस्वभावमात्रनिबन्धनो न कृतकत्वादिवदनित्यतां प्रयोक्तुमुत्सहते, तथा हि परमाणुषु सिद्धेषु सत्सु तत्र वर्तमानं मूर्तत्वमनित्यतां साधयेदन्यथा स्वाश्रयासिद्धतामुपेयात्, सिध्यन्त एव सावयवकार्यानुमानमार्गेण लोष्ठविभागावभासमानभागपरम्परापरिकल्पनक्रमेण वा पर-

माणवो निरवयवाः सिध्यन्ति, सावयवत्वे तदवयवाः परमाणवो भवेयुर्न ते, तेषामप्यवयवान्तरपरिकल्पनायामप्यवयवानन्त्याविशेषात्सर्षपस्य मेरोश्च साम्यमापद्यते, न च तदस्ति, तदेवं निरवयवेषु परमाणुषु निसर्गसिद्धमनाश्रितत्वमतश्चाश्रयविनाशावयवविभागादिविनाशकारणाभावात्स्वाभाविकविनाशवादनिराकरणाच्च कथं परमाणूनां नित्यतां स्पृशेत्, मूर्तत्वं तु वस्तुधर्मत्वाद्धवदपि प्रमेयत्वादिवन्न प्रयोजकम्,

इयांस्तु विशेषः–प्रमेयत्वमुभयपक्षस्पर्शादनैकान्तिकं भवदप्रयोजकम् इदं तु मूर्तत्वमनित्यव्यतिरिक्तवस्त्वन्तरपरिचयविरहितमपि न प्रयोजकमिति ।

"नन्विदमपि प्रमेयत्ववद्विपक्षवृत्त्येव मूर्तत्वम्, क्व विपक्षे वर्तते? परमाणुष्वेव, ननु तेषां पक्षीकृतत्वात्कथं विपक्षता? न पुरुषेच्छानुरोधेन वस्तु विपरिवर्तते विपक्षो हि नाम स उच्यते यः सिषाधयिषितधर्माध्यासिततया दृढप्रमाणसिद्धः परमाणवश्चैतेऽनन्तरनिर्दिष्टनीतिक्रमेणानिर्णीतनित्यत्वाः परमार्थतो विपक्षा एवानित्यत्ववादिनः, स तु रागद्वेषकलुषितहृदयतया यदि तान्पक्षतया ब्रवीति ब्रवीतु नाम न तु सुस्पष्टासिद्धनित्यतानां परमाणूनां विपक्षभावो निवर्तते इति"

तदिदमनुपपन्नम् अनेन क्रमेण धूमानुमानस्याप्यनैकान्तिकत्वप्रसङ्गात्, धूमो हि महीभृति हुतवहविरहितवपुषि विपक्षे वर्तत एव, "न तत्र चित्रभानोरभावो निश्चित इति चेत्" किन्नु खलु सद्भावोऽस्य तत्र गृहीतः, तथा सति वा कृतमनुमानेन,

"अथ सत्त्वमसत्त्वं वा नावधारितमेव धराधरे धूमकेतोः" तर्हि संदिग्धा तत्र विपक्षता, निश्चितविपक्षवृत्तिवत् संशयितविपक्षवृत्तिरपि नानैकान्तिकतामतिवर्तत इति सर्वानुमानानामेव निवापाञ्जलिर्दत्तः स्यात्, न च वादिहृदयपरिकल्पनोपारूढस्थितेरपि पक्षो नाम नास्ति तदभावे किमपेक्षः सपक्षविपक्षव्यवहारः, बुद्ध्यारूढत्वपक्षेऽपि न सपक्षविपक्षयोः पक्षत्वं न च वस्तूनामुभयात्मकता भवेत्, किं तु कंचित्कालमन्यतरासिद्धवद्विमतिपथापतितस्य वस्तुनः पक्षत्वमुपेयते, निर्णयजन्मना तु विमतिविरतौ नूनमन्यतरवर्गपतितो ऽसौ भविष्यतीति सर्वथा न तस्यां दशायां तेनानैकान्तिकत्वोद्भावनं युक्तम्,

"नन्वनेन पथा पृथक्कृते सपक्षविपक्षाभ्यां पक्षे न तत्रान्वयव्यतिरेकयोरन्यतरस्यापि ग्रहणं भवेत्, सपक्षे ह्यन्वयो गृह्यते विपक्षे च व्यतिरेकः, एष तु ताभ्यामर्थान्तरमिति तत्रागृहीतान्वयव्यतिरेकात्मकनियमो हेतुः षण्ढ इव न पुत्रजन्मनि समर्थ एव साध्यसाधने भवेत्" अलमनया डिम्भबिभीषिकया न हि सकलसपक्षविपक्षसाक्षात्करणकेकोल्लासपुरःसरं व्याप्तिग्रहणमिति पूर्वमेव निर्णीतोऽयमर्थः, न च तद्वर्जमिति व्याप्तिग्रहणं भवति येन षण्ढसुतसाम्यचोदनाऽवकाशः स्यात्, सामान्येन हि व्याप्तिर्गृह्यमाणा तत्रापि गृहीता भवत्येव, तेनापि च

कालान्तरे सपक्षविपक्षान्यतरवर्गानुप्रवेशिना भवितव्यमेव, विमत्यवस्था या तु पृथगेव ताभ्यामसाविति न तत्र वर्तमानो हेतुरनैकान्तिकीभवति, एतेनेश्वराद्यनुमानानामप्यनैकान्तिकत्वमपाकृतं वेदितव्यम् , तस्मान्नानैकान्तिकत्वेनागमकं मूर्तत्वमपि त्वन्यथासिद्धत्वेनैवेति ।

"नन्वेवमपि परमाणुप्रसाधनानुमानमहिमहतशक्तितया मूर्तत्वमनित्यत्वसिद्धावक्षमं जातमिति ततश्च कालात्ययापदिष्टत्वान्नान्यथासिद्धतामधिगच्छेत्"

नैतदेवम् कालात्ययापदिष्टो हि प्रत्यक्षागमापहृतविषय उच्यते अनुष्णः कृष्णवर्त्मा मदिरा द्विजैः पातव्येत्यादौ दर्शितो यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति, न च परमाणुषु परमाणुतयैव सततपरोक्षेषु प्रत्यक्षमनित्यताविपर्ययग्राहि प्रवर्तितुं शक्तमागमस्तु नास्त्येवेति कुतः कालात्ययापदिष्टता ।

"ननु किमिदमवनिपतिवचनमुत वैदिकी चोदना यत्प्रत्यक्षागमयोरेव बाधकत्वमनुमानं प्रति नानुमानान्तरस्येति, परमाणुप्रसाधनानुमानं हि दृढमदृढस्य तदनित्यतानुमानस्य मूर्तत्वादेर्यदि बाधकं स्यात्को दोषः स्यादिति—

अथ मनुषे–नियम एवैष प्रत्यक्षानुमानयोर्विरोधे प्रत्यक्षमेव बलीय इति तदेवानुमानस्य बाधकमुचितं नानुमानान्तरमिति—

तदसत् अलातचक्रादौ प्रत्यक्षमप्यनुमानेनानन्यथासिद्धेन बाध्यत एव ।

ननु भ्रमणविरतौ परिमितपरिमाणोल्मुकग्राहि प्रत्यक्षमेव तत्र प्रत्यक्षस्य बाधकं नानुमानमिति,

मैवम् अनवरतपरिभ्रमणसमुद्भूतचक्रावभाससमय एवानुमानेन तद्भ्रान्ततानिश्चयात् ,

पूर्वप्रवृत्तमचक्राकारतदलातपरिच्छेदि प्रत्यक्षं बाधकमिति चेन्न,

पूर्वप्रवृत्तत्वेनैवातिक्रान्तत्वात् , तस्मादनुमानमेव चक्रज्ञानबाधकम् एवं चानन्यथासिद्धमनुमानमपि प्रत्यक्षस्य बाधकं भवति, यच्चानन्यथासिद्धतया मूलस्तम्भभूतमखिलानुमानप्रतिष्ठायतनं प्रत्यक्षमपि बाधते तदनुमानस्य तपस्विनः कथं न बाधकम् , अतश्च प्रत्यक्षागमग्रहणस्योपलक्षणार्थत्वादनुमानं बाधितमपि कालात्ययापदिष्टमेवेति"

तदेतदसमीचीनम् अनुमानादेर्बाध्यबाधकभावानुपपत्तेः, सर्वत्र खलु प्रमाणाभासरूपं बाध्यते न तु प्रमाणं नाम शक्यते बाधितुमलातचक्रादावपि प्रत्यक्षाभासस्य बाधकमनुमानं न प्रत्यक्षस्य एवमत्राप्यनुमानाभासस्य बाध्यता नानुमानस्य, तदिदानीमनुमानाभासत्वमस्य किंकृतमिति चिन्त्यताम , "स्वलक्षणवैधुर्यादिति चेत्" किमनुमानान्तरेण बाधकेन, तद्बाध्यतया तु तदाभासत्वकथनमितरस्यापि तादृशमेव, "परमाणुषु प्रसाधनानुमानमनन्य-

थासिद्धमिदं तु मूर्तत्वमन्यथासिद्धमिति चेत्" आगतोऽसि मदीयं पन्थानमन्यथासिद्धत्वादेव च तदप्रामाण्ये सिद्धे किं तद्बाधया, "अन्यथासिद्धत्वमेव कथमिति चेत्" न घटादौ मूर्तत्वप्रयुक्तमनित्यत्वमपि तु कार्यत्वप्रयुक्तं कार्यस्य कारणविभागाद्वा तद्विनाशाद्वा विनाशोपलब्धेः कार्यत्वमेवानित्यत्वप्रयोजकमुक्तं न मूर्तत्वम्, मूर्तत्वे तु नित्यताक्षेपिणि परमाणुतैव हीयेतेत्युक्तम्, तस्मान्न मूर्तत्वमनित्यतायाः कारकं ज्ञापकं वेति भवत्यन्यथासिद्धम्,

"भवत्वेवम् असिद्धवर्गे तु कथमेष हेतुर्गण्यते" साध्यधर्मप्रयुक्ता धर्मिणि वृत्तिरस्य नास्तीति चेद्, यद्येवं पञ्चानामपि तत्प्रयुक्तवृत्तिरहितत्वादसिद्ध एवैको हेत्वाभासः स्यात्।

अथ सत्यपि प्रयोजकत्वे विपक्षवृत्त्याद्यवान्तररूपभेदनिबन्धनानैकान्तिकत्वादिव्यपदेशपञ्चकभाज इमे हेत्वाभासा इष्यन्ते, हन्त तर्हि प्रकृतो ऽयं हेतुर्मूर्तत्वादिति किमनैकान्तिक उच्यतामथ कालात्ययापदिष्ट आहो स्विद्विरुद्ध उत प्रकरणसम इति, नैषामन्यतमो ऽपि वक्तुं शक्यते एतल्लक्षणानुपपत्तेरिति चेत्, काममसिद्धो ऽपि मा वादि पक्षे वर्तमानत्वेन तल्लक्षणस्यानुपपत्तेरिति, आस्तां तर्हि षष्ठ एवायं हेत्वाभासः सम्यग् हेतुतां तावद्यथोक्तनयेन नाश्नुत एव न च तेष्वन्तर्भवतीति बलात् षष्ठ एवावतिष्ठते।

कथं विभागसूत्रमिति चेद्, अतिक्रमिष्याम इदं सूत्रम्, अनतिक्रामन्तः सुस्पष्टदृष्टमपीममप्रयोजकं हेत्वाभासमपन्हुवीमहि न चैवं युक्तमतो वरं सूत्रातिक्रमो न वस्त्वतिक्रम इति,

अथ वा न सूत्रकारनियमोल्लङ्घनं श्रेयः प्रमाद्यन्खलु परिमितदर्शी मादृशो ऽन्यथा ब्रूयान्न न्यायमहोदधेः पारदृश्वा भगवानक्षपादः, तदेनं हेत्वाभासमसिद्धवर्ग एव निक्षिपामः।

"ननु पक्षे वर्तमानः कथं तत्र निक्षेप्तुं शक्यते" यथा साध्यधर्मप्रयोजकतयापक्षे ऽपि वर्तितुं युक्तम् तथा न वर्तत एवायं तत्रेत्यदूरविप्रकर्षेण भवत्येवायमसिद्धः, अत एवायमन्यथासिद्ध इत्युच्यते, यथा सिद्धः सिद्धो भवति तथा न सिद्धः अन्यथा तु सिद्ध इत्यनया नीत्योत्तानवृत्तिमात्रलम्भेऽप्ययमसिद्ध एव, अन्येषु तु हेत्वाभासेषु भङ्ग्या ऽपि नान्तर्भवतीत्युक्तमेतत्, अथ वा सर्वहेत्वाभासानुवृत्तमिदमन्यथासिद्धत्वं नाम रूपमिति न षष्ठो ऽयं हेत्वाभासः, तत्तु क्वचित्केवलमेव दृश्यते क्वचिद्व्यभिचारादिरूपान्तरसहचरितमतश्च व्यभिचारादिरूपापेक्षमेव पञ्चत्वमुपदिष्टवान्मुनिरिति न विभागसूत्रविरोध इत्यलमतिविस्तरेण।

युक्तस्तस्मादन्यथासिद्धनामा हेत्वाभासः सो ऽयमेकप्रकारः।
यस्योत्ताना विद्यमाना ऽपि पक्षे वृत्तिर्न स्यात्साध्यधर्मप्रयुक्ता॥

हेत्वाभासकुटुम्बकस्य तदिदं सर्वस्य साधारणं
रूपं यद्यपि लक्षणान्तरकृतो भेदस्तथा नान्यतः ।
सामान्यं तु विशेषरूपरहितं नास्ति प्रमाणं यथा
मा भूदत्र तथेति नास्य विषयश्चोद्यस्य वस्तुस्थितिः ॥

## अथ बाधितलक्षणम् ।

**कालात्ययापदिष्टः कालातीतः ॥ गौ. सू. अ. १ आ. २ सू. ९ ।**

यथाप्राप्तं हेतुप्रयोगकालमतीत्य यो हेतुरपदिश्यते स कालात्ययापदिष्टः कालातीत इत्युच्यते ।

तत्र केचिदाचक्षते—"प्रतिज्ञानन्तरं हि हेतुः प्रयोक्तुं युक्तः तत्र यः प्रतिज्ञायाः पूर्वमेव दृष्टान्तवचनादेरप्यूर्ध्वं वा प्रयुज्यते स कालात्ययापदिष्ट" इति । तदनुपपन्नम्—

अक्षतप्रतिबन्धस्य साध्यावगतिकारिणः ।
क्रमातिक्रममात्रेण न हेत्वाभासता भवेत् ॥

कियांश्चैष दोषः पदान्तरव्यवहितोच्चारणं नाम, व्यवहितमपि येन सह समुचितसमयमन्वेतुमधिकृतमितरदतिनिकटपठितमपि पराणुद्य दवीयसा ऽपि तेनैव संबन्धमनुभवति यथा—

अयसा पथि गच्छन्तीमौषधीं दीर्घलोचनाम् ।
दृष्टवानसि केदारं यो लुनासि मम प्रियाम् ॥ इति ।

अप्राप्तकालमेव तत्कथितं पृथगेव निग्रहस्थानम्, तच्च पुनरुच्यमानं न कञ्चन स्वार्थमावहति तस्मादपव्याख्यानमेतत् ।

अपर आह—"सविशेषणस्य हेतोः प्रयुज्यमानस्य यस्य विशेषणं कार्यकालमत्येति न तत्पर्यन्तमवतिष्ठते स कालात्ययापदिष्ट इति, यथा कालान्तरस्थायी शब्दः संयोगव्यङ्ग्यत्वाद्रूपवदिति, अत्र न व्यङ्ग्यत्वमात्रं हेतुत्वेन विवक्षितमपि तु सविशेषणं संयोगव्यङ्ग्यत्वं स चायं संयोगो व्यञ्जके दृष्टान्तधर्मिणि रूपे तदवगतिपर्यन्तस्थितिरुपलभ्यते दीपादिसंयोगः, साध्यधर्मिणि तु शब्दे न तदवस्थानमिति दूरतो हि दारुपरशुयोगविच्छिन्ने छेत्रा पुनरुद्यम्यमाने परश्वधे श्रूयते शब्द इति तदुपलब्धिकाले तदत्ययात्कालात्ययापदिष्टो ऽयं हेतुरिति" एतदपि न संगतमसिद्धत्वेनास्य हेत्वाभासान्तरत्वानुपपत्तेः ।

तस्मादयमर्थः हेतोः प्रयोगकालः प्रत्यक्षागमानुपहतपक्षपरिग्रहसमय एव तमतीत्य प्रयुज्यमानः प्रत्यक्षागमबाधिते विषये वर्तमानः कालात्ययापदिष्टो भवति तस्योदाहरणं पूर्वमेव प्रदर्शितम् ।

उष्णो न तेजोऽवयवी कृतकत्वाद् घटादिवत् ।
ब्राह्मणेन सुरा पेया द्रवत्वात्क्षीरनीरवत् ॥

यच्च किं चिदभिधेयमत्र तत्सर्वमुक्तमनुमानलक्षणे ।
अप्रयोजकनिरूपणे पुनः किंचनोदितमतो विरम्यते ॥
हेत्वाभासास्त एते ऽवगतिनियमितानन्यसङ्कीर्णरूपा
निर्णीताः पञ्च ये ऽर्थे विदधति महतीं शुद्धिमभ्यस्यमानाः ।
पश्चादौ वृत्तिभेदाकलनगुरुतरक्लेशनिष्पद्यमाना
नेयत्ता त्वेतदीया क्व चन फलवती नादृता तेन तज्ज्ञाः ॥

इति (१३) हेत्वाभासपदार्थः समाप्तः ।

## अथ छलनिरूपणम् ।

तत्त्वाध्यवसायसंरक्षणं जल्पवितण्डयोः प्रयोजनमुक्तम्, तदङ्गभूतानि छलजातिनिग्रहस्थानानि, यद्यपि च वादे केषां चिदभ्यनुज्ञानमस्ति तथापि जल्पवितण्डे एव तेषां प्राचुर्येण क्षेत्रमिति तदौपयिकतया तत्स्वरूपनिरूपणं युक्तमित्युद्देशक्रमेण छलस्य तावल्लक्षणमाह—

वचनविघातो ऽर्थविकल्पोपपत्त्या छलम् ॥
गौ. सू. अ. १ आ. २ सू. १० ।

छलस्य भेदवत्त्वात्सामान्यलक्षणानि च वक्तव्यानि तानीह सर्वाणि स्वकण्ठेन किल तत्पूर्वकमनुमानमित्यत्र त्रिचतुराक्षरसमर्पितापरिमितविषयवितण्डानुमानलक्षणलब्धनिरतिशयसूत्रकरणकौशलस्य मे किमधुना शिष्यजनमनःक्लेशकारिणा संक्षिप्ताभिधानदोहदेनेति मन्यमानः सूत्रकृदुक्तवान् तत्र वचनविघात इति सूत्रं सामान्यलक्षणप्रतिपादकम्, परस्य वदतो वचनविघातो ऽभिधाननिरोधः छलम्, किमास्यपिधानादिना नेत्याह, अर्थविकल्पोपपत्त्येति, वक्तुरनभिप्रेतमर्थान्तदुक्ते वचसि समारोप्य तन्निषेधं छलवादी करोति, कथमर्थान्तरारोपणमिति चेद्, अर्थविकल्पोपपत्त्या विकल्पमानार्थघटनयेत्यर्थः,

किमुदाहरणं विशेषलक्षणेषु वक्ष्यामः, इहैव कस्मान्नोच्यते असंभवादिति ब्रूमः, न हि निर्विशेषं सामान्यमुपपद्यत इति तदुदाह्रियमाणं बलाद्विशेषनिष्ठमेवावतिष्ठते, अन्येष्वपि गौर्न पदा स्प्रष्टव्येति सामान्योपदेशेषु नामूर्त्तायामाकाशनिर्विशेषवपुषि जातौ स्पर्शप्रसक्तिस्तन्निषेधो ऽवकल्पते किं तु व्यक्तिष्वेवेति विशेषविषय एव सर्वत्र क्रियायोग इति तत्रैवोदाहरणवर्णनं युक्तम्,

"कथं तर्हि सकलहेत्वाभाससार्थसामान्यलक्षणमप्रयोजकमनपेक्षितसव्यभिचारविरुद्धादिविशेषमप्युदाहरणद्वारेण दर्शितमनित्याः परमाणवो मूर्तत्वाद् घटवदिति"

उच्यते प्रमाणे तर्हि प्रत्यक्षादिविशेषनिरपेक्षं कथं प्रमाणसामान्यं नोदाहृतम्, न च तत्सामान्यादन्यत्रापि तथाऽस्त्विति वक्तव्यम्, न हि चाक्षुषेण पश्चाशङ्कवितुमर्हति(?) तस्मान्नैवं वक्तुं शक्यम्, यथा विरुद्धादिविशेषरूपरहितमप्रयोजकत्वं हेत्वाभासे सामान्यरूपं दृश्यते तथा प्रमाणेष्वपि प्रत्यक्षादिविशेषरूपरहितं तद्दृश्यतां यथा वा प्रमाणेषु तन्न दृश्यते तथा हेत्वाभासेष्वपि मा दर्शीति वस्तुस्वभावानामनुयोगक्षेत्रताऽनुपपत्तेः,

अपि चाप्रयोजकत्वं सामान्यं विरुद्धादिविशेषेष्विव तद्रूपरहितेषु स्वविशेषेष्वपि संभवद् दृश्यते, अत एव तदपि स्वविशेषनिष्ठमेवोदाहृतम् अनित्याः परमाणवो मूर्तत्वादिति न त्वाकाशवदनवलम्बनमेव किंचिदप्रयोजकत्वसामान्यमिति, तस्मात्सुष्ठूक्तं न सामान्यलक्षणे शक्यमुदाहर्तुमिति ।

एवं सामान्यलक्षणमभिधाय च्छलस्य विभागमाह—

**तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च ॥**

**गौ. सू. अ. १ आ. २ सू. ११ ।**

निगदव्याख्यातं सूत्रम्, विभागसामान्यलक्षणयोश्चोपदेशपौर्वापर्यनियमो नास्तीति पूर्वमेवोक्तम् ।

## वाक्छललक्षणम् ।

अथ विभागक्रमेण विशेषलक्षणान्याह—

**तत्राविशेषाभिहिते ऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥**

**गौ. सू. अ. १ आ. २ सू. १२ ।**

सम्भवद्विशेष्यविशेषणसाधारणार्थसमर्पणकौशलशालिनि श्लेषालंकारतावति शब्दे प्रयुक्ते सति वक्तुरभिप्रेतमर्थमपह्नुत्य ततोऽर्थान्तरं परिकल्प्य तन्निषेधवचनं वाचि निमित्तभूतायां छलं वाक्छलम्,

नवकम्बलो ऽयं माणवक इति नवः कम्बलो ऽस्य नव कम्बला अस्येति च विग्रहदशा दृश्यमानविशेषमपि समासपदमिदमर्थद्वये ऽप्यविशिष्टम्, तत्राभिनवकम्बलयोगं वक्तुरभिप्रेतं प्रमाणोपपन्नं च निह्नुत्य नवसंख्यासंम्बन्धमध्यारोप्य तत्प्रतिषेधेन परः प्रत्यवतिष्ठते कुतोऽस्य नव कम्बला इति, तदेतत्साधारणशब्दे वाचि छलं वाक्छलमिति, यथा च कस्यांचिदवस्थायां जल्पादौ छलादिप्रयोगो युक्त इति तद्व्युत्पादनमेवं परप्रयुक्तस्यापि सतश्छलादेः प्रतिसमाधानमभिधेयमिति तदपि व्युत्पाद्यते,

नव कम्बला अस्येति मम विवक्षितमिति कुतः प्रतिपन्नमायुष्मता, किमयमभिनवकम्बलयोगप्रतिपादको न भवत्येव बहुव्रीहिः पक्षद्वये ऽपि च सम्भ-

वति, यदि तावदर्थप्रकरणादिसामर्थ्यपर्यालोचनया ऽवसितनियताभिधेय-वृत्तिशब्दव्यवहाराभिज्ञोऽसि तदर्थसिद्धमर्थमभिनवकम्बलसंबन्धमेव बुद्ध्वा तूष्णीमास्स्व ।

अथ शुष्कतार्किककुटुम्बकगर्भदास इव शब्दवृत्तानभिज्ञ एव त्वं तर्हि पक्षद्वयसंभवे संशयानो मामेव पृच्छ किं ते विवक्षितमिति निषेधकः सन्वक्तुमुपक्रमसे ।

"ननु त्वमप्यक्षप्राप्त्यादिफलपर्यन्तशब्दप्रयोगप्रवृत्तः किमिति साधारणमिदमन्धपदप्रायं वचः प्रयुङ्क्षे"

अयि बालिश तवैतदन्धपदम्—

अर्थप्रकरणाधीननियतस्वार्थवृत्तिताम् ।
यो न जानाति शब्दानां स एवमपभाषते ॥
इदमर्थद्वये तावत्साधारणपदं भवेत् ।
जातिशब्दाः पुनर्व्यक्तिसहस्राक्षेपकारिणः ॥
स्पृशन्ति नियतं वाच्यं ते ऽपि प्रकरणादिना ।
ब्राह्मणान्भोजयेत्यादौ तद्बालेन न शिक्षितम् ॥
तस्माच्छब्दार्थसंदेहे प्रयोक्ता वत्स पृच्छ्यते ।
न त्वर्थान्तरमारोप्य तन्निषेधो विधीयते ॥

## सामान्यच्छललक्षणम् ।

**संभवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम्॥**

**गौ. सू. अ. १ आ. २ सू. १३ ।**

अतिव्यापकं सामान्यमतिसामान्यं तद्योगात्तत्सम्भवात्क्वचिद् व्यक्तार्थस्य कस्य चित्संभवतः .संभाव्यमाननिष्पत्तेर्वक्त्राऽभिहितस्य सतो या ऽसद्भूतार्थकल्पना वक्तुरनभिप्रेतातिसामान्यहेतुत्वकल्पना तया च प्रत्यवस्थानं तत्सामान्यनिमित्तं छलं सामान्यच्छलम् ।

यथा क चिदुचितोपचारवचनाराध्यमानगुणवद्ब्राह्मणकुले तत्कथाबहुले राजकुले कश्चित्सुजन्मा .कंचिदग्रजन्मानं स्तौति अहो नु खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इति, तस्मिन्प्रसङ्गे तथाविध एवापरस्तमुत्साहयन्कथयति सम्भवति ब्राह्मणे विद्याचरणसम्पदिति, तत्र पिशुनश्छलवाद्याह यदि ब्राह्मणे विद्याचरणसम्पत्सम्भवति तर्हि व्रात्ये ऽपि ब्राह्मणत्वजात्यनपनयनात्संभवेदिति तत्रेदमतिव्यापकं ब्राह्मणत्वसामान्यं यतो विद्याचरणसम्पदमत्येति च स्पृशति तद्योगाद् ब्राह्मणव्यक्तौ सम्भवतो विद्याचरणसम्पद्रूपस्यार्थस्य वक्त्रा ऽभिहितस्य सतस्तत्र वक्त्रभिमतामेवातिसामान्यहेतुतामारोप्य च्छलवादी प्रत्यवतिष्ठत इति,

अत्रोत्तरम् केन ब्राह्मणत्वस्य हेतुत्वमभिहितं यदनैकान्तिकीकुर्वन्प्रत्यवस्थितोऽसि, संभावनावचनमिदं स्तुत्यर्थमुपन्यस्तम्, विद्याचरणसंपदः पात्रं हि ब्राह्मणाः सति ब्राह्मणत्वे पूर्वजन्मोपचितसुकृतपरिणामाद्भवति विद्याचरणसम्पत्, न तु तदेव तस्या हेतुरिति, यथा सम्भवन्त्यस्मिन्क्षेत्रे शालय इति क्षेत्रप्रशंसापरे वाक्ये प्रयुक्ते नैवं वक्तुमापद्यते यदि क्षेत्रमेव शालिसम्भवहेतुस्तत्र विनापि हलबलीवर्दादिसामग्र्यां महत्यवग्रहे ऽपि शालयो ऽस्मिन्सम्भवेयुरिति, तदिदमर्थवादादिगत्यनभिज्ञस्य भवतो भाषितमित्यास्तामेतत्,

इदं तु भवन्तं पृच्छामि भो महात्मन्—

स्वभावशुद्धा परिनिश्चितार्थसंस्पर्शिनी पुण्यसहस्रलभ्या ।
केनेदृशी सर्वजनानुकूला कल्याणिनी ते निरमायि वाणी ॥

उपचारच्छललक्षणम् ।

**धर्मविकल्पनिर्देशे ऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥**
**गौ. सू. अ. १ आ. २ सू. १४ ।**

अभिधानस्य धर्मो ऽनेकप्रकारो मुख्यया वृत्त्या गौण्या वा लाक्षणिक्या वा यदर्थं प्रत्यायनं तदनेन विकल्पमानेन धर्मेण गौणेन लाक्षणिकेन वा निर्देशे प्रयोगे कृते यो ऽर्थसद्भावप्रतिषेधो मुख्यार्थनिषेधः स उपचारनिमित्तं छलमुपचारच्छलम् ।

यथा मञ्चाः क्रोशन्तीत्युक्ते च्छलवाद्याह कथमचेतनाः काष्ठरचनात्मानो मञ्चाः क्रोशन्ति मञ्चस्थाः पुरुषा एते क्रोशन्ति न मञ्चा इति ।

अत्र समाधिः—वृद्धव्यवहाराच्छब्दार्थव्युत्पत्तिः तत्र न केवलयैव मुख्यया वृत्त्या शब्दाः प्रवर्तमाना दृश्यन्ते वृत्त्यन्तरव्यवहारस्यापि सुप्रवर्तितत्वात्, न च निर्निमित्तमेव परशब्दं परत्र प्रयुक्तवन्तो वयं सहचरणादिसूत्रनिवेदितनिमित्तनिकुरुम्बान्यतमनिमित्तपूर्वकत्वादस्य प्रयोगस्य स्थानादयं तद्वदुपचारः,

"सत्यं गौणलाक्षणिकादिशब्दप्रयोगावगतिबाह्य एव य एवं प्रत्यवतिष्ठते, गौणलाक्षणिकयोः कथं विशेष इति एतत् कथ्यताम्" सत्यं गोशब्दः स्वार्थमभिधाय सास्नादिमन्तं तदीयान् गुणानेव जाड्यमान्द्यादीन् न मूत्रादींल्लक्षयति न तावत्येव विरमति स तु सामानाधिकरण्येन वाहीकेऽपि प्रवर्तते, गौर्वाहीक इत्येवं प्रयुज्यमानः स गौणो भवति, यस्तु स्वार्थाभिधानानन्तरं तदितरमर्थं गुणमगुणं वा लक्षयत्येव न सामानाधिकरण्येन परत्र प्रयुज्यते शब्दः स लाक्षणिको भवति गङ्गायां घोषः प्रतिवसतीति, तथा चोक्तं । गौणे ऽपि प्रयोगे न लक्षणेत्य(यमित्य)लं शास्त्रान्तरोद्गारगहनाभिः कथाभिः—

मुख्यमर्थमथ लाक्षणिकं वा गौणमप्यवगमय्य च शब्दः ।
लोकवेदविहितं व्यवहारं सन्तनोति तदभिज्ञमतीनाम् ॥
कुर्यादाक्षेपं यश्च भाक्ते प्रयोगे वाच्यं मत्वा ऽर्थं तत्र वक्तुर्न दोषः ।
तेन त्वात्मीयं शब्दवृत्तानभिज्ञं रूपं व्यक्तं स्यादत्र वृद्धाः प्रमाणम् ॥

अथ छलपरीक्षा ।

एवं छलस्य विशेषलक्षणान्यभिधाय तत्परीक्षायामाक्षेपं करोति—

**वाक्छलमेवोपचारच्छलं तदविशेषात् ॥**

**गौ. सू. अ. १ आ. २ सू. १६ ।**

न खलु वागुपचारच्छलयोः कश्चिद्विशेषः अनेकधा शब्दार्थं सम्भवति वक्त्रभिमतादर्थादन्यस्य कल्पनं तत्प्रतिषेधनं चोभयत्रापि समानमवान्तरविशेषकृतनानात्वाभ्युपगमे वा तदानन्त्यप्रसङ्गः ।

अत्र समाधिमाह—

**न तदर्थान्तरभावात् ॥ गौ. सू. अ. १ आ. २ सू. १७ ।**

नैतदेवं 'वाक्छलमेवोपचारच्छलमिति ततोऽर्थान्तरत्वात्, वाक्छले हि नवकम्बल इति नवसु कम्बलेषु नवे च कम्बले मुख्यार्थ एव शब्दः स राम इत्यादिवत्, ततस्त्वेकतरं वक्त्रनभिप्रेतं छलवादिना ऽऽरोप्य निषिध्यते, उपचारच्छले तु काष्ठसन्निवेशे मुख्यार्थे मञ्चशब्दः पुरुषे भक्त्या प्रवृत्तः मुख्यमभिधाय च गौणः प्रत्याय्यो भवति न त्वेष क्रमः साधारणशब्देष्विति महान्भेदः, वाक्छले चार्थसत्तैव निषिध्यते कुतो ऽस्य नव कम्बला इतीह तु सतो मञ्चस्य क्रोशनशक्तिर्निषिध्यते ।

समाधिरपि साधारणशब्दानभिज्ञतां परस्य प्रदर्शयता वाक्छले वाच्यः उपचारच्छले तु गौणादिशब्दवृत्त्यनभिज्ञतामिति महान्विशेषः ।

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥**

**गौ. सू. अ. १ आ. २ सू. १८ ।**

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं भवता प्रतिषिध्यते यतः समान्यच्छलं पार्श्वे कृत्वा वागुपचारच्छलयोरभेदमुपहितवानसि यथा चायं तदविशेषादिति त्रित्वप्रतिषेधस्तथा द्वित्वस्यापि किंचित्साधर्म्यस्य सामान्यच्छले ऽपि भावात्, तथा हि यदि तावद्वाचि निमित्तभूतायामिदं प्रवृत्तं छलमिदं चेति तदभेदं मन्यसे तर्हि सामान्यच्छलमपि मा वोचः तदपि हि न शरीरे मनसि बुद्धौ वा निमित्ते अपि तु वाच्येवेति वाक्छलमेवैकं स्यात्, अथैवं सत्यपि तद्विशेषो दृश्यमानो न पराणुद्यते सामान्यच्छले ऽपि न शब्दार्थो ऽन्यथा कृतः किं तु

सामान्यस्य हेतुत्वमनुक्तमारोपितमिति पृथगिष्यते तर्हि वागुपचारच्छले अपि भिद्येते एवेति दर्शितमतो युक्तं भवत्विदम् , न चानन्त्यामयत्तानियमकारिणो निमित्तत्रयस्य दर्शितत्वात्—अवान्तरभेदकृतं तु तदानन्त्यमिष्यते एव जातिवदित्यलं प्रसङ्गेन ।

तस्मात्परस्परविविक्तनिजस्वरूपमीदृक् छलत्रितयमेतदिहोपदिष्टम् ।
तस्य क चित्स्वयमपि क्रियते प्रयोगो वाच्यः परैरभिहितस्य तथा समाधिः ॥

इति (१४) छलपदार्थः ।

## इति श्रीमद्भट्टजयन्तकृतौ न्यायमञ्जर्यामेकादशमाह्निकम् ॥ ११ ॥

## अथजातिप्रकरणम् ।

छलानन्तरं जातेरुद्देशात्तस्याः सामान्यलक्षणं तावदाह—

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥**

**गौ. अ. १ आ. २ सू. १८ ।**

अत्र त्रैकाल्यसमादिसकलविशेषसंग्रहाय साधर्म्यवैधर्म्यादिनिरपेक्षमेव प्रत्यवस्थानपदं जातिसामान्यलक्षणप्रतिपादकमाहुः, प्रतीपमवस्थानं प्रत्यवस्थानं तावन्मात्रमेव च यत्किं चिदुत्तरं परप्रयुक्ते हेतौ जायमानत्वाज्जातिरित्यभिधीयते,

तदनुपपन्नम्—प्रत्यवस्थानमात्रस्य साधर्म्यादिनिरपेक्षस्य जातित्वे हेत्वाभासोद्भावनमपि जातितामश्नुवीत ।

अथ तस्य सम्यगुत्तरत्वादिह च निर्विशेषणप्रत्यवस्थानमात्रोपपादनात्फल्गुप्रायमसदुत्तरं जातित्वेन विवक्षितमित्युच्यते, तथापि छलस्य जातित्वप्रसक्तिरपरिहार्यैव, तद्व्युदासाय तु तदन्यत्वे सतीत्यादिकं यदि किं चिदध्याह्रियते तदमुष्य श्रूयमाणस्य साधर्म्येण वैधर्म्येण वा प्रत्यवस्थानमस्तीति नैष दोषः साधर्म्यवैधर्म्याभ्यामित्यसमासकरणेन दिक्प्रदर्शनस्य सूचनात् । साधर्म्येण वैधर्म्येण वा कथमेष हेतुर्हेतूभवतीति वा किमनेन क्रियते इति वा यदेवंप्रकारप्रत्यवस्थानं हेतुप्रतिबिम्बवर्त्मना क्रियते सा भविष्यति जातिरित्युच्यमाने सकलविशेषसंग्रहः त्रैकाल्यसमादिष्वपि यादृशस्य तादृशस्य साधर्म्यवैधर्म्यप्रकारस्य योजयितुं शक्यत्वात् , न ह्युदाहरणसाधर्म्यं साध्यसाधनमिह विवक्षितं तद्वैधर्म्यं वा साधर्म्यादिमात्रं तु तत्रापि नात्यन्ताय दूरगमिति यथाश्रुतं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरिति सामान्यलक्षणं युक्तम् ।

अथ भेदवत्त्वाज्जातेश्चतुर्विंशतिधा विभागमाह—

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्र-**

तिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्य-
नुपलब्धिनित्यानित्यकार्यसमाः ॥
गौ. अ. ५ आ. २ सू. २ ।

अत्र समा इति स्त्रियां पुंसि च तुल्यत्वान्निर्देशस्य जात्यपेक्षया स्त्रीनिर्देशो वा प्रतिषेधापेक्षया वा पुंनिर्देशो वर्णनीयः, विशेषलक्षणसूत्रेषु पुनः प्रायेण पुंलिङ्गनिर्देशो दृश्यते स तु प्रतिषेधापेक्षया तेषु व्याख्येय इति तद्व्याख्यानावसर एव वक्ष्यामः ।

## जातिव्युत्पादनपरीक्षा—

"नन्वास्तां तावद्विशेषलक्षणवर्णनम् इदमेव त्वादौ चिन्त्यताम्--किमर्थमेवंविधमसदुत्तरजातं शास्त्रे व्युत्पाद्यते,

एवंप्रकाराणां च धूलिप्रक्षेपसदृशानां सारेतरपरीक्षणक्षमविचक्षणोपेक्षणीयानामसदुत्तराणामानन्त्याच्चतुर्विंशतिसंख्याऽपि कथमिति मनसि महान्विस्मयो ऽस्माकम्,

यदपि च तत्त्वाध्यवसायसंरक्षणं तत्प्रयोजनमभिधीयते तदपि न हृदयंगमम्, असदुत्तरोपन्यासेन तत्त्वाध्यवसायस्य संरक्षितुमशक्यत्वात्,

अथ विकटाटोपप्रकटनपाटवोपहितापरसंमोहनद्वारेण तद्रक्षणमास्थीयते तर्हि ष्ठीवितहसितांसमर्दनकौपीनावरणविदारणचरणावस्फोटनाद्यपि व्युत्पाद्यतामिह मोक्षविद्यायाम्,

तथा ऽपि चेदं विचार्यताम् क्व जातिप्रयोगैः प्रत्यवस्थेयम्, सम्यक्साधने परेण प्रयुक्ते तदाभासे वा, न तावत्साधनाभासे तस्य हि येन निमित्तेनासिद्धत्वादिना साधनाभासत्वमुपनतं तदेव तत्र प्रयोक्तुमुचितं न जातयः, तेनैव च परः पराजीयते, नापि सम्यक्साधने तत्र प्रयुक्तानामपि तासामकिंचित्कार्यकरत्वात्, न हि जातिप्रयोगकलुषितमपि सम्यक्साधनमसाधनीभवितुमर्हति ।

अथैकान्तपराजयाद्वरं संदेह इति ताभिरुपक्रमते तत्रापि स तथोपक्रममाणः कमिव प्रत्याययेत्, नीतिविदस्तावज्जानन्त्येव सोऽयं यथोचितमभिवदितुमपारयन्किमप्यालजालमालपितुं प्रवृत्त इति, शाकटिकादिप्रत्यायनार्थं तु प्रत्यन्तगह्वरजनपदेषु ग्राम्यसदसि लाभादिकामस्य कस्य चित्प्रयोजनवद्भवेदपि कदा चिन्न तु मोक्षशास्त्रे तथाविधोपदेशः पेशल इति" ।

अत्राभिधीयते--समाहितमेतद्भगवता सूत्रकारेणैव तत्त्वाध्यवसायसंरक्षणार्थं कण्टकशाखापरिवरणवदिति वदता, जल्पवितण्डाङ्गभूतानि च च्छलादीनि, तदुक्तं-'छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प' इति, भाष्यकृदप्याह-

'छलजातिनिग्रहस्थानानां पृथगुपदेश उपलक्षणार्थ उपलक्षितानां स्ववाक्ये परिवर्जनं परवाक्ये च पर्यनुयोगः जातेस्तु परेण प्रयुज्यमानायाः सुवचः समाधिः स्वयं च सुकरः प्रयोग' इति, यदा हि मुमुक्षोरागमाद्वा युक्तितो वा तत्त्वज्ञानमुत्पन्नं न चाद्यापि भावनाभ्यासप्रसादसमासादितद्रढिमातिशयं वर्तते तस्यामवस्थायां यदि केन चित्किमप्यनुमानप्रायमभिधाय तदा व्याकुलीक्रियते तदासौ विदितयुक्त्यागमगौरवो ऽपि सपदि तदुत्पादिते तत्त्वज्ञाने मनागसंभावनालेशमिवाधिगच्छेत्, तस्मिन्वा दृढप्रत्यये ऽपि तत्पार्श्ववर्तिनः शिथिलास्था भवेयुः, अतो झगिति स दूषणमपश्यन्प्रतिपक्षं जातिप्रयोगैरप्यसौ शमयेदेव नोदासीतेत्युक्तं जल्पलक्षणे, परोदिता वा जातीः प्रत्यभिज्ञाय तत्क्षणमेव परिहरेदिति सफलं जातिव्युत्पादनम्, यथा क चिदचिरव्युप्तसस्ये संप्रत्युद्भिद्यमानकोमलाङ्कुरनिकरदन्तुरितसीमनि केदारे तदुपद्रवो द्रततरगामिनो यतः कुतश्चन चतुष्पदाद् द्विपदाद्वा ऽभिशङ्क्यते इति तत्परिहाराय समन्ततो निरन्तरकण्टकशाखासंततिपरिचरणमाधीयत एवमिहापि जात्यादिप्रयोगः, तद्द्वारकं तत्त्वाध्यवसायसंरक्षणं कर्तव्यम् ।

यत्तु विकल्पितं क जातेः प्रयोगः सम्यक्साधने तदाभासे वेति, तदुच्यते–सम्यग् दूषणमपश्यता किल जात्यादि प्रयोक्तव्यं तच्च सम्यक्साधने तदभावादेव भवतु साधनाभासे वा प्रमादादिना वेति को ऽत्र विशेषः, मुमुक्षोस्तु ज्ञाततत्त्वस्य तत्प्रतिकूलवादिना केन चिदाक्षिप्तस्य तत्प्रयुक्ते तत्त्वप्रतिक्षेपबलात्साधनाभास एव सम्यग् दूषणमपश्यतो जातिप्रयोगावसरः, ज्ञात्वापि साधनाभासतां यथा तथा सत्वरमेव निर्भर्त्स्यतामयं दुराचार इति पार्श्वस्थितसुकुमारमतिशिष्यजनोत्साहजननाय जात्याद्याडम्बरविरचनमुचितमेव मुमुक्षोः, मुमुक्षुं प्रति च शास्त्रारम्भादाक्रम्येन तदपेक्षया साधनाभासविषय एव जातिप्रयोगः, अत एव च भाष्यकृता प्रथमं साधनाभास एव जात्युदाहरणं दर्शितम्, लाभादिकामानां तु सम्यक्साधने ऽपि प्रयुक्ते युक्त एव जात्याद्युपक्रमः, इतरथा हि निःसंशय एव पराजयः स्यादित्येतच्चानुषङ्गिकं प्रयोजनमित्युक्तम्।

यत्पुनरभिहितमसदुत्तरकथने कथं न चपेटादिकं प्रयुज्यते इति, तदप्यसत्तस्यात्यन्तमलौकिकत्वात्, लोको हि तदेवं मन्यते--

नूनमेष न जानाति वक्तुं सदृशमुत्तरम ।
अन्यथा वाचमुत्सृज्य पाणिना प्रहरेत्कथम् ॥
खेदयेद्वादिनं यस्तु हस्तपादादिचापलैः ।
स संसद्युच्यते सद्भिर्भण्ड एव न पण्डितः ॥
जात्योपक्रममाणस्तु न तथैव विहस्यते ।
न हि संदूषणच्छाया तत्रात्यन्तमसंगता ॥

तत्र कौपीनवसनापासनादिसाम्यं जात्युत्तराणामिति, यत्तु कस्तैः प्रत्याय्यत इति न सर्वः सर्वज्ञकल्पो भवति न च शाकटिकतुल्यः सन्ति हि मध्यमदशावर्तिनो जनास्त आराधयिष्यन्त इत्यलं प्रसङ्गेन ।

यत्पुनरसदुत्तराणामानन्त्यात्कथं चतुर्विंशतिसंख्येति, तत्राप्युच्यते—सत्यप्यानन्त्ये जातीनामसंकीर्णोदाहरणविवक्षया चतुर्विंशतिप्रकारत्वमुपवर्णितं न तु तत्संख्यानियमः कृत इति ।

तदत्र साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतोः तत्साधर्म्यसमा जातिः, सा च साधर्म्यहेतौ वैधर्म्यहेतौ च प्रयुज्यते, वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिः, उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती इत्येवं सर्वत्र योज्यम् , स्थापनहेतुतश्चाविशेष्यमाणत्वं जातिवाद्यभिप्रायेण तासां द्रष्टव्यम् , जातिवादी ह्येवं वदति यथा भवत्प्रयुक्तं साधनं तथेदमपि किमिति न भवतीति , अत एव हेतुप्रतिबिम्बनद्वारक एव जात्युपन्यास इत्युक्तम् ।

## साधर्म्यवैधर्म्यसमयोर्लक्षणे ।

अथ विशेषलक्षणान्याह, तत्र—

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमः॥**

**गौ. अ. ५ आ. १ सू. २ ।**

प्रतिषेधापेक्षया पुंलिङ्गनिर्देश इति तत्र तत्र द्रष्टव्यम् , साधर्म्येण वैधर्म्येण वा साधनमभिधाय सिषाधयिषितपक्षोपसंहारे साधनवादिना कृते साध्यधर्मविपर्ययोपपादनाय साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः , तत्रैव साधर्म्येण वैधर्म्येण वोपसंहारे तथैव वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः प्रतिषेधः ।

उदाहरणं तु अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् यत्प्रयत्नानन्तरीयकं तदनित्यं दृष्टं यथा घट इति साधर्म्येण हेतौ प्रयुक्ते जातिवादी साधर्म्येणैव प्रत्यवतिष्ठते—नित्यः शब्दो निरवयवत्वाद् निरवयवं द्रव्यमाकाशादि नित्यं दृष्टमिति, न चात्र विशेषहेतुरस्ति घटसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यः शब्दो न पुनराकाशसाधर्म्यान्निरवयवत्वान्नित्य इति, वैधर्म्यहेतावपि साधनादिना प्रयुक्ते अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् यदनित्यं न भवति तत्प्रयत्नानन्तरीयकमपि न भवत्याकाशादिवदित्यत्रैतदेव पूर्वोक्तं साधर्म्यवैधर्म्यप्रत्यवस्थानद्वयमुदाहर्तव्यमिति ।

यथा च क्वचिदवसरे स्वयं प्रयोगो जातीनामुपयुज्यत इति तत्स्वरूपव्युत्पादनमुपक्रान्तमेवं परप्रयुक्तानां तासामुत्तरमपि वक्तव्यमतस्तद्व्युत्पादनार्थमाह—

**गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ गौ. अ. ५ आ. १ सू. ३ ।**

साधर्म्यवैधर्म्ययोरिदमुत्तरम् , यदि साधर्म्यमात्रं वैधर्म्यमात्रं वा साध्यसाधनं प्रतिज्ञायेत स्यादियमव्यवस्था भवेच्च भवत्प्रयुक्तानामीदृशामपि स्थापनहेतोरविशेषः, विशिष्टं तु साधर्म्यं वैधर्म्यं वा प्रयोजकमुच्यमानं नैवंविधैः प्रत्यवस्थानैरुपहन्यते, यथा सत्यपि सत्तादिसामान्यसंबन्धे सत्यपि शुक्लादिगुणसंबन्धे सत्यपि चलनादिकर्मयोगे न गौस्तथा तत्साधर्म्यात्सिध्यति अश्वादिवैधर्म्याद्वा किं त्वव्यभिचारिणो गोत्वादिसंबन्धादेव तथेहाप्यस्खलितनियमं साधर्म्यं वैधर्म्यं वा साध्यसिद्धिनिबन्धनं न साधर्म्यादिमात्रमिति ।

उत्कर्षसमादीनां षण्णां लक्षणानि—

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ गौ. अ. ५ आ. १ सू. ४ ।

दृष्टान्तधर्मं साध्ये धर्मिणि योजयन्नसन्तमध्यारोपयन्नुत्कर्षेण प्रत्यवस्थानं यत्करोति स उत्कर्षसमः प्रतिषेधः, यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवद् अनित्यः शब्दो घटवदेव मूर्तोऽपि भवति न चेन्मूर्तो घटवदनित्योऽपि तद्धर्मो मा भूदिति मूर्तस्य धर्मान्तरस्य प्रसञ्जनमुत्कर्षः ।

दृष्टान्तधर्मविकल्पेनैव साध्यधर्मिणि सिद्धस्यापि धर्मस्यापकर्षेण प्रत्यवस्थानमपकर्षसमः, पूर्वस्मिन्नेव प्रयोगे घटः खलु प्रयत्नानन्तरीयकत्वादश्रावणोऽस्तु न चेदश्रावणो घटवदनित्योऽपि मा भूदिति सतः श्रावणत्वस्यापसरणमपकर्षः ।

ख्यापनीयो वर्ण्यः प्रतिपिपादयिषितः साध्यधर्मः तद्विपर्ययादवर्ण्यः सिद्धो दृष्टान्तधर्मः तावेतौ वर्ण्यावर्ण्यसमौ प्रतिषेधौ भवतः, यदि शब्दो नित्यत्वेन वर्ण्यते साध्यते घटोऽपि वर्ण्यतामिति वर्ण्यसमः, घटश्चेन्न वर्ण्यते शब्दोऽपि मा वर्णीत्यवर्ण्यसमः ।

धर्मान्तरविकल्पेन प्रत्यवस्थानं विकल्पसमः प्रतिषेधः, तत्रैव प्रयोगे प्रयत्नानन्तरीयकं किं चिन्मृदु दृष्टं दुकूलराङ्कवशय्यादि किं चित्कठिनं कर्परपरश्वधादि एवं प्रयत्नानन्तरीयकं किं चिदनित्यं भविष्यति घटादि किं चिन्नित्यं शब्दादीति ।

उभयोरपि साध्यदृष्टान्तयोः साध्यत्वापादनेन प्रत्यवस्थानं साध्यसमः प्रतिषेधः, यदि यथा घटस्तथा शब्दः प्राप्तं तर्हि यथा शब्दस्तथा घट इति शब्दश्चानित्यतया साध्य इति घटोऽपि साध्य एव स्यादन्यथा हि न तेन तुल्यो भवेदिति ।

अत्र पञ्चानामुत्तरम्—

किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥
गौ. अ. ५. आ. १. सू. ५ ।

किंचित्साधर्म्यादुपसंहारः सिध्यति यथा गौरेवमयं गवय इति न तु सर्वथा रूपभेदस्तयोः कर्त्तुं शक्यः, प्रमाणावगतस्वभावभेदानां भावानामितरेतररूपसंकरस्य कर्तुमशक्यत्वात्, एवं स्वप्रतिबिम्बसामर्थ्यसुस्थिते स्वसाध्यमुत्थापयति स्थापनाहेतौ साध्यदृष्टान्तयोर्धर्मविकल्पमापादयता वैधर्म्यं च किंचिदभिदधता प्रतिषेधः कर्तु लभ्यत इति ।

अथ षष्ठस्योत्तरम्—

**साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ गौ. अ. ५ आ. १ सू. ६ ।**

यदुच्यते घटो ऽपि शब्दवत्साध्यो भवत्विति तन्नैवम्, लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः तेनाविपरीततया शब्दोऽतिदिश्यते यथा घटः प्रयत्नानन्तरीयकः सन्ननित्यः एवं शब्दो ऽपीति, एवं साध्यातिदेशाद् दृष्टान्त उपपद्यमाने न तस्य साध्यत्वाभिधानमुपपद्यते ।

**प्राप्त्यप्राप्तिसमयोर्लक्षणे—**

**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ गौ. अ. ५ आ. १ सू ७ ।**

प्राप्त्यप्राप्तिविकल्पनपूर्वकमुभयत्रापि दोषापादनं प्राप्त्यप्राप्तिसमौ प्रतिषेधौ भवतः, हेतौ साधनवादिना प्रयुक्ते पर आह—सो ऽयं हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा ? प्राप्य चेद् द्वयोर्लब्धस्वरूपयोरप्राप्तिर्भवतीति किं कस्य साध्यं साधनं वेत्यविशेषः, अप्राप्य तु साधकत्वमनुपपन्नमतिप्रसङ्गात् , न ह्यप्राप्य प्रदीपः प्रकाश्यं प्रकाशयतीति ।

अनयोरुत्तरम्—

**घटादिनिष्पत्तेः पीडने चाभिचारादप्रतिषेधः ॥**
**गौ. अ ५ आ. १ सू. ८ ।**

नायं प्रतिषेध उपपद्यते उभयथाऽपि कारणस्य भावदर्शनात् दण्डचक्रसूत्रादिकारकाणि प्राप्य मृदं घटादिकार्यं निष्पादयन्ति दृश्यन्ते अभिचारकर्मणा च श्येनादिना दूरस्थस्यापि शत्रोः पीडनं सम्पाद्यत इति ।

**प्रसङ्गप्रतिदृष्टान्तसमयोर्लक्षणे—**

**दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्ते प्रसङ्गप्रतिदृष्टान्तसमौ ॥ गौ. अ. ५ आ. १ सू. ९ ।**

अत्र प्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः, पूर्वोदाहृत एव हेतौ यद्यनित्यत्वे प्रयत्नानन्तरीयकत्वं साधनं प्रयत्नानन्तरीयकत्व इदानीं किं साधनं तत्साधने किमिति दृष्टान्तस्य घटादेरनित्यतायां कारणं किंचिदपदिश्यते तेन

तत्कारणान्वेषणातिप्रसङ्गात्प्रसङ्गसमो ऽयं प्रतिषेधः, प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः ।

यथा घटः प्रयत्नानन्तरीयकः सन्ननित्यो दृष्ट एवमाकाशं प्रयत्नानन्तरीयकं नित्यं दृश्यते तद्वच्छब्दो ऽपि नित्यः स्यादिति, कः पुनराकाशस्य प्रयत्नानन्तरीयकत्वं वदेत् कूपखननादिना ऽऽकाशकरणं मन्वान एवं ब्रूयादपि कश्चित् ।

"नन्वेवमपि व्यभिचारोद्भावनमेतत्सम्यगुत्तरं नासदुत्तरप्रकारो जातिप्रयोगः" नैतदेवम्, न हि हेतोरनैकान्तिकत्वमुद्भावयन्नसौ साधुरिव जातिवादी प्रत्यवतिष्ठते ऽपि तु दृष्टान्तबलेन नित्यत्वमेव साधयन्नुत्थित इति जातिप्रयोग एवायम्, हेत्वाभासा अपि स्वरूपनिग्रहपुरःसरमपरहेतुप्रतिबिम्बवर्त्मना प्रदर्श्यमाना जातितां प्रतिपद्यन्त एव ।

अत्र प्रसङ्गसमस्य तावदुत्तरमाह—

प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः ॥ गौ.सू .५ आ.१ सू . १० ।

असिद्धं हि नाम साध्यते न सिद्धं प्रयत्नवैफल्यात्, सान्धकारे सद्मनि-पिठरादिपदार्थदर्शनाय प्रदीपमुपाददते लौकिका न दीपदर्शनार्थं दीपान्तरपरम्परामाहरन्तीति, अन्तरेणापि हि दीपान्तराणि दृश्यत एव प्रदीपः, एवं लौकिकपरीक्षकाणां घटादौ प्रयत्नानन्तरीयकत्वस्य सिद्धत्वात्तत्र कारणापदेशो निष्प्रयोजन इति तस्मान्नायमतिप्रसङ्गापादनस्य विषयः ।

अथ प्रतिदृष्टान्तसमस्योत्तरम्—

प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥
गौ. अ. ५ आ. १ सू. ११ ।

प्रतिदृष्टान्त एव साधकबुद्ध्या यदि त्वयोपन्यस्तस्तर्हि विशेषहेतुर्वक्तव्यो ऽनेन हेतुना प्रतिदृष्टान्त एव साधको न दृष्टान्त इति न चासौ विशेषे हेतुरुच्यते तस्मान्न प्रतिदृष्टान्तः सिद्धिहेतुरिति दृष्टान्त एव साधको भवति, प्रतिदृष्टान्तहेतुत्वेऽपि स्थिते सत्यहेतुर्दृष्टान्तो न हि साधकः स्यात्, न च तदस्तीत्युक्तमतो न हेतुर्दृष्टान्तः,

अथ यथा प्रतिदृष्टान्तो न साधक एवं दृष्टान्तोऽपि मा भूदित्यनया नीत्या प्रत्यवतिष्ठसे हन्त तर्हि प्रतिदृष्टान्तस्य तावदहेतुत्वं स्वकण्ठेन कथितमिति तस्मिन्नसाधके दृष्टान्त एव साधक इति ।

अनुत्पत्तिसमस्य लक्षणम्—

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥
गौ. अ. ५ आ. १ सू. १२ ।

अनुपत्त्या प्रत्यवस्थानमनुत्पत्तिसमः प्रतिषेधः, प्राक्तन एव प्रयोगे जाति-

वाद्याह अनित्य इत्युत्पत्तिधर्मक उच्यते यश्चोत्पत्तिधर्मकः तस्योत्पत्तेः पूर्वमनुत्पत्त्या भवितव्यमनुत्पन्ने च शब्दाख्ये धर्मिणि प्रयत्नानन्तरीयकत्वं धर्मः क वर्ततामलब्धपक्षवृत्तेश्च कथमनित्यत्वं साधयत्वसिद्धे चानित्यत्वे शब्दस्य बलान्नित्यत्वमेव भवति कारणाभावादित्यनित्यत्वसिद्धिकारणस्य प्रयत्नानन्तरीयकत्वस्याभावादित्यर्थः, तथा च शब्दोत्पादककारणाभावादनुत्पन्ने शब्दे निराश्रयो हेतुरिति।

अस्योत्तरम्—

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥
गौ. अ. ५ आ. १ सू. १३।

शब्दाख्यधर्मिणः सिद्धस्य सतो नित्यत्वमनित्यत्वं वा विचार्यते तदसिद्धौ हि नित्यत्वमपि कस्य भवानभिदधीत, उत्पन्नस्य चास्य तथाभावो भवति नानुत्पन्नस्य, उत्पन्नः खल्वयं शब्द इति भवति नानुत्पन्नः, प्रागुत्पत्तेरलब्धात्मनः किमुच्यते, लब्धस्वरूपस्य पुनरनित्यत्वकारणप्रयत्नानन्तरीयकत्वसद्भावादयुक्त एवायं प्रतिषेधः।

संशयसमस्य लक्षणम्—

नित्यानित्यत्वसाधर्म्यात्संशयसमः ॥ गौ. अ. ५ आ. १सू.१४।

नित्यानित्यसाधर्म्योपन्यासेन संशयापादनप्रवणं प्रत्यवस्थानं संशयसमः प्रतिषेधः, अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्यस्मिन्नेव हेतौ अस्ति शब्दस्यानित्यत्वसाधर्म्यं प्रयत्नानन्तरीयकत्वमस्ति च नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वमतः किमनित्यसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यः शब्द उत नित्यसाधर्म्यादैन्द्रियकत्वान्नित्य इति संशय एवं परः प्रत्यवतिष्ठते, न च साधर्म्यसमप्रयोग एवायमाशङ्कनीयः संशयापादनप्रवणत्वादस्येति।

अस्योत्तरम्—

साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशये ऽत्यन्तसंशयो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥
गौ. अ. ५ आ. १ सू. १५।

स्थाणुर्वा पुरुषो वेति स्थाणुपुरुषयोश्च साधर्म्यादूर्ध्वत्वादेः संशयो भवति न तु शिरःपाण्यादिवैधर्म्यात्प्रत्युत ततो ऽसौ निवर्त्तते यदि पुनरुभयथापि साधर्म्यादिव वैधर्म्यादपि संशयः स्यात्तथा सत्यनन्तसंशयः प्राप्नोति, इह च विशेषदर्शनस्थानीयमनित्यतासाधनं शब्दे प्रयत्नानन्तरीयकत्वमस्तीति नित्यत्वं सामान्यगतं संशयकारणत्वमिति नाभ्युपगम्यते तस्मादप्रतिषेधो ऽयं नित्यसामान्यसाधर्म्यनिबन्धनसंशयापादनरूपः।

प्रकरणसमस्य लक्षणम्—

**उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः ॥**

**गौ. अ. ५ आ. १ सू. १६ ।**

पक्षप्रतिपक्षौ निर्णयलक्षणे व्याख्यातौ तावेव प्रकरणं प्रकरणमनतिवर्त्तमानः प्रकरणसमः प्रतिषेधो भवति, पूर्वस्मिन्नेव प्रयोगे नित्यः शब्दो निरवयवत्वादाकाशवदित्येवञ्जायतीयकं प्रतिप्रयोगमुपन्यस्यन्स्वपक्षमुत्थापयति जातिवादी, साधर्म्यग्रहणं चोपलक्षणं वैधर्म्येणापि प्रतिप्रयोगोपन्यासे प्रकरणसम एव प्रतिषेधो भवत्युभयवैधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति, मूलहेतावपि साधर्म्येण वैधर्म्येण वा प्रयुक्ते प्रयोगद्वयमेतद्वेदितव्यम् ,

"ननु ते एवैते साधर्म्यवैधर्म्यसमे जाती साधर्म्यहेतौ वैधर्म्यहेतौ वा प्रयुज्यमानत्वाच्च तवोत्थिते इति ताभ्यामेव गतत्वान्नाभिनवो ऽयं जातिप्रयोगः चतस्रश्चैता जातय इत्येकत्वमपि न सङ्गतम्"

उच्यते—तत्र परपक्षप्रवणप्रतिषेधतयैव प्रत्यवस्थानमुदाहृतमिहैव साधनच्छाययेति, अत एव प्रकरणसमो ऽयं जातिरनित्यपक्षवन्नित्यपक्षो ऽपि प्रतिक्रियते ऽस्यामिति, उद्भावनभङ्गिभेदाच्च जातिनानात्वमसङ्कीर्णोदाहरणविवक्षया चतुर्विंशतिभेदत्वं वस्तुतस्तु तासामानन्त्यमित्युक्तम् ।

अत्रोत्तरम्—

**प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥**

**अ. ५ आ. १ सू. १७ ।**

निर्णयोत्पत्त्या प्रकरणं पर्यवसितं भवति प्रागुक्तनिर्णयात्तदवस्थानमेव तदिह प्रकरणमुत्थापयता भवतोभयसाधर्म्यं तदुत्थापनकारणमभिहितमुभयसाधर्म्यात्प्रक्रियासिद्धेरिति ब्रुवता उभयसाधर्म्यं च मदुक्तमपि साधर्म्यमस्त्येव अन्यथोभयशब्दार्थः कः, एवं च तदभ्यनुज्ञातं भवतीति तत्प्रतिषेधो नोपपद्यते प्रतिषेधोपपत्तौ वा नोभयसाधर्म्यं प्रकरणकारणं सिध्यतीति निर्णयोत्पत्तिनिमित्तं च प्रकरणोपरमाय न किं चिदुक्तमुभयसाधर्म्याभिधानादिति ।

अहेतुसमस्य लक्षणम्—

**त्रैकाल्यानुपपत्तेर्हेतोरहेतुसमः ॥ गौ. अ. ५ आ. १ सू. १८ ।**

कालत्रयानुपपत्त्या हेतुमाक्षिप्य क्रियमाणः प्रतिषेधो ऽहेतुसमो भवति, हेतुः साधनं साधनं च साध्यात्पूर्वं साधनं तदसति साध्ये कस्य साधनम् अथ पश्चाद् असति साधने कस्येदं साध्यम् अथ युगपत्साध्यसाधने भवतः न तर्हि तयोः सव्येतरगोविषाणयोरिव साध्यसाधनभावो भवेदित्ययं हेतुरहेतोर्न विशिष्यते ।

अस्योत्तरम्—

न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥

गौ. अ. ५ आ. १ सू. १९ ।

न त्रैकाल्यासिद्धिः, कस्माद् ? हेतुतः साध्यसिद्धेः उत्पत्तौ तावदयमपर्यनुयोगः पूर्वसिद्धेन हेतुना तन्त्वादिना पश्चाद्भाविनो ऽसत एव कार्यस्य पटादेः सिद्धिरित्युक्तत्वात्, 'बुद्धिसिद्धं तु तदसदि'ति ज्ञप्तावपि परिहृत एव दोषः उपलब्धिहेतोरुपलब्धिविषयस्य पूर्वापरसहभावानियमाद्यथादर्शनं व्यवस्थेति प्रमाणपरीक्षायामभिधानात् दृश्यते च निर्वर्तनहेतुना निर्वर्तनीयस्य निर्वृत्तिरुपलब्धिहेतुना चोपलभ्यस्योपलम्भ इति प्रमाणसिद्धे वस्तुनि को ऽयमाक्षेपः ।

प्रतिषेधे च तुल्यो ऽयमनुयोग इत्याह—

प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥

अ. गौ. ५ आ. १ सू. २० ।

प्रतिषेधो ऽपि प्रतिषेध्यात्पूर्वं पश्चात्सह वा भवेदिति विकल्प्यमाने न प्रतिषेध्यं प्रतिषेद्धुमुत्सहत इति ।

अर्थापत्तिसमस्य लक्षणम्—

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ अ. ५ आ. १ सू. २१

अर्थादापद्यते प्रतिपक्षसिद्धिरित्येवं क्रियमाणः प्रतिषेधो ऽर्थापत्तिसमो भवति, पूर्वस्मिन्नेव प्रयोगे यदि घटसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यः शब्दः अर्थादापद्यते आकाशसाधर्म्यान्नित्य इति, अस्ति चास्य नित्येन साधर्म्यमाकाशादिना द्रव्येण निरवयवत्वमिति, उद्भावनप्रकारभेदाच्च जातिभेद इत्युक्तम् ।

अस्योत्तरम्—

अनुक्तस्यार्थादापत्तेः पक्षहानेरुपपत्तिः ॥ अ. ५ आ. १ सू. २२ ।

अनुपपादितसाधनमनुक्तमर्थादापद्यत इति वदतः पक्षहानिरप्युपपद्यते मामकानित्यपक्षसिद्धौ हि सत्यामर्थादापद्यते तावकस्य नित्यपक्षस्य हानिरिति ।

दोषान्तरमाह—

अनैकान्तिकत्वाच्चार्थापत्तेः ॥ अ. ५ आ. १ सू. २३ ।

उभयपक्षसमर्थेयमर्थापत्तिः विपर्ययेणापि प्रयोक्तुं शक्यत्वात्, नित्यः शब्दो निरवयवत्वादित्येवमप्युक्ते शक्यं वक्तुं यदि नित्याकाशसाधर्म्यान्निरवयवत्वान्नित्यः शब्दः अर्थादापद्यते यदनित्यघटादिसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्य इति—न चैवमपि काचिदर्थसिद्धिः न खलु वै घनस्य ग्राव्णः पतनमित्युक्ते ऽर्थादापद्यते द्रवस्य वारिणः पतनाभाव इति ।

आविशेषसमस्य लक्षणम्—

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेर-
विशेषसमः ॥ अ. ५ आ. १ सू. २४ ।

अविशेषोपपादनेन प्रत्यवस्थानमविशेषसमः प्रतिषेधः, यदि शब्दघटयोरेकधर्मः प्रयत्नानन्तरीयकत्वमस्तीति तयोरनित्यत्वाविशेष उच्यते तर्हि सर्वभावानामविशेषप्रसङ्गः, कथं सद्भावोपपत्तेः सत्तासंबन्धादित्यर्थः, सो ऽयमविशेषसमः प्रतिषेधः ।

एतस्योत्तरम्—

क्वचित्तद्धर्मोपपत्तेः क्वचिदनुपपत्तेः प्रतिषेधाभावः ॥
गौ. अ. ५ आ. १ सू. २५ ।

क्वचिदविशेषापादनहेतुरुपपद्यते धर्मः क्वचित्तु नोपपद्यत इत्येवमयमप्रतिषेधः, शब्दघटयोरेको धर्मः प्रयत्नानन्तरीयकत्वमस्ति येन तयोर्धर्मान्तरमविशेषरूपमुपपद्यते न तु सर्वभावानामीदृशमविशेषकारणं धर्मजातमस्ति, यत्तु सद्भावोपपत्तेरिति तेन किं धर्मान्तरमविशेषरूपं साध्येत अनित्यत्वमेवं चेत्तर्ह्ययं प्रतिज्ञार्थो व्यवतिष्ठेतानित्याः सर्वे भावाः सत्त्वादिति, न चायमनुपपत्तेः दृष्टान्तानुपपत्तेः सर्वभावानां पक्षीकृतत्वाद् दृष्टान्तो न कश्चिदवशिष्यते, न च प्रतिज्ञातैकदेश एव दृष्टान्तीकर्तुं शक्यते सिद्धसाध्यभेदात्साध्यः प्रतिज्ञातो ऽर्थो भवति सिद्धश्च दृष्टान्तः, न च दृष्टान्तरहितो हेतुः स्वसाध्योपस्थापनसामर्थ्यमश्नुते, न च सौगतोक्तनीत्या नित्येभ्यो व्यापकानुपलब्ध्या सत्त्वं व्यावर्तितमनित्येष्वेव प्रतिष्ठां लभते यैव विपक्षाद्व्यावृत्तिः स एव साध्येनानुगम इति वक्तव्यम्, तन्नीतेः प्रागेव प्रतिक्षेपात्, प्रत्युक्तं हि विस्तरतः क्षणभङ्गसाधनमिति, किं चिद्धि सत्त्वयोगि भावरूपमनित्यं भवति किं चिन्नित्यमिति नायमेकान्तः सत्त्वादनित्याः सर्वभावा इति, अपि च सर्वभावानामनित्यत्वे साध्यमाने तदन्तर्गतत्वाच्छब्दस्याप्यनित्यत्वमभ्युपगतं भवेदित्येवमप्ययमप्रतिषेधः ।

उपपत्तिसमस्य लक्षणम्—

उभयकारणोपपत्तेरुपपत्तिसमः । अ. ५ आ. १ सू. २६

उभयकारणोपपत्त्या पक्षद्वयोपपत्तिवर्णनमुपपत्तिसमः प्रतिषेधः, यद्यनित्यत्वकारणं प्रयत्नानन्तरीयकत्वमुपपद्यते शब्दस्येत्यनित्यः शब्दो नित्यत्वकारणमपि निरवयवत्वमस्योपपद्यते इति नित्यः स्याद् उभयत्रापि कारणोपपत्तेः,

"ननु सैवेयं साधर्म्यादिसमा प्रकरणसमा वा जातिर्न भेदान्तरम्" नैवम् उद्भावनप्रकारेण भेदात्परपक्षोपमर्दबुद्ध्या साधर्म्यादिसमा जातिः प्रयुज्यते पक्षान्तरोत्थापनास्थया प्रकरणसमा अप्रतिपत्तिपर्यवसायित्वाशयेनेयमुपपत्तिसमेति ।

अत्रोत्तरम्—

उपपत्तिकारणानुज्ञानादप्रतिषेधः । अ. ५. आ. १ सू. २७

उभयकारणोपपत्त्या प्रतिषेधमभिदधता पक्षद्वयकारणोपपत्तिरनुज्ञाता भवति सा चेदनुज्ञाता कथमेकतरपक्षप्रतिषेधः, एकतरपक्षप्रतिषेधश्चेत्कथमुभयकारणोपपत्तिः उभयपक्षकारणोपपत्तिरेकतरपक्षप्रतिषेधश्चेति विप्रतिषिद्धम् , व्याघातादेव तत्प्रतिषेधो विकल्पयिष्यत इति चेत्समानो व्याघातस्तेन हि परपक्षवत्स्वपक्षो ऽपि प्रतिहन्यत एव न हि व्याघात एकं पक्षं साधयत्येकं बाधत इति ।

उपलब्धिसमस्य लक्षणम्—

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः प्रतिषेधः ॥
गौ. सू. अ. ५ आ. १ सू २८ ।

यदेतदनित्यतायां शब्दस्य प्रयत्नानन्तरीयकत्वं कारणमपदिष्टं तस्याभावेऽपि प्रबलप्रभञ्जनजवभज्यमानजरत्पादपपातप्रभवे शब्दे दृश्यत एवानित्यत्वमन्यत्रापि विद्युदादौ विनाऽपि प्रयत्नानन्तरीयकत्वमुपलभ्यत एवानित्यतेति ।

अत्रोत्तरम्—

कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥
गौ. सू. अ. ५ आ १ सू २९ ।

अत्रैतावदेव तावद्वक्तव्यं सपक्षैकदेशवृत्तित्वमिदमस्य हेतोरुद्भावितं न च सपक्षैकदेशवृत्तिरगमकः, प्रयत्नानन्तरीयकत्वमनित्यत्वप्रतिबद्धं न पुनरनित्यत्वं प्रयत्नानन्तरीयकत्वेन यत्प्रयत्नानन्तरीयकं तदनित्यमिति हि व्याप्तिर्न तु यदनित्यं तत्प्रयत्नानन्तरीयकमिति, यथा यत्राग्निस्तत्र धूमो न यत्र धूमस्तत्राग्निरिति, एवं प्रयत्नानन्तरीयकत्वमन्तरेण समीरणपात्यमानवनस्पत्यादिशब्दे विद्युदादौ वा येयमनित्यतोपलब्धिर्न सा तस्य हेतुतामपहन्तीति, अपि च प्रयत्नानन्तरीयकत्वादिति कारणाद् उत्पत्तिरियमभिधीयते न तु कारणं नियम्यते प्रयत्न एवेति तत्र पवननोदनजनिततरुशब्दवत्सत्यपि प्रयत्ने कारणान्तरं तदुत्पादकम्भविष्यति कारणान्तरजन्येऽप्यनित्यत्वं शब्दे विद्युदादौ वा न विरुद्धमिति, कथं पुनरिदमेव गम्यते प्रयत्नादिभिरसन्नुत्पाद्यते शब्दो न पुनः सन्नभिव्यज्यत इति, सतोऽनुपलब्धौ निमित्ताभावात्, आवरणं निमित्तमिति चेन्न, मूलोदकादिषु मृद इव शब्दे कस्यचिदावरणस्याग्रहणात् , तस्मान्न मूलोदकादिना तुल्यः शब्द इत्यसन्नेव प्रयत्नादिना क्रियते इति ।

अनुपलब्धिसमस्य लक्षणम् —

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः प्रतिषेधः ॥ गौ. सू. अ. ५ आ. १ सू ३० ।

यदुक्तमावरणानुपलम्भादसत्याश्चानुपलम्भादसत्यावरणे प्रागुच्चारणादसन्नेव शब्दः प्रयत्नेनाभिनिर्वर्त्यत इति तदयुक्तमावरणानुपलब्धेरप्यनुलम्भात्तस्याश्चानुपलम्भादभावः अनुपलब्धेरभावादुपलब्धिर्भवति प्रतिषेधद्वयेन विधेरेव प्रतीतेः, आवरणोपलब्धेश्चावरणसत्ता सिध्यतीति प्रकृतमेव शब्दस्याग्रहणं नासत्त्वकृतमित्यभिव्यञ्जकत्वकृतमेवास्य प्रयत्नादि कारणमिति ।

अस्योत्तरम्—

अनुपलम्भात्म(क)त्वादनुपलब्धेरहेतुः ॥ गौ. सू. अ. ५ आ. १ सू ३१

आवरणानुपलब्धिर्नास्त्यनुपलब्धेरिति योऽयं हेतुरुक्तः स न हेतुः अनुपलम्भस्वभावत्वादनुपलब्धेरुपलम्भप्रतिषेधार्थकत्वादित्यर्थः, अस्तित्वनास्तित्वे हि भावानामुपलम्भानुपलम्भाभ्यामवस्थाप्येते यदुपलभ्यते तदस्ति शशवद् यन्नोपलभ्यते तन्नास्ति तद्विषाणवत् , नोपलभ्यते च शब्दस्यावरणं मूलोदकादेरिव मृत्तिकेत्यनुपलम्भान्नास्तीति गम्यते, अनुपलम्भो ह्ययमावरणविषयो नानुपलब्धिविषयः स आवरणस्यैव भावं गमयति नानुपलब्धेरित्यनुपलब्धेर्भावादावरणमेव नास्तीति ।

ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥

गौ. सू. अ. ५ आ. १ सू. ३२ ।

ज्ञानविकल्पाः प्रतीतिप्रकारास्तेषां भावाभावौ प्राणिसंवेद्यौ भवतः, अस्ति मे ज्ञानं नास्ति मे ज्ञानमित्येवं सर्वः प्रत्यक्षानुमानागमज्ञानानि प्रमाणफलानि स्मरणसंशयादिज्ञानानि च प्रमाणफलान्यनुभवतीति, सा चेयमावरणानुपलब्धिरुपलब्धिवदध्यात्मं संवेद्यते नोपलभे शब्दस्यावरणं मृदमिव मूलोदकादेरिति, तदेवं बाह्यपदार्थभावाभाववदान्तरज्ञानभावाभावयोरपि प्रत्यक्षत्वादपर्यनुयोगोऽयमनुपलब्धेरनुपलम्भादावरणमस्ति शब्दस्येति तस्मात्प्रागुच्चारणादसन्नेव शब्द इति सिद्धम् ।

अनित्यसमस्य लक्षणम्—

साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥

गौ. सू. अ. ५ आ. १ सू ३३ ।

सर्वभावानित्यत्वप्रसङ्गेन प्रत्यवस्थानमनित्यसमः प्रतिषेधः, अनित्येन घटेन साधर्म्यमस्ति शब्दस्येति तस्यानित्यत्वमुच्यते तर्हि सर्वभावानामपि घटेन किमपि साधर्म्यमस्तीति सर्व एवानित्याः स्युः, अविशेषसमैवेयं जातिरिति चेत् , तत्र हि सत्तायोगात्सर्वभावानामविशेष आपादितः इह तु घटसाधर्म्यादेवानित्यत्वमापादितम् इति उद्भावनभङ्गिभेदाच्च जातिनानात्वमित्यसकृदुक्तम् ।

अत्रोत्तरम्--

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ॥

गौ. सू. अ. ५ आ. १ सू. ३४

अतिप्रसङ्गमापादयतो ह्येतद्विवक्षितं घटसाधर्म्यादसिद्धिरनित्यत्वस्येति, यदि च घटसाधर्म्यादनित्यत्वस्यासिद्धिस्तर्हि तावकस्यास्य प्रतिषेधवाक्यस्याप्यसिद्धिः प्रतिषेध्यवाक्यसाधर्म्यात्, अस्ति हि प्रतिषेधवाक्यस्य प्रतिषेध्येन साधर्म्यं प्रतिज्ञाद्यवयवयोगित्वमिति, किं च—

दृष्टान्ते साध्यसाधनभावेन प्रतिज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः ॥ गौ. सू. अ. ५ आ. १ सू. ३५

न हि साधर्म्यमात्रं साधनं भवति अपि तु दृष्टान्तधर्मिण्यवधृतसामर्थ्यं साधर्म्यं वैधर्म्यं वा तथाविधं चेत्सर्वभावानामस्ति भवतु तेषामनित्यत्वं को दोषः नास्ति चेत्को ऽयमतिप्रसङ्गः, न हि दृष्टान्तधर्मिणि प्रज्ञातसामर्थ्यं साधर्म्यमुभयथा भवति पक्षान्तरं स्पृशति तेन साधर्म्यविशेषस्य हेतुत्वात्तस्य च सर्वत्रासंभवान्न सर्वानित्यत्वम्, अविशेषसमायां जातौ यत्साधनमुक्तं तदिहापि वक्तव्यमिति ।

नित्यसमस्य लक्षणम्—

नित्यमनित्यभावादनित्ये नित्य(त्वो)पपत्तेर्नित्यसमः ॥

गौ. सू. अ. ५ आ. १ सू. ३६

अनित्यत्वसाध्यधर्मस्वरूपविकल्पनेन शब्दनित्यत्वापादानं नित्यसमः प्रतिषेधः, अनित्यः शब्द इति प्रतिज्ञाते सति जातिवादी विकल्पयति किमिदमनित्यत्वं शब्दस्य नित्यमथानित्यमिति, यदि तावदनित्यं तत्कदा चित्प्रच्यवते तत्प्रच्युतेर्नित्यः शब्दः, अथ नित्यमनित्यत्वं तर्हि धर्मस्य नित्यत्वात्तस्य च निराधारस्यानुपपत्तेस्तदाश्रयस्य शब्दस्यापि नित्यत्वमनित्यत्वे हि शब्दे विनष्टे न तदाधारो धर्मो वर्तेतेति ।

अस्योत्तरम्—

प्रतिषेध्ये नित्यमनित्यभावादनित्यत्वोपपत्तेः प्रतिषेधाभावः ॥

गौ. सू. अ. ५ आ. १ सू. ३७

प्रतिषेध्ये नित्यमनित्वस्य भावश्चेदुच्यते तदनित्य एवासावुक्तो भवति अनित्योपपत्तेश्च तत्प्रतिषेधो नोपपद्यते नित्यमनित्यत्वं शब्दस्येति च ब्रवीषि नित्यतां च तद्योगादस्योपपादयसीति महानयमायुष्मतो भ्रमः, अथ निरधिकरणो धर्मः कथं स्यादिति तदुच्यते अनित्यत्वं हि नाम निरोधः प्रध्वंसाभाव

इत्यनर्थान्तरम् , अनित्यत्वादभाव इति तु व्यवहारमात्रम् , सा चेयमनित्यता शब्दावच्छिन्ना न शब्दाधिकरणा न खलु घटाभावो घटाश्रितो भवितुमर्हति भावस्वभावा हि धर्मा धर्म्याश्रिता भवन्ति नाभावः अभावस्त्वाश्रितो ऽपि न प्रतियोग्याश्रितो भवति किं त्वर्थान्तरवृत्तिर्भूप्रदेश इव घटाभाव इति नित्यानित्यत्वविरोधाच्च, नित्यत्वमनित्यत्वं चैकत्र धर्मिणि विरुध्यते तत्कथमभिधीयते नित्यमनित्यत्वस्य भावान्नित्यः शब्द इति ।

## कार्यसमस्य लक्षणम्—

**प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ गौ. सू. अ. ५ आ. १ सू. ३८**

प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमः प्रतिषेधः, अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते पर आह प्रयत्नस्य हि कार्यद्वैविध्यमुपलब्धं किं चिदसदेव प्रयत्नेन निर्वर्तते यथा घटादि किं चित्सदेवावरणव्यपनयनादिना प्रयत्नेनाभिव्यज्यते यथा मृदन्तरितमुदकादि, एवं प्रयत्ननानात्वादिह प्रयत्नेनाविद्यमानः शब्दो निर्वर्त्येत घटवदुत विद्यमान एवाभिव्यज्येत मृदन्तरितसलिलादिवदिति संशयः, न चेयं संशयसमा जातिर्हेत्वर्थविकल्पनेनेह प्रयवस्थानात् , तथा हि निरवयवत्वाद्याकाशसाधर्म्योपन्यासेन संशय आपादित इह तु साधनवाद्युक्तप्रयत्नानन्तरीयकत्वहेत्वर्थनिरूपणेनेति, उद्भावनप्रकारभेदश्च जातीनां वैचित्र्यकारणमित्युक्तमेव ।

अत्रोदाहरणम्—

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणानुपपत्तेः ॥**
**गौ. सू. अ. ५ आ. १ सू. ३९**

यद्यपि प्रयत्नकार्यान्यत्वमुपलभ्यते तथा ऽपि प्रकृते शब्दे प्रयत्नस्याभिव्यक्तावहेतुत्वं न प्रयत्नतः शब्दमभिव्यनक्ति किं त्वभूतप्रादुर्भावमेव विधत्ते कस्माद् अनुपलब्धिकारणानुपलब्धेः यत्र हि सतः पदार्थस्य प्रयत्नोऽभिव्यक्तिहेतुस्तत्र तस्य सतः सलिलादेरनुपलब्धिकारणमस्ति मृदादिव्यवधानं तदपोहमाचरता प्रयत्नेन तदभिव्यक्तिः सम्पद्यते शब्दस्य तु न किं चिदनुपलब्धिनिबन्धनं व्यवधानादि संभवतीति वर्णितमतस्तस्यासत एवात्मलाभनिमित्तमुच्चारणादिप्रयत्नो न सतो व्यक्तिनिमित्तं तस्मादनित्यः शब्द इति स्थितम् ,

तदेवमनेन चतुर्विंशतिजात्युदाहरणप्रतिसमाधानोपदेशवर्त्मना शब्दानित्यत्वसाधने परकीयमुपालम्भजातमेवंप्रायमखिलमपाकृतमाम्रसेकपितृतर्पणन्यायेन भवति भगवता सूत्रकारेण, इदमपरमिदानीमुपदिश्यते चतुर्विंशतावपि जातिषु जातिवादिना प्रयुक्तासु मूलसाधनवादी विस्पष्टानुमानोदन्तपरीक्षणपुरःसरं सत्यमेवोत्तरं यथोपदिष्टमभिदधीत न तु जातिप्रयोगानुकारिदुरुत्तरालापचा-

पलेन षटपक्षीं प्रवर्तयेत तस्यां हि प्रस्तुतायामुभयोरपि वादिप्रतिवादिनोरसिद्धि-रसद्वादित्वात् ,

कथं पुनः षट्पक्षी प्रवर्तत इति तत्पथं दर्शयितुमाह—

**प्रतिषेधेऽपि समानो दोषः ॥ गौ. सू. अ. ५ आ. १ सू. ४०**

स्थापनाहेतुवादिना प्रथमपक्षस्थेन स्थापनाहेतुः प्रयुक्तः अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति, ततोजातिवादी द्वितीयपक्षस्थः प्रयत्नकार्यानेकत्वादिति प्रयत्नानन्तरीकत्वमभिव्यङ्ग्ये ऽपि शब्दे भवतीति हेतोरनैकान्तिकत्वमित्याह, तदधुना तृतीयपक्षस्थः स्थापनाहेतुवादी यदि यथोपदिष्टमावरणानुपलब्धिक्रममनुस्मृत्य विशेषमुपदर्शयन्ननैकान्तिकतामुद्धरति ततस्तावत्येव पर्यवस्यति कथेति चतुर्थादिपक्षावसरविरहान्नावतरत्येव षट्पक्षी, यदि तु तं क्रममपहायैव तृतीयपक्षस्थो ऽसौ वदति हेतोश्चेदनैकान्तिकत्वमुद्भावयसि अनैकान्तिकत्वाद साधकः स्यादिति नन्वयं तावकः प्रतिषेधो ऽप्यनैकान्तिकः किं चित्प्रतिषेधति किं चिन्नेति हेतोः साधकत्वं प्रतिषेधति न स्वरूपमिति अत एवेत्थं प्रतिषेधस्यानैकान्तिकता सो ऽपि हि नाभिव्यक्तिपक्षमेव साधयेत्प्रतिपक्षे ऽपि प्रयत्नसाफल्योपपत्तेरुभयत्रापि च विशेषहेतोरनपदेशात् , एवमनैकान्तिकत्वमभिहितवति साधनवादिनि प्रतिषेधवादिनो ऽपि वचनावसर इत्यवतरति षट्पक्षी ।

स हि चतुर्थपक्षस्थ एवं वदति—

**प्रतिषेधाविप्रातिषेधे प्रतिषेधदोषवद्दोषः ॥**
**गौ. सू. अ. ५ आ. १ सू. ४१**

विविधः प्रतिषेधो विप्रतिषेध इहोच्यते न व्याघातः प्रकृतसङ्गतेरभावात् , यो ऽयं प्रतिषेधे ऽपि समानानैकान्तिकदोष उच्यते स प्रतिषेधप्रतिषेधे ऽपि भवत्प्रयुक्ते समानः सो ऽपि पूर्ववदनैकान्तिक एवेति, ततः पञ्चमं पक्षमवलम्ब्य मूलसाधनवादी मतानुज्ञामुद्भावयति सा च—

**प्रतिषेधं सदोषमभ्युपेत्य प्रातिषेधविप्रातिषेधे समानदोषप्रसङ्गो मतानुज्ञा ॥ गौ सू. अ. ५ आ. १ सू. ४२**

प्रतिषेधे ऽपि समानदोष इति समुद्भावितं दोषमनुद्धृत्य तं प्रतिषेधं सदोषमभ्युपेत्य मदुक्ते प्रतिषेधे विप्रतिषेधे समानदोषप्रसङ्गमापादयतस्ते मतानुज्ञा निग्रहस्थानं भवति, चोरो भवानित्यभियुक्तेन चौर्यमात्मनो निराकरणीयं न तु भवानपि चोर इति परः प्रतिपत्तव्य इति, एवं पञ्चमपक्षस्थे मूलसाधनवादिनि कथितवति परः षष्ठं पक्षमास्थाय पुनरभिधत्ते यदि स्वपक्षदोषानुद्धरणपुरस्सर परपक्षदोषोपादानोपनतमतानुज्ञानिग्रहस्थानपात्रमहमादिश्ये हन्त तर्हि तवापि तदेव निग्रहस्थानमवतरति त्वमप्येवमकार्षीस्तथा हि द्वितीयपक्षस्थेन मया

प्रयत्नकार्यानेकत्वादिति यदनैकान्तिकत्वमुद्भावितं तदनुद्धृत्यैव प्रतिषेधे ऽपि समानो दोष इति मय्येव प्रतीपमापीपदस्तदेवं त्वत्त एव शिक्षित्वा ऽहमपि चतुर्थपक्षस्थस्तथैव त्वयि दोषमर्पितवानिति मम चेन्मतानुज्ञा प्रथमतरं तवासौ भवेदिति तदेतदाह—

**स्वपक्षतल्लक्षणापेक्षोपपत्त्युपसंहारहेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ॥ गौ. सू. अ. ५ आ. १ सू. ४४**

स्वपक्षो मूलसाधनवाद्युक्तः प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति, तल्लक्षणस्तत्समुत्थानस्तद्विषयः प्रयत्नकार्यानेकत्वादिति प्रतिषेधः, तमपेक्षमाणस्तमनुद्धृत्यानुज्ञाय प्रवृत्तः प्रतिषेधेऽपि समानो दोष इत्युपपद्यमानः परपक्षे अनैकान्तिकत्वदोषोपसंहारस्तस्य च हेतुनिर्देश इत्ययमनैकान्तिकः प्रतिषेध इति, तस्मिन्सति पक्षकथितानैकान्तिकत्वदोषाभ्युपगमात्तदनुद्धरणेन तस्यैव प्रतीपदोषोद्भावनात्समानो मतानुज्ञादोष इति षष्ठः पक्षः, सेयं षट्पक्षी तस्यां प्रथमतृतीयपञ्चमाः स्थापनाहेतुवादिनः पक्षाः, द्वितीयचतुर्थषष्ठाः प्रतिषेधवादिनः, एते च साध्यसाधकतया परीक्ष्यमाणाः पौनरुक्त्यमतानुज्ञादिदोषापहतत्वादन्यतरस्यापि वादिनः साध्यसिद्धये न प्रकल्पन्ते, तथा हि चतुर्थषष्ठयोः पक्षयोरर्थाविशेषात्पुनरुक्तदोषप्रसङ्गः, चतुर्थे पक्षे परस्य समानदोषत्वमुच्यते षष्ठे ऽपि तथैव समानः, तृतीयपञ्चमयोस्तृतीये पक्षे परोक्तं समानदोषत्वमभ्युपगम्यते पञ्चमे ऽपि मतानुज्ञामुद्भावयता तदङ्गीकृतमेव भवति तृतीयचतुर्थयोश्च परोक्तदोषानुद्धरणान्मतानुज्ञेत्येवं षटपक्ष्यामुभयोरसिद्धिः । तस्मात्सदुत्तरैर्दोषचिकित्सा साधीयसी नासदुत्तरैः षट्पक्षीप्रसङ्गादिति,

नन्वसदुत्तरकथने ऽपि कथं षट्पक्ष्यामेव विश्रामः शतपक्षी सहस्रपक्षी वा कथं न प्रवर्तते को ऽत्र नियम इति चेदुच्यते—इयत्येव निवर्त्यते वचनावकाश इति नानन्तपक्षता संभवति, तथा हि—पूर्वोत्तरपक्षवादिनौ भवत एव को ऽत्र विचारः, तत्र स्थापनाहेतुवादिना तावत्प्रथमं स्वपक्षसाधने ऽभिहिते दूषणवादिना तत्र दूषणे वर्णिते तृतीये वचसि वर्तमानः साधनवादी सम्यङ्नीत्योपक्रममाणस्तद् दूषणमुद्धर्तुं शक्नुयान्न वेति तस्यामेव दशायां प्राड्विवाकायते(१) निर्णयः, असदुत्तरोपन्यासे तु तृतीयवचसा तेन कृते दूषणवाद्यपि लब्धावकाश-

(१) प्राड्विवाकायते इति । अर्थिप्रत्यर्थिनौ पृच्छतीतिप्राट् तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैस्सहविविनक्तिविवेचयतिवेतिविवाकः प्राट्चासौ विवाकश्च प्राड्विवाक इति तदुक्तं विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततस्मृत इति मिताक्षरा ।

स्तत एव शिक्षित्वा चतुर्थे वचसि वर्तमानस्तत्प्रतीपं योजयति ततः स्थापनाहेतुवादी प्रतीपयोजनायामफलायां दुरन्तायां समव्ययफलायामशक्यक्रियायां च निरुद्योगः किं चिदभिनवं दूषणमुत्प्रेक्ष्य पञ्चमे वचसि स्थितो मतानुज्ञामाह, ततस्तामपि परपक्षमनतिवर्तमानां पश्यन् प्रतिषेधवादी षष्ठे वचसि स्थित्वा तां तत्पक्षे योजयतीत्येवं वृत्ते दूषणान्तरासंभवात्प्रतीपयोजने च भग्नरसत्वात्तूष्णीमेवासितुमुचितमिति तावत्येव भवति वचनविरतिर्न शतसहस्रादिपक्षप्रसङ्गः प्रवर्तत इत्यतः षट्पक्षीमेव प्रदर्शितवानाचार्यः, स चान्तेवासिनं बोधयितुमेवमुपादिक्षदेनेन पथा प्रवर्तेत भवानन्येन मा प्रवर्तिष्टेति ।

वाच्यमुत्तरमतो निरवद्यं जातिवादिनमपि प्रति तज्ज्ञैः ।
कश्मलोत्तरगिरा न तु कार्या पक्षषट्कपरिकल्पनगोष्ठी ॥
यादृग्यक्षो बलिरपि तथेत्येवमाधाय बुद्धौ
यस्तु ब्रूयात्कलुषमफलस्तस्य शुद्धोऽपि हेतुः ।
षट्पक्षादिप्रसरणपरिम्लानकान्तिर्न बुद्धिं
शक्तः स्वार्थे जनयितुमसावग्रतः प्राश्निकानाम् ॥
इतीदं व्याख्यातं निजसरणिसांकर्यरहितं
स्वरूपं जातीनां स्फुटमिह चतुर्विंशतिविधम् ।
अमूषां तत्त्वज्ञः परविरचितानां परिहृतौ
स्वयं चोपन्यासे न हि सदसि संमुह्यति नरः ॥

इति १८ जातिपदार्थः ।

## निग्रहस्थान प्रकरणम्—

जात्यनन्तरं निग्रहस्थानोद्देशात्तल्लक्षणप्रतिपादनार्थमाह ।

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ गौ.सू.अ. ९ आ॰ १सू.६०**

निग्रहः पराजयस्तस्य स्थानमाश्रयः कारणमित्यर्थः, किं च पराजयनिमित्तं विप्रतिपत्तिरप्रतिपत्तिश्च विपरीता कुत्सिता विगर्हणीया प्रतिपत्तिर्विप्रतिपत्तिः, साधनाभासे साधनबुद्धिः, दूषणाभासे दूषणबुद्धिः अप्रतिपत्तिस्त्वारम्भविषये ऽनारम्भः, आरम्भस्य विषयः साधने दूषणं दूषणे चोद्धारः तयोरकरणमप्रतिपत्तिः, द्विधा हि वादी पराजीयते यथा कर्तव्यतामनारभमाणो विपरीतं वा प्रतिपाद्यमानः, अत एव न कर्मकरणयोर्निग्रहमादिशन्ति न हि ताभ्यां किं चिदपराद्धं स्वविषये प्रयुज्यमानयोः सामर्थ्यानपायात् , कर्ता तु प्रमाद्यन्नप्रयोज्यं प्रयुञ्जानः प्रयोज्यमप्रयुञ्जानो वा निग्रहमर्हति, प्रायेण चातत्त्ववादिनो निगृह्या भवन्ति, तत्त्ववाद्यपि कदा चन जल्पे वितण्डायां वा सम्यक्साधनमप्यपदिश्य पतिवादिप्रतिपादितदूषणाभासनिराकरणसरणिमनुगुणामपश्यन्निगृह्यत एव

अत एव भाष्यकृतोक्तं तत्त्ववादिनमतत्त्ववादिनं चाभिप्लवन्ते निग्रहस्थानानीति, असमासकरणमनेकनिग्रहस्थानभेदावरोधार्थम् ।

अत एवानन्तरमाह—

**तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ गौ.सू.अ. ५ आ.२ सू.६१ ।**

तदिति साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विप्रतिपत्त्यप्रतिपत्त्योश्च परामर्शः, नानाकल्पो विकल्पः प्रकारभेद इत्यर्थः, साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानप्रकारस्य बहुत्वाज्जातिबहुत्वम् ।

तद् द्वाविंशतिधा विभज्य दर्शयति—

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो ऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि गौ. सू, अ. ५ आ. २ सू, १ ।**

अत्राननुभाषणमज्ञानमप्रतिभा विक्षेपः पर्यनुयोज्योपेक्षणमित्यप्रतिपत्त्या संगृहीतानि शेषाणि विप्रतिपत्त्या, पुनरुक्तमधिकमित्यसमासकरणेन विप्रतिपत्त्यैव वा ऽभिमतमसमासक्लिष्टकल्पनया सापि हि कुत्सितैव प्रतिपत्तिर्यत्पुनरुक्तमधिकं वा प्रयुज्यत इति, असङ्कीर्णोदाहरणविवक्षया च द्वाविंशतिभेदसङ्कीर्तनमवान्तरभेदैस्तु जातिवदानन्त्यमेव तेषामिति,

अत्र कीर्तिराह द्वाविंशतिधा निग्रहस्थानानि विभज्यन्ते तेषां च प्रतिपदमिदानीं विशेषलक्षणानि वर्ण्यन्त इति न मृष्यामहे कुतः—

असाधनाङ्गवचनमदोषोद्भावनं द्वयोः ।
निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते ॥

वादिना सिषाधयिषितपक्षसिद्धये साधनमभिधेयं स चेदसाधनाङ्गं ब्रूयान्निगृह्यते, प्रतिवादिना ऽपि वाद्युक्ते साधने दूषणमुद्भावनीयं स चेददोषमेव दोषत्वेनोद्भावयेन्निगृह्यते, ते एव द्वयोर्वादिप्रतिवादिनोर्निग्रहस्थाने अतो ऽन्यथा निग्रहकरणमन्याय्यमेव, प्रतिज्ञाहान्यादिषु तत्प्रभेदेषु च प्रतिपदमयुक्ततां दर्शयिष्यति, कति चिच्चात्र शिशुप्रलापप्राया निग्रहस्थानानि निर्दिष्टानि, तादृंशि शास्त्रे लक्ष्यन्त इति परममप्रतिष्ठानम् ,

अत्रोच्यते संक्षेपविवक्षया द्वे एव निग्रहस्थाने इति वयमपि किं नोक्तवन्तो विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति, एतच्च सामान्यलक्षणमखिलभेदसंग्रहक्षमं भवति न भवदुक्तम् , तथा हि उत्तराप्रतिभानेन वादिप्रतिवादिनोरन्य-

तरः पराजीयते न वा, न पराजीयते इति इति कथमुच्यते किं मूक इव जित्वा गच्छतु निगृह्यते चेत्किमनेनापराद्धं न साधनाङ्गमुक्तं न दोष उद्भावितः,

अथ प्रसज्यप्रतिषेधेनोद्भावनमादौ व्याख्याय पुनरदोषोद्भावनमावृत्त्या पर्युदासेन वर्ण्यते तर्हि ते एवैते विप्रतिपत्त्यप्रतिपत्ती उक्ते स्याताम्, दोषानुद्भावनमप्रतिपत्तिः, एवमसाधनाङ्गवचनमपि विकल्पनीयम्, प्रसज्यप्रतिषेधवृत्त्या साधनाङ्गस्यावचनमिति चेत्सेयमप्रतिपत्तिः, अतः शब्दान्तरेणाक्षपादपादेभ्य एव शिक्षित्वा तदेव निग्रहस्थानद्वयमनेन श्लोकेन निबद्धं न पुनरभिनवमल्पमपि किं चिदुत्प्रेक्षितमिति, न च यथासंख्यनियमेन द्वयोर्द्वे निग्रहस्थाने कल्पनीये अपि तु यथासम्भवमुभयोरपि यथावसरं तत्तन्निग्रहस्थानमादेष्टव्यम्, द्वाविंशतिभेदत्वं च निग्रहस्थानानामसङ्कीर्णोदाहरणविविवक्षया कथ्यते न नियमायेत्युक्तमेव, परस्परविसदृशं च लक्षणमेषामिदानीमुपदिश्यत एव तत्रैव चायुक्तत्वमेषां बालिशप्रलापकल्पत्वं वा पराक्रियते एवेत्यलमतिप्रसङ्गेन।

**प्रतिज्ञाहानेर्लक्षणम्—**

एवं सामान्यलक्षणं विभागं चाभिधाय विशेषलक्षणान्याह—

**प्रतिदृष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः॥**

**गौ. सू. अ. ५ आ. २ सू. २।**

प्रतिज्ञासिद्धये वादिना साधने ऽभिहिते तत्र प्रतिवादिना च दूषणे उद्भाविते तृतीये वचसि तु वर्तमानो वादी यदि प्रतिदृष्टान्तधर्मं स्वदृष्टान्ते ऽनुजानाति तदस्य प्रतिज्ञा हीयत इति प्रतिज्ञाहानिर्निग्रहस्थानं भवतिः, तद्यथा अनित्यः शब्दः ऐन्द्रियकत्वाद् घटवदित्युक्ते पर आह सामान्यमैन्द्रियकमपि नित्यं दृष्टमित्यनैकान्तिको हेतुरिति, तत्र साधनवाद्याह सामान्यमैन्द्रियकं नित्यं तर्हि तथैव घटो ऽपि नित्यो ऽस्त्विति, अयमस्यैवं वदतो भ्रमः किल नित्यानित्यपक्षवृत्तिरनैकान्तिकतामेष विजह्यादिति, तदेवमस्य ब्रुवतः प्रतिज्ञाहानिर्भवति घटस्य हि नित्यत्वे तद्दृष्टान्तबलादेव शब्दो ऽपि नित्यः स्यादिति,

तत्र कीर्तिराह प्रतिज्ञैव तावदसाधनाङ्गवचनमिति तदभिधानं निग्रहस्थानं भवितुमर्हति न तद्धानिः, न च हानिरप्यस्ति यदि नाम घटस्य दृष्टान्तीकृतस्य प्रतिदृष्टान्तधर्मं नित्यत्वमयमभ्युपैति किमियता शब्दानित्यत्वप्रतिज्ञामवजहाति, अपि च हेत्वाभासा अपि निग्रहस्थानवर्गे गणिता एव स चायमनैकान्तिकहेत्वाभासप्रयोगादेव पराजीयते न प्रतिज्ञाहान्येति तस्या विषयान्तरं वक्तव्यम्,

अत्रोच्यते प्रतिज्ञायास्तावदसाधनाङ्गवचनता नास्तीत्यवयवलक्षणे निर्णीतमेतत्, प्रतिज्ञासिद्ध्यर्थ एव सर्ववादिनां प्रयासः अनिर्दिष्टा च साधयितुमशक्यैवेति न तद्वचनमसाधनाङ्गवचनम्, लौकिकेष्वपि चर्णादानादिविवादपदेषु प्रतिज्ञाहानिमेव मुख्यं पराजयकारणमाहुः,

तदाह नारदः—

सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरँस्तामुत्तरो भवेदिति ॥

प्रतिदृष्टान्तधर्मं च स्वदृष्टान्ते ऽभ्युपगच्छन्नुत्सृजत्येव प्रतिज्ञाम्, नित्यत्वं हि सामान्यवद् घटस्यापि सहते तद्दृष्टान्तबलेन च तद्धर्मं शब्दे सिषाधयिषतीति नूनमिदानीं नित्यत्वमेव घटधर्मः शब्दे सिद्ध्येदिति कथं तदनित्यत्वप्रतिज्ञा ऽस्य न हीयते, यत्तूक्तं हेत्वभासप्रयोग एव निग्रहनिमित्तं न प्रतिज्ञाहानिरिति स्यादेतदेवं यदि द्वितीये वचसि व्यवस्थितेन प्रतिवादिना व्यभिचारोद्भावनया प्रत्यवस्थितो वादी तावत्येव विरमेत्, स तु तृतीये वचसि वर्तमानस्तदुद्धरणबुद्ध्या तथाविधमभिधत्ते येन प्रतिज्ञां जहाति, अतश्च व्यभिचारपरिहरणलोभाभिहितप्रतिदृष्टान्तधर्माभ्यनुज्ञावचनोपनततदर्थप्रतिज्ञाहानिनिबन्धन एवास्य निग्रहो युक्तो न हेत्वाभासप्रयोगकृत इति अयमेव मुख्यः प्रतिज्ञाहानेर्विषयः।

## प्रतिज्ञान्तरस्य लक्षणम् —

**प्रतिज्ञातार्थप्रतिषेधे धर्मे विकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ गौ. सू. अ. ५आ. २ सू. ३ ।**

प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरं साधनीयमभिदधतो वादिनः प्रतिज्ञान्तरं नाम निग्रहस्थानं भवति, अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते पूर्ववत्सामान्येन व्यभिचारोद्भावनया प्रत्यवस्थित आह, सामान्यमैन्द्रियकं यन्नित्यं तद्युक्तं तद्धि सर्वगतम् असर्वगतस्तु शब्द इति प्रतिज्ञां कुर्वन् प्रतिज्ञान्तरेण निगृहीतो भवति,

"अत्राह नेदमप्रस्तुतप्रतिज्ञान्तरकरणम् अपि तु परोद्भावितव्यभिचारनिवारणं विशेषणोपादानमेतत्, एतदुक्तं भवति असर्वगतत्वे सत्यैन्द्रियकत्वादनित्यः शब्द इति तदिदमसर्वगतत्वं प्रतिज्ञासिद्ध्यर्थमुपात्तं कथं निग्रहस्थानम्, यो हि मीमांसकं प्रत्यनित्यः शब्दः कृतकत्वादित्युक्तवांस्तेन कृतकत्वं सिद्धमित्युपलब्धे कृतकत्वे स प्रतिज्ञान्तरं कुर्वाणो निगृह्येत, यस्तु पूर्वप्रतिज्ञामवधीर्य तदनौपयिकमकस्मादेव प्रतिज्ञान्तरमारभेत तदा उन्मत्त एव भवेत्, न चोन्मत्तप्रलापानां शास्त्रे लक्षणकरणं युक्तम्, स्पष्टे निग्रहहेतौ हेत्वाभासाभिधाने सम्भवति किमिति प्रतिज्ञान्तरं निग्रहस्थानमुच्यत इति"

अत्रोच्यते प्रतिज्ञासिद्धये हेतुदृष्टान्तौ प्रयोक्तव्यौ न पुनः प्रतिज्ञान्तरं करणीयमिति स्थितिः, इह च यो हेतुरनेनोपात्तस्तस्मिन्परेणानैकान्तिकीकृते सति न तत्परिहारप्रकारमनुगुणमयमास्थितवान् अपि त्वसर्वगतत्वप्रतिज्ञामन्यामधिरूढः ।

"ननु विशेषणमेतदनैकान्तिकत्वपरिहारार्थं न प्रतिज्ञान्तरमित्युक्तम्" ना-

सिद्धत्वात् सिद्धं हि विशेषणं भवति नित्यत्ववादिनं च प्रति शब्दस्यासर्वगतत्ववादिनं च प्रतिशब्दस्यासर्वगतत्वमसिद्धम्, साध्यते चेत्तर्हि प्रतिज्ञान्तरमेवेदं हेत्वाद्यवयववैलक्षण्यात् प्रतिज्ञालक्षणस्य च साध्यनिर्देशस्योपपत्तेः, अनैकान्तिकत्वपरिहृतये हि हेतुविशेषणं सिद्धं च वाच्यं न तु धर्मिविशेषणं साध्यं चेति, अन्यतरासिद्धे तु हेत्वाभासे तत्समर्थनं प्रक्रमानुरूपमेवेति न प्रतिज्ञान्तरं निग्रहस्थानं भवति, इह तु अनैकान्तिकत्वपरिहाराय यतमानो मार्गमनुगुणमपश्यन् स्खलित इव निगृह्यते, न च हेतूदाहरणादिप्रयोगनिपुणमतेरपि भ्रमादेवम्विधमभिधानं न सम्भवति, न च प्रतिज्ञामात्रेण सिद्धिमिच्छन्नेवं ब्रवीति अपि तु व्यभिचारं परिजिहीर्षन्निति, न चायमुन्मत्तप्रलाप एव प्रस्तुतानुगुणयबुद्ध्या प्रयोगात्, अपि चानित्यः शब्दश्चाक्षुषत्वादित्युभयासिद्धो नामहेत्वाभासो भवद्भिरपि शास्त्रे लक्षित एव, स उन्मत्तप्रलापो न भवति यथोदाहृतं पतिज्ञान्तरमुन्मत्तप्रलाप इत्यपूर्व एष भिक्षोः स्वदर्शनरागः परदर्शनद्वेषो वा, को हि नाम शिशुरपि शब्दे चाक्षुषतां ब्रूयात्, इदं सम्भवत्येवाभिधानं केवलं हेतुविशेषणे सिद्धे च वक्तव्ये भ्रमाद्धर्मिविशेषणं साध्यं वा ऽयमुक्तवानिति, निमित्तान्तरमिदमस्य निग्रहे निरूपितं द्वितीय एव तु वचसि कथाविरतौ हेत्वाभासप्रयोगादेव निग्रहमाप्नुयादिति प्रतिज्ञाहानिप्रस्ताव एवोक्तम्।

## प्रतिज्ञाविरोधस्य लक्षणम्—

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ गौ.सू.अ.५आ.२सू.४ ।

यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुर्वा प्रतिज्ञया स प्रतिज्ञाविरोधो नाम निग्रहस्थानं भवति, गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा रूपादिभ्यो ऽर्थान्तरस्यानुपलब्धेरिति हेतुः, सोऽयं प्रतिज्ञाहेत्वोर्विरोधो यदि गुणव्यतिरिक्तं द्रव्यं न तर्हि रूपादिभ्यो ऽर्थान्तरस्यानुपलब्धिरथ रूपादिभ्यो ऽर्थान्तरस्यानुपलब्धिर्न तर्हि गुणव्यतिरिक्तं द्रव्यं रूपादिभिश्चार्थान्तरस्यानुपलब्धिरिति व्याहतम्।

"अत्राह नेदं प्रतिज्ञाहेत्वोर्विरोधोदाहरणं भवितुमर्हति हेतोरसम्भवात्, सम्भवे हि हेतुः प्रतिज्ञां विरुणद्धि तया वा विरुध्यते, इह तूपलब्धिलक्षणप्राप्तस्यानुपलब्धिर्न समस्त्येव रूपादिभ्योऽर्थान्तरस्य पृथक्त्वेनोपलब्धियोग्यत्वानुपपत्तेः, सम्भवन्नपि चैवम्विधे विषये प्रतिज्ञाविरोधे हेतुर्न द्वयीं दोषजातिमतिवर्तते विरुद्धत्वमसिद्धत्वं वा, गुणव्यतिरिक्तद्रव्यवादिनो हि भेदेनाग्रहणगतार्थत्वान्न पृथग्वक्तव्यमिदं निग्रहस्थानम्, यदन्यदन्यैरुदाहरणमभाणि नित्यः शब्दः सर्वस्यानित्यत्वादिति तदप्यसाधु, वैधर्म्यदृष्टान्तस्यानेन प्रकारेण कुशिक्षितैरभिधानात्, तथा हि सर्वशब्दोऽत्र सावयववचन इति निरवयवत्वं हेतुर्विवक्षितो नित्यः शब्दो निरवयवत्वात्सावयवस्यानित्यत्वादिति सो ऽयमपि शिक्षितवैधर्म्यदृष्टान्तप्रदर्शनताप्रक्रमैर्विपर्ययेण वैधर्म्यदृष्टान्त एव कथितः सर्वस्यानित्यात्वादिति, तदुक्तं स हि दृष्टान्त एवोक्तो वैधर्म्येण सुशिक्षितैरिति,

तस्मान्नेदमपि प्रतिज्ञाहेतुविरोधोदाहरणमिति"

अत्रोच्यते यदुक्तं हेतोरसंभवान्नेदं निग्रहस्थानं तदचारु-पञ्चम्यन्तनिर्दिष्टस्य हेतोः प्रदर्शितत्वात्, निरवद्यहेत्वभावात्त यदि तदसंभव उच्यते तर्हि हेत्वाभासव्याकरणमप्यकरणीयं भवेत्, पुरुषबुद्धिप्रमादनिबन्धनहेत्वाभासप्रयोगवत्तु तथाविधमप्यभिधानं संभवत्येव ।

यत्पुनरभ्यधायि "संभवन्नपि हेतुरयमसिद्धविरुद्धयोरन्यतरो भवेन्न दूषणान्तरमि"ति। तत्र ब्रूमः सत्यमेतत् किं तु हेतुस्वरूपनिरूपणावसरे सपदि तद्गतदोषादोषदर्शनाद्विरुद्धता तस्याभिधीयते, यथा भवद्भिर्नित्यः शब्दः कृतकत्वादिति विरुद्धहेतोर्वर्ण्यते कचित्सिद्धसाध्यत्वदृष्टान्तहीनतादिदोषान्तरसंभवेऽपि तदवधीरणया विरुद्धत्वमेव दर्शितम्, यथा वा हेत्वाभासलक्षणे कथितमस्माभिः अनित्यः शब्दश्चाक्षुषत्वादित्यस्यानैकान्तिकत्वदोषे सत्यपि प्रथमतरमसिद्धतैव हृदयपथमवतरति तेनासिद्धोऽयमुच्यते न सव्यभिचार इति, एवमिहापि हेतुगुणदोषविचारे क्रियमाणे विरुद्धादिहेत्वाभासतैव नास्य कथ्यते, यदा तु परार्थानुमानवाक्यस्य पञ्चावयवस्य परमतेन वा त्र्यवयवस्य परस्परान्वितपदार्थसमुदायात्मा वाक्यार्थश्चिन्त्यते तत्रेतरेतरव्याहतार्थवादिनोः प्रतिज्ञाहेतुपदयोरसंसर्गात्तद्विरोध एव झटिति मनसि विपरिवर्तते इति स एव निग्रहनिमित्तं भवितुमर्हति, यत इतरेतरविरोधिनमनन्वितमर्थमभिवदति वाक्येऽप्रतिपत्तिर्विप्रतिपत्तिर्वा भवेदित्यद एव निग्रहस्थानम्, अपि च साध्यविपर्ययसाधक एव विरुद्धहेतुरुच्यते यः प्रतिज्ञामेव बाधते इह तु प्रतिज्ञया हेतुर्बाध्यते प्रतिज्ञा वा हेतुनेति विकल्प्यमानत्वान्निग्रहस्थानान्तरमेवेदम्, इत्थमस्यैवोदाहरणस्योपपत्तेरुदाहणान्तरनिरूपणं वृथाटाट्यैव, भाट्टैस्तु भवदीयं निरालम्बनसाधनं प्रतिज्ञाविरोधोदाहरणं वर्णितम्, निरालम्बनाः सर्वे प्रत्ययाः प्रत्ययत्वादिति यतः प्रत्ययत्वहेतुग्राहकज्ञानस्य सालम्बनत्वे तेनैव प्रतिज्ञा विरुध्यते तन्निरालम्बनत्वे तु हेत्वभाव एव स्यादिति, तदुक्तम्—

विस्पष्टश्चाक्षपादोक्तो विरोधो हेतुसाध्ययोः ।
यमदृष्ट्वा परैरुक्तमदूषणमिदं किल ॥ इति ।

तत्सर्वथा सुलभोदाहरणमिदं प्रतिज्ञाहेतुविरोधाख्यं निग्रहस्थानमिदं स्थितम्।

### प्रतिज्ञासंन्यासस्य लक्षणम्—

### पक्षप्रतिषेधे प्रतिज्ञार्थापनयनं प्रतिज्ञासन्न्यासः ॥

### गौ. अ. ५ आ. २ सू. ५ ।

पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या प्रतिज्ञामेव निन्हुवानस्य प्रतिज्ञासन्न्यासो नाम निग्रहस्थानं भवति, अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते तत्रैव सामान्येनानैकान्तिकतायामुद्भाविताय़ां प्रतिब्रवीति क एवमाह नित्यः शब्द इति,

सो ऽयमेवं ब्रुवन् प्रतिज्ञासन्न्यासात्पराजीयते ।

"अत्राह अतिस्थूलः खल्वयं प्रमादः को हि नाम प्रतिवादिप्राश्निकसन्निधाने प्रतिज्ञां कृत्वा तदैव तेषामेवाभ्रष्टसंस्काराणां पुरतोऽपस्मारकाद्यनुपप्लुतमतिस्तामेव निन्हुवीत, अपि च द्यूतपराजितपणरहित एव कितववदासीनः प्रतिज्ञामजहदपि हेतावनैकान्तिके किमसौ न निगृह्यते, न हि प्रतिज्ञायास्त्यागात्यागौ तदीयौ निग्रहानिग्रहयोः प्रयोजकावपि तु हेतुगुणदोषावेव, स चायं साधनव्यभिचारादेवासिद्धपक्षः पराजीयत इत्यलं सन्न्यासेनेति"

अत्रोच्यते परोद्भावितहेत्वनैकान्तिकत्वदूषणोद्धरणरणरणकतरलितमतेर्भवेदप्ययं प्रमादः, एवं ह्यसौ वदति न मयोक्तं संयोगवियोगव्यङ्ग्यः शब्दो न भवति न त्वनित्य इति, अयमाशयोऽस्यैवं वदतः किल संयोगविभागानभिव्यङ्ग्यत्वे मया पक्षीकृते सामान्येन व्यभिचारो न भविष्यतीति तदपि हि तादृशमेव स्वाश्रयव्यङ्ग्यत्वादिति मुह्यतो नातिस्थूलममुमीदृशं प्रमादं प्रतिपन्नस्य भवत्येव निग्रहः, अप्रमादिनोस्तु निग्रहो नाम नास्त्येव कश्चिदिह लोके परलोके वा, यत्तु तदीययोः प्रतिज्ञात्यागात्यागयोरप्रयोजकत्वादनैकान्तिकत्वेनैवासौ निगृह्यते स्यादिति, तदेवं यदि व्यभिचारोद्भावनया समनन्तरमसौ तूष्णीमेवासीत तथाविधं तु ब्रुवाणस्तस्यैव पराजयहेतोः सन्निकृष्टत्वात्तैरेव निगृहीतो भवति नानैकान्तिकप्रयोगेणेति ।

हेत्वन्तरस्य लक्षणम्—

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥

अ. ५ आ. २ सू. ६ ।

अविशेषाभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो हेत्वन्तरं नाम निग्रहस्थानं भवति, यथा सांख्यस्येत्थं वदतः एकप्रकृतीदं व्यक्तं परिमाणाद् घटादिवद्द्विविधं च परिमाणं विकारेषु दृष्टमियत्तालक्षणमङ्कुरादेः फलान्तरस्य चतुरश्रिता च पटादेः मृत्पूर्वकस्य, तदेतत्परिमितं निराकारजातमेकप्रकृतिकं दृष्टमित्यतः सर्वमिदमेकप्रकृति भवितुमर्हति, या च सैका प्रकृतिस्तत्प्रधानमिति, अस्य हेतोर्व्यभिचारो नानाप्रकृतीनामपि परिमाणदर्शनादिति, तत्परिजिहीर्षया विशेषणमाह समन्वयादिति, सुखदुःखमोहसमन्वितं हि सर्वं व्यक्तं परमितं दृश्यत इति, तस्य प्रकृत्यन्तररूपसमन्वयाभावादेकप्रकृतित्वमिति, तदिदं हेत्वन्तरं निग्रहस्थानं प्रागुक्तस्य विशेषस्य हेतोः स्वयमेवाहेतुत्वमर्षणादिति ।

"अत्राह किमयं दग्धो दह्यते मृतो वा मार्यते अनैकान्तिकहेतूपन्यासेनैव खल्वयं तपस्वी निगृहीतो ऽसाधनाङ्गवचनादिति किं हेत्वन्तराख्यनिग्रहस्थानान्तरोदीरणेनेति"

अत्रोच्यते युक्तमेव तद् द्वितीये वचसि कथासमाप्तौ यथा तु भवानाह,

यदा तु व्यभिचारनिराकरणाय विशेषणमपरमधिकमधुना ऽभिधातुं प्रवृत्तस्तदा तदुपादानादेव निगृह्यत इति पिष्टपेषणं संप्रत्येवायमिष्यते, पुरुषशक्तिपरीक्षात्मके च जल्पे निग्रहस्थानमिदं वादे तु विशुद्धाशयतया वस्तुनि परीक्ष्यमाणे विशेषणान्तरोपादाने ऽपि तद्विचारः प्रस्तोतव्यो न निग्रहः कार्य इत्यभियुक्ताः ।

अर्थान्तरस्य लक्षणम्—

प्रकृतादर्थादप्रतिसंबद्धमर्थान्तरम् ॥ अ. ५ आ. २ सू. ७ ।

प्रकृतादर्थादर्थान्तरं तदनौपयिकमभिदधतो ऽर्थान्तरं नाम निग्रहस्थानं भवति, यथा कश्चिद्वैयाकरणविटः स्फोटात्मानं शब्दं चेतसि निधाय तन्नित्यत्वसिद्धये नित्यः शब्दो निरवयवत्वादित्यभिधित्सुरेव दुरितकर्मादिभिरनैकान्तिकतामाशङ्कमानो ऽर्थान्तरं नाम निग्रहस्थानं जिगमिषुस्तत्रैव वाक्यशेषच्छाययोत्तिष्ठति नित्यः शब्दो निरवयवत्वादिति वयं पाणिनीयाः प्रपन्ना इति ये भगवतः पाणिनेश्छात्राः, कः पुनर्भगवान्पाणिनिरिति ?

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तमाचार्यों नः स पाणिनिः ॥

कः पुनर्महेश्वरो यतोऽक्षरसमाम्नायमधिजगाम पाणिनिरिति ?

अस्त्युद्भटजटाजूटकोटिग्रथितचन्द्रमाः ।
विश्वस्थितिलयोत्पादहेतुरेको महेश्वरः ॥

अपि च—

अचिन्त्यवेशाभरणस्य तत्त्वतो यदृच्छया यस्य निशासु ताण्डवम् ।
स भस्मभक्तीनि बिभर्ति मौलिना कृताञ्जलिः पादरजांसि वासवः ॥

कीदृशं पुनस्ताण्डवं तनोति खण्डपरशुरिति ?

इत्थंचारी क्रमो यस्मिन्नित्थं च करवर्तनाः ।
इत्थं यत्र घटीच्छेदा दात्रपादास्तथेदृशाः ॥

इत्येकैकमुपदेशयन्नुत्थाय नृत्यति, तदेतदर्थान्तरं निग्रहस्थानमसाधनाङ्गवचनमिति, कीर्तिनाऽप्यनुमोदितम , द्वयोरपि च वादिप्रतिवादिनोः प्रकृताननुगुणमभिदधतोर्भवत्यदो निग्रहस्थानम , यथाक्रममेकस्य साधनमनवद्यमपश्यतो द्वितीयस्य दूषणमिति ।

निरर्थकस्य लक्षणम्—

वर्णक्रमनिर्देशवन्निरर्थकम् ॥ अ. ५ आ. २ सू. ८ ।

अभिधेयरहितवर्णानुपूर्वीप्रयोगमात्रं निरर्थकं नाम निग्रहस्थानं भवति, अनित्यः शब्दः कचटपानां गजडदबत्वाद् घझढधभवदित्येवंप्रकारम् , इदमपि वादिप्रतिवादिनोः प्रकृताननुगुणमभिदधतोर्भवत्यदो निग्रहस्थानम् , यथाक्रमं साधनं दूषणं च यथोचितमभिधातुमजानतोः पूर्ववदुभयोरपि निग्रहस्थानम् ।

"अत्राह सो ऽयमुन्मत्तप्रलाप एव शास्त्रे लक्षयितुमुपक्रान्तो न ह्युन्मत्ता-

नामीदृश्यक्षराणि मुखान्निर्गच्छन्त ईदृशां च निर्देशे कपोलवादित्रकद्याभिताडनादीन्यपि कामं शास्त्रे निर्दिश्यन्ताम्, अपि च वर्णक्रमनिर्देशवदिति मतुपा निर्देश एष सूत्रे वदिति वतिप्रयोगो वा, मतुप्पक्षे सर्वं वर्णक्रमनिर्देशयुक्तं निग्रहस्थानं भवेदिति हस्तसंज्ञादिभिरिदानीमुद्ग्राहणिकाः प्रस्तूयेरन्, अथानर्थकक्रमनिर्देशयुक्तमिति व्याख्यायते तथाऽपि नियमानुपपत्तिः, न ह्यर्थरहितवर्णोच्चारणमेव प्रकृतानुपयोगान्निरर्थकमेव वर्णक्रमनिर्देशस्यापि च क्व चित्प्रकरणे सार्थकता दृश्यत एव प्रत्याहारवत्, वतिपक्षे तु भवति दिक्प्रदर्शनमेतत्किं त्वर्थान्तरेणैव गतार्थत्वात्पृथङ् न वक्तव्यम्"

अत्रोच्यते मतुपा वतिना वाभिधेयशून्यत्वमात्रमत्र विवक्षितम् अभिधेयशून्यं वचो निरर्थकमित्युक्तमिति भवति, एष एव चार्थान्तरादस्य विशेषः तत्राभिधेयस्य भावे ऽपि प्रकृतानुपयोग इह त्वभिधेयमेव नास्तीति यत्र क्व चित्प्रकरणवशेन वर्णक्रमनिर्देशस्यापि सार्थकता तदिहोदाहरणम्, उदाहरणं यदि स्फुटं पृच्छसि न कुप्यसि चेत्तद्भवदीयं सर्वमेव वचनमिहोदाहरणं सौगतदर्शने शब्दानामर्थासंस्पर्शित्वात्, स्वलक्षणे तेषामप्रवृत्तेः अपोहस्य चातितुच्छत्वात् सर्वं तदभिधानं निरर्थकम्, अत एव चोन्मत्तप्रलापतः शाक्यभिक्षवो ऽपि परिशुद्धबोधिनः परलोकयाथार्थ्यदर्शिनः शौचाचारव्यवहारेष्वबाह्या महान्तो विद्वांसः काममर्थशून्यमपि कथयन्तो नोन्मत्ता भवितुमर्हन्ति, एवमन्यस्यापि प्रज्ञाप्रमादात्कचटतपादि व्याहरतो नोन्मत्तता भविष्यति, यच्चोक्तमीदृशां गणने का परिनिष्ठेति तत्परिहृतमसकृदसङ्कीर्णोदाहरणविवक्षया द्वाविंशतिभेदत्वमाश्रितमिति, कपोलवदनादीनि पुनरकथास्वभावत्वादचिन्त्यान्येव, यस्य चास्मिन्कथाप्रसङ्गे गण्डवादित्रादि चेतसि परिस्फुरति तस्यान्यदतिजघन्यमपि हृदयमवतरेदित्यलमसंबद्धगोष्ठ्येति ॥

## अविज्ञातार्थस्य लक्षणम्—

**पर्षत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥**

**अ. ५ आ. २ सू. ९ ।**

यत्साधनवाक्यं दूषणवाक्यं वा त्रिरभिहितं पर्षदा प्रतिवादिना च न विज्ञायते क्लिष्टशब्दप्रयोगमिति तीव्रमुच्चारितमित्येवंप्रकारमविज्ञातार्थं नाम निग्रहस्थानं भवति असामर्थ्यसंवरणाय च धूर्तैरिदमाश्रीयते ।

"अत्राह अर्थासंप्रत्ययस्य समानत्वात्को ऽस्य निरर्थकाद्भेदः, अथ प्रकृतोपयोगयोग्यमर्थमसौ वदति तदा पर्षत्प्रतिवादिनोरमेधाविता कामं भवेन्न तु विदुषो वक्तुं विवदतः पराजयो भवितुमर्हति, किंकृतश्चैष त्रिरुच्चारणनियमः किं राजाज्ञया उत वाक्येनेति न विद्मः"

अत्रोच्यते निरर्थके सर्वेण सर्वमर्थशून्यता इह तु भवन्नर्थो नावगम्यते द्रुतोच्चारणादिव्यतिकरवशादिति कथमविशेषः, तत्र च कल्प्यते नूनमसामर्थ्य-

मात्मीयं संवरीतुमना एवमभिधत्ते न हि समर्थो विद्वान्विस्पष्टं न वक्तीति, त्रित्वनियमो ऽपि न वेदवचननरपतिशासननिबन्धनः किं तु वस्तुस्थित्युपनत एव, यतः सकृद् द्विरप्यभिहितमप्यनवधानादिना न गृहीतमिति संभाव्यते त्रिस्तु यदुक्तं न ज्ञायते तत्र वक्तुरेव जाड्यम् अनेकप्राश्निकादिसमाजे कथितमवश्यं केनाप्यवगम्यते सर्वैरनवगमात्तु वक्तैव निगृह्यते, चतुर्धा पञ्चकृत्वो वा ऽभिधाने त्विष्यमाणे निरवधिताऽभिधानस्य प्रसज्यत इति युक्तस्त्रिर्वचननियम इति।

अपार्थकस्य लक्षणम्—

**पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ॥ अ. ५ आ २ सू. १०**

पूर्वापरासंगतपदकदम्बकोच्चारणादप्रतिष्ठितवाक्यार्थमपार्थकं नाम निग्रहस्थानं भवति, तद्यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललखण्डः अद्धोरुकमेतत्कुमार्याः स्फैय्यकृतस्य पिता प्रतिशीन इति।

"अत्राह असंबद्धवाक्यमसंबद्धं प्रकरणं च निग्रहस्थानान्तरं कस्मान्नोक्तम्, एतेनैव गतार्थत्वादिति चेद्, यद्येवमनर्थकेनैव गतार्थत्वादपार्थकमपि पृथङ् न वक्तव्यम्"

"अत्रोच्यते निरर्थकेन पदार्थेन वाक्यार्थः केवलं वर्णा एव शुष्का उच्चार्यन्ते अर्थान्तरे ऽपि समन्वितपदार्थं व्यवस्थापितवाक्यार्थमप्रकृतं तूच्यते, इह तु पदार्थसंप्रत्यये ऽपि तदन्वयासंभवेन वाक्यार्थानवसाय इति स्पष्टो भेदः, प्रकृतविवादास्पदीभूते वस्तुनि को वा विशेष इति चेत्, उक्तमत्र संक्षेपविवक्षायां द्वे एव निग्रहस्थाने असंकीर्णोदाहरणविवक्षया तु द्वाविंशतिभेदत्वं प्रकृतवस्तुसिद्धिस्तु द्वाविंशतावपि तुल्यैव।

यत्तु असंबद्धं वाक्यमसंबद्धं प्रकरणं च पृथगुपसंख्येयमिति तन्न, असंबद्धपदार्थेनैव तत्संग्रहात्, यदि त्वसंबद्धवाक्यमसंबद्धप्रकरणं चावश्यं वक्तव्यं तदुक्तमेव भवदीयं शास्त्रम्, तथा हि वैभाषिकाणामस्ति बाह्यार्थः स च प्रत्यक्षः, सौत्रान्तिकानां च सन्नप्यनुमेयः, योगाचाराणां साकारं ज्ञानमेव न बाह्यार्थः स च प्रत्यक्षः, माध्यमिकानामाकारशून्यं स्वच्छं ज्ञानम्, एवमितरेतरानन्वितवाक्यप्रकरणमिदमशेषमेव शाक्यशास्त्रम् आह च, दशदाडिमवाक्यस्य बौद्धशास्त्रस्य चाप्यबद्धस्य प्रतिष्ठा केन लभ्यते।

अप्राप्तकालस्य लक्षणम्—

**अवयवविपर्यासवचनमप्राप्तकालम् ॥ अ. ५ आ. २ सू. ११।**

प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनं क्रममुल्लङ्घ्यावयवविपर्यासेन प्रयुज्यमानमप्राप्तकालं नाम निग्रहस्थानं भवति।

"अत्राह न हि पदार्थानां वाक्येषु नियतः क्रमः कश्चिदस्ति, नियतक्रमका हि वर्णाः पदतामापद्यन्त इति युक्तं तदन्तरेण तदर्थानवगमात, न हि टघ इत्यु-

क्ते घटार्थावगतिर्भवति वाक्येषु तु देवदत्त गामभ्याज दण्डेन दण्डेन शुक्लां गामभ्याज देवदत्तेति क्रमान्तरेणापि तथैवार्थप्रतिपत्तेः किं क्रमेण, अनुमानवाक्ये तु पञ्चावयवा इत्येतदेव तावत्प्रथममसांप्रतं प्रतिज्ञाद्यवयवानामसाधनाङ्गवचनत्वात् , तत्र तेषां पञ्चावयवानामपि प्रयोगः प्रयोगे ऽपि च क्रमो विवक्षितःतदुल्लङ्घनं निग्रहस्थानमिति महती मूर्खप्रक्रियेति"

अत्रोच्यते वाक्यान्तरेषु क्रमापेक्षा भवतु मा वा भूद् नानेन नः प्रयोजनम् , अनुमानवाक्ये त्वार्थः क्रमो बलादापतति स्वप्रतिपत्त्यनुसारेण परप्रतिपत्तेरुत्पादनात् स्वप्रतिपत्तौ च धर्मिदर्शनतद्गतहेतुधर्मावधारणप्रतिबन्धस्मरणपरामर्शज्ञानसाध्यनिश्चयानां क्रमेण दर्शनात्परं प्रमाणतयैव तदभिधानं कर्तव्यमिति सविस्तरमवयवलक्षणे निर्णीतमेतत् , असाधनाङ्गवचनत्वमपि प्रतिज्ञाद्यवयवानां तत्रैव निरस्तम् , अतः क्रमस्येह युक्तियुक्तत्वात्तदतिक्रमो भवत्येव निग्रहस्थानम् ।

न्यूनस्य लक्षणम्—

**हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ अ. ५ आ. २ सू. १२ ।**

पञ्चावयवे वाक्ये प्रयोक्तव्ये स्थिते तदन्यतमेनाप्यवयवेन हीनं प्रयुञ्जानस्य न्यूनं नाम निग्रहस्थानं भवति ।

"अत्राह प्रतिज्ञाद्यवयवजातमसाधनाङ्गवचनमित्यतस्तदनभिदधतो न निग्रहः प्रत्युत तद्वतो निग्रहो युक्त इति"

अत्रोच्यते अनन्तरमेवैतत्परिहृतं विस्तरतश्चावयवलक्षणे, तथा हि श्रोतुराकाङ्क्षानिवृत्तये ऽनुमानवाक्यं प्रयुज्यते, प्रथमं तदाकाङ्क्षाविषयः साध्यधर्मविशिष्टो धर्मी प्रदर्श्यते, ततः कारणाकाङ्क्षया हेतुवचनमभिधीयते, क्वास्य प्रतिबन्धो दृष्ट इति बुभुत्सायामुदाहरणमुपपाद्यते, इत्थमेष सिद्धप्रतिबन्धो हेतुर्धर्मिणि भवेन्नवेति शङ्कायामुपनयवचनमुच्चार्यते, तदनन्तरं सर्वावयवानामेकत्रोपसंहाराय निगमनं प्रयुज्यत इत्यन्यतमस्याप्रयोगान्निग्रहार्हता भवत्येवेत्यलमत्रैव वस्तुनि पदे पदे कलहप्रस्तावेनेति ।

अधिकस्य लक्षणम्—

**हेतूदाहरणाधिकमधिकम् ॥ अ. ५ आ. २ सू. १३ ।**

एकेनैव हेतुना दृष्टान्तेन वा प्रतिपादिते ऽर्थे हेत्वन्तरं दृष्टान्तान्तरं वा प्रयुञ्जानस्याधिकं नाम निग्रहस्थानं भवति, एतच्च वादे तावद्वीतरागकथात्मके वस्तुनि निर्णयफले नेष्यत एव, जल्पे ऽपि नियमाद्युपगमनेन वदतो वादिन इदं निग्रहस्थानम् , यो हि न मया साधनमधिकाभिधेयमुदाहरणं वेति नियमस्योद्ग्राहयति स एव तथा निगृह्यते नान्य इति, एतच्च कीर्तिना ऽप्येवं कथितं प्रपञ्चकथायां तु न दोष इति ।

"अपर आह नियमाभ्युपगमे नायं दोषः प्रतिपत्तिद्रढिम्ने तदभिधानादिति"

तदयुक्तमभ्युपगतनियमत्यागादसौ निग्रहार्हो भवेत्, कश्चायं प्रतिपत्तिद्रढिमा ? प्रथमप्रयुक्तस्य हि हेतोरदृढप्रतिपत्तिकारिणो हेतुत्वमेव न स्यादुत्पन्नस्य प्रत्ययस्य पुनरुत्पादनं युक्तम्, तन्न पूर्वहेतुरद्रढिम्ने नाप्युत्तरो द्रढिम्ने तस्मान्नियमाभ्युपगमे ऽधिकाभिधानं दोष एव, अपरं मतमकृतनियमस्यापि दोष एव प्रपञ्चकथायामप्येकेन हेतुना दृष्टान्तेन वा कृते निर्णये द्वितीयस्य वैयर्थ्यम्, निर्णीतस्य निर्णयानुपपत्तेरनिर्णयकारिणश्च प्रथमस्य हेतोः प्रयोगानर्हत्वादिति ।

पुनर्वचनस्य लक्षणम्—

शब्दार्थयोः पुनर्वचनं पुनर्वचनमन्यत्रानुवादात् ॥

अ. ५ आ. २ सू. १४

अर्थादापन्नस्य स्वशब्देन पुनर्वचनं शब्दार्थस्य वाऽभिहितस्य पुनरभिधानं पुनरुक्तं नाम निग्रहस्थानं भवति, अनुवादं वर्जयित्वा शब्दपुनरुक्तं तावद्यत्र पूर्वोच्चारित एव शब्दः पुनरुच्चार्यते यथा नित्यः शब्दो नित्यः शब्द इति, अर्थपुनरुक्तं तु यत्र सो ऽर्थः पूर्वमन्येन शब्देनोक्तः पर्यायान्तरेण पुनरुच्यते यथा नित्यः शब्दो निरोधधर्मको ध्वान इति, यद्यपि च शब्दपुनरुक्ते ऽप्यर्थपौनरुक्त्यमस्त्येव, तथा ऽपि शब्दपूर्वकत्वादर्थप्रत्यभिज्ञायाः प्रथमतरं शब्दप्रत्यभिज्ञानात्तत्पौनरुक्त्यमेव तदुच्यते, जात्यपेक्षश्च शब्दपौनरुक्त्यव्यवहारो न व्यक्त्यपेक्षः क्षणभङ्गित्वाद्वर्णानां पुनः प्रयोगासंभवात्, अनुवादे तु पौनरुक्त्यमदोषो यथा हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति, अर्थादापन्नस्यापि स्वशब्देन पुनर्वचनं भवत्येव पुनरुक्तं यथा असत्सु मेघेषु वृष्टिर्न भवतीत्युक्ते अर्थादापद्यते सत्सु भवतीति किमर्थं स्वकण्ठेन पुनरुच्यते, अर्थप्रतीत्यर्थो हि शब्दप्रयोगः प्रतीते ऽर्थे किं तेनेति, एतच्च नियमाभ्युपगमे निग्रहस्थानं वेदितव्यमकृतनियमस्य तु नातीव महानयमपराधः ।

"अत्राह नार्थपुनरुक्तादन्यच्छब्दपौनरुक्त्यमुपपद्यते शब्दसाम्येऽप्यर्थभेददर्शनात्, स्मरत गिरिशं गिरिशो गौरी यस्यासमस्मरद्वेषस्य इव यदीयस्य मुदा न गरीयस्या समस्मरद्वेषस्येति तस्मादर्थत एव पौनरुक्त्यं न शब्दतः, अपि च विस्तरकथासु कदा चनाश्रवणशङ्कया पुनरभिधानं नाम कियान्प्रमादः, अर्थादापन्नस्य च स्वशब्देन पुनर्वचनं यदि निग्रहस्थानमुच्यते तर्हि प्रतिज्ञावचनमेव प्रथमं निग्रहस्थानम्, अधिकपुनरुक्तयोर्वा विशेष इति वक्तव्यम्, यादृशं तादृशं च विशेषलेशमाश्रित्य पृथगभिधाने निग्रहस्थानभेदपरिगणनमशक्यक्रियं स्यात्, अनुवादश्च य उच्यते हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति तत्तु प्रतिज्ञैव तावदसाध्वी तस्याः पुनर्वचनं साधु भविष्यतीति केयं कथा"

अत्रोच्यते यदुक्तमर्थपुनरुक्तादन्यन्न शब्दपुनरुक्तमिति तदेवमेव, पृथङ्निर्देशस्त्वनया विवक्षया—यो हि शक्त्यतिशयचिख्यापयिषया सकृत्प्रयोक्तव्यमिति

प्रतिज्ञाय जल्पं प्रवर्तयति स शब्दपुनरुक्तेनापि निगृह्यत इति, नियम्यवादिनश्च निग्रहात्ततो ऽन्यस्य सम्यगश्रवणशङ्कया पुनर्वदतो ऽपि न दोषः, अर्थाक्षिप्तकथनमपि कृतनियमस्यैव दोषो नान्यस्येत्यत एव न वादे निग्रहस्थानमिदम् अपि तु जल्पवितण्डयोरेव विजिगीषुकथयोस्तयोश्च सप्रयोजनत्वं कथान्तरत्वं च पुरा समर्थितमेव।

यत्तु प्रतिज्ञोच्चारणमर्थाक्षिप्तत्वात्तदनुवादश्च निगमनवचनमफलतरमिति, तदवयवलक्षणे विस्तरेण समाहितम्, अधिकपुनरुक्तयोस्त्वयं विस्पष्ट एव विशेषः अन्यं हेतुमन्यं वा दृष्टान्तं तत्रैव साध्ये ऽभिदधदधिकवादी भवति तमेव हेतुं दृष्टान्तं वा पुनर्वदन् पुनरुक्तवादीति, यत्त्वेवंविधविशेषाश्रयणे परिगणनमघटमानमिति तदवान्तरविशेषविवक्षयैव असङ्कीर्णोदाहरणदर्शनाय द्वाविंशतिनिर्देश इत्युक्तम्।

## अननुभाषणस्य लक्षणम्—

**विज्ञातस्य पर्षदा त्रिरभिहितस्याप्रत्युच्चारणमननुभाषणम् ॥**

**अ. ५ आ. २ सू. १७**

पर्षदा विदितस्य वादिना त्रिरुच्चारितस्यापि यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानं भवति, अप्रत्युच्चारयन्किमाश्रयं दूषणमभिधीयते।

"ननु यद्यननुभाष्यापि तत्रोत्तरं ब्रूयात्किमिति निगृह्यते न च यो ऽनुभाषितुमसमर्थः स उत्तरमपि दातुमक्षमो भवति विचित्रत्वात्पुरुषशक्तीनाम्" नैतदेवम् अननुभाषणे तदुत्तरविषयापरिज्ञानात्कोत्तरं प्रयुज्येत प्रयुक्तं वा कथमवधार्यते, न चैवं ब्रूमो यावत्किं चिद्वादिना सविकारमभिधीयते तदखिलमखिन्नानतिरिक्तमनुज्झितक्रमकमेकं प्रति वाग्मी तथैवानुभाषेतेति यस्तु समस्तानुभाषणं तथा कुर्यादपि नाम तेन स्वकौशलमेव केवलमुपदर्शितं भवति मेधावित्वं न त्वेत्रमकुर्वन्नसौ प्रत्यवेयादिति, स्तोकस्तोकमनुभाषमाणः तथैव च क्रमेण दूषयन्न निग्रहमाप्नुयादिति।

"अत्राह यदि वादी स्वपक्षसाधनविवरणवर्त्मना बहुतरमपरमप्रकृतमर्थमुपक्षिपेत्तत्किं प्रतिवादिना सर्वमनुभाषणीयम्, हेतुमात्रं त्वनूद्य दूषणमुद्भावयतो नास्य निग्रहो युक्तः, दूषणविषयं तु हेतुमात्रमपि यो ऽनुभाषितुमकौशलः स उत्तरविषयापरिज्ञानादुत्तरमपि प्रतिपत्तुमसमर्थ एवेत्यप्रतिभया निगृह्यतां किमननुभाषणेन, अपि च त्रिरभिहितस्येति केयं परिभाषा ? यथा च वादिना परावबोधार्थं वाक्यं प्रयुक्तं परोपद्रवार्थं वा तत्र परावबाधार्थे वाक्ये परावबोध एवाभिधानावधिः न द्विस्त्रिर्वा नियमः यावत्कृत्वः प्रयुक्ते वाक्ये परस्यावबोधो जायते तावत्कृत्वः प्रयोक्तव्यम्, परोपद्रवार्थं तु वाक्योच्चारणमसूत एव धर्मः प्राश्निकान्यथा तथा सङ्केतेनापि बोधयित्वा दुःश्लिष्टकष्टशब्दप्र-

योगाद्याडम्बरविरचनया ऽप्यान्ध्यमुत्पाद्य परानुपरुध्येतेति महत्कश्मलमेतत्, न चेदृशं शास्त्रे व्युत्पादनार्हम्, तस्माद्बहुकृत्वो ऽप्यभिधाय प्रतिवादी बोधयितव्यो न तु द्विरुच्चारितमप्रत्युच्चरन्निग्रहीतव्य इति ”

अत्रोच्यते न खलु सकृदेव सकलमपरविरचितवचनसन्दर्भानुभाषणमविचलितक्रमकमस्माभिरपि कर्तव्यतयोपदिष्टमपि तु यथोचितदूषणविषयानुभाषणमात्रमेव ।

यस्तु स्तोकमप्यनुभाषितुमप्रगल्भस्तस्योत्तरप्रतिभानमपि नास्तीति यदुच्यते, तदसम्यक्, अन्यदननुभाषणमन्यदुत्तराप्रतिभानम्, कस्य चिदशेषमनुभाषितवतो न मुच्यते ऽनेनोत्तराप्रतिभानम्, उत्तराप्रतिभानमनन्तरं वक्ष्यते ।

यत्त त्रिरुच्चारणपरिभाषा कुतस्त्येति विकल्पितं तदविज्ञातार्थनाम्नि निग्रहस्थाने प्रतिविहितम्, वीतरागकथात्मके वादे शिष्टादिभिः सह क्रियमाणे काममस्तु परावबोधावधि वाक्योच्चारणम्, जल्पे तु विजिगीषुकथायां पुरुषशक्तिपरीक्षणादवश्यमुच्चारणनियम आश्रयणीयः, तत्र सकृद्वा द्विर्वा ऽभिहितस्याग्रहणमनवधानादिनापि संभवन्न निग्रहाय कल्पते, त्रिरभिहितस्य तु सर्वैरग्रहणे वक्तुरेवापराधः, अन्यैर्गृहीतस्य प्रतिवादिना ऽग्रहणे तस्य निग्रहः, वारत्रयादप्यूर्ध्वमभिधाने त्वाश्रीयमाणे जल्पादौ कथासमाप्तिरेव न स्यात्, छात्रशाला ह्यसौ भवेन्नोद्ग्राहणिकं तदिति ।

### अज्ञानस्य लक्षणम्—

## अविज्ञानं चाऽज्ञानम् ॥ अ. ५ आ. २ सू. १८

परिषदा विज्ञातस्यापि वादिवाक्यस्य प्रतिवादिना यदविज्ञानं तदज्ञानं नाम निग्रहस्थानं भवति, अविदितोत्तरविषयो हि कोत्तरं ब्रूयादिति ।

अत्राह “अज्ञानमप्रतिभेति नानयोर्विशेषं पश्यामः”

अत्रोच्यते भिन्नविषयत्वाददोषः उत्तरविषयाप्रतिपत्तिरज्ञानम् उत्तराप्रतिपत्तिस्त्वप्रतिभेति ।

“ननूत्तरविषयं यो न जानाति स उत्तरमपि न जानात्येव” मैवम् उत्तरविषयं जानन्नपि कश्चदुत्तरं न जानातीति लोकदृष्टमेतत्, एवं तर्हि अननुभाषणेन गतार्थमज्ञानमज्ञाते हि परकीये वाक्यार्थे तदनुभाषणे सामर्थ्याभावदर्शनात्, सन्ति हि के चिद्ये ऽनुभाषितुमशक्नुवन्तः पत्रिकादिलिखितं तदावेदयन्तीति, एवं त्रयाणामपि च न पौनरुक्त्यम्, उत्तरविषयाप्रतिपत्तिरज्ञानम्, प्रतिपत्तावपि तदप्रत्युच्चारणमननुभाषणम्, अनुभाषिते ऽप्युत्तराप्रतिपत्तिरप्रतिभेति,

“ननु यद्यज्ञानसाम्ये ऽपि विषयभेदमाश्रित्य निग्रहस्थाननानात्वमित्थमभिधीयते तर्ह्यज्ञानप्रकारवैचित्र्याद्भेदान्तराण्यपि वक्तव्यानीति” उक्तमत्र सा-

रसंग्रहविवक्षया द्वे एव निग्रहस्थाने विप्रतिपत्तिरप्रतिपत्तिश्चेति, इतरेतरविसदृशोदाहरणदिक्प्रदर्शनाय द्वाविंशतिभेदत्वमुच्यते, अवान्तरविशेषैस्तु तदानन्त्यमभ्युपगम्यत एव, तथा च द्वाविंशतिवर्गे हेत्वाभासाश्चेति पठितम्, ते च स्वरूपेणैव तावत्पञ्च सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा इति, अवान्तरभेदाश्च तेषामतिबहवः सन्त्येव, इह त्वेकमेव तन्निग्रहस्थानमादिष्टं हेत्वाभासाश्च यथोक्ता इति, तस्मादित्थं समासव्यासवर्णनादलं पदे पदे पर्यनुयोगेनेति ।

## अप्रतिभाया लक्षणम्—

**उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ अ. ५ आ. सू. १९ ।**

परपक्षे गृहीते ऽपि तस्मिन्नुत्तराप्रतिभानमप्रतिभा नाम प्रतिवादिनो निग्रहस्थानं भवति, अज्ञानादिभ्यो भिन्नता ऽस्य वर्णितैव, कीर्तिरिपि चैतदनुमन्यत एव निग्रहस्थानन्, "ननूत्तरमप्रतिपद्यमानः सदसि प्रतिवादी कथमासीत" यत्किं चिद्विकत्थमानः, तद्यथा—

हृत्पुण्डरीकविकसत्सकलानवद्यविद्यावदातवदनः क्व जनो ऽस्मदादिः ।
क्वायं बटुः कतिपयाक्षरलेशलिप्तजिह्वान्वितः कथमनेन सहाभिदध्मः ॥
दानार्द्रगन्धगजकुम्भकपाटभेदिभीमस्फुरन्नखशिखाशिखरः क्व सिंहः ।
क्वामी समीरणविधूतपुराणपर्णपातोद्भवद्भयविलोलदृशः कुरङ्गाः ॥

इत्यादि यद्वा तद्वा प्रलपन्नास्ते ।

## विक्षेपस्य लक्षणम्—

**कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ अ. ५ आ. २ सू. २०**

उद्ग्राहणिकामुपक्रम्य वा तद्ग्राहयितव्यं मयेति प्रतिश्रुत्य वाभिमुखं प्रतिवादिनि सन्निहितेषु प्राश्निकेषु कार्यव्यासङ्गं व्यपदिशतीदं मे करणीयमपहीयते गच्छामीत्यभिधाय कथां विच्छिनत्ति यः स विक्षेपेण पराजीयते, अन्यतरनिग्रहान्ता हि कथा भवति स चेत्थं कथां कुर्वन्नात्मनैवात्मानं निगृह्णाति, प्रतिश्यायेन मे कण्ठोपरोध उदपादि पदमपि वक्तुं न युज्यते जननी मे जीवितं जहाति स्म तां श्मशानभुवं प्रापय्य वह्निसात्करोमीति ।

"अत्राह यदि तावत्परमार्थत एव मातृमरणादि कार्यमस्योपस्थितं तत्किमिति तपस्वी पराजीयते, उद्ग्राहणिकाजितो मा भूदिति किमसौ मृतां मातरमपि मा धाक्षीदिति महत्सुभाषितमिति, पीनसापरुद्धस्थानकरणो वा कथं वाचमुदीरयतु, अथासामर्थ्यस्थगनाय वितथमपि कथयति तथाविधमसौ कार्यव्यासङ्गं तर्हि सत्यं निगृह्यते न तु विक्षेपेण किं तु अन्येनैव, वादी तावत्कर्तव्यव्याजव्यपदेशादर्थान्तरगमनादिना निगृह्यते प्रतिवादी स्वप्रतिभयैवेति, अतिप्रसङ्गश्चैवंप्रकाराणां निर्देशे भवेदिति"

अत्रोच्यते कथामुपक्रम्य प्रतिज्ञां वा हेतुमभिधाय तद्विवरणसरणिमिषमवलम्ब्य किं चिदर्थान्तरमुपन्यस्यति यत्तदर्थान्तरमुदाहृतमादावेव इह तु कथापूर्वरङ्गे कथायां वा किमपि करणीयनिभमभिधाय सभयमपसरति सदस इति कथमिव तत्तुल्यता भवति, अप्रतिभया ऽपि श्रुतपूर्वपक्षः पराजीयते, इह तु पूर्वपक्षमेव न शृणोति वा न करोति वा प्रथममेव पलायत इति महान्विशेषः, अतिप्रसङ्गस्त्वसकृत्पराकृतः, यत्तु हेत्वाभासेष्वन्तर्भावमस्य कीर्तिरकीर्तयत्तदतीव सुभाषितम् , क हेत्वाभासः क कार्यव्यासङ्गः संप्रधारणैव रमणीयेयम् , अहेतोर्हेतुवदाभासनं कीर्तिना दृष्टमिति परमं नः कुतूहलम् ।

**मतानुज्ञाया लक्षणम्—**

**स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥**

**गो. सू. अ. ५ आ. २ सू. २१**

स्वपक्षे परापादितदोषमनुद्धृत्याभ्युपगम्य परपक्षे तमेवापादयतः परमतानुज्ञा नाम निग्रहस्थानं भवति, यथा चौरो भवान्पुरुषत्वात्प्रसिद्धचौरवदित्युक्ते सत्याह भवानपि चोरः पुरुषत्वादिति, सो ऽयमेवं वदन्नात्मनः परापादितं दोषमभ्युपगतवानिति मतानुज्ञया निगृह्यते ।

"अत्राह अनैकान्तिके हेतौ परेणोक्ते तदुद्भावनमनेन प्रकारेण प्रतिवादी करोतीति किमिति निगृह्यते वाद्येव हेत्वाभासप्रयोगान्निग्राह्य इति"

अत्रोच्यते उक्तमादावेव स्वपक्षे दोषमनुद्धृत्येति, एवं हि तेन वक्तव्यमनैकान्तिकोऽयं हेतुरचौरे ऽपि पुरुषत्वदर्शनादिति एवं हि स दोष उद्धृतो भवति एवं त्वनभिधाय भवानपि चौरः पुरुषत्वादिति वदन्ननुजानात्येव परमतमतो ऽनैकान्तिकत्वे वक्तव्ये तदुद्भावनानुक्रममवधीर्य प्रसङ्गमापादयन्निग्रहार्हो भवत्येवेति, वादिनश्चानैकान्तिकहेतुप्रयोगे ऽपि तदनुद्भावनान्न पराजयः प्रतिवादिन एव हीदं सन्निकृष्टं निग्रहस्थानमिति ।

**पर्यनुयोज्योपेक्षणस्य लक्षणम् —**

**निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥**

**गौ. अ. ५ आ. २ सू. २२**

पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः इदं ते निग्रहस्थानमुपनतमतो निगृहीतो ऽसीत्येवं वचनीयः तं य उपेक्षते नानुयुङ्क्ते स पर्यनुयुज्योपेक्षणान्निगृह्यते ।

"अत्राह कः कस्येदं निग्रहस्थानमापादयति किं पर्यनुयोज्य उत तदुपेक्षकः, उपेक्षकस्तावदस्य पर्यनुयोज्यतां न जानाति जानन्वा कथमेनमुपेक्षेत उपेक्ष्य वा किमात्मन एव निग्रहस्थानमुद्भावयन्नेवमाचष्टामेष पर्यनुयोज्यो ऽपि मयोपेक्षित इति निगृहीतो ऽस्मि, पर्यनुयोज्यो ऽपि कथमात्मीयमवद्यं प्रकाशयेदिदं मे दूषणं तच्च भवता नोद्भावितमतो भवान् जित इति, स खल्वेवमभिदधदमेध्यं पाणौ निधाय परं कलङ्कयितुकामः परं कलङ्कयन्नेवात्मकलङ्कमनुभवत्येवे-

ति, अपि च नेदं निग्रहस्थानान्तरमपदिश्यते किं त्वप्रतिभैवेति, तथा हि यदि तावदुत्तरपाक्षिकः पूर्वपाक्षिकं साधनाभासमप्याचक्षाणमुपेक्षेत तत्र दूषणं नोद्भावयेत् तदुत्तराप्रतिपत्त्या स निगृह्यते न पर्यनुयोज्योपेक्षणेन, वस्तुतस्तु द्वयोरपि तत्र जयपराजयनिर्धारणमनुपपन्नमेकस्य साधनाभासवादित्वादितरस्य च तदुत्तराप्रतिभानात्, अथ पूर्वपाक्षिकं दूषणाभासवादिनं दोषप्राप्तमुत्तरपाक्षिको न निगृह्णाति तथा दूषणाभासवादित्वादितरस्य च तदनुद्भावनादिति"

अत्रोच्यते नाप्रतिभायाः सम्यक्साधनविषयत्वात्, सम्यक्साधने च प्रयुक्ते तदुत्तरस्याप्रतिपत्तिरप्रतिभा भवति साधनाभासे तु प्रयुक्ते तदाभासतानुद्भावनात्पर्यनुयोज्योपेक्षणं भवति, अत्र हि साधनाभासवादी पर्यनुयोज्य एवेति विशेषः, यत्तुवस्तुवृत्तेन न कस्य चिज् जयः पराजयो वेति तदेवमेव, किं तु जल्पे पुरुषशक्तिपरीक्षायामिदं निग्रहस्थानमुच्यते, तदुद्भावयिता तु यद्विकल्पितस्तत्राप्युच्यते पूर्वपाक्षिकेण साधनाभासे प्रयुक्ते उत्तरपाक्षिकेण तस्मिँस्तथात्वेनानुद्भाविते प्राश्निकानामपृष्टानां वक्तुमवसराभावात्स एव साधनाभासवादी कदाचिद्धैयात्यादेवं ब्रूयान्मया ऽस्य शक्तिं जिज्ञासमानेन साधनाभासप्रयोगः कृत एव तु मूर्खस्तं न जानातीति तदा कथं न निगृह्यते, एतेन दूषणाभासवाद्यपि व्याख्यातः, अथ वोभयाभ्यर्थिताः सभापतिनियुक्ता वा प्राश्निकास्तथा कियन्तो निगृह्णन्त्येव पर्यनुयोज्योपेक्षिणम, साधनाभासवादिनो हि धूर्ततया तदभिधानं सम्यक्साधनमसाधनादर्थसंशयाद्वा संभवति उत्तरपाक्षिकस्य उत्तरानुद्भावनं मोहादेवेति स एव पराजीयते ॥

## निरनुयोज्यानुयोगस्य लक्षणम्--

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥**

**अ. ५ आ. २ सू. २३ ।**

अनुज्झितयथोचितक्रममुपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि निगृहीतो ऽसीति यो ब्रूयात्स एवाभूतदोषोद्भावनान्निगृह्यते ।

"अत्राह यदि तावदुत्तरपाक्षिकः पूर्वपाक्षिकमदुष्टसाधनमभूतैरेव दोषैरभियुङ्क्ते तथा सति भूतदोषोद्भावनस्योत्तरस्याप्रतिपत्तेरप्रतिभयैव सनिगृह्यतां किं निरनुयोज्यानुयोगाख्यन्यूनतानिग्रहस्थानकथनेन, भूतदोषाभियोगपक्षे तु पूर्वपाक्षिक एव साधनाभास(प्र)योगात्पराजीयते, अनुयोज्यः खल्वसौ न निरनुयोज्यानुयोगस्य विषयो भवितुमर्हति"

अत्रोच्यते अहो नु खल्वयं तपस्वी पर्युदासस्य प्रसज्यप्रतिषेधस्य च विशेषमपश्यन्नतिमात्रं मुह्यति भूतदोषाप्रतिभानमन्यदन्यच्चाभूतदोषप्रतिभानम्, एकत्राप्रतिपत्तिरितरत्र विपरीतप्रतिपत्तिः, तत्र भूतदोषाप्रतिपत्तिरप्रतिभा, अभूतदोषप्रतिपत्तिरननुयोज्यानुयोगः, अपि च असाधनाङ्गवचनमदोषो-

द्भावनं च यद्भवता निग्रहस्थानमाख्यातं तत्र प्रसज्यप्रतिषेध एव केवल आश्रीयमाणे हेत्वाभासा अपि च निग्रहस्थाने भवेयुः, साधनाङ्गस्यानभिधानं मौख्यमेव केवलं निग्रहस्थानं भवेत् , साधनाङ्गवचनमदोषोद्भावनमपि पर्युदासव्याख्यानाह् भवत्येव ततश्च भूतदोषानुद्भावनमप्रतिभा अभूतदोषोद्भावनं च निरयोज्यानुयोगः ।

अथाभूतदोषोद्भावने ऽपि भूतदोषाप्रतिभानमस्त्येवेति तदेवास्तु निग्रहस्थानमित्युच्यते तर्हि मूकत्वमेवैकं निग्रहस्थानं स्यादसाधनाङ्गवचने ऽप्येवं वक्तुं शक्यत्वादित्युक्तमेव ।

अपसिद्धान्तस्य लक्षणम्—

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गो ऽपसिद्धान्तः ॥

अ. ५ आ. २ सू. २५ ।

यं कं चन प्रथमं सिद्धान्तमभ्युपगम्य कथामुपक्रमते कथाप्रसङ्गाच्च सिषाधयिषितार्थसमर्थने रभसेन दूषणोद्धरणाश्रद्धया वा सिद्धान्तविरुद्धमभिधत्ते सोऽपसिद्धान्तेन पराजीयते, यद्यथा सांख्यः प्रतिवादिनि सन्निधाने नासतो विद्यते भावो नाभावो विद्यते सत' इति स्वसिद्धान्तं प्रथमं प्रतिज्ञाय प्रधानसिद्धये साधनप्रयोगं करोति–व्यक्तं विकारजातमेकप्रकृति समन्वयदर्शनात , मृदन्विता हि मृद्विकाराः कुण्डपिठरशरावप्रभृतय एकप्रकृतिका दृष्टा एवमस्यापि गवाश्वादिविकारजातस्य सुखदुःखमोहान्वयदर्शनात् तदात्मकैकप्रकृतिप्रभवत्वेन भवितव्यम्–एवमुक्तवानसौ नैयायिकेनानुयुज्यते–अथ का प्रकृतिर्नाम का च विकृतिरिति, अविदितप्रकृतिविकृतिस्वरूपो हि कथं विकृतीनामेकप्रकृतित्वमेकत्वं जानीयादिति, एवमनुयुक्तः कापिल आह–यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः यत्तद्धर्मान्तरं प्रवर्तते सा विकृतिरिति, सो ऽयमेवं वदन्प्रागभ्युपगतसदसन्निरोधप्रभवाभावसिद्धान्तविरुद्धाभिधानादपसिद्धान्तेन निगृह्यते, यदि पूर्वधर्मनिरोधे धर्मान्तरप्रादुर्भावस्तदा नासतो विद्यते भावो ना भावो विद्यते सत इति स्वसिद्धान्तो हीयते, अथ सिद्धान्तो न त्यज्यते तर्हि प्रकृतिविकारानिश्चयाद्धेत्वसिद्धौ साध्याभावः प्रसज्यत इति ।

"अत्राह हेतुप्रयोगं कृतवति कापिले नैयायिकस्तदसिद्धतोद्भावनया प्रत्यवतिष्ठतां प्रकृतिविकृतिस्वरूपप्रश्नस्य को ऽवसरः ? तदिदमर्थान्तरगमनमस्य भवेदेवं पृच्छतः अर्थान्तरगमनं स्वग्रन्थे निग्रहस्थानं लिख्यते, अथ चाऽधुना तेनैव व्यवह्रियत इति को ऽयं नयः, यदि तु सांख्यमतं निराचिकीर्षितं तदसिद्धतव हेतोरुद्भाव्यतां प्रकृत्यन्वयस्य विकारेषु संभवादिति, विकारा हि प्रवृत्तिनिवृत्तिधर्मकाः न चैवंप्रकारमव्यक्तधर्ममव्यक्तान्वये हि विकाराणां प्रवृत्तिनिवृत्त्यात्मकत्वं हीयेतेत्येवमसिद्धत्वाद्धेतोर्हेत्वाभासप्रयोगादेव सांख्यो निगृहीत इति न निगृहस्थानान्तरमपसिद्धान्त इति"

अत्रोच्यते सत्यमसिद्धो भवत्वयं कापिलकल्पितो हेतुः प्रकृतितद्विकृतिप्रश्नप्रक्रमणेनापि तदसिद्धमवधारयितुं शक्यत एव, किन्तु हेतुस्वरूपेऽवधारिते तद्दूषणमभिधानीयमनवधारितस्य दूषयितुमशक्यत्वादिति तत्प्रश्नो नार्थान्तरगमनम्, प्रश्नोत्तरमेव भाषणः परामर्शो निकटतरपरिस्फुरद्पसिद्धान्ताभिधाननिबन्धननिग्रहान्तरविषयतां प्रतिपन्न इति हेत्वाभासवर्त्मनि न दूरं गम्यते।

क चिदपि परनिग्रहस्य हेतौ हृदयपथं प्रथमं किलावतीर्णे।
अपरमपि न कारणं विचिन्त्यं किमिव फलं खलु पिष्टपेषणस्य ॥

**हेत्वाभासाश्च यथोक्ताः ॥ अ. ५ आ. २ सू. २५**

हेत्वाभासास्तु पूर्वोक्तलक्षणैरेव लक्षिताः
निग्रहस्थानतां यान्ति, यथोक्ता इत्यतोऽब्रवीत् ॥
प्रमाणस्य प्रमेयत्वं प्रमेयस्य प्रमाणता।
यथा लक्षणभेदेन न तथैतेषु दृश्यते ॥
भेदेनोक्ताः किमर्थं त इति निगदिता पूर्वमेवात्र युक्ति-
र्वादे ह्येते प्रयोज्याः प्रगुणनयविदा तत्त्वशुद्धिं विधातुम्।
एतेषां धर्मकीर्तेरपि च न विमतिर्निग्रहस्थानताया-
मित्थं द्वाविंशतिर्नो गुरुभिरभिहिता निग्रहस्थानभेदाः ॥

इति ( १६ ) निग्रहस्थानपदार्थः

इत्येवं सूत्रकारागममनुसरता ऽनुज्झता भाष्यभूमिं
स्थाने स्थाने परेषां मतमतुलगति क्षिपता तार्किकाणाम्।
कां चिद्वाक्यार्थचर्चामपि विरचयता ऽनुक्रमेणावतीर्णां
निर्णीताः स्वे निबन्धे निपुणमिह मया षोडशैते पदार्थाः ॥
न्यायोद्गारगभीरनिर्मलगिरा गौरीपतिस्तोषितो
वादे येन किरीटिनेव समरे देवः किराताकृतिः।
प्राप्तोदारवरस्ततः स जयति ज्ञानामृतप्रार्थना-
नाम्ना ऽनेकमहर्षिमस्तकवलत्पादो ऽक्षपादो मुनिः ॥
वादेष्वाप्तजयो जयन्त इति यः ख्यातः सतामग्रणी-
रन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः।
सूनुर्व्याप्तदिगन्तरस्य यशसा चन्द्रस्य चन्द्रत्विषा
चक्रे चन्द्रकलावचूलचरणध्यायी स धन्यां कृतिम् ॥
नमः शशिकलाकोटिकल्प्यमानाङ्कुरश्रिये।
प्रपन्नजनसंकल्पकल्पवृक्षाय शंभवे ॥

इति श्रीजयन्तभट्टकृतायां न्यायमञ्जर्यां द्वादशमाह्निकम् ॥ १२ ॥

समाप्ता चेयं न्यायमञ्जरी ॥